श्री आनन्दतीर्थभगवत्पादाचार्यविरचितम्

# ऋग्भाष्यम्

श्री जयतीर्थविरचितटीकया - श्री राघवेन्द्रतीर्थविरचितमन्त्रार्थमञ्जर्या - श्रीनिवासतीर्थविरचित पदार्थप्रकाशिका -श्री पाण्डुरङ्गिकेशवाचार्यविरचित पदार्थदीपिका - छलारी नरसिंहाचार्यविरचित विवृति - श्री सत्यनाथविरचित रूपावतारेति टिप्पणीचतुष्टयेन च संवलितम्

*Edited by*

*Mahāmahopādhyāya*

Prof. K.T. Pandurangi

Former Prof. of Sanskrit, Bangalore University

Hon. Director of Dvaita Vedanta Foundation, Bangalore

## द्वितीयं सम्पुटम्

This Volume is published with the grant from

Govt. of India Ministry of Human Resources Development

under the Central Plan scheme - Development of Sanskrit Education




*Published by*

Dvaita Vedanta Studies and Research Foundation

No.33/163, 10th B Main Road,

I Block Jayanagar, Bangalore.

1999

# Preface

The first volume of Ṛgbhāṣya with five commentaries covered the first chapter, containing 19 hymns. Thus, the Second Volume contains II and III Chapters consisting of 21 hymns. The five commentaries included in the first volume are included in this volume also. As stated in the preface to the First Volume, the Ṛgbhāṣya of Sri Ānandathīrtha gives the philosophical interpretations of Ṛgbhāṣya hymns. The commentaries further explain the philosophical implications of the Vedic expressions with appropriate grammatical and etymological explanations. These commentators belong to different centuries. The later commentators do not repeat the points already made by the earlier ones but make fresh points. These give deeper insight into the philosophical thought of Ṛgveda.

The manuscripts procured for the first volume have been utilised for this volume also. These were procured from Sri Uttarādi Matha and Sri Satyadhyāna Vidyāpeetha. Prof. K.T. Pandurangi has prepared this edition with the help of these manuscripts. We thank him for his services.

These two volumes of Ṛgbhāṣya have been published utilising the grant provided by the Ministry of Human Resources Development under the Plan Scheme for development of Sanskrit. We thank the Ministry for providing the grant. We thank Vāgartha Printonics for printing the volume neatly.

**N. Narasimha Rau**
*Chairman*

# Introduction

In the introduction to the First Volume a detailed discussion of the following topics is made.

1. Three dimensions of the import of Ṛgvedic hymns viz., Yājñikā, Aitihāsika and Ādhyātmika i.e. Ritualistic, Mythological and Philosophical.
2. The need of the comprehension of the meaning of Vedic hymns as explained in Nirukta, Jaimini Sūtras and in Sāyaṇa bhāṣya bhūmikā.
3. The tradition of philosophical interpretation stated in Ātharvaṇa Upaniṣad and fully developed by Sri Madhvāchārya.
4. A summary of the points made in the Upodghāta portion of Sri Madhvāchārya's Ṛgbhāṣya, Sri Jayathīrtha's Tīkā and the Mantrārtha Manjarī of Sri Rāghavendratīrtha in respect of the philosophical meaning of Ṛgveda and the methodology to comprehend it.
5. A brief note on the life and works of the commentators.

It is sufficient if the attention of the readers is drawn to that introduction.

In the first volume, Chapter I of Ṛgbhāṣya containing 19 hymns was given. These hymns mostly related to the two deities i.e. Agñi and Indra. Majority of these were of Viśvāmitra and in Gāyatri mantra. In this Second Volume, Chapter II and III containing 21 hymns are given. These relate to Vāyu, Varuṇa, Savitā, Marut and Aśvinau. These are of Medhātithi Kānva, Ajigarta, Śunaḥ śyapa, and Añgīrasa. These are in Tṛstup, Bṛhati, Anuṣtup etc, metres.

The forty hymns selected for explaining the philosophical meaning of Ṛgveda are quite representative in respect of Ṛṣi, Devatā and Chandas.

The philosophical meaning of the very names of these deities, the adjectives given to these deities and the other related expressions is fully brought out by the commentators. The Bhāṣya suggests these meanings and the commentators elaborate with appropriate grammatical and etymological explanations. These explanations provide good grounding in Grammar and skill in interpretation. A large number of Pāṇinī's sūtras, the observations in Patanjali's Bhāṣya and commentaries like Kāśikā are quoted. A good number of lexicons are quoted. Some of these are quite old and rarely quoted by others.

In this way the Bhāṣya and the commentaries not only give us philosophical insight but also enrich our knowledge of grammar and etymology. This aspect will be of considerable interest to the Research Scholars.

I take this opportunity to thank Sri N. Narasimha Rau, Chairman of Dvaita Vedanta Foundation, for entrusting the work of editing this valuable work to me. I record my appreciation of the assistance given to me by Vidwan Ramakanta Joshi, Krishnacharya Upadhyaya and H.P. Nagaraja.

Mahāmahopādhyāya
**Prof. K.T. Pandurangi**
*Hon. Director*
Dvaita Vedanta Studies &
Research Foundation
Bangalore.

# विषयानुक्रमणिका

## ॥ ऋङ्मन्त्रानुक्रमणिका ॥

# ॥ सूक्तानां ऋषिदेवताछन्दोनुक्रमणिका ॥

## द्वितीयाध्यायः

सूक्तसंख्या–

२० अष्टर्चम् । मेधातिथिः काण्वः । ऋभवः । गायत्री ।

२१ षळर्चम् । मेधातिथिः काण्वः । इन्द्राग्नी । गायत्री ।

२२ एकविंशत्यर्चम् । मेधातिथिः काण्वः । १-४ अश्विनौ, ५-८ सविता, ९-१० अग्निः ११ देव्यः, १२ इन्द्राणीवरुणान्यग्नाय्यः, १३-१४ द्यावा-पृथिव्यौ, १५ पृथिवी, १६ विष्णुर्देवा वा; १७-२१ विष्णुः । गायत्री ।

२३ चतुर्विंशत्यर्चम् । मेधातिथिः काण्वः । १ वायुः, २-३ इन्द्रवायू; ४-६ मित्रावरुणौ, ७-९ मरुत्वान्, १०-१२ विश्वेदेवाः, १३-१५ पूषा १६-२२, २३ (पूर्वार्धस्य) आपः, २३ (उत्तरार्धस्य), २४ अग्निः। १-१८ गायत्री, १९ पुर उष्णिक्, २१ प्रतिष्ठा २०, २२-२४ अनुष्टुप् ।

२४ पञ्चदशर्चम् । १५ आजीगर्तिः शुनःशेपः । १ कः (प्रजापतिः) २ अग्निः, ३-५ सविता, ६-१५ वरुणः । १,२,६-१५ त्रिष्टुप् । ३-५ गायत्री ।

२५ एकविंशत्यर्चम् । आजीगर्तिः शुनः शेपः । वरुणः । गायत्री ।

२६ दशर्चम् । आजीगर्तिः शुनः शेपः । अग्निः। गायत्री ।

२७ त्रयोदशर्चम् । आजीगर्तिः शुनःशेपः । १-१२ अग्निः १३ देवाः । १-२२ गायत्री, १३ त्रिष्टुप् ।

२८ नवर्चम्। आजीगर्तिः शुनः शेपः सकृत्रिमो वैश्वामित्रो देवरातः । १-४ इन्द्रः, ५-६ उलूखलः, ७-८ फलकौ, ९ सोमः । १-६ अनुष्टुप्, ७-९ गायत्री ।

२९ सप्तर्चम् आजीगर्तिः शुनः शेपः । इन्द्रः । पंक्तिः ।

३० द्वाविंशत्यर्चम् । आजीगर्तिः शुनःशेपः । १-१६ इन्द्रः, १७-१९ अश्विनौ, २०-२२ उषाः । १-१०, १२-१५, १७-२२ गायत्री, ११ पादनिचृद्गायत्री, १६ त्रिष्टुप् ।

३१ अष्टादशर्चम् । हिरण्यस्तूप आङ्गिरसः । अग्निः । जगती, ८,१६,१८ त्रिष्टुप् ।

३२ पञ्चदशर्चम् । हिरण्यस्तूप आङ्गिरसः । इन्द्रः । त्रिष्टुप् ।

## तृतीयाध्यायः

सूक्तसंख्या–

३३ पञ्चदशर्चम् । हिरण्यस्तूप । आङ्गिरसः । इन्द्रः । त्रिष्टुप् ।

३४ द्वादशर्चम् । हिरण्यस्तूप आङ्गिरसः । अश्विनौ । जगती, ९-१२ त्रिष्टुप् ।

३५ एकादशर्चम् । हिरण्यस्तूप आङ्गिरसः । १ (पादानां क्रमेण) अग्निः मित्रावरुणौ, रात्रिः, सविता च । २-११ सविता । त्रिष्टुप्, १-९ जगती ।

३६ विंशत्यर्चम् । कण्वो घौरः । अग्निः । प्रगाथः=विषमा बृहत्यः, समाः सतोबृहत्यः (१३ उपरिष्टाद् बृहती । ऐ.ब्रा. २/२ चरणच्छेदः) ।

३७ पञ्चदशर्चम् । कण्वो घौरः । मरुतः । गायत्री ।

३८ पञ्चदशर्चम् । कण्वो घौरः । मरुतः । गायत्री ।

३९ दशर्चम् । कण्वो घौरः । मरुतः । प्रगाथः=विषमा बृहत्यः, समाः सतोबृहत्यः ।

४० अष्टर्चम् । कण्वो घौरः । १ ब्रह्मणस्पतिर्मरुत इन्द्रश्च, २ सहस्पुत्रो मरुतश्च, ३ ब्रह्मणस्पतिः, सूनृता देवी, देवाश्च, ४-५ ब्रह्मणस्पतिः, ६-७ देवाः, ८ इन्द्रः । प्रगाथः=विषमा बृहत्यः, समाः सतो बृहत्यः ।

श्रीः

श्री आनन्दतीर्थभगवत्पादाचार्यविरचितं

# ऋग्भाष्यम्

## अथ द्वितीयोऽध्यायः

ऋक्संहिता पदपाठसहिता (सू-२०, व-१)

(१९५) अयं देवाय जन्मने स्तोमो विप्रेभिरासया ॥
अकारि रत्नधातमः ॥ १ ॥

(प०) अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया ॥
अकारि । रत्नऽधातमः ॥ १ ॥

(१९६) य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी ॥ शमीभिर्यज्ञमाशत ॥२॥

(प०) ये । इन्द्राय । वचःऽयुजा । ततक्षुः । मनसा । हरीइति ॥
शमीभिः । यज्ञम् । आशत ॥ २ ॥

(१९७) तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् ॥
तक्षन्धेनुं सबर्दुघाम् ॥ ३ ॥

(प०) तक्षन् । नासत्याभ्याम् । परिऽज्मानम् । सुऽखम् । रथम् ॥
तक्षन् । धेनुम् । सबःऽदुघाम् ॥ ३ ॥

(१९८) युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः ॥
ऋभवो विष्ट्यक्रत ॥ ४ ॥

(प०) युवाना । पितरा । पुनरिति । सत्यऽमन्त्राः ।
ऋजुऽयवः ॥ ऋभवः । विष्टी । अक्रत ॥ ४ ॥

(ऋक्संहिता पदपाठसहिता)

(१९९) संवो मदासो अग्मतेन्द्रेणच मरुत्वता ॥
आदित्येभिश्च राजभिः ॥ ५, १ ॥
(प०) सम् । वः । मदासः । अग्मत । इन्द्रेण । च । मरुत्वता ॥
आदित्येभिः । च । राजऽभिः ॥ ५, १ ॥

## श्री आनन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यम्

ॐ सर्वजन्मकृते विष्णुदेवायेयं स्तुतिः कृता । मुखेन विप्रैः काण्वाद्यैः सैव यद्रतिधातमा ॥ १ ॥ वाङ्मात्रेणैव योज्यौ ये चक्रुरिन्द्राय वाजिनौ । शमीभिर्विष्णुनिष्ठाभिर्यज्ञभागं च लेभिरे । भगवांश्चैतदखिलं कृतवानृभुषु स्थितः । पृथग्वाफलदातृत्वात् ॥ २ ॥ परितो ज्मां यतश्चरेत् । परिज्माऽतोरथः काम्यं सबरित्यभिधीयते । बकामन इति ह्यस्मात् ॥ ३ ॥ सुधन्वैषां पिता स्मृतः । बृहस्पतेः कामधेनुमृजुभक्ता ऋजूयवः । अवेतनं स्वामिबलात्कर्म विष्टचत्रते क्रत । ऋतभूमिर्ज्ञान भूमिर्भगवानृभुरीरितः । येषां भूतमृतं कर्मयज्ञभागाप्तितोपि ते ॥ ४ ॥ स हेन्द्रेण सहादित्यैः प्राप्ता युष्माकमिन्दवः ॥ ५, १ ॥

## श्रीजयतीर्थविरचिता ऋग्भाष्यटीका

अयं देवाय । अष्टर्चमिदमार्भवं सूक्तम् । यद्यपि त्रयाणामृभुनामैक एव । विभ्वा वाजश्चापरौ तथापि साहचर्यादेकस्य नाम्ना त्रयोप्युच्यन्ते । तत्राद्यामृचं विष्णौ व्याख्याति ॥ सर्वजन्मेति ॥ विप्रेभिः विप्रैः मेधाविभिः । कैः काण्वाद्यैः । कण्वपुत्रो मेधातिथिस्तदाद्यैः । जन्मने जनेः कर्तरि मनिन् । सर्वजन्मकृते सर्वेषां कार्याणां जनयित्रे । देवाय देवशब्दो व्याख्यातः । तस्याभिधेयं विष्णुदेवाय । अस्यंते क्षिप्यन्ते वर्णा अनयेत्यासा तया मुखेन । न केवलं मनसा किं तु वचसापीति भावः । अयं स्तोमः इयं बुद्धिस्था स्तुतिरकारि कृता । देवाय जन्मन इति तादर्थ्ये चतुर्थी । षष्ठ्यर्थे वा । ते चैकस्यापि बहव इत्युक्तत्वाद्विप्रेभिरिति बहुवचनम् । अनादित्वादकारीति । कस्मात् । रत्नधातमः । यत् यस्मात्सा विष्णुस्तुतिरेव रतिधातमा अतिशयेन सुखदात्री । डुधाञ्दानधारणयोः । तस्मादकारि । ऋभुविषये तु देवाय जन्मन इति देवेभ्यो जातेभ्य इति योज्यम् । मानुषा एव हि ते देवा जाता इति निगमः ॥ १ ॥

य इन्द्राय । वाङ्मात्रेणैव । ये ऋभवः इन्द्रायेन्द्रस्यार्थे वचोयुजा वचसा युज्येते इति सारथेर्वाङ्मात्रेणैव रथे योज्यौ । हरी वाजिनौ । मनसा सङ्कल्पमात्रेण । ततक्षुः तक्षतिः करोतिकर्मा चक्रुः । ये च शमीभिः

(ऋग्भाष्यटीका)

विष्णुनिष्ठाभिः। शमोमन्निष्ठताबुद्धेरिति वचनात्। स्त्रीलिङ्गं ङीप् च छान्दसः। यज्ञं यज्ञभागम्। आशत अशूव्याप्तौ। आश्नुवत लेभिरे। तेभ्यः स्तोमोऽकारीति पूर्वेण सम्बन्धः। नन्विन्द्रस्य कर्मकरा ऋभव इति तेष्विन्द्रार्थं हरिनिर्माणमुपपद्यते। अदेवाश्च देवत्वं प्राप्ता इति शमीभिर्यज्ञमाशतेत्यपि। विष्णौ तु कथमित्यत आह॥ भगवांश्चेति॥ एतद्धरिनिर्माणादिकम्। एतदित्यनेनैव सिद्धेऽऽखिलमिति वचनमागामिनोरथ-निर्माणादेरपि सङ्ग्रहार्थम्। कथम्। ऋभुषु स्थितः। तास्ताः क्रियास्तत्तदन्तर्गतेन भगवतैव क्रियन्त इति हि शास्त्रम्। पक्षान्तरमाह॥ पृथग्वेति॥ ऋभुषु स्थितेन रूपेण विनापि पृथगीश्वर रूपेणैवैतदखिलं कृतवान्। कथम्। फलदातृत्वात् इन्द्रादिभ्य इति शेषः। अत्रैवं योजना। ये भगवद्रूपविशेषा इन्द्रानुष्ठिताभिः शमीभिः प्रसन्नाः सन्तस्तदीयं यज्ञमाशत ऋभुभिः करणैरिन्द्राय हरीच ततक्षुरिति। एवमुत्तरत्रापि। अध्यात्मं तु। ये इन्द्राय परमेश्वराय तं विषयीकर्तुं भक्तानां हरी मनोबुद्ध्याख्यौ वचोयुजौ वेदानुसारिणौ ततक्षुः तदीयाभिः शमीभिस्तदीयं ज्ञानयज्ञं चाशतेति॥ २॥

तक्षन्। अत्र रथविशेषणं परिज्मानमित्येतद्व्याख्याति। परित इति। ज्मां भूमिं वृत्तौ क्रियाया अन्तर्भावाच्चरेदित्युक्तम्। सबर्दुघामित्यत्र सबरित्यस्यार्थमाह॥ काम्यमिति। कुत इति तत्राह। ब कामन इति। अस्माद्धातुव्याख्यानात्। स शब्दस्तु कर्मार्थ प्रत्ययसन्नियोगेन धातोरागम इति हृदयम्। ऋभवो नासत्याभ्याम्। अश्विनोरेकोनासत्यः। साहचर्यादुभावपि नासत्यावुच्येते। यथा दस्राविति। अत एवान्यत्र नासत्यदस्रावित्याचार्याः। अश्विनोरर्थे परिज्मानं सकलपृथिवीगामिनम् अप्रतिहतगतिं सुखं रथम्। तक्षन् अतक्षन् अकुर्वन्। सबर्दुघां काम्यस्य सर्वस्य दोग्ध्रीं धेनुं चातक्षन्॥ ३॥ युवाना। इह ऋभवः स्वीयौ पितरौ पुनर्युवानावक्रतेत्युच्यते तत्र क एषां पितेत्याकांक्षायामाह॥ सुधन्वेति॥ ऋभु र्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा रथकारा बभूवुरिति हि वक्ष्यते। पूर्वस्यामृचि सबर्दुघां धेनुमतक्ष-न्नित्युक्तम्। कस्यासौ कामधेनुरित्यपेक्षायामाह॥ बृहस्पतेरिति॥ बृहस्पतिर्विश्वरूपामुपाजतेति वक्ष्यमाणत्वात्। ऋजूयव इति व्याचष्टे॥ ऋजुभक्ता इति॥ ऋजून् ब्रह्मपदयोग्यान् देवान् कामयन्त इति ऋजूयवः। सुप आत्मनः क्यच्। तदन्तात्ताच्छीलिक उकारः। भक्ता हि स्वामिनं कामयन्ते। विष्ट्यक्रतेति व्याख्याति। अवेतनमिति। यद्य पि विष्टिरिति कर्मसामान्यनामसु पठितम्। तथापि रूढिवशात् वेतनेन विना स्वामिनो बलाद्यत्कर्म क्रियते तद्विष्टिरित्युच्यते। तत्तेऽक्रत। ऋभवः स्वीयौ पितरौ मातापितरौ जीर्णौ सन्तौ युवानावक्रत अकुर्वन्। कथम्। सत्यमन्त्राः अमोघमन्त्राः। तदपि कथम्। ऋजूयवः। किं च विष्टी सुपां सुलुक् पूर्वसवर्णेति विष्टिशब्दात्परस्याः द्वितीयायाः पूर्वसवर्णः। देवानां विष्टिम् एकं च समं चतुरः कृणोतनेत्यादि वक्ष्यमाणमक्रत। ऋभुशब्दं भगवति निर्वक्ति। ऋत भूमिरिति॥ ऋगतौ। ततः परस्य क्तस्य लोपः। भूशब्दस्य च ह्रस्वः। निर्वचनत्वात्। भूमिराश्रयः। ऋतभूमिरित्यस्यैव व्याख्यानं ज्ञानभूमिरिति। यस्मात्तस्मादित्यध्याहारः। ऋभुशब्दं देवतान्तरे निर्वक्ति। येषामिति॥ येषां देवानाम् ऋतं

(ऋग्भाष्यटीका)

कर्म भूतं सत्यं तेष्वृभव ईरिताः। पूर्ववदत्रापि लोपविकारौ द्रष्टव्यौ। यज्ञ भागाप्तितोऽपीति निर्वचनान्तरम्। ऋताभागम् ऋभवः । ऋतशब्दस्य ऋकारः भागशब्दस्य च भुशब्दः पृषोदरादित्वात् । यद्वा ऋतशब्दोयज्ञनामा तस्य ऋकारादेशः। भूतशब्दो भूप्राप्तावित्यस्य रूपम्। ऋतं यज्ञभागं भूताः प्राप्ता इत्यृभवः ॥ ४॥

संवः। सहेद्रेण। हे ऋभवो मदासो मदहेतवः इन्दवः सोमाः मरुत्वतेन्द्रेण सह राजभिः आदित्यैश्च सह वः युष्माकम्। द्वितीयार्थे षष्ठी। समग्मत सम्प्राप्ताः॥ ५, १॥

## श्री राघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरी

ॐ अथ 'अयं देवाय' इति विंशमष्टर्चं वर्गद्वयात्मकमार्भवं (ऋभुदेवताकम्) गायत्रं सूक्तम्। विप्रेभिः, विप्रैः, मेधातिथिप्रभृतिभिः । अयम्, बुद्धिस्थः । रत्नधातमः, रत्नं सुखम्, रमेः क्तप्रत्ययोऽनुनासिकलोपश्च, रत्नं धत्ते ददातीति रत्नधाः, 'डुधाञ् धारणपोषणयोः' अतिशयितसुखदाता रत्नधातमः, हेतुगर्भमिदम्। स्तोमः, स्तुतिः। जन्मने, सर्वजननकर्त्रे, जनेः कर्तरि मनिन्। देवाय, 'अग्निमीळे' इत्यत्रोक्तदिशा क्रीडादिगुणविशिष्टाय विष्णवे। आसया, आस्येन, न केवलं मनसा, किं तु वचसापीति भावः। अकारि, कृता, 'डुकृञ् करणे' 'लुङ्' आस्यन्ते क्षिप्यन्ते वर्णा अनयेत्यासा मुखम्, 'असु क्षेपणे' इत्यतः करणे घञ्, (पुमान् ३४), 'घञबन्तः' (३५), 'घाजन्तश्च' (३६) 'घञजबन्ताः पुंसि' इति पाणिनीयलिङ्गानुशासनस्य 'नौ वृ धान्ये' इत्यत्रानित्यत्वोक्तेः (स्त्रीत्वम्)। देवतान्तरविषये तु 'जन्मने, देवाय' इत्येकवचनं बहुवचनार्थे, जन्मने, जातेभ्यः, 'मानुषा एव हि ते देवा जाताः' इति निगमात् 'ॐ तदुपर्यपि' (१।३।१६) इत्युक्तन्यायाच्च मनुष्यत्वेन सतामेव देवत्वेन जातेभ्यः, देवाय, देवेभ्यः, ऋभुभ्य इत्यर्थः। अन्यत्समानम् । ऋभुनामकस्यैकत्वेऽपि 'विभ्वा, वाजः' इति नाम्नोरन्ययोः साहचर्यादृभुनाम्नैव त्रयाणां ग्रहणं ज्ञेयम् तत्साहचर्यं च ऋभुर्विभ्वा वाज' (ऋ० म० ४।३४।१) इति मन्त्रे स्पष्टम्॥१॥

ये, ऋभवः। इन्द्राय, इन्द्रस्यार्थे। वचोयुजा, वचसा युज्येते इति वचोयुजा (जौ) वाङ्मात्रेण। रथे योज्यौ। हरी, वाजिनौ। मनसा, संकल्पमात्रेण। ततक्षुः, चक्रुः, 'तक्ष करणे' इति धातोः। (ये) (च) शमीभिः, विष्णुनिष्ठाभिः, 'शमो मन्निष्ठता बुद्धेः' (भाग० ११।१९।३७) इत्युक्तेः, स्त्रीलिङ्गं ङीप्च छान्दसौ। यज्ञम्, यज्ञभागम्। आशत, 'अशू व्याप्तौ' आश्नुवत, लेभिरे। (तेभ्यः) स्तोमः अकारि इति पूर्वेण अन्वयः। अत्र ऋभ्वादिदेवतागतानि लिङ्गानि तत्तदन्तर्यामिभगवद्रूपेषु

(मन्त्रार्थमञ्जरी)

मुख्यानीति 'ॐ शास्त्रदृष्टया तूपदेशो वामदेववत् ॐ' (१।१।३०) 'ॐ जीवमुख्यप्राणलिङ्गान्नेति चेत्' (१।१।३१) इत्यादिसूत्रे व्यक्तानीति तत्तदन्तर्गतरूपापेक्षया मन्त्राणां विष्णौ योजना सुशका। पृथक्स्थितभगवद्रूपपक्षे तु ये, भगवद्रूपविशेषाः। इन्द्रानुष्ठिताभिः शमीभिः (प्रसन्नाः), तदीयम् यज्ञम् आशत। (ऋभुभिः) करणैः। इन्द्राय मनसा वचोयुजा हरी (च) ततक्षुः। इति। एवमग्रेऽपि ज्ञेयम्। अध्यात्मं तु ये। इन्द्राय, परमेश्वराय, तं विषयीकर्तुम्। भक्तानाम् – हरी, मनोबुद्ध्याख्यौ। वचोयुजा, वेदानुसारिणौ। मनसा ततक्षुः। तदीयाभिः शमीभिः तदीयम्– ज्ञानयज्ञम् (च) आशत इति॥ २॥

(ऋभवः) नासत्याभ्याम्, अश्विनोरेको नासत्यनामकः, तत्साहचर्यादुभावपि नासत्यावुच्येते, यथा– 'दस्रौ' (अम० १।१।५१) इति, अत एव भारततात्पर्ये तृतीयाध्याये 'नासत्यदस्रौ' (२९) इत्युक्तिः, अश्विनोरर्थे। परिज्मानम्, ज्मां भूमिं परितश्चरतीति परिज्मा, तं सकलपृथिवीगामिनम्, अप्रतिहतगतिम्। सुखम्, सुखेन। वाह्यम् रथम्। तक्षन्, अतक्षन्, अकुर्वन्। सबर्दुघाम्, 'ब कामने' इति धातोः कर्मणि रप्रत्यये सडागमे च 'सबर्' इति काम्यमुच्यते, सर्वकाम्यदोग्ध्रीम्। धेनुम्, बृहस्पतेः कामधेनुम्। (च) तक्षन्, अतक्षन्। इति॥ ३॥

ऋभवः, ऋतस्य ज्ञानस्य भुव आश्रया इति ऋभुशब्दवाच्या विष्णुरूपविशेषाः, ऋतशब्दे निष्ठालोपः, 'भु' इत्यस्य ह्रस्वता, ऋतं कर्म भूतं सत्यं येषामिति वा, ऋतं यज्ञभागं भूताः 'भू प्राप्तौ' प्राप्ता इति वा ऋभवः प्रसिद्धदेवताश्च, ऋतभूतशब्दयोश्च ऋभावभूभावौ पृषोदरादित्वात्। ऋजूयवः, ऋजून् ब्रह्मत्वयोग्यानात्मनः स्वामित्वेनेच्छन्तीति ऋजूयवः, 'सुप आत्मनः क्यच्' इति क्यचि शीलार्थक उप्रत्ययः, 'अकृत्सार्वधातुकयोः' इति पूर्वस्य दीर्घः, ऋजुभक्ता इति यावत्। अत एव सत्यमन्त्राः, अमोघमन्त्राः सन्तः। पितरा, पितरौ, सुधन्वाख्यं पितरं स्वमातरं च, 'पिता मात्रा' इत्येकशेषः। पुनः। युवाना, युवानौ। अक्रत, अकुर्वत, जीर्णौ मातापितरौ पुनस्तरुणावकुर्वन्। किंच, विष्टी, विष्टिम्, द्वितीयायाः 'सुपां सुलुक्पूर्वसवर्ण' इत्यादिना पूर्वसवर्णः, वेतनेन विना बलात्क्रियमाणं कर्म। एकं चमसं चतुरः कृणोतन' (ऋ० भ० १।१६१।२) इति वक्ष्यमाणदिशा (अक्रत) देवानामर्थेऽकुर्वन्, 'डुकृञ् करणे', 'लुङ्' आत्मनेपदम्, विकरणलोपः। अत्र ऋजुभक्तत्वाद्यन्यगतलिङ्गानि तदन्तर्याम्यपेक्षया नेयानि, 'ॐ शास्त्रदृष्टया तूपदेशः' (१।१।३०) इति न्यायात्। तत्रापि, कथं नीचतापादकलिङ्गघटना? इति चेन्न, सर्वशास्तृत्वरूप-सर्वव्यापारकर्तृत्वाख्यस्वातन्त्र्यात्। स्वातन्त्र्यस्य चान्यशब्दलिङ्गत्वे निमित्तत्वं च ॐ तदधीनत्वादर्थवत् ॐ (१।४।३) इति सूत्रसिद्धमिति ज्ञेयम्॥ ४॥

(मन्त्रार्थमञ्जरी)

(हे ऋभवः) मदासः, मदहेतवः। (इंदवः) सोमाः। मरुत्वता इन्द्रेण च (सह) राजभिः, दीप्यमानैः। आदित्यैः च। वः, युष्माकम्, द्वितीयार्थे षष्ठी, युष्मान्। सम् अग्मत, सम्प्राप्ताः, 'गम्लृ गतौ' 'लुङ्' आत्मनेपदम्, उपधालोपादादेशौ छान्दसौ ॥ ५ ॥ इति प्रथमो वर्गः ॥ १ ॥

## श्रीसत्यनाथतीर्थरचितः रूपावतारः

अयं देवाय ॥ ननु सम्प्रदानत्वाभावात् देवायेति जन्मन इति च चतुर्थ्यनुपपन्नेत्यत आह। तादर्थ्य इति। चतुर्थीविधाने तादर्थ्य उपसंख्यानम् (वा) इति वचनात् चतुर्थीद्वयं तादर्थ्ये। ततश्च देवार्थमयं स्तोमोऽकारीति श्रुत्यर्थ इति भावः। 'सुपां सुपो भवन्ती'ति वचनानुसारेणाह। षष्ठ्यर्थे वेति। स्तोमस्यैकत्वात् कथं बहूनां कर्तृत्वोक्तिरित्यत आह। ते चेति। एकस्यापि ते ऋषयो बहव इत्युक्तत्वात् बहुवचनमुपपन्नमिति भावः। ननु भूते लुङो विधानात् स्तोमस्य चानादिनित्यत्वात् कथं लुङ्प्रयोग इत्यत आह। अनादित्वादिति। लुङ् प्राचीनत्वं विनष्टत्वं च वक्ति। अत्र विनष्टत्वरूपार्थं परित्यज्य प्राचीनत्वमात्रविवक्षया अकारीति प्रयोग इति भावः ॥ १ ॥

य इन्द्राय ॥ ननु शमशब्दस्य घञन्तत्वेन पुल्लिङ्गत्वात्कथं स्त्रीत्वं तस्य छान्दसत्वाङ्गीकारेऽपि अदन्तत्वेन 'अजाद्यतष्टाप्' (४।१।४) इति टापा भाव्यं कथं ङीबित्यत आह। स्त्रीलिङ्गमिति। अत्र स्त्रीत्वं छान्दसमित्युक्तौ ङीप्प्रत्ययो लक्षणप्राप्त इति बुध्या लक्षणगवेषणया शिष्याणां मनः खेदः स्यात् स मा भूदिति ङीप् (स्त्रीत्वं) छान्दसमित्युक्तम्। तावन्मात्रोक्तौ स्त्रीत्वं स्वाभाविकमिति भ्रमः स्यात् स मा भूदिति स्त्रीत्वं छान्दसमित्युक्तम्। आशतेति। अशेर्लङि छान्दसत्वात् विकरणलुकि झस्यादादेशे अडागमे आशतेति रूपम्। विष्णौ तु कथमिति। देवतान्तरे उपपद्यमानं हरिनिर्माणादिकं विष्णौ कथमित्यर्थः ॥ २ ॥

तक्षन्। भाष्ये 'परितो ज्मां यतश्चरेदि'ति परिज्माशब्दात् चरेदित्यर्थे डनिप्रत्ययः। ततश्च परिज्मन्निति नकारन्तशब्द सिद्धिरिति भावः। भाष्यगतज्मामिति शब्दार्थमाह ज्मां भूमिमिति। इतः टीकायां श्रूयमाणं 'वृत्तौ क्रियाया अन्तर्भावाच्चरेदित्युक्तम्' इति वाक्यं प्रक्षिप्तम्। न टीकावाक्यम्। अवश्यं चैतदेवं विज्ञेयम्। चरेदित्यस्य डनिप्रत्ययार्थत्वेन चरणप्रतिपादका-भावमाशङ्क्य समासवृत्तावन्तर्भूता चरणक्रिया भाष्यकृतोक्तेत्यभिधानायोगात्। समासवृत्तावेव चरणक्रियायाः अन्तर्भावः न तु तद्वाचको डनिरस्तीति पक्षे न परिज्मानमिति रूपसिद्धिरिति। स शब्दस्त्विवति। बधातोः कर्मणि रप्रत्ययः धातोः पूर्वं सकारश्चाऽऽगम इति भावः। (सबर्)। तक्षन्निति। तक्ष धातोर्लङि तदादेशझेरन्तादेशे छान्दसे अडभावे तक्षन्निति रूपम् ॥ ३ ॥

(रूपावतारः)

युवाना। 'सुप आत्मन....(३।१।८)' इति सुबन्तादात्मन इच्छतीत्यर्थे क्यच् इति सूत्रार्थः। ततश्च ऋजून् आत्मने इच्छतीत्यर्थे क्यचि 'अकृत्सार्वधातुकयोर्दीर्घः' (७।४।२५) इति ऋजुशब्दोकारस्य दीर्घे 'क्याच्छन्दसि' (३।२।१७०) इति ताच्छीलिक उकारप्रत्यये जसि च ऋजूयव इति रूपम्। परस्य पूर्वसवर्ण इति। विष्टिशब्दात् द्वितीयैकवचनस्य पूर्वसवर्ण इत्यर्थः। ऋतं कर्म भूतं सत्यमिति। ते यत् असाध्यं कर्म कुर्वन्ति तत् सत्यमेव न तु ऐन्द्रजालिकमिति भावः। पूर्ववदिति। त शब्दलोपो भूशब्दस्य ह्रस्वत्वमिति भावः। भू प्राप्तावित्यस्येति। अस्मात् डुप्रत्यये भुशब्दनिष्पत्तिरिति भावः॥ ४॥

सं वः। समग्मतेति। गमेर्लुङि 'समोगम्यृच्छिभ्याम्' (१।३।२९) इत्यात्मने पदे 'मन्त्रे घस ह्वर...' (२।४।८०) इति च्लिलुकि झस्यादादेशे 'गमहन...' (६।४।९८) इत्युपधालोपे समग्मतेति रूपम्॥ ५,१॥

## श्रीनिवासतीर्थविरचिता पदार्थप्रकाशिका

श्री वेदव्यासं पूर्णबोधैकबन्धुं
गुरूपास्यं सम्प्रणम्येष्टदोहम्।
ऋग्भाष्यस्थ द्वितीयाध्यायटीकां
विवृण्वेहं गुरुशिक्षानुसारात्॥

ॐ अयं देवाय जन्मने। अयमष्टर्चर्भवमित्यनुक्रणिकां हृदि निधायाह। अष्टर्चमिदमार्भवसूक्तमिति। आर्भवसूक्तमित्यनुक्रमणिकामाक्षिप्य समाधत्ते। यद्यपीत्यादिना। विश्वा वाजश्चापराविति। ऋभुर्विश्वावाजो देवानगछतेति द्वितीयाष्टके तृतीयाध्याये वक्ष्यमाणत्वादिति द्रष्टव्यम्। तथाचाष्टर्चेऽस्मिन् सूक्ते बहवस्तावत् प्रतिपाद्या दृश्यन्ते। सर्वत्रापि बहुवचनश्रवणात्। तथाचार्भवमित्ययुक्तम्। ऋभुर्विश्वावाजश्चेति त्रयाणां मध्ये एकस्यैव ऋभुत्वेनेतरयोः तच्छब्दवाच्यत्वाभावेन एकऋभुदेवताकत्वे ऋक्षु बहुवचनायोगात्। अतो ऋभ्वादित्रि तयदेवताकमिति वक्तव्यमित्यर्थः। एकस्य नाम्नेति। त्रयाणां मध्ये एकस्य विद्यमानेन ऋभुनाम्ना ऋभुर्विश्वावाजश्चेति त्रयोऽप्युच्यन्ते। प्रतिपाद्यन्त इत्यर्थः। कथमित्यत उक्तं साहचर्यादिति। तन्मध्ये ऋभुर्वाच्य एव विश्वावाजश्चेत्युभौ तु ऋभुसाहचर्येण छत्रिन्यायात् ऋभुनाम्नोपचारेणोच्येते इत्यर्थः।

(पदार्थप्रकाशिका)

अत्रोदाहरणम्। इन्द्रावायूबृहस्यतीत्यस्याम् ऋचि मित्रेत्येतद्व्याख्यानसमये साहचर्यात् द्वयोरेकं नाम दस्रेति यथोक्तम्। उतरत्रापि तक्षनासत्याभ्यामित्येतद्व्याख्यानसमये वक्ष्यामश्चेति भावः। नन्वेवं चेन्माद्रवत्या अश्विनावेव कुत आहूताविति वाच्यम्। विशेषनाम्नैव समाहूताः सुरा दद्युः सुतानित्यविशेषितं तयोः। विशेषनामापि इति भगवत्पादैरुक्तत्वादिति चेन्न। यथा अश्विनोर्मध्ये एकस्य नाम्ना दस्रेत्यनेन नासत्योप्युच्यते तदेवसामान्यनाम विशेषनामापीति। एवम् ऋभुनाम्ना विश्वावाजावप्युच्येते। एवं च सामान्यविशेषनाम्नोः त्रयाणामप्येकत्वात् ऋभव आकारिताश्चेत् त्रयः पुत्राः भवेरन्। यथा कस्मान्नाहूताः। इति चेदुच्यते। विशेषनाम्नः परस्परयोरविशिष्टत्वं विवक्षितम्। यथा दस्रनाम्ना नासत्योप्युच्यते नासत्यनाम्नादस्रश्च। नैवं प्रकृते। कुतः। यतो ऋभुनाम्नैवेतरौ उच्येते नेतरयोर्नाम्ना ऋभुरित्येवं विचार्य माद्रवत्या ऋभवो नाहूताः। किंत्वश्विनावेवेति सम्प्रदायः। विप्रेभिरिति ऐसभावो छान्दस इति द्रष्टव्यम्। मेधाविभिरिति। ज्ञानिभिरित्यर्तः। विप्रशब्दस्य मेधाविनामसु पाठात् इति भावः। कैरिति। कैर्विप्रैरित्यर्थः। कर्तरिमनिनिति। जनीप्रादुर्भाव इति धातुः। अत्र ईकारो अनुबन्धार्थः। जन् इत्येवधातुः। तस्मान्मनिन् प्रत्यये जन्मनिति प्रातिपदिके सति पश्चात्स्वाद्युत्पत्तौ जन्मन इति भवतीति भावः। सर्वजन्मकृत इति। अनेन जनयतीति जन्मेति कर्त्रर्थो दर्शितः। देवशब्द इति। प्रथमाध्याये अग्निमील इति ऋग्व्याख्यानावसरे द्योतनाद्विजयात्कांत्या स्तुत्या व्यवहृतेरपि। गत्या रत्या च देवाख्यमिति देवशब्दो द्योतनार्थकतया व्याख्यात इति अत्र स न व्याख्यात इति भावः।

ननु देवमित्यस्य द्योतनादिगुणयुक्तमित्यर्थकतया विशेषणपदत्वात्। किमस्य विशेष्यमित्यत आह। तस्याभिधेयमिति। देवशब्दस्य विशेष्यमित्यर्थः। विष्णुदेवायेति वचनेन ऋचि देवा इत्यनन्तरं विष्णव इति शेषो द्रष्टव्य इत्युक्तं भवति। क्षिप्यन्त इति। यद्यपि क्षिप् निरसन इति धातोः निरस्यन्त इत्यर्थ आयाति। तथापि धातूनामनेकार्थत्वादुच्चार्यन्त इत्यर्थो द्रष्टव्यः। एवमासाशब्दं निरुच्य तत्र भाष्यं संवादयति। मुखेनेति। स्तुतिर्मुखैनैव क्रियत इति प्रसिद्धमेव। अतः आसयाकारीत्युक्तेः कोऽभिप्राय इत्यत आह। न केवलमिति। मनसेति। स्तोमोऽकारीति शेषः। तादर्थ्य इति। तथाच सर्वजन्मकृद्देवार्थमित्यर्थो द्रष्टव्यः। षष्ट्यर्थे वेति। तथाच सर्वजन्मकृतो देवस्य स्तोमः। तद्विषयिणी स्तुतिरकारीत्यर्थो द्रष्टव्यः। ननु स्तोतुर्मेधातिथेरेकत्वाद्विप्रेणेति वक्तव्यम्। विप्रैरिति तु कथमित्यत आह। तेचैकैकस्यापीति। अत एव भाष्ये काण्वाद्यैरित्युक्तमिति द्रष्टव्यम्।

ननु मेधातिथिनेदानीं स्तोत्रस्य क्रियमाणत्वादकारीति भूतार्थकलुङ्प्रयोगः कथमित्यत आह। अनादित्वादिति। वेदे मेधातिथिगणस्थयोः प्रवाहतोऽनादित्वादित्यर्थः। कस्मादिति। कस्माद्धेतोः

(पदार्थप्रकाशिका)

स्तुतिरकारीत्यर्थः । ननु डुधाञ्धारणपोषणयोरिति धातोः धारणपोषणार्थकत्वेन दानार्थकत्वाभावात् सुखदात्रीति कथं व्याख्यायत इत्यत आह । डुधाञ्दानधारणयोरिति । ऋभूणां त्रित्वाद्देवाय जन्मन इत्येकवचनं बहुवचनार्थ इति भावेनाह । देवेभ्यो जातेभ्य इति । देवत्वेनोत्पन्नेभ्य इत्यर्थः । ननु देवत्वेनोत्पन्नेभ्य इत्युक्त्या पूर्वं ते मनुष्याः इदानीं देवत्वेनोत्पन्नाः इति गम्यते । न च तद्युक्तम् । पूर्वं मनुष्या एव देवाः भवन्तीत्यत्र नियामकाभावादित्यत आह । मानुषा एवहीति । तदुपर्यपि बादरायणः सम्भवादिति सूत्रें मनुष्याणामेव देवादित्वप्राप्तेरभिधानात् ब्रह्मसूत्रादिरूपो निगमोत्र नियामकोऽस्तीत्यर्थः ॥ १ ॥

य इन्द्रायवचो युजा । करोति कर्मेति यद्यपि तक्ष तनूकरण इति पठ्यते । तथापि धातूनामनेकार्थत्वादत्र करोत्यर्थक इत्यर्थः । वचनादिति । एकादशस्कन्धे भगवद्वचनादित्यर्थः । ननु शमशब्दस्य पुल्लिङ्गत्वाच्छमैरिति स्यात् शमीभिरिति कथमित्यत आह । स्त्रीलिङ्गमिति । ननु तथापि शमशब्दात् स्त्रियां टापि शमीभिरिति त्वयुक्तमेवेत्यत आह । ङीप्चेति । कर्मकराः सेवकाः तेषु ऋभुष्वेतदृक्प्रतिपाद्येषु सत्सु इत्यपि उपपद्यत इति वर्तते । कुत इत्यतस्तदुपपादनाय पूर्वमेव देवाश्च देवत्वं प्राप्ताः इतीति । पूर्वमदेवानां देवत्वप्राप्त्यनन्तरमेव हि विष्ण्वनुग्रहेण यज्ञभागप्राप्तिरिति भावः। तत्कथमिति विष्णोरिन्द्रकर्मकरत्वाभावेन तदर्थं हरिंनिर्माणोक्तेरयोगात् । शमीभिर्यज्ञमाशत इत्यस्यापि बाधितत्वात् । अतस्तदुभयं विष्णौ वाच्यतया विवक्षिते सति कथम् इत्यर्थः । आगामित इति । तक्षन्नित्यागामिऋगुक्तस्य रथनिर्माणकामधेनुनिर्माणादेः संहारार्थमित्यर्थः । कथमिति । एतदखिलं कथं भगवान् कृतवानित्यर्तः । इति हि शास्त्रमिति । 'न ऋते त्वत्क्रियते किंचनारे' । 'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् । एक एव महाशक्तिः कुरुते' । व्यतिरेकानवस्थितेश्चानपेक्षत्वात् इति श्रुतिस्मृतिब्रह्मसूत्ररूपशास्त्रमितीममर्थं बोधयतीत्यर्थः ।

फलदातृत्वादिति । इन्द्रानुष्ठितशमीभिः प्रसन्नो भगवान् यज्ञभागं गृहीत्वा नृभूमीरथादिकं निर्माययित्वा इन्द्रादिभ्यः तद्रथादिरूपं लौकिकं फलं प्रयच्छतीत्येवं फलदातृत्वादित्यर्थः । अत्रैवं योजनेति । पृथग्वेत्युक्तपक्षान्तर इत्यर्थः । ततक्षुरितीति । अत्रापि तेभ्यःस्तोमोकारीति पूर्वेण सम्बन्धो द्रष्टव्यः । एवमिति । उत्तरत्रापि ऋक्षु सुखं रथं तक्षन् धेनुमित्यादावप्येवमेवयोजना भगवत्पक्षे कर्तव्येत्यर्थः । ये भगवद्रूपविशेषाः तदीयाभिः भक्तसम्बन्धिनीभिः । शमीभिः प्रसन्नाः सन्त इति शेषः । आशतेति । अत्रापि तेभ्यः स्तोमोकारीति पूर्वेण सम्बन्धो द्रष्टव्यः ॥ २ ॥

(पदार्थप्रकाशिका)

तक्षन्नासत्याभ्याम्। ननु ज्मां परितः इति परिज्मेत्येव याति। न तु चरेदिति। अतश्चरेदिति कथं भाषितमित आह। वृत्ताविति। समासवाक्य इत्यर्थः। ज्मां परितश्चरतीति समासार्थावबोधकविग्रहवाक्ये चरेदिति क्रियायाः सत्वेन समासवाक्ये तस्याः क्रियायाः अन्तर्भावमभिप्रैत्य चरेदित्युक्तमित्यर्थः। ततश्च परितश्चरज्मानामिति वाच्ये मध्यमपदलोपसमास इत्युक्तं भवति। केचित्तु उपसर्गाः क्रियायोगे धातुलीनार्थव्यञ्जकाः भवन्ति। तदभावे तु सकारकां क्रियामाहुः। प्रकृते च परीत्ययमुपसर्गो ज्मानितिकर्मकारकस्येह सत्वाच्चरेदिति क्रियामेव वक्तीत्यभिप्रेत्य वृत्तौ परिज्मानमिति वाक्ये चरेदिति क्रियायाः अन्तर्भाव इत्युक्तमित्यर्थ इत्याहुः। तर्हि सबरितिरूपं कथमित्यत आह। सशब्दस्त्विति। कर्मार्थप्रत्ययेति। असुन् प्रत्ययरूपोणादि प्रत्ययसन्नियोगेनेत्यर्थः। उणादीनां बाहुलिकत्वादिति भावः। धातोः बधातोः पूर्वं स शब्दस्त्वागम सडागमान्तर्गतः सकार इत्यर्थः। अत्र धातोः सडागम इति वक्तव्ये सशब्द इत्युक्तिः फलिताभिप्रायेण। सडागमे टकारलोपे स इत्यस्यैवोर्वरितत्वादिति ज्ञेयम्। तथाच बकामनेत्यस्मात् कर्मण्यसुन् प्रत्यये उनित्यस्य लोपे धात्वकारलोपे उणादीनां बाहुलिकत्वादसुन् प्रत्ययरूपोणादिप्रत्ययसन्नियोगेन धातोः सडागमे टित्वाद्धातोः पूर्वं जाते सति। सबसु इति जाते सस्य रुत्वे विसर्गे च सति सबरिति रूपं द्रष्टव्यम्। ऋगर्थमाह। ऋभव इति। अत क्षन्नित्यनेनान्वयः। ननु नासत्यदस्रयोरुभयोः कथं नासत्यशब्दवाच्यत्वमित्यतः छत्रिन्यायेनेत्याह। अश्विनोरिति। अश्विनोर्मध्य इत्यर्थः। अत्र दृष्टान्तमाह यथेति। यथा अश्विनोर्मध्ये एकस्यैव दस्रत्वे तत्साहचर्यादुभयोरपि दस्रशब्दवाच्यत्वं दस्रायुवाकव इत्यत्रोक्तमश्विनोर्मध्ये एकस्यैव नासत्यत्वेपि तत्साहचर्यादुभयोरपि नासत्यत्वमुच्यत इत्यर्थः। अश्विनोरेको नासत्य अपरो दस्र इत्यत्र महाभारततात्पर्यनिर्णयोक्तिं प्रमाणयति। अत एवेति। अश्विनोरेको नासत्य अपरो दस्रो यतो अत एव नासत्यदस्राविति द्विवचनं प्रयुक्तवन्त इत्यर्थः। तथा नासत्यदस्रौ परमस्य नासे इति भागवतव्यासाचार्यप्रयोगोपि द्रष्टव्यः। अत्र निश्चितार्थत्वाभिप्रायेण दृष्टान्तत्वोक्तिरिति ज्ञातव्यम्।

नासत्याभ्यामित्यस्योपपत्तिमभिधाय तदर्थमाह। अश्विनोरर्थ इति। परिज्मां यतश्चरेदिति व्याख्यातत्वादाह। सकलेति। तत्तात्पर्यमाह। अप्रतिहतेति। सुखं सुखकरम्॥ ३॥

युवानापितरापुनः। ऋभ्वादीनां पितासुधन्वेत्यत्र ज्ञापकमाह। ऋभ्वित्यादिना वक्ष्यत इति द्वितीयाष्टके तृतीयाध्याये इत्यर्थः। कस्यासाविति। कस्य सम्बन्धिनीत्यर्थः। तत्र ज्ञापकमाह। बृहस्पतिरिति। विश्वमभीष्टं समस्तं निरूपयति। ददतीति। विश्वरूपां कामधेनुरतामुपाजत्

(पदार्थप्रकाशिका)

प्राप्तवानित्यर्थः । वक्ष्यमाणत्वादिति । द्वितीयाष्टकतृतीयाध्याय एवेत्यर्थः । देवानिति । देवत्वयोग्यानित्यर्थः । तेन ब्रह्मपदयोग्यानामृजूनां देवत्वात्तद्योग्यवायोरेकस्यैव देवत्वाद्देवानिति कथं बहुवचनमिति शङ्कानवकाश इति ध्येयम् । कामयन्त इति । गुरुत्वेनेति शेषः । ऋजुं कामयन्त इत्यर्थे ऋजुशब्दं व्युत्पादयति । सुप इति । सुबन्ताछब्दात्तमात्मन इछन्तीत्यर्थे क्यच् प्रत्ययः स्यादिति सूत्रार्थः । तदन्ताछब्दादित्यर्थः । उकार इति । क्यादुः छन्दसीति सूत्रेणेत्यर्थः । तथाच ऋजुशब्दात् क्यच् प्रत्यये ककारचकारलोपे ऋज् य इति जाते तदन्तत्ताछीलिके उकारे ऋजुयुरिति जाते पश्चात्संहितायाम् अन्येभ्योपि दृश्यत इति सूत्रेण दीर्घे ऋजूयुरिति प्रातिपदिकसिद्धिः । पश्चात्स्वाद्युत्पत्तौ ऋजू यव इति भवतीति द्रष्टव्यम् ।

ननु तर्हि ऋजूयव इत्यस्य ऋजुकामिन इत्येव वक्तव्यतया ऋजुभक्ता इति कथं भाषितमित्यत आह । भक्ताहीति । तथाच भक्तत्वात्तत्कामवत्वं लब्धमेव । भक्ताः स्वामिनं कामयन्त इत्यस्य प्रसिद्धत्वादित्यर्थः । रूढिवशादिति । बलात्कारेण च भद्रायां विशिष्टनरकयातन इत्यभिधानात् । विशिष्टगृहीत प्रवृत्तिवदयं करोतीत्यादिलौकिकबहु- प्रयोगाच्चेत्यर्थः । कथमिति । जीर्णयोर्युवकरणे कथं तेषां सामर्थ्यकरणमित्यर्थः । तदपीति । अमोघमन्त्रत्वमपीत्यर्थः । ऋजूयव इति । तथाच महात्मनां भक्तत्वात् अमोघमन्त्रत्वं तेषां युक्तमित्याशयः ।

ननु विष्टचक्रतेति कथम् । विष्टिमक्रतेति वक्तव्यत्वादित्यत आह । सुपांसुलिगिति । द्वितीयायाः अम इति द्वितीयाविभक्तेः । तथाच विष्टि अम् इति स्थिते द्वितीयायाः इकाररूपपूर्वसवर्णादेशे विष्टि इति जाते सवर्णदीर्घे विष्टी इति भवतीति द्रष्टव्यम् । ननु तर्हि ऋतभुरित्येव स्यात् न ऋभुरितीत्यत आह । ऋगताविति ।क्तस्येत्यादि । ऋगतावित्यस्माद्भावे क्तप्रत्यये ककारलोपे हि सति ऋतेति रूपम् । तत्र क्तप्रत्यये लोपे निर्वचनत्वात् । भूशब्दस्य च ह्रस्वरूपे वर्णविकारे ऋभुरिति रूपमित्यर्थः । यस्मात्तस्मादिति । तथाच यस्मात् भगवान् ऋतेर्भूमिः तस्माद्दभुरीरित इति योज्यम् । लोपविकाराविति । क्तप्रत्ययलोपः । भूशब्दस्य भुशब्दरूपे वर्णविकारो द्रष्टव्य इत्यर्थः । ऋता भागमिति । भागं प्राप्ता इत्यर्थः । तर्हि भागेति स्याद्दभुरिति कथमित्यत आह । ऋतशब्दस्येति । किमत्र विधायकं सूत्रमित्यत आह । पृषोदरादित्वादिति । पृषुदुदरमिति भाष्ये पृषोदरादीनि यथोपदिष्टमिति वचनात् । तेषां यथोपादिष्टानामेव साधुत्वावगमादस्यापि तद्गणस्थत्वेन नियामकसूत्रानपेक्षत्वादिति भावः । यज्ञनामेति । यज्ञभागनामेत्यर्थः ।। ४ ।।

(पदार्थप्रकाशिका)

संवोमदासोअग्मत। मरुत्वेति। मरुद्भिः सहितेनेत्यर्थः। मरुत्वन्तं हवामहे इन्द्रमासोमपीतये इत्यत्र मरुत्वन्तम् इन्द्रम् इत्यस्य मरुद्भिः सहितमिन्द्रमिति व्याख्यास्यमानत्वादिति द्रष्टव्यम्। राजभिरिति। दीप्यमानैरित्यर्थः ॥ ५ ॥ १ ॥

## श्री पाण्डुरङ्गि केशवाचार्यविरचिता पदार्थदीपिका

॥ अयं देवाय। आर्भवमिति। साऽस्य देवता इत्यणि ओर्गुण इति गुण इति भावः। त्रितयदेवताकत्वात् कथमार्भवमिति विशिष्याभिधानमित्याक्षिप्य समाधत्ते। त्रयाणामिति। ऋभुर्विभ्वावाजो देवां अगच्छत इत्याद्युत्तरत्र श्रवणादिति भावः। एकस्येति। प्राणापानादय इव प्राणशब्देनेति भावः। कर्तरीति। अन्येभ्योऽपि दृश्यत इति प्रयोजक कर्तरि मनिन्प्रत्ययः इति भावः। अस्यन्त इति। 'असु क्षेपण' इत्यस्मादौणादिकोऽच् प्रत्ययो णिच्च इति भावः। रत्नधातममित्येतद्धेतुगर्भविशेषणमिति भावेन भाष्ये यदित्युक्तमित्यभिप्रेत्य अवतारयति। कस्मादिति। अतिशयेन रत्नधारकत्वमात्रस्य रतिधारकोत्तमत्वात् सरत्नधातमं इत्युक्तरीत्यालाभेऽपि अतिशयेन सुखदातृत्वस्य कथं लाभः इत्यतस्तमुपपादयति। डुधाञ् धारणदानयोरिति। देवेभ्यो जातेभ्य इति समानाधिकरणे चतुर्थ्यौ। अत एवाह। मानुषा एव हीति निगम इति। समाख्या श्रुतिरित्यर्थः। मर्तासः सन्तो अमृतत्वमानशुः। सौधन्वना ऋभवः सूरचक्षसः इत्युत्तरत्र श्रवणादिति भावः ॥ १ ॥

युज्येते इति। युज समाधौ इत्यस्मा'त्सत्सूद्विषे'त्यादिना क्विप्। सुपां सुलुगित्यादिना विभक्तेराकार इति भावः। व्युत्पादितं श्रौतपदं भाष्यपदेन संवादयति। सारथेरिति। ततक्षुरिति। तक्षतेर्लिटि झेरुसादेश इति भावः। तक्षतिरिति। यद्यपि तक्षतिः तनूकरणे पठ्यते। तथापि करोतिसमानार्थोऽपि भवति तनूकरणे तक्ष इति विशिष्योपादानात्, पुनर्युवानं च रथाय तक्षथुरित्यत्र यास्केन तक्षतिः करोतिकर्मेत्युक्तत्वाच्चेति भावः। ननु शाम्यते भावे घञि 'नौदातोपदेशस्य मान्तस्यानायामेः' इति वृद्धिनिषेधे शमशब्दस्य निष्पन्नत्वात् घञ् जबन्ताश्चेति घञन्तस्य पुल्लिङ्गत्वनियमात् घञन्तात् स्त्र्यधिकारविहितङीपोऽस्मरणाच्च कथं शमीभिरिति रूपमित्यत आह। स्त्रीलिङ्गमिति। अशूव्याप्ताविति। अस्माल्लङि झस्य अदादेशः। श्नुविकरणत्वेऽपि व्यत्ययेन शप्। तस्य शप इत्यनुवृत्तौ बहुलं छन्दसीति लुक्। अडागम इति भावः। अत एवाह। अश्नुवतेति। प्राप्ता इति। इति हेतोः शमीभिरित्युपपद्यते इति भावः। आशतेतीति। इति शब्दस्य इत्यध्यात्मयोजना इति सम्बन्धः ॥ २ ॥

(पदार्थदीपिका)

वृत्ताविति । समासवृत्तावित्यर्थः । क्रियायाश्चरणक्रियायाः । अन्तर्भावाद्व्याप्यतयात्र विशिष्टत्वादेव चरेदित्युक्तम् । न तु समस्यमान पदतयेत्यर्थः । कर्मार्थेति । काम्यते इति सबरिति कर्मार्थकडस् प्रत्ययसन्नियोगेन धातोः सडागमे सबरिति रूपसिद्धिरिति भावः । साहचर्यादिति । नित्यावियोगित्वादित्यर्थः । सदावियोगौ दिविजेषु दस्रौ न चैतयोर्नामभेदः क्वचिद्धीति नित्यसाहचर्यनिमित्तकनामभेदाभावोक्तेः तथाविशेषितम् । ययोः विशेषनामापीति । नासत्यदस्रशब्दयोर्विशेषनामत्वस्य उभयसाधारण्यस्य चोक्तेः इति भावः । यथा दस्राविति यथोभयोरेकस्यैव दस्रत्वेऽपि साहचर्यादुभयोरपि दस्रत्वं तथा इत्यर्थः ॥ ननु नासत्यावश्विनौ दस्रावित्यभिधानादुभयोरपि साधारणनामत्वात् कुतो विशेषनामत्वमित्यत आह । अत एवेति । असाधारणनामत्वादेव 'नासत्यदस्रौ परमस्य नास' इत्यादि भागवतादिप्रयोगमनुसृत्य नासत्यदस्रौ क्रमशः प्रसूताविति भगवानाचार्योऽवादीदित्यर्थः । साधारणनामत्वेतु घटकलशशब्द-वत्पर्यायत्वादन्यतरवैयर्थ्यापत्तेः तथा वचनं न सङ्गच्छते इति भावः ॥ ३ ॥

क्यजिति । तथाच अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घ इति भावः । तदन्तादिति । क्यजन्तात् तच्छीलादौ कर्तरि क्याच्छन्दसि इत्युप्रत्यय विधानादित्यर्थः । ततश्च आतो लोप इत्यकारलोपे ऋजूयुशब्दनिष्पत्तिरिति भावः । भक्तत्वमार्थिकोऽर्थ इत्याशयेनाह । भक्ता हीति । यद्यपीति । यद्यपि विष्वीव्रतमिति वकारोपध एव विष्वीशब्दः कर्मनामसु पठ्यते । नतु टकारोपधः । तथापि समानधातुजत्वादयमपि पठितप्राय इत्यभिप्रायः । अक्रतेति । कृञो लुङ् आत्मनेपदम् । झस्य अदादेशः । मन्त्रे घसेत्यादिना च्लेर्लुक् । यणादेशः । अडागमश्चेति भावः । यस्मादिति । यस्मात् ऋतभूमिः तस्माद्भुरित्यध्याहारेण योज्यमित्यर्थः । पूर्ववदिति । भूतमृतं येषान्ते ऋभव इति बहुव्रीहौ त्तस्य लोपः । क्विप् चेति क्विपि निष्पन्नस्य भूशब्दस्य ह्रस्व इत्यर्थः । उपलक्षणं चैतत् । विशेषणस्य परनिपातश्च द्रष्टव्यः । ऋतेन भान्तीति ऋतेन भवन्तीति वा इति यास्कनिर्वचनादेव इति भावः ॥४॥

मदास इति । माद्यंते एभिरिति मदाः सोमाः । मदोऽनुपसर्गे इत्यप् । 'आज्जसेरसुक्' इति जसो असुगागम इति भावः । मरुत्वतेति । मरुतोऽस्य सन्तीति मरुत्वान् । तसौ मत्वर्थ इति भसंज्ञया पदसंज्ञायाः बाधितत्वाज्जस्त्वाभावः । झय इति मतुपो वत्वमिति भावः । ननु द्वितीया श्रितेति सूत्रे प्राप्तयोगे द्वितीयाविधानात् द्वितीयया भवितव्यम् । कथं षष्ठीत्यत्राह । द्वितीयार्थ इति । समग्मतेति । गमेः संपूर्वाल्लुङ् । समो गम्यृच्छीत्यादिनात्मनेपदम् । झस्यादादेशः । मन्त्रेधसेत्यादिना च्लेर्लुक् । गमहनेत्यादिना उपधालोपः । व्यवहिताश्चेति समो व्यवहितप्रयोग इति भावः ॥ ५ ॥

## छलारीनरसिंहाचार्यविरचिता टीकाविवृतिः

श्रीमध्वगुरुसंसेव्यं वेदवेद्यगुणार्णवम् ॥
निर्दोषं श्रीहरिं वन्दे विद्याधीशगुरूनपि ॥ १ ॥

अयं देवाय ॥ अष्टर्चमिति ॥ अयमष्टावार्भवमित्यनुक्रमणिकायामनुवृत्त्या ऋषिछन्दसोः सिद्धौ सूक्तर्क्सख्यादेवतोक्तेरित्याशयः । ऋभुर्देवतास्येत्यणि ओर्गुण इति भावेनाह ॥ आर्भवमिति ॥ ननु य इन्द्राय वचोयुजेत्यत्र ऋभवो विष्ठचक्रतेत्यत्र च वक्ष्यमाणबहुवचननिर्देशो न घटते । ऋभुनामकस्यैकत्वात् । विभ्वाख्यवाजाख्ययोर्ग्रहणेन बहुवचनोपपादने तु तयोः ऋभुशब्दानुपपत्तिरित्याशङ्कते ॥ यद्यपीति ॥ त्रयाणां मध्ये इत्यर्थः । ऋभुर्विभ्वावाजो देवाँ आगच्छतेत्यादिद्वितीयाष्टकादौसाहचर्योक्तिमाश्रित्य समाधत्ते ॥ तथापीति ॥ यथाऽपानादीनां प्राणेति नामेति भावः ॥ जनेरिति ॥ अन्येभ्योपि दृश्यन्ते इत्यनेनेति भावः ॥ अस्यन्त इति ॥ सुपां सुपो भवन्तीत्युक्तेरिति भावः । ननु स्तोम इति स्तुतेरैक्योक्तेः कथं तत्स्तोतॄणां विप्रेभिरिति बहुत्वोक्तिर्युज्यत इत्यत आह ॥ ते चेति ॥ ते स्तोतारः एकस्यापि वेदादिस्तोत्रस्य बहुवःसंभवन्तीति तत्प्रमाणार्थः । अकारीत्युक्त्या प्राप्तामिदानीं न क्रियते अग्रेपि न करिष्यते इति शङ्कां वारयति ॥ अनादित्वादिति ॥ इदमुपलक्षणं नित्यत्वादित्यपि ग्राह्यम् । वेदस्यानादिनित्यत्वात्स्तोमकरणस्यापि प्रवाहतोनादिनित्यत्वादुत्तरोत्तरकाले पूर्वपूर्वकालीनस्तुति विवक्षयाऽकारीति भूतप्रयोग उपपद्यत इति भावः । भाष्यस्थयच्छब्देन रत्नधातमपदस्य हेतुगर्भविशेषणत्वं द्योतितमित्याशयेनाह ॥ कस्मादिति ॥ देवेभ्यो जातेभ्य इति ॥ वचनव्यत्ययेनेति शेषः । जातेभ्य इति देवेभ्य इत्यस्य विशेषणमिति भावः । तदुपपादयति ॥ मानुषा एवेति ॥ समाख्या श्रुतिर्निगमः । पूर्वजन्मनि मनुष्याणां जन्मान्तरे देवत्वप्राप्तेर्देवमात्र साधारण्यात्तद्व्यावृत्तय एकस्मिन्नेव जन्मनीति ग्राह्यम् । मर्तासःसंतो अमृतत्वमानशुः ॥ सौधन्वना ऋभवः सूरचक्षस इत्युत्तरत्र श्रवणादिति भावः ॥ १ ॥

य इन्द्राय ॥ तादर्थ्ये चतुर्थीमाश्रित्याह ॥ इन्द्रायेन्द्रस्यार्थे इति ॥ युजिर्योगे इत्यतः संपदादित्वात्कर्मणि क्विबित्याशयेनाह ॥ युज्येते इति ॥ इति शब्दस्य वचोयुजा इत्यनेन सम्बन्धः । भाष्यं संयोजयति ॥ सारथेरिति ॥ तक्षतिः करोतिकर्मेति ॥ पुनर्युवानं चरथाय तक्षथुरित्यत्र तक्षतिः करोतिकर्मेति यास्कोक्तेरिति भावः । ननु शमु उपशमे इत्यतो भावे घञि नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्धिनिषेधे निष्पन्नशमशब्दस्य घञबन्तः(पुंसि) इति पुल्लिङ्गत्वाद्धञन्तान्ङीपोऽविधानाच्च शमीभिरिति कथमित्यत आह ॥ स्त्रीलिङ्गं ङीप्चेति ॥ आशते-

(टीकाविवृतिः)

त्यत्राश्नोतेर्लङि व्यत्ययेन शपो लुकि झस्यादादेश इति भावेनाह ।। आश्नुवतेति ।। कर्मकरा इति ।। भृत्या इत्यर्थः ।। विष्णौ त्विति ।। विष्णोरिन्द्रभृत्यत्वाभावान्नूतनदेवत्वप्राप्त्यभावाच्चेति भावः ।। इति हि शास्त्रमिति ।। तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीःप्रबोधयन् । इति हि अस्मिन्नर्थे प्रमाणमित्यर्थः। पृथगीश्वररूपग्रहणपक्षे इन्द्रार्थं हरितक्षणं भृत्यकर्म तथा शमीभिर्यज्ञप्राप्तिश्चायुक्तेत्यत आह ।। अत्रैवमिति ।। अपेक्षिताध्याहारेणेत्यर्थः ।। तदीयमिति ।। इन्द्रसंबन्धीत्यर्थः ।। एवमुत्तरत्रापीति ।। उत्तर ऋक्षु यदन्यार्थं रथकरणाद्युच्यते तदन्तर्यामिविवक्षयाऽन्यैः करणैर्वेति ज्ञेयमित्यर्थः ।। अध्यात्ममिति ।। ये ऋभुनामकभगवद्रूपविशेषाः शरीरनिष्ठा इत्यर्थः ।। परमेश्वरायेति ।। बिंबादिरूपायेत्यर्थः ।। २ ।।

तक्षन्नासत्याभ्याम् ।। ज्यां भूमिमिति ।। गौःग्मा ज्मेति पृथ्वीनामसु पाठादिति भावः । तथाच परितःज्मा अस्यास्तीत्यस्मिन्नर्थे लोमादि पामादीति सूत्रेण पामादित्वात् नप्रत्यय इत्युक्तं भवति । अत्राद्युदात्तत्वं तु छान्दसं ज्ञेयम् ।। वृत्तौक्रियाया इति ।। समासकृत्तद्धितादीनां वृत्तिशब्दवाच्य-त्वात्समासवृत्तौ चरणक्रियायाः परिशब्दवाच्यत्वेन विद्यमानत्वादित्यर्थः ।। कर्मार्थप्रत्ययेति ।। औणादिके र इति प्रत्यये अकारस्येत्संज्ञायां रेफरूपप्रत्यय सम्बन्धेन ब इति धातोरादौ स इति विशिष्ट एव आगम इति भावः ।। साहचर्यादिति ।। नित्यावियोगित्वात् । सदाऽवियोगौ दिविजेषु दस्रावित्युक्तेरिति भावः ।। यथादस्राविति ।। दस्रायुवाकव इत्यादावृचि उभयत्र दस्र शब्दःप्रयुज्यत इति भावः । नासत्यदस्रशब्दयोः पृथनामत्वे प्रयोगं प्रमाणयति ।। अत एवेति ।। पृथङ्नामत्वादेव नासत्यदस्रौ क्रमशः प्रसूतावित्याहुरित्यर्थः । भागवतेपि । नासत्यदस्रौ परमस्य नासेति ।। अतक्षन्निति ।। तक्षेर्लङि बहुलं छन्दस्यमाङ्योगेपीति अडागमाभावश्छान्दस इति भावः ।। ३ ।।

युवाना पितरा ।। वक्ष्यत इति ।। अश्वा॒दश्वशमतक्षतयुक्त्वारथ॒मुपं॑दे॒वां अं॑यातनेति सुधन्वनः पुत्राः अश्वादश्वं युक्त्वा अश्वावन्योन्यं संयोज्य रथमतक्षत चक्रुस्तं रथमुपदेवान्प्रापितवन्तश्चेति द्वितीयाष्टकादाविति शेषः ।। पूर्वस्यामिति ।। तथाच प्रसङ्गसङ्गत्या बृहस्पतेः कामधेनुरिति भाष्यं प्रवृत्तमिति भावः ।। बृहस्पतिरिति ।। द्वितीयाष्टके । इन्द्रो॒ हरी॑ युयुजे अ॒श्विना॒ रथं॒ बृह॒स्पति॑र्वि॒श्वरू॑पा॒मुपा॑जतेत्यत्र इन्द्रःहरी अश्वौ युयुजे प्राप्तवान् अश्विनौ रथं प्राप्तवन्तौ बृहस्पतिर्विश्वरूपां कामधेनुं उपजात प्राप्तवानिति वक्ष्यमाणत्वादित्यर्थः ।। कामयन्त इति ।। आत्मनः सेव्यत्वेनेति शेषः ।। तदन्तादिति ।। अकृत्सार्वधातुकयोरिति दीर्घे क्यजन्तात्क्याच्छ-न्दसीति तच्छीलादौ उप्रत्यय इति भावः । ऋजुभक्ता इति भाष्यं तात्पर्यपरमिति भावेनाह ।। भक्ता

(टीकाविवृतिः)

हीति ॥ पठितमिति ॥ विष्टिर्व्रतमिति कर्मनामसूक्तेरिति भावः । विष्ढीति वकारोपधपाठे तु समानधातुकत्वादुभयोःपदयोरित्याशयेनोक्तमिति ज्ञेयम् । अक्रतेति करोतेर्लुङि झस्यादादेशे च्ले र्मन्त्रेघसह्वरण शबृदहाद्वृच्कृगमिजनिभ्यो लेरिति लुकि यणादेश इति भावः ॥ पूर्वसवर्ण इति ॥ अमःसर्वादेशः पूर्वसवर्णदीर्घ इति भावः । निर्वचनत्वादिति ॥ क्तलोपह्रस्वौ पृषोदरादित्वादिति भावः ॥ अध्याहार इति ॥ यस्माज्ज्ञानभूमिस्तस्माद्दभुरिति भाष्ययोजनेति भावः ॥ पूर्ववदिति ॥ ऋतं भूतं येषान्त इति बहुव्रीहौ पदद्वयेक्तलोपो भूशब्दे ह्रस्वश्च पृषोदरादित्वादित्यर्थः । वाहिताग्न्यादिष्विति विशेषणस्य परनिपात इति भावः ॥ ऋताभागमिति ॥ भागं प्राप्ता इत्यर्थः । भागशब्दस्य भ्वादेशेपि परनिपातश्चाश्रयणीय इत्यरुचेराह ॥ यद्वेति ॥ ऋतमुंछशिले तोये दीप्ते सत्येभिपूजिते इति विश्वकोशे दीप्ते अभिपूजिते च ऋतशब्दोक्तेर्यज्ञस्यापि दीप्तत्वाद्यभिप्रायेणैतदुक्तमिति ज्ञेयम् ॥ ४ ॥

संवो मदासः ॥ मदेःकरणे मदोनुपसर्ग इत्यप्प्रत्यय इति भावेनाह ॥ मदासो मदहेतव इति ॥ मरुत्वतेन्द्रेणेति ॥ इन्द्रो मरुत्वान्मघवेत्यभिधानादित्यर्थः । मरुतोस्य संतीत्यर्थे मतुपि तसौ मत्वर्थे इति भत्वाज्जस्त्वाभावे झय इति मतोर्मस्य वकार इति भावः ॥ द्वितीयार्थे षष्ठीति ॥ भाष्य इति शेषः । श्रुतौ तु व इति द्वितीयैव ज्ञेया ॥ समग्मतेति ॥ गमेर्लुङि समोगम्यृच्छिभ्यामित्यात्मनेपदे मन्त्रेघसह्वरेति च्लिलुकि झस्यादादेशे गमहनेत्युपधालोप इति भावः ॥ ५ ॥

**ऋक्संहिता पदपाठसहिता** (सू-२०, व-२)

**(२००) उतत्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् ॥**
**अकर्त चतुरःपुनः ॥ ६ ॥**

**(प०) उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःऽकृतम् ॥**
**अकर्त । चतुरः । पुनरिति ॥ ६ ॥**

**(२०१) ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते ॥**
**एकमेकं सुशस्तिभिः ॥ ७ ॥**

**(प०) ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते ॥**
**एकम्ऽएकम् । सुशस्तिऽभिः ॥ ७ ॥**

(ऋक्संहिता पदपाठसहिता)

(२०२) अधा॑रयन्त॒ वह्न॒योऽभ॑जन्त सुकृ॒त्यया॑ ॥
भा॒गं दे॒वेषु॑ य॒ज्ञिय॑म् ॥ ८, २, २० ॥

(प०) अधा॑रयन्त । वह्न॑यः । अभ॑जन्त । सु॒ऽकृ॒त्यया॑ ॥ भा॒गम् ।
दे॒वेषु॑ । य॒ज्ञिय॑म् ॥ ८, २, २० ॥

## ऋग्भाष्यम्

एकं चमसं चतुरः कुरुतेत्याहतान्पुरा । त्वष्टाग्निश्चैव देवानां वाक्यात्तदपि तैः कृतम् । द्व्यादिस्वोक्तं परित्यज्य त्वष्टुः शुश्रूषणं कृतम् । तं पूर्वकृतमेवैकं चमसं चतुरोक्रत ॥ ६ ॥ सप्तसंख्यानि रत्नानि त्रिकालेष्वपि धत्तन । पुराणपञ्चरात्रेतिहासवेदान्हरिस्तथा । मीमांसातर्कसहितान्पंचवेदानथापिवा । सप्तच्छंदांसि वैकैकं तद्गुणैरखिलैः सह ॥ ७ ॥ सुकर्मणा यज्ञभागमभजन्नप्यधारयन् । वह्नयो धारकत्वेन स्थिरत्वेन यथागतिः ॥८,२,१॥

## ऋग्भाष्यटीका

उतत्यम् । कथागर्भेयमृक् । अतः कथामाह ॥ एकमिति ॥ चतुरश्चमसान् तानृभून् । एवशब्द एकमित्यनेन सम्बध्यते । तद्दुष्करमपि तैर्ऋभुभिः । त्वष्टुरित्युपलक्षणं देवैः प्रेषितौ त्वष्टाग्निश्च ऋभूनाहतुः । इममेकं जीर्णं चमसं नवानेतत्प्रमाणान् चतुरश्चमसान् कुरुतेति । ते अब्रुवन् द्वौ वा त्रीन् वाकरिष्यामः । चत्वारो दुष्करा इति । पुनश्चाग्निना त्वष्ट्रा च निर्बन्धे कृते द्व्यादिस्वोक्तं परित्यज्य चतुर्निर्माणरूपं त्वष्ट्रादीनां शुश्रूषणं तैःकृतमिति । ऋचं व्याख्याति ॥ तमिति ॥ उत अन्यच्च । ऋभवस्त्यं तम् । पूर्वकृतम् । जीर्णमेकमेव चमसं पुनः नवं नवान् चतुरश्चमसानकर्त अक्रत अकुर्वत । एवं त्वष्टुर्देवस्य निष्कृतं शुश्रूषणम् अक्रत ॥ ६ ॥

तेनः सप्तसंख्यानि । य एवंभूता ऋभवस्ते नोऽस्माकं सुन्वते यजमानाय त्रिःत्रिकालेष्वपि साप्तानि सप्तसंख्यानि । स्वार्थिकोत्र तद्धितः । सप्तैव साप्तानि । सप्तनोऽण् छन्दसीति वर्गे वाऽण् । छान्दसत्वादाद्युदात्तत्वम् । सप्तनोञ् छन्दसीति सूत्रपाठे न विरोधः । रत्नानि धत्तन दत्त । देवतान्तरपक्षे ''चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा । एतानि सप्तरत्नानि पूर्वेषां चक्रवर्तिना''मिति पुराणोक्तानि सप्तरत्नानि । विष्णुपक्षेत्वाह ॥ पुराणेति ॥ वेदांश्चतुरः । हरिः चेद्विवक्षित स्तदेति शेषः । तथा शब्दो वक्ष्यमाणसमुच्चये । अथापि वेति निपातसमुच्चयः पक्षान्तरद्योतकः । सप्तछन्दांसि वा गायत्र्यादीनि । उत्तरार्धं व्याख्याति ॥ एकैकमिति ॥ एषां रत्नानां मध्ये एकमेकम् एकैकं रत्नं सुशस्तिभिः प्रशंसाहेतुभिः तत्तद्गुणैरखिलैः सहवर्तमानम् । तथाभूतानि ॥ ७ ॥

(ऋग्भाष्यटीका)

अधारयन्त । सुकर्मणा । जगतो धारकत्वेन स्वयं स्थिरत्वेन च वह्नयः वह्निनामानः । अनेकार्थत्वाद्धातूनां वहतिरत्र धृतौ वर्तते । ऋभवः सुकृत्यया सुकर्मणा देवेषु देवानां मध्ये भूत्वा । यज्ञियं भागं यज्ञार्हं भागं यज्ञभागम् । अभजन्त अभजन् प्राप्ताः । अधारयन्त अधारयन्नपि । भजनातिरिक्तं धारणं नास्तीत्यतः पौनरुक्त्यं तत्राह ॥ यथाऽगतिरिति ॥ यथा येन प्रकारेण प्राप्तस्य भागस्यागतिरविच्छेदस्तथाऽधारयन् । ततश्चेदानीमभजन्त । अधारयन्त कालान्तरेपि स्थिरीकृतवन्त इत्यर्थः । यद्वा यथा विश्वस्यागतिः प्रवृत्तिर्भवति तथा धारकत्वेनेति योज्यम् । एवं च धातोरर्थद्वयमङ्गीकृतं भवति ॥ ८, २, १ ॥

## मन्त्रार्थमञ्जरी

उत, अन्यच्च । (ऋभवः) त्यम्, तम्, पूर्वकृतं जीर्णमेकमेव । चमसम्, पुनः । नवम्, नवान्, नूतनान् । चतुरः, चमसान् अकर्त, अकुर्वन् । एवम् त्वष्टुः देवस्य । निष्कृतम्, शुश्रूषणम् । (अकर्त) । अयं भावः देवैः प्रेषितोऽग्निस्त्वष्टा च ऋभूनाहतुः इममेकं जीर्णं चमसं नवानेतत्प्रमाणांश्चतुरश्चमसान्कुरुतेति । तेऽब्रुवन्– द्वौ वा त्रीन्वा करिष्यामश्चत्वारो दुष्करा इति । पुनश्चाग्निना त्वष्ट्रा च निर्बन्धे कृते स्वोक्तं द्वित्रकरणं परित्यज्य चतुर्निर्माणरूपं त्वष्ट्रादीनां शुश्रूषणं तैः कृतमिति ॥ ६ ॥

(ये) एवं भूता ऋभवः । ते । नः, अस्माकम् । सुन्वते, यजमानाय । त्रिः, त्रिकालेष्वपि । साप्तानि, सप्तसंख्याकानि, स्वार्थिकोऽत्राण्प्रत्ययः, 'सप्तनोऽञ्छन्दसि' इति वर्गार्थो वाञ्प्रत्ययः रत्नानि, चतुर्वेदेतिहासपुराणपञ्चरात्राख्यानि वा तर्कमीमांसासहितपञ्चवेदाख्यानि वा गायत्र्यादि सप्तच्छन्दांसि वा, देवतान्तरपक्षे तु– 'चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा । एतानि सप्त रत्नानि पूर्वेषां चक्रवर्तिनाम्' इत्युक्तरत्नानि । आधत्तन, दत्त । सुशस्तिभिः, प्रशंसाहेतुभिर्गुणैर्युक्तम् । एकमेकम् (वा) (आ धत्तन) प्रयच्छत, तशब्दस्य तनादेशः ॥ ७ ॥

वह्नयः, जगतो धारकत्वेन स्वयं स्थिरत्वेन च वह्निनामानः, धातूनामनेकार्थत्वाद्वहतिः अत्र धृत्यर्थः ऋभवः । सुकृत्यया, सुकर्मणा । देवेषु, देवानां मध्ये भूत्वा । यज्ञियम् भागम्, यज्ञार्हं भागम् । अभजन्त, अभजन्, प्राप्ताः । अधारयन्त (च) अधारयँश्च, प्राप्तं यज्ञभागमविच्छिन्नं यथा भवति तथा धृतवन्त इत्यर्थः, कालान्तरेऽपि स्थिरीकृतवन्त इति फलितोऽर्थः ॥ ८ ॥ इति द्वितीयो वर्गः ॥ २ ॥ विंशं सूक्तम् ॥ २० ॥

## रूपावतारः

उतत्यम् । अक्रतेति । कृञ उविकरणस्य व्यत्ययेन शप्रत्यये यणादेशे अडागमे अक्रतेति भाष्ये रूपम् ॥ ६ ॥

ते नः । स्वार्थिक इति । 'तद्धिताः' । (४।१।७६) इति बहुवचनज्ञापितोऽञ्प्रत्ययः स्वार्थ इत्यर्थः । ननु अणूप्रत्यये इप्रत्ययस्वरेण तस्याद्युदात्तत्वात् अनुदात्तं पदमेकवर्जं (६।१।१५८) इति साप्तशब्दस्याद्यनुदात्तत्वप्राप्त्या साप्तशब्दस्याद्युदात्तत्वं न स्यादित्यत आह । छान्दसत्वादिति । न विरोध इति वर्गार्थे अञ्प्रत्यये 'ञ्नित्यादिर्नित्यम्' (६।१।१९७) इति आद्युदात्तत्वस्य न्याय-प्राप्तत्वात् आद्युदात्तत्वश्रवणेनास्य न विरोध इत्यर्थः । धत्तनेति । धाञो लोटि तस्य थादेशे तस्य 'तस्थस्थमिपां...' (३।४।१०१) इति तादेशे तस्य 'तप्तनप्तनथनाश्च' (७।१।४५) इति तनादेशे शपः श्लौ 'श्लौ' इति द्विर्वचने श्नाभ्यस्तयोरातः (६।४।११२) इति आकारलोपे 'खरि च' (८।४।५५) इति धकारस्य चर्त्वे धत्तनेति रूपम् । चतुर इति । चत्वारो वेदाः पुराणपञ्चरात्र इतिहासाश्चेति त्रय इत्येकं सप्तकमिति ज्ञेयम् । पञ्चवेदाः तर्को मीमांसा चेति अपरं सप्तकम् । गायत्र्यादीनि सप्तछन्दांसीत्यपरं सप्तकमिति ज्ञेयम् ॥ ७ ॥

अधारयन्त । ननु वहतेर्धारणार्थकत्वमुपपन्नं भारं वहति गर्दभीति तदर्थकत्वस्य प्रसिद्धत्वात् स्थिरत्वार्थकत्वमनुपपन्नं प्रसिध्यभावादित्यत आह । अनेकार्थत्वादिति । धृतौ स्थैर्ये च वर्तत इत्यर्थः । यस्मात् जगदधारयन्त तस्माद्वह्नय इति श्रुतियोजनामभिप्रेत्य भाष्यं प्रकारान्तरेण योजयति यद्वेति । यथा विश्वस्य गतिः प्रवृत्तिर्भवति तथा धारकत्वेन वह्नय इत्यन्वयः । अस्मिन्व्याख्याने पौनरुक्त्यशङ्कैव नास्तीति न तत्परिहाराय प्रयतितव्यमिति भावः । एवं चेति । धृधातोः स्थैर्य धारकत्वं चेत्यर्थद्वयमुक्तं भवति । वह्निशब्दप्रवृत्तिनिमित्तद्वयस्य आधारयन्तेति पदेनोक्त्यङ्गीकारात् ॥ ८, २, १ ॥

## पदार्थप्रकाशिका

उतत्यं चमसं नवम् । उपलक्षणमितीति । त्वष्टाग्निश्चेति पूर्वमुक्तत्वात् अग्नेरपि शुश्रूषणं कृतमिति द्रष्टव्यमित्यर्थः । नवान् नूतनान् एतत्प्रमाणान् । जीर्णचमसप्रमाणानेवेत्यर्थः । उतान्यच्चेति । ऋभूणां कर्म कथ्यत इत्यर्थः ॥ ६ ॥

(पदार्थप्रकाशिका)

तेनोरत्नानि धत्तनेति तच्छब्दस्य यच्छब्दसापेक्षत्वादाह । य एवं भूता इति । हरिरथधेनुजीर्णनूतनकरणादिरूपमहिमोपेता इत्यर्थः । यजमानायेति । यजमानाय चेत्यर्थः । स्वार्थिकोत्रेति । सप्तन्शब्दात् स्वार्थे अण्प्रत्यये णित्वादादिवद्धौ प्रातिपदिकान्तनलोपे साप्तेति भवति । तदेव दर्शयति । सप्तैवेति । सप्तन्निति । पञ्चद्दशतो वर्गेवेति पूर्वसूत्राद्वर्ग इत्यनुवृत्तेर्वर्गार्थे सप्तन्शब्दात् छन्दस्थाण् प्रत्ययः स्यादिति सूत्रार्थः । तथाच सप्तन् शब्दादण् प्रत्ययेन तद्धितेनान्तस्य भस्य टेर्लोपः स्यात्तद्धिते पर इति सूत्रेणाण् इत्यस्य लोपे णित्वादादिवृद्धौ प्रत्ययाकारसम्बन्धे स् आ साप्तेति रूपम् । तथाच साप्तानीत्यस्य सप्तानां वर्गाणीत्यर्थो द्रष्टव्यः । आद्युदात्तश्चेति । प्रत्ययमात्रस्यादेरूदात्तत्वविधानात् अण् प्रत्ययादिभूताकारस्योदात्तत्वे अनुदात्तं पदमेकवर्ज्यमिति सूत्रेण यत्रोदात्तस्वरो विधीयते तमेकमृचं वर्जयित्वा अवशिष्टःसर्वोपि अनुदात्तो भवतीति विहितत्वेनेतरानुदात्तत्वप्राप्तौ सप्तानीत्यत्रादि भूतस्य सेत्यस्योदात्तत्वं न स्यादित्यत आह । छान्दसत्वादाद्युदात्तत्वमिति । आदिभूतस्य तस्योदात्तत्वं छान्दसमित्यर्थः । छन्दसि सर्वे विधयो विकल्प्यन्त इति वचनादिति भावः । समाधानान्तरमाह । सप्तनोञ्छन्दसीति । न सप्तन् शब्दादण् प्रत्ययः । किंत्वञ् प्रत्ययः । तथाच ञित्वादादिवृद्धौ साप्तेतिरूपम् । नचात्रापि आद्युदात्तश्चेति प्रत्ययादेरूदात्तत्वे अनुदात्तं पदमेकवर्ज्यमित्यस्य प्राप्त्या सप्तस्योदात्तत्वं न स्यादिति वाच्यं प्रत्ययादेरूदात्तत्वेपि ञ्नित्यादिर्नित्यमिति सूत्रेण ञितिनिति च प्रत्यये यरे प्रातिपादिके पदादिभूतं नित्यमुदात्तं भवतीति विशिष्य विधानादनुदात्तं पदमित्यस्याप्रसक्तेः सप्तस्योदात्तत्वं युक्तमिति भावः । चक्रम् आज्ञा । वक्ष्यमाणेति । मीमांसातर्कसहितानि इति वक्ष्यमाणेत्यर्थः । भाष्ये इतिहासपुराणः पञ्चमो वेदानां वेद इति वचनात्साहित्येन वेदानां पञ्चत्वमिति ज्ञातव्यम् । वेत्यनेनैव पक्षान्तरद्योतकत्वसम्भवे अथापीत्यनयोर्निपातयोः किं कृत्यमित्यत आह । अथापि वेतीति । वेत्येकनिपातवत् निपातसमुदायोपि पक्षान्तरत्वद्योतक इत्यर्थः । गायत्र्यादीनिति । गायत्र्युष्णि-गनुष्टुप् पङ्क्तिर्जगतीति सप्तछन्दांसीत्यर्थः । एकमितिप्रथमा । तत्तद्गुणैरिति । अखिलैस्त-त्तद्रत्नगुणैरित्यर्थः । एकैकस्मिन् रत्ने अखिलरत्नगुणाः सन्तीत्याशयः । तथाभूतानीति । तथाच यस्मादेतेषां मध्ये एकैकमपि रत्नं सुशस्तिभिरखिलैस्तद्गुणैर्युक्तं तस्मात्तथाभूतानि सप्तान्यपि रत्नानि दत्तनेत्यर्थः ॥ ७॥

20 आधारयन्तवह्नयः । ननु वहप्रापण इति धातोर्वहतेः प्रापणार्थत्वात् कथं वहतिरत्र वृद्धौ वर्तते इत्युच्यते इत्यत उक्तम् । अनेकार्थत्वादिति । धृतिर्धारणम् । तत्रान्यस्य कर्मत्वविवक्षायां स्वेषां तद्धारकत्वं लक्ष्यत इत्यभिप्रेत्योक्तम् । जगतो धारकत्वेनेति । स्वस्यैव धारणकर्मत्वविवक्षायां

(पदार्थप्रकाशिका)

स्वात्मस्थिरीकरणरूपम् । स्वात्मधारणं लभ्यत इत्याशयेन स्वयं स्थिरत्वेनेत्युक्तम्। यथा धारकत्वेनेति । वह्नय इति भाष्योणान्वयः । तथाच यथागतिरिति भाष्यं न पौनरुक्तिपरिहारा-याकारप्रश्लेषेण प्रवृत्तम् । किन्नाम वह्निशब्दार्थभूतधारकत्व प्रकारकथनपरमित्युक्तं भवति । अत्र च पुनरुक्तिपरिहारः पूर्वोक्तरीत्या बहिरेव द्रष्टव्य इत्याशयः । पूर्वं चेति । विश्वस्य यथा गतिर्भवति तथा तद्धारकत्वेन वह्नय इति वह्निशब्दव्याख्यानकरणेन वह्धातोर्गतिधृति-रूपार्थद्वयमङ्गीकृतं भवतीति । न पूर्वव्याख्यान इव धृतिरूपार्थाङ्गीकरः । धातूनामनेकार्थत्वादित्यर्थः ॥ ८ ॥ २ ॥ १ ॥

## पदार्थदीपिका

उपलक्षणमिति । भाष्ये त्वष्टुरित्येतदग्नेर्देवानां चोपलक्षणमित्यर्थः ॥ अकर्तेति । कृञो लुङि झस्य व्यत्ययेन तादेशः । मन्त्रे घसेत्यादिना च्लेर्लुक् । छन्दस्युभयथेति तिङ आर्धधातुकत्वाङ्ङित्वाभावेन गुण इति भावः । अक्रतेति । उविकरणस्य व्यत्ययेन शब्विकरणत्वमाश्रित्य यणादेशे अक्रतेति रूपसिद्धिरिति भावः ॥ ६ ॥

स्वार्थिक इति । स्वार्थिकोऽञ् प्रत्ययो वक्तव्यः । नतु वर्गार्थकः । प्रतिपदविहितोऽण् येन आद्युदात्तत्वं न स्यात् । अत एव भाष्ये सप्तसंख्यानीत्युक्तमिति भावः । तद्धित इति । नस्तद्धित इति टिलोपः । ञित्वादादिवृद्धिरिति भावः । पञ्चद्दशतौ वर्गे वेत्यनुवृत्तौ वर्गे विहितोऽण् प्रत्ययो वेत्यर्थः। एवञ्च सप्तसंख्याककदम्बकानीत्यर्थ इति भावः । नन्वेवं प्रत्ययस्वरेण अन्तोदात्तत्वं भवेन्नत्वाद्युदात्तत्वमित्यत आह । छान्दसत्वादिति । व्यत्ययेनेत्यर्थः । न विरोध इति । ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वविधानादिति भावः । धत्तनेति । डुधाञ् दानधारणयोरित्यस्मात् दानार्थात् लोट् मध्यमपुरुष बहुवचनस्य तस्य तप्तनप्तनथनाश्चेति तनादेश इति भावः । सुशस्तिभिरिति । सुपूर्वात् शंसु स्तुतावित्यस्मात् शस्यते आभिरिति करणे क्तिन् । तस्य कित्वात् नलोप इति भावः ॥ ७ ॥

धृतौ वर्तत इति । तथा च धृत्यर्थस्य वहेः ण्यर्थान्तर्भावानन्तर्भावाभ्यां अर्थद्वयं युक्तमिति भावः । सुकृत्यया सुकर्मणेति । सुपूर्वात् कृञः कृञः शचेति चकाराद्भावे क्यप् प्रत्ययः इति भावः । यज्ञार्हमिति । यज्ञमर्हतीत्यर्थे यज्ञर्त्विग्भ्यां घखञाविति घः । तस्य इयादेश इति भावः । अर्थद्वयमिति । प्रापणं धृतिश्चेत्यर्थद्वयमित्यर्थः ॥ ८ ॥

## टीकाविवृतिः

उतत्यम् ।। तदपीत्यपिशब्दस्यानुक्तसमुच्चयार्थत्वमाश्रित्याह ।। तद्दुष्करमपीति ।। उपलक्षणमिति ।। अग्नेर्देवानां चेति शेषः । भाष्योक्तकथां एकं चमसं चतुरस्कृणोतन यद्वो देवा अब्रुवंतद्व आगमममित्यादिमन्त्रानुसारेण विवृणोति ।। देवैरित्यादिना ।। त्यद्शब्दस्य तच्छब्दपर्यायत्वाद्भाष्ये तमिति पदमुक्त्वा पूर्वकृतमिति तात्पर्यार्थ उक्तस्तस्याभिप्रायमाह ।। जीर्णमिति ।। ६ ।।

ते नो रत्नानि ।। त्रिरित्यस्य द्वित्रिचतुर्भ्यः सुजिति क्रियाभ्यावृत्तिगणने विहितसुजन्तस्य तात्पर्यमाह ।। त्रिकालेष्विति ।। अतीतादिकालेष्वित्यर्थः । अतीतकालेकृतकर्मणः फलप्रार्थनमेवातीतकाले प्रार्थनं ज्ञेयम् । आकारस्यार्थोपीति । अव्ययानामनेकार्थत्वादिति भावः ।। तद्धित इति ।। तद्धिता इति बहुवचनादञ्प्रत्यये नस्तद्धिते इति टिलोप इति भावः । अत एव भाष्ये सप्तसङ्ख्यानीत्युक्तम् ।। वर्गे वेति ।। समुदायो वर्गः । पञ्चद्दशतौ वर्गे वेत्यतो वर्गे इत्यनुवृत्तेरित्याशयः। सप्तानां चक्रादीनां वर्गःसाप्तं क्लीबत्वं छान्दसम् । समुदाया-नांबहुत्वाद्बहुवचनम् । रत्नानीति सप्तविशेषणं रत्नरूपसप्तवस्तुवृन्दानीत्यर्थः । अण्प्रत्यये प्रत्ययस्वरेण साप्तशब्द अन्तोदात्तः स्यादाद्युदात्तश्च पठ्यते तत्कथमित्यत आह ।। छान्दसत्वादिति ।। न विरोध इति ।। अञ्प्रत्यये ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वसिद्धेरिति भावः । धत्तनेत्यत्र डुधाञ्दानधारणयोरित्यतो दानार्थाल्लोटि त शब्दस्य तप्तनप्तनथनाश्चेति तनादेश इति भावेनाह ।। दत्तेति ।। विष्णुपक्षे भाष्य एव सप्तरत्नोक्तेर्देवतान्तरपक्षे स्वयमाह ।। देवतान्तरेति ।। चक्रं सेना मणिःपुष्परागादिः निधिःकोशः ।। शेष इति ।। चेदित्यारभ्य शेषोक्तिर्बोध्या । अथापि वेत्यव्ययानां प्रकृतानुपयोगाद्वैयर्थ्यमित्यत आह ।। समुच्चय इति ।। समुदाय इत्यर्थः ।। प्रशंसाहेतुभिरिति ।। सुपूर्वात् शंसस्तुतावित्यतःकरणे क्तिचि कित्वान्नलोपे सुशस्तिभिरिति रूपमिति भावः । सहार्थे तृतीयेति भावेनाह ।। सहवर्तमानमिति ।। पूर्वोत्तरार्धयोरन्वयार्थमध्याहरति ।। तथाभूतानीति ।। तादृशानि रत्नानि धत्तनेत्यन्वय इति भावः ।। ७ ।।

अधारयंत वह्नयः ।। धृताविति ।। धृत्यर्थवहेरन्तर्णीतण्यर्थान्निप्रत्यये निष्पन्नवह्निशब्दोधारकत्वार्थ अण्यर्थात्तुस्थिरत्वार्थकोबोध्यः ।। सुकर्मणेति ।। सुपूर्वात्कृञः कृञःशचेति क्यप्प्रत्यये सुकृत्येति रूपमिति भावः ।। यज्ञियमिति ।। यज्ञर्त्विग्भ्यां घखञाविति यज्ञमर्हतीत्यर्थे घप्रत्यय इति भावः ।। एवञ्च धातोरिति ।। धृधातोःस्वस्मिन्स्थिरीकरणं स्वस्मिन्प्रवर्तकत्वं चेत्यर्थद्वयम् । यद्वा गमेर्विच्छेदार्थत्वं प्रवृत्त्यर्थत्वमित्यर्थद्वयमित्यर्थः ।। ८-२-१ ।।

ऋक्संहिता पदपाठसहिता (सू-२१)

(२०३) इहेन्द्राग्नी उप॑ह्वये तयो॒रित्स्तोम॑मुश्मसि ॥
ता सोमं॑ सोम॒पात॑मा ॥ १ ॥

(प०) इ॒ह । इ॒न्द्रा॒ग्नीइति॑ । उप॑ । ह्व॒ये । तयोः॑ । इत् । स्तोम॑म् ।
उ॒श्म॒सि॒ ॥ ता । सोम॑म् । सो॒म॒ऽपात॑मा ॥ १ ॥

(२०४) ता य॒ज्ञेषु प्रशं॑सतेन्द्रा॒ग्नी शु॑म्भतानरः ॥ ता गा॑य॒त्रेषु॑ गायत ॥२॥

(प०) ता । य॒ज्ञेषु॑ । प्र । शं॒स॒त॒ । इ॒न्द्रा॒ग्नीइति॑ । शु॒म्भ॒त॒ । न॒रः॒ ॥ ता ।
गा॒य॒त्रेषु॑ गा॒य॒त॒ ॥ २ ॥

(२०५) ता मि॒त्रस्य॒ प्रश॑स्तय इन्द्रा॒ग्नी ता ह॑वामहे ॥
सो॒म॒पा सोम॑पीतये ॥ ३ ॥

(प०) ता । मि॒त्रस्य॑ । प्र॒ऽश॑स्तये । इ॒न्द्रा॒ग्नीइति॑ । ता । ह॒वा॒म॒हे॒ ॥
सो॒म॒ऽपा । सोम॑ऽपीये ॥ ३ ॥

(२०६) उ॒ग्रा सन्ता॑ हवामह॒ उपे॒दं सव॑नं सु॒तम् ॥
इ॒न्द्रा॒ग्नी एह ग॑च्छताम् ॥ ४ ॥

(प०) उ॒ग्रा । सन्ता॑ । ह॒वा॒म॒हे॒ । उप॑ । इ॒दम् । सव॑नम् । सु॒तम् ।
इ॒न्द्रा॒ग्नीइति॑ । आ । इ॒ह । ग॒च्छ॒ता॒म् ।

(२०७) ता म॒हान्ता॒ सद॒स्पती॒ इन्द्रा॑ग्नी॒ रक्ष॑ उब्जतम् । अप्र॑जाः
सन्त्व॒त्रिण॑ः ॥ ५ ॥

(प०) ता । म॒हान्ता॑ । तद॒स्पती॒इति॑ । सद॒स्पती॒इति॑ । इन्द्रा॑ग्नी॒इति॑ ।
रक्ष॑ः । उ॒ब्ज॒त॒म् ॥ अप्र॑जाः । स॒न्तु॒ । अ॒त्रिण॑ः ॥ ५ ॥

(२०८) तेन॑ स॒त्त्येन॑ जागृ॒तमधि॑ प्रचे॒तुने॑ प॒दे ॥ इन्द्रा॑ग्नी॒ शर्म॑
यच्छतम् ॥ ६, ३, २१ ॥

(प०) तेन॑ । सृ॒त्त्येन॑ । जा॒ग॒त॒म् । अधि॑ । प्र॒ऽचे॒तुने॑ । प॒दे ॥
इन्द्रा॑ग्नी॒इति॑ । शर्म॑ । य॒च्छ॒त॒म् ॥ ३, २१ ॥

## ऋग्भाष्यम्

ह्वयेसोमं प्रतिचतौ ॥ १ ॥ शुंभनं भूषणं मतम् ॥ २ ॥ तौमित्रस्य प्रशस्त्यर्थौ हरेः ॥ ३,४ ॥ रक्षांसिचोब्जतम् । रक्षोरक्ष्याः प्रजा यस्मादत्र्यो मार्गत्रयोज्झिताः । पितृदेवमनुष्याणां गत्यभावादधोगतेः ॥ ५ ॥ सत्येन गुणपूर्णेन विष्णुना तेन जागृतम् । स्वगुणैरेव विष्णुस्तु प्रकृष्टे चेतने हरौ । पदे गम्यत्वतः सम्यक्तस्मिन्नेव स्वभावतः । तथास्थितौ तु जागृतमिति विष्णुर्विशेषतः । उक्तः ॥ ६, ३, २ ॥

## ऋग्भाष्यटीका

इहेन्द्राग्नी ॥ षळर्चमिदमैंद्राग्नं सूक्तम् । अत्र पदानि व्यवहितानीत्यन्वयं दर्शयन्व्याख्याति ॥ ह्वये सोममिति । अहमिह यज्ञे इन्द्राग्नी उपह्वये । कस्मात् । यस्मात्तयोरिन्द्राग्न्योरित् एव । स्तोमं स्तुतिम् । उश्मसि सर्वे वयं कामयामहे । अनेन स्तोमं प्रत्युपह्वय इत्युक्तं भवति । किंच ता तौ सोमपातमा अतिशयेन सोमानां पाताराविन्द्राग्नी सोमं चोप प्रति ह्वये इति पूर्वेण सम्बन्धः ॥ १ ॥

ता यज्ञेषु ॥ शुम्भतेत्यत्र प्रकृतेरर्थमाह ॥ शुम्भनमिति ॥ हे नरः ऋत्विजः ; तौ प्रकृताविन्द्राग्नी । यज्ञेषु प्रशंसत प्रकर्षेण स्तुत । शुम्भत भूषयत च । शुभशुम्भशोभार्थे । अन्तर्भावितण्यर्थः । किञ्च ताविन्द्राग्नी गात्रेषु सामसु गायत । तृतीयार्थे सप्तमी । गायत्रैः स्तुतेत्यर्थः ॥ २ ॥

ता मित्रस्य । प्रथमपादं व्याख्याति ॥ ताविति ॥ यौ तौ प्रसिद्धौ मित्रस्य हरेः प्रशस्तये प्रशंसार्थौ भवतः । देवैर्हि परमेश्वरस्य प्रशंसालोकेषु ज्ञाप्यते । तौ सोमपाविन्द्राग्नी सोमपीतये हवामहे ॥ ३ ॥

उग्रा सन्ता । वयमुग्रौ क्रुरौ शत्रूणाम् । सन्तौ प्रशस्ताविन्द्राग्नी । इदं सवनमिमं यज्ञम् । सुतं सोमं च प्रति हवामहे । तदवधार्येन्द्राग्नी इहागच्छताम् ॥ ४ ॥

ता महान्ता ॥ रक्ष इत्येकवचनं जातावित्याशयेनाह ॥ रक्षांसीति ॥ नन्वप्रजाः संत्वत्रिण इत्यत्र प्रकृतरक्षोग्रहणे लिङ्गवचनव्यत्यासः स्यात् तदग्रहणे तु विशेष्यान्तरं न दृश्यत इत्यतो भिन्नविषयतां तावच्चशब्देन सूचयति ॥ न नूक्तं तर्हि विशेष्यान्तरं न दृश्यत इति तत्राह ॥ रक्षोरक्ष्याः प्रजा इति ॥ इदमुक्तं भवति । यद्यप्युत्तरार्धेपि रक्ष इत्येवानुवर्तते । तथापि तच्छब्देन तदीयाः प्रजाः लक्ष्यन्ते । उक्तानुपपत्तेरेव । रक्ष्यरक्षकभाव सम्बन्धस्य च विद्यमानत्वादिति । रक्षोभी रक्ष्याः रक्षोरक्ष्याः । प्रजाः उत्तरार्धे लक्ष्यन्त इति शेषः । तास्वत्रिण इत्येतद्व्याख्याति ॥ यस्मादिति ॥ यस्मान्मार्गत्रयोज्झितास्तस्मादत्र्यः । वेदे तु त्रय एषां सन्तीति त्रिणः । व्रीह्यादिलक्षण इनिः न त्रिणः अत्रिणः । जना इति पुल्लिङ्गप्रयोगः । भाष्ये तु प्रजा

(ऋग्भाष्यटीका)

इत्यभिधेयान्तरकथन एव तात्पर्यं न लिङ्गे। न विद्यन्ते त्रयो यासामिति बहुव्रीहेर्ङीप्। मार्गत्रयोज्झितत्वं कथमित्यत आह॥ पितृदेवेति। पितॄणां गतिः स्वर्गः। देवानां गतिर्मोक्षः। मनुष्याणां गतिः पृथिवी। एतदपि कथमित्यत आह॥ अधोगतेरिति। हे इन्द्राग्नी यौ युवां महान्तौ पूज्यौ सदसस्पती सदसो यज्ञगृहविशेषस्य स्वामिनौ तौ रक्षो रक्षांसि उब्जतम्। यद्यप्युब्ज आर्जव इति पठ्यते तथाप्यत्र सामर्थ्याद्वधार्थो ग्राह्यः। हतम्। किञ्चात्रिणो गतित्रयरहिताः रक्षस्सम्बन्धिनो जना अप्रजास्सन्तु॥ ५॥

तेन सत्येन। प्रथमपादं प्रसिद्धेन्द्राग्न्योर्योजयति। सत्येनेति। विष्णौ योजयति। स्वगुणैरेवेति। विष्णुर्विवक्षितश्चेत्तदा सत्येनेत्यस्य स्वगुणैरित्येवार्थ इत्यर्थः। प्रचेतुन इत्येतद्व्याख्याति। प्रकृष्ट इति॥ पदइत्यस्यार्थमाह॥ पदइति। अधीत्येतद्व्याचष्टे। सम्यगिति। सम्यक्त्वं किमित्यत आह॥ तस्मिन्नेवेति। स्वभावतः फलानपेक्षया। नन्विन्द्राग्नी सदा परमेश्वरे जागरणवन्तावेव। तत्कथं जागृतमित्युच्यत इत्यत आह॥ तथेति॥ स्वभाव इत्येतदत्रापि सम्बध्यते। स्वभावतो विधानेन विना। तथा स्थितौ तु। जाग्रतौ स्थितावेवेन्द्राग्नी जागृतमिति। लकारव्यत्ययेनोक्ताविति। नन्विदं विष्णौ दुर्घटं करणाधिकरणकर्तृत्वादीनां भेदसमानाधिकरणत्वादित्यत आह॥ विष्णुरिति॥ विशेषतः भेदप्रतिनिधिविशेषशक्त्या उक्तः। करणत्वादिनेति शेषः। हे इन्द्राग्नी युवां तेन प्रसिद्धेन सत्येन गुणपूर्णेन विष्णुना। तत्प्रसादनेति यावत्। प्रचेतुने प्रकृष्टचेतुने। आधिक्यार्थ उकारः। पदे गम्ये। पदगतौ। कर्मण्यकारः। हरावधि सम्यगनन्ययोगेन स्वभावतो वा जागृतं तद्विषये जागरणवन्तौ स्थः। एवंभूतावस्मभ्यं शर्म सुखं यच्छतम्। यद्वा हे इन्द्राग्नी युवां तेन सत्येन प्रसिद्धेनेच्छादिना गुणेन स्वविषये जागृतं स्वसामर्थ्येनैव स्वप्रकाशौ स्थ इति॥ ६, ३, २॥

## मन्त्रार्थमञ्जरी

अथ 'इ॒हेन्द्रा॒ग्नी' इत्येकविंशं षळर्चमेकवर्गात्मकमैन्द्राग्नं गायत्रं सूक्तम्। (अहम्) इह, यज्ञे। इन्द्राग्नी उप ह्वये॥ कस्मात्? यस्मात्– तयोः इत्, इन्द्राग्न्योरेव। स्तोमम्, स्तुतिम्। उश्मसि, सर्वे वयं कामयामहे, 'वश कान्तौ' 'ग्रहिज्यावयिव्यधिवष्टि' इत्यादिना सम्प्रसारणम्, अनेन 'स्तुतिं प्रत्युपह्वये' इत्युक्तं भवति। किं च, ता तौ। सोमपातमा, सोमपातमौ, अतिशयेन सोमानां पातारौ। अतः सोमम् (च प्रति) (उप ह्वये)॥ १॥

(हे) नरः, ऋत्विजः। ता, तौ, प्रकृतौ। इन्द्राग्नी यज्ञेषु। प्र शंसत, प्रकर्षेण स्तुतिं कुरुत। शुम्भत, भूषयत। (च) 'शुभ, शुन्भ शोभार्थे' अन्तर्णीतण्यर्थः। किं च, ता, तौ इन्द्राग्नी। गायत्रेषु, सामसु। गायत्रेषु, सामसु। गायत, तृतीयार्थे सप्तमी, गायत्रैः स्तुतेत्यर्थः॥ २॥

(मन्त्रार्थमञ्जरी)

ता, तौ, प्रसिद्धौ। मित्रस्य, निरुक्तमेतत् 'मित्रं हुवे' इत्यत्र, हरेः। प्रशस्तये, प्रशंसार्थौ भवतः, देवैर्हि परमेश्वरस्य प्रशंसा लोकेषु ज्ञाप्यते। ता, तौ। सोमपा, सोमपौ। इन्द्राग्नी सोमपीतये हवामहे (च) ॥ ३ ॥

(वयम्) उग्रा, उग्रौ, शत्रूणां क्रूरौ। सन्ता, सन्तौ, प्रशस्तौ इन्द्राग्नी। इदम् सवनम्, इमं यज्ञम्। सुतम्, सोमम्। (च) उप प्रति। हवामहे। तदवधार्य (इन्द्राग्नी) इह आ गच्छताम्, गमेः लोट् ॥ ४ ॥

(हे) इन्द्राग्नी (यौ युवाम्) महान्ता, महान्तौ, पूज्यौ। सदस्पती, सदसो यज्ञगृहविशेषस्य पती स्वामिनौ। ता, तौ रक्षः, रक्षांसि, एकवचनं बहुवचनार्थे। उब्जतम्, 'उब्ज आर्जवे' इति धातुपाठेऽपीह सामर्थ्याद्वधार्थः, हतमित्यर्थः। किं च अत्रिणः, त्रय एषां सन्तीति त्रिणः, व्रीह्यादित्वादिनिः, न त्रिणोऽत्रिणः, स्वर्गमोक्षपृथिवीरूपपितृमार्गदेवमार्गमनुष्यमार्गाख्यमार्गत्रय हीनाः, तमोगतेरितिभावः, रक्षः सम्बन्धिजनाः। अप्रजाः सन्तु। इति ॥ ५ ॥

(हे) इन्द्राग्नी (युवाम्) तेन, प्रसिद्धेन। सत्त्येन, गुणपूर्णेन विष्णुना, तत्प्रसादेनेति यावत्। प्रचेतुने, प्रकृष्टचेतने, आधिक्यार्थ उकारः। पदे, गम्ये, 'पद गतौ' कर्मण्यकारप्रत्ययः, हरौ। अधि, सम्यगनन्ययोगेन, स्वभावतो वा। जागृतम्, तद्विषये जागरणवन्तौ स्थः। एवं भूतौ (अस्मभ्यम्) शर्म, सुखम्। यच्छतम्। विष्णुपक्षे तु (हे) इन्द्राग्नी, विष्णुरूपे। (युवाम्) तेन सत्त्येन प्रसिद्धेनेच्छादिना गुणेन। स्वविषये– जागृतम्, स्वसामर्थ्येनैव स्वप्रकाशौ स्थ इति। अत्र सत्यशब्दस्य गुणपूर्तिवाचिता– सत्शब्दस्य 'सद्भावे साधुभावे च' (गी० १७।२६) इत्यादेर्गुणवाचित्वात्सद्भिर्गुणैस्त्यो व्याप्त इति सत्शब्दोपपदात्तनोतेः ड्यप्रत्यय इत्येवंरूपेण ज्ञेया। ज्ञानेच्छादिगुणवाचित्वं तु– सत् शब्दपर्यायत्वात्सत्त्यशब्दस्येति ज्ञेयम्। अस्मभ्यम् इत्यादि पूर्ववत् ॥ ६ ॥ इति तृतीयो वर्गः ॥ ३ ॥ एकविंशं सूक्तम् ॥ २१ ॥

## रूपावतारः

इहेन्द्राग्नी। उश्मसीति। वशकान्तावित्यतो लडादेशमसः 'इदंतो मसि' (७।१।४६) इति इकारान्तत्वे 'ग्रहिज्या...' (६।१।१६) इति संप्रसारणे शपो लुकि उश्मसीति रूपम् ॥ १ ॥

ता यज्ञस्य। शुम्भतेति लोटि शपि लोटः थादेशे तस्य तादेशे शुम्भतेति रूपम् ॥ २ ॥

ता मित्रस्य। प्रशस्तय इति तादर्थ्ये चतुर्थीति भावेनाह प्रशंसार्थाविति ॥ ३ ॥

(रूपावतारः)

उग्रा सन्ता। उग्रत्वविशेषणं कथमाह्वानोपयोगीत्यत आह। उग्रौ क्रूरौ शत्रूणामिति ॥ ४ ॥

ता महान्ता। भिन्नविषयतामिति। उत्तरार्धस्य पूर्वार्धविषयादन्यविषयतां दर्शयतीत्यर्थः। तत्राहेति। (५१-२४) अत्रिण इत्येतस्य विशेषणान्तरं सूचयितुं भाष्यकारः 'रक्षोरक्ष्याः प्रजा' इत्याहेत्यर्थः। अनेन जना इति विशेष्यं सूचितमिति बोध्यम्। इतः परं टीकायां श्रूयमाणानि ''इदमुक्तं भवति। यद्यप्युत्तरार्धेऽपि रक्ष इत्येवानुवर्तते। तथापि तदीयाः प्रजास्तच्छब्देन लक्ष्यन्ते। उक्तानुपपत्तेरेव। रक्ष्यरक्षकभावसम्बन्धस्य विद्यमानत्वादिति। रक्षोभिः रक्ष्याः रक्षोरक्ष्याः प्रजा उत्तरार्धे लक्ष्यन्ते'' इति शेषवाक्यानि प्रक्षिप्तानि। न टीकावाक्यानि। अवश्यं चैतदेवं विज्ञेयं लिङ्गवचनव्यत्यासानुपपत्त्यपरिहारेण रक्षः शब्दस्योत्तरत्रानुवृत्त्यङ्गीकारायोगात्। यदपि रक्षः शब्दस्य प्रजालक्षकत्वेन समाधानं तदपि न। लाक्षणिकेष्वपि पदेषु विजातीय-लिङ्गवचनविशेषकत्वाभावात्। अन्यथा गम्भीरायां नद्यां घोष इति न स्यात्। किन्तु गम्भीरे नद्यां घोष इति स्यात्। जना इत्यध्याहारेणैव सामञ्जस्ये रक्षः शब्दानुवृत्तिमभिप्रेत्य लाक्षणिकत्वा-भिधानायोगाच्च। तास्वत्रिण इति। यद्यपि जनेषु अत्रिण इति व्याख्यातीति वक्तव्यम्। तथापि जना इत्यध्याहारसूचनाय प्रजा इति भाष्यकृता उक्तत्वात्तदनुसारेण तास्वित्युक्तम्। ननु प्रजा इति यदि विशेष्यं तर्हि वेदे अत्रिण इति प्रयोगोऽनुपपन्न इत्यत आह। वेदेत्विति। जना इति पुल्लिङ्गमेव विशेष्यम्। अतोऽत्रिण इति प्रयोगो नानुपपन्न इति भावः। एवं तर्हि भाष्ये अत्र्यः प्रजा इति अनुपपन्नं प्राप्नोतीत्यत आह। भाष्ये त्विति। भाष्ये तु जना इति विशेष्यपदाध्याहारसूचनायैव प्रवृत्तम्। नतु अत्रिण इति श्रौतलिङ्गानुसारेण विशेष्यपदकथनाय प्रवृत्तमिति भावः। ङीबिति। 'कृदिकारात्...'' (गणसूत्र) इत्यनेन वार्तिकेनेत्यर्थः ॥ ५ ॥

तेन सत्येन। लकारव्यत्ययेनेति। लटः स्थाने व्यत्ययेन लोट्। ततश्च जागृतमित्यस्य न नियोगोऽर्थः। अपि तु स्वभावत एव भवन्तौ जागरणवन्तावित्यर्थ इति भावः ॥ ६, ३, २ ॥

## पदार्थप्रकाशिका

इहेन्द्राग्नी उपह्वये। इह षडिन्द्राग्नीयमित्यनुक्रमणिकां हृदि निधायाह। षळर्चमिति। व्यवहितानीति। ता सोमं उपह्वय इति पदानि व्यवहितानीत्यर्थः। स्तुतिमित्यनन्तरं कर्तुमिति शेषः। अनेनेति। ह्वये सोमं प्रतिचेति भाष्ये सोमं च प्रत्युपह्वय इति वचनेन सिस्तोममुश्मस्रोमं च प्रति तं स्वीकर्तुं उपह्वय इति सूचितं भवतीत्यर्थः। सोमं च प्रतीति। पातुमिति शेषः ॥ १ ॥

(पदार्थप्रकाशिका)

तायज्ञेषु प्रशंसत । प्रकृतेः शुम्भधातोः । भूषयतेति । अलङ्कारादिभिर्भूषयतेत्यर्थः । मतमित्यनेनाभिप्रेतं धातुं दर्शयति । शुभशुम्भेति । ननु शुम्भतेत्यत्र णिजर्थाप्रतीतेः भूषयतेति कथं व्याख्यायत इत्यत आह । अन्तर्भावितेति ॥ २ ॥

तामित्रस्य प्रशस्तये । तच्छब्दद्वयसद्भावादेकस्यानुवादमध्ये प्रवेश इत्याशयेनाह यौ ताविति । नन्विन्द्राग्न्योर्हरिप्रशंसार्थत्वं कथमित्यत आह । देवैर्हीति । ऋष्यादीनामुपदेशपरंपरयेति शेषः ॥ ३ ॥

उग्रासन्ताहवामहे । क्रूरत्वाभावादाह । शत्रूणामिति । सच्छब्दः साधुवाचि । सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत इति वचनात् साधुभावश्चात्र प्राशस्त्यमभिप्रेत्यमित्यभिप्रेत्याह । सन्तौ प्रशस्ताविति । प्रातरादिसवनवाचिना सवनशब्देन तत्र क्रियमाणो लक्ष्यत इत्याशयेनाह । इदं सवनमिति । इमं यज्ञम् । तत् आह्वानम् ॥ ४ ॥

तामहान्ता सदस्पती । रक्षोग्रहण इति । विशेष्यत्वेनेत्यर्थः । लिङ्गवचनव्यत्यासः स्यादिति । अप्रजमस्त्विति स्त्रीलिङ्गबहुवचनव्यत्यासेन नपुंसकलिङ्गवचनं च कर्तव्यमित्यर्थः । तदग्रहणे विशेष्यतया रक्षोग्रहणाभाव इत्यर्थः । भिन्नविषयतामिति । पूर्वोत्तरार्धयोरित्यर्थः । च शब्देनेति । केवलमप्रजाः सन्तु । किन्तु रक्षांस्युब्जतं चेति वाक्यभेदसूचकत्वात्तस्येति भावः । तर्हि भिन्नविषयत्वेति तच्छब्देनेति । सचासौ शब्दश्चेति तच्छब्दः रक्षःशब्दः तेनेत्यर्थः । मुख्यार्थानुपपत्तिरूपं लक्षणाबीजं दर्शयति । उक्तानुपपत्तेरेवेति । प्रकृतरक्षोग्रहणे लिङ्गवचनवत्यासः स्यादित्युक्तं मुख्यार्थानुपपत्तिरूपलक्षणाबीज सद्भावादित्यर्थः । लक्षणाबीज सम्बन्धमप्याह । रक्ष्यरक्षकत्वेनेति । नन्वथापि रक्षःशब्दलक्षितप्रजा इति विशेष्यस्य स्त्रीलिङ्गत्वादत्रिण इति विशेषणस्य पुल्लिङ्गत्वे लिङ्गव्यत्यासः तदवस्थ एवेत्यत आह । वेदे त्विति । त्रिण इत्यत्र त्रय एषां सन्तीति मत्वर्थे इनि प्रत्ययो न युक्तः । अत इनि ठनाविति अकारान्तादेवे-निप्रत्ययविधानेनेकारान्तादव्यवहितत्वादित्यत उक्तम् । व्रीह्यादिलक्षण इति । व्रीह्यादिभ्यश्चेति सूत्रविहित इत्यर्थः । व्रीहयः एषां सन्तीति व्रीहिण इति इकारान्तादपीन् दर्शनादस्यापि तद्गणस्थत्वादिकारान्तात् त्रिशब्दादिनिप्रत्यये त्री त्रिणौ त्रिण इति नकारान्तः शब्दः । तस्य च नञासमासे अत्रिण इति पुल्लिङ्गम् । तच्च रक्षःशब्दलक्ष्यजनानां विशेषणम् । तदनुसारेण प्रजा इत्यपि पुल्लिङ्गमेवेति पदेन लिङ्गव्यत्यय इति भावः ।

ननु भाष्येपि वेदानुसारेण रक्षो रक्षाजना इति अनुक्त्वा रक्षोरक्ष्याः प्रजा इति रक्षः शब्देन तदीयप्रजालक्षणाङ्गीकारः किं शब्दानुपपत्तिपरिहारार्थः उतार्थिकानुपपत्तिपरिहारार्थः । नाद्यः

(पदार्थप्रकाशिका)

उत्तरार्धेपि पूर्वार्धस्थस्य नपुंसकैकवचनान्तरक्षःशब्दानुवृत्तेरयुक्तत्वेन तदीयप्रजालक्षकत्वाङ्गीकारेपि लिङ्गवचनव्यत्यास रूपशब्दानुपपत्तेरपरिहारात् । न द्वितीयः । आर्थिकानुपपत्तेर्लक्षणायाः अभावेप्यभावात् । रक्षःशब्दस्य नपुंसकैकवचनान्तत्वेपि तद्वाच्यरक्षसां बहुत्वात् पुरुषत्वाच्च । तस्मादयुक्ता भाष्ये प्रजालक्षणेत्यत आह । भाष्येत्विति । त्रिण इत्यत्र त्रय एषां सन्तीति मत्वर्थे इनिः । अयमर्थः । उत्तरार्धेपि रक्षः शब्दानुवृत्तिमङ्गीकृत्य तेन तद्रक्ष्यप्रजालक्षणायाः न लिङ्गानुपपत्तिपरिहारे तात्पर्यम् । किं त्वप्रजाः संत्वित्यत्र प्रकृतरक्षोग्रहणाभावे अभिधेयान्तराभावान्निर्विषयत्वं स्यादिति आशंक्य विशेष्यान्तरकथन एव तात्पर्यमिति ।

नन्वस्तु भाष्ये लिङ्गे तात्पर्याभावो अथापि विशेष्यत्वेनानुवृत्तः रक्षःशब्दो न प्रजालक्षणायामपि रक्षःशब्दः लक्ष्यप्रजारूपार्थस्य च विशेषण विशेष्यभावेन समानलिङ्गत्वेपि रक्षः अप्रजाः संत्वितिशब्दयोः लिङ्गवचनव्यत्यासस्तावदपरिहृत एवेति चेत् । अत्र केचित् । रक्षःशब्दलक्ष्यस्य जना इत्यस्य पुल्लिङ्गत्वाद्बहुवचनत्वाच्च तदनुसारेण तस्य लक्षको रक्षःशब्द एव तल्लिङ्गकादिजातिः । लक्ष्यानुसारि लिङ्गं हि लक्षकशब्दे भवतीत्याहुः । तन्न । लक्ष्यार्थानुसारि लिङ्गं लक्ष्यकशब्दे भवतीत्यस्य कुत्राप्यदृष्टत्वात् । वस्तुतस्तु अर्थयोरेव विशेषणविशेष्यभावो न शब्दयोरिति मतेनैतत् । अत एव 'अजानता महिमानं तवेदम् अहमेवेदं सर्वोऽस्मी'त्यादि प्रयोगः । न चैवं सुरूपान् यष्टीः प्रवेशयेत्यादि प्रयोगापत्तिरित्यति प्रसङ्ग इति वाच्यम् । विशेषण विशेष्यभावः शब्दसम्बध्येव न भवति । किन्नामार्थसम्बन्धीति पक्षे इष्टापत्तेः । किञ्च प्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोग इति नातिप्रसङ्गः । विस्तरस्तु अस्मदाचार्यकृतयुक्तिपादीयसुधाटिप्पण्यां द्रष्टव्यः ।

बहुव्रीहिरिति । अत्रिशब्दाद्बहुव्रीहिः स्त्रीत्वविवक्षया ङीपि ङकारपकारयोर्लोपे अत्रि इति जाते इकारस्य यकारे अत्रीति भवति । तथाच अत्री अत्र्यौ अत्र्य इति शब्दो द्रष्टव्यः । एतदपीति । मार्गत्रयोज्झितत्वमपीत्यर्थः । यज्ञगृहविशेष्यस्येति । सभापत्युपविष्टमण्टपरूपस्येत्यर्थः । सामर्थ्यादिति । प्रकृते रक्ष उब्जतमित्यत आर्जवरूपार्थस्य ग्रहणस्यायोग्यत्वात् अर्थाबाधरूपयोग्यताख्यसामर्थ्याद्विधार्थो ग्राह्य इत्यर्थः । अप्रजाः निःसंतानाः ॥ ५ ॥

तेनसत्येन जागृतम् । जागृतमित्युच्यत इति । विधीयते इत्यर्थः । सम्बध्यते । अनुकृष्यते । अनुकृष्टस्य तस्यार्थमाह । स्वभावत इति । लकारव्यत्ययेनेति । जागृतमिति विध्यर्थको लोट् न विवक्षित इत्यर्थः । करणेत्यादि । तेन सत्येनेति करणत्वं प्रचेतुन इत्यधिकरणत्वं जागृतमित्याख्यातेन

(पदार्थप्रकाशिका)

कर्तृत्वं च श्रुतावुक्तम् । तेषां भिन्नाधिकरणत्वस्य देवदत्तो गृहे पात्र्या भुङ्क्ते इत्यादौ दर्शनादेकस्मिन्नेव विष्णाविदं करणत्वादिति त्रितयं दुर्घटमित्यर्थः । प्रचेतुन इति भाष्ये प्रचेतुन इत्युकारः किमर्थ इत्यत्र आह । आधिक्यार्थ इति । तथाचातिप्रकृष्टचेतन इत्यर्थो द्रष्टव्यः । कर्मणीति । पदगतौ अस्मात् कर्मण्यकारे पदे गम्यमुच्यत इत्यर्थः । भगवत्पक्षे योजयति । यद्वेति । पद इत्यस्यार्थः । स्वविषय इति । प्रचेतुन इति शेषः । स्थ इति । एतादृशौ युवामस्मभ्यं शर्म यछतमिति सम्बन्धो द्रष्टव्यः ॥ ६ ॥ ३ ॥ २ ॥

## पदार्थदीपिका

उश्मसीति । वशकान्तौ । लटो मस् । इदन्तो मसिरिति इकारोपजनः । अदादित्वाच्छपो लुक् । मसेर्ङित्वात् गृहिज्येत्यादिना सम्प्रसारणमिति ज्ञेयम् । ताताविति । सुपां सुलुक् इत्याकारः । एवं सोमपातमा सोमपातमा वित्यत्रापि बोध्यम् ॥ १ ॥

भूषयतेत्यर्थे शुम्भतेति श्रौतपदं व्युत्पादयति । शुम्भेति । अन्तर्भावितेति । अनेन शुम्भनमिति भाष्ये ण्यन्ताल्युट् । णेरनिटीति णिलोप इत्युक्तं भवति ॥ २ ॥

प्रशस्तय इति । तुमर्थाच्च भाववचनादिति चतुर्थीति भावः ॥ ३ ॥ छ ॥ ४ ॥

रक्ष इत्येकवचनं जाताविति । जात्याख्यायां एकस्मिन् बहुवचनमन्यतरस्यामित्यत्रान्यतरस्यामित्युक्तत्वात् प्रकृते रक्षोव्यक्तिबाहुल्यात् बहुवचनप्राप्तावपि जात्यपेक्षयैकवचनमित्यर्थः ॥ यद्वा जातेः परपक्षे एकत्वात् स्वपक्षेऽनेकत्वेपि व्यक्त्यसाध्यानुगतप्रयोगप्रत्ययादि रूपैकसाध्यकार्यनिर्वाहकत्वेन उपचारेण एकत्वाद्व्येकयोरिति जात्यपेक्षयैकवचनमित्यर्थः । ''ऊर्ध्वोनः पाह्यंहसो निकेतुना विश्वं समत्रिणं दहेति । रक्षांसि वै पाप्मात्रिणो रक्षासि पाप्मानं दहेत्येव तदाह'' इति ब्राह्मणे मन्त्रमुदाहृत्य एतद्गतैकवचनप्राप्तरक्षोव्यक्तिरूपैकार्थपरित्यागेन बहुव्यक्तिपरतया व्याख्यातत्वात् सर्वरक्षोवधस्य अपेक्षितत्वाच्च बहुव्यक्तिग्रहणावश्यम्भावे तासां च एकवचनश्रुत्या गृहीतुमशक्यत्वात् अलाभे प्राप्ते सविशेषणे हीति न्यायेन एकजातिग्रहणद्वारा तदाक्रान्तसर्वव्यक्तिग्रहणं कर्तुं जातावेकवचनमित्युक्तमित्याशयः ॥ ननु कथं विशेष्यान्तरं रक्षो रक्ष्याः प्रजा इत्यनेन प्रदर्शितम् । प्रजाशब्दाध्याहाराभिप्राये रक्षः शब्दानुवृत्यभिप्राये वा लिङ्गवचनानुपपत्तेः तदवस्थत्वात् । लक्षणायाश्च निर्बीजत्वात् । प्रजालक्षणायां लिङ्गानुपपत्तितादवस्थ्यात् । रक्षो रक्ष्या इत्यस्य वैयर्थ्याच्च इत्यत आह ॥ इदमुक्तं भवतीति । उत्तरार्धेऽपि रक्ष

(पदार्थदीपिका)

इत्येवानुवर्तते न तु विशेष्यमध्याह्रियते । अश्रुताध्याहारादपि श्रुतानुषङ्गस्य गरीयस्त्वादित्यु-पस्कर्तव्यम् ।। ननु तर्हि भिन्नविषयतासूचक च शब्दविरोध इत्यतो यद्यपि इत्याद्युक्तमिति ज्ञेयम् ।। तच्छब्देनेति । रक्षःशब्देनेत्यर्थः । उक्तानुपपत्तेरेवेति । लिङ्गवचनानुपपत्तेरेवेत्यर्थः । उक्ततात्पर्यलाभाय भाष्यपदानि योजयति । रक्षोभिरिति । कथं तर्हि वेदे त्रिण इति पुल्लिङ्गप्रयोग इत्यत आह । वेदे त्विति । व्रीह्यादिलक्षण इति । अत इनि ठनावित्युक्तेः अस्य चेकारान्त-त्वात्तेनेनिप्रत्ययासम्भवेऽपि व्रीह्यादेराकृतिगणत्वात् प्रयोगानुसारिणि तत्र वैदिकप्रयोगसिद्धोऽयं त्रिशब्दो ज्ञेय इति भावः । न विद्यन्ते त्रयो येषामिति बहुव्रीहिपक्षे मत्वर्थस्य बहुव्रीहिणो अलाभातन बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादय इति वचनाच्च इनि प्रत्ययानुपपत्तेः त्रिशब्दादेव इनि प्रत्ययो व्युत्पादित इति ज्ञेयम् ।। न च तत्पुरुषपक्षे अव्ययपूर्वपदप्रकृतिस्वरापत्या नञो निघातानुपपत्तिरिति वाच्यम् । बहुव्रीहावपि बहुव्रीहौ प्रकृत्या पूर्वपदमित्युक्तेः तत्तौल्यात् 'परादिश्छन्दसि बहुलं' इति तदपवादस्य तत्पुरुषेऽपि सम्भवात् 'प्रजा स्यात्सन्ततौ जन' इत्याभिधानात् 'जना' इति विशेष्यं भाष्याभिप्रेतम् । तत्पर्यायप्रजाशब्दोपपादनात् । तथाच विशेष्यजनापेक्षया त्रिण इति पुल्लिङ्गप्रयोगः इति भावः । कथं तर्हि भाष्ये प्रजा इति स्त्रीलिङ्गेन विशेष्यनिर्देश इत्यत आह । भाष्ये त्विति । रक्षो रक्ष्या जना इति वक्तुं शक्यत्वेऽपि प्रथमप्राप्तपुल्लिङ्गत्यागेन स्त्रीलिङ्गग्रहणं स्त्रीलिङ्गस्यैव न अभिधेयत्वाभिप्रायम् । किं नाम प्रजाशब्दस्य रक्ष्यजने निरूढत्वात् लक्षणाबीजभूतशक्यसम्बन्धस्य झडिति स्फोरकत्वादेवेति न व्याख्येयवेदेन भाष्यस्य विरोधः इति भावः । अभिधेयान्तरेति । उत्तरार्धप्रतिपाद्यस्य रक्षःशब्दार्थान्तरस्य कथन एव तात्पर्यमित्यर्थः । न विद्यन्ते त्रय इति । अधोगतेरितिवत् गतित्रयोज्झिता इत्येवोक्ते त्रिशब्दस्य स्त्रीलिङ्गगतिशब्दविशेषणत्वात् विशेषणानां च विशेष्यनिघ्नत्वात् 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति त्रिशब्दस्य तिस्रादेशप्राप्तेः तस्मिंश्च सति न षट्स्वस्रादिभ्य इति निषेधेन ङीबसम्भवात् अतिस्र इत्येव स्याद्भाष्ये न तु अत्र्य इति । तथा वेदेपि 'न तिस्र एषां सन्तीति तिस्रिणः । न तिस्रिणोतिस्रिण' इत्येव स्यात् । न तु अत्रिण इति । सूत्रे स्त्रियामित्यस्य त्रिचतुरशब्दविशेषणत्वेन अङ्गविशेषणत्वाभावात् । अङ्गस्य पुल्लिङ्गत्वेऽपि तिस्रादेशानपायात् इत्याशङ्क्य मार्गशब्दोपादानं कृतम् । अतो नोक्तदोष इति भावेन न विद्यन्ते त्रय इत्येवोक्तं इति ध्येयम् । बहुव्रीहेर्ङीबिति । संख्याव्ययादेर्ङीबिति बहुव्रीह्यधिकारे ङीपो विधानादि-त्यर्थः । मार्गत्रयोज्झितत्वं कथमिति । एकैकमार्गवतां देवादीनां मार्गत्रयस्य समुदितस्याभावात् । त्रयमध्ये येन केनचिदुज्झितत्वस्याप्यविशेषात् । त्रयमध्ये येन केनाप्युपेतत्वाभावस्य ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधोगच्छन्ति तामसा इति वचनात्

(पदार्थदीपिका)

अधोमार्गवतां रक्षसामप्यभावात् इत्याक्षेपार्थः । एतदपि कथमिति । देवपितृगत्योरुभयोरप्यूर्ध्वगतित्वेन एकीकारादुक्तमार्गत्रयोज्झितत्वमनुपपन्नमेव । अन्यथा न तृतीये तथा उपलब्धेरित्यादिविरोधादिति भावः । अत आह । अधोगतेरितीति । अधोगतिसाहित्येनैव गतित्रित्वोक्तावपि, द्वे सृती अशृणवं पितॄणामहं देवानामुतमर्त्यानाम् । द्वावेव मार्गौ प्रथितावर्चिरादि विपश्चिताम् । धूमादिः कर्मिणामेते सृतीते नृपदेवगीते' इत्यादि श्रुतिस्मृत्याद्यनुसारेण प्रकृतदेवयानपितृयानयोर्भेदविवक्षायां अधोगतिव्यतिरिक्तगतित्रित्वसम्भवादात्रित्वं, तद्रहिताधोगतिमतामसुराणामविरुद्धमित्यर्थः ॥ अक्षरयोजना तु रक्षो रक्ष्याः जनाः पितृदेवमनुष्याणां गत्यभावादेव श्रुतावत्रिण इत्युच्यन्ते । न तूर्ध्वाधोमध्यगतिरूपगतित्रय वैधुर्याभिप्रायेण । तेषामधोगतेः प्रसिद्धत्वेन तदभावस्य बाधितत्वादित्यवधेयम् ॥ अत्रायमाशयः । उक्तरीत्या रक्षांसि वै पाप्मात्रिण इति श्रुत्यनुसारेण रक्षः शब्दस्य जात्येकवचनान्ततायाः उत्तरार्धेऽनुवृत्तेश्चावश्यकत्वादनुवर्तमानरक्षःशब्देन च अश्रुताध्याहारात् श्रुतलक्षणाया गरीयस्त्वेन रक्षो रक्ष्यजनानां लक्ष्यमाणत्वात् तेषां च शब्दतो नपुंसकत्वेऽप्यर्थतः पुंस्त्वात् विशेषणानां च विशेष्यनिघ्रत्वनियमेऽपि क्वाचित्पदार्थशेषः स्यात्क्रियाशेषः क्वचिद्भवेत् । क्वचित्तद्भावशेषः स्यादिदमादिस्त्रिधास्मृत इत्यनुशासनात् अजानता महिमानं तवेदमित्यत्र गीतायां महिमाशब्दस्य पुल्लिङ्गत्वेऽपि इदमित्यस्य तदर्थभूतमहत्वविशेषणत्वेन नपुंसकत्वस्य इदं सर्वोऽस्मीति बृहदारण्यके चेदंशब्दस्य सर्वपदतदर्थपूर्ण विशेषणत्वासम्भवेऽपि तद्धर्मभूतपूर्णत्वविशेषणतायाः 'तण्डुलानिदं पचति' इत्यादौ पचनादिक्रियाविशेषणत्वस्य च दर्शनेन तन्नियमस्यौत्सर्गिकत्वात् स्मृतौ च इदमादिस्त्रिधा स्मृत इत्यत्रादिपदेन विशेषणशब्दावच्छिन्नस्य सर्वस्यापि ग्रहणात् प्रकृते पुल्लिङ्गाबहुवचनान्तत्रिशब्दस्य नपुंसकैववचनान्तरक्षः- शब्दानुरोधेन न लिङ्गवचनव्यत्यासो दोष इति ॥ नचैवं गम्भीरायां नद्यां इत्यत्रापि तीरदिरूपार्थविशेषणत्वेन गम्भीर इत्यादि प्रयोगापत्तिरिति वाच्यम् । अनुशासनस्य प्रयोगानुरोधित्वेन तदुन्नेयप्रयोगाऽभावेऽप्रवृत्तेः । अन्यथा ग्रामगामः पचन्तीत्यादिप्रयोगस्याप्यापत्तेरिति दिक् ॥

अप्रजा इति । प्र-उपपदाज्जनेः ण्यन्तादन्येष्वपि दृश्यत इति डप्रत्यये प्रजनयन्तीति प्रजाः । बहुलमन्यत्रापि संज्ञाछन्दसोरिति णिलापः । न प्रजाः अप्रजा इति समासः । तस्मादबहुव्रीहित्वात्समासान्तो सिप्रत्ययो नेति ज्ञेयम् ॥ ५ ॥

लकारव्यत्ययेनेति । लडर्थे व्यत्ययेन लोडित्यर्थः । अधिक्यार्थ इति । अधिक्येऽधिकमित्युक्तत्वादकारस्योकार इत्यर्थः । उत्तरार्धयोजनायाः तुल्यत्वात् विष्णौ पूर्वार्धं योजयति । यद्वेति ।

(पदार्थदीपिका)

जागृतमिति । जागृ निद्राक्षये । अदिप्रभृतिभ्यः शप इति शपो लुक् इति ज्ञेयम् । शर्मेति । हिनस्ति दुःखमिति शर्म । शृ हिंसायाम् । अन्येभ्योऽपि दृश्यत इति मनिनिति भावः । यच्छतमिति । इषुगमियमां छ इति छ इति भावः ॥ ६ ॥

## टीकाविवृतिः

इहेन्द्राग्नी । षळर्चमिति ॥ इह षळर्चमैन्द्राग्नमित्यनुक्रान्तत्वादन्यस्यानु- वृत्तितः सिद्धिरिति भावः । वशकान्ताविल्यतो लटि मस्प्रत्ययेशपोलुकिग्रहिज्येति संप्रसारणे इदंतो मसिरितीकारागमे उश्मसीति रूपमिति भावेनास्य पदस्य बहुवचनांतत्वात्तादृशं कर्तृपदमध्याहरति ॥ सर्वे वयमिति ॥ भाष्ये सोमं चेति चशब्दसमुच्चेयं दर्शयितुमाह ॥ अनेनेति ॥ तथाचार्थिकार्थेन समुच्चय इति भावः ॥ १ ॥

ता यज्ञेषु ॥ अन्तर्भावितेति ॥ लोटि शपि रूपमेतदित्यर्थः ॥ २ ॥

ता मित्रस्य ॥ प्रशस्तये इति तादर्थ्ये चतुर्थीति भावेनाह ॥ प्रशंसार्थाविति ॥ तदुपपादयति ॥ देवैर्हीति ॥ ३ ॥

उग्रा संता ॥ इदं सवनम् ॥ इमं यज्ञमिति ॥ सवनं यजने स्थाने सोमनिर्दलनेपि चेति विश्वकोशोक्तेरिति भावः । पूर्वोत्तरार्धयोरन्वयाय शेषं पूरयति ॥ तदवधार्येति ॥ आह्वानं श्रुत्वेत्यर्थः ॥ ४ ॥

ता महान्ता ॥ जाताविति ॥ जातिश्छन्दसि सामान्ये- मालत्यामोघजन्मनोरिति विश्वोक्तेर्जातिः समुदायो न तु सामान्यंविवक्षितम् । अस्मन्मतेजातेःप्रत्येकपरिनिष्ठितत्वेन व्यक्तितुल्यत्वाद्बहुष्वेकवचनानुपपत्तेरिति रहस्यम् । क्वचिज्जा तावित्यनुक्त्वा एकवचनं बहुवचनार्थ इत्येव पठ्यते तस्याप्ययमेवाशयः ॥ प्रकृतेति ॥ पूर्वार्धे इति शेषः ॥ लिङ्गवचनव्यत्यास इति ॥ (अधिप इत्येतदनुसारेण रक्षः शब्दे पुल्लिङ्गत्वं बहुवचनान्तत्वं चेत्यर्थः ।) रक्षः शब्दानुसारेण अत्रिणः अप्रजाः इत्यत्र एकवचनान्तत्वं नपुंसकत्वं चेत्यर्थः ॥ भिन्नविषयतामिति ॥ उत्तरार्धस्यापि रक्षोविषयत्वे अन्वाचयार्थक चशब्दोऽसङ्गतः स्यात् । एकस्य भिन्नकर्मके प्रधानाप्रधान- क्रियाद्वयसंबन्धो ह्यन्वाचयः । बटो भिक्षामट गां चानयेत्यादौ तथा दर्शनात् । अत्रापि इन्द्राग्निभ्यामेव रक्षोजनानां अप्रजत्वकरणस्य विवक्षितत्वात् । पूर्वार्धे रक्षांसि चेति चशब्द उपपन्नः । उत्तरार्धे रक्षोरक्ष्याःप्रजा इति पदाभावात्कथमुक्ताशंकापरिहार इत्यत आह ॥ इदमुक्तं भवतीति ॥

(टीकाविवृतिः)

तच्छब्देन रक्षः शब्देनेत्यर्थः । प्रजाःजनाः । लक्षणाबीजे मुख्यार्थानुपपत्तिसंबन्धौ दर्शयति ॥ उक्तेति ॥ लिङ्गवचनव्यत्यासलक्षणानुपपत्तेरित्यर्थः । उक्तार्थसिद्धये भाष्यं योजयति ॥ रक्षोभिरिति ॥ न च वाच्यं रक्षः शब्दानुवृत्तौ तदीयजनरूपार्थलक्षणायामप्यत्रिण इत्यस्यानुकूलनाय पुनर्लिङ्गवचनव्यत्यासस्तदवस्थ एवेति । स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाख्यपञ्चकस्य प्रातिपदिकार्थत्वेन लिङ्गसङ्ख्ययोरर्थनिष्ठत्वेन रक्षःशब्दस्यैव नपुंसकत्वैकवचनान्तत्वेपि तदीयजना इति शब्दसहितार्थलक्षणाङ्गीकारात् तल्लक्षितार्थस्य पुल्लिङ्गत्वाद्बहुत्वाच्च तदनुसारेण विशेषणस्य पुल्लिङ्गबहुवचनोपपत्तेः । नचैवं गङ्गायां घोष इत्यत्र सोद्याने इति विशेषणं स्याद्गंगापदलक्ष्यतीरस्य स्त्रीत्वाभावादिति वाच्यम् । आरोपे सति निमित्तानुसरणं नतु निमित्तमस्तीत्यारोप इति न्यायादत्रापि प्रयोगे सति एतादृशनिमित्ताश्रयणं नतु निमित्तानुसारेण प्रयोगापादनं संभवतीति रहस्यम् । अत एव यथार्थज्ञानजनका यथार्था युक्तयःस्मृता इत्यनुव्याख्याने युक्तिशब्दस्य स्त्रीलिङ्गत्वात्तद्विशेषण जनकशब्दस्य स्त्रीत्वेनटापि प्रत्ययस्थादितीत्वे जनिका इति स्यादिति शंकापरिहाराय सुधायां युक्तय इति बहुवचनमाद्यर्थे इत्युक्तम् । तस्याप्ययमेवाशयः । बहुवचनसामर्थ्याद्युक्ति शब्दो लक्षणया युक्त्यादय इति शब्दविशिष्टार्थप्रतिपादकः । तस्यार्थस्य पुंस्त्वात्तद्विशेषणस्य जनकशब्दस्य पुंस्त्वमिति । एवमन्यत्र गीताभाष्यादौ द्रष्टव्यम् ॥ तास्वत्रिण इति ॥ तासु । प्रजासु ॥ व्रीह्यादिलक्षण इति ॥ त्रिशब्दस्यानकारान्तत्वादत इनिठनावित्यस्या प्राप्तेर्व्रीह्यादिभ्यश्चेतीनिप्रत्यये यस्येतिचेतीकारलोपे निष्पन्नत्रिन् शब्दस्य नञ् समास इति भावः । यदि जना इति विशेष्यविवक्षया अत्रिण इति पुल्लिङ्गप्रयोगस्तर्हि भाष्ये प्रजा इति विशेष्योक्तिः कथमित्यत आह ॥ भाष्ये त्विति ॥ उत्तरार्धेऽनुवृत्तरक्षः शब्दस्य पूर्वार्धविवक्षि- तादर्थादर्थान्तरकथन एव तात्पर्यमित्यर्थः । अत्र्य इति भाष्यं व्युत्पादयति ॥ न विद्यन्त इति । कृदिकारादिति ङीबित्याशयः ॥ एतदपीति ॥ पित्रादिगतिराहित्यमपीत्यर्थः ॥ यज्ञगृहेति ॥ सदोनामक मण्डपस्येत्यर्थः ॥ सामर्थ्यादिति ॥ अन्वययोग्यत्वादित्यर्थः ॥ हतमिति ॥ हन्धातोर्लोण्मध्यमपुरुषद्विवचनथसःतमित्यादेशेऽदादित्वाच्छपो लुकि अनुदात्तोपदेशेति नलोपे एतद्रूपं बोध्यम् ॥ अप्रजा इति ॥ प्रपूर्वजनेरन्तर्णीतण्यर्थादुपसर्गे च संज्ञायामिति डप्रत्यये उपपदसमासे च निष्पन्नप्रजाशब्दस्य नञ्तत्पुरुषः । प्रजनयन्तीति प्रजाः न प्रजा अप्रजा इति विग्रहेऽबहुव्रीहित्वान्नित्यमसिच्प्रजामेधयोरिति समासान्तो सिच्प्रत्ययोऽनेति । अत एव नञ्सुभ्यामित्यनेनान्तोदात्तत्वाभावात्तत्पुरुष इति तुल्यार्थे व्यत्ययपूर्वपद प्रकृतिस्वरत्वेनाद्युदात्ततैवेति बोध्यम् ॥ तेन सत्येन ॥ अत्र भाष्यस्थपदानां परस्परमनन्वयादवान्तरसङ्गतीराह ॥ प्रथमेत्यादिना ॥ स्वभावत इत्यस्योन्मत्त-

(टीकाविवृतिः)

व्यापारवत्प्रवृत्तिर्न तु विष्णुप्रीत्यादिकमुद्दिश्य बुद्धिपूर्वकप्रवृत्तिरित्यर्थ प्रतीतिनिरासायाह ॥ फलानपेक्षयेति ॥ लकारव्यत्ययेनेति ॥ लडर्थे लोडित्यर्थः ॥ करणेति ॥ आदिशब्दादनेकत्व सङ्ख्या गृह्यते । करणानां सत्यपदोक्तगुणानां प्रचेतनपदोक्त हरिरूपाधिकरणस्येन्द्राग्नीपदोक्तकर्तुरादिपदोक्तद्वित्वादेश्च विष्णावभेदाद्वाक्यं दुर्घटमित्याशयः ॥ आधिक्यार्थ इति ॥ आधिक्येऽधिकमिति सूत्रादकारस्योकार इत्यर्थः ॥ अकार इति ॥ प्रत्यय इति शेषः ॥ अनन्ययोगेनेति ॥ देवतान्तरसाधारण्येन विनेत्यर्थः । अनेनाधिशब्दव्याख्यानरूपसम्यक्त्वन्तस्मिन्नेवेत्येकं स्वभावत इत्यपरमिति भाष्य एव विवृतमित्युक्तं भवति ॥ अत एवाह ॥ स्वभावतो वेति ॥ द्वितीयार्धव्याख्यानस्य विष्णौ साम्यात्पूर्वार्धमात्रं योजयति ॥ यद्वेति ॥ व्यवस्थितो विकल्पः ॥ ६ ॥ ३ ॥ २ ॥

### ऋक्संहिता पदपाठसहिता (सू-२२, व-१)

(२०९) प्रातर्युजा विबोधयाश्विनावेह गच्छताम् ।
अस्य सोमस्य पीतये ॥ १ ॥

(प०) प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् ॥
अस्य । सोमस्य । पीतये ॥ १ ॥

(२१०) या सुरथा रथीतमोभा देवा दिविस्पृशा ॥
अश्विना ता हवामहे ॥ २ ॥

(प०) या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा ॥
अश्विना । ता । हवामहे ॥ २ ॥

(२११) या वां कशा मधुमत्यश्विना सूनृतावती ॥
तया यज्ञं मिमिक्षतम् ॥ ३ ॥

(प०) या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती ॥
तया । यज्ञम् । मिमिक्षतम् ॥ ३ ॥

(२१२) न हि वामस्ति दूरके यत्रा रथेन गच्छथः ॥ अश्विना सोमिनो
गृहम् ॥ ४ ॥

(प०) नहि । वाम् । अस्ति । दूरके यत्र । रथेन । गच्छथः ॥
अश्विना । सोमिनः । गृहम् ॥ ४ ॥

(२१३) हिरण्यपाणिमूतये सवितारमुपह्वये ॥
सचेत्ता देवता पदम् ॥ ५, ४ ॥

(प०) हिरण्यऽपाणिम् । ऊतये । सवितारम् । उप । ह्वये ॥ सः चेत्ता ।
देवता । पदम् ॥ ५, ४ ॥

## ऋग्भाष्यम्

प्रातःस्तुतत्वेन प्रोक्तौ प्रातर्युजाविति । अश्विनौ भगवांश्चैव प्रातर्योगेन गम्यते । स्तुतिशब्दः स्तुतौ यस्माद् बुध्यते वर्तमानकः । बोधयेत्यत उक्तं तत्परतो बुद्ध्यते कथम् ॥ १,२ ॥ कशया स्पृष्टिमात्रेण मधुरं दुरुतोखिलम् । अतो मिमिक्षतमिति स्पर्शो मेक्षणमुच्यते । वेदवाक्यस्तुतत्वेन कशा सा सूनृतावती । तयैव घृतसोमादि स्पृशतं याज्ञिकं वसु ॥ ३,४ ॥ हितत्वाद्रमणीयत्वाद्धिरण्यं वर्णतोपि च । रूपं नारायणस्यैव पाणिशब्दोपलक्षितम् । स्रष्टृत्वात्सविता विष्णुः स ज्ञाता स्वपदादिकम् । स एव देवतामुख्या तद्गुणैक्येन देवता ॥ ५, ४ ॥

## ऋग्भाष्यटीका

प्रातर्युजा । एकविंशत्यृचमिदं सूक्तम् । तत्राद्याश्चतस्र आश्विन्यः । प्रातर्युजावित्येतदश्विनोर्व्याख्याति ॥ प्रातः स्तुतत्वेनेति ॥ प्रातःसवने स्तुतत्वेन । भगवति व्याख्याति ॥ भगवांश्चेति । प्रातर्योगेन हंसोपास्तिलक्षणेन गम्यत इति प्रातर्युगिति प्रोक्त इत्यर्थः । उपायोपेययोरभेदोपचारात् । विबोधयेत्येतद-ज्ञानसूचकम् । अतः सयुक्तिकमन्यथा व्याख्याति ॥ स्तुतिशब्द इति । यस्मात्स्तुत्यर्थः शब्दः स्तुतौ गुणसङ्कीर्तन एव व्याख्येयो न दोष सूचकतया प्रकरणासङ्गतेः । अतो बोधयेति यदुक्तं तत्तत्र लोट्प्रत्ययो बुध्यत इति वर्तमानको वर्तमानार्थो व्याख्येय इत्यर्थः । यथास्थितव्याख्याने कथं स्तुतित्वव्याघात इत्यत आह ॥ परत इति ॥ सर्वज्ञत्वादिति शेषः । परतो ऋत्विगादितः । हे होतः प्रातर्युजावश्विनौ विबोधय । विबुद्धावेव वर्तेते तौ प्रार्थयस्वेति यावत् । ताविहास्य सोमस्य पीतये आगच्छताम् ॥ १ ॥

(ऋग्भाष्यटीका)

या सुरथा। यावश्विनावुभौ देवौ। सुरथौ शोभनरथौ। रथितमौ अतिशयितरथिनौ। दिवि स्पृशौ दिविवर्तमानौ। तौ हवामहे॥ २॥

यावाम्। अत्र कशया यज्ञस्य मेक्षणं प्रार्थ्यते। तत्किंनिमित्तमित्यत आह॥ कशयेति॥ कुरुतोऽश्विनौ। इति प्रार्थितमिति शेषः। मिमिक्षतमित्यत्र प्रकृत्यर्थमाह॥ स्पर्श इति। सूनृतावतीत्येतत्कशायां योजयति॥ वेदेति। यज्ञस्य क्रियारूपस्य कथं कशया स्पृष्टिः। कथं च मधुरत्वमित्याशङ्कां परिहरन्व्याख्याति॥ तयैवेति॥ हे अश्विनौ या वां युवयोः राम्बन्धिनी। मधुमती। मधुमती स्वादुमती स्वादुत्वकारिणी। सूनृतावती सूनृता वेदवाणी तद्वती तत्स्तुता। कशा अश्वादिनोदिनी। तया अस्मदीयं यज्ञं यज्ञसम्बन्धि-घृतसोमादिवस्तु। मिमिक्षतं स्पृशतम्॥ ३॥

न हि वाम्। हे अश्विनौ यत्र सोमिनो यजमानस्य। गृहं गृहे। यत्रेति द्वितीयार्थे सप्तमी। रथेन गच्छथः आगच्छथः। तद्वां युवयोर्दूरके दूरे नास्ति हि। दूरं न भवतिहि तस्मादागच्छतम्॥ ४॥

हिरण्यपाणिम्। अतः पराश्वतस्रः सावित्र्यः। विष्णौ हिरण्यपाणिशब्दं व्याख्याति। हितत्वादिति। जगत इति शेषः। नारायणस्य रूपमेव न तु पाणिमात्रम्। हितत्वाद्रमणीयत्वाद्धिरण्यम्। आदेशादिकमूह्यम्। वर्णतोपि च(वा) हिरण्यसदृशत्वाद्धिरण्यम्। अतोऽसौ हिरण्यपाणिरुच्यत इत्यर्थः। पाणिशब्दो रूपार्थः। कथमित्यत आह॥ पाणीति॥ स वितृ शब्दव्याख्यानं स्मारयति॥ स्रष्टृत्वादिति। सपदं चेत्तेति व्याख्याति॥ स ज्ञातेति। पदं स्वरूपम्। एकवाक्यत्वे सदेवतेत्यनुपपन्नं स्यादित्यतो वाक्यभेदेन व्याख्याति॥ स एवेति। अत्र देवताशब्दो देवपर्यायो गृहीतः। यद्वा। अयं भावे तल् देवस्य भावो देवता। देवशब्दप्रवृत्तिनिमित्तम्। कथं तर्हि सदेवतेति व्यपदेश इत्यत आह॥ तद्गुणैक्येनेति॥ स एवेत्यनुवर्तते। तस्य परमेश्वरस्य गुणानां च क्रीडादीनामैक्येन कारणेन देवता देवत्वं स एवेति युक्तमित्यर्थः। अहं हिरण्यपाणिं हितं च रमणीयं चेति वा हिरण्यवर्णत्वाद्वा हिरण्यं पाणिशब्दं रूपं यस्य तम्। सवितारमूतये रक्षाद्यर्थमुपह्वये। कुतः स सवितापदं स्वरूपं स्वस्यान्यस्य च चेत्ता ज्ञाता। चितीसंज्ञाने तृन्। स एव देवता देवः। अन्ये तु देवाभासाः। यद्वा देवता देव शब्दप्रवृत्तिनिमित्तं गुणजातम्। स एव तदभिन्नमेव॥ ५, ४॥

## मन्त्रार्थमञ्जरी

अथ 'प्रातर्युजा' द्वाविंशमेकविंशत्यृचं वर्गचतुष्टयात्मकं नानादैवत्यं गायत्रं सूक्तम्। तत्र आद्याश्चतस्र आश्विन्यः। (हे होतः) प्रातर्युजा, प्रातर्युजौ, प्रातःसवने स्तुतिविषयत्वेन युज्येते इति प्रातर्युजौ। अश्विनौ, प्रसिद्धाश्विनौ। तथा– प्रातर्युजा, प्रातर्युजौ, प्रातःकाले क्रियमाणहंसोपा-

सनारूपसमाधिः प्रातर्युक्, उक्तं च तन्त्रसारे चतुर्थे– 'प्रातर्योगो महानयम्' (२६) इति तद्विषयत्वाद्विष्णुरूपे अप्युपायोपेययोरभेदोपचारात् 'प्रातर्युजौ' इत्युच्येते। अश्विनौ, 'अश्विना यज्वरीरिषो' इत्यत्रोक्तनिरुक्त्या विष्णुरूपविशेषौ। वि बोधय, सर्वदा विबुद्धावेव वर्तमानौ तौ प्रार्थयस्वेति यावत्। (तौ) इह अस्य सोमस्य पीतये आ गच्छताम्॥ १॥ या, यौ उभा देवा, उभौ देवौ। अश्विना, अश्विनौ। सुरथा, सुरथौ, शोभनरथौ। रथितमा, रथितमौ, अतिशयेन रथिनौ। दिविस्पृशा, दिविस्पृशौ, दिवि स्वर्गे वर्तमानौ। ता, तौ। हवामहे, आह्वयामः॥ २॥

(हे) अश्विना, अश्विनौ। या। वाम्, युवयोः सम्बन्धिनी। मधुमती, स्वादुमती, अमृतस्रावित्वात् स्पर्शमात्रेण सर्वपदार्थस्वादुत्वकारिणी। सूनृतावती, सूनृता वेदवाणी, तया स्तुत्यतया तद्वती। कशा, अश्वादिनोदिनी। तया (अस्मदीयम्) यज्ञम्, यज्ञसम्बन्धिघृतसोमादि वस्तुजातम्। मिमिक्षतम्, स्पृशतम्, 'मिक्ष स्पर्शने' श्लुविकरणम्, लोट्, यद्वा– 'मिह स्पर्शने' इत्यतः स्वार्थिकसन्नन्तस्य रूपम्॥ ३॥

(हे) अश्विना, अश्विनौ। यत्र। सोमिनः, यजमानस्य। गृहम्। 'यत्र' इति द्वितीयार्थे सप्तमी। रथेन। गच्छथः, आगच्छथः। (तत्) वाम्, युवयोः। दूरके, दूरे। नहि अस्ति, नास्ति हि, दूरं न भवति हि। तस्मादागच्छतम्॥ ४॥

'हिरण्य' इत्यादि चतस्रः सावित्र्यः। (अहम्) हिरण्यपाणिम्, हितं च रमणीयं चेति वा हिरण्यवर्णत्वाद्वा हिरण्यं लक्षणया पाणिशब्दोक्तं सर्वावयवोपेतं रूपं यस्य तम्, हितशब्दस्य हिरादेशो रमेः न्यक्, अनुनासिकलोपश्च निरुक्तत्वात्। सवितारम्, जगत्प्रसवितृत्वहेतुना सवितृशब्दोक्तम्, षूङ् प्राणिप्रसवे, इत्यतस्तृच्, तृन्वा। ऊतये, रक्षार्थम्। उप ह्वये, आह्वयामि। कुतः ? सः, सविता। पदम्, स्वरूपम्, स्वस्यान्यस्य च। चेत्ता, ज्ञाता, 'चिती संज्ञाने' तृन्। (सः) (एव) देवता, देवः, अन्ये तु– देवताभासाः, अत्र देवताशब्दो देवपर्यायो ग्राह्यः, यद्वा भावे तल्प्रत्ययः, देवस्य भावो देवता, देवशब्दप्रवृत्तिनिमित्तं क्रीडादिगुणजातम् (सः) (एव), तदभिन्नमेव, गुणगुण्यभेदस्य 'ॐ उभयव्यपदेशात्त्वहि कुण्डलवत् ॐ' (३।२।२८) इति भक्तिपादीयाधिकरणे सिद्धत्वात्। प्रसिद्धसवितरि यथायोगं शब्दार्थो ज्ञेयः॥ ५॥ इति चतुर्थो वर्गः॥ ४॥

## रूपावतारः

प्रातर्युजा । प्रातः सवन इति प्रातःशब्देन लक्षणया प्रातःसवनं गृह्यते । स्तुतत्वेनेति युजेरर्थाभिधाने प्रातःशब्दोपपदात् युजेः क्विपि प्रातर्युगिति रूपम् । भगवति व्याख्यातीति लक्षणयेति शेषः । अत एव भाष्ये गम्यगमकभावो लक्षणाबीजभूतः सम्बन्धो दर्शितः । प्रातर्युगिति प्रोक्त इत्यर्थ इति लक्षणयेति शेषः । इतः परं टीकायां श्रूयमाणं उपायोपेययोरभेदोपचारात् इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । प्रातर्युक् इति शब्देन प्रातर्योगिगम्यस्य लक्षणया गृहीतत्वात्तेन प्रातर्योगिगम्येन परमेश्वरस्य मुख्याभेदस्यैवोक्तत्वेनाभेदोपचाराभावात् । ऋत्विगादित इति इतः परं टीकायां श्रूयमाणं हे होतः इति प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । विबोधयेति लोटः बुध्यत इति वर्तमानार्थकत्वस्याङ्गीकृतत्वान्नियोगार्थकत्वाभावेन हे होतरिति सम्बोधनस्यानपेक्षितत्वात् । विबुद्धावेव वर्तेते इति इतः परं टीकायां श्रूयमाणं 'तौ प्रार्थयस्वेति यावत्' इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । बोधयेति पदस्य बुध्यत इति वर्तमानार्थकत्वस्याङ्गीकृतत्वेन प्रार्थयस्वेति व्याख्यानायोगात् ॥ १ ॥

या सुरथा । रथितमाविति । संहितायां 'अन्येषामपि दृश्यते' (६।३।१३७) इति दीर्घे रथीतमाविति रूपम् ॥ २ ॥

यावां कशा । मिमिक्षतमिति । अनेकार्थत्वात् धातूनां स्पर्शार्थात् मिहेः स्वार्थे सनि 'सन्यङोः' (६।१।९) इति द्वित्वे 'हो ढः' (८।२।३१) इति हकारस्य ढत्वे 'षढोःकःसि' (८।२।४१) इति कत्वे सकारस्य षत्वे थसस्तमादेशे मिमिक्षतमिति रूपम् । भाष्ये तु मिहः औणादिके भावे सन् प्रत्यये लघूपधगुणे ढत्वे कत्वे षत्वे नकारस्य णत्वे च मेक्षणमिति रूपम् ॥ ३ ॥

नहि वाम् । द्वितीयार्थ इति । यत्रेति सप्तमी द्वितीयार्थ इत्यर्थः । नास्ति हीति । अयं पाठः प्रामादिकः । न ह्यस्तीत्येव पाठः प्रामाणिकः 'न हि वामस्ति दूरके' इत्यत्र नहीत्यस्य एकपदत्वात् बहुपुस्तकेषु न ह्यस्तीत्येव पाठदर्शनाच्च ॥ ४ ॥

हिरण्यपाणिम् । आदेशादिकमिति । हितशब्दे तलोपः रमणीयशब्दस्य रण्य इत्यादेश इति ज्ञेयमित्यर्थः । अत्र देवताशब्द इति । देवताशब्दो द्विविधः । एको देवशब्दपर्यायः अपरः ग्रन्थप्रतिपाद्यत्ववचनः । एवं चात्र देवताशब्दः देवशब्दपर्याय इत्यर्थः ॥ ५, ४ ॥

## पदार्थप्रकाशिका

प्रातर्युजा सैका चतस्रा आश्विन्य इत्यनुक्रमणिकानुसारेणाह। एकविंशतीति। तथाच प्रातर्युजा सैकेत्यत्रैकविंशतीत्यर्थो द्रष्टव्यः। अत्राद्या इति एकविंशत्यृचस्य सूक्तस्य मध्ये आद्याश्चतस्रो ऋच इत्यर्थः। तथाच चतस्र आश्विन्यो इत्यनुक्रमणिकायां तत्राद्या इति शेष इत्युक्तं भवति। हंसोपास्तिलक्षणेति। हंसः सोहं स्वाहेति हंसमन्त्रलक्षणेनेत्यर्थः। यथोक्तं तन्त्रसारे। श्वासरूपो जपो नित्यम् उभयोर्विद्धज्ञयोः। एकविंशत्सहस्रं स्यात्सषट्शतमहर्निशम्। अर्पणीयो हरौ नित्यं प्रातर्योगो महानयमिति। ननु तर्हि हंसोपास्तिवाचकप्रातयुक्शब्देन भगवान् कथं प्रोक्त इत्यत आह। उपायोपेययोरिति। ज्यायो भगवत्प्राप्त्युपायो हंसमन्त्रम् उपेयो भगवान् तयोरभेद उपचरित इत्यर्थः। अज्ञानसूचकमिति। हे होतर्विबोधयेति लोट्प्रयोगेणेदानीं विबोधन विधानप्राप्त्या पूर्वं तदभावः सूचितः। अबुद्धस्यैव तद्विधिसम्भवादिति भावः। प्रकरणासङ्गतेरिति। मेधातिथिकर्तृकस्तुतिप्रकरणासङ्गतेरित्यर्थः। हेहोतरश्विनौ विबुद्धावेव वर्तेत इत्यस्यासङ्गतत्वात्तत्तात्पर्यमाह। तौ प्रार्थयस्वेति। भवद्भ्यामुष्य यज्ञो गन्तव्य इति प्रार्थयस्वेत्यर्थः। तौ एवं प्राथितौ ॥ १ ॥

यासुरथारथीतम्। अतिशयितरथिनाविति। रथे स्थित्वाऽतिशयेनयोद्धाराविर्त्यथः। अत एव रथे स्थित्वा योद्धृणां भीष्मादीनामतिरथिकत्वमहारथिकत्वप्रसिद्धिरिति द्रष्टव्यम् ॥ २ ॥

यावाङ्कशामधुमती। कशयेतिभाष्ये यत इति शेषः। इतीतिभाष्यपदमनूद्य तत्र शेषं पूरयति। इति प्रार्थितमिति शेष इति। श्रुत्येति शेषः। कथञ्चेति। क्रियारूपस्य यज्ञस्येति वर्तते। प्रकृत्यर्थमिक्षधात्वर्थः स्वादुत्वकारिणीति। कशया यद्वस्तु स्पृश्यते तस्मिन् वस्तुनि स्वादुता जायत इत्यर्थः। अश्वादिनोदिनीति। ताडनादिना अश्वप्रेरिका प्रतोदकमिति यावत् ॥ ३ ॥

नहिवामस्थिदूरके। यत्रेत्यनूद्य गृह इति तद्व्याख्यानम्। द्वितीयार्थे सप्तमीति। यत्रेति सप्तमीयम्। गृहमिति द्वितीयार्थ इत्यर्थः। तदिति। तदित्यस्य ऋक्स्थेन गृहमित्यनेनान्वयः। यद्वा यत्रेत्यनुसारेण गृहमिति द्वितीयान्तपदं गृह इति सप्तम्यन्ततया व्याख्याय पदद्वयस्यापि भावमाह। द्वितीयार्थ इति ॥ ४ ॥

हिरण्यपाणिमूतये। यथा सावित्र्य इत्यनुक्रमणिकां हृदि निधायाह। अतः परा इति। तर्हि हितरमणीयेतिस्यात् इत्यत जाह। आदेशादिकमिति। आदिपदेन वर्णलोपो ग्राह्यः। तथाच

(पदार्थप्रकाशिका)

हितशब्दस्य हीत्यादेशे रमणीयेत्यत्र मकारस्य ईकारस्य च लोपे रण् येति जात हिरण्येति भवतीति द्रष्टव्यम् । स्मारयतीति । गायत्र्यर्थकथनसमये गुणैस्ततः प्रसवितेत्यादि भाष्ये प्रसवितेति सवितृशब्दस्य प्राग्व्याख्यातत्वात् इति भावः । एकवाक्यत्व इति । सवितादेवतापदमिति पदस्यैकवाक्यत्व इत्यर्थः । स देवतेति । स देवतापदं चेत्तेत्यन्वयः कर्तव्यः । अत्र च सदेवतेत्यनुवादे विशेषणविशेष्यभावोऽनुपपन्नः । तयोर्भिन्नलिङ्गत्वादिति भावः । वाक्यभेदेनेति । सदेवतेत्येकवाक्यं सपदं चेत्तेत्येतत्परं वाक्यमिति वाक्यभेदेनेत्यर्थः । स एवेतीति । सर्वं सावधारणमिति न्यायेन य एवेत्युक्तम् । अत्र लिङ्गव्यत्ययवारणाय देवता देवत्वमित्यर्थप्रतीतिवारणाय चाह । अत्रेति । स एवेति व्याख्याने इत्यर्थः । देवताशब्द इति । तथाच स एव मुख्या देवता मुख्यो देवः । अन्ये तु देवाभासा इत्युद्देश्यविधेयभावेनार्थो द्रष्टव्यः । भावेतलिति । प्रवृत्तिनिमितधर्माभिधायी तल्प्रत्यय इत्यर्थः । तस्य भावस्त्वतलाविति स्मरणादिति भावः । कथं तर्हीति । भावे अयं तल्प्रत्ययश्चेत्यर्थः । व्यपदेश इति । सदेवतेति प्रवृत्तिनिमित्तभूतदेवत्वस्य भगवतश्चैक्यव्यदेशः कथमित्यर्थः । क्रीडादीनामिति । दिवुक्रीडेत्यादिधातोः देवशब्दप्रवृत्तिनिमित्तभूतानां क्रीडादिगुणानाम् इत्यर्थः । हिरण्यपाणिशब्दं हिरण्यपाणिवाच्यं स्वपदादिकमित्यत्रादिपदार्थमाह । अन्यस्य चेति ।

ननु चेत्तेत्येस्य तृजंतत्वात्तस्य च कृत्वात्तद्योगे कर्मणि प्राप्तद्वितीयापवादकत्वेन कर्तृकर्मणोः कृतीति कर्मणि षष्ठ्यां प्राप्तायां पदस्य चेत्तेति स्यात् । न पदंचेतीति तत्राह । तृनिति चित्तेसंज्ञान इत्यत्र ईकारो अनुबन्धार्थः । चित् इत्येवं धातुः । एवंच चित् अस्मात् तकारलोपे ईकारस्य गुणे चेत्तेति प्रातिपदिकम् । तथाच चेत्तेत्यस्य तृन्नंतत्वात्तद्योगे नलोकेति षष्ट्या निषेधादपवादस्यापवादे पुनरुत्सर्गस्यैव प्राप्तिरिति न्यायेन कर्मणिद्वितीयेति द्वितीयैव प्राप्ता । एवं च पदमिति द्वितीया युक्तैवेति भावः ॥ ५ ॥ ४ ॥

## पदार्थदीपिका

हंसोपास्तिलक्षणेनेति । 'श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः । एकविंशत्सहस्रात्मा सषट्शतमहर्निशम् । अर्पणीयो हरौ नित्यं प्रातर्योगो महानयं' इति हंसोपास्तेः प्रातर्योगत्वाभिधानादिति भावः । ननु तर्हि प्रातर्योगगम्य इत्येव वाच्यं प्रातर्युगिति तु कथमित्यत आह । उपायेति । सत्सूद्विषेत्यादिना युज समाधावित्यस्मात् करणेऽप्यवान्तरव्यापारवतः कारणस्यैव कारकत्वात् 'मिथ्याशब्दो वदती'त्यादिवत् स्वव्यापारविवक्षया क्विबित्यर्थः । सुपां सुलुगित्यादिना विभक्तेराकारादेश इति भावः । लोट्प्रत्ययादिरिति क्वचित्पाठः । तत्र आदिशब्देन णिच्प्रत्ययो

(पदार्थदीपिका)

ग्राह्यः । उत्तरत्रापि वर्तमानार्थक इति स्वार्थिकत्वोपलक्षणं इत्यवधेयम् । विबोधयेत्यस्य तात्पर्यमाह । विबुद्धावेवेति । यद्यपि विबोधय विज्ञापय इति व्याख्याने अर्थविशेषलाभान्न कापि कुसृष्टिः । तथापि विपूर्वस्य जानातेरेव ण्यन्तस्यार्थविशेषे रूढिर्न तु तत्समानार्थकबुध्यतेरपीति भावः ॥ १ ॥

यावित्यादिषु अष्टसु पदेषु 'सुपां सुलुगि'ति द्विवचनस्याकार इति ज्ञेयम् । रथितमाविति । अन्येषामपि दृश्यते इति संहितायां इकारस्य दीर्घत्वं इति ज्ञेयम् । दिविस्पृशाविति । क्विप्च इति क्विपि 'हृद्युभ्यां ङेरुपसंख्यानं' इति सप्तम्या अलुगिति ज्ञेयम् ॥ २ ॥

सूनृतावतीत्यत्र संज्ञायामिति मतुपो वत्वमिति भावः । मिमिक्षतमिति । मिहेः सन् । हलन्ताच्च इति कित्वाद्गुणा भावः । ढत्वकत्वषत्वानीतिभावः ॥ ३ ॥

सप्तमीति । यत्रेत्यर्थे सप्तमीत्यर्थः । गृहमिति । द्वितीयान्तं यत्रेत्यनुसारेण गृह इति व्याख्याय विशिष्टस्यापि व्याख्यानं द्वितीयार्थ इति अवधेयम् । सप्तमी सप्तम्यावित्यप्याहुः ॥ ४ ॥

हितमित्यादिकं भाष्ये विग्रहप्रदर्शनमिति प्रतीतिं वारयितुमाह । हितत्वादिति । आदेशादिकमिति । हितशब्दस्य हिरित्यादेशः, रमणीयशब्दे मकारलोपश्चेत्यर्थः । हिरण्य-सदृशत्वादिति । अत्र भाष्ये वर्णत इत्युक्तेः विष्णुं स्वर्णसमानचारुवपुषमिति वक्ष्यमाणत्वाच्चेत्यर्थः । एकवाक्यत्व इति । उत्तरार्धस्येति शेषः । अनुपपन्नमिति । भिन्नलिङ्गत्वादिति भावः । अत्रेति । एतस्मिन् व्याख्यान इति अर्थः । पर्याय इति । देवात्तल् इति स्वार्थे तल् इति भावः । तद्गुणैक्येनेत्यादिना भाष्येण सदेवतेत्येतत् प्रकारान्तरेण व्याख्यायत इत्याह । यद्वा इति । उत्तरार्धमवतारयति । कुत इति । सर्वस्य पूर्वार्धोक्तार्थस्य उत्तरार्धे सार्वज्ञादिना साधनादिति भावः । स्वपदादिकमिति । भाष्यस्थादिशब्दार्थमाह । अन्यस्य चेति । तृनिति । पदमिति द्वितीयाश्रवणादिति भावः । आगमविधेरनित्यत्वात् इडभाव इत्यवधेयम् । तर्हि कथमन्यत्र देवताशब्दप्रयोग इत्यतः हेत्वाद्याभासेषु हेत्वादिशब्दप्रयोगवत् एतदुपपत्तित्याह । अन्ये त्विति । अत एव भाष्ये मुख्येत्युक्तं इत्यवधेयम् ॥ ५ ॥

## टीकाविवृतिः

प्रातर्युजा ॥ एकविंशत्यृचमिति ॥ ऋषिछन्दसोरनुवृत्तितः सिद्धेः सूक्तसङ्ख्यादि-कमनुक्रमणिकायामुच्यते । प्रातर्युजा सैका चतस्र आश्विन्यस्तथा सावित्र्य आग्नेय्यौ द्वे देवीनामेकैकेन्द्राणीवरुणान्यग्नायीनां द्यावापृथिव्ये द्वे एकाऽपार्थिवी ष ड्वैष्णव्यो ते देवा दैवीवेति । अस्यार्थः । आद्याश्चतस्र ऋच आश्विन्य अश्विदेवताकाः । अश्विशब्दाद्देवतार्थेऽणि इनण्यनपत्ये इति

(टीकाविवृतिः)

प्रकृतिभावान्नस्तद्धित इति टिलोपाभावेऽणंतत्वान्ङीप् । तथा तदुत्तराश्चतस्रःसावित्र्यः सवितृदेवताकाः । ततःपरे द्वे ऋचौ आग्नेय्यौ अग्निदेवताके । तत एका ऋक् देवीनां प्रतिपादिका । ततः परा एका ऋक् इन्द्राणीवरुणान्यग्नायीनां संबन्धिनी । तत उत्तरे द्वे ऋचौ द्यावावृथिव्ये द्यावापृथिवीदेवताके । द्यावापृथिवीशुनासीरेत्यादिना यत्प्रत्यये टाप् । ततःपरा एका पार्थिवी पृथिवीदेवताका । तत उत्तराःषड्ऋचो वैष्णव्यो विष्णुदैवताकाः । तास्वाद्या अतो देवा इति ऋक् दैवी वा देवदेवताकेति ।। प्रातःसवने इति ।। प्रातश्शब्दः प्रातस्सवनलक्षकः युक्शब्दस्तुतिरूपसंबन्धार्थः। युजिर्योगे इत्यतः सत्सूद्विषद्रुहदुहेति क्विबिति भावः ।। हंसोपास्तिलक्षणेनेति ।। श्वासात्मक-हंसमन्त्रजपरूपोपास्तिस्वरूपेणेत्यर्थः । श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः । एकविंश-त्सहस्रात्मा सषट्शतमहर्निशम् । अर्पणीयो ह(रौनित्यं)रेर्नित्यं प्रातर्योगो महानयमिति तन्त्रसारे हंसोपास्तेःप्रातर्योगत्वोक्तेरिति भावः । ननु युजसमाधावित्यतो भावे संपदादित्वात्क्विपि प्रातर्युक्शब्दस्य हंसोपास्त्यर्थकस्य विष्णुविशेषणत्वं कथं विष्णोरुपास्तिविषयत्वादित्यत आह ।। उपायेति ।। मोक्षोपायस्य हंसोपास्तेरुपेयस्य विष्णोरभेदोपचार इत्यर्थः ।। अज्ञानसूचकमिति ।। पूर्वमज्ञाने सत्येव बोधनदर्शनादिति भावः ।। प्रकरणासङ्गतेरिति ।। स्तुतिप्रकरणासङ्गतेरित्यर्थः ।। बुध्यत इतीति ।। बोधयेत्यत इत्यत्रस्थ इति शब्दो बुध्यत इत्यनेनापि संबध्यते इत्याशयः । वर्तमानक इत्युपलक्षणं णिचःस्वार्थिकत्वं च ग्राह्यम् । लोट्प्रत्ययादिरिति क्वाचित्कपाठे तु आदि-शब्दाण्णिजुग्राह्यः । विबोधयेत्यस्य विज्ञापयेत्यर्थाप्रतीतेस्तथा न व्याख्यात इति बोध्यम् ।। १ ।।

यासुरथा ।। रथितमाविति ।। संहितायामन्येषामपि दृश्यत इति दीर्घ इति भावः ।। दिविस्पृशाविति ।। हृद्युभ्यां ङेरुपसंख्यानमिति सप्तम्या अलुगिति भावः ।। २ ।।

यावाम् ।। शेष इति ।। भाष्ये कुरुत इत्यतः परं कर्तुरनुक्तेरश्विनाविति मिमिक्षतमितीति शब्दात्परं प्रार्थितमिति च शेष इति भावः ।। क्रियारूपस्येति ।। क्रियारूपत्वादित्यर्थः ।। सूनृता वेदवाणीति ।। सूनृतं मंगले सत्ये प्रियवाचि च सूनृतमिति विश्वोक्तेर्वेदस्यापि मङ्गलत्वेन सत्यार्थकत्वेन प्रियवाक्त्वेन सूनृत शब्दवाच्यत्वमित्यर्थः ।। कशेति ।। तन्तुचर्मादिनिर्मितोऽश्वादि प्रहरणाय कृतो रज्जुविशेष इत्यर्थः ।। यज्ञ संबन्धीति ।। भाष्ये यज्ञशब्दादिदमर्थे ठकि याज्ञिकमिति रूपमिति भावः ।। ३ ।।

नहिवाम् ।। सोमपानकर्तृत्वात्सोमित्वमित्याशयेनाह ।। सोमिनो यजमानस्येति ।। तद्वामिति ।। तद्गृहमित्यर्थः ।। ४ ।।

(टीकाविवृतिः)

हिरण्यपाणिम् ॥ सावित्र्य इति ॥ सवितृशब्दाद्देवतार्थेऽणि यणादेशोऽणन्तान्ङीबितिभावः ॥ शेष इति ॥ जगतो हितत्वाज्जगतः सकाशाद्रमणीयत्वादित्यन्वय इति भावः ॥ आदेशादिकमिति ॥ पृषोदरादित्वाद्धितशब्दे त इत्यस्य लोपःरमेरौणादिकण्य प्रत्यये मकारलोपश्चेत्यर्थः ॥ हिरण्य-सदृशत्वादिति ॥ तथाच हिरण्यशब्दो रूपे गौणः । यदा पश्यःपश्यते रुग्मवर्णमित्युक्तेरिति भावः । गायत्रीव्याख्याने सवितृशब्दव्याख्यानादत्र तद्व्यर्थमित्यत आह ॥ स्मारयतीति ॥ एकवाक्यत्व इति ॥ उत्तरार्धस्येति शेषः ॥ अनुपपन्नमिति ॥ भिन्नलिङ्गत्वादिति भावः ॥ देवपर्याय इतिं ॥ देवात्तलिति स्वार्थे तल्प्रत्ययादिति भावः ॥ यद्वेति ॥ तथा च तद्गुणैक्येनेति भाष्यं देवताशब्दस्यार्थान्तरपरमिति भावः ॥ पाणिशब्दमिति ॥ पाणिरिति शब्दो लक्षको यस्य रूपस्य तत्पाणिशब्दं रूपमित्यर्थः । हिरण्यशब्देन पाणिशब्दस्य बहुव्रीहिप्रदर्शनाय यस्य तमित्युक्तम् ॥ रक्षाद्यर्थमिति ॥ अवे रक्षणगतिकांत्यादिबह्वर्थोक्तेरिति भावः । पूर्वार्धोक्तं प्रत्युत्तरार्धोक्तस्य हेतुत्वप्रदर्शनायाह ॥ कुत इति ॥ स्वपदादिकमिति भाष्यस्थादिशब्दार्थमाह ॥ अन्यस्य चेति ॥ चेत्तेत्यस्य तृजंतत्वे पदमित्यस्य षष्ठी स्याच्चित्त्वादन्तोदात्तत्वं चेत्यत आह ॥ तृन्निति ॥ आगमशासनस्यानित्यत्वादिण्न । नलोकेति षष्ठीनिषेधाद्द्वितीया । नित्वादाद्युदात्तत्वं चेति भावः । अन्येषामपि देवत्वात्स एवेत्ययुक्तमित्यत आह ॥ अन्ये त्विति ॥ अत एव भाष्ये मुख्येत्युक्तमिति भावः ॥ ५ ॥ ४ ॥

**ऋक्संहिता पदपाठसहिता** (सू-२२, व-२)

**(२१४) अपां नपातमवसे सवितारमुपस्तुहि ॥ तस्य व्रतान्युश्मसि ॥६॥**

**(प०) अपाम् । नपातम् । अवसे । सवितारम् । उप । स्तुहि ॥ तस्य । व्रतानि । उश्मसि ॥ ६ ॥**

**(२१५) विभक्तारं हवामहे वसोश्चित्रस्य राधसः ॥**
**सवितारं नृचक्षसम् ॥ ७ ॥**

**(प०) विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः ॥ सवितारम् । नृऽचक्षसम् ॥ ७ ॥**

**(२१६) सखाय आनिषीदत सविता स्तोम्यो नुनः ॥**
**दाता राधांसि शुम्भति ॥ ८ ॥**

(ऋक्संहिता पदपाठसहिता)

(प०) सखायः । आ । नि । सीदत । सविता । स्तोम्यः । नु । नः ॥
दाता । राधांसि । शुम्भति ॥ ८ ॥

(२१७) अग्ने पत्नीरिहावह देवानामुशतीरुप ॥ त्वष्टारं सोमपीतये ॥९॥

(प०) अग्ने । पत्नीः । इह । आ । वह । देवानाम् । उशतीः । उप ॥
त्वष्टारम् । सोमऽपीतये ॥ ९ ॥

(२१८) आग्ना अग्न इहावसे होत्रां यविष्ठभारतीम् । वरुत्रीं धिषणां वह ॥

(प०) आ । ग्नाः । अग्ने । इह । अवसे । होत्राम् । यविष्ठ ।
भारतीम् ॥ वरूत्रीम् । धिषणाम् । वह ॥ १०, ५ ॥

## ऋग्भाष्यम्

व्यक्तत्वात्पार्थिवे देहे सोपां नप्ता जनार्दनः ॥ ६ ॥ सदा विभज्य दातारं वसोरुत्तमराधसः । अशेषपुण्यपापादिविशेषैश्चितिदर्शकम् । आह्वयामः ॥ ७ ॥ सराधांसि शोभयत्यंजसा हरिः ॥ ८,९ ॥ नदीश्च भारतीं चैव होत्रामाहुतिरूपतः । वरूत्रीं वरणीयत्वात्त्राणाद्- बुद्धिस्वरूपिणीम् । विष्णुश्च प्राणसम्बन्धाद्भारतीत्येव चोदितः । प्राणस्तु भरतो भारततत्वाद्भर्तृरूपतः । होत्राहुतत्वतो विष्णुः श्रीर्वापि धिषणा मता ॥ १०, ५ ॥

## ऋग्भाष्यटीका

अपांनपातम् । परमेश्वरे अपांनपाच्छब्दं घटयति । व्यक्तत्वादिति ॥ नपाच्छब्दः पौत्रपर्यायः । अद्भ्यः पृथिवीति श्रुतेः पृथिवी तावदपां पुत्री । तदात्मकत्वाद्देहोपि । तंत्र च पार्थिवदेहे व्यक्तत्वाज्जनार्दनः पृथिवीपुत्र इत्येवमपांनपादित्यर्थः । सोऽजत्वेन प्रसिद्धः । अत एव हि जनार्दनः । एवं सविताप्यपां कार्येण्डे जातत्वादपांनपात् । हे होतः अपांनपातं सवितारम् अवसे रक्षार्थमुपस्तुहि । कुतः । तस्य सवितुर्व्रतानि कर्माणि उश्मसि सर्वे वयं कामयामहे ॥ ६ ॥

विभक्तारम् । सदा । वयं चित्रस्य राधसः उत्तमराधसः उत्तमसिद्धिरूपस्य । वसोः वसुनः । विभक्तारं सदा विभज्यदातारम् । यस्य यावद्योग्यं तस्मै तावतो दातारम् । नृचक्षसं नृणां जीवानां द्रष्टारम् । अशेषपुण्यपापादि विशेषैर्धर्मैः सह चितिदर्शकं जीवचैतन्यसाक्षिणं सवितारं हवामहे आह्वयामः ॥ ७ ॥

(ऋग्भाष्यटीका)

सखायः । अत्र राधांसि शुंभतीत्येतद्व्याख्याति । सराधांसीति । हे सखायः ऋत्विजः । आ अस्मत्समीपमागत्य निषीदत किमिति । नु इदानीं नोऽस्माकं दाता अभिलषितस्य । सविता स्तोम्यः स्तोमार्हः स्तोतव्यः । यः स सविता हरिः राधांसि सिद्धीः । शुम्भति अंजसा शोभयति । स्वराधांसीति कचित्पाठः । तत्र स्वेन दत्तानि राधांसीति व्याख्येयम् । सेश्वरा हि सिद्धयः शोभावत्यो भवन्ति ॥ ८ ॥

अग्नेपत्नीः । आग्नेय्यौ द्वे इति केचित् । तदनुपपन्नमिव भाति । अग्नेरत्र प्रैषगोचरत्वात् । तस्य चानैकान्तिकत्वात् । अन्यथातिप्रसङ्गात् । तस्मादावोढुरग्नेरेवात्र प्राधान्यमित्यनुपपन्नम् । विशेषप्रमाणे सति त्वाग्नेयत्वं न निवार्यते । अतो यथाप्रतीत्येवातः परं देवताः । हे अग्ने उशतीः कामयमानाः । यज्ञागमनमिति शेषः । देवानां पत्नीस्त्वष्टारञ्च सोमपीतये इहोपावह ॥ ९ ॥

आग्नाः । नदीश्च । हे यविष्ठ युवन् । अग्ने । ग्नाः नदीश्च आहुतिरूपतः आह्वानमन्त्राभिमानित्वतो होत्रां हुदानादनयोः अस्मात्करणेत्र प्रत्ययः । वरणीयत्वात्त्राणाच्च जगतो वरूत्री । वृणोतेः कर्मण्यूकारः । त्रायतेः कर्तरि टः । ततः कर्मधारयः । धिषणां बुद्धिस्वरूपिणीं बुद्ध्यभिमानिनीं भारतीं चावसेऽस्मद्रक्षणायेहावह । ग्नाशब्दो विष्णौ पूर्वं निरुक्तः । भारतीशब्दं तत्र निर्वक्ति । विष्णुश्चेति । द्वितीयेन चशब्देन देवानां पालकत्वाद्देवानां पत्नीति चोदित इति समुच्चिनोति । यज्ञसंयोग इति तु नाश्रितम् । प्राणसम्बन्धाद्भारतीति कथं लभ्यत इत्यत आह । प्राणस्त्विति ॥ भरो भारस्तेन ततत्वात् । तेनोतेर्डः । निरवधिकगौरवादित्यर्थः । भर्तृरूपंतः जगत इति शेषः । डुभृञ्भरणे अस्मादतच् । भरतस्येयं स्वामिनी भारती । विष्णोरभिमानित्वाभावात्कथं तत्र होत्राशब्द इत्यत आह ॥ होत्रेति ॥ अस्मिन्पक्षे कर्मणि त्रप्रत्यय इत्यर्थः । ह्वयतेर्वोभयत्र त्रप्रत्ययः । एवं धिषणाशब्दोपि बुद्धिप्रेरकत्वेन योज्यः । पूर्वं धिषणाशब्दो भारतीविशेषणत्वेनैव व्याख्यातः । इदानीं भिन्नविषयतां च दर्शयति । श्रीर्वेति ॥ १०, ५ ॥

## मन्त्रार्थमञ्जरी

(हे होतः । अपाम् नपातम्, अद्भ्यो जातपृथिव्यात्मकदेहे हरेर्व्यक्ततयाऽपां पौत्रत्वेनाऽपां नपातम् । सवितारम्, हरिम् । अपां कार्ये ब्रह्माण्डे रवेर्जाततयापां पौत्रत्वेनापां नपातं सूर्यं च । अवसे, रक्षार्थम् । उप स्तुहि । कुतः ? तस्य, सवितुः, हरे रवेश्च । व्रतानि, कर्माणि । उश्मसि, सर्वे वयं कामयामहे, 'वश कान्तौ' 'ग्रहिज्या' इति सम्प्रसारणम् ॥ ६ ॥

(वयम्) चित्रस्य राधसः, उत्तमसिद्धिरूपस्य वसोः, वसुनः । विभक्तारम्, सदा विभज्य दातारम्, यस्य यावद्योग्यं तस्मै तावतो दातारम् । नृचक्षसम्, नृणां जीवानां द्रष्टारम्, अशेषपुण्यपापादिविशेषैः सह जीवचैतन्यसाक्षिणम्, चक्षिङः असुन् । सवितारम् । हवामहे, आह्वयामः ॥ ७ ॥

(मन्त्रार्थमञ्जरी)

(हे) सखायः, ऋत्विजः । आ, अस्मत्समींपमागत्य । नि सी (षी)दत ॥ कुतः ? नु, इदानीम् । नः, अस्माकम् । दाता, अभीष्टस्य दाता । सविता । स्तोम्यः, स्तोतव्यः ॥ (यः) सविता । राधांसि, सिद्धीः । शुम्भति, अञ्जसा शोभयति, 'शुभ, शुम्भ शोभार्थे' इत्युक्तेः ॥ ८ ॥

यथा प्रतीता अत्र देवता ज्ञेयाः । (तत्र) (नवम्यां दशम्यां चाग्निर्देवता ।) (हे) अग्ने । उशतीः, यज्ञागमनं कामयमानाः । देवानाम् पत्नीः, देवानां पातृत्वात् 'पत्नी' इत्युक्ता हरेः स्त्रीतनूः, 'पत्युर्नो यज्ञसंयोगे' इति तु नाश्रितम्, देवपत्नीश्च । प्रागुक्तनिरुक्त्या त्वष्टारम्, हरिं प्रसिद्धत्वष्टारं च । सोमपीतये । इह उप आ वह, यज्ञे संनिहितान्कुर्वित्यर्थः ॥ ९ ॥

(हे) यविष्ठ, युवन् । अग्ने । ग्नाः, 'अभि यज्ञं गृणीहि' इत्यत्रोक्तनिरुक्त्या भवदीयस्त्रीतनूर्नदीश्च । होत्राम्, आहूयमानत्वादाह्वानमन्त्राभिमानित्वाद्वा 'होत्रा' इत्युक्ताम्, 'ह्वेञ्-शब्दे' इत्यतः कर्मणि करणे च त्रपत्ययः, सम्प्रसारणं च बहुलग्रहणात् । वरूत्रीम्, वरणीयत्वाज्जगतस्त्राणाच्च 'वरूत्री' इत्युक्ताम्, वृणोतेः कर्मण्यूकारस्त्रायतेः टप्रत्ययष्टित्वान्ङीप् च, वरूश्चासौ त्री च वरूत्री, ताम् । धिषणाम्, बुद्धिस्वरूपिणीम्, सर्वबुद्धिप्रेरिकां सर्वबुध्यभिमानिनीं च । भारतीम्, भरतस्य वायोः स्वामित्वसम्बन्धात्स्त्रीत्वसम्बन्धाद्वा भारतीं विष्णोः स्त्रीतनुं भारतीदेवीं च । 'धिषणाम्' इत्यस्योक्तनिमित्ताभ्यां 'श्रीदेवीम्' इति वार्थः । अवसे, अस्मद्रक्षणाय । इह, यज्ञे । आ वह । भरेण भारेण तत्वात्ततत्वात्, अतिगुरुत्वादिति यावत्, भरतो वायुर्ज्ञेयः, तनोतेः कर्मणि डः ॥ १० ॥ इति पञ्चमो वर्गः ॥ ५ ॥

## रूपावतारः

अपां नपातम् । ननु यदि पार्थिवे देहे व्यक्तस्तर्हि अपां न पुत्रः स्यात् कथं नप्तेत्यत आह । तदात्मकत्वादिति । इतः परं टीकायां श्रूयमाणं देहोऽपि तत्र चेति प्रक्षिप्तम् । देहस्येत्युच्छिन्नम् । ततश्चैवं योजना । देहस्य पृथिव्यात्मकत्वात् पार्थिवदेहे अभिव्यक्तः जनार्दनः पृथिवीपुत्र इति अपां नपादित्यर्थ इति । अवश्यं चैतदेवं विज्ञेयम् । देहोऽपीति पाठे देहोप्यपां पुत्र इत्यर्थप्रसङ्गेन अपां पुत्रे पार्थिवे देहे व्यक्तो जनार्दनः अपां नपादित्यर्थ इत्येव वक्तव्यत्वेन तत्र च पार्थिवदेहे व्यक्तत्वाज्जनार्दनः पृथिवीपुत्र इत्येवमपां नपादित्युक्त्ययोगात् ॥ ६ ॥

विभक्तारम् । वसुशब्दस्य नपुंसकलिङ्गत्वात् श्रुतौ पुल्लिङ्गत्वप्रयोगः छान्दस इत्यभिप्रेत्याह । वसोः वसुन इति ॥ ७ ॥

(रूपावतारः)

सखायः । शुम्भन्तीति । शुभशुम्भ शोभार्थ इति उक्तस्य तौतादिकस्य शुम्भधातोः शप्रत्यये 'अनिदितां हल उपधायाः क्ङिति' (६।४।२४) इति नलोपे 'शे तृम्फादीनामिति वक्तव्यम्' (वा.सू. ७।१।५९) इति नुमि तिपि शुम्भतीति रूपम् ॥ ८ ॥

अग्नेः पत्नीः । उशतीरिति । वश कान्तावित्यतः शतृप्रत्यये शपो लुकि ग्रहि ज्या...' (६-१-१६) इति सम्प्रसारणे 'उगितश्च' (४-१-६) इति ङीपि उशतीति रूपम् ॥ ९ ॥

आ ग्नाः । ग्नाशब्द इति । 'ज्ञातृनेतृत्वतौ हरिः' (भाष्य) इत्यनेन व्याख्यात इत्यर्थः । ननु यज्ञसंयोगाभावात् 'पत्युर्नो यज्ञसंयोगे' (४-१-३३) इति नान्तादेशोऽनुपपन्न इत्यत आह । यज्ञसंयोग इतीति । अत एव वृषलपत्नीत्यादि प्रयोगः । उभयत्रेति वायुपत्नीपरतया एकव्याख्यानं विष्णुपरतया चापरं व्याख्यानं इत्युभयत्रापि ह्वयतेः नप्रत्ययः । 'बहुलं छन्दसि' (६।१।६४) इति सम्प्रसारणम् । आद्यव्याख्याने करणे नः द्वितीयव्याख्याने कर्मणीति विवेकः ॥ १०, ५ ॥

## पदार्थप्रकाशिका

अपांनपातमवसे । तदात्मकत्वादिति । पृथिव्यात्मकत्वाद्देहोप्यपां पुत्र इत्यर्थः । ननु भगवतो देहे प्राप्तिः कुतः देहादुत्पत्तिरेव किं न स्यादित्याशंकापरिहारायोक्तस्य स इत्यस्यार्थमाह । सोजत्वेन प्रसिद्ध इति । अनादित्वेन प्रसिद्ध इत्यर्थः । तथा च भगवान्नोत्पत्तिमान् अनादिरिति यावत् । अजत्वेन प्रसिद्धत्वादित्यनुमानमिह द्रष्टव्यम् । अत्राप्रयोजकतापरिहाराय भाष्ये जनार्दन इत्युक्तमित्याशयेनाह । अत एव हीति । अजत्वेन प्रसिद्धत्वादेव हीत्यर्थः । धूमत्वादेवधूमवानिमितिवदजत्वेन प्रसिद्धत्वादेव हि भगवान् जननमर्दयतीति व्युत्पत्या जनार्दन उक्तः अन्यथा तन्न स्यात् । तथाच भगवानजत्वेन प्रसिद्धो भवितुमर्हति जनार्दनत्वादित्युक्तं भवति । न हि परेषां जनार्दनकस्य जनिप्रसिद्धिर्युक्तेति भावः । प्रसिद्धे सवितरि अपांनपाच्छब्दं योजयति । एवमिति । अवस इति अव इत्यस्मात्तुमर्थे सेप्रत्ययो द्रष्टव्यः । कुत इति । भगवद्रक्षणार्थं मया स्तोत्रं कुतः कर्तव्यमित्यर्थः । कामयामह इति । स्तुत्यत्वेनेति शेषः । अस्माभिर्भगवत्कर्मणां स्तुतिस्तावत् कर्तव्यास्ति । तत्र प्राप्तविघ्नपरिहारायास्मदर्थे स्तुतिप्रसन्नेन भगवता रक्षिता वयं तदीयानि कर्माणि स्तुम इत्याशयः ॥ ६ ॥

विभक्तारं हवामहे । कर्मणा यमभिप्रैति स सम्प्रदानम् । सम्प्रदाने चतुर्थीति दानकर्मणः सम्प्रदानत्वविधानात्तत्र चतुर्थ्याः स्मरणादाह । तस्मै तावतो दातारमिति । तावतो वसुनः । न तु

(पदार्थप्रकाशिका)

जीवस्य साक्षिसिद्धत्वात् तद्दृष्टत्वं जीवेऽप्यस्ति। अतो न भगवत एवायं विशेष इत्यत आह। अशेषेति। दर्शकमित्यत्र दृशिर्प्रेक्षण इति धातोः कर्तरि अक्प्रत्यये ककारस्येत्संज्ञाभावेन गुणनिषेधाप्रवृत्या सार्वधातुकयोरिति गुणे तस्य च रपरत्वे दर्शकेति भवतीति द्रष्टव्यम्। तमेवकर्त्रर्थं दर्शयति। साक्षिणमिति। साक्षाद् द्रष्टारमित्यर्थः। साक्षाद्द्रष्टरि संज्ञायामिति स्मरणादिति भावः ॥ ७ ॥

सखाय आनिषीदत। आइत्युपसर्गस्य निषीदतेत्यत्र सम्बन्धमकृत्वा अर्थातिशयलाभाय केवलस्यैव तस्य सकारकक्रियावचनत्वमभिप्रेत्याह। आ अस्मत्समीपमागत्येति। किमितीति। आगत्योपवेशनं किमर्थमित्यर्थः। सोमशब्दादर्हे कृत्यतृचश्चेत्यर्हार्थे यत्प्रत्यये यस्येति चेति तद्धिते परे भस्य मकारस्थस्याकारलोपे स्तोम्येति रूपमित्यभिप्रेत्याह। स्तोम्य स्तोमार्हेति। शोभयतीति। शुभशुम्भशोभनार्थे। सचान्तर्णीतणिजर्थ इति द्रष्टव्यम्। तथाच हरिशोभितमदीयसिद्धिसंदर्शनायागत्य निषीदतेत्याशयः। एवं व्याख्याने कोऽतिशयो लब्ध इत्याह। सेश्वरा हीति। यद्यैश्वर्यादिरूपाः सिद्धयो भगवद्दत्ताः न स्युः स्वसामर्थ्येनैव सम्पादिताः स्युरिति यावत्। तर्हि फलसाधकत्वरूपशोभावत्यो न स्युः। कुत इत्यत उक्तं सेश्वरा हीति। लोके मन्त्रादिकं गुरुदत्तं चेत् फलसाधकत्वरूपशोभावद्भवति। नो चेत् नेति प्रसिद्धमित्यर्थः। तथाच भगवद्दत्तत्वेनातिशोभावन्मदीयसंसिद्धिदर्शनायागत्य निषीदतेत्याशयः ॥ ८ ॥

अग्नेपत्नीरिहावह। केचित्तु यास्काद्याः अनुपपन्नमिवेति। अप्राधान्येन प्रतिपाद्यतायाः अस्माभिरङ्गीकारात् प्राधान्येन प्रतिपाद्यस्यैव तैरुच्यमानत्वात्तदेवात्र निराक्रियत इत्याशयेनैवशब्द इति ज्ञातव्यम्। अग्नेरत्रेति। हे अग्ने त्वं गत्वा पत्नीरावहेति वरु धिषणां वहेतिच। येन प्रेषणविषयकर्मतायाः अवगमादित्यर्थः। आह्वानद्वारत्वं प्रेषणत्वमवधेयम्। तथाचाग्निरत्र देवता न भवति। देवतात्वेनैतदृग्द्वयप्रतिपाद्यो न भवतीति यावत्। प्रेरणविषयत्वात् यः प्रेषणविषयः स न देवता। यथा होत्रादिरित्यनुमानं द्रष्टव्यम्। ननु प्रेषणविषयत्वेनैव हेतुना देवतात्वमपि मया साध्यत इति सत्प्रतिपक्षतेत्यत आह। तस्य चेति। प्रेषणविषयत्वस्य प्रातर्युजा विप्रा हवन्त ऊतय इत्यादौ ऋत्विजामपि सत्वेन तेषां देवतात्वाभावात् व्यभिचार इत्यर्थः। उक्तानुमाने अप्रयोजकतां परिहरति। अन्यथेति। प्रेषणविषयत्वस्यापि देवतात्वे ऋत्विजामपि देवतात्वं स्यादिति प्रसङ्गादित्यर्थ इत्याहुः। वस्तुतस्तु अनेकान्तिकेनापि हेतुना साध्यं साध्यते चेत् को दोष इत्यत आह। अन्यथाऽतिप्रसङ्ग इति। अनैकान्तिकेनापि हेतुना साध्यसाधने वह्निना धूमानुमानमपि स्यादित्याद्यतिप्रसङ्ग इति

(पदार्थप्रकाशिका)

सम्प्रदायविदः । आवोढुरिति । आनयतुरित्यर्थः । आह्वानद्वारभूतस्य प्रेषणगोचरस्येति यावत् । प्राधान्यं देवतात्वेन प्रतिपाद्यत्वम् ।

नन्वग्निं दूतमित्यादौ आह्वानकर्तृत्वाख्यप्रेषणत्वरूपदूतत्वेन प्रतिपाद्यस्याप्यग्नेः देवतात्वदर्शनात् व्यभिचारः स्यात् । यदि तथाभूतस्याप्यग्नेः तत्र देवतात्वमभिप्रेतं तर्हीहापि किं न स्यादित्यत आह । विशेषप्रमाणे सतीति । तथाच विशेषप्रमाणाभावे सति प्रेषणगोचरत्वमेवेह देवतात्वाभावसाधकत्वेनाभिप्रेतम् । अग्निंदूतमित्यादौ तु प्रेषणविषयस्यापि अग्नेः देवतात्वसाधकम् ऋक्संहितादिरूपविशेषप्रमाणमस्ति । अतः तत्र विशिष्टहेतोरभावान्न व्यभिचारः । प्रकृतेऽपि ऋगृद्वये तद्वदेव प्रेषणविषयस्यापि अग्नेः देवतात्वसाधकं किंचित्प्रमाणं स्यात्तर्हि आग्नेयत्वमग्निदेवताकत्वं न निवार्यते इति भावः । ननु विशेषप्रमाणभावदशायां यद्यग्निर्देवता तर्हि अदेवताकमिदम् ऋगृद्वयमापन्नमित्यत आह । अत इति । यथा प्रतीताः देवपत्नीत्वष्टाभारत्यःइत्यर्थः । देवीनामेकेन्द्राणीवरुणानीनां द्यावापृथिव्यौ पार्थिलीत्यनुक्रमणिकानुसारेणाभिन्न इत्यादौ देवता द्रष्टव्याः । आह्वानं कृतं चेत् देवपत्न्याद्याः आयास्यन्ति न वेति सन्देहस्तव मास्तु इत्याशयेनाह । उशतीरिति । तथाचाह्वनमेवापेक्षन्त इत्याशयः ॥ ९ ॥

अग्नाअग्न इहावसे । हे यविष्ठ युवन्निति । ननु निनो होता वरेण्यः नौ सदा यविष्ठमन्मभिरित्यत्र बृहद्भानोयविष्ठेत्यत्र च भाष्ये अवमौ दश देवेष्विति । तथा ब्रह्माद्यपेक्षया नित्यं यविष्ठतममेव यदितिच यविष्ठशब्दो अवमार्थतया व्याख्यातोऽत्र युवन्निति कस्माद्व्याख्यातमपदार्थत्वादिति चेदुच्यते । स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । एतेषां शब्दानां यणादेः परं लुप्यते पूर्वस्य च गुणो भवति इष्टादिषु परत इति सूत्रार्थः । एवं चात्र युवन्शब्दात् अतिशायनेतमबिष्टनाविति इष्टन् प्रत्यये नकारलोपे उदाहृतसूत्रेण इष्टन् प्रत्यये परे यणो यकारात्परस्य वन इत्यस्य लोपे उकारस्यौकाररूपे गुणे तस्य चावादेशे च सति यविष्ठशब्दो युववाचक एवेत्यभिप्रेत्य टीकाकारैः शिष्यशिक्षणाय वैय्याकरणरीत्या पक्षान्तरमुक्तम् । अतो युवन्नित्यस्य हे अतिशयेन यौवनावस्थावन्नित्यर्थो द्रष्टव्य सति सम्प्रदायविदः ।

ननु भारत्याः कथमाहुतिरूपत्वमित्यत । आह । आह्वानेति । आहूयते । एभिरिति मन्त्राणां होतृवाच्यत्वेन तदभिमानित्वाद्भारत्या अपि तच्छब्दवाच्यत्वमित्यर्थः । हुदानेति । धातूनामनेकार्थत्वाज्जुहोतिरत्राऽह्वानार्थक इति द्रष्टव्यम् । करणे त्रप्रत्यय इति । हुधातोः करणे त्रप्रत्यये गुणे होत्रेति प्रातिपदिकं पश्चात् स्वाद्युत्पत्तौ होत्रामिति भवति । तथाच जुहोत्यनयेति होत्रेति

(पदार्थप्रकाशिका)

व्युत्पत्तिः । भाष्ये न्यूनं पूरयति । त्राणाच्चेति । कर्मण्युकार इति । वृञ् वरणे अस्मात् कर्मणि उकारे गुणे रपरत्वे वरुइति भवति । त्रायतेः कर्तरि ट इति । त्रै पालने अस्मात् टप्रत्यये आदेच उपदेशेशितीत्यनेन ऐकारस्यात्वे चुटू इत्यनेन टकारलोपे यस्येति चेति तद्धिते परे भस्य धात्वाकारलोपे प्रत्ययाकारसम्बन्धे च सति त्रेति जाते पश्चात् टिड्ढाणञ् इत्यादिसूत्रेण टित्वात् स्त्रीत्वविवक्षायां ङीपि ङकारपकारयोर्लोपे त्रीतिरूपम् । तत इति । त्रायत इति । त्रायत इति त्री वरुचासौ त्रीचेतिवरुत्रीति कर्मधारय इत्यर्थः । पूर्वं निरुक्त इति । ग्रावोनेष्ट इत्यत्र ज्ञातृनेतृत्वतो हरिः। गमनान्नयनाद्वा ग्रा इति निरुक्त इत्यर्थः ।

ननु भगवतो न पत्नीशब्दवाच्यत्वं युक्तम् । तथाहि । पत्युर्नोयज्ञसंयोगे दीक्षाविशेष-सम्प्राप्तयाजमान्योपेतस्य यजमानस्य स्त्रीत्वं यज्ञसंयोगः । तस्मिन् विवक्षिते सति पत्युः पतिशब्दस्य नकारान्तादेशः स्यादिति विधानात् पतिशब्दस्य यज्ञसंयोगविवक्षायां नकारान्तादेशे इकारलोपे पत्नेतिजाते ऋन्नेभ्योङीबिति ङीपि यस्येति चेति नकारस्याकारलोपे पत्नीति भवति । एवं च निरुक्तयज्ञसंयोगरूपोपाधेः भगवत्ययोगादिति भावप्रसङ्ग इति भावः । एवं च पत्युर्न इत्येतावदेवात्राश्रितम् । अतोत्र पालनकर्तृत्वार्थकपतिशब्दस्य नकारान्तादेशे पूर्ववदेव पत्नीति स्त्रीरूपो भगवानुच्यत इत्यवधेयम् । एवमेव स्त्रीरूपाभिप्रायेणैव भारतीत्यादिस्त्रीलिङ्गो द्रष्टव्यः । तनोतेर्ड इति । तनु विस्तारे अस्मात् डप्रत्यये डित्वात् टिलोपे तेतिरूपम् । ननु भारेणततत्वं पर्वतादि साधारणमत आह । निरवधिकेति । अस्मादतजिति । भृञ्धातोरतच् प्रत्यये चकारलोपे गुणे तस्य रपरत्वे भरतेति भवति । स्वामिनीति षष्ठ्यर्थसम्बन्धोक्तिः । तथाच भरतशब्दात्तस्येदमित्यर्थेऽणि णित्वादादिवृद्धौ भारतेति जाते यस्येतिचेति तकारस्थाकारलोपे स्त्रीत्वविवक्षायां टिड्ढाण इत्यादिना ङीपि भारतीति रूपं द्रष्टव्यम् । अभिमानित्वाभावादिति । 'तत्तद्व्रतानां दुःखानां भोगोऽभिमतिरुच्यते । तदभावान्नाभिमानीभगवान् पुरुषोत्तम' इत्युक्तत्वेन विष्णोराह्वान-मन्त्राभिमानित्वा भावादिति भावः । यद्वा परप्रदत्तपराधिष्ठातृत्वरूपाभिमानित्वाभावादित्यर्थः । अस्मिन् पक्षे विष्णोर्होत्रादि शब्दवाच्यत्वपक्षे । कर्मणीति । हुदानादानयोरिति धातोरित्यर्थः । धातूनामनेकार्थत्वात् जुहोतिराह्वानेपि वर्तते । एवं च आहूयत इति होत्रेत्यर्थः । रूपनिष्पत्तिः पूर्ववदेव द्रष्टव्या । ह्वयतेर्वेति । ह्वेस्पर्धायां शब्दे चेति धातोरित्यर्थः । हुदानादानयोरिति धातुर्न विवक्षित इति भावः । शब्दोत्राह्वानम् । उभयत्रेति । भारतीविष्णोरुभयोरपि होत्राशब्दवाच्यत्वपक्ष इत्यर्थः । त्रप्रत्यय इति । भारतीपक्षे करणे विष्णुपक्षे कर्मणीत्यर्थः । एवं च ह्वयतेः करणे कर्मणि वा त्रप्रत्यये वकारस्य उठि तस्य गुणे होत्रेति जाते स्त्रीत्वविवक्षायां टापि होत्रा इति जाते पश्चात्

(पदार्थप्रकाशिका)

स्वाद्युत्पत्तौ होत्रामिति भवतीति भावः। विष्णुपक्षे धिषणशब्दस्य भाष्ये अव्याख्यातत्वादाह। एवमिति। श्रीर्वेतीति बुध्यभिमानित्वादेव श्रीर्वा धिषणशब्दवाच्येत्यर्थः ॥ १०,५ ॥

## पदार्थदीपिका

पौत्रपर्याय इति। पौतृवाचकनप्तृशब्दपर्याय इत्यर्थः। अव्युत्पन्नं प्रातिपदिकं नप्तृशब्द इत्यस्मिन्पक्षे नपाच्छब्दोऽप्यव्युत्पन्नप्रातिपदिकमेव। 'नप्तृनेष्टृत्वष्टृ' इत्यादिना व्युत्पत्त्यङ्गीकारे 'नभ्राण्नन्न-पादित्या'दिना नपाच्छब्दस्यापि व्युत्पत्तिरङ्गीक्रियते। नप्तृशब्दो हि नञ्पूर्वात् पत्लृगतावित्यस्मात् अन्तर्भावितण्यर्थात् तृचि टिलोपनलोपाभावयोः नप्तृनेष्ट्रि'त्यादिना निपातनात् सिद्धः। 'नपात्' शब्दोऽपि ण्यन्तात्तस्मादेव क्विपि नभ्राण्नपादित्यादिना नलोपाभावनिपातनात् सिध्यति। न पातयति कुलमुद्धरतीति नपात्। नप्ता च पौत्रः पुत्रीपुत्रयोः सुतः। तदेतदभिप्रेत्य भाष्ये अपां नप्तेत्युक्तमिति भावः। तज्जातत्वादिति वक्तव्ये व्यक्तत्वादिति किमर्थमुच्यत इत्यतो भाष्ये स इत्युक्तमित्याह। सोऽजत्वेनेति। तत्र हेतुः जनार्दन इत्यनेनोच्यत इत्याह। अत एव हीति। अजत्वादेवेत्यर्थः। न जायत इति जनः। अर्दयतीत्यर्दनः। जनश्चासावर्दनश्चेति हि जनार्दनशब्दार्थः। अवसे रक्षार्थमिति। अव इत्यस्मात्तुमर्थे 'सेसेन्' इत्यादिनाऽसेन् इत्यर्थः। उश्मसीति। वश कांतौ। अदि प्रभृतिभ्यः शपः इति शपो लुक्। मसेर्ङित्वात् 'ग्रहिज्ये'ति सम्प्रसारणम्। 'इदन्तो मसि' इति मसिः इदन्तो यजन इति भावः ॥ ६ ॥

नृणां जीवानां द्रष्टारमिति। श्रुतौ चष्टे इति चक्षाः। चक्षेर्बहुलं शिच्च इति कर्तरि असुन्। शित्वादनार्धधातुकत्वात्। चक्षिङः ख्याञ्' इति ख्याञादेशाभावः। नृणां चक्षाः नृचक्षाः इति व्युत्पत्तिरिति भावः ॥ ७ ॥

अस्मत्समीपमागत्येति। अर्थविशेषलाभाय क्रियाध्याहारः। निषीदतेति। सदिरप्रतेरिति षत्वमिति भावः। अभिलषितस्येति। द्वितीयार्थे षष्ठी। तथा च दातेत्यस्य तृनन्तत्वं आद्युदात्तत्वं च नानुपपन्नमित्यवधेयम्। यद्वा दातेत्येतत्तृजन्तमेव। तथा च अभिलषितस्येति यथाश्रुतैव षष्ठी। न च तृनन्तत्वे ञ्नित्यादिर्नित्यं इत्याद्युदात्तत्वेऽपि तृजन्तत्वेन तदनुपपत्तिरिति वाच्यम्। व्यत्ययो बहुलमिति वचनादाद्युदात्तत्वमित्यभिप्रायात्। यद्यपि वेदापव्याख्यानोक्तरीत्या राधांसि दाता इत्यन्वयेन न काचित्कुसृष्टिः। कर्तृकर्मणोः कृतीति प्राप्तायाः षष्ठ्याः नलोकाव्ययेति निषेधात्। तथापि शुम्भतीत्यस्य अन्तर्णीतण्यर्थत्वाङ्गीकारे अर्थविशेषलाभात्। तत्र कर्मत्वेनान्वितस्य दातेत्यत्रान्व-यायोगादध्याहारः। अत एव वक्ष्यति। सेश्वरा हीत्यादि इति ज्ञेयम्। स्तोमार्ह इति। स्तोमेषु

(पदार्थदीपिका)

विषयतया अर्हत्वेन भव इत्यर्थे भवेच्छन्दसीति यत्प्रत्यय इति भावः । शुम्भतीति । 'शुभशुम्भशोभार्थः' इति धातोः तौदादिकत्वेन शस्य ङित्वात् अनिदितां हल उपधाया क्ङिति इति नलोपे शेमुचादीनामुपसंख्यानमिति नुमागम इति ज्ञेयम् ।। ८ ।।

अग्नेः प्राधान्येन प्रतिपाद्यत्वमेव निराक्रियते। अप्राधान्येन तु तदस्तीत्याशयेन इव इत्युक्तम्। अग्निदेवताकत्वे अनुक्रमणिकाकारस्य अभिप्रेतां युक्तिं अनूद्य दूषयति। अग्नेरिति। अग्ने देवाँ इहावह इत्यादिवत् अस्यां ऋचि अग्नेः प्रेषगोचरत्वात् खलु देवतात्वं वाच्यम्। तन्नोपपद्यते। प्रेषगोचरत्वस्य 'इमा धाना घृतस्नुव इत्यादौ हर्यादावनैकान्तिकत्वादित्यर्थः । आवोढृत्वं न देवतात्वसाधक-मित्युपसंहरति। तस्मादिति। अत एवाह। विशेषेति। अग्नेरेवेत्येवकारतात्पर्यं विवृणोति। अतो यथाप्रतीता इति । इतःपरमित्यनेन इतःपूर्वमस्मिन् सूक्ते अनुक्रमणिकोक्ता देवता अङ्गीकृतेति सूचितम्। उशतीः कामयमाना इति वशकान्तावित्यस्मात् लटः शतर्यदिप्रभृतिभ्यः शपः इति शपो लुकि शतुर्ङित्वात् 'ग्रहिज्या' इत्यादिना सम्प्रसारणे उगितश्चेत्यनेन ङीबिति भावः ।। पत्नीरिति ।। पत्युर्नो यज्ञसंयोग इति ङीप्। एतत्सन्नियोगेन नकारश्चेति ध्येयम् ।। ९ ।।

युवन्निति। युवतमेत्यर्थः। अतिशयेन युवा यविष्ठः। अतिशायने तमबिष्ठनौ इतीष्ठन् प्रत्ययः। 'स्थूलदूरयुव' इत्यादिना यणादिपरस्य लोपः। पूर्वस्य च गुण इति भावः। ह्वयतेः करणे क्तिनि संप्रसारणे हल इति दीर्घत्वे च निष्पन्न आहुतिरूपत इति भाष्यपदं विवृणोति। आह्वानमन्त्रेति। विवृतेन च भाष्यपदेन संवादयितुं श्रौतपदं व्युत्पादयति। हुदानेति। 'हुयामाश्रुभिभ्यस्त्रन्' इति सूत्रे जुहोतिरेव गृह्यते। स च 'अनेकार्थत्वाद्धातूनां शब्दार्थक' इति भावः। करणे त्र इति। जुहोत्यनया इति होत्रा। तामित्यर्थः। कर्तरि क इति टिच्चेति शेषः। कित्वात् आतो लोप इटि च इत्याकारलोपः। टित्वात् ङीबिति भावः। पूर्वमन्त्रे देवानां पत्नीरित्यस्य अव्युत्पादितत्वात् विष्णौ तद्व्युत्पत्तिरपि अत्र चशब्देन सूचितेत्याह। द्वितीयेनेति। पालकत्वादिति। 'पातेर्डति'रिति डत्यन्तस्य पतिशब्दस्य नकारान्तादेशः । नांतत्वात् ङीबिति भावः । ननु पत्योर्नो यज्ञसंयोग' इति पतिशब्दार्थस्य यज्ञशब्दार्थेन संयोगे हि सति नकारान्तादेशो विहितो नत्वत्र विवक्षितः तत्कथं नांतादेशङीप्प्रत्ययौ इत्यतः वृषलपत्नीत्यादिप्रयोगदर्शनात् यज्ञसंयोगः प्रायिको विवक्षितः सूत्रकृता अतोऽत्र तदनाश्रयणान्नानुपपत्तिरित्याह। यज्ञसंयोग इति। ततत्वादिति। अर्थकथनमेतत्। व्युत्पत्तिस्तु तन्यत इत्येव द्रष्टव्या । ड इति । डित्वाट्टिलोपः इति भावः । अतजिति । 'भृमृदृशीयजि' इत्यादिना सूत्रेणेति शेषः । त्रप्रत्यय इति । जुहोतेरिति शेषः । धातूनामनेकार्थत्वादिति भावः ।

(पदार्थदीपिका)

माभूदनेकार्थत्वाश्रयणमिति भावेन पक्षान्तरमाह । ह्वयतेर्वेति । उभयत्रेति । प्रसिद्धभारत्यर्थत्वे विष्ण्वर्थत्वे च करणे कर्मणि चेत्यर्थः । हुयामेत्यादिसूत्रे कृतसंप्रसारणो ह्वयतिरपि हुशब्देन गृह्यते इति भावः । भिन्नविषयतामिति । अयं मन्त्रो 'अग्नाभारतीधिषणे'ति त्रितयदेवताकश्चेति व्यवस्थितविकल्पार्थको वाशब्द इति भावः ॥ १०,५ ॥

## टीकाविवृतिः

अपां नपातम् ॥ प्रौत्रपर्याय इति ॥ पुत्रदुहित्रोरपत्यं नप्ता तत्पर्याय इत्यर्थः । न पातयति स्वकुलं किंतूद्धरतीति यावत् । नञ्पूर्वात्पततेर्ण्यन्तात्क्विपि नभ्राण्नपादितिनञःप्रकृतिभावे नपादिति रूपमिति भावः ॥ देहोपीति ॥ अपां पुत्र इत्यर्थः । देहे उत्पन्नत्वादिति वक्तव्ये व्यक्तत्वादिति कथमुक्तमित्याशंकानिरासकत्वेन स इति भाष्यं व्याचष्टे ॥ सोऽजत्वेन प्रसिद्ध इति ॥ तत्र ज्ञापकमाह ॥ अत एवेति ॥ जनं जननमर्दयति स्वस्मिन् तदभावं करोतीति जनार्दन इति व्युत्पत्तेरिति भावः ॥ अपांकार्येऽण्ड इति ॥ अण्डस्य चतुर्विंशतितत्वकार्यत्वादब्रूपविष्णुरेतो-जातत्वाद्वेति भावः ॥ ६ ॥

विभक्तारम् ॥ चित्रशब्दस्याद्भुतार्थत्वादुत्तमत्वं तात्पर्यार्थ इति भावेनाह ॥ उत्तमेति ॥ वसुन इति ॥ ज्ञानधनस्य प्रसिद्धधनस्य चेत्यर्थः । श्रुतौनुमागमाभाव आगमशासनस्यानित्यत्वादिति भावः । भाष्योक्तं तात्पर्यकथनपरमिति भावेन पदार्थमाह ॥ नृणामिति ॥ चष्टे इति चक्षाः चक्षेर्बहुलं शिच्चेति कर्तर्यसुनःशित्वात्सार्वधातुकत्वात्ख्याञादेशो नेति भावः ॥ ७ ॥

सखाय आ ॥ आङःक्रियायोगोक्तेरश्रुतक्रियासंबन्धमाह ॥ आगत्येति ॥ अस्मत्समीपमिति योग्यतया संबध्यते इति भावः । श्रुतौ राधांसीत्यस्यावृत्त्या एकस्य दातेति तृन्नन्तेनान्वय इति भावेन तस्य तात्पर्यमाह ॥ अभिलषितस्येति ॥ द्वितीयस्य शुंभतीत्यनेनान्वय इति भावः । टीकायां दातेति तृजंतपदस्य श्रौततृन्नंतप्रतिपदरूपत्वात्षष्ठ्युपपत्तिर्बोध्या । स्तोमे स्तुतौ भव इत्यर्थे भवेच्छन्दसीति यत्प्रत्यय इत्याशयेन तात्पर्यमाह ॥ स्तोम्यःस्तोमार्ह इति ॥ शुंभतीत्यस्य हरिमाहात्म्यविशेषप्रतिपादनायान्तर्णीतण्यर्थत्वाश्रयेणाह ॥ शोभयतीति ॥ शुभशुंभशोभार्थे इति तौदादिकस्य शे परे तस्य ङित्वादनिदितामिति नलोपे शेतृंफादीनामुपसङ्ख्यानमिति नुमि शुंभतीति रूपमिति भावः । हरेः सिद्धिशोभकत्वमुपपादयति ॥ सेश्वरा इति ॥ अधिपतिरहितानां सिद्धीनामुपयोगाभावेन शोभाभावादिति भावः । तथाच यस्माद्धरिःसिद्धीनां शोभको भक्ताभिलषितदातेति कृत्वा स्तोतव्यः तस्मात्तत्स्तुतये यजमानसमीपे आगत्योपविशतेति ऋगाशयः ॥ ८ ॥

(टीकाविवृतिः)

अग्ने पत्नीः ॥ अनुक्रमणिकां दूषयति ॥ आग्नेय्याविति ॥ अग्निशब्दाद्देवतार्थे अग्नेर्ढगिति ढकि टिड्ढाणिति ङीबिति भावः । अग्निश्रुतेःसत्त्वात्कथं तत्प्रतिपादकत्वाभाव इत्यत आह ॥ अग्नेरिति ॥ कार्यविशेषकरणार्थं प्रेरणं प्रैषः । प्रैषगोचरत्वमेव देवतात्वे लिगं किं न स्यादित्यत आह ॥ तस्य चेति ॥ सखायःआनिषीदतेत्यत्र ऋत्विजां प्रैषविषयत्वेपि देवतात्वाभावादिति भावः । तत्रापि ऋत्विजां देवतात्वाङ्गीकारे बाधकमाह ॥ अन्यथेति ॥ अग्नीदग्नीन्विहरेत्यादि मन्त्रे प्रैषगोचरस्याग्नीध्रस्य देवतात्वं स्यात् । न च केनचित्तदङ्गीक्रियते इति भावः । उपसंहरति ॥ तस्मादिति ॥ प्रैषगोचरत्वस्य लिङ्गत्वासंभवादावोढुःदेवपत्न्याद्यावहनकर्तुरग्नेरेवानयोः ऋचोः प्राधान्येन देवतात्वम् । आग्नेय्याविति विशिष्योक्त्या प्राप्तमनुपपन्नमित्यर्थः । अनेनात्राग्नेरपि देवतात्वं देवपत्नीनां त्वष्टुश्चेति सूचितम् । नन्वग्नेदेवाँ इहावहेत्यत्र प्रैषगोचरस्याप्यग्नेःकथं प्रधानदेवतात्वाङ्गीकार इत्यत आह ॥ विशेषेति ॥ तत्राग्निमाहात्म्यविशेषप्रतिपादकत्वादि रूप इत्यर्थः । अनुक्रमणिकोक्तत्यागे देवताःकथं ज्ञेया इत्यत आह ॥ अत इति ॥ अत इति ॥ अतो देवा इत्यतः प्रागिति शेषः ॥ उशतीरिति ॥ वशकान्तावित्यतःशतृप्रत्यये अदादित्वाच्छपो लुकि ग्रहिज्येति संप्रसारणे उगितश्चेति ङीबिति भावः ॥ ९ ॥

आग्नाः ॥ अस्यामृचि नद्योग्निर्भारती श्रीश्च देवता ज्ञेयाः । एवमुत्तरत्रापि ॥ यविष्ठयुवन्निति ॥ अतिशयेनेति शेषः । युवन् शब्दादतिशयार्थे इष्ठनि स्थूलदूरेति यणादिपरलोपे पूर्वस्य युशब्दस्य गुणे चावादेश इति भावः ॥ हुदानादनयोरिति ॥ धातूनामनेकार्थत्वमाश्रित्याह्वानमन्त्राभिमानित्वत इत्युक्तम् । अस्माद्धुयामाश्रुभसिभ्यस्त्रन्निति त्रन्प्रत्यये आहूयन्तेयैस्ते होत्रामन्त्रास्तद-भिमानित्वाद्भारती होत्रेत्यर्थः ॥ ऊकार इति ॥ कृषिचमीत्युक्त ऊप्रत्ययो बहुलोक्तेः वृञोपीति भावः ॥ कर्तरि ट इति ॥ किच्चेति शेषः । दंसेष्टटनावित्युक्तो बाहुलकत्वादस्मादपि । कित्वादातो लोपे टित्वान्ङीबिति भावः । विष्णुश्चेति पूर्वचशब्देन वायुपत्नी समुच्चयस्य सिद्धत्वात्सैव चोदितेति द्वितीय च शब्दसमुच्चेयं दर्शयति ॥ द्वितीयेनेति ॥ पातेर्डतिरिति डतिप्रत्यये पालकत्वेन योगेन पतिरित्ये वस्यात्पत्युर्नो यज्ञसंयोगे इत्युक्तनकारादेशःकथं विष्णोःपरपुरुषत्वेन वैवाहिकाग्निसंबन्धा-भावादित्यतआह ॥ नाश्रितमिति ॥ पत्युर्न इति योगविभागादिति भावः ॥ भरो भार इति ॥ गुणानामिति शेषः । तात्पर्यमाह ॥ निरवधिकेति ॥ अतिश्रेष्ठत्वादित्यर्थः ॥ भर्तृरूपत इति ॥ पोषकत्वस्वरूपत इत्यर्थः ॥ अतजिति ॥ भृमृदृशीति सूत्रेणेत्यर्थः ॥ कर्मणि त्रप्रत्यय इति ॥ जुहोतेरितिशेषः । जुहोतेःत्रप्रत्ययाङ्गीकारे धातोरनेकार्थत्वमाश्रयणीयमित्यरुचेराह ॥ ह्वयतेर्वेति ॥ वायुपत्न्यर्थत्वे विष्ण्वर्थत्वे च करणे कर्मणि चार्थे इत्युभयत्रेत्यर्थः । हुयामेति सूत्रे कृतसंप्रसारणह्वयतेर्ग्रहणात्त्रप्रत्ययो बहुलोक्तेर्वेति भावः ॥ १० ॥

ऋक्संहिता पदपाठसहिता (सू-२२, व-३)

(२१९) अभि नो देवीरवसा महः शर्मणा नृपत्नीः ॥ अच्छिन्नपत्राः सचन्ताम् ॥ ११ ॥

(प०) अभि । नः । देवीः । अवसा । महः । शर्मणा । नृऽपत्नीः ॥ अच्छिन्नऽपत्राः । सचन्ताम् ॥ ११ ॥

(२२०) इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये ॥ अग्नायीं सोमपीतये॥१२॥

(प०) इह । इन्द्राणीम् । उप । ह्वये । वरुणानीम् । स्वस्तये ॥ अग्नायीम् । सोमऽपीतये ॥ १२ ॥

(२२१) मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ॥ पिपृतां नो भरीमभिः ॥ १३ ॥

(प०) मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम्। पिपृताम् ॥ नः । भरीमऽभिः ॥ १३ ॥

(२२२) तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः ॥
गंधर्वस्य ध्रुवे पदे ॥ १४ ॥

(प०) तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः ॥ गंधर्वस्य । ध्रुवे । पदे ॥ १४ ॥

(२२३) स्योना पृथिवि भवानृक्षरा निवेशनी ॥
यच्छा नः शर्म सप्रथः ॥ १५, ६ ॥

(प०) स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी ॥ यच्छ । नः । शर्म । सऽप्रथः ॥ १५, ६ ॥

ऋग्भाष्यम्

शर्म दत्वैव महतो विष्णो रक्षंतु नोभितः । प्राणेनैवावसा साकं यस्मादविधवाः सदा । अतो ह्यच्छिन्नपत्रास्ताः सदायुक्कर्णभूषणाः ॥ ११,१२ ॥ भरणैर्नःपारयेतां दुःखेभ्यः

(ऋग्भाष्यम्)

श्रीश्च भूश्चते। स्वयं वा भगवानन्ये रोदसी लोकदेवते ॥ १३ ॥ तयोः पयस्तु विज्ञानं घृतवत्सापरोक्षकम्। यल्लोकदेवतापि स्याद्भारती ज्ञानदेवता। विष्णोर्नित्यपदस्थं यज्ज्ञानं यद्धृतवत्पयः। लिहंति विप्रास्तज्ज्ञानं बुद्धिभिस्तत्प्रसादतः। गांधारयन्वर्तते यद्गंधर्वस्तेन केशवः ॥ १४ ॥ स्योना सुखकरी स्यान्नो यतो नश्यसि नो नृवत्। निवेशनी-साऽधारत्वाच्छर्म यच्छ महत्तरम् ॥ १५, ६ ॥

## ऋग्भाष्यटीका

अभिनः। शर्म दत्वा। नृपत्नीः नरो देवाः प्रधानपुरुषत्वात्। तेषां पत्न्यः नृणां पालयित्र्यो वा। देवी देव्योऽवसा वनकर्त्रा प्राणेन साकमेव। महो महतः सर्वोत्तमस्य विष्णोः। शर्मणा तत्सम्बन्धिमोक्षादि रूपं शर्म दत्वैव। नोऽस्मानभि अभितः। सचन्तां रक्षन्तु। अच्छिन्नपत्रा इति देवीनां विशेषणं व्याख्याति। यस्मादिति॥ अवैधव्येन कथमच्छिन्नपत्रत्वं लभ्यत इत्यत आह। सदेति। पत्रशब्देन हि ताटंकमुच्यते। ततश्चाच्छिन्नपत्रा इति सदा कर्णभूषणयोगो लभ्यते । स चाविधवानामेव सम्भवतीत्यतो युक्तमुक्तमिति ॥ ११ ॥

इहेन्द्राणीम्। अहमिन्द्राणीमिन्द्रस्य पत्नीम्। वरुणानीं वरुणस्य पत्नीम्। अग्नायीमग्नेः पत्नीं च। सोमपीतये स्वस्तये सोमं पीत्वास्मभ्यं सन्ततसौख्यं दातुमिति यावत् इहोपह्वये ॥ १२ ॥

महीद्यौः । भरणैर्नः । मही महती द्यौः पृथिवी च नोऽस्मदीयमिमं यज्ञं मिमिक्षतां स्पृशताम् आगच्छताम्। आगत्यच भरीमभिः। भावे इमन्। भरणैर्नोऽस्मान्। पिपृताम् पारयेताम्। दुःखेभ्य इति शेषः। अत्र के द्यावापृथिव्यावित्यत आह॥ श्रीश्चेति। ते द्यावापृथिव्यौ। अन्ये श्रीभूमिभ्याम्। भगवतश्च लोकदेवते लोकाभिमानिन्यौ। रोदसी च द्यावापृथिव्यौ ॥ १३ ॥

तयोरित्। तयोः पय इत्येतद्व्याख्याति॥ तयोरिति॥ द्यावापृथिव्योः। पीयते मुमुक्षुभिः सेव्यत इति पयो विज्ञानम् घृतवदित्येतद्व्याख्याति॥ घृतवदिति॥ घृक्षरणदीप्त्योः भावेद्धचक्तः। घृतं दीप्तिरपरोक्षज्ञानम्। तेन सहितं घृतवदित्यर्थः। परोक्षापरोक्षज्ञाने कथं तयोः सम्बन्धिनी इत्यत आह ॥ यदिति ॥ यद्यस्माद्भारत्यपि लोकदेवता द्यावापृथिव्योर्देवता स्यात् सैव च ज्ञानदेवता स्यात् तस्मात्तयोरिति युक्तमिति। इदानीमृचं व्याचष्टे॥ विष्णोरिति॥ यत्पयो ज्ञानं गन्धर्वस्य विष्णोः ध्रुवे पदे नित्यपदस्थं नित्यस्वरूपविषयं यच्चोक्तप्रकारेण घृतवत् तज्ज्ञानं विप्रा मेधाविनो धीतिभिः बुद्धिभिः। वृत्त्यपेक्षं बहुवचनम्। रिहन्ति लिहन्ति सेवन्ते। प्राक्तयोरित्येतत्पयसो विशेषणत्वेन व्याख्यातं तयोः प्रसादतो रिहन्तीत्यपि व्याख्येयमित्याह॥ तत्प्रसादत इति। गन्धर्वशब्दं विष्णौ निर्वक्ति। गामिति। गोपदोपपदाभ्यां धृञ्अवस्थाने वृतुवर्तन इत्याभ्यां डः। उपपदस्य च गंभावः। गां वाचम् ॥ १४ ॥

(ऋग्भाष्यटीका)

स्योनापृथिवि । स्योना भवेत्यस्यार्थमाह ।। स्योनेति । स्योनाशब्दः सुखनामसु पठ्यते । स सुखमासनमितिवत्तत्कारिण्यपि वर्तते । अनृक्षरेत्यस्यार्थमाह ।। यत इति ।। ततोऽनृक्षरेति शेषः । नृवत्क्षरति मनुष्यवन्नश्यतीति नृक्षरा । न नृक्षरा अनृक्षरा । नश्यतीति वक्तव्ये नश्यसीतिवचनेन यात्वमनृक्षरेति योजनां सूचयति । निवेशनीति व्याख्याति । निवेशनीति । सा पृथिवी । निविशन्तेऽस्यामित्यधिकरणे ल्युट् । उत्तरार्धं व्याख्याति । शर्मेति । हे पृथिवि या त्वमनृक्षरा निवेशनी च सास्माकं स्योना भव । नोस्मभ्यं सप्रथः प्रथो विस्तारः सहप्रथसा वर्तत इति सप्रथः । महत्तरं शर्म गृहं च यच्छ प्रयच्छ ।।१५,६।।

## मन्त्रार्थमञ्जरी

(एकादश्या देव्यो देवताः) अच्छिन्नपत्राः, निरन्तरोपेतताटङ्काख्यकर्णाभरणाः, अवैधव्यहेतु-नित्यसौमङ्गल्योपेताः । नृपत्नीः, नृपत्न्यः, नरो देवाः प्रधानपुरुषत्वात्, तेषां पत्न्यः, नृणां पालयितृत्वात्स्त्रीत्वाद्वा विष्णोः स्त्रीतनवस्तद्भार्याश्च । देवीः, देव्यः । अवसा, रक्षणकर्त्रा प्राणेन साकम् । महः, महतः सर्वोत्तमस्य हरेः । शर्मणा, तत्सम्बन्धिमोक्षादि सुखं दत्त्वेति यावत् । नः, अस्मान् । अभि, अभितः । सचन्ताम्, रक्षन्तु, 'षच रक्षणे' ।। ११ ।।

(द्वादश्यामिन्द्राणीवरुणान्यग्नाय्यो देवताः) (अहम्) इन्द्राणीम्, इन्द्रपत्नीम् । वरुणानीम्, वरुणस्य पत्नीम् । अग्नायीम्, अग्नेः पत्नीम् (च) सोमपीतये, सोमपानाय । स्वस्तये, सोमं पीत्वास्मभ्यं संततं सौख्यं दातुमिति यावत् । इह उप ह्वये । ईश्वरपक्षे तु स्वामित्वेनेन्द्रादि-सम्बन्धिनीमिति वा पालकतयेन्द्रादिपत्नीत्वेन वेन्द्राण्यादिशब्दैरीश्वरस्त्रीतनवो ग्राह्याः ।। 'पुंयोगादाख्यायाम्' इति ङीषि 'इन्द्रवरुणभवशर्वरुद्र मृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इत्यानुगागमे 'इन्द्राणी' इत्यादिरूपम् । 'वृषाकप्यग्निकुसितकुसीदानामुदात्तः' इत्यग्निशब्दस्यै आदेशे 'अग्नायी' इति च ध्येयम् ।। १२ ।।

(त्रयोदशीचतुर्दश्योर्द्यावापृथिव्यौ देवते) मही, महती । द्यौः पृथिवी च, विष्णोः स्त्री रूपे वा, श्रीभूमी वा, द्युपृथिवीलोकाभिमानिन्यौ वा । नः, अस्मदीयम् । इमम् यज्ञम् । मिमिक्षताम्, स्पृशताम्, आगच्छताम् । आगत्य च भरीमभिः, भृञः भाव इमनिच्प्रत्ययो गुणश्च, भरणैः । नः, अस्मान् । पिपृताम्, पारयेताम् (दुःखेभ्यः) इति शेषः, 'पृ पालनपूरणयोः', लोट्, अन्तर्णीतणिच् ।। १३ ।।

तयोः, द्यावापृथिव्योः सम्बन्धि, यत् । पीयत मुमुक्षुभिः सेव्यत इति पयः, ज्ञानम् । गन्धर्वस्य, विष्णोः । ध्रुवे पदे, विषयसप्तमी, नित्यस्वरपविषयम् । घृतवत्, 'घृ क्षरणदीप्त्योः' भावेक्तः, घृतं

(मन्त्रार्थमञ्जरी)

दीप्तिरपरोक्षज्ञानम्, तदस्यास्तीति घृतवदपरोक्षज्ञानसहितम्, तज्ज्ञानम्। विप्राः, मेधाविनः। धीतिभिः, बुद्धिभिः, वृत्त्यपेक्षं बहुवचनम्। 'तयोः' इत्येतदत्राप्यन्वेति (तयोः) तयोः प्रसादेन। रिहन्ति इत्, (रलयोरभेदात्) लिहन्ति, सेवन्ते, 'लिह् आस्वादने' अत्र गां वाचं धारयन्वर्तत इति व्युत्पत्त्या गंधर्वो विष्णुर्ज्ञेयः, गोशब्दोपपदाभ्यां 'धृङ् अवस्थाने' 'वृतु वर्तने' इत्याभ्यां डः, उपपदस्य गंभावः। ज्ञानस्य द्यावाभूमिसम्बन्धित्वं च– तदभिमानिभारतीदेव्यभिमन्यमानत्वादिति ज्ञेयम्। 'पा पाने' इत्यतोऽयसुक्प्रत्यय आकारलोपे च 'पयस्' इति रूपम्॥ १४॥

(पञ्चदश्याः पृथिवी देवता) (हे) पृथिवि (या त्वाम्) अनृक्षरा, नृवन्मनुष्यवत्क्षरति नश्यतीति नृक्षरा, क्षरतेः अकारप्रत्ययः, न नृक्षरानृक्षरा। निवेशनी, निविशन्तेऽस्यां भूतानीति निवेशनी, निपूर्वाद्विशतेः अधिकरणे ल्युट्, सर्वाश्रयभूता। (च सा) नः, अस्माकम्। स्योना, सुखकरी। भव। (नः) अस्मभ्यम्। सप्रथः, प्रथसा विस्तारेण सहितं सप्रथः। शर्म, महत्तरं सुखं गृहं वा। यच्छ, प्रयच्छ॥ १५॥ इति षष्ठो वर्गः॥ ६॥

## रूपावतारः

अभि नः। अवसेति। अवतेः कर्तर्यसुन् प्रत्यये टापि अवसेति रूपम्॥ ११॥

इहेन्द्राग्नी। इन्द्राणीमिति। 'इन्द्रवरुण...' (४-१-४९) इति सूत्रेण ङीपि आनुगागमे च सति इन्द्राणीमिति रूपम्। एवं वरुणानीमित्यपि द्रष्टव्यम्। अग्नायीमिति। 'वृषाकप्यग्नि...' (४-१-३७) इति सूत्रेण ङीषि अग्निशब्देकारस्य उदात्तैकारदेशे च सति तत आयादेशे अग्नायीमिति रूपम्॥ १२॥

महीद्यौः। महीति। महशब्दात् 'षिद्गौरादिभ्यश्च' (४-१-४१) इति ङीपि महीति रूपम्। पिपृतामिति। पृधातोर्लोटस्तसस्तामादेशे शपः श्लौ द्विर्वचने 'अर्तिपिपर्त्योश्च' (७।४।७७) इति अभ्यासस्येत्वे पिपृतामिति रूपम्॥ १३॥

तयोरित्। उपपदस्य गम्भाव इति। उपलक्षणमेतत्। आद्यधातोर्गुणः। द्वितीयस्य टिलोपः इत्यपि द्रष्टव्यम् (गन्धर्व)॥ १४॥

स्योना पृथिवी। स्योनेत्यनेन पौनरुक्त्यपरिहाराय शर्मेति व्याचष्टे। शर्म गृहमिति॥ १५॥

## पदार्थप्रकाशिका

अभिनोदेवीरवसा । प्रधानपुरुषत्वादिति । नृशब्दस्य पुरुषवाचित्वाद्देवानामेव मुख्यपुरुषलक्षणत्वेन प्रधानपुरुषत्वात् प्रधान एव चशब्दमुख्यत्वादिति भावः । नृपत्नी इत्यस्यार्थान्तरमाह । नृणां पालयितृत्वेन वेति । तात्पर्यमाह । तत्सम्बन्धीति । विष्णु-दीयमानत्वान्मोक्षादेः तत्सम्बन्धित्वं द्रष्टव्यम् । दत्वैवेति । प्राणेन सह भारत्यादिदेवपत्नीनामपि धर्ममार्गप्रेरणद्वारा मोक्षदातृत्वादिति भावः । अत्र दातृशब्देनेति । श्रुताविति शेषः । ताटंकमिति । स्त्रीणां कर्णाभरणं ताटंकशब्देनोच्यते । अत एव ताटंकद्वयशोभिकर्णयुगलां लम्बालकां रुक्मिणीमित्यादिप्रयोग इति द्रष्टव्यम् । सचेति । सदा कर्णभूषणयोग इत्यर्थः । अतो युक्तमुक्तमिति । अवैधव्येनोक्तमछिन्नपत्रत्वं युक्तमित्यर्थः ।। ११ ।।

इहेन्द्राणीमुपह्वये । रक्षसंततसौख्यायेति भाष्येण सचस्वानस्वस्तय इत्यत्र स्वस्तिशब्दस्य सन्ततसौख्यार्थत्वेन व्याख्यातत्वात्तदनुसारेणाह । सन्ततसौख्यायेति । तादर्थ्ये चतुर्थीत्याह । सोममित्यादिना ।। १२ ।।

महीद्यौः पृथिवीचनः । आगच्छतमिति तात्पर्योक्तिः । भावे इमनिति । भृञ्भरणे अस्मादिमन् प्रत्यये गुणे तस्य च रपरत्वे भरीमनिति प्रातिपदिके सति पश्चात् स्वाद्युत्पत्तौ भरीमभिरिति भवतीति भावः । शेषः ऋचि शेषोक्तिः ।। १३ ।।

तयोरिद्घृतवत्पयः । द्यावापृथिव्योरिति । सम्बन्धीतिशेषः । विज्ञानं परोक्षम् । घृतवदित्येतद्व्या-ख्यातीति अनूद्य व्याख्यातीत्यर्थः । भावे क्त इति । तथाच दीप्त्यर्थकात् घृधातोः क्तप्रत्यये ककारलोपे घृतेतिरूपम् । अत्र कित्वाद्गुणाभावः । अन्यथाघर्तेति स्यादिति ज्ञातव्यम् । तेन सहितमिति । तथाच नर्थेयम् । किन्तु साहित्यार्थे इत्याशयः । तस्मादिति । तस्मात् ज्ञानदेवतैव भारती द्यावापृथिव्याख्यलोकदेवतापि भवति । तस्मात् लोकज्ञानयोरेकदेवताकत्वात् परोक्षापरोक्ष ज्ञानयोर्द्यावापृथिवीसंबन्धित्वं युक्तमिति भावः । यत्तयोर्ज्ञानमित्यत्र यदित्यनन्तरं तयोर्द्यावापृथिव्योः संबन्धीति पूरणीयम् । स्वरूपेति पद्यत इति व्युत्पत्या पदशब्दः स्वरूपपर इति भावः । उक्तप्रकारेणेति । घृरक्षणदीप्त्योर्भावे क्तः । घृतं दीप्तिवदपरोक्षज्ञानं तेन सहितमित्युक्तप्रकारेणेत्यर्थः । मेधाविन इति । विप्रशब्दस्य मेधाविनामसु पाठादिति भावः । बुद्धेरेकत्वात् बहुवचनायोग इत्यत आह । वृत्यपेक्षमिति । बुद्धिवृत्तीनां बहुत्वात् तत्करणे बुद्धिरूपेन्द्रियेपि बहुत्वमौपचारिकमिति भावः । आभ्यां ड इति । डित्वादन्त्यधातोः टीभूतस्य ऋत्वित्यस्य लोपे आदिधातोः ऋवर्णस्य गुणे

(पदार्थप्रकाशिका)

तस्य रपरत्वे प्रत्ययाकारसम्बन्धे गोधर्वेति रूपम्। तर्हि गन्धर्वेति कथमित्यत आह। उपपदस्येति। गोपदस्येत्यर्थः। गंभावे गमित्यादेशः। तथाच गन्धर्वेति। युक्तमिति भावः॥ १४॥

स्योनापृथिवीभव। तर्हि सुखकरीति व्याख्यानं कथमित्यत आह। स इति सुखवाची स्योनाशब्द इत्यर्थः। सुखं मानसमिति वदति। सुखं सुखकरं मानसं सुखमानसमिति सुखशब्दस्य तत्कारिणि प्रयोगदर्शनादत्रऽपि सुखवाची स्योनशब्दः तत्कारिणि वर्तत इत्यर्थः। नश्यतीति वक्तव्य इति। यतो नश्यति नोनृवदिति वक्तव्यमित्यर्थः। इति योजनामिति। या त्वमनृक्षरा निवेशनी सा स्योनाभवेति योजनां सूचयतीत्यर्थः। अधिकरणे ल्युडिति। ल्युड् भावेकरणाधिकरणयोश्चेति स्मरणात्। निपूर्वकात् विश्प्रवेशने अस्मादधिकरणे न्युट्प्रत्ययोरनादेशेनान्तत्वात् ऋन्नेभ्यो ङीबिति ङीपि धात्वेकारस्य च गुणे निवेशनीति रूपमित्यर्थः। महत्तरम्। विस्तीर्णस्योना भवेत्युक्तत्वाच्छर्म यच्छेति पुनरुक्तिरत आह। शर्म गृहं चेति। शर्मशब्दस्य गृहनामसु पाठादित्यवधेयम्। न केवलं स्योना गृहं चेति सम्बन्धः॥ १५,६॥

## पदार्थदीपिका

नृणामिति। विष्णुपक्षेऽप्ययमेवाभिप्राय इति भावः। देवा इत्यादौ पुंयोगादाख्यातायामिति ङीप्। 'दीर्घाज्जसि च' इति प्रतिषेधस्य वाछन्दसीति पाक्षिकत्वोक्तेः पूर्वसवर्णदीर्घ इति भावः। अवन कर्त्रेति। अवतेःकर्तरि असुन् प्रत्यय इति भावः। महोमहत इति। महपूजायामित्यतः सम्पदादिलक्षणः कर्मणि क्विबिति भावः। महोमहत इति। महपूजायामित्यतः सम्पदादिलक्षणः कर्मणि क्विबिति भावः। विशेषणं आख्यातीति। नहि पक्षिरूपाणां देवपत्नीनां पक्षाः केनचित् छिन्द्यन्त इत्यन्यथाव्याख्याननिरासाय इति भावः। ततश्चेति। पत्रसम्बन्धमात्रमुक्त्वा पत्रछेदस्यापि निषेधादिति भावः॥ ११॥

इन्द्रस्य पत्नीमित्यादि। इन्द्रवरुणेत्यादिना पुंयोगे ङीष् प्रत्ययः। आनुगागमश्चेति भावः। अग्नायीमिति। वृषाकप्यग्निकुसीतकुसीदा- नामुदात्त इति ङीप्। तत्सन्नियोगेन एकारस्य ऐकारश्चेति भावः॥ १२॥

महीमहतीति। उणादौनिपतितमहच्छब्दस्य शतृवद्भावात् उगितश्चेति ङीप्। अकारतकारलोपः छान्दस इति भावः। मिमिक्षतामिति। मिह सेचने सनि द्विर्भावहलादिशेषौ, ढत्वषत्वकत्वानीति भावः। स्पर्शो मेक्षणमुच्यत इति प्राचीनभाष्यानुसारात् स्पृशतामिति पदार्थमुक्त्वा तात्पर्यार्थमाह।

(पदार्थदीपिका)

आगच्छतामिति भाव इति । 'हु भृ सृस्तृसूभ्य ईमन्' इति डुभृञ् भरण इत्यस्माद्भावे ईमन्प्रत्यय इति भावः । पिपृतामिति । पॄपालनपूरणयोरित्यस्मात् जौहोत्यादिकाल्लोटः तसः तामादेशः । शपःश्लुः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासाकारस्य इकार इति भावः । अन्ये इत्यस्य प्रतियोगिन आह । श्रीभूम्यामिति । द्यौःपृथिवीशब्दाभ्यां श्रीभूमी भगवान्प्रसिद्धलोकदेवते च विवक्षिता इति भावः ।। १३ ।।

पीयत इति । 'पिबतेरचि' इति असुन् इकारान्तादेशश्च । ततो गुणायादेशाविति भावः । क्त इति । कित्वाद्गुणाभाव इति भावः । लिहन्तीति । लिहेः व्यत्ययेन रेफादेश इति भावः । ड इति । डित्वाट्टिलोप इति भावः । उपपदस्य च गंभाव इति । गवि धृञो गमूचेति स्मरणादित्यर्थः । इयांस्तु विशेषो यदुदाहृतसूत्रे व प्रत्ययो विहितः । अत्र तु वृतेः डप्रत्यय इति । गोशब्दस्य गमादेशस्तूभयत्र समान इति ज्ञेयम् । भाष्यस्थं गामित्येतद्व्याचष्टे । गां वाचमिति ।। १४ ।।

स्योनशब्द इति । सिवेष्टेर्यूच इति नप्रत्यये, टेश्च यो इत्यादेशे निष्पन्नः स्योनशब्दः स्योनमिति सुखनामसु पठ्यते । विशेष्यनिघ्नश्च । अत एव यास्कोऽपि 'सुखानः पृथिवी भव' इति व्याचख्यौ इति भावः । अत्र च यद्यपि तथापीत्यध्याहारेण व्याख्येयम् । ततश्च यद्यपि स्योनशब्दः सुखनामसु पठ्यते । तथापि स स्योनशब्दः तत्कारिण्यपि वर्तत इति अत्र तत्कारित्वार्थ इति योज्यम् । सुखनामसु पाठेन अस्तु तादर्थ्यं तत्कारित्वार्थत्वं तु कुत इत्यत उक्तम् । सुखमासनमितिवदिति । अनेवंरूपस्याप्यासनस्य सुखकारितया तच्छब्ददर्शनात् युक्तं तदर्थत्वमपीति भावः । इति वक्तव्य इति । असंबुद्धिपदत्वादिति भावः । अधिकरण इति । करणाधिकरणयोश्चेति स्मरणादिति भावः । विस्तार इति । प्रथ प्रख्यान इत्यस्माद्भावे 'असुन्नि'ति भावः । सह प्रथसेति । तेन सहेति तुल्ययोग इति बहुव्रीहिरिति भावः । गृहं चेति चशब्दः स्योनसमुच्चयार्थः ।। १५ ।।

## टीकाविवृतिः

अभिनः ।। पुरुषाःपूरुषा नर इत्यभिधानं मुख्यामुख्यन्यायं चाश्रित्याह ।। नरो देवाः ।। प्रधानपुरुषत्वादिति ।। विष्णुपक्षसाधारणमर्थमाह ।। नृणामिति ।। अवसेति ।। अवतेः कर्तर्यसुन्निति भावः । महपूजायामित्यतःकर्मणि संपदादित्वात्क्विबिति भावेनाह ।। मह इति ।। सावेकाचस्तृतीयादिर्विभक्तिरिति षष्ठ्या उदात्तत्वमिति भावः ।। व्याख्यातीति ।। अच्छिन्नपक्षा इति पक्षिरूपदेवीनां विशेषणमिति भ्रान्तिवारणायेति शेषः । पत्रिण्य इत्यनुक्त्वा छेदाभावोक्तेः सदा तत्संबन्धो लभ्यत इत्याशयेनाह ।। ततश्चेति ।। ११ ।।

(टीकाविवृतिः)

इहेन्द्राणीम् ॥ इन्द्रवरुणेति पुंयोगे ङीबानुगागमाविति भावेनाह ॥ इन्द्राणीमिति ॥ अग्रायीमिति ॥ वृषाकप्यग्नीति ङीबैकारादेशश्चेति भावः ॥ १२ ॥

मही द्यौः ॥ पचाद्यजन्तान्महशब्दाद्गौरादिङीबिति भावेनाह ॥ महीति ॥ स्पृशतामिति ॥ स्पर्शो मेक्षणमुच्यत इत्युक्तत्वादिति भावः । तात्पर्यमाह ॥ आगच्छतामिति ॥ भावे इति ॥ हृभृधृ इत्यादिना भृञ इमनिच्प्रत्ययो बाहुलकःप्रत्ययादेर्दीर्घ इति भावः ॥ भरणैरिति ॥ यज्ञसाधनसमूहैर्यज्ञसमूहैर्वेत्यर्थः । पृपॄपालनपूरणयोरित्यतः जुहोत्यादित्वाच्छपःश्लौ द्वित्वादौ चार्तिपिपर्त्योश्चेत्यभ्यासस्येत्वेलोटस्तसस्तामादेश इति भावेनाह ॥ पिपृतामिति ॥ भाष्यस्थं ते इत्येतद्व्याचष्टे ॥ ते द्यावापृथिव्याविति ॥ श्रीभूरूपे द्यावापृथिवीशब्दवाच्ये । भगवान्वेति भाष्ये भगवतो रूपद्वयं द्यावापृथिवीशब्दवाच्यं विवक्षितम् । अन्येत्यनेन प्रसिद्धे भूस्वर्गाभिमानिन्यौ विवक्षिते इत्याह ॥ लोकदेवते इति ॥ १३ ॥

तयोरित् ॥ पीयते इति ॥ पीङ्पाने इत्यत असुनि गुणायादेशाविति भावः ॥ विज्ञानमिति ॥ परोक्षमित्यध्याहारः । बुद्धित्वरूपेण बुद्धेरेकत्वाद्धीतिभिरिति कथं बहुवचनमित्यत आह ॥ वृत्त्यपेक्षमिति ॥ रिहंति लिहन्तीति ॥ लिहेर्लस्य व्यत्ययेन रेफादेश इति भावः ॥ आभ्यां ड इति ॥ विच्चेति शेषः । गोशब्दे उपपदे धृञोविचि गुणःवृतेर्डप्रत्यये टिलोप इति भावः । भाष्यस्थगामित्येतद्व्याचष्टे ॥ गां वाचमिति ॥ वेदवाचमित्यर्थः । प्रसिद्धगन्धर्वेष्वपीयमेव व्युत्पत्तिर्बोध्या ॥ १४ ॥

स्योनापृथिवि ॥ सुखनामस्विति ॥ सुम्नं स्योनं शवमित्यनेनेति शेषः ॥ स इति ॥ स्योनशब्द इत्यर्थः । सुखशब्दस्य तत्कारिणि लक्षणावत्स्योन शब्दस्यापीति भावः ॥ इति वक्तव्य इति ॥ प्रथमपुरुषे इत्यर्थः ॥ इति वचनेनेति ॥ मध्यमपुरुषवचनेनेत्यर्थः ॥ अधिकरणे इति ॥ करणाधिकरणयोश्चेत्यनेनेत्यर्थः ॥ सह प्रथसेति ॥ सहोपपदात्प्रथप्रख्याने इत्यतो भावे असुन्युपपदसमासे गतिकारकोपपदात्कृदित्युत्तरपदाद्युदात्तत्वमिति भावः ॥ शर्मगृहमिति ॥ छायागृहमिति गृहनामसु पाठादिति भावः ॥ १५ ॥

**ऋक्संहिता पदपाठसहिता** (सू-२२, व-४)

**(२२४) अतो देवा अवन्तुनो यतो विष्णुर्विचक्रमे ॥**
**पृथिव्याःसप्तधामभिः ॥ १६ ॥**

**(प०) अतः । देवाः । अवन्तु । नः । यतः । विष्णुः । विऽचक्रमे ॥**
**पृथिव्याः । सप्त । धामऽभिः ॥ १६ ॥**

(ऋक्संहिता पदपाठसहिता)

(२२५) इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥
समूळ्हमस्य पांसुरे ॥ १७ ॥
(प०) इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् ॥
सम्ऽऊळ्हम् । अस्य । पांसुरे ॥ १७ ॥
(२२६) त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ॥
अतो धर्माणि धारयन् ॥ १८ ॥
(प०) त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः ॥
अतः । धर्माणि । धारयन् ॥ १८ ॥
(२२७) विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ॥
इन्द्रस्य युज्यःसखा ॥ १९ ॥
(प०) विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे ॥
इन्द्रस्य । युज्यः । सखा ॥ १९ ॥
(२२८) तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥
दिवीव चक्षुराततम् ॥ २० ॥
(प०) तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः ॥
दिविऽइव । चक्षुः । आऽततम् ॥ २० ॥
(२२९) तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ॥
विष्णोर्यत्परमं पदम् ॥ २१, ७, २२ ॥
(प०) तत् । विप्रासः । विपन्यवः । जागृऽवांसः । सम् । इन्धते ॥
विष्णोः । यत् । परमम् । पदम् ॥ २१, ७, २२ ॥

ऋग्भाष्यम्

असुरेभ्यो जगद्धृत्वा यतो विष्णुस्त्रिविक्रमैः । आरभ्य पृथिवीं सप्तलोकैः साकं जगत्पतिः । चक्रे सुरान्पदस्थानप्यतो देवा अवन्तुनः । विशिष्टबलचेष्टत्वाद्विष्णुरि-

(ऋग्भाष्यम्)

त्यभिधा हरेः । प्राणं बलं षकारं च णकारं चाह हिश्रुतिः ॥ १६ ॥ रमंति पांसवो यत्र पांसुरं पदमीरितम् । समूढं तत्र विश्वं हि पांसुवज्जगतः पतेः ॥ १७ ॥ वेदान्कालान्गुणाँल्लोकान्देव मानुषदानवान् । चेतनाचेतनान्मिश्रांस्त्रीणि पदा विचक्रमे ! रक्षकत्वेन सर्वाणि स्रष्टृभर्तृत्वतस्तथा । मोक्षदत्वेन च विभुः स्तंभनीयो नकेनचित् । धारकांश्चैव वाय्वादीन्धारयन्वर्तते ततः ॥ १८ ॥ जानीथ विष्णुकर्माणि प्राणिकर्माण्यशेषतः । यतो जातान्यविज्ञातो भगवान्सर्वदैव च । स्पशाज्ञातदृशौ यस्मादिन्द्रस्य सहितः सखा । प्राणस्यैवेन्द्रनाम्नश्च कस्मिन्वहमिति श्रुतेः । त्वयेदिन्द्रेति वचनात्प्राण इन्द्राभिधो मतः ॥ १९ ॥ रमाब्रह्मशिवादिभ्यो यद्विष्णोः परमं पदम् । रूपं पश्यन्ति निर्मुक्ताः संसारात्सूरयः सदा । चक्षुर्दिवीव व्याप्तं यदृश्यं फलदर्शितम् ॥ २० ॥ सन्दीपयन्ति विज्ञानैः संसारात्प्राप्तजागराः । विपन्यवो ज्ञानितमा विष्णोर्यत्परमं पदम् । तात्पर्याधिक्यविज्ञप्त्या अर्थमेतं पुनर्जगौ ॥ २१, ७, ३ ॥

## ऋग्भाष्यटीका

अतो देवाः । षट्वैष्णव्यः । आद्या दैवी च । अत्राद्यामृचं कथितहेतुहेतुमद्भावं घटयन्व्याख्याति । असुरेभ्य इति । यतः कारणाद्विष्णुर्जगत्पतिः । पृथिव्याः पृथिवीमारभ्य । सप्तधामभिः सप्तलोकैःसाकम् । त्रिभिःक्रमैः पादविक्षेपैः । इदमिति वक्ष्यमाणं जगत् । विचक्रमे असुरेभ्यो जहारेति यावत् । हृत्वा च सुरान् स्वस्वपदस्थानपि चक्र इति शेषः । अतः एवं विष्णुप्रसादाल्लब्ध पदत्वेन समर्थत्वात् । देवाः नोस्मानवन्तु रक्षंतु । विष्णुशब्दं भगवति निर्वक्ति । विशिष्टेति ॥ भवतु विशब्दो विशिष्टवाची षकारणकारयोस्तु चेष्टाबलवाचित्वं कुत इत्यत आह ॥ प्राणमिति ॥ परमेश्वरस्य प्राणं चेष्टां षकारं षशब्देनाक्रियमाणं बलं च णकारं णशब्देनाक्रियमाणमाहेत्यर्थः । श्रुतिः णकारो बलं षकारः प्राण आत्मेत्येषा ॥ १६ ॥

इदं विष्णुर्विचक्रमे । पूर्वोर्धर्चः पूर्वेणैव व्याख्यातः । द्वितीयं व्याख्याति ॥ रमन्तीति ॥ रमन्ति शोभन्ते । यद्वा पांसुशब्देन तदाश्रिता देवा विवक्षिताः । समूढमित्यनेन समूह्ळमित्येतद्वहतेरूपमित्युक्तं भवति । प्रापितमित्यर्थः । अत्रापीदमिति सम्बध्यत इत्यतो विश्वमित्युक्तम् । पद इत्यनुक्त्वा पांसुर इत्युक्तस्य तात्पर्यमाह ॥ पांसुवदिति । विष्णुर्भगवान् इदं विश्वं विचक्रमे विक्रान्तवान् । कथम् । त्रेधापदं निदधे तदाऽस्य जगतः पतेः । पांसुरेपदे । इदं विश्वं समूह्ळं प्र(विष्ट) तिष्ठितमिति यावत् ॥ १७ ॥ त्रीणि पदा । प्रथमपादं व्याख्याति । वेदानिति । विष्णुः त्रीणि पदा सर्वाणि त्रिविधानि पदानि स्वरूपाणि । विचक्रमे अतिक्रान्तः । कानि तानि वेदांस्त्रीन्कालानतीतानगतवर्तमानान् गुणान्सत्त्वादींल्लोकान् भूर्भुवः

(ऋग्भाष्यटीका)

स्वराख्यान्देव मानुषदानवान् जीवान् चेतनाचेतनान्मिश्रान्सकलपदार्थान्। तत्र चेतना श्रीर्मुक्ताश्च। अचेतना घटादयः । मिश्राः सात्मका देहाः । कथं विचक्रम इत्यत उक्तं गोपा इति । तदुपलक्षणपरमित्यशयेन व्याख्याति। रक्षकत्वेनेति ॥ सर्वाणीत्यस्य पूर्वत्र सम्बन्ध उक्तः। विभुः विचक्रम इति। पूर्वेणान्वयः। अदाभ्य इत्यस्यार्थमाह ॥ स्तम्भनीय इति स्तम्भनीयो निवारणीयः। पोरदुपधादिति दम्भेर्ण्यः। उत्तरार्धं व्याख्याति। धारकानिति। यत एवं महामहात्म्यो विष्णुः अतः कारणाद्धर्माणि जगतो धारकानपि वाय्वादीन् स एव धारयन् वर्तत इति शेषः॥ १८॥

विष्णोः कर्माणि। जानीथ। हे जनाः विष्णोः कर्माणि पश्यत जानीथ। कथं भूतानि व्रतान्यशेषतः प्राणिकर्माणि च यतो येभ्यः कर्मभ्यो जातानीति शेषः। विष्णोर्वैतद्विशेषणम्। अनुपलम्भबाधितमेतदित्यत उक्तं पस्पशे भगवान्सर्वदेवाविज्ञातश्चशब्दाज्ज्ञातश्च। तदुपपादयति॥ स्पशेति। यस्मादेवं धातुव्याख्यानं तस्मादुक्तं युक्तम्। अज्ञातदृशौ प्रत्यक्षायोग्यस्यार्थस्य दर्शने। ततश्च पस्पश इति लिडंतस्य प्राकृतैरदृश्य एव योगिभिर्दृष्टो बभूवेत्यर्थः। उत्तरार्धं व्याख्याति॥ इन्द्रस्येति। युज्यः सर्वदा योगार्हः। तस्यार्थः सहित इति। अत्र यः पस्पशे यश्चेन्द्रस्य युज्यः सखा तस्य विष्णोरित्येक वाक्यतया योजना। इन्द्रशब्दस्य प्रसिद्धेन्द्रस्तावदर्थः। अर्थान्तरं चाह। प्राणस्यैवेति। सखेति सम्बन्धः। एव शब्देनायमेव मुख्योर्थ इत्याचष्टे। तत्कुत इत्यत आह॥ कस्मिन्निति। कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति श्रुतेर्विष्णुप्राणयोरेव नित्ययोग दर्शनादित्यर्थः। इन्द्रशब्दस्य प्राणवाचित्वं कुत इत्यत आह॥ त्वयेदिन्द्रेति। त्वयेदिन्द्र युजावयमित्यस्यामृचीन्द्र शब्दस्य प्राणे प्रयोगदर्शनात्। इयं हि तं देवा अब्रुवन्नित्यत्रार्थे संमतित्वेनोपनिषद्युदाहृता॥ १९॥

तद्विष्णोः। रमाब्रह्म। परमत्वस्य प्रतियोगिसापेक्षत्वाद्रमाब्रह्म- शिवादिभ्य इत्युक्तम्। पदमित्यनुवादेन रूपमिति व्याख्यानम् । सूरय इत्यस्यार्थः संसारान्निर्मुक्ता इति । ते हि मुख्यतः सूरयः । दृष्टान्तस्यतात्पर्यमाह ॥ अदृश्यमिति । यथाहि चक्षुराकाशे व्याप्तमपि न दृश्यते । केवलं विषयोपलब्धिलक्षणेन फलेनानुमीयते तथा परमेश्वरस्वरूपं सर्वगतमपि न दृश्यं किं त्वस्वतन्त्राणां पदार्थानां सत्ताप्रतीति प्रवृत्तिभिर्ज्ञायत इति॥ २०॥

तद्विप्रासः। सन्दीपयन्ति। इन्धी दीप्तौ। सन्दीपयन्ति जानन्ति ज्ञापयन्ति वा। विज्ञानैरिति शेषः। करणे ल्युट्। जागृवांसः प्राप्तजागराः। के ते। संसारात् मुक्ता इति शेषः विपन्यव इत्यस्य व्याख्यानं ज्ञानितमा इति। पनतिरत्र ज्ञानार्थः। ततो युः। नन्वेतदृगर्थः पूर्वस्यामृच्युदित एव अतः किमर्थं पुनरुच्यत इत्यत आह॥ तात्पर्येति॥ सर्वेषामपि वेदानामस्मिन्नर्थे तात्पर्याधिक्यमित्यस्यार्थस्य विज्ञप्त्यै। एतमर्थं विष्णोः सर्वोत्तमत्वादिकम्। जगौ वेदः॥ २१, ७, ३॥

## मन्त्रार्थमञ्जरी

एतदादिषड्वैष्णव्यः । आद्या दैवी च । यतः, कारणात् । विष्णुः, विशेषचेष्टाबलवान्, 'णकारो बलं षकारः प्राणः' (ऐ० उ० ३।२।६) इति श्रुतेः । पृथिव्याः, ल्यब्लोपे पञ्चमी, पृथिवीमारभ्य । सप्त धामभिः, सप्तलोकैः साकम् । (त्रिभिः) (क्रमैः) पादविक्षेपैः । 'इदम्' इति वक्ष्यमाणम् आकृष्यते (इदम्) जगत् । विचक्रमे, आक्रान्तवान्, असुरेभ्यो जहारेति यावत् । हृत्वा च (सुरान्स्वस्वपदस्थाँश्चक्रे) इति शेषः । अतः, एवं विष्णुप्रसादाल्लब्धपदत्वेन समर्थत्वात् । देवाः । नः, अस्मान् । अवन्तु, रक्षन्तु ॥ १६ ॥

विष्णुः, भगवान् । इदम्, विश्वम् । वि चक्रमे, विक्रान्तवान् । कथम् ? त्रेधा पदं नि दधे । तदा अस्य, जगत्पतेः । पांसुरे, पांसवो रेणवः पांस्वभिमानिदेवा वा रमन्तेऽत्रेति पांसुरः पादस्तस्मिन्, रमेः अधिकरणे डः । (इदम्) विश्वम् । समूळ्हम्, समूढम्, पांसुवत्प्रतिष्ठितमिति यावत् ॥ १७ ॥

अदाभ्यः, अस्तम्भनीयः, अनिवारणीय इति यावत्, 'आसुयुवपिरपिलपित्र पिचमश्च' इति तृतीयाध्यायाद्यपादीयसूत्रे 'ऋहलोर्ण्यत्' इति ण्यत्प्रकरणगतेऽनुक्तसमुच्चयार्थश्चकारः, 'दभ दाभ्ये' इति वृत्तावुक्तेर्दभेर्धातुष्वपठितस्यापि चुरादौ 'बहुलमेतन्निदर्शनम्' इति वचनाच्छिष्टप्रयोगाच्च 'क्षपयति, तुत्थयति, अवधीरयति' इत्यादिवद्धातुत्वं वक्तव्यम्' इति मञ्जर्यामुक्तेरतोऽत्र दभेर्ण्यत्प्रत्ययो ध्येयः, 'पोरदुपधात्' इति दम्भेः ण्यत्' इति टीकापाठो लेखकदोषमूलः, यद्वा– टीकायाम् इति शब्दो हेत्वर्थः, 'पवर्गान्तादकारोपपधाद्धातो- र्यत्प्रत्ययो भवति' इति विधानाद्धेतोरिह च दम्भेः अदुपधत्वाभावाद्यत्प्रत्ययाप्राप्तौ 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः' इत्यभिप्रायो ध्येयः, बहुलग्रहणादुपधालोपः, 'अत उपधायाः' इति वृद्धिः । विष्णुः । त्रीणि पदा, सर्वाणि त्रिविधानि पदानि स्वरूपाणि (ऋग्यजुःसाम) वेदाख्यानि, अतीतानागतवर्तमानकालाख्यानि, सत्त्वरजस्तमोगुणाख्यानि, भूलोकभुवर्लोकस्वर्लोकाख्यानि, देवमानुषदानवरूपजीवाख्यानि, चेतनाचेतनमिश्ररूपश्रीमुक्तघटादिसात्मक- देहाख्यानि च । गोपाः, रक्षकः सन्, रक्षकत्वेनेति यावत्, उपलक्षणम्– 'स्रष्टृत्वादिना (भर्तृत्वमोक्षदत्वे चादिपदार्थौ) च' इत्यपि ध्येयम् । वि चक्रमे, अतिक्रान्तः । यत एवं माहात्म्यो विष्णुः अतः, कारणात् । धर्माणि, जगतो धारकान्वाय्वादीन्, धृञः मनिन्, गुणः । धारयन् (वर्तते) इति शेषः ॥ १८ ॥

(हे जनाः) विष्णोः कर्माणि । पश्यत, जानीथ । व्रतानि, सर्वप्राणिकर्माणि । यतः, येभ्यः कर्मभ्यः, यस्माद्विष्णोरिरिति वा । (जातानि) इति शेषः । (यः) विष्णुः । पस्पशे, प्राकृतैरदृष्टोऽपि

योगिभिर्दृष्टो बभूवेत्यर्थः, 'स्पश अज्ञातदृशौ' इति धातोः । (यश्च) इन्द्रस्य, पुरंदरस्य, वायोर्वा । युज्यः, योगार्हः, अविनाभूतः । सखा (तस्य) 'विष्णोः' इति पूर्वेणान्वयः । अत्रेन्द्रशब्देन वायुग्रहणं तु 'कस्मिन्न्वहमुत्क्रान्ते' (ष० प्र० उ० ६।२) इत्यादिश्रुत्या वायोरेव मुख्यतो विष्णवविनाभावात्, 'तं देवा अब्रुवन्' (२।१।४) इत्युक्तप्राणमहिमविषयतयैतरेयोपनिषदुदाहृते 'त्वयेदिन्द्र युजा वयम्' (ऋ० म० ८।९२।३२) इति मन्त्रे इन्द्रशब्दस्य प्राणे प्रयोगाच्च, इति ध्येयम् ॥ १९ ॥

आततम्, व्याप्तम् । चक्षुः । दिवीव, आकाश इव, रश्मिरश्मिमतोरभेदात् 'चक्षुः' इत्येवोक्तम् । तत् विष्णोः । परमम्, रमाब्रह्मशिवादिभ्य उत्तमम् । पदम्, स्वरूपम् । सूरयः, ज्ञानिनः । सदा पश्यन्ति । यथा चक्षुराकाशे व्याप्तमपि न दृश्यते, केवलं विषयोपलब्धिरूपफलेनानुमीयते, तथा परमेश्वरस्वरूपं सर्वगतमपि नोपलभ्यते, किं त्वस्वतन्त्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायते, इति दृष्टान्तोक्तितात्पर्यम् ॥ २० ॥

यत् विष्णोः परमं पदं तत् । विपन्यवः, विशेषेण पन्यवो ज्ञानिनः, 'पन ज्ञाने' इत्यतो युप्रत्ययः । जागृवांसः, प्राप्तजागराः, संसारान्निर्मुक्ता इति यावत् । विप्रासः, विप्राः, मेधातिथिप्रभृतयः । सम् इन्धते, 'ञिइन्धी दीप्तौ' जानन्ति, अन्तर्णीतणिज्वा, समिन्धयन्ति, ज्ञापयन्तीत्यर्थः । प्रागुक्तस्यैव पुनरत्र उक्तिः सर्ववेदानामत्रोक्तसर्वोत्तमत्वे परमं तात्पर्यमिति ज्ञापनार्था ॥ २१ ॥ इति सप्तमो वर्गः ॥ ७ ॥ द्वाविंशं सूक्तम् ॥ २२ ॥

## रूपावतारः

अतो देवाः श्रुतौ सप्तेति पदं लुप्ततृतीया बहुवचनम् । अतः धामभिरित्येतद्विशेषणत्व मुपपन्नमिति बोध्यम् ॥ १६ ॥

इदं विष्णुर्विचक्रमे । वहते रूपमिति । सम्पूर्वाद्वहेः क्तप्रत्यये यजादित्वात्सम्प्रसारणे 'होढः' (८।२।३१) इति ढत्वे झषस्तथोर्धोधः (८।२।४०) इति तस्य धत्वष्टुत्वे 'ढो ढे लोपः' (८।३।१३) इति ढलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६।३।१११) इति दीर्घे समूढमिति रूपम् । 'वर्णागमो वर्णविपर्ययश्चेति वचनात् ढकारस्य ळ्हादेशे समूळ्हमिति छान्दसं रूपम् ॥ १७ ॥

त्रीणि पदा । निवारणीय इति । इतः परं टीकायां पोरदुपधादितीति प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । 'पोरदुपधात्' (३।१।९८) इति सूत्रस्य यत्प्रत्ययविधायकत्वेन ण्यद्विधायकत्वाभावात् ।

(रूपावतारः)

न चानेन सूत्रेण यति प्राप्ते 'लपिदभिभ्यां च' इति वार्तिकेन ण्यद्भवतीति व्याख्याने सर्वं समंजसं भवतीति वाच्यम् । वार्तिकमनुदाहृत्यानुपयोगिनः सूत्रस्योदाहरणायोगात् । लपिदभिभ्यां चेति उच्छिन्नम् । तस्यार्थः । दभेः धातोः लपि दभिभ्यां चेति वार्तिकेन ण्यत्प्रत्ययो भवतीति । दभिः प्रकृत्यन्तरम् । तेनोपधावृद्धौ अदाभ्य इति रूपम् । तेन दम्भेरनुस्वारलोपप्रापकाभावात् अदाभ्य इति रूपमनुपपन्नमिति परास्तम् ।। १८ ।।

विष्णोः कर्माणि पश्यत । च शब्दादिति । 'सर्वदैव चे'ति भाष्यस्थचशब्दादित्यर्थः । श्रौतेन 'पस्पश' इति शब्देन विष्णोर्ज्ञातत्वमज्ञातत्वं च साक्षादेवोक्तं भाष्ये 'यतो जातान्यविज्ञात' इति अविज्ञातत्वं कण्ठत एवोक्त्वा सर्वदैव चेति चशब्देन ज्ञातत्वमुक्तमिति विवेकः ।। १९ ।।

तद्विष्णोः परमम् । ते हीति मुख्यतस्सूरित्वस्य संसारविमुक्तधर्मत्वादिति भावः ।। २० ।।

तद्विप्रासः जागृवांस इति । जागृधातोः लिटि तस्य क्वस्वादेशे 'छन्दसि वेति वक्तव्यम्' (वा.मू. ६।१।१) इति वचनात् द्विर्वचनाभावे जसि जागृवांस इति रूपम् । ततो युरिति । युप्रत्ययस्य 'युवोरनाकौ' (७।१।१) इत्यनादेशाभावो बाहुलिकः । एतदृगर्थ इति विष्णोः सर्वोत्तमत्वरूपोऽर्थः 'तद्विष्णोः परमं पदम्' इति पूर्वस्यां ऋचि उक्त एवेत्यर्थः ।। २१, ७, ३ ।।

## पदार्थप्रकाशिका

अतोदेवा अवन्तुनः । षड्वैडष्णव्यमित्यनुक्रमणिकामेव पठति । षड्वैष्णव्य इति अतो देवा दैवी चेत्यनुक्रमणिकानुसारेणाह । आद्येति । अतो देवा इत्याद्या ऋक् न केवलं वैष्णवी किन्तु सर्वदेवताका चेत्यर्थः । अतो देवा इत्युक्तत्वादिति भावः । कथितेति । अतो यत इति पदाभ्यां कथितेत्यर्थः । घटयन्निति । यतो विष्णुर्विचक्रमे अतो देवा अवंत्वित्येवं कथितहेतुहेतुमद्भावस्य व्यधिकरणत्वात्तं घटयन् व्याख्यातीत्यर्थः । ल्यब्लोपनिमित्ता पञ्चमीत्याह । पृथिवीमारभ्येति । पादविक्षेपैरिति । क्रम पादविक्षेप इति धातोरिति भावः । ऋचि जगदिति अश्रवणाज्जगद्भूत्वेति कथं भाषितमित्यत आह । इदमिति । वक्ष्यमाणमिति । इदंविष्णुरिति उतरस्याम् ऋचि वक्ष्यमाणमित्यर्थः । शेषो ऋचि शेषोक्तिः । समर्थत्वादिति । अस्मदवने सामर्थ्यसद्भावादित्यर्थः । चेष्टाबलवाचित्वमिति । तथाच विष्णुनाम्नि विषणेतिवर्णत्रयमस्ति । तत्र वीत्यस्य विशिष्टेति व्याख्याने बलचेष्टात्वादिति वकारणकारयोर्यथायोग्यं व्याख्यानं न यथाक्रममित्यवधेयम् ।। १६ ।।

(पदार्थप्रकाशिका,

इदं विष्णुर्विचक्रमो पूर्वेणैवेति। असुरेभ्यो जगद्धृत्वेति पूर्वभाष्येणैवेत्यर्थः। द्वितीयमर्धर्चम्। जडानां पांसूनां रमणासंभवादाह। रमन्ति शोभन्त इति। धातूनामनेकार्थत्वात् रमुधातुः शोभार्थ इति द्रष्टव्यम्। देवाः विवक्षिताः इति। तथाच तेषु रमणं मुख्यमेव सम्भवतीति भावः। वहतेरूपमिति। सम्पूर्वाद्वहप्रापणे इत्यस्मात् कप्रत्यये ककारलोपे वकारस्य सम्प्रसारणे सं उहतेति जाते हो ढ इति हकारस्य ढकारे नकारस्यापि निर्वचनत्वाद्ढकारे समुढ्ढेति जाते ढोढेर्लोप इति एकस्य ढकारस्य लोपे समुढेति जाते ढ्लोपे पूर्वस्य दीर्घोऽण इति ढकारस्य दीर्घे समूढेति जाते मध्यस्थढकारस्य हकारंवाररुचाः जगुरितिपरिभाषया ढकारस्य ल्हकारेसमूल्हेति रूपे पश्चात् स्वाद्युत्पत्तौ समूल्हमिति भवतीति भावः। अत्रापीति। द्वितीयार्थेऽपीत्यर्थः। इत्यतः इत्यभिप्रेत्य। विक्रान्तवान्। असुरेभ्यो जहारेति यावत्। कथमिति। कथं विचक्रम इत्यर्थः। तदुत्तरत्वेन द्वितीयपादः प्रवृत्त इत्याह। त्रेधेति। तदेति। यदा त्रेधा पदं निदधे तदेत्यर्थः। प्रतिष्ठितमितीति। पांसुवदत्यन्तसम्बद्धमभूदित्यर्थः॥ १७॥

त्रीणि पदा विचक्रमे। सर्वाणि त्रीणीति त्रित्वावच्छिन्नानि सर्वाणि त्रीणीत्यर्थः। स्वरूपाणि वस्तुस्वरूपाणि कानि तानि इति। त्रित्वावछिन्नानि सर्वाणि त्रीणि कानीत्यर्थः। अचेतनाः निरात्मकाः। मिश्राः इति। आत्मना मिश्राः सात्मका देहा इत्यर्थः। कथमिति। सर्वा सर्वाणि त्रीणि कथं विचक्रमे। अतिक्रान्तवानित्यर्थः। उक्तमिति। ऋचीति शेषः। भाष्ये मोक्षदत्वेनेत्येतद्देवान् वेदान्। तथाच रक्षकत्वादिना देवादीन् मोक्षदत्वेन च वेदान् विचक्रम इत्यर्थो द्रष्टव्यः। पूर्वत्रेति। त्रीणीत्यनेन सम्बद्ध इत्यर्थः। अत एव ऋगर्थकथनसमये सर्वाणि त्रीणीति सम्बन्धः प्रदर्शितः इति ध्येयम्। सम्बन्ध उक्त इति पाठे ऋगर्थकथनसमये अस्माभिः पूर्वसम्बन्ध उक्तः प्रदर्शित इत्यर्थः। पूर्वेणान्वय इति रक्षकत्वेन च विभुरिति भाष्यस्य त्रीणि पदा विचक्रम इति पूर्वभाष्येणान्वय इत्यर्थः। तथाच अदाभ्योगोपाः पालनसर्जनादिकर्ता विभुः सर्वाणि त्रीणि विचक्रम इति ऋग्योजना द्रष्टव्या। स्तम्भनीयोऽदाभ्य इत्येतदुपपादयति। पोरदुपधादिति। दम्भेर्ण्य इति। अत्रादौ दम्भेर्ण्य इति योज्यम्। दम्भस्तम्भने अस्मात् ऋहलोर्ण्यदिति ऋदंताद्धलन्ताच्च धातोर्ण्यत्प्रत्ययविधानात्। दम्भधातोश्च हलन्तत्वात् ण्यत्प्रत्यये णकारतकारयोर्लोपे णित्वादादिवृधौ दाभ्य इति भवति।

ननु ऋहलोर्ण्यदित्यनेन न ण्यप्रत्ययप्राप्तिः। तदपवादकत्वेन पोरदुपधादिति सूत्रेण यत्प्रत्यय विधानात् अदुपधादकार एवोपधा यस्यासावदुपधा पोः पवर्गान्तधातोर्यत्प्रत्ययः स्यादिति सूत्रार्थः। एवं च भकारस्य पवर्गगत्वेन पवर्गान्तत्वात् दम्भधातोः यत्प्रत्यये तकारलोपे यत्प्रत्ययस्य

(पदार्थप्रकाशिका)

णित्वाभावेनादिवृध्यसम्भवाद्दाभ्य इत्येव स्यादित्यत उक्तं पोरदुपधादितीति । अदुपधादिति दम्भेरिति च हेतुगर्भविशेषणम् । तथाच ऋहलोर्ण्यदिति प्राप्तण्यत्प्रत्ययापवादकतया पोरदुपधादित्यनेन यत्प्रत्ययो न वक्तुं शक्यते । तत्र अदुपधाप्तोरित्युक्तत्वात् अस्य च दंभित्वेन तस्य नस्य चापदान्तस्य झल्यनुस्वारः स्यादित्युक्तत्वेन नकारस्यानुस्वारत्वे दं इत्यनुस्वरो नामनकार एव । नकारोपधात्वात् अतो अपवादादप्रवृतौ उत्सर्गस्यैव स्थितेरिति न्यायेन ऋहलोर्ण्यदित्यनेन ण्यत्प्रत्यय एवेत्यर्थः । ण्यदिति वक्तव्ये हलंत्यमिति तकारलोपमभिप्रेत्य ण्य इत्युक्तमित्यवधेयम् ।

न च दम्भधातोर्नकारलोपविधायकाभावाद्दांभ्य इत्येव स्यान्नदाभ्य इति रूपमिति वाच्यम् । दभश्चेति वार्तिकनिर्देशेनैव नलोपसम्भवात् । यथोक्तं कौमुद्याम् । नलोपिनो निर्देशाल्लोप इति । एवं च दाभ्य इत्यस्य नञ्समासेऽदाभ्य इति युक्तमिति भाव इति गुरूचरणाः । केचित्तु पोरधुपधादि यत्प्रत्ययबाधनार्थं प्रवृत्ते आसुयुवपिरपित्रपिचमश्चेति पूर्वे अनुक्तसमुच्चयार्थकचकारसूचितेन दभेश्चेति वार्तिकेणैव ण्यदित्यर्थः । अत एवोक्तं काशिकायाम् । अनुक्तसमुच्चयार्थश्चकारः । दभेर्दाभ्यमिति । नकारलोपस्तु वार्तिकेन नलोपिनोदभेर्निर्देशादेवेत्याहुः । एवं मत्वा माहात्म्य इत्यर्थः ।। १८ ।।

विष्णोः कर्माणि पश्यत । कथं भूतानीति । विष्णोः कर्माणि कथं भूतानीत्यर्थः । एकवचनं बहुवचनार्थ इत्याह । यतो येभ्य इति । अत एवास्वरसादाह । विष्णोरेवेति । तथाच यतो विष्णोः व्रतानि जानाति तस्य विष्णोः कर्माणि पश्यतेत्यन्वयो द्रष्टव्यः । अनुपलम्भबाधितमेतदिति । अशेषप्राणिकर्मणि जनकत्वरूपं वा भगवन्माहात्म्यमिदानीमनुपलभ्यमानत्वेन तद्बाधान्नास्तीत्यर्थः । अविज्ञातः ज्ञातश्चेत्यत्र उक्तमाहात्म्यवत्वेनेति शेषः । ननु कथमनेनानुपलम्भबाधपरिहार इत्यत आह । ततश्चेति । अदृश्यो दृश्य इत्युभयत्रापि उक्तमाहात्म्यवत्वेनेति शेषः। योगिभिरिति । तथाचानुपलम्भो असिद्ध इति भावः । योगार्ह इति । अर्हे कृत्यतृचश्चेति अर्हार्थे यत्प्रत्ययविधानात् इति भावः । ततश्चेति । सर्वदा योगार्हार्थकस्य युज्य इत्यस्येत्यर्थः । अत्र ऋचि यः यस्य इति । उक्तमाहात्म्यवत्तया प्राकृतैरदृश्य एव योगिभिः दृष्टो बभूवेत्यर्थः । आपाद्य सम्पाद्य । अयमेवेति । इन्द्रशब्दस्य प्राण एव मुख्यार्थ इत्यर्थः । प्रसिद्धेन्द्रमिति प्रसिद्धेन्द्रस्य युज्यःसखेति व्याख्यानं परित्यज्येत्यर्थः । स प्राणमसृजतेति । स्वान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकवन्तं मुख्यप्राणमित्यर्थः । त्वयेदिन्द्रेति । त्वयेदिन्द्रयुजा वयं प्रब्रवीमहि स्पृधः । त्वमस्माकं तवस्मसि इति ऋचीत्यर्थः । नचात्रापि इन्द्रोवाच्यः । प्राणः कुत इत्यत आह । इयं हीति । ऋगित्यर्थः । ता अहिंसन्तेत्यादिना प्राणसंकलहमभिधाय मुख्यप्राणव्यतिरेकान्वयप्रयुक्तदेहपातोत्थानाभ्यां प्राणस्य

(पदार्थप्रकाशिका)

सर्वोत्तमत्वमभिधायोच्यन्ते तं देवाः अब्रुवत् त्वमुक्थमसि तव स्मसीति तदप्येतदृषिणोक्तम् । त्वमस्माकं तव स्मसीति इति ऐतरेयोपनिषदुदाहृता । अत इन्द्रो मुख्यप्राण एवेत्यर्थः । हे इन्द्र मुख्यप्राणयुजा अस्मत्सखायभूतेन त्वया इतूत्वत्प्रेरणयैव वयं स्पृधाः स्पर्धावन्तः सन्तः प्रतिब्रवीमहि परस्परं संवादं कुर्मः । अतस्त्वमेवास्माकं पतिरसि । वयं तव भृत्याः स्म इति ऋगर्थः ।। १९ ।।

तद्विष्णोः परमं पदम् । ननु संसारात् निर्मुक्तत्वं कथं सूरिशब्दार्थः । ज्ञानित्वस्यैव तदर्थत्वात् इत्यत आह । तेहीति । संसारनिर्मुक्ता एव हि मुख्यतः सूरयः । ज्ञानफलस्य संसारमोक्षस्य तैरेवाप्तत्वादिति भावः । व्याप्तमपीति । अत्र चक्षुषां व्याप्तिर्नाम आकाशे ध्रुवादिमण्डलपर्यन्तं रश्मिद्वारा दूरगमनमेव विवक्षिता न तु मुख्यव्याप्तिः । अणवश्चेति सूत्रविरोधापरिहाराय इत्यमवगन्तव्यम् । विषयोपलब्धीति । रूपलक्षणविषयोपपत्तिरित्यर्थः । अनुमीयत इति । अयं चक्षुष्मान् रूपज्ञत्वात् इत्यनुमीयत इत्यर्थः । ज्ञायत इति । ब्रह्माद्याः पदार्थाः स्वसत्तादिषु परसापेक्षाः अस्वतन्त्रत्वादि-त्यनुमीयत इत्यर्थः ।। २० ।।

तद्विप्रासो विपन्यवः । ननु विज्ञानेन कथं ज्ञानमित्यत आह । करण इति । विपूर्वकात् ज्ञाअवबोधने अस्मात् करणे ल्युटि अनादेशे च सति विज्ञानमिति ज्ञानसाधनमुच्यते इत्यर्थः । तथाच ब्रह्मा त्वो वदति जातविद्यामिति श्रुतेः ज्ञानैः शास्त्रैः ज्ञापयन्तीत्यर्थो द्रष्टव्यः । ज्ञानितमा इति । वीत्युपसर्गस्यातिशयार्थत्वादिति भावः । ततोयुरिति । विपूर्वकात् पन् ज्ञाने अस्मात्कर्तरि युप्रत्यये पन्युशब्दो ज्ञानवाचीत्यर्थः । एतदृगर्थ इति । मुक्तज्ञेयत्वम् इत्यर्थः । उदित इति । तद्विष्णोः परमंपदं सदा पश्यंति सूरयः इत्युदित इत्यर्थः । अस्मिन्नर्थ इति । मुक्तज्ञेयत्वेनाभिप्रेत विष्णोः सर्वोत्तमत्व इत्यर्थः ।। २१,७,३ ।।

## पदार्थदीपिका

पृथिवीमारभ्येति । अध्याहृतेन अभिविध्यर्थकेन आङा योगे पृथिव्या इति पञ्चमीति भावः । सप्तभिरिति । सुपां सुलुगित्यादिना भिसो लुकि सप्तेति ऋक्पदमिति भावः । सप्तलोकैरिति । सप्तपदसहितस्य धामभिरित्यस्य सप्तलोकैरिति भाष्यपदं प्रतिपदमिति भावः । इति शेष इति । हत्वेत्यादिः श्रुतिशेषो भाष्य उच्यते इत्यर्थः । चेष्टाबलेति । णकारो बलं षकारःप्राण आत्मेत्यादि श्रौतक्रमं अनुसृत्य विशिष्टेत्यादि प्राचीनभाष्ये निरुक्तम् । प्राण इत्यादिभाष्यं निरुच्यमानवर्णक्रमं अपेक्ष्य प्रवृत्तमिति भावः ।। १६ ।।

(पदार्थदीपिका)

अचेतनानां पांसूनां रत्यसंभवादाह। शोभन्त इति। व्यत्ययेन रमेः परस्मैपदमिति ज्ञेयम्। अनेकार्थत्वात् धातूनां पुरोभावार्थत्वं इति भावः। एवं पूर्वपदस्य मुख्यार्थत्वमङ्गीकृत्य व्याख्यातम्॥ यद्वा रमेर त्यर्थत्वमेव। पांसुपदं च न अचेतनपांसुपरं किन्तु लक्षणया देवपरमस्त्वित्याह। यद्वेति। तदाश्रिता इति लक्षणाबीज सम्बन्धोक्तिः। वहतेरिति। वहप्रापणे 'निष्ठे'ति क्तः। वचि स्वपीत्यादिना यजादित्वात् सम्प्रसारणम्। होढ इति ढत्वम्। ततो झषस्तथोर्धोऽध इति तकारस्य धत्वं, तस्य ष्टुत्वम्। ढः। ढो ढे लोपः। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सम्प्रसारणस्य दीर्घः। अज्मध्यस्थढकारं चल्हकारं वै यथाक्रममित्युक्तेः ल्हकार इति भावः॥ १७॥

पोरदुपधादिति दंभेर्ण्यदिति। पोरदुपधादित्यदुपधादेव ण्यदपवादयद्विधानात्। अस्य च नोपधत्वेन अदुपदत्वाभावात् ण्यदपवादयतोऽप्राप्तेः निरपवाद ऋहलोर्ण्यदिति ण्यदित्यर्थः। यद्वा अचो यत् पोरुपधादिति लक्षणप्राप्त यद्बाधनार्थं प्रवृत्ते 'आसुयुवपिरपि त्रपिचमश्च' इति सूत्रे अनुक्तसमुच्चयार्थ चकारसूचितेन 'दम्भेश्च' इति वार्तिकेन दम्भेर्ण्यदित्यर्थः। अत एवोक्तं वृत्तौ अनुक्तसमुच्चयार्थश्चकार इति। दभेर्दाभ्यामिति। नच नकारलोपाभावात् अदाभ्य इति रूपासिद्धिरिति वाच्यम्। दम्भेरिति वार्तिकनिर्देशेनैव तदुपपत्तेः। तदुक्तं कौमुद्याम्। नलोपिनो निर्देशात् नलोप इति। छन्दस्युभयथेति सार्वधातुकतया पठितत्वात्तत्सिद्धि रित्यप्याहुः॥ ननु नोपधस्य दम्भेरदुपधत्वाभावेन ण्यदपवादयदप्राप्तौ औत्सर्गिकस्य ण्यतः सिद्धत्वात् तस्माण्ण्यद्विधानवैयर्थ्यम्। अथ अदुपधादेव दभेस्तद्विधानं तस्यैवाभावेन ततो यदप्राप्तौ ततो ण्यद्विधानानर्थक्यात्। ततश्च न उदाहृत वार्तिकादपि तत्सिद्धिरिति चेत् अत्राहुः। अदुपधादेव ण्यद्विधानमेतदिति। न चोक्तदोषः अदुपधस्यापि तस्य अवश्यमङ्गीकार्यत्वात्॥ अत एव दभेः प्रकृत्यन्तरत्वं न्यासे उक्तम्। दभिः धातुष्वपठित एव। प्रकृत्यन्तरमस्तीति पाणिनीयमतदर्पणे च दभिरवमेऽर्थे सौत्र इत्युक्तं क्षीरतरङ्गिण्यां दभ इति चुरादावस्तीत्युक्तम्। दभदभिविपरिपडियस्तेपक्षेय इति पठित्वोदाहृतं च। दाभाययतीति। तस्मात् अदुपधादेव ण्यद्विधानमेतत्। दभेश्चेति। न च नलोपिनो निर्देशात् नलोप इति कौमुद्युक्तिविरोधः स्यादिति वाच्यम्। तस्य लोपो दर्शनं ततो नलोपिनो निरनुषङ्गस्य दभेश्चेति वार्तिके निर्देशात् लोपः। निरनुषङ्गो दभिः प्रकृत्यन्तरमस्तीति शेषपूरणेन व्याख्यातुं शक्यत्वेन तदसंभवात्। तथा च ण्यदपवादेन यद्विधानेऽपि अदुपधादेव तद्विधायकत्वात् वार्तिकस्य कथं नोपधात् दम्भेः ण्यत्प्रत्ययाश्रयणं टीकाकारीयं न युक्तम्। तस्मादेतत् चिन्त्यमिति। अत्र ब्रूमः। प्रकृत्यन्तरकल्पने प्रमाणप्रयोजनयोरभावात् अनुक्तसमुच्चयार्थचकारसूचितवार्तिकस्य दम्भु दम्भन इति नोपधादेव ण्यद्विधायकत्वस्यावश्यकत्वेन तथा टीकाकारीयव्युत्पादनस्य उपपन्नतरत्वात्। न च

(पदार्थदीपिका)

तस्माद्यतोऽप्रसङ्गात् ण्यतो विधानवैयर्थ्यमित्युक्तमिति वाच्यम्। ण्यत्संनियोगेन नलोपनिपात-नार्थत्वात्। अत एव 'नलोपिनोऽपि निर्देशात् नलोप' इति कौमुद्युक्तमपि यथाश्रुतमेव साधु। अन्यथाऽध्याहारादिप्रसङ्गादिति दिक्। स्याद्धर्ममस्त्रियामित्यभिधात् नपुंसकत्वमिति भावेनाह। धारकानिति। शेष इति। शेषोक्तिर्भाष्य इत्यर्थः ॥ १८ ॥

विष्णोर्वेति। अशेषतः प्राणिकर्माणि यतो विष्णोः सकाशात् जातानि इत्येवमशेष-प्राणिकर्मजनकत्वं विष्णोर्विशेषणमित्यर्थः॥ योग्यानुपलम्भबाधितमेतदित्याशङ्का कथं पस्पश इत्यनेन परिहृता इत्यत आह। ततश्चेति। योग्यस्यानुपलम्भो बाधको नानुपलम्भमात्रं इति भावः॥ लिडन्तस्येति। द्विर्भावे शर्पूर्वाः खयः इति पकारः शिष्यते सकारो लुप्यते इति भावः। युज्यः योगार्ह इति। कृत्यल्युटो बहुलमिति बाहुलकात् युजेः क्यप्। अर्हे कृत्य तृचश्च इति स्मरणात्। कित्वाद्गुणाभाव इति भावः। एकवाक्यतयेति। विष्णोः कर्माणि पालनादीनि पश्यत। यतो यैः कर्मभिः व्रतानि अग्निहोत्रादीनि पस्पशे। सर्वो यजमानः स्पृष्टवान् विष्णो रनुग्रहादनुतिष्टतीत्यर्थः। तादृशो विष्णुः इन्द्रस्य युजो योग्योऽनुकूलः सखा भवतीति पूर्वोत्तरार्धयोः भिन्नतया यत्परेषां अपव्याख्यानं तत्सम्भवत्येकवाक्यत्वे वाक्यभेदस्य अयुक्तत्वादनाश्रयणीयं इति भावः। अर्थान्तरं चेति। अत एव भाष्ये इन्द्रनाम्नश्चेति चशब्दः इति भावः। कथं तर्हि प्राणस्यैव इति एवशब्द इत्यत आह। एवशब्देनेति। प्रतिष्ठास्यामि इति ईक्षित्वा स विष्णुः प्राणमसृजत इत्यर्थः। इयं हीति। तवेदिन्द्र युजा वयं प्रतिब्रवीमहि स्पृधः। त्वमस्माकं तव स्मसि इतीयं ऋक् 'प्राण एवोक्थं इति विद्यात्। तं देवा अब्रुवन् त्वमुत्त्थमसि त्वमिदं सर्वमसि तव वयं स्मः त्वमस्माकमसीत्यर्थे तदप्येतदृषिणोक्तं 'त्वमस्माकं सवस्मसी'ति प्रतीकग्रहणेन उदाहृता। अतः प्राण इन्द्राभिदो मत इत्यर्थः॥ १९ ॥

दृष्टान्तस्येति। कर्तरि दृष्टान्त इति प्रतीतिनिरासाय कर्मदृष्टान्तवचनस्य तात्पर्यमाहेत्यर्थः ॥२०॥

सन्दीपयन्तीति भाष्ये स्वार्थेणिच् इति भावेनाह। जानन्तीति। हेतुमत्येव वा णिच् इति भावेनाह। ज्ञापयन्ति चेति। करण इति। भावार्थस्यानन्वयादिति भावः। प्राप्तजागरा इति। जागृ निद्राक्षय इत्यस्मात् लिटः क्वसुः। क्रादिनियमात् प्राप्तस्य इटो वस्वेकाजाद्धसामिति नियमान्निवृत्तिरिति भावः। पनतिरिति। स्तुत्यर्थोऽपि पनतिः धातूनामनेकार्थत्वात् प्रकृते ज्ञानार्थ इत्यर्थः। ततो युरिति। यजिमनीशुन्धिदसिजनिभ्यो युरिति विधियमानो 'यु' प्रत्ययो बाहुलकात् अस्मादपि भवतीत्यर्थः। वीत्युपसर्गदर्शनात् तमपः प्रयोगः। बाहुलकादेव च युवोरनाकाविति योरनादेशो न जात इति ध्येयम्॥ २१, ७॥

## टीकाविवृतिः

अतो देवाः ।। घटयन्निति ।। शेषोक्त्येति शेषः । पृथिव्या इति ल्यब्लोपनिमित्ता पञ्चमीत्याशयेनाह ।। पृथिवीमारभ्येति ।। श्रुतौ सप्तेति पदं सुपां सुलगिति तृतीयायाःलुकि धामभिरित्यस्य विशेषणम् । भाष्ये तत्प्रतिपदं सप्तलोकैरिति तु समासरूपमित्याशयेनाह ।। सप्तलोकैरिति ।। जगदिति भाष्यं इदं विष्णुरित्यतः इदमित्याकृष्टस्य व्याख्यानरूपमिति भावेनाह ।। इदमिति वक्ष्यमाणं जगदिति ।। शेष इति ।। हृत्वेत्यादिः श्रुतिशेषो भाष्ये उच्यते इत्यर्थः । अतश्शब्दार्थमाह ।। एवमिति ।। श्रुत्युक्तनिर्वचनक्रमानुसारेण भाष्ये विशिष्टबलचेष्टत्वादित्युक्तम् । प्राणं बलमिति तु विष्णुशब्दगतवर्णक्रमेणेतिभावः । षकारो हि वर्णः । तदात्मकत्वं कथं प्राणस्येत्यतःषकारशब्दं व्याचष्टे ।। षशब्देनेति ।। १६ ।।

इदं विष्णुः ।। पांसूनां जडत्वात्सुखासंभवात्कथं रमन्तीत्युच्यत इत्यत आह ।। शोभन्त इति ।। चक्षिङो ङित्करणादनुदात्तेत्वलक्षणात्मने- पदस्यानित्यत्वाद्रमन्तीति युक्तमिति भावः । अमुख्यार्थाङ्गीकारारुचेराह ।। यद्वेति ।। वहतेरिति ।। क्तप्रत्यये यजादित्वात्संप्रसारणे होढ इति ढत्वे झषस्तथोरिति क्तस्य धत्वे ष्टुत्वेन ढोढे लोप इति ढ्लोपे पूर्वस्य दीर्घोऽण इति संप्रसारणस्य दीर्घे चेति शेषः । अज्मध्यस्थढकारं च ळ्हकारं वै यथाक्रममित्युक्तेळ्हकार इति भावः ।। अत्रापीति ।। द्वितीयार्थेपि पूर्वार्धोक्तमिदमिति पदमित्यर्थः ।। १७ ।।

त्रीणि पदा ।। वेदानिति ।। ऋग्यजुःसामाख्यानित्यर्थः ।। जीवानिति ।। देवमानुषदानवानिति जीवमात्रविवक्षयेति भावः ।। उक्तमिति ।। ऋचीति शेषः । गुपेरसिप्रत्यये अत्वसंतस्येति दीर्घे निष्पन्नगोपा इत्यस्य रक्षकत्वमात्रार्थकत्वात्स्रष्टृभर्तृत्वत इति कस्यार्थ उच्यते इत्यत आह ।। तदुपलक्षणेति ।। सर्वाणीत्यस्य त्रीणीत्यनेनान्वयमुक्त्वा विष्णुशब्दार्थभूतविभुरित्यस्यान्वयमाह ।। पूर्वेणेति ।। पोरदुपधादितीति ।। यतिप्राप्ते लपिदभिभ्यां चेति वार्तिकेनेति शेषः । ननु दंभेः पवर्गान्तत्वेपि नकारोपधत्वाददुपधत्वाभावात्पोरदुपधादिति कथं प्राप्तिरिति चेदत्रेदमतिरहस्यम् । लपिदभिभ्यांचेतिवार्तिकेधातुत्वावस्थायां नालोपनिपातनान्नकाररहितदंभेरपि क्वचित्प्रयोगाभ्यनु- ज्ञानात् । नतानंशन्तिनर्दभातितस्करः इति वेदे नकाररहितप्रयोगदर्शनाच्चात्रापिनकार- रहितदंभेरदुपधत्वात्पवर्गान्तत्वाच्च ऋहलोर्ण्यदित्यस्यापवादेन पोरदुपधादिति सूत्रेण यत्प्राप्ते लपिदभिभ्यां चेति ण्यत्प्रत्ययः ।। धर्माणीति ।। धृधातोः अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्निति मन्प्रत्ययः । धर्मोऽस्त्रीपुण्य आचार इत्यभिधानान्नपुंसकत्वमपीति भावः ।। १८ ।।

(टीकाविवृतिः)

विष्णोःकर्माणि ॥ शेष इति ॥ श्रुतौ शेषोक्तिरित्यर्थः ॥ विष्णोर्वेति ॥ यत इत्येतत्पदं विष्णोर्विशेषणमित्यर्थः ॥ अनुपलंभेति ॥ विष्णोस्तत्कर्मणां च प्राणिकर्मप्रेरकत्वस्य चानुपलंभादित्यर्थः । अज्ञानदर्शनयोर्विरोधं परिहरति ॥ ततश्चेति ॥ लिडन्तस्येति ॥ स्पशेर्लिटि द्वित्वे शर्पूर्वाःखय इति पकारशेष इत्याशयः । युजेःकृत्यल्युटो बहुलमिति बहुलोक्तेःक्यबित्याशयेनाह ॥ योगार्ह इति ॥ अर्हे कृत्यतृचश्चेति स्मृतेरिति भावः । भिन्नवाक्यताप्रतीतिवारणाय यच्छब्दाध्याहारेण योजनामाह ॥ अत्र इति ॥ अर्थांतरं चेति ॥ अत एव भाष्ये चशब्द इति भावः । प्राणस्यैवेत्यवधारणात्प्रसिद्धेन्द्रव्यावृत्तिः स्यादित्य आह ॥ एवशब्देनेति ॥ तत्कृत इति ॥ प्राणस्येन्द्रशब्दवाच्यत्वे युज्य इत्युक्तविष्णुसंबन्धःकुत इत्यर्थः ॥ इति सप्राणमिति ॥ इति विचार्य स विष्णुः प्राणमसृजतेत्यर्थः ॥ त्वयेदिन्द्रयुजा वयं प्रतिब्रुवीमहि स्पृधः । त्वमस्माकं तवस्मसीति श्रुतिः । हे इन्द्र युजा विष्णुयुक्तेन त्वया । प्रतिस्पृधः श्रैष्ठ्ये पूर्वं विवादोपेताः पश्चात्पराभूताः सन्तो वयं त्वां प्रतिब्रवीमहि ब्रूमः । किमिति । त्वमस्माकं स्वाम्यसि । वयं तव दासाः स्मसि स्मः इति प्रतिपादयन्ती कथं प्राणपरेत्यत आह ॥ इयं हीति ॥ इयं हि श्रुतिःप्राणउक्थमित्येव विद्यात्तं देवा अब्रुवंस्त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मःत्वमस्माकमसीति तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति प्रतीकमुपादाय स्वोक्तार्थे उदाहृतेत्यतः प्राण इन्द्रशब्दवाच्य इत्यर्थः ॥ १९ ॥

तद्विष्णोः ॥ ते हीति ॥ धीमान्सूरिःकृती कृष्टिरित्यमरोक्तेः सूरयो ज्ञानिन इत्यर्थः । सूरयो विष्णोःआततं पदं पश्यन्तीत्यत्र दिवि चक्षुषोव्याप्तत्वं कथं दृष्टान्त इत्यत आह ॥ दृष्टान्तस्येति ॥ दृष्टान्तदार्ष्टान्तिकभावं विशदयति ॥ यथाहीति ॥ नायं सूरिभिर्व्याप्तपददर्शने दृष्टान्तः असंभवात् । किन्तु विष्णुपदस्य व्याप्तत्वे अस्माभिरपि दृश्यत्वं स्यादित्याशंकावारणाय दृष्टान्त उक्त इति भावः । ज्ञायत इत्यनन्तरं अस्माभिरिति शेषः । तादृशं पदं सूरयः पश्यन्तीत्यन्वयः ॥ २० ॥

तद्विप्रासः ॥ इन्धी दीप्ताविति ॥ अस्माल्लटि रुधादित्वात् श्नमि श्नसोरल्लोप इति श्नमोकारलोपे समिन्धते इति रूपमिति शेषः । सन्दीपयन्तीत्यत्र स्वार्थिकणिच्माश्रित्याह ॥ जानन्तीति ॥ हेतुमण्णिजाश्रयेणाह ॥ ज्ञापयन्ति वेति ॥ ऐक्यात् विज्ञानानां ज्ञानसाधनत्वं कथमित्यत आह ॥ करण इति ॥ श्रुतिशेषस्य विज्ञानैरित्यस्य करणे ल्युडंतस्य वेदाद्यर्थकत्वान्नोक्तशङ्कावकाशः ॥ जागृवांस इति ॥ जागर्तेर्लिटःक्स्वादेशो द्विपन्युरिति मेधाविनामसु पाठाच्चेति भावः । विशब्दस्यार्थो भाष्ये तमपोक्तो बोध्यः ॥ ततोयुरिति ॥ बहुलग्रहणादौणादिको युप्रत्ययस्यानादेशाभावश्चेति भावः ॥ पूर्वस्यामिति ॥ तद्विष्णोरित्यस्यां विष्णोः सर्वोत्तमत्वादिरूपोर्थ उक्त एवेत्यर्थः ॥ २१ ॥ ७ ॥ ३ ॥

ऋक्संहिता पदपाठसहिता (सू-२३, व-१)

(२३०) तीव्राः सोमास आगह्याशीर्वन्तः सुता इमे ॥
वायो तान्प्रस्थितान्पिब ॥ १ ॥
(प०) तीव्राः । सोमासः । आ । गहि । आशीःऽवन्तः । सुताः ।
इमे ॥ वायोइति । तान् । प्रऽस्थितान् । पिब ॥ १ ॥
(२३१) उभा देवा दिविस्पृशेन्द्रवायू हवामहे ॥
अस्य सोमस्य पीतये ॥ २ ॥
(प०) उभा । देवा । दिविऽस्पृशा । इन्द्रवायूइति । हवामहे ॥ २ ॥
(२३२) इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये ॥
सहस्राक्षा धियस्पती ॥ ३ ॥
(प०) इन्द्रावायूइति । मनःऽजुवा । विप्राः । हवन्ते । ऊतये ॥
सहस्रऽअक्षा । धियः । पतीइति ॥ ३ ॥
(२३३) मित्रं वयं हवामहे वरुणं सोमपीतये ॥ जज्ञाना पूतदक्षसा ॥४॥
(प०) मित्रम् । वयम् । हवामहे । वरुणम् । सोमऽपीतये ॥ जज्ञाना ॥
पूतऽदक्षसा ॥ ४ ॥
(२३४) ऋतेन या वृतावृधा वृतस्य ज्योतिषस्पती ॥ ता मित्रा वरुणा
हुवे ॥ ५, ८ ॥
(प०) ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पतीइति ॥
ता । मित्रावरुणा । हुवे ॥ ५, ८ ॥

ऋग्भाष्यम्

वीर्यवंतश्च ये सोमा यजमानेष्टसाधकाः । पिब तान् ॥ १ ॥ सर्वदेवानां ज्ञानाधिक्यौ दिविस्पृशौ ॥ २ ॥ मनसः प्रेरकौ चैव बहुज्ञानौ धियस्पती ॥ ३ ॥ जज्ञानौ व्यज्यमानौ तु यजमानस्य शोधकौ ॥ ४ ॥ परेण ब्रह्मणा तस्मिन्वृद्धौ सत्यपती सदा । सत्यं ज्योतिः प्रकाशत्वात्तौ मित्रावरुणौ हुवे ॥ ५, ८ ॥

## ऋग्भाष्यटीका

तीव्राः सोमासः । चतुर्विंशत्यृचमिदं सूक्तम् । तत्राद्यावायव्या । यच्छब्दाध्याहारेणैक वाक्यतया व्याख्याति । वीर्यवन्त इति । हे वायो य इमे तीव्रास्तिग्मा आशुकारिणो वीर्यवन्त इति यावत् । आशीर्वन्तः । आशीरित्याशास्यमानोर्थः । तद्वंतस्तेन सह साध्यसाधनभाववन्त इत्यर्थः । यजमानेष्टसाधकाश्च । सुता अभिषुताः । सोमासः सोमाः सन्ति । तान्प्रस्थितान्प्रस्थित नामकांस्त्वदभिमुखान्वा प्रत्यागह्यागच्छ पिब च ॥ १ ॥

उभा । द्वे ऐंद्रवायव्यौ । अत्र दिविस्पृशेति व्याख्याति । सर्वदेवानामिति । निर्धारणे षष्ठ्येषा । द्यौरिति दीव्यतेर्द्युत्यर्थस्य गत्यर्थस्य वा रूपम् । उभयथापि ज्ञानवाचकम् । विषयसप्तमी चेयम् । ततश्च दिविस्पृशौ । ज्ञानसम्बन्धिनाविति लभ्यते । देवशब्दसन्निधान सामर्थ्याच्च देवानां मध्य इत्यपि । ज्ञानेनाधिक्यं ययोरिति व्यधिकरणो बहुव्रीहिः । ज्ञानस्याधिक्यमिति तत्पुरुषाद्वाऽर्श आदिभ्योच् । आधिक्यग्रहणं निर्धारण-सामर्थ्यलभ्यम् । उभौ देवौ दिविस्पृशाविन्द्रवायू वयमस्य सोमस्य पीतये हवामहे ॥ २ ॥

इन्द्रवायू । अत्र मनोजुवाविति व्याख्याति ॥ मनस इति ॥ जुवतिः प्रेरणार्थः सौत्रो धातुः । अर्थान्तरसमुच्चयार्थश्चशब्दः । मनोजुवौ मनोवेगिनौ । सहस्राक्षशब्दं व्याख्याति । बहुज्ञानाविति । सहस्रशब्दोऽपरिमितनाम । अक्षशब्देन च तज्जन्यसाक्षात्कारो लक्ष्यते । एकः सहस्राक्षः । अपरस्मिंल्लक्षणेति व्याख्यानं मुख्ये सत्ययुक्तमित्येव शब्देनाह । किं चास्मद्व्याख्याने धियस्पती इत्येतदपि हेतुत्वेन सङ्गच्छत इत्याशयेनाह ॥ धियस्पतीति । मनोजुवौ सहस्राक्षौ धियस्पती इन्द्रवायू विप्रा मेधाविनः ऊतये रक्षायै हवन्ते आह्वयन्ति ॥ ३ ॥

मित्रम् । तृचो मैत्रावरुणः । जज्ञाना पूतदक्षसेति पदद्वयं क्रमेण व्याख्याति । जज्ञानाविति ॥ वयं मित्रं वरुणं च सोमपीतये हवामहे । यावाहूतौ जज्ञासौ यज्ञेषु व्यज्यमानौ भवतः । व्यक्तौ पूतदक्षसौ पूतो दक्षो यजमानो याभ्यां तौतथोक्तौ ॥ ४ ॥

ऋतेन यौ । परेण यावृतेन सकलवेदावगतेन ज्ञानरूपेण वा परेण ब्रह्मणा ऋत वृधौ ऋतेतस्मिन्नेव ब्रह्मणि वृद्धौ ऋतस्य पती सत्यपती । तौ मित्रावरुणावहं हुवे । परमेश्वरविषये वृद्धिः कादाचित्की न सम्भवतीत्यतः सदेत्युक्तम् । ऋतस्य ज्योतिष इति सामानाधिकरण्यम् । तत्र सत्यस्य ज्योतिष्ट्वं कथमित्यत आह । सत्यमिति । प्रकाशत्वात् प्रसिद्धत्वात् । सत्यमेव हि प्रमाणप्रसिद्धं भवति ॥ ५, ८ ॥

## मन्त्रार्थमञ्जरी

अथ 'ती॒व्राः' इति त्रयोविंशं चतुर्विंशत्यृचं वर्गपञ्चतयात्मकं नानादैवत्यं नानाछन्दस्कं सूक्तम्। तत्र (आदितोऽष्टादश गायत्र्यः) आद्या वायव्या। (हे) वायो (ये) इमे। तीव्राः, तिग्माः, आशुकारिणो वीर्यवन्त इति यावत्। आशीर्वन्तः, 'आशीः' इत्याशास्यमानोऽर्थः, तद्वन्तः, तेन सह साध्यसाधनभाववन्तो यजमानेष्टसाधकाश्च। सुताः, अभिषुताः। सोमासः, सोमाः। (सन्ति) तान्। प्रस्थितान्, त्वदभिमुखान्प्रति। आ गहि, आगच्छ। पिब (च)॥ १॥

द्वयोरिन्द्रवायू देवते॥ उभा, उभौ। देवा, देवौ, क्रीडादिगुणयुक्तौ। दिविस्पृशौ, दीव्यतेः द्युत्यर्थस्य गत्यर्थस्य वा क्विपि रूपम्, विषयसप्तम्येषा, उभयथापि ज्ञानं तदर्थः, दिवि ज्ञानविषये स्पृशतः सम्बन्धीत इति दिविस्पृशौ ज्ञानाधिकौ। इन्द्रवायू (वयम्) अस्य सोमस्य पीतये हवामहे॥ २॥

मनोजुवा, मनोजुवौ, मनः प्रेरकौ, 'जु प्रेरणे' (सौत्रो धातुः), विच् (क्विप्) मनोवेगिनौ वा धातूनामनेकार्थत्वात्। धियः पती, बुद्धीनां स्वामिनौ, हेतुगर्भम्– धीपतित्वात् सहस्राक्षा, सहस्राक्षौ, सहस्रशब्दोऽमितवाची, अक्षशब्दस्तज्जन्यसाक्षात्कारपरः, बहुज्ञानौ। इन्द्रवायू, विष्णुरूपविशेषौ, प्रसिद्धदेवौ वा। विप्राः, मेधातिथिप्रभृतयः। ऊतये, रक्षार्थम्। हवन्ते, आह्वयन्ति॥ ३॥

तृचो मैत्रावरुणः। वयम् मित्रम् वरुणम् (च) सोमपीतये हवामहे। (यौ) आहूतौ। जज्ञाना, जज्ञानौ, यज्ञेषु व्यक्तौ भवतः। व्यक्तौ च पूतदक्षसा, पूतदक्षसौ, पूतो दक्षो यजमानो याभ्यामिति तथोक्तौ, यजमानं पूतं कृतवन्तावित्यर्थः। 'जनी प्रादुर्भावे' इत्यतो लिटि द्विर्वचने लिटः कानचि 'गमहनजन' इत्युपधालोपे 'जज्ञान' इति रूपं ज्ञेयम्॥ ४॥

यौ। ऋतेन, सकलवेदावगतेन, ज्ञानरूपेण वा, 'ऋ गतौ' इत्यतः कर्मणि भावे वा क्तः, परब्रह्मणा। ऋतवृधौ, ऋते ब्रह्मणि वृधौ वृद्धिमन्तौ। ज्योतिषः, प्रकाशरूपस्य, प्रमाणसिद्धस्येति यावत्। ऋतस्य, सत्यस्य। पती। ता, तौ। मित्रावरुणा, मित्रावरुणौ। (अहम्) हुवे, आह्वयामि। विष्णुविषये तु 'ऋतेन, ऋतवृधौ' इत्यनयोः 'ऋ॒तेन॒ मित्रावरुणा' इत्यत्रेवार्थो ध्येयः॥ ५॥
इत्यष्टमो वर्गः॥ ८॥

## रूपावतारः

तीव्राः सोमासः । प्रस्थितनामकानिति सोमानामुत्तरवेदिं प्रति नीतत्वात् प्रस्थितनामकत्वमिति भावः ॥ १ ॥

उभा देवा । दीव्यतेरिति क्विप्प्रत्यये रूपमिति भावः ॥ २ ॥

इन्द्रवायू । धियस्पती इतीति ''षष्ठ्याः पति...' (८।३।५३) इत्यनेन सूत्रेण संहितायां षष्ठीविसर्गस्य सकारे धियस्पती इति भवति ॥ ३ ॥

मित्रम् । पूतदक्षसाविति । दक्षेति प्रातिपदिकस्य सुगागमे पूतदक्षसाविति रूपम् ॥ ४ ॥

ऋतेन यौ । प्रकाशत्वादिति ॥ द्युत् धातोः 'द्युतेरिसिन्नादेशश्च ज' (उ. २७५) इति इसिन्प्रत्यये आदेश्च जत्वे गुणे ज्योतिः शब्दनिष्पत्तेरिति भावः ॥ ५, ८ ॥

## पदार्थप्रकाशिका

तीव्राः सोमासआगहि । तीव्राश्चतुर्विंशतिरित्यनुक्रमणिकानुसारेणाह । चतुर्विंशत्यर्चमिति । वायव्येत्यनुक्रमणिकाशेषं पूरयन् व्याख्याति । तत्राद्या ऋग्वायव्येति । आशास्यमानार्थवत्वं सोमानां केन सम्बन्धेनेत्यत आह । तेन सहेति । तथाच यजमानाशास्यमानार्थसाधनभूता इत्यर्थो लभ्यत इति द्रष्टव्यम् । एवम् ऋक्पदं स्वयं व्याख्याय तत्र भाष्यं संयोजयति । यजमानेति । चशब्दस्तीव्रत्वरूपविशेषणसमुच्चयार्थ इत्यवगन्तव्यम् । वायुपेयसोमभागानां प्रस्थितनामकत्वस्य यज्ञकाण्डप्रसिद्धत्वादाह । प्रस्थितनामकानिति । प्रकर्षेणाभिमुख्येन स्थिताः प्रस्थिताः तानिति विग्रहमभिप्रेत्याह । त्वदभिमुखानिति ॥ १ ॥

उभादेवादिविस्पृशा । ऐन्द्र वायव्यमित्यनुक्रमणिकां हृदि निधायाह । द्वे ऐन्द्रवायव्याविति । दिवस्पृशावित्यस्य ज्ञानाधिक्याविति व्याख्यानमुपपादयति । द्यौरिति । दीव्यतेरित्यादि । दिवु क्रीडाविजिगीषाद्युतिस्तुतिस्वप्नमोदमदकान्तिगतिष्विति धातोरिति भावः । तथाच द्युत्यर्थस्य वा दिव्धातोर्भावे औस्प्रत्यये धातुसूत्रगणोणादीत्यनेन धातोरंत्यस्य लोपे दिऔस् इति स्थिते हलंत्यमित्यनेनैव प्रत्ययान्तस्य स् इत्यस्य लोपे दिऔ इति स्थिते यणादेशे द्यौ इति प्रातिपदिकनिष्पत्तौ सत्यां पश्चात् सुप्रत्यये तस्य रुत्वे विसर्गे च सति द्यौरिति रूपं तस्य सप्तमी दिवीति । उभयथापीति । द्युत्यर्थत्वेपि ज्ञानार्थत्वमेव । ज्ञानरूपद्युतेरेवात्र विवक्षितत्वात् । गत्यर्थत्वेपि ज्ञानार्थत्वमेव । गत्यर्थानां ज्ञानार्थत्वादिति भावः । विषयेति । दिवीति

(पदार्थप्रकाशिका)

विषयसप्तमीत्यर्थः । दिवस्पृशत इति ज्ञानविषये सम्बध्नीत इत्यर्थः । सर्वदेवानामित्येतन्नदिवस्पृक् शब्दार्थ इत्यत आह । देवशब्देति । उभौ देवौ दिवस्पृशावित्युक्ते देवानां मध्य इत्यर्थो लभ्यत इत्यर्थः ।

ननु ज्ञानाधिकाविति वक्तव्यं ज्ञानाधिक्याविति कथमित्यत आह । ज्ञानेनेति । ज्ञानाधिक्यशब्दादर्शाऽदिभ्यो जिति सूत्रेणास्यापि तद्गणस्थत्वात् मत्वर्थीयाच् प्रत्यये चकारलोपे यस्येतिचेति क्यकारस्थाकारलोपे प्रत्ययाकारसम्बन्धे च सति ज्ञानाधिक्यशब्दस्तद्वत्ववाचीत्यर्थः । तथाच ज्ञानेनाधिक्यं ज्ञानाधिक्यं ययोस्तौ ज्ञानाधिक्याविति विग्रहो द्रष्टव्यः । आधिक्यमपि न दिवस्पृक् शब्दार्थ इत्याह । आधिक्येति । निर्धारणसामर्थ्येति । आसां गवां मध्ये कृष्णा गौः बहुक्षीरेत्युक्ते क्षीराधिक्यवत्वं लभ्यते । एवमिहापि सर्वदेवानां मध्ये दिविस्पृशावित्युक्ते ज्ञानाधिक्यं लभ्यत इत्यर्थः ।। २ ।।

इन्द्रवायूमनोजुवा । जुवतिर्वेगार्थ एव प्रसिद्धो न प्रेरणार्थः अप्रसिद्धत्वादत आह । सौत्रो धातुरिति । ऊतियुतिजूतिसातिहेतिकीर्तयश्चेति सूत्रे प्रेरणार्थो जुवतिर्निपातित इत्यर्थः । तथाच मनोजुवावित्यस्य मनसः प्रेरकावित्यर्थो द्रष्टव्यः । अर्थान्तरमेव दर्शयति । मनोवेगवानिति । बहुज्ञानत्वं कथं सहस्राक्षशब्दार्थ इत्यतस्तदुपपादयति अपरिमितनामेति । बहूनामेत्यर्थः । अन्यथा प्रकृतार्थालाभ इत्यवधेयम् । तज्जन्यमिति लक्षणाबीजसम्बन्धोक्तिः । एकः इन्द्रः अपरस्मिन् वायौ । लक्षणेति । छत्रिन्यायेनेन्द्रसाहचर्येणेति शेषः । मुख्ये सम्भवतीति । अस्मदुक्तरीत्या बहुज्ञानत्वरूपसहस्राक्षशब्दार्थ इन्द्रवाय्वोः मुख्ये सम्भवति सतीत्यर्थः । एवशब्देनाहेति । तथाच बहुज्ञानावित्येवेति सम्बन्धो द्रष्टव्यः । हेतुत्वेनेति । यतोधियस्पती ज्ञानप्रेरकौ अतः स्वयमपि बहुज्ञानावित्येवं सहस्राक्षत्वे धियस्पतीत्येतत् हेतुत्वेन सङ्गच्छते न तु अमुख्यपक्ष इत्यर्थः । सहस्राक्षौधियस्यती इति । यतो धियस्पती अतः सहस्राक्षाविति योज्यम् ।। ३ ।।

मित्रं वयं हवामहे । मित्रावरुणा मरुत्वती सवैश्वदेवपौष्णस्तृचा इत्यनुक्रमणिकानुसारेणाह । तृचो मैत्रावरुण इति । ततः किमित्यत आह । यावाहूताविति । व्यक्तौ इति व्यक्तौ च सन्तावित्यर्थः ।।४।।

ऋतेन यावृतावृधौ । ब्रह्मणेति । प्रसन्नेन निमित्तेनेत्यर्थः ब्रह्मणि विषये । ज्ञानादिना वृद्धावित्यर्थः । वृद्धिर्ज्ञानादिना । मित्रावरुणयोरिति शेषः । सत्यस्य प्रसिद्धत्वं कुत इत्यत आह । सत्यमेवहीति । वह्निमत्वादेव धूमवत्वमिति वत् । प्रमाणसिद्धमेव सत्यमित्युच्यते । प्रामाणिकत्वमेव हि सत्यत्वमित्युच्यते । सर्वसम्मतेरिति भावः । तथाच ज्योतिषः प्रमाणसिद्धस्य सत्यस्य पती पालकावित्यर्थो द्रष्टव्यः ।। ५,८ ।।

## पदार्थदीपिका

आशीरित्यादि । आङ्पूर्वात् शासु इच्छायां इत्यस्मात् कर्मणि क्विपि 'आशासः क्वा'विति वक्तव्यात् क्षियाशीः प्रैशेषु इति निपतनाद्वा इत्वे सकारस्य रुत्वे र्वोरुपधाया इति दीर्घे च आशीरिति रूपम् । यस्मात् शासेः आङि तस्यैव शास इदङ् हलोरित्यत्र ग्रहणात् 'सर्तिशात् स्पर्तिभ्यश्च' इत्यत्र 'परस्मैपदे'ष्विति अनुवृत्तेः परस्मैपदिन एव शासेरङ्विधानात् 'शासु अनुशिष्टौ' इत्यस्यैव परस्मैपदित्वात् आशासेश्चात्मनेपदित्वात् 'शास इदङ्हलो'रित्यनेनेत्वाभावात् आशासः क्वावित्यनेनापि क्वावेव आशासेः इत्वप्राप्तेः आशास्यमान इति रूपं इति ज्ञेयम् ॥ प्रस्थितनामकानिति । उत्तरं वेदिं प्रत्यानीतानां सोमानां प्रस्थितसंज्ञकत्वादिति भावः ॥ १ ॥

द्यौरिति इति । प्रथमैकवचने 'दिव औदि'ति कृतौकारान्तं दिविति प्रातिपदिकमित्यर्थ इत्याहुः । दिविस्पृशत इति । हुद्युभ्यां ङेरुपसंख्यानमिति सप्तम्येकवचनाधिकरण्यं घटयति । ज्ञानेनेति । व्यधिकरणे ब्रहुव्रीहिरिति । गमकत्वादिति भावः । सति गत्यन्तरे व्यधिकरणबहुव्रीह्याश्रयणं अनुचितमित्यभिप्रेत्य पक्षान्तरमाह । ज्ञानस्येति । उभावित्यादि । श्रुतौ सुपां सुलुगित्यकार इति भावः । इन्द्रवायू इति । इन्द्रश्च वायुश्चेति द्वन्द्वः । उभयत्र वायोः प्रतिषेधो वक्तव्य इति निषेधात् न आनङिति भावः । हवामह इति । ह्वेञ् स्पर्धायां शब्दे च । बहुलं छन्दसीति सम्प्रसारणम् । सम्प्रसारणाच्चेति परपूर्वत्वम् । शप् गुणावादेशाविति भावः ॥ २ ॥

जुवतिरिति । 'जुचंक्रम्य' इत्यत्र जु इति सौत्रो धातुरिति वृत्तिकारोक्तेरिति भावः । मनोजुवाविति । जुवत इति जुवौ । अन्येभ्योपि दृश्यत इति विच् । 'अचि श्नुधातु' इत्यादिना उवङादेशः । मनसो जुवौमनोजुवौ इत्यर्थः इति भावः । अर्थान्तरमेवाह । मनोवेगिनाविति । गतौ वर्तत इत्येके । 'गतिविशेषे वेग इत्यपरे इति । न्यासकृद्वचनादिति भावः । मनोवत् जुवत इति मनोजुवाविति व्युत्पत्तिः बोध्या । अपरस्मिन् इति छत्रिन्यायेन इति शेषः । भाष्ये धियस्पती इति पदद्वयस्य स्वरूपेण उपादानप्रयोजनमाह । किञ्चेति । धियो मनसः पती पालकावित्यर्थः । षष्ठ्याः पतिपुत्रेत्यादिना संहितायां विसर्जनीयस्य सकार इति भावः ॥ ३ ॥

जज्ञानाविति । जनी प्रादुर्भावे अस्माच्छन्दसि लिट् । तस्य'लिटः कानज्वा' इति कानजादेशः । गमहनेत्यादिना उपधालोपः । तस्य 'अचः परस्मिन्' इति स्थानिवद्भावात् जन् शब्दस्य द्विर्वचनम् । 'स्तोश्चुना श्चु'रिति नकारस्य ञकार इति भावः । पूतदक्षसाविति । पूङ्पवने । निष्ठा इति क्तः । 'श्र्युकः किति' इति इट्प्रतिषेध इति भावः ॥ ४ ॥

(पदार्थदीपिका)

ज्ञानरूपेण वा इति । अर्तैः गत्यर्थात्कर्मणि भावे वा निष्ठा इति भावः । ऋतवृधाविति । वृधुवृद्धौ । क्विप् च इति क्विप् । अन्येषामपि दृश्यत इति संहितायां दीर्घः । मित्रावरुणा । देवेता द्वन्द्वे चेत्यानङ् । 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घ आकारः । हुवे । ह्वेञ आत्मनेपदोत्तमपुरुषैकवचने सम्प्रसारणे परपूर्वत्वे च कृते बहुलं छन्दसीति शपो लुक् टेरेत्वगुणे प्राप्ते क्ङिति च इति प्रतिषेधः । उवङादेश इति भावः । न भवतीति । देवतान्तरे 'सदा' इति भाष्यपदं न साध्यत इत्यर्थः । प्रकाशत्वदिति । द्युतेरिसिन् प्रत्ययः । आदेशश्च ज इति । ज्योतिरित्यस्य द्युतदीप्ताविति धातुरूपत्वादिति भावः । षष्ठ्याः पतिपुत्रेत्यादिना संहितायां विसर्जनीयस्य सत्वमिति भावः ॥ ५-८ ॥

## टीकाविवृतिः

तीव्राःसोमासः ॥ चतुर्विंशत्यृचमिति ॥ ऋषिछन्दसोरनुवृत्त्यासिद्धे ऋक्संख्यादेवताछन्दो-विशेषाश्चानुक्रमणिकायामुक्ताः । तीव्राश्चतुर्विंशति र्वायव्यैकं द्रवायव्यौ द्वे मैत्रावरुणमरुत्व-तीयवैश्वदेवपौष्णास्तृचाः शिष्टा आप्या अंत्याध्यर्धाग्नेय्य प्स्वंतःपुरउष्णिक् परानुष्टुप्तिस्रश्चांत्या एकविंशी प्रतिष्ठेति । अस्यार्थः । एका प्रथमा ऋक् वायव्या । वायुशब्दाद्वाय्वृतु- पित्रिति यत्प्रत्ययः। वायुदेवताका । द्वे ऋचावैंद्रवायव्यौ । ततःपर एकस्तृच ऋक्त्रयं मित्रावरुणदेवताकम् । तत एकस्तृचो मरुत्वतीयः । मरुद्गणयुक्तेन्द्रदेवताकः उभयदेवताक इति यावत् । मरुच्छब्दान्मतुपि तसौ मत्वर्थे इति भत्वाज्जस्त्वाभावे झय इति मतुपो वत्वे मरुत्वच्छब्दाद्देवतार्थे द्यावापृथिवीशुनासीरमरुत्वदग्नीति छप्रत्ययः । तत एकस्तृचो वैश्वदेवः । तत एकःपौष्णः पूषदेवताकः । षपूर्वहन्धृतराज्ञामणीत्यल्लोपः । शिष्टाः पञ्चदशभ्योऽन्याः सार्धसप्त ऋचः आप्याः अब्देवताकाः । अंत्या ऋक् अध्यर्धा पूर्वार्धेन पयस्वानग्ने इत्यर्धेनाधिकाऽऽग्नेयी अग्निदेवताका । अप्स्वंतरमृतमित्येषा ऋक् पुरउष्णिक् छन्दस्का । यस्या ऋचः आद्यःपादो द्वादशाक्षरःपादौ द्वावष्टाक्षरौ सा पुर उष्णिक् । द्वादशक आद्यश्चेत्पुर उष्णिगित्यनुक्रान्तत्वात् । परा अप्सु मे सोम इत्यृक् अनुष्टुप्छन्दस्का । द्वात्रिंशदक्षरयुतत्वात् । तथा अंत्यास्तिस्रः इदमापः आपो अद्य संमाग्ने इत्येताश्चानुष्टुभः । एकविंशी आपः पृणीतेत्येषा प्रतिष्ठाछन्दोयुता । यस्या ऋचःत्रयःपादाःक्रमेणाष्टाक्षर सप्ताक्षरषडक्षराःसा प्रतिष्ठा । यस्यास्तु षट्कसप्तकाष्टकाः सा वर्धमाना विपरीता प्रतिष्ठेत्यनुक्रान्तत्वात् । शेषा गायत्र्योनुवृत्तेरिति ॥ तिग्मा इति ॥ तीव्रमत्युष्णकटुकनितान्तेष्वन्यवन्मतमिति विश्वोक्तेरत्युष्णत्वस्य तिग्मपर्यायत्वादिति भावः । भाष्यन्तात्पर्यपरमित्याह ॥ आश्विति ॥ यजमानेष्टेति भाष्योक्तं तात्पर्यार्थं घटयितुमाह ॥

(टीकाविवृतिः)

आशीरित्याशास्यमान इति ॥ मत्वर्थं संबन्धमाह ॥ साध्यसाधनभावेति ॥ तेन सह आशास्यमानेन सह । आङ:शासु इच्छायामिति धातोः कर्मणि क्विपि आशासः क्वावुपधाया इत्वं वाच्यमितीत्वे सस्य रुत्वे र्वोरुपधाया इति दीर्घे चाशीरिति रूपम् । आशास्यमान इत्यत्र तु शास इदङ्हलोरिति नेत्वम् । अत्र शासु अनुशिष्टावित्यस्यैव ग्रहणादिच्छार्थकशासेरग्रहणादिति बोध्यम् ॥ प्रस्थितनामकानिति ॥ सोमानामुत्तरवेदिं प्रति नीतत्वात्प्रस्थित नामकत्वादिति भावः ॥ १ ॥

उभा देवा ॥ ऐन्द्रवायव्याविति ॥ इन्द्रवायुशब्दाद्देवतार्थेऽणि गुणे आदिवृद्धौ ङीबिति भावः । सर्वदेवेभ्य इति वक्तव्ये षष्ठीप्रयोगःकथमित्यत आह ॥ निर्धारण इति ॥ जातिगुण-क्रियासमुदायादेकदेशस्य पृथक्करणस्य निर्धारणत्वादत्रापि ज्ञानगुणेन देवेभ्य इन्द्रवाय्वोः पृथक्करणादिति भावः ॥ द्यौरितीति ॥ क्विबन्तस्य प्रथमैकवचने दिव औदित्यौत्वे द्यौरिति रूपयुक्तस्य दीव्यतेर्दिवीति रूपमित्यर्थः ॥ उभयथापीति ॥ ज्ञानस्यापि प्रकाशरूपत्वाद्गत्यर्थानां च ज्ञानार्थत्वादिति भावः ॥ देवशब्दसन्निधानेति ॥ उभा देवेति देवौ सन्तौ दिविस्पृशावित्युक्तेरयमर्थो लभ्यत इत्यर्थः ॥ व्यधिकरण इति ॥ सप्तमीविशेषणे बहुव्रीहावित्यत्र सप्तम्यन्तस्य पूर्वनिपात-सामर्थ्येनास्यार्थस्य ज्ञापनादिति भावः ॥ दिविस्पृशाविति ॥ हृद्युभ्याण्डेरुपसङ्ख्यानमिति सप्तम्या अलुगिति भावः ॥ इन्द्रवायू इति ॥ उभयत्र वायोःप्रतिषेध इति वार्तिकेनानङ्नेति भावः ॥ २ ॥

इन्द्रवायू ॥ सौत्र इति ॥ जुचंक्रम्येति सूत्रोक्तत्वेनानेकार्थत्वादिति भावः । जुवतेःक्विन्प्रत्यये उवङादेशे मनोजुवाविति रूपमिति भावः । अर्थान्तरमेवाह ॥ मनोवेगिनाविति ॥ मनोयोगि-नाविति क्वचित्पाठः । तत्र मनस्विनावित्यर्थः ॥ अपरिमितनामेति ॥ शतं सहस्रमिति बहुनामसु पाठादिति भावः । भाष्योक्तैवशब्दव्यावर्त्यमाह ॥ एक इति ॥ पुरंदर एकः । अपरस्मिन्वायौ तु छत्रिन्यायेनेति शेषः । मुख्ये सति उभयसाधारणे यौगिकरूपमुख्यार्थे सतीत्यर्थः । भाष्ये धियस्पती इति श्रौतपदद्वयानुवादः किमर्थ इत्यत आह ॥ किंचेति ॥ अमितज्ञानत्वे धियस्पतित्वं नाम बुद्ध्यभिमानित्वंहेतुरित्यर्थः । षष्ठ्याःपतिपुत्रेत्यनेन संहितायां विसर्गस्य सादेश इति भावः ॥ ३ ॥

मित्रं वयम् ॥ जज्ञानावितीति ॥ जनीप्रादुर्भावे इत्यतः कर्मणि लिटि कानजादेशे द्वित्वादौ गमहनेत्युपधालोपे चुत्वेन ञकार इति भावः । पूर्वार्धोक्तस्य व्यक्तिहेतुत्वाभिप्रायेणाह ॥ यावाहू-ताविति ॥ एवं व्यक्तेःयजमानपावित्र्यं प्रतिहेतुत्वमिति भावेनाह ॥ व्यक्तौ पूतदक्षसाविति ॥ ४ ॥

ऋते नयौ ॥ ऋधातोःकर्मार्थभावार्थक्तप्रत्ययाश्रयेणाह ॥ सकलवेदावगतेन ज्ञानरूपेणवेति ॥ परमेश्वरविषय इति ॥ अनेन देवतान्तरे कादाचित्की वृद्धिःसंभवतीत्युक्तं भवति ॥ प्रकाशत्वादिति

(टीकाविवृतिः)

॥ द्युत्धातोर्द्युतेरिसिन्नादेश्चज इतीसिन्प्रत्यये उपधागुणे च ज्योतिःशब्दनिष्पत्तेरिति भावः ॥ प्रसिद्धत्वादिति ॥ प्रमितत्वादित्यर्थः । तदुपपादयति ॥ सत्यमेव हीति ॥ ५ ॥ ८ ॥

ऋक्संहिता पदपाठसहिता (सू-२३, व-२)

(२३५) वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ॥
करतां नःसुराधसः ॥ ६ ॥

(प०) वरुणः । प्रऽअविता । भुवत् । मित्रः । विश्वाभिः ।
ऊतिऽभिः ॥ करताम् । नः । सुऽराधसः ॥ ६ ॥

(२३६) मरुत्वन्तं हवामह इन्द्रमा सोमपीतये ॥ सजूर्गणेन तृम्पतु ॥७॥

(प०) मरुत्वन्तम् । हवामहे । इन्द्रम् । आ । सोमऽपीतये ॥ सऽजूः ।
गणेन । तृम्पतु ॥ ७ ॥

(२३७) इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः ॥
विश्वे मम श्रुता हवम् ॥ ८ ॥

(प०) इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः ॥ विश्वे ।
मम । श्रुत । हवम् ॥ ८ ॥

(२३८) हत वृत्रं सुदानव इन्द्रेण सहसा युजा ॥
मा नो दुःशंस ईशत ॥ ९ ॥

(प०) हत । वृत्रम् । सुऽदानवः । इन्द्रेण । सहसा । युजा ॥ मा । नः।
दुःऽशंसः । ईशत ॥ ९ ॥

(२३९) विश्वान्देवान्हवामहे मरुतःसोमपीतये ॥
उग्रा हि पृश्निमातरः ॥ १०, ९ ॥

(प०) विश्वान् । देवान् । हवामहे । मरुतः । सोमऽपीतये ॥ उग्राः ।
हि । पृश्निऽमातरः ॥ १०, ९ ॥

## ऋग्भाष्यम्

संसिद्धान्कुरुतां नस्तौ ॥ ६ ॥ सगणस्तृप्यतां हरिः ॥ ७ ॥ पूषा पूर्णत्वतो विष्णुस्तन्मित्राः पूषरातयः ॥ ८ ॥ सहसा बलरूपेण शक्रेण सहिताः सुराः । मदज्ञानं हतातीव दानशीला न शक्नुयात् । दुर्वाक्तद्धान्पुमान्वानो ॥ ९ ॥ भारती पृश्निरुच्यते । गोरूपाच क्वचित्साभूत्तत्सुताश्चाखिलाः सुराः । अन्यत्रापि सुतास्तस्याः ॥ १०, ९ ॥

## ऋग्भाष्यटीका

वरुणः । अत्रोत्तरार्धं व्याख्याति । संसिद्धानिति । वरुणो विश्वाभिरूतिभिः सर्वाभी रक्षाभिः प्राविता प्रकर्षेणास्माकं रक्षको भुवत् भवेत् । तथा मित्रश्च । किञ्च तौ मित्रावरुणौ । नोऽस्मान्सुराधसः शोभनसिद्धिमतः । संसिद्धान्करतां कुरुताम् ॥ ६ ॥

मरुत्वन्तम् । तृचो मरुत्वतीयः । अत्रोत्तरार्धं व्याख्याति । सगण इति । वयं मरुत्वंतं मरुद्भिः सहितमिन्द्रम् । सोमपीतये आहवामहे । आहूतश्चेन्द्रो हरिर्गणेन मरुद्गणेन । सजूः सह सगणस्तृंपतु तृप्यताम् ॥ ७ ॥

इन्द्रज्येष्ठाः । पूषरातय इत्यस्यार्थमाह ॥ पूषेति ॥ पुषपुष्टौ । समित्रं येषां तेतन्मित्राः । हे इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो येषान्ते इन्द्रज्येष्ठाः । पूषा विष्णुः रातिर्मित्रं येषांते पूषरातयो मरुद्गणाः । सप्तसप्तका हि ते इति बहुवचनम् । देवासो देवाः । विश्वे सर्वे । मम हवम् आह्वानं श्रुत शृणुत ॥ ८ ॥

हत । सहसा । हे सुदानवः दाण्दाने । अस्मात्ताच्छीलिको नुः । अतीवदानशीलाः सुराः मरुतः सहसा बलरूपेण बलवता बलाभिमानिना चन्द्रेण । युजासता शक्रेण सहिता इति यावत् । वृत्रं सम्यग्ज्ञानावरणत्वादज्ञानम् । अभ्यर्हितत्वान्मदज्ञानम् । हत नाशयत । किञ्च । दुःशंसो दुष्टं शंसनं दुर्वाक् । यद्वा दुष्टः शंसो यस्यासौ दुःशंसः दुर्वाग्वान्पुमान्नोस्माकं मा ईशत न शक्नुयात् । अज्ञानमुत्पादयितुं शक्तो न भवेत् ॥ ९ ॥

विश्वान् । वैश्वदेवस्तृचः । अत्र पृश्निमातर इत्यस्यार्थमाह ॥ भारतीत्यादिना ॥ कथं भारती पृश्निरुच्यत इत्यत आह ॥ गोरूपा चेति । पृश्निशब्दो हि गोनामसु पठ्यते । चशब्दो वक्ष्यमाणापेक्षया । क्वचित्काले कार्यविशेषार्थं वा । तत्सुता अखिलाः सुराः । तस्मात्पृश्निमातर इति शेषः । किंच । अन्यत्र वेदाद्यभिमानित्वेपि पृश्निशब्दोवागादिनामापि भवति । वयं विश्वान्देवान्मरुतश्च सोमपीतये हवामहे । कुतः । हि यस्मात् पृश्निर्गोरूपा वाग्रूपा द्युरूपा भारती माता येषां ते पृश्निमातरो विश्वेदेवाः उग्राः अप्रसह्याः शत्रुभिः ॥ १०, ९ ॥

## मन्त्रार्थमञ्जरी

वरुणः मित्रः (च) विश्वाभिः ऊतिभिः, सर्वाभी रक्षाभिः । प्राविता, प्रकर्षेणास्माकं रक्षकः । भुवत्, भवेत्, प्रत्येकमन्वयः, 'भूः सत्तायाम्' लेट्, शविकरणोवङादेशौ, तिप इकारलोपः । किं च, (तौ) मित्रावरुणौ । नः, अस्मान् । सुराधसः, शोभनसिद्धिमतः । करतां, कुरुतां, शब्विकरणं छान्दसम् ॥ ६ ॥

तृचो मरुत्वतीयः (ऐन्द्रः) (वयम्) मरुत्वन्तम्, मरुद्भिः सहितम् । इन्द्रं सोमपीतये आ हवामहे । आहूतश्च (इन्द्रः) गणेन, मरुद्गणेन । सजूः, सहगणः । तृम्पतु, तृप्यतां, 'तृम्प तृप्तौ' शविकरणम् ॥ ७ ॥

इन्द्रज्येष्ठाः, इन्द्र एव ज्येष्ठो येषां ते तथा । पूषरातयः, पुष्टत्वात्पूषा विष्णूरातिर्मित्रं येषां ते तथोक्ताः । मरुद्गणाः, सप्तसप्तकतया स्थितत्वेन हेतुना मरुत्समूहभूताः । (हे) देवासः, देवाः । विश्वे, सर्वे । (यूयम्) मम । हवम्, आह्वानम् । श्रुत, शृणुत, 'श्रु श्रवणे' व्यत्ययेन लुग्विकरणम्, लोट् ॥ ८ ॥

(हे) सुदानवः, अतीव दानशीला मरुतः, सुपूर्वात् 'दाण् दाने' इत्यतस्ताच्छीलिको नुप्रत्ययः । सहसा, बलेन बलाभिमानिना च । इन्द्रेण । युजा, युक्तेन सता, शक्रेण सहिता इति यावत् । वृत्रम्, सम्यग्ज्ञानावरकत्वादज्ञानम्, अभ्यर्हितत्वान्मदज्ञानम् । हत, नाशयत, 'हन हिंसागत्योः' लोट् । किं च, दुःशंसः, दुर्दुष्टं शंसः शंसनं वचो दुर्वाक्, यद्वा– दुष्टः शंसो वाग्यस्यासौ दुःशंसो दुर्वाग्वान्पुमान् । नः, अस्माकम् । मा ईशत, न शक्नुयात्, अज्ञानमुत्पादयितुं शक्तो माभूदिति, 'ईश ऐश्वर्ये' लुङ्, च्लेरङि रूपम्, माङ्योगादाडभावः ॥ ९ ॥

वैश्वदेवस्तृचः । (वयम्) विश्वान् देवान्, सर्वान्देवान् । मरुतः (च) सोमपीतये हवामहे । कुतः ? हि, यस्मात् । पृश्निमातरः, पृश्निर्गोरूपा वाग्रूपा च भारती माता येषां ते पृश्निमातरो विश्वे देवाः उग्राः, शत्रुभिरप्रसह्याः । अतः इति । कालविशेषे गोरूपासीद्भारती, अतः कारणाद्वेदाभिमानित्वाच्च गोवागुभयपर्यायपृश्निपदेनात्र भारत्युच्यते ॥ १० ॥ इति नवमो वर्गः ॥ ९ ॥

## रूपावतारः

वरुणः । भुवदिति भूधातोर्लेटि अडागमे 'भूसुवोस्तिङि' (७।३।८८) इति गुणनिषेधेन उवङादेशे भुवदिति रूपम् । करतामिति । कविकल्पद्रुमे कृञ्कृतौ इति पठिताद्भौवादिकात् कृञो लोडादेशे तसस्तामादेशे शपि गुणे करतामिति रूपम् ॥ ६ ॥

मरुत्वन्तम्। सजूरिति ।। सहशब्दस्य सजूरित्यादेशे सजूरिति रूपम् (समानपूर्वाज्जुषेः किपि 'समानस्य छन्दसि' (६।३।८४) इति समानस्य सादेशे ससजुषोरुः (८।२।६६) इतिरुत्वे 'र्वोरुपधायाः' (८।२।७६) इति दीर्घे च सजूरिति रूपम्। (छलारीये ११४) तृम्पत्विति। तृपतृम्पावित्यस्मात् शप्रत्यये 'शेमुचादीनाम्' (७।१।५९) इति सूत्रवार्तिकेन 'शे तृपादीनामिति वक्तव्यम्' इत्यनेन नुमि तृम्पत्विति रूपम् ।। ७ ।।

इन्द्रज्येष्ठाः। ननु गणस्यैकत्वात् कथं गणा इति बहुवचनमित्यत आह। सप्तसप्तका इति। महागणस्यैकत्वेऽपि अवान्तरगणानां सप्तसंख्याकत्वात् तद्विवक्षया बहुवचनमिति भावः। श्रुतेति विकरणस्य छान्दसत्वेनाभावे श्रुतेति रूपम् ।। ८ ।।

हतवृत्रम्। ताच्छीलिको नुरिति। दाण् दान इत्यतः 'दाभाभ्यां नुः' (उ० ३१९) इति नु प्रत्यये जसि च दानव इति रूपम्। ईशतेति। ईशेर्लिङि शपो 'बहुलं छन्दसि' (२।४।७३) इति लुगभावे आगमशासनस्यानित्यत्वात् सीयुडभावे च ईशतेति रूपम् ।। ९ ।।

विश्वान्। उग्रत्वं च न सर्वान्प्रतीत्याह। अप्रसह्याः शत्रुभिरिति ।। १०, ९ ।।

## पदार्थप्रकाशिका

वरुणः प्राविता भुवत्। रक्षाभिरिति। रक्षणोपायैरित्यर्थः। विधिनिमन्त्रणेति प्रार्थने लिङ् स्मरणात् लकारव्यत्ययमाश्रित्याह। भवेदिति ।। ६ ।।

मरुत्वन्तं हवामहे। उदाहृतानुक्रमणिकां हृदि निधायाह। तृचो मरुत्वतीय इति। मरुद्भिः सहितमिति। ननु तर्हि मरुद्वन्तमिति स्यादिति चेन्न। छान्दसत्वेन झलांजशोन्त इति तकारस्य दकाररूपजंस्त्वानाश्रयणात् इति द्रष्टव्यम् ।। ७ ।।

इन्द्रज्येष्ठा मरुद्गणाः। मरुतां गणस्यैकत्वात् मरुद्गणा इति कथं बहुवचनमित्यत आह। सप्त सप्तका हि त इति। सप्तानां वर्गकः सप्तकः। सप्तसप्तका येषां ते तथा। अत एव एकोनपञ्चाशन्मरुत इति प्रसिद्धिः। स्वात्महंतारं पुत्रं कामयतीति व्रतं चरन्तीमन्तर्वर्त्नीं ज्ञात्वा इन्द्रो ब्रह्मचारी सन् आगत्य तच्छुश्रूषां छिद्रान्वेषी सह्यकरोत्। पश्चात्तस्याः कदाचित् व्रतछिद्रमालोक्य गृहीतवज्रो इन्द्रो योगमायया तदुदरं प्रविष्टः सन् वज्रेण एकं गर्भमादौ सप्तधा अच्छिनत्। एकैकमपि पुनः सप्तधाच्छिनत्। एवमेकोनपञ्चाशन्मरुतो जाताः। ते च स्वस्तुतिप्रसन्नेन्द्रानुग्रहेण मातृजाति-प्रयुक्तासुरस्वभावमपहाय इन्द्रेण देवत्वेन स्वात्मसाम्यं नीत्वा सोमपाः कृता इति षष्ठस्कन्धे स्पष्ट

ईतिहास इति हिशब्देन दर्शयति । एवं च सप्तगणानां बहुत्वाभिप्रायेण मरुद्गणा इति बहुवचनमिति भावः ॥ ८ ॥

हतवृत्रं सुदानवः । ताच्छीलिको नुरिति । दाण् दाने णकारोनुबन्धार्थः । दा इत्येव धातुः । तस्मात्तृन् प्रत्यये दानुरिति रूपम् । सहसेति ऋक्पदमनूद्य बलरूपेणेति भाष्यं संयोज्य तस्यार्थमाह । बलवतेति । तस्यैवार्थान्तरमाह । बलाभिमानिना चेति । युजासतेति । योगवता सख्येति यावत् । विद्यमानेन निमित्तेनेत्यर्थः । तत्तात्पर्यकथनपरं भाष्यं संयोजयति । शक्रेण सहिता इति । मदज्ञानं हतेत्युक्तेभिप्रायमाह । अभ्यर्हितत्वादिति । सर्वसाधारणानिष्ट निवृत्तिप्रार्थनापेक्षया स्वानिष्ट-निवृत्तिप्रार्थनस्य श्रेष्ठत्वादित्यर्थः ॥ ९ ॥

विश्वान् देवान् हवामहे उदाहृतानुक्रमणिकानुसारेणाह वैश्वदेव इति । अन्यत्रापि तस्या इति वक्ष्यमाणेनेत्यर्थः । काल इति । आदिकाल इत्यर्थः । यथोक्तं बृहदारण्यके । सा गौरभवदृषभ इतरस्तां समभवत्ततो गावो अजायन्तेत्यादि । कार्यविशेषार्थे वेति । नानासृष्टिरूपकार्यार्थम् । यथोक्तम् उदाहृतवाक्यव्याख्यानसमये बृहद्भाष्ये । 'सर्वज्ञापि तु सा देवीविरिंचे भक्तिमत्यपि । तद्भार्यतामात्मनश्च नितरां धर्ममीक्षता । अनाद्यनन्तसम्बन्धमुभयोरपि जानती । नानासृष्टिप्रसिध्यर्थं सा गोत्वादिकमाव्रजत् । वृषभादिरूपतः सोऽपि प्राप्य सृष्ट्वेदमञ्जसे'त्यादि । तथैव अखिलाः सुराः इति यथोक्तं 'ततस्तस्यामुमेशादीन् देवान् सर्वमनूनपि । जनयामास बोधस्य प्राधान्यं हि मनुष्यते'ति । वेदाद्यभिमानित्वेपीति । वेदाद्यभिमानित्वदशायामपीत्यर्थः । वेदादीत्यादिपदेन द्युलोकग्रहणम् । वेदाद्यभिमानिभारतीपुत्रत्वेपि पृश्निमातृत्वं कथं वेदानां पृश्निशब्दस्य वेदाद्यर्थत्वा-भावादित्यत आह । पृश्निशब्द इति । यागादीत्यादिपदेनापि द्युलोकग्रहणम् । कुत इति । सोमपीतये तेषामाह्वानं कस्मात् कर्तव्यमित्यर्थः । दिव्यमात्रुत्पन्नत्वेन महासामर्थ्योपेतत्वादित्याह । हि यस्मादित्यादिना ॥ १० ॥

## पदार्थदीपिका

भुवदिति । भूसत्तायां लेटः तिप् । लेटोऽडाटौ इति अडागमः । इतश्च लोपः । परस्मैपदेषु इति इकारलोपः । बहुलं छन्दसीति शपो लुक् । गुणे प्राप्ते भूसुवोस्तिङि इति प्रतिषेधः । उवङादेश इति भावः । 'लिङर्थे लोट्' इति स्मरणात् लिङर्थे भुवदिति लेडित्याह । भवेदिति । करतामिति । कृञ् करणे भौवादिकः लोटः तस् । तसः तामादेशः । कर्तरि शप् । गुणो रपरत्वं चेति भावः ॥ ६ ॥

(पदार्थदीपिका)

मरुत्वन्तमिति । मतुपो वत्वम् । तसौ मत्वर्थ इति भसंज्ञया पदसंज्ञाया बाधितत्वात् । कर्तरि शप् । जश्त्वाभाव इति भावः । सजूरिति । 'जुषी प्रीतिसेवनयोः' इत्यस्मात् समानपूर्वात् सहपूर्वात् वा क्विप् । वोपसर्जनस्य इति सहस्य 'समानस्य छन्दसि' इति समानस्य वा सभावः । ससजुषोरुः इति रुत्वम् । र्वोरुपधाया इति उपधादीर्घ इति भावः । तृम्पतु इति । 'तृपू तृंप् तृप्तौ' इत्यस्मात् 'तुदादिभ्यः श' इति तुदादित्वात् शे सति, शस्य 'सार्वधातुकमपित्' इति ङित्वात् अनिदितामिति लोपे सानुषङ्गस्य 'शेतृपादीनामुपसङ्ख्यानं' इति नुमागमे, व्यत्ययेन पस्य यादेशे च निष्पन्नस्य, 'तृपप्रीतौ' इत्यस्मात् व्यत्ययेन शब्विकरणे नुमागमे च निष्पन्नस्य वा प्रकृत्यन्तरनिष्पन्नस्य वा 'तृंपतु' इत्यस्य तृप्यतामिति भाष्योक्तं प्रातिपदमिति भावः । तृप्यतामिति व्यत्ययेनात्मनेपदम् । तृप्यत्वित्यर्थः ॥ ७ ॥

पुषपुष्टाविति । अस्मात् कनिन् दीर्घश्च निपात्यते इति भावः । पुल्लिङ्गश्रवणात् बहुव्रीहिमाह । स इति । इन्द्रो ज्येष्ठ इति । 'किं न इन्द्र जिघांससि भ्रातरो मरुतस्तवे'ति श्रुतेरिति भावः ॥ ननु 'गणेन' इत्येकवचनस्य श्रुतत्वात् मरुद्गणा इति बहुवचनं कथमित्यत आह । सप्तेति । अवान्तरगणविवक्षया बहुवचनमिति भावः ॥ सप्तानां वर्गः सप्तकः । सप्त सप्तका येषां ते तथोक्ताः । अत एव एकोनपञ्चाशत्सङ्ख्याकाः । तथाच सप्तकानां बहुत्वात् बहुवचनमित्यवधेयम् ॥ हवमिति । ह्वेञ् स्पर्धायां शब्दे च । भावेऽनुपसर्गस्य इति अप् । सम्प्रसारणं परपूर्वत्वं गुणावादेशौ चेति भावः । श्रुतेति । श्रु श्रवणे । लोण्मध्यमपुरुषबहुवचनम् । तस्थस्थमिपां इति तादेशः । व्यत्ययेन शप् । बहुलं छन्दसीति शपो लुक् । सार्वधातुकार्धधातुकयोरिति गुणे 'क्ङिति च' इति प्रतिषेधः इति ज्ञेयम् ॥ ८ ॥

नुरिति । दाभाभ्यां नुरिति ताच्छीलके कर्तरि नुप्रत्यय इति भावः । यावदिति । युनक्तीति युक् । सत्सूद्विषद्रुहदुहयुजेत्यादिना क्विप् । तेन युजेत्यस्य 'सहिता' इति तात्पर्यं भाष्ये उच्यते इत्यर्थः । ननु 'वृत्रहन्ता' इत्यस्य अज्ञानं नाशयेत्येतावदेव भाष्यमुचितम् । मदित्यस्य कथं लाभः इत्यतो मदज्ञानमिति भाष्यपदेन संवादनाय वृत्रमिति श्रौतपदस्य प्रवृत्तिनिमित्तं अभिधेयं चाह । सम्यगिति । हतेति । हन हिंसागत्योः । अस्मात् लोण्मध्यमपुरुष बहुवचनम् । थः । तस्थस्थमिपामिति तादेशः । अदिप्रभृतिभ्यः शप इति शपो लुक् । अनुदात्तोपदेशेत्यादिना अनुनासिकलोप इति भावः । तस्यार्थमाह । नाशयेति । दुष्टं शंसनमिति । शंसेर्घञि निष्पन्नेन शंसपदेन दुः शब्दस्य कर्मधारय इति भावः । ईशतेति । ईश ऐश्वर्ये । अस्मात् माङ् योगात् लुङि प्राप्ते छन्दसि लुङ् लङ् लिट इति व्यत्ययेन लङ् । अदादित्वेन प्राप्तस्य लुको बहुलं

(पदार्थदीपिका)

छन्दसीत्यभावः। नमाङ्योग इति अडागमाभावश्च इति भावः। मा शब्द सहितस्य ईशतेत्यस्य अर्थो न शक्नुयादिति भाष्यं इत्याह। न शक्नुयादिति। उत्पन्नज्ञाननाशः पूर्वार्धेन प्रार्थितः। उत्तरार्धेन तु उत्तरत्र तदनुत्पत्तिः प्रार्थ्यत इति भावेनाह। अज्ञानमिति ॥ ९ ॥

गोनामस्विति। प्रशंसनीयत्वेन गवां पृश्निशब्दार्थत्वादिति भावः। वक्ष्यमाणेति। अन्यत्रापीत्यनेन वक्ष्यमाणेत्यर्थः। वेदादीति। आदिपदेन द्युलोकसंग्रहः। वागादिनामापीति। प्रशंसनरूपत्वप्रश्नयोग्यत्वादिना वाक् सामान्यस्य वेदस्य च नाम। दिवश्च आदित्यस्य च साधारणनामसु पृश्निर्नाक इति पाठात् द्युनाभापि भवतीत्यर्थः ॥ १०, ९ ॥

## टीकाविवृतिः

वरुणःप्राविता ॥ भवतेर्लेट अडागमे इतश्च लोप इतीकारलोपे तस्य व्यत्ययेन ङित्वादुवङादेशे भुवदिति रूपमिति भावेनाह ॥ भवेदिति ॥ करोतेर्लोटि तसस्तामादेशे व्यत्ययेन शपि गुणे रपरत्वे च करतामिति रूपं सिध्यतीत्याशयेनाह ॥ कुरुतामिति ॥ ६ ॥

मरुत्वंतम् ॥ सजूरिति ॥ समानपूर्वाज्जुषेःक्विपि समानस्य छन्दसीति समानस्य सादेशे ससजुषोरिति रुत्वे र्वोरुपधाया इति दीर्घे च सजूरिति रूपम्। तस्य तात्पर्यार्थमाह ॥ सहेति ॥ तृपतृंफतृप्ताविवत्यत्रोक्ततृपेर्लोटि शेतृंफादीनां नुम्वाच्य इति वार्तिके षष्ठीसमासस्याप्याश्रयणान्नुमितिभावः। तृप्यतामिति भाष्योक्तेप्रतिपदे व्यत्ययेनात्मनेपदमिति ज्ञेयम् ॥ ७ ॥

इन्द्रज्येष्ठाः ॥ इन्द्रज्येष्ठा इति ॥ किंनं इन्द्रजिघांससि भ्रातरो मरुतस्त वेश्रुतेरितिभावः। रादाने इत्यत औणादिके तिप्रत्यये अभीष्टदातारातिरित्यक्षरार्थः। तस्य तात्पर्यमाह ॥ रातिर्मित्रमिति ॥ पूर्वस्यामृचि गणेनेत्येकवचनेनोक्तेरत्र मरुद्गणा इति बहुवचनं कथमित्यत अवान्तरगणविवक्षयैतदिति भावेनाह ॥ सप्तसप्तका हीति ॥ सप्तानां वर्गःसप्तकःतादृशाश्च पुनःसप्तसंख्याकाः एवं चैकोनपञ्चाशत्संख्याकाः संपद्यन्त इत्यर्थः ॥ श्रुतेति ॥ श्रु श्रवणे इत्यतो लोण्मध्यमपुरुषबहुवचने व्यत्ययेन श्नुप्रत्ययस्य लुगिति भावः ॥ इन्द्रज्येष्ठा इत्यत्र षष्ठाध्यायस्थेनामंत्रितस्येत्यनेनाद्युदात्तत्वम्। मरुद्गणा इत्यादिपदत्रये तु आमन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानत्वात्पूर्वपदस्य पदात्परत्वाभावेनाष्टमिकामन्त्रितस्येत्यनेन सर्वानुदात्तत्वाभावात्षाष्ठिकाद्युदात्तत्वमेव। नामन्त्रिते इति अविद्यमानत्वनिषेधस्तु न। सामान्यवचनमिति विशेष्यवाचकस्यैवोक्तत्वात् ॥ ८ ॥

हतवृत्रम् ॥ ताच्छीलिको नुरिति ॥ दाभाभ्यां नुरित्यनेनेति शेषः ॥ बलरूपेणेति ॥ भाष्ये बलं रूपं धर्मः प्रतिमा वा यस्येत्यर्थं मनसि निधायाह ॥ बलवतेति ॥ तथा च श्रुतौमत्वर्थलक्षणाप्याश्रीयते इति भावः ॥ युजा सतेति ॥ युजेःसत्सूद्विषेति कर्तरि क्विप् । संबद्धेन विद्यमानेनेत्यर्थः । तात्पर्यार्थमाह ॥ सहिता इति ॥ वृत्रमित्यस्य कथमज्ञानमित्यर्थ इत्यत आह ॥ सम्यगिति ॥ वृञ्वरणे इत्यतः अमि चिमिदिशसिभ्यःक्र इत्युक्तः क्रो बहुलोक्तेर्जात इति भावः ॥ अभ्यर्हितत्वादिति ॥ अन्याज्ञाननिवृत्त्यपेक्षया स्वाज्ञाननिवृत्तेरत्यावश्यकत्वादिति भावः । हन्तेर्लोटि थस्य तादेशे शपो लुकि अनुदात्तोपदेशेति नलोपे हतेति श्रौतं रूपम् । तस्यार्थमाह ॥ नाशयतेति ॥ दुष्टं शंसनमिति ॥ शंस कथने इत्यतो घञि दुश्शब्देन कर्मधारये दुष्टं शास्त्रं तदतिरिक्तवाग्वेति भावः । मा ईशतेत्यत्र नायं माङ् । किंतु अमानोनाःप्रतिषेधे इत्युक्तो माशब्दः अत एव लुङडभावौ । ईशेःलेटि अडागमे त शब्दस्य छान्दसत्वाभाव इति भावेनाह ॥ न शक्नुयादिति ॥ अज्ञानमुत्पादयितुमिति ॥ अनेन पूर्वार्धे उत्पन्नाज्ञाननाशः प्रार्थितः । द्वितीयार्धे तु नूतनाज्ञानोत्पत्त्यभावः प्रार्थ्यत इत्याशय उक्तो भवति ॥ ९ ॥

विश्वान्देवान् ॥ गोनामस्विति ॥ पृश्निःनाकःगौरिति साधारणनामसु गोशब्देन सह पाठादित्यर्थः । अत एव गोशब्दस्य वागर्थत्वात्तत्सहपाठेन पृश्निशब्दस्य वागर्थत्वं नाकशब्दसहपाठात्स्वर्गार्थत्वं चाश्रित्य वाग्रूपा द्युरूपा चेति वक्ष्यते । अतो निघण्टौ स्वरादिषण्णां शब्दानां साधारणनामत्वमुक्तमिति भावः ॥ वक्ष्यमाणेति ॥ अन्यत्रापि सुता इति वक्ष्यमाणापेक्षयेत्यर्थः । क्वचिद्देशे सदा गोरूपा भारतीति प्रतीतिं वारयति ॥ क्वचित्काल इति ॥ क्वचिदित्यस्यार्थान्तरमाह ॥ कार्यविशेषार्थं वेति ॥ वेदादीति ॥ आदिशब्दाद्द्युग्रहणम् ॥१०॥९॥

**ऋक्संहिता पदपाठसहिता** (सू-२३, व-३)

(२४०) **जयंतामिव तन्यतुर्मरुतामेति धृष्णुया ॥**
**यच्छुभं याथना नरः ॥ ११ ॥**

(प०) **जयंताम्ऽइव । तन्यतुः । मरुताम् । एति । धृष्णुऽया ॥ यत् । शुभंम् । याथन । नरः ॥ ११ ॥**

(ऋक्संहिता पदपाठसहिता)

(२४१) हुस्कारा॑द्वि॒द्युत॒स्पर्य॑तो जा॒ता अ॑वन्तु नः ॥
मरु॑तो मृळयन्तु नः ॥ १२ ॥

(प०) हुस्कारा॑त् । वि॒ऽद्युत॑ः । परि॑ । अत॑ः । जा॒ताः । अ॒व॒न्तु॒ । न॒ः ॥
म॒रुत॑ः । मृ॒ळ॒य॒न्तु॒ । न॒ः ॥ १२ ॥

(२४२) आ पू॑षञ्चि॒त्रब॑र्हिष॒माघृ॑णे ध॒रुणं॑ दि॒वः ॥ आजा॑ न॒ष्टं यथा॑
प॒शुम् ॥ १३ ॥

(प०) आ । पू॒ष॒न् । चि॒त्रऽब॑र्हिषम् । आघृ॑णे । ध॒रुण॑म् । दि॒वः ॥
आ । अ॒ज (आ॒ज) । न॒ष्टम् । यथा॑ । प॒शुम् ॥ १३ ॥

(२४३) पूषा राजा॑न॒ माघृ॑णि॒रप॑गूळ्हं॒ गुहा॑ हि॒तम् ॥
अवि॑न्दच्चि॒त्रब॑र्हिषम् ॥ १४ ॥

(प०) पूषा । राजा॑नम् । आघृ॑णिः । अप॑ऽगूळ्हम् । गुहा॑ । हि॒तम् ॥
अवि॑न्दत् । चि॒त्रऽब॑र्हिषम् ॥ १४ ॥

(२४४) उ॒त स मह्य॒मिंदु॑भि॒ःषड्यु॒क्ताँ अ॑नुसे॒षिधत् ॥ गोभि॒र्यवं॑ न
च॑र्कृषत् ॥ १५, १० ॥

(प०) उ॒ताइति॑ । सः । मह्य॑म् । इंदु॑भिः । षट् । यु॒क्तान् ।
अ॒नु॒ऽसेसि॑धत् ॥ गोभिः॑ । यव॑म् । न । च॒र्कृ॒ष॒त् ॥ १५, १० ॥

ऋग्भाष्यम्

जयतामिव तद्ध्वनिः । धैर्याद्याति यदा विष्णुं वायुं वा याथनोत्तमम् ॥ ११ ॥
दोषत्यागाद्गुणप्राप्तेर्हस्कारो वायुरुच्यते । विद्युद्विशिष्टज्ञानत्वाद्भारती तत्सुता हि ते ।
सर्वदेवाश्च मरुतो रक्षंत्वेतादृशो हरिः । तत्तदन्तर्गतत्वेन ॥ १२ ॥ पूषा पूर्णत्वतश्च सः ।
आघृणिः पूर्णरश्मित्वादाजनश्चित्रबर्हिषम् । ब्रह्माणं च दिवो देव्या भर्तारं वायुमा-
जगाम् । यथागतम् ॥ १३ ॥ जगद्राजमविन्दद्भगवान्सुतम् । स्वकुक्षिगूढं
ब्रह्माणम् ॥ १४ ॥ मह्यं सोमैश्च तर्पितः । साधयामास षड्युक्तानीन्द्रियाणि चकार च
साधनं शक्तिदानं तु गोभिर्वार्भिर्यथा यवम् ॥ १५, १० ॥

## ऋग्भाष्यटीका

जयतामिव। हे नरो विश्वेदेवाः यद्यदा शुभमुत्तमं विष्णुं वायुं वा प्रति याथन यूयं याथ। तदा मरुतां युष्माकं तन्यतुर्ध्वनिः। तद्ध्वनिस्तेषां युष्माकं ध्वनिः। सङ्ग्रामे जयतामिव धृष्णुया त्रि धृषा प्रागल्भे अस्मात् त्रसिगृधिधृषिक्षिपेः क्नुः। ताच्छीलिकः। ततो भावप्रधानात्तृतीयायाः पञ्चम्या वा सुपां सुलुगित्यादिना यादेशः। धृष्णुत्वेन धैर्यात् एति याति प्रवर्तते॥ ११॥

हस्कारात्। हस्कारशब्दं व्याख्याति। दोषेति। ओ हाक् त्यागे। अस्मात्कः। त्यजति दोषानिति हः। स्वेन सह करोति गुणानिति स्कारः। अकारलोपः। हश्चासौ स्कारश्च हस्कारः। विद्युच्छब्दार्थमाह॥ विद्युदिति॥ विपूर्वात् द्योततेः क्विप्। ऋचं व्याख्याति। तत्सुता इति॥ ये सर्वे देवा मरुतश्च हस्काराद्वायोर्विद्युतो भारत्याश्च परिसम्यग्जातास्तत्सुता हि ते। अतः सम्यग्जातत्वादेव नोवन्तु रक्षन्तु। नोस्मान्मृळयन्तु सुखयन्तु च। पुनर्न इति तात्पर्यार्थम्। हरावेतद्घटयति। एतादृश इति। हरिरपि तत्तन्मरुदाद्यन्तर्गतत्वेन कारणेनैतादृशो भारतीवायुपुत्र उच्यते॥ १२॥

आपूषन्। पौष्णोयं तृचः। पूषाघृणिशब्दौ व्याख्याति॥ पूषेति॥ आसमन्ताद् घृणयो रश्मयो यस्यासावाघृणिः। ऋचं व्याख्याति। आजेति। हे आघृणे पूषन् चित्रं विचित्रं बर्हिः बृहतेर्वृद्ध्यर्थस्येदं रूपम्। नानाविधं पूर्णत्वं यस्यासौ चित्रबर्हिः तं चित्रबर्हिषं ब्रह्माणं त्वं नोस्मान्प्रत्याज। अजेरन्तर्णीतण्यर्थस्य लोटि रूपम्। गुरुत्वेनागमय। दिवो देव्याः भारत्याः। धरुणं धर्तारं भर्तारं वायुं चाज। कमिव नष्टं पशुं गतं गां यथाऽऽगमयन्ति। यद्वा आजेति लिङन्तम्। नोस्मदर्थे भवानाज आदिकाले प्राप्तवानसीति॥ १३॥

पूषा॥ जगद्राजम्। आघृणिः पूषा भगवान् राजानं जगद्राजं गुहाहितं गुहायां निहितम्। तत एवापगूढं स्वकुक्षिगूढमिति यावत्। चित्रबर्हिषं ब्रह्माणं सुतमविन्दत्॥ १४॥

उतोसः। मह्यम्। उतो अन्यच्च। स पूषेन्दुभिः सौमैस्तर्पित इति शेषः। मह्यं मदर्थे। षट् इन्द्रियाणि। युक्तान् अर्थैः सन्निकृष्टानि। अनुसेषिधत् साधयामास। अनुदात्तत्वं छान्दसं। चर्कृषच्चकार च। यङ्लुङंताल्लेट्। किमिव। गोभिर्वार्भियवं न यवं यथा कुर्वन्ति साधयन्ति च। करणातिरिक्तं साधनं किमित्यत आह॥ साधनमिति। साधनं त्वित्यन्वयः॥ १५, १०॥

## मन्त्रार्थमञ्जरी

(हे) नरः, विश्वेदेवाः। यत्, यदा शुभम्, उत्तमम्, विष्णुं वायुं वा प्रति। याथन, यूयं याथ थनादेशः। (तदा) मरुताम्, युष्माकम्। तन्यतुः, ध्वनिः। (सङ्ग्रामे) जयतामिव। धृष्णुया,

धृष्णुत्वेन, धैर्यात् । एति, प्रवर्तते । 'ञिधृषा प्रागल्भ्ये' इत्यतः 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्यये सिद्धाद्धृष्णुशब्दाद्भावप्रधानात्तृतीयायाः 'सुपां सुलुक्' इत्यादिना यादेशे 'धृष्णुया' इति रूपं ज्ञेयम् ॥ ११ ॥

(ये) सर्वे देवाः । मरुतः (च) । हस्कारात्, निर्दोषगुणविशिष्टाद्वयोः । विद्युतः, विशेषेण ज्ञानवत्या भारत्याः । (च) परि, सम्यक् । जाताः, उत्पन्नाः । अतः, सम्यग्जातत्वादेव । (ते) नः, अस्मान् अवन्तु, रक्षन्तु । नः । मृळयन्तु, सुखयन्तु । (च) 'ओहाक् त्यागे' इत्यतः कप्रत्यये जहाति दोषानिति हः, सह करोति गुणान्स्वेनेति स्कारः, कृञः घञ्, सहशब्दस्य स्भावः, हश्चासौ स्कारश्चेति हस्कारः– इति प्रागुक्तार्थे व्युत्पत्तिः । विपूर्वात् 'द्युत दीप्तौ' इत्यतः क्विपि विशेषेण द्योतते जानातीति 'विद्युत्' इति च व्युत्पत्तिः ॥ १२ ॥

पौष्णोऽयं तृचः । (हे) आघृणे, आ समन्ताद्घृणयो रश्मयो यस्य तस्य सम्बुद्धिः । पूर्णत्वात् पूषन्, पुषेः क(नि)न्, उपधादीर्घत्वम्, विष्णो, पूषदेवते च । चित्रबर्हिषम्, चित्रं विचित्रं नानाविधं बर्हिः पूर्णत्वं यस्य तम्, बृंहतेः वृद्ध्यर्थस्येयसुन् (इसिः) (ब्रह्माणम्), विरिञ्चम् । (त्वम्) (नः), अस्मान्प्रति । आ अज, आजय, 'अज गतौ' अन्तर्णीतणिच्, गुरुत्वेनागमय । दिवः, देव्याः, भारत्याः । धरुणम्, धर्तारं भर्तारं वायुम् । (च) नष्टम् पशुम् यथा, गतं गामिव । आ (अज), आगमय । यद्वा– 'आज' इति लिडन्तम्, (नः) अस्मदर्थे (भवान्) आ आज, अनादिकाले तौ प्राप्तवानस्ति इति ॥ १३ ॥

आघृणिः पूषा, प्रागुक्तव्युत्पत्त्या भगवान् । राजानम्, जगद्राजम् । गुहा हितम्, गुहायां निहितम् । तत् एव अपगूळ्हम्, अपगूढम्, स्वकुक्षिगूढमिति यावत् । चित्रबर्हिषम्, प्राग्वत् (ब्रह्माणं सुतम्) अविन्दत्, प्राप्नोत्, 'विद्लृ लाभे' लङ् ॥ १४ ॥

उतो, अन्यच्च । सः, पूषा । इन्दुभिः, सोमैः (तर्पितः) इति शेषः । मह्यम्, मदर्थे । षट्, इन्द्रियाणि । युक्तान्, अर्थैः संनिकृष्टानि । चर्कृषत्, चकार । अनुसेसिधित्, साधयामास च, शक्तियुक्तान्यकरोदिति यावत् । गोभिः वार्भिः । वयम् न, वयमिव, यवं यथा कुर्वन्ति वीर्ययुक्त तया साधयन्ति च तथा इति । 'षिध गत्याम्' 'कृष विलखने' इत्येतयोर्यङ्लुकि लेटि रूपे ॥ १५ ॥
इति दशमो वर्गः ॥ १० ॥

## रूपावतारः

जयनामिव । याथनेति । यातेर्लडादेशे 'तप्तनप्तनथनाश्च' (७।१।४५) इति सूत्रेण थनादेशे याथनेति रूपम् ।। ११ ।।

हस्कारात् । स्वेन सहेति । सहशब्दोपपदात्करोतेरौणादिकेऽणि वृद्धौ च 'वोपसर्जनस्य' (६।३।८२) इति सहशब्दस्य सादेशे अकारलोपे च स्कार इति रूपम् ।। १२ ।।

आपूषन् । इदं रूपमिति । 'बृंहेर्नलोपश्च' (उ. ५७४) इति इसिप्रत्यये नलोपे च बर्हिरिति रूपम् । लोटि रूपमिति अजेर्लोटि तदादेशशेर्ह्यादेशे 'अतो हेः' (६।४।१०५) इति तस्य लुकि अ इत्यनेन सम्बन्धे अजेति रूपम् । धरुणमिति । देशान्तरमिति शेषः । लिडन्तमिति । अजेर्लिटि 'अजेर्व्यघञपोः' (२।४।५६) इति छान्दसत्वाद्वीत्यादेशाभावे द्वित्वाभावे च अजेति रूपम् । अस्मिन् पक्षे ऋग्योजना । हे आधृणे पूषन् त्वं नः अस्मदर्थमेव चित्रबर्हिषं दिवो धरुणं च प्राप्तवानसि । यथा नष्टं देशान्तरगतं गां आदरेण प्राप्नुवन्ति एवमिति ।। १३ ।।

पूषा । श्रुतावपगूळ्हमिति गूढशब्दढकारस्य ळ्हकारादेशे अपगूळ्हमिति रूपम् ।। १४ ।।

उतोसः । साधयामासेति । इतः परं टीकायां श्रूयमाणं 'अनुदात्तत्वं छान्दसं' इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । गतिव्यतिरिक्ते सेषिधदिति पदे 'अभ्यस्तानामादिः' (६।१।१८९) इत्यनेन आदेरुदात्तत्वात् उत्तरयोः क्रमेण स्वरितप्रचयत्वात् । गतेश्च 'तिङि चोदात्तवति' (८।१।७१) इति सूत्रेणानुदात्तत्वस्य प्राप्तत्वेन तदनुदात्तत्वस्य छान्दसत्वाभावात् । न च 'तिङ्ङ तिङः' (८।१।२८) इति तिङन्तस्य निघाते सति 'तिङि चोदात्तवति (८।१।७१) इति सूत्रं न प्रवर्तत इति वाच्यम् । 'चादिलोपे विभाषा' (८।१।६३) इत्यनेन सूत्रेण प्रथमतिङः अनुदात्तत्वनिषेधेन 'तिङ्ङतिङः (८।१।२८) इति सूत्रस्याप्रवृत्तेः । यङ्लुगन्तादिति । कृञो यङि तस्य लुकि द्वित्वे उरदत्वे 'रुग्रिकौ च लुकि' (७।४।९१) इति अभ्यासस्य रुगागमे लेटि 'सिब्बहुलं लेटि' (३।१।३४) इति सिपि अडागमे 'बहुलं छन्दसि' इति धातोर्गुणाभावे चर्कृषदिति रूपम् । गोर्भिर्वार्भिरिति यथा उदकसेचनेन यवं कुर्वन्ति साधयान्त च तथेति भावः ।। १५, १० ।।

## पदार्थप्रकाशिका

जयतामिव तन्यतुः । हेनरो विश्वेदेवा इति प्रधानपुरुषत्वात्तेषामिति भावः । वायुं वा प्रतीति । तत्सेवार्थमिति शेषः । मरुतां तन्यतुरिति ऋक्पदं स्वयं व्याख्याय तत्र भाष्यं संयोज्यैकार्थाय तदपि व्याचष्टे । तदा मरुतां युष्माकमित्यादिना । तेषां युष्माकमिति । मरुतामित्यर्थः । संग्रामे जयतामिवेति । युद्धे जयतां ध्वनिर्यथा धैर्यात् प्रवर्तते तेषां भयाभावात् । एवं विष्णुवाय्वोः सेवार्थं गच्छतां युष्माकं भयाभावात् विष्णुवायुसेवार्थं गछाम इत्येवमादिरूपो भवद्ध्वनिरपि धैर्यात् प्रवर्तत इत्यन्वयो द्रष्टव्यः । ञिधृषेति । ञकार अकारश्चानुबन्धार्थः । त्रसीत्यादि । त्रस्यादिधातुभ्यः क्नुप्रत्ययः स्यादित्युणादिसूत्रार्थः । अस्मात् क्नुप्रत्यये ककारलोपे नस्य णत्वे धृष्णु इति रूपम् । अत्र कित्वाद्गुणाभावः । अन्यथा धर्ष्णु इति स्यादिति द्रष्टव्यम् । तृतीयायाः टा इति तृतीयाविभक्तेः पञ्चम्याः ङसि इति पञ्चमीविभक्तेः । यादेश इति । तथाच धृष्णुया इति रूपमिति भावः । अर्थद्वयमपि दर्शयति । धृतित्वेन धैर्याद्वेति ।। ११ ।।

हस्काराद्विद्युतस्परि । ओहागिति । अत्र हा इत्येव धातुः । अन्यदनुबन्धार्थः । अस्मात्क इति । हा इत्यस्मात् क प्रत्यये कित्वाद्गुणाभावात् । आतोलोप इटिचेति धात्वकारलोपे प्रत्ययाकारसम्बन्धे च सति हेतिरूपम् । गुणप्राप्तेरिति स्कारशब्दार्थ उक्तः तमुपपादयति । स्वेनेति । स्वेनेति गुणानिति च योग्यतया सम्बन्धः । स्वेन सहेति सकारार्थः । सहस्य स इति भावः । करोतीति कारशब्दार्थः ।

ननु तर्हि हसकार इति स्यात् इत्यत आह । अकारस्येति । तथाच हस्कारः इति रूपम् । क्विबिति । क्विपो लोपे विद्युदित्येव रूपम् । विचंविहाय क्विपः करणं तकारेऽनुदात्तौ सुप्पिताविति स्मरणात् । कित्वाद्गुणाभावज्ञापनार्थं च । अन्यथा वेद्युदिति स्यादिति द्रष्टव्यम् । तथाच विद्योतते इति विद्युदित्यर्थः । तत्सुता हि ते यत इति शेषः । सम्यक्ज्ञातत्वादेवेति । वायुभारतीभ्यां जातत्वरूपविशिष्टजनिमत्वमेव सम्यग् जातत्वमिति भावः । ननु नः अवन्तु मृळयन्तुचेति पूर्तेः पुनर्न इत्यधिकमित्यत आह । पुनर्न इति । तत्तन्मरुदाद्यन्तर्गतत्वेनेति । तथाच ये सर्वे देवाः मरुतश्च तत्तदन्तर्गतभगवद्रूपविशेषाः । हस्काराद्विद्युतस्परि जाता व्यक्ताः । अतो मदं त्वित्यादियोज्यम् ।। १२ ।।

आपूषंचित्रबर्हिषम् । उदाहृतानुक्रमणिकानुसारेणाह । पौष्णोयं तृच इति । बृहतेर्विश्वाद्यर्थस्येति । बृहवृद्धावित्यस्मादिङ्प्रत्यये गुणे बर्हिष इति प्रातिपादिकम् । तथाच वर्धनं बर्हिरिति व्युत्पत्तिर्द्रष्टव्या । नानाविधपूर्णत्वमिति । पूर्णत्वमिति वृद्धेर्विवरणम् । ज्ञानपूर्णत्वं सुखपूर्णत्वम् इत्यादिरूपेण नान

विधमित्यर्थः। ऋचि आजेत्यत्र आ अजेति पदच्छेदः। पूर्वरूपे आजेत्येव भवति। एवं च टीकायाम् आपूषन्नित्यत्रत्य आङः सम्बन्धमङ्गीकृत्यास्मान् प्रत्याजेत्युक्तम्। अत्र च आअजेति पदच्छेदो द्रष्टव्यः । ननु ब्रह्माणमस्मान् प्रत्युपदेष्टुमाजयेति वक्तव्यमाजेति कथमित्यत आह । आजेरंतर्णीतण्यर्थस्येति। अजगतौ क्षेपणेचेति गत्यर्थस्याजेरित्यर्थः। आङ्द्वयस्य सत्वादेव वाक्यभेदेन व्याख्याति। दिव इति। वायुं चाजेति। अत्रापि आ अजेतिपदच्छेदः। अस्मान् प्रति गुरुत्वेनागमयेत्यर्थः। कमिवेति। कं कं प्रतीवेत्यर्थः। नष्टमिति ऋक्पदमनूद्य नष्टशब्दव्याख्यानपरं भाष्यं संयोजयति। गतमिति। नञ् अदर्शन इति धातोः अदर्शनं गतं पशुमित्यर्थः। पशुः कः इत्यतो भाष्ये गामित्युक्तमित्याशयेन भाष्यपदमनुवदति। गामिति। तथाच यथाच यथा यस्य कस्यचित्पुंसो गवादिरूपे पशौ गते सति कश्चन कृपालुः आगत्य तं पुरुषं प्रति गवादिरूपं पशुं प्रापयति। तथा अस्मान् प्रति ब्रह्माणं प्रापयेत्यर्थः। यद्वा नष्टं गतमरण्यादिकमिति शेषः। तादृशं पशुं गां भूमिं स्वस्थानं यथा प्रापयति तथेत्यर्थः। अथवा नष्टमरण्यादिकं प्रति गतं गवादिरूपं पशुं यथा गृहमागमयति तथेत्यर्थः। न हि दृष्टान्तेन सर्वसाम्यं दार्ष्टान्तिकेऽस्त्यतो ब्रह्मणः कथं पशुसाम्यमिति चोद्यानवकाशः। आ आजेति शाकल्यदृष्टं पदविभागमुछिद्य सपक्षदित्यादाविव आजेत्येकमेवपदमाश्रितं भगवत्पादैरिति भावेन तदुपपादयति। यद्वा अजेति। लिडन्तमिति। नो अस्मदर्थ इति । अस्माकमुपदेष्टुमित्यर्थः । प्रसिद्धपूषापक्षे स्वयमश्रुतस्येतरान् प्रत्युपदेशायोगादस्माकं तत्वमुपदेष्टुं हेपूषन्नादिकाले ब्रह्माणं वायुं च त्वं श्रोतुं प्राप्तवानसीति योज्यम्। भगवत्पक्षे तु हेपूषन् भगवन् नो अस्मदर्थे अस्माकं ज्ञानप्राप्त्यर्थम् आदिकालं ब्रह्माणं वायुं च सुतं प्राप्तवानसि। तव तादृशपुत्रद्वयोत्पादनमस्मन्निमित्तमेव । तदुपदेशपरम्परया ह्यस्माकं ज्ञानप्राप्तिरिति भावः । अयमेवार्थ उत्तरऋच्युच्यत इति द्रष्टव्यम्॥ १३॥

पूषाराजानमाघृणिः। गुहायां हृदयगुहायां सुतमविन्ददिति। सुतमविन्ददिति यत् तन्नो अस्मदर्थे अतस्तमस्मान् प्रत्याजेति पूर्वेणान्वयः॥ १४॥

उतोसमह्यमिन्दुभिः। अन्यच्चेति। पूषाणं प्रत्यन्यत्र प्रार्थ्यन्त इत्यर्थः। नन्वसेषिधदित्यस्य समासत्वात् समासस्येति सूत्रेण समासस्यान्त उदात्तो भवतीति समासान्त स्योदात्तस्वरविधानात् धकारे उदात्तस्वरापत्त्या प्रचयस्वरायोग इत्याशंक्याह। अनुदात्तत्वं छान्दसमिति। ननु कथमेतत् वस्तुतो धकारे प्रचयस्वरसद्भावात् प्रचयस्वरः छान्दस इति वक्तव्यत्वात् इति चेदुच्यते । स्वरितप्रचयस्वरयोरनुदात्तस्वरप्रकृतिक एतत्प्रकृति भूतानुदात्तस्वरस्य छान्दसत्वे स्वरितप्रचयस्वरयोः छान्दसत्वस्य स्वयमेव प्राप्तेरित्याशयेन प्रकृतिस्वरभूतमनुदात्तत्वमेव छान्दसमित्युक्तमिति

(पदार्थप्रकाशिका)

द्रष्टव्यम् । यद्वानुदात्तत्वमुदात्तत्वाभावः । प्रचयस्वर इति यावदित्यर्थ इत्याहुः । वस्तुतस्तु ननु निपाताः आद्युदात्ताः उपसर्गाश्चाभिवर्जमित्यभि- व्यतिरिक्तानां धात्वादौ प्रयुक्तानां प्र पर अनु अवेत्यादिनिपातानामुदात्तविधानात् । पदकाले कथन्वित्यस्यानुदात्तत्वमित्यत आह । अनुदात्तत्वं छान्दसमिति । अन्वित्युपसर्गस्य पदकाले अनुदात्तत्वं छान्दसमित्यर्थ इति संप्रदायविदः । यङ्लुङन्ताल्लेडिति । कृञ् करणे ञकारोऽनुबन्धार्थः । कृ इत्येव धातुः । तस्माल्लिटि तस्य तिबादेशे इष् इत्यस्य लोपे पश्चात् यङि सन्यङोरिति द्वित्वे तस्य लोपे कृ कृ त् इति जाते अभ्यस्तककारस्य कुहोश्चुरिति चुत्वे चृकृदिति जाते गुणे रपरत्वे च गुणो यङ्लुकलुकोरिति अभ्यासस्य कृदिति जाते सिब्बहुलंलेटीति शिबागमे इप् इत्यस्य लोपे च र् कृ सदिति जाते सस्य षत्वे च सति चर्कृषदिति रूपमिति भावः । कुर्वति साधयति चेत्येतत् व्यत्यासेन योज्यम् । साधनं किमितीति । येनषडिन्द्रियाण्यर्थैर्युक्तानि साधयामास विचारेति युक्तं स्यादिति भावः । साधनमितीति । तथाच साधयामासेत्युक्तम् । साधनमिन्द्रियाणाम् अर्थज्ञानजननशक्तिदानमभिप्रेतं करणं तु फलोप-धानमित्यर्थः । एवं च यथा यवंवार्भिः सेके सति क्लेदनेनाङ्कुरजननशक्त्याविर्भावे सति पश्चात्तेनाङ्कुरं जायते । एवमिन्द्रियाणामर्थसन्निकर्षेण ज्ञानजननशक्त्याविर्भावे सति पश्चात् ज्ञानमुत्पद्यत इति यत्तत्सर्वं सोमतर्पितपूषानुग्रहेणैवेति ऋगाशयः । अत्र भाष्ये शक्तिदानमित्यत्र शक्त्याविर्भाव-दानमित्यर्थो द्रष्टव्यः । शक्तेर्वस्तुस्वरूपतायाः सिद्धान्तितत्वेन सर्वदाविद्यमानतया दानायोगादिति सम्प्रदायविदः ॥ १९,१० ॥

## पदार्थदीपिका

याथनेति । 'तप्तनप्तनथनाश्च' इति थनादेश इति भावः । लोडन्तस्य याथनेति श्रौतपदस्य प्रकृतानानुगुण्यात् अनुगुणं लडन्तं प्रतिपदमाह । यूयं याथेति । तन्यतुरिति । ऋतन्यजिवनीत्यादिना अर्त्यादिभ्यो अनियतुजलिजिष्णुजादीनां प्रत्ययानां यथासङ्ख्यं विधानात् तनोतेः यतुच् प्रत्यय इति भावः । तनोति व्याप्नोति समन्तात् शीघ्रमिति तन्यतुः ध्वनिरिति व्युत्पत्तिः । क्रुरिति सूत्रेण धृषेः क्रुरिति शेषः । कित्वात् गुणाभाव इति भावः ॥ ११ ॥

क इति । कित्वात् आतो लोप इटि च इत्याकार लोप इति भावः । स्वेन सहेति । सह शब्दे उपपदे करोतेरप् प्रत्ययः । सहकार इति यथा इति भावः । अकारलोप इति । सहशब्दस्य सभावोपलक्षणं चैतत् । ततश्च सभावोऽकारलोपश्च छान्दस इति भावः । उच्यत इति । एतादृश इत्यस्य वायुभारतीपुत्रशब्दवाच्य इत्यर्थः । उच्यत इति शेषो वेति ज्ञेयम् ॥ १२ ॥

(पदार्थदीपिका)

अन्तर्णीतेति। प्रत्याजप्रत्याजयेत्येवं अन्तर्णीतण्यर्थस्य इत्यर्थः। इदं रूपमिति। बृंहेर्नलोपश्च इति भावे इसुन् प्रत्ययो नलोपश्च इति भावः। अजेरिति। आङ्पूर्वस्येति शेषः। इदं रूपमिति। आजेति रूपमित्यर्थः॥ यद्वा इदं रूपं अजेतिरूपमित्येवार्थः। तथाच पदद्वयमेव इदं बोध्यम्। तेन न निपात इति भावः। माभूत् दृष्टान्तननुगुणो गुरुत्वेन इति शेष इति भावेन उत्तरमन्त्रसमाख्यानात् प्रकारान्तरेण व्याचष्टे। यद्वेति। अर्थविशेषानुगुण्येन एकं पदमिति भावः। बहुलं संज्ञाछन्दसोरिति वक्तव्यात् छन्दस्युभयथेति लटः सार्वधातुकत्वाद्वा अजेर्वीभावाभावः इति भावः॥ १३॥

गुहाहितमिति पदद्वयमनूद्य यथाक्रममर्थमाह। गुहेति। सुपां सुलुक् इत्यादिना श्रुतौ सप्तम्या लुक् इति भावेनाह। गुहायामिति। निष्ठायां दधातेर्हिरिति हिरादेश इति भावेनाह। निहितमिति। अपगूढमिति। गुहूसंवरणे। अपपूर्वात् अस्मात् निष्ठा इति कर्मणि क्तः। होढ इति ढत्वम्। झषस्तथोर्धोऽधः इति धकारः। ष्टुत्वम्। ढ्रलोपः। दीर्घश्च इति भावः॥ १४॥

अनुदात्तत्वं छान्दसमिति। 'अभ्यस्तानामादि'रित्यनेन तिङन्तस्य प्रत्यय स्वरबाधे नस इत्यादेः उदात्तत्वे शेषनिघाते च सति 'तिङस्तिङ्' इति प्राप्तसर्वनिघातस्य च यत्तदोर्नित्यसम्बन्धात् यद्वृत्तान्नित्यं इति यद्वृत्तयोगेन 'वाचर्कृषच्च' इति भाष्योक्त चकारलोपाच्च 'आदिलोपे विभाषा' इति वा निषेधे च सति आद्युदात्तेन अनुशब्देन उदात्तवता तिङा 'गतेः समास' इति वचनात् 'सेषिधत्' इति तिङः कुगतिप्रादय इति समासे सति समासस्य इति प्राप्तसमासान्तोदात्तत्वस्य, 'तत्पुरुषे तुल्यार्थे'त्यादिलक्षणप्राप्त अव्ययपूर्वपदप्रकृतिस्वरेण उपसर्गश्च अभिवर्जमित्युक्तगत्यन्तोदात्तेन अपोदितस्य तिङिचोदात्तवतीति गतिसर्वनिघातेन बाधे सति अपवादाभावे पुनरुत्सर्गस्य स्थितिरिति न्यायेन उत्सर्गप्राप्तस्य समासस्वरस्यैव पुनः प्राप्तौ अनुदात्तं पदमेकवर्जमिति शिष्ट सर्वानुदात्तत्वेन भाव्यम्। कथं पुनरभ्यस्तयोर्द्वितीयस्यैव अनुदात्तत्वम्। समासान्तरस्य चानुदात्तत्वं अभ्यस्तादेश्चोदात्तत्ववैपरीत्यस्या- लाक्षणिकत्वात् इत्याशङ्कापरिहारार्थं अनुदात्तत्वं छान्दस-मित्युक्तम्। तस्य परादिःछन्दसि बहुलं इत्यभ्यस्तादेरुदात्तत्वे शेषनिघात संभवात् समासान्तस्य अनुदात्तत्वं छान्दसं परादिश्छन्दसि बहुलं इति छन्दोविषयकछन्दःशब्दगर्भ-सूत्रविहितपराद्युदात्तत्वमूलकमित्यर्थः। यद्वा 'सह सुपा' इत्यत्र सहेति योगविभागात् समासे सति तस्य तत्पुरुषाधिकारेऽविहितत्वात् अव्ययपूर्वपदप्रकृतिस्वरत्वाप्राप्तेः समासान्तोदात्तत्वस्य 'तिङस्तिङ' इति निघातापवादकस्य बाधेन उक्तरीत्या अनुदात्तत्वं छान्दसमित्यर्थः। केचित्तु परादेरजायमानमनुदात्तत्वं छान्दसम्। परादिश्छन्दसि बहुलमिति सूत्रविहितपराद्युदात्तत्वनिमित्तं तस्मान्न भवतीत्यर्थ इत्याहुः॥ अन्ये तु समासान्तोदात्तत्वे एकवर्जपदस्वरेण शिष्टानुदात्तत्वं

(पदार्थदीपिका)

स्यादिति न वाच्यम् । छन्दसि सर्वे विधयो विकल्पन्त इत्युक्तेः छान्दसत्वेन व्यवस्थितविकल्पितत्वात् । अत्र सूत्रप्राप्तावपि अजायमानं यत्समासान्तोदात्तत्वं तन्मूलकमित्यर्थ इत्याहुः ।

परे तु 'तिङ्स्तिङ' इत्युक्तमनुदात्तत्वं छान्दसं गतेराद्युदात्तत्वात् । न च 'तिङि चोदात्तवति' इत्युदात्तत्ववति तिङि परे गतेः अनुदात्तत्वविधानात् न तत् छान्दसत्वाभिधानं उचितमिति वाच्यम् । छान्दसमित्यस्य परादिश्छन्दसीत्युक्त छान्दसपराद्युदात्तत्वनिमित्तक- मित्यर्थस्वीकारादोष इत्याहुः । केचित्तु एवं भावमङ्गीकृत्य गतिसमासे गतेः अनुदात्तत्वं छान्दसमित्याहुः । तन्न ।। प्रकृतिस्वरेण आद्युदात्तस्यापि गतेरुदात्तवति तिङि परे तिङियोदात्तवतीत्यनुदात्त- त्वानुशासनेन तच्छान्दसत्वोक्तेरज्ञानमूलकत्वात् ।। न च तत्पुरुषे तुल्यार्थे'त्यादिना अव्ययपूर्वपद- प्रकृतिस्वरविधानात् गतेरनुदात्तत्वं छान्दसमिति यथाश्रुतमेव अस्तु इति वाच्यम् । अव्ययग्रहणे नञ् कुनिपातानामेव ग्रहणेन अस्य च उपसर्गत्वेन अनव्ययत्वात् । 'आकडारादेका संज्ञा' इत्युक्तेः । यद्वा तिङि चोदात्तवतीत्यस्य आष्टमिकस्य परत्वेन 'विप्रतिषेधे परं' इति न्यायेन षाष्टिकाव्ययपूर्वपदप्रकृतिस्वरत्वबाधकत्वेन तत्प्राप्तिसम्भवात् इत्यास्तां तावत् ।।

सेषिधत् चर्कृषदिति पदद्वयं व्युत्पादयति । यङिति । षिधुगत्याम् । धात्वादेःषःसः । धातोरेकाच इति यङ् । यङोऽचि चेति तस्य लुक् । प्रत्ययलक्षणेन सन्यङोरिति द्विर्भावः । हलादिः शेषः । गुणो यङ्लुकोरित्यभ्यासस्य गुणः । इण्कोरिति षत्वम् । सनादित्वात् धातुसंज्ञायां लेटस्तिप् । इतश्च लोप इतीकारलोपः । लेटोऽडाटौ इत्यडागमः । चर्करीतं पदमदादिवच्च इति वचनेन अदादिवद्भावात् अदिप्रभृतिभ्यः शपः इति शपो लुक् । नाभ्यस्तस्याचि पिति सार्वधातुके इति लघूपधगुणनिषेधः । तेन सषिधदिति विवक्षित रूपसिद्धिः । नचोपसर्गात् सुनोतीति षत्वे अनुषेषिधदिति स्यात् इति शङ्क्यम् । सेधतेर्गताविति तन्निषेधादिति भावः । डुकृञ्करणे पूर्ववद्यङ्लुक्द्विर्भाव हलादिशेषोरदत्वचर्त्वानि 'रुग्रिकौ च लुकि' इत्यभ्यासस्य रुगागमः । अस्मात् यङ्लुङन्तात् लेटस्तिप् । इतश्च लोप इतीकारलोपः । लेटोडाटावित्यडागमः । अदिप्रभृतिभ्य शप इति शपो लुक्प्राप्तौ नाभ्यस्तस्याचि पिति इति सिब्बहुलं लेटि इति सिप् । आदेशप्रत्यययोरिति तस्य षत्वम् । बहुलं छन्दसि वक्तव्यमिति गुणनिषेधः । तेन चर्कृषदिति रूपनिष्पत्तिरिति ध्येयम् । केचितु सन्निधानात् यङ्लुङन्तानां लेडित्येतद्व्युत्पादनं चर्कृषदित्येतत्पदमात्रविषयमङ्गीकृत्य अन्वसेषिधदिति काचित्कप्रतिपदव्याख्यानुसारेण अनुसेषिधदिति लुङि रूपमित्याहुः।।१५-१०।।

## टीकाविवृतिः

जयतामिव ।। यातेर्लटि थस्य तप्तनप्तनथनाश्चेति थनादेशे याथनेति श्रुतिभाष्ययोःप्रयुक्तं तस्य प्रतिपदमाह ।। याथेति ।।

तन्यतुर्ध्वनिरिति ।। ऋतन्यं जीत्यादिना ष्टनशब्दे इत्यस्य लुप्तसकारस्य त निशब्देन ग्रहणाद्यतुजिति भावः । उणादिवृत्तौ तु तनुविस्तारे इत्यस्माद्यतुजंगीकृतः । तत्पक्षे धातूनामनेकार्थत्वं बोध्यम् ।। जयतामिति ।। जयशीलानां नृपाणामिव ।। त्रसिगृधीति ।। इति सूत्रेण धृषेःक्नुप्रत्यय इति शेषः ।। यादेश इति ।। याजादेश इत्यर्थः । अत एव चित्वादंतोदात्तत्वमिति भावः ।। ११ ।।

हस्काराद्विद्युतः ।। हइत्यत्र योग्यतया दोषानिति संबध्यते । तथास्कार इत्यत्र गुणानिति । सहशब्दप्रतियोगित्वेन स्वेनेति च संबध्यते । गुणान्स्वेन सहकरोति स्वसंबद्धान्करोतीत्यर्थः । सहपूर्वात्कृञः औणादिकेऽणूप्रत्यये वोपसर्जनस्येति सहस्य सादेशे पृषोदरादित्वात्सशब्दस्याकारलोप इति भावः ।। सम्यग्जातत्वादिति ।। विशिष्टमातापितृजन्यत्वादित्यर्थः ।। एतदिति ।। वायुभारतीपुत्रत्वमित्यर्थः ।। उच्यत इति ।। भाष्ये शेषकथनमेतत् ।। १२ ।।

आपूषन् ।। घृणयो रश्मय इति ।। किरणोस्रमयूखांशुगभस्तिघृणिघृष्टय इत्यमरोक्तेरिति भावः ।। इदं रूपमिति ।। बृंहेर्नलोपश्चेतीसिप्रत्ययो नलोपश्चेति भावः । चित्रशब्दार्थो नानाविधमिति । पूर्णत्वं तु बर्हिःशब्दार्थो ज्ञेयः । ज्ञानभक्त्यादीनां गुणानां बहुविधत्वात्पूर्णत्वमपि नानाविधमित्यर्थः ।। गुरुत्वेनेति ।। अयमाङोर्थ इति भावः ।। धरुणमिति ।। धृधातोरौणादिक उनप्रत्यय इति भावः । नश अदर्शन इति धातोःइतस्ततो गतत्वान्नष्टमिति भावेनाह ।। गतं गामिति ।। लिङन्तमिति ।। अस्मिन्पक्षे छांदसत्वादजेर्वीभावद्वित्वाभावयोर्द्वित्वेवा सति अत आदेरिति दीर्घो न । संज्ञापूर्वको विधिरनित्य इत्युक्ते अत उपधाया इति वृद्धिश्च अरजेति रूपं पश्चादाङोन्वय इति भावः ।। आदिकाले इति ।। सृष्टिकाल इत्यर्थः ।। १३ ।।

पूषाराजानम् ।। श्रुतौ गुहेत्यत्र सुपां सुलुगित्यादिना सप्तम्याः लुगित्याशयेनाह ।। गुहायामिति ।। हितमिति ।। दधातेर्हिरिति धाञो हिरादेश इति भावः । सर्वेषां नियामकत्वेन हृदयगुहायां निहितमित्यर्थः । अपपूर्वगुहेःक्तप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु प्रातिशाख्योक्तळ्हमिति रूपम् । तस्य योग्यतया स्वकुक्षिशब्दाध्याहारेणान्वय इति भावेनाह ।। स्वकुक्षीति ।। अविंददिति ।। विदॢलाभ इत्यतो लङि तुदादित्वाच्छप्रत्यये शेमुचादीनामिति नुमिति भावः । पूर्वऋगुक्तार्थस्यात्र पुनरुक्तिरभ्यासार्था विशेषणान्तरकथनादधिकविधानार्था चेति बोध्यम् ।। १४ ।।

(टीकाविवृतिः)

उतोसः ॥ तादर्थ्ये चतुर्थीत्याशयेनाह ॥ मह्यं मदर्थे इति ॥ षड्युक्तानिति पदद्वयं विशेष्याध्याहारेण योजयति ॥ षडिन्द्रियाणीति ॥ अनुसेषिधदित्यत्रानुपूर्वसिधेर्यङ्लुगन्तादन्तर्णीतण्यर्थाल्लेटि लेटोडाटावित्यडागमे इतश्च लोपःपरस्मैपदेष्विति तिप इकारलोप इति भावेनाह ॥ साधयामासेति ॥ अनुशब्देन सेषिधदित्यस्य कुगतिप्रादय इति समासे समासांतोदात्तत्वापवादेन तत्पुरुषे तुल्यार्थेत्य व्ययपूर्वपदप्रकृतिस्वरेणानुशब्दस्याद्युदात्तत्वप्राप्तौ कथमनुदात्तत्वं तथानुदात्तं पदमेकवर्जमिति सेषिधदित्यस्यानुदात्तत्वे प्राप्ते नोदात्तत्वमित्यत आह ॥ अनुदात्तत्वं छान्दसमिति ॥ अनोरिति शेषः । अनुदात्तत्वमुदात्तत्वाभावः । सर्वे विधयश्छन्दसि विकल्पन्त इत्युक्तेस्तत्पुरुषे तुल्यार्थेति नेत्याशयः । सेषिधदित्यस्य तु परादिश्छन्दसि बहुलमित्याद्युदात्तत्वं ज्ञेयम् ॥ यङ्लुगन्तादिति ॥ कृञो यङ्लुकि द्वित्वे अभ्यासस्य उरदत्वे हलादिःशेषे कुहोश्चुरिति चुत्वे रुग्रिकौ च लुकीति रुगागमे लेटि अडागमे सिब्बहुलं लेटीति सिप्प्रत्यये बहुलं छन्दसीति गुणाभावे तिप इकारलोपे इदं रूपमिति भावः ॥ गोभिर्वार्भिरिति ॥ भूवाग्वारिषु गौर्मत इति विश्वकोशोक्तेरित्याशयः । यवं धान्यविशेषम् ॥ साधनं त्वितीति ॥ इन्द्रियाणां करणमुत्पादनं साधनं तु विषयभोगे सामर्थ्योत्पादनमित्यर्थः ॥ १५ ॥ १० ॥

ऋक्संहिता पदपाठसहिता (सू-२३, व-४)

(२४५) अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् ॥ पृञ्चतीर्मधुना पयः ॥ १६ ॥

(प०) अम्बयः । यन्ति । अध्वऽभिः । जामयः । अध्वरिऽयताम् ॥ पृञ्चतीः । मधुना । पयः ॥ १६ ॥

(२४६) अमूर्या उप सूर्ये याभिर्वा सूर्यःसह ॥ तानो हिन्वन्त्वध्वरम् ॥ १७ ॥

(प०) अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह ॥ ताः नः । हिन्वन्तु । अध्वरम् ॥ १७ ॥

(२४७) अपो देवीरुपह्वये यत्र गावःपिबन्ति नः ॥ सिन्धुभ्यः कर्त्वं हविः ॥ १८ ॥

(प०) अपः । देवीः उप । ह्वये । यत्र । गावः । पिबन्ति । नः । सिन्धुऽभ्यः । कर्त्वम् । हविः ॥ १८ ॥

(२४८) अप्स्वं१न्तरमृतमप्सु भेषजमपामुत प्रशस्तये ॥ देवा भवत वाजिनः ॥ १९ ॥

(प०) अप्ऽसु । अन्तः । अमृतम् । अप्ऽसु । भेषजम् । अपाम् । उत । प्रऽशस्तये ॥ देवाः । भवत । वाजिनः ॥ १९ ॥

(२४९) अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ॥ अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥ २०, ११ ॥

(प०) अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि । भेषजा ॥ अग्निम् । च । विश्वऽशंभुवम् । आपः । च । विश्वऽभेषजीः ॥ २०, ११ ॥

## ऋग्भाष्यम्

अम्बयो मातरो ह्यापः कारणत्वात्सहोदराः । जगतो जामयो यस्मात्सह ताभिर्विवर्धते । अध्वरं कुर्वतां क्षीरं सोमं चापि प्रपृंचतीः । सम्पृक्ताः ॥ १६ ॥ याःसमीपस्थाः सूर्यस्य सहिता अपि ॥ १७ ॥ ह्वयामि ता याः पिबन्ति गावो नः सर्वथा हविः । कार्यं नदीभ्यः ॥ १८ ॥ तास्वंतरदृश्यममृतं स्थितम् । अपामेव प्रशंसार्थं सहायाः संतु नः सुराः ॥ १९ ॥ तात्पर्यार्थं पुनर्वाक्यं सुखाधारो हुताशनः ॥ २०, ११ ॥

## ऋग्भाष्यटीका

अम्बयः । एता आप्याः । अंत्याध्यर्धाग्नेयीत्येके । दर्शनात्तु पयस्वानित्यर्धर्च आग्नेय आप्यश्च । संमाग्न इत्यृक् सर्वदेवत्या । अम्बयः । अम्बापर्यायोंबिशब्दः । अतोंबयो मातरः । काः आपः । कुतः प्रकरणादिति हिशब्देनाह । कथं मातृत्वमपाम् । जगतः कारणत्वात् । जामयः सहोदराश्च । कस्य । जगतः । कथम् । यस्मात्ताभिस्सह विवर्धते । पार्थिवादिभागचतुष्टयात्मकं जगद्वर्धमानमाप्यभागेन सहैव वर्धते यस्मात्तस्मात्सहोदराः । आध्वरीयतामित्यादि व्याख्याति । अध्वरमिति । यद्यप्यध्वरीयच्छब्दोध्वरमिच्छत आह । तथापि तस्यां दशायां सोमादि सम्बन्धानुपपत्तेरिच्छया करणमुपलक्ष्याध्वरं कुर्वतामित्युक्तम् । क्षीरसोमयोः समुच्चये चशब्दः । अपिशब्दस्त्वपां विशेषणसमुच्चये । अम्बयो जगतो मातरो जामयो

(ऋग्भाष्यटीका)

भगिन्यश्च अध्वरीयतामध्वरमिच्छतामध्वरं कुर्वतामिति यावत्। मधुना सोमेन सह। पयः क्षीरं सोमं चेत्यर्थः । प्रपृञ्चतीः पृची सम्पर्के । प्रपृञ्चत्यः सम्पृक्ता आपोऽध्वभिर्मार्गैर्यन्ति गच्छन्ति । नद्योऽनेनाभिप्रेयन्ते॥ १६॥

अमूर्याः। या अमूराप उपसूर्ये सूर्यसमीपे सूर्यस्य समीपस्थाः। वाशब्दः समुच्चये। सूर्यश्च याभिः सह वर्तते । अन्योन्यसाहित्योक्तेः तात्पर्यं सहिता अपि सूर्येण सहिता एव सदा वर्तन्ते । यद्वा व्याख्यानमेवैतत्। ससूर्योपि ता अपः प्राप्यैव वर्तते हीति। ता नोस्मदीयमध्वरं हिन्वन्तु। हि गतौ वृद्धौ च। गच्छन्तु वर्धयन्तु च॥ १७॥

अपः। ह्वयामि। यत्र द्वितीयार्थे सप्तम्येषा। याः नोस्मदीया गावः पिबन्ति ता अपो देवीरहमुपह्वये ह्वयामि। कस्मात्। यतो नोस्माकं सर्वथा हविः सोमादिलक्षणं सिन्धुभ्यो नदीभ्यः। तादर्थ्ये चतुर्थ्येषा। तदुद्देशेन पञ्चमी वा। कर्त्वं कार्यम्। कृत्यार्थे तवैकेन्केन्यत्वन इति त्वन्॥ १८॥

अप्स्वन्तः। तास्वप्स्वन्तः। अमृतं मरणाभावस्य कारणं द्रव्यं यदुच्यते तत्तास्वप्सु तासामपामन्तर्मध्ये स्थितम्। कंपसूचितमर्थमाह॥ अदृश्यमिति। यद्वा अमृतं तास्वप्सु स्थितम्। कथम्। अन्तरंतर्हितम् अदृश्यम्। तेन नानुपलंभबाधः। भेषजं च रोगनिवर्तकं द्रव्यमप्स्वेव स्थितम्। तासामपामुत अपामेव। प्रशस्तये प्रशंसार्थम्। वाजिनोन्नवन्तो देवाः सुराः भवत सन्तु। पुरुषव्यत्ययः केवलाब्दैवत्यज्ञापनार्थः। नःसहाया इति शेषः। अपां प्रशंसां कुर्वतामस्माकं वाङ्मनसादि प्रेरयंत्विति॥ १९॥

अप्सुमे। पूर्वस्यामृचि कथितमेवात्र कस्मात्कथ्यते अप्सु विश्वानि भेषजानीत्युक्त्वा पुनरापश्च विश्वभेषजीरिति किमर्थमुच्यत इत्यत आह ॥ तात्पर्यार्थमिति । प्रमाणोपन्यासाद्यर्थत्वे नाप्यपुनरुक्तिर्द्रष्टव्या। अग्निं च विश्वशम्भुवमित्यस्यार्थमाह॥ सुखाधार इति। सोमो राजेदं मेऽब्रवीत्। किम् अप्स्वन्तर्विश्वानि भेषजानि सन्तीति । किञ्च विश्वशम्भुवं सम्पूर्णसुखभूमिमग्निं चाप्स्वन्तः स्थितमब्रवीत्। आपश्च विश्वभेषजीः विश्वानि भेषजानि यासु ता विश्वभेषजीः। केवलमामकेति ङीप्। यदप्सकलभेषजरूपा एवेत्यब्रवीत्॥ २०, ११॥

## मन्त्रार्थमञ्जरी

एताआप्यः। 'अन्त्या अध्यर्धाग्नेयी' (अनुक्रमणिका) इत्येके, दर्शनात् 'पयस्वान्' इत्यर्धर्चं आग्नेय आपश्च, 'सं माग्ने' इत्यृक्सर्वदेवतका। अम्बाशब्दपर्यायोऽत्राम्बिशब्दः। 'जगतः' इति शेषः। अम्बयः, जगतो मातरः। जामयः, जगतो भगिन्यः। (च) अध्वरीयताम्, अध्वरमिच्छताम्, अध्वरं कुर्वतामिति यावत्। मधुना, सोमेन सह। पयः, क्षीरम्, सोमं चेत्यर्थः।

पृश्नतीः, 'पृची सम्पर्के' पृश्नत्यः, सम्पृक्ताः । (आपः) इत्यग्रेतनम् आकृष्यते । अध्वभिः, मार्गैः । यन्ति, गच्छन्ति, !'नद्योऽनेनाभिप्रेयन्ते' इत्युक्तं टीकायाम् । अपां जगन्मातृत्वम्– जगत्कारणत्वात्, जामित्वं तु– पृथिव्यादिभाग चतुष्टयात्मक जगतोऽद्भिः सह वर्धमानत्वादिति ज्ञेयम् । अध्वरमात्मन इच्छन्तीति 'सुप आत्मनः क्यच्' इति क्यचिपूर्वस्य 'क्यचि च' इतीत्त्वे ततो लटि शत्रादेशे 'अध्वरीयत्' इति रूपम् । अत्राध्वरेच्छया तत्कृतेर्लक्षणयोक्तेः 'अध्वरं कुर्वताम्' इत्युक्तम्, अन्यथा– अपां सोमसम्बन्धोक्तिरयुक्तेति । अत्र जडस्तुतेरयोगादभिमानिनयन्यायात् 'देवीः' इति श्रवणाच्चाब्देवता हरिस्त्रीतनवश्च ग्राह्याः ॥ १६ ॥

याः अमूः (आपः) उप सूर्ये, सूर्यस्योप, व्यत्ययेन सप्तमी, सूर्यस्य समीपस्थाः । वा शब्दः समुच्चये वा सूर्यः, सूर्यश्च । याभिः सह (वर्तते) 'सदा सूर्येण सहिता एव' इत्युभयोक्तितात्पर्यार्थः । ताः, आपः । नः, अस्मदीयम् । अध्वरम् । हिन्वन्तु, 'हि गतौ वृद्धौ च' गच्छन्तु, वर्धयन्तु च ॥ १७ ॥

'यत्र' इति द्वितीयार्थे सप्तमी– यत्र, याः । नः, अस्मदीयाः । गावः पिबन्ति । (ताः) अपः देवीः (अहम्) उप ह्वये, आह्वयामि । कुतः ? (यतः) (नः) अस्माकम् । सर्वथा हविः, सोमादिलक्षणम् । सिन्धुभ्यः, नदीभ्यः, तादर्थ्ये चतुर्थ्येषा, पञ्चमी वा, तदुद्देशेन, ताभ्य इति वा । कर्त्वम्, कार्यम्, 'यत्सानोः सानुमारुहद्' इत्यत्रेव कृञः त्वन्प्रत्ययः कृत्यार्थे ॥ १८ ॥

(एकोनविंशी पुरउष्णिगुष्णिग्विशेषश्छन्दः । उष्णिक्छन्दसोऽभिमानिनी तु सौरी) अमृतम्, मृतिनिवृत्तिहेतुद्रव्यम् । अप्सु, अपां मध्ये । अन्तः, अन्तर्हितमस्ति । भेषजम्, रोगनिवारकद्रव्यम् । (च) अप्सु, अप्स्वेवास्ति । (तासाम्) अपाम् उत, अब्देवीनामेव । प्रशस्तये, प्रशंसार्थम् । वाजिनः, अन्नवन्तः । देवाः (नः सहायाः) इति शेषः । भवत, भवन्तु, व्यत्ययेन मध्यमपुरुषः केवलाब्दैवत्यज्ञापनार्थः, अपां प्रशंसां कुर्वतामस्माकं वाङ्मनसादिकं प्रेरयन्तु इति ॥ १९ ॥

(ऋ० म० १०।९।६-७-८-९) इत्यत्र त्रिशिरसा त्वाष्ट्रेण सिन्धुद्वीपेन वाम्बरीषेण दृष्टस्य एतदृक्चतुष्टयस्य मेधातिथिरपि ऋषिः (तत्र 'आपश्च' इति चरणस्य (केवल) मेधातिथिर्ऋषिः, इति विशेषः) विंश्यनुष्टुप् । सोमः, राजा । मे अप्सु अन्तः विश्वानि । भेषजा, भेषजानि । (सन्तीति) विश्वशंभुवम्, पूर्णसुखभूमिम् । अग्निम् च, अप्स्वन्तः स्थितम् । अब्रवीत् । आपः च । विश्वभेषजीः, विश्वानि भेषजानि यासु ताः, 'केवलमामकभागधेयपापापरसमानार्थकृत सुमङ्गलभेषजाच्च' इति ङीप्, सकलभेषजरूपा एवेति वार्थः । इति (अब्रवीत्), इत्यन्वयः ॥ २० ॥
इत्येकादशो वर्गः ॥ ११ ॥

## रूपावतारः

अम्बयः । अध्वरियच्छब्द इति । अध्वरशब्दात् 'सुप आत्मनः क्यच्' (३।१।८) इति इच्छयां क्यचि 'क्यचि च' (७।४।३३) इति ईत्वे क्यजन्ताल्लटः शत्रादेशे अध्वरीयदिति रूपम् । पृश्चतीरिति । सोमे पयसि उदकसम्पर्कोऽस्तीति भावः ॥ १६ ॥

अमूर्याः । अन्योन्यसाहित्योक्तेरिति । ऋचि अपां सूर्यस्य च साहित्योक्तेरित्यर्थः । भाष्ये सहिता इति नैकं पदं किन्तु सः हि ताः इति पदत्रयमिति भावेनाह । यद्वेति । सहिता अपीति भाष्यं याभिर्वा सूर्यः सहेति श्रुतिखण्डस्य व्याख्यानमिति ॥ १७ ॥

अपो देवीः । कर्त्वमिति । कृञो त्वन् प्रत्यये गुणे कर्त्वमिति रूपम् ॥ १८ ॥

अप्स्वन्तः । पुरुषव्यत्यय इति । भवतेति मध्यमपुरुषबहुवचनस्य सन्त्विति प्रथमपुरुषबहुवचनान्तेन व्याख्यानं अस्यां ऋचि अपां देवतात्वं न अन्येषां देवतात्वमिति ज्ञापनार्थमित्यर्थः ॥ १९ ॥

अप्सु मे सोमो अब्रवीत् । प्रमाणोपन्यासेति । आप्तस्य सोमस्य वचनं प्रमाणतयोपन्यस्यत इति भावः । केवलेति । 'केवलमामकभागधेयपापापरसमानार्थकृतसुमङ्गलभेषजाच्च' (४।१।३०) केवलादिभ्यः प्रातिपदिकेभ्यः संज्ञायां छन्दसि विषये स्त्रियां ङीपूप्रत्ययो भवतीति सूत्रार्थः ॥ २०, ११ ॥

## पदार्थप्रकाशिका

अंबयोयंत्यध्वभिः । शेषा आप्य इत्यनुक्रमणिकां मनसि निधायाह । एता इति । अंत्याध्यर्धेति । पयस्वानित्यर्धर्चसहिता संमाग्न इत्येषा ऋगित्यर्थः । आग्नेयीति । पयस्वानग्नेसंमा इत्युक्तत्वादिति भावः । केवलाग्नेयत्वस्योक्तत्वादेक इत्युक्तम् । दर्शनात्त्विति । प्रतीत्यनुसरणानुपयस्वानग्ने इत्युभयश्रुतिसद्भावादुभयदेवताकत्वमङ्गीकार्यमिति भावः । तत्र पयः शब्दो अब्वाचीति द्रष्टव्यम् । सर्वदैवत्येति । अत्रापि दर्शनात्विति वर्तते । विद्युन्मे अस्य देवा इति श्रवणादिति भावः । नन्वंबय इत्यल्पविशेष्यभूता आप एवेति कस्मादित्यत आह । प्रकरणादिति । ऋचामब्देवताकत्वेन तत्प्रकरणत्वादिति भावः । जगतो अद्भिः सहवर्धनम् उपपादयति । पार्थिवादीति । सहैवेति । तस्यापि भागचतुष्टयस्यान्तर्गतत्वादिति भावः । भेदाभेदसद्भावात्तदात्मकत्वेऽपि तेन सहैव वृद्धिरपि युक्तेति हृदयम् । अध्वरमिच्छत आहेति । अध्वरमात्मने इछतीत्यर्थे सुप आत्मनः क्यजिति

(पदार्थप्रकाशिका)

क्यप्रत्यये अकारं विहायेतरलोपे अनन्तरं शतृप्रत्यये इत्येतद्विहायेतरलोपेत क्यचिचेति क्यचिपरेदीर्घे अध्वरीयच्छब्दो अध्वरमिछत आहेत्यर्थः । एवं मुख्यार्थं प्रदर्श्य तदनुपपत्तिप्रदर्शनपूर्वकं लक्ष्यार्थं दर्शयति । तथापीत्यादिना । तस्यां दशायामिति ।

यजमानस्याध्वरेच्छासमये । पृंचतीर्मधुनापय इत्युक्तस्य सोमक्षीराभ्यां सम्बन्ध-स्यानुपपत्तेरित्यर्थः । इच्छया करणमुपलक्ष्यते । यज्ञकरणस्य तदिच्छासाध्यत्वादिति सम्बन्धो द्रष्टव्यः । यज्ञकरणसमयेऽयुक्तः सोमादेरद्भिः सम्बन्ध इत्याशयः । अत्रेच्छावाचकस्य प्रत्ययस्य वार्थगतं लक्षकत्वमित्यभिप्रायेण वा इच्छया करणमुपलक्ष्येत्युक्तमित्यवधेयम् । चापि शब्दयोर्वैय्यर्थ्य-माशङ्क्याह । क्षीरसोमयोरिति । समुच्चये परस्परसमुच्चये । विशेषणसमुच्चय इति । जामय इति विशेषणसमुच्चयमित्यर्थः । सहविद्यमानं तदभिप्रायकथनपरं भाष्यं संवादयति । क्षीरसोमं चेति प्रपृञ्चतीरिति । पृचिधातोरभ्यस्तत्वादभ्यासे ऋवर्णस्य यणादेशे प्रपृञ्चतीरित्येव वक्तव्यम् । ऋचि पृञ्चतीरित्युक्तिस्तु छान्दसत्वाशयेन पृञ्चतीरित्यनूदितमित्याह । मार्गैरिति । प्राच्योन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योन्या इत्युक्तमार्गैरित्यर्थः । ननु अम्बय इत्यत्र आप इति विशेष्यं पूरितम् । तत्र विशेष्यभूताः आपः का इत्यत आह । नद्योनेनेति । अध्वर्युभिर्यन्तीति वचनेन विशेष्यभूता आपो नद्य इत्युक्तं भवतीत्यर्थः ॥ १६ ॥

अमूर्या उपसूर्ये । समुच्चय इति । प्रथमद्वितीयपादोक्त प्रमेययोः परस्परसमुच्चय इत्यर्थः । अन्योन्यसाहित्योक्तेः पूर्वार्धर्चे इति शेषः । तात्पर्यमिति । सहिता अपीति । भाष्यस्य द्वितीयपादव्याख्यानरूपत्वाभावात् । तथात्वे सूर्यो याभिः सहित इति वक्तव्यत्वात् । प्रत्युत सूर्येण सहिता इत्येवमाद्यपदव्याख्यानरूपत्वमेव प्रमीयते । तथात्वे याः सूर्यस्य समीपस्था इत्यनेनाद्यपादस्य व्याख्यातत्वात् पौनरुक्त्यापत्तेः । अतः प्रथमद्वितीयपादाभ्यामन्योन्य- साहित्यस्योक्तत्वात् तत्तात्पर्यमनेनोच्यत इत्यर्थः । तात्पर्यकथनपरस्य सहिता इति भाष्यस्यार्थमाह । सूर्येणेति । आपः सूर्येण सहिताः सन्ति । सूर्यश्चाभिः सहास्तीत्युक्तेरपां सर्वदा सूर्येण साहित्य एव तात्पर्यमित्यर्थः । तात्पर्योक्त्यैवात्र द्वितीयपादोपि व्याख्यातप्राय इत्यवगन्तव्यम् । अत एवास्य रसात् सहिता इति पदच्छेद मङ्गीकृत्य द्वितीयपादव्याख्यानपरमेवेदं भाष्यमित्याह । यद्वेति । अध्वरं प्रतिगच्छतु वर्धयन्तु फलदानादिना अभिवृद्धिं कुर्वन्तु ॥ १७ ॥

अपोदेवीरुपह्वये । याः आपः । तादर्थ्ये इति । तादर्थ्याभिप्रायं दर्शयति । तदुद्देशेनेति । ननु देवतोद्देशेन सोमान्नादिलक्षणं हविः कर्तव्यमस्ति । अतस्ताभिरागतं च हविरादिकं करिष्याम्यतस्ता

(पदार्थप्रकाशिका)

आदावहमुपकुर्व इत्याशयः । पञ्चमी वेति । यतो नदीभ्यो नदीजलेभ्यः सोमान्नादिलक्षणं हविः मिश्रितं पक्कं च कार्यमस्ति । अत आपो देवीरुपह्वये ताभिरागतं चेत्तदुदकेन सोमान्नादिलक्षणं हविर्मिश्रितं पक्कं च करिष्यामीति भावः । कृत्यार्थ इति कृत्यार्थः कर्मत्वं तत्र चैते चत्वारः प्रत्ययाः स्युरिति सूत्रार्थः । त्वनिति । कृञ्करणे अस्मात् त्वन् प्रत्यये नकारलोपे गुणे तस्य रपरत्वे कर्त्वेति रूपम् ॥ १८ ॥

अप्स्वान्तरमृतमप्सु भेषजम् । यदुच्यत इति । क्षीरसमुद्रोत्पन्नं देवाहारभूतं सुधारूपं द्रव्यमित्यर्थः । कथमिति । अमृतं यद्यप्सु अस्ति तत्कथं तर्हि नोपलभ्यते । अतो अनुपलम्भान्नास्तीत्यर्थः । तेनेति । तथाच नानुपलब्धिमात्रस्याभावग्राहकत्वम् । अतीन्द्रियोच्छेदापत्तेः । किंनाम योग्यानुपलब्धेरेव । सा च प्रकृते नास्तीति भावः । ननु ऋचि भवतेति मध्यमपुरुषप्रयोगात् भाष्ये संत्विति कथं प्रथमप्रयोग इत्यत आह । पुरुषव्यत्यय इति । मध्यमपुरुषव्यत्यय इत्यर्थः । ननु कथमनेन केवलाब्दैवत्यं ज्ञापितमिति चेदुच्यते । अस्या ऋचः तावत्केवलाब्देवताकत्वमेवास्ति । न सर्वदेवताकत्वमिति स्थितिः । एवं च यद्यत्र पुरुषव्यत्ययो न स्यात् तदा देवाः यूयं भवतेत्यपरोक्षनिर्देशेन तेषामेव प्राधान्यप्राप्त्या देवताकत्वं प्रतीयते । पुरुषव्यत्ययकरणे तु अपां प्रशंसार्थं देवाः नः सहायाः संत्विति परोक्षनिर्देशेन प्रशंस्यानामपां प्राधान्यं सत्सहायभूतानां देवानां चाप्राधान्यं प्रतीयते । ततश्चाप्राधान्यभूतास्ते देवाः नात्र देवताः । किन्तु केवलाः अब्देवा एवेत्येवं केवलाब्दैवत्यज्ञापनार्थं पुरुषव्यत्यय इत्यवगन्तव्यम् । देवानामप्राधान्योपपाद नायैवेह नः सहाया इति शेष इति । अपां स्तुतिं कुर्वतामित्यनेन स्तुत्यतयापामेव प्राधान्यतया ता एव देवता इत्युक्तं भवति ॥ १९ ॥

अप्सु मे सोमो अब्रवीत् । पूर्वस्यामृचीति । अप्स्वांतरमृतमप्सु भेषजमिति कथमेवात्रोच्यत इति । पूर्वोत्तरऋचोः पुनरुक्तिरित्यर्थः । तथास्यामप्यृचि द्वितीयचतुर्थपादयोरपि पुनरुक्तिरित्याशयेनाह । किंचेति । तात्पर्यार्थमितीति । पूर्वोत्तरऋचोरस्यामपि द्वितीयचतुर्थपादयोर्न पुनरुक्तिः तात्पर्यार्थत्वादिति भावः । भाष्यपदमुपलक्षणमित्यभिप्रेत्य पूर्वोत्तरयोः ऋचोः पुनरुक्तिपरिहारो-पायान्तरं स्वयमेवाह । प्रमाणेति । अप्स्वान्तरमृतमप्सु भेषजमिति पूर्वं स्वेनोक्तम् अत्र पुनस्तदनुवादेन अप्सु मे सोमो अब्रवीदित्येवं स्वोक्तार्थे सोमवचनरूपप्रमाणोपन्यासत्वाच्च न पूर्वोत्तरार्धयोः पुनरुक्तिरित्यर्थः । अप्सु म इत्यस्यामपि ऋचि द्वितीयचतुर्थयोः पादयोः पुनरुक्तिपरिहारस्तु तात्पर्यार्थं पुनर्वाक्यमित्युक्तरीत्यैव नात्र प्रमाणोपन्यासार्थत्वेनेत्युक्तप्रकार

(पदार्थप्रकाशिका)

इत्यवधेयम्। विश्वशब्दार्थः सम्पूर्णेति। अग्निं च अप्स्वन्तःस्थितमिति। यथोक्तं कर्मनिर्णये। भूतादिभूतोंबुनिधानमध्ये भूत्वा हरिः सर्वहरोतिधाम्ना। अगाधमम्भो विदधाति भस्म यो स वाडवाग्निर्नृहरिर्विचिन्त्य इति। ननु भेषजीरिति कथं ङीप्। टिढढाणेत्यादिसूत्रस्य ऋन्नेभ्योङीबि-त्यादिसूत्रस्य चाप्रवृत्तेरित्यत आह। केवलेति। केवलेति। केवलमामकनामधेय-वरसमानार्थकृतसुमङ्गलभेषजाच्चेति सूत्रेण भेषजशब्दात् ङीपो विधानात् भेषजीरिति युक्तमिति भावः। अस्यामपि ऋचि द्वितीयपादचतुर्थपादयोर्न पुनरुक्तिरित्यभिप्रेत्य चतुर्थपादस्यार्थान्तरमाह यद्वेति। भेषजरूपा एवेति। अपामेव सकलरोगनिवर्तकत्वादिति भावः॥ २०,११॥

## पदार्थदीपिका

अनुक्रमणिकां निराकरोति। अन्त्येति। दर्शनादिति। प्रतीत्यनुसारादित्यर्थः। आग्नेय आप्यश्चेति। पयस्वानिति अब्देवताकत्वस्य, अग्न इति अग्निदेवताकत्वस्य च श्रुतिबलेन प्रतीयमानत्वादिति भावः। सर्वदेवत्येति। 'विद्युर्मे' इत्यादिना सर्वदेवदेवत्यत्वस्य श्रुतिप्राप्तत्वादिति भावः। प्रकरणादित्युपलक्षणम्। 'अम्बयो यन्त्यध्वभि'रिति आपो वा अम्बय इति ब्राह्मणानुसारात् च इत्यपि द्रष्टव्यम्॥ आप्यभागेनेति। भूयसेति हृदयम्। अध्वरमिच्छत आहेति। अध्वरशब्दात् सुप आत्मनः क्यच् इति क्यच्। 'क्यचि च' इतीत्वम्। 'अपुत्रादीनामुपसङ्ख्यानमिति वक्तव्य'मिति वचनात् न 'छन्दस्यपुत्रस्य' इति इत्वनिषेधाभावः। सर्वे विधयश्छन्दसि विकल्पन्त इति वचनात् कन्यध्वरपृतनस्यर्चिलोप इति अकारलोपोपि न भवति। क्यच् प्रत्ययान्तधातोः लट्। तस्य शत्रादेश इति भावः। तस्यां दशायामिति। इच्छादशायां सोमसवनाभावेन 'मधुना प्रपृंचतीः' इत्युक्तसोमसम्बन्धस्यानुपपत्तेरित्यर्थः। सोमसवनकाले च अध्वरस्य निष्पद्यमानत्वादेव तत्र इच्छाविरहादिति भावः। क्षीरं सोमं चेति भाष्येण संवादयितुं मधुनेति पदार्थं वदन् 'पय' इत्यनूद्य तत्पदद्वयस्य क्षीरमित्यादि भाष्येण अर्थमुच्यत इत्याह। मधुनेत्यादिना। पूर्वोपात्तस्यापि सोमस्य शब्दतोऽप्राधान्यात् भाष्ये पश्चादुक्तिः इति ध्येयम्। पृची सम्पर्क इति। अस्माल्लट्। तस्य शत्रादेशः। रुंधादिभ्यः श्नम्। श्नसोरल्लोपः। अनुस्वारपरसवर्णौ। उगितश्चेति ङीप्। वा छन्दसीति पूर्वसवर्णदीर्घत्वमिति भावः। अनेनेति। अध्वरगमनेनेत्यर्थः॥ १६॥

उपसूर्ये सूर्यसमीप इति। अनेन उपसूर्यइत्येकं पदम्। सामीप्यार्थे चाव्ययीभावः। 'तृतीयासप्तम्योर्बहुलं' इति अम्भावाभावश्च इत्युक्तं भवति। उपसूर्य इति पदद्वयमनूद्य तात्पर्यकथनमेतदित्यप्याहुः। स्पष्टत्वात् भाष्यकृता द्वितीयपादो न व्याख्यात इति भावेन स्वयं

(पदार्थदीपिका)

व्याचष्टे। वाशब्द इति। तर्हि सहिता अपीति पदद्वयं उत्तरमन्त्रासम्बद्धं भाष्ये किमर्थमित्यत आह। अन्योन्येति। सः। हि। ताः। अपि इत्येवं पदचतुष्टयं एतदिति भावेन प्रकारान्तरेण व्याख्यातुमाह। यद्वेति॥ १७॥

सर्वथेति। सर्वप्रकारं हविरित्यर्थः। अत एव सोमादिति उत्तरत्र आदिशब्द इति भावः। त्वन्निति। भावकर्मणोः कृत्यार्थत्वात् प्रकृते कर्मणि त्वन् प्रत्यय इत्यर्थः। वृञः त्वन्प्रत्यये गुणे अचो रहाभ्यामिति द्वित्वमिति भावः॥ १८॥

पूर्वं अदृश्यत्वं कम्पार्थ इति व्याख्यातम्। इदानीं पदार्थ एवेति भावेन प्रकारान्तरेण व्याख्याति। यद्वेति। तास्विति। अस्मिन् व्याख्याने न सप्तमी षष्ट्यर्थ इति भावः। भवतेति श्रौतमध्यमपुरुषानुसारेण 'स्थ' इति वक्तव्ये भाष्ये 'सन्तु' इति पुरुषव्यत्ययः किमर्थ इत्यत आह। पुरुषेति। श्रुत्यनुसारेण मध्यमपुरुषप्रयोगे देवानामपि अत्र देवतात्वमिति भ्रान्तिः स्यात्। तत्परिहाराय केवलाब् दैवत्यत्वज्ञापनार्थं श्रौतमध्यमपुरुषं विहाय भाष्ये प्रथमपुरुषप्रयोगइत्यर्थः॥४॥

केवलमामकेति ङीबिति। केवलमामकभागधेयपापावरसमानार्थकृत- सुमङ्गलभेषजाच्च इति सूत्रम्। तस्य केवलादिभ्यः प्रातिपदिकेभ्यः संज्ञायां छन्दसि विषये स्त्रियां ङीप् प्रत्ययो भवतीत्यर्थः। यद्यप्यनुपसर्जनादित्यधिकारो यूनस्तिरित्यभिव्याप्ता इति तावदाकरे स्थितम्। अत एव च बहवो युवानोऽस्यां शालायां बहुयुवा शाला इत्यत्र यूनस्तिरुपसर्जनत्वात् न भवति। अन्यथा बहुयुवतिः शाला इति यूनस्ति प्रसङ्गात्। ततश्च केवलेति योगस्यापि अनुपसर्जनभेषजशब्दात् ङीप् विधायकत्वम्। अत एव 'शिवारुद्रस्य भेषजी'रित्येव उदाहृतम्। तथाच विश्वानि भेषजानि यासु इति अन्यपदार्थप्रधानबहुव्रीह्याश्रयणे भेषजशब्दस्य उपसर्जनत्वमेवेति न अनुपसर्जनाधिकारे ङीप् विधायकेन केवलेति सूत्रेण ङीप् व्युत्पादयितुं शक्यत इति तदुदाहरणमयुक्तमिव आभाति। तथापि अनुपसर्जनाधिकारेपि 'त्र्येण्या' 'वशल्या' इत्यादौ 'वर्णादनुदात्तोपधात्तोन' इति सूत्रेण उपसर्जनादपि एतच्छब्दाद्यथा भवति तथा उपसर्जनादपि भेषजशब्दाद्भवेदेव ङीप्। अन्यथा त्रीणि एतानि यस्येति अन्यपदार्थप्राधान्यात् एतच्छब्दादपि सः न स्यात्। अथ तत्सूत्रे तदन्तविध्याश्रयणात् उपसर्जनत्वेपि एतच्छब्दस्य समस्तस्य त्र्येतशब्दस्यानुपसर्जनत्वात् अनुपसर्जनाधिकारविहितोपि प्रत्ययो युक्त इति मन्यसे हन्त एवं केवलसूत्रेपि तदन्तविधेरप्याश्रयणात् उपसर्जनत्वेऽपि भेषजशब्दस्य समस्तस्य विश्वभेषजशब्दस्य अनुपसर्जनत्वमेवेति युक्त एव अनुपसर्जनाधिकारे ङीब्विधायकस्य केवलेति सूत्रस्य टीकायामुपन्यास इति हृदयम्। यद्वा एतदस्वरसादेवाह। यद्वेति॥ २०, ११॥

## टीकाविवृतिः

अंबयो यन्ति ।। अनुक्रमणिकामनूद्य निराचष्टे ।। अंत्येति ।। दर्शनाद्देवतान्तरदर्शनादित्यर्थः ।। आप्यश्चेति ।। अग्नेःपयस्वानित्यनेनापामागमने साहित्योक्तेरिति भावः ।। सर्वदेवत्येति ।। विद्युर्मे अस्य देवा इन्द्रो विद्यादिति सर्वदेवोक्तेरिति भावः ।। अंबापर्यायोंबिशब्द इति ।। व्यत्ययेनाकारस्येकारादेशादिति भावः ।। प्रकरणादिति ।। अपो देवीरित्यादावप्श्रुतेस्तासामस्मिन्प्रकरणेप्रतिपाद्यत्वादिति भावः । उपलक्षणं चैतत् । अंबयो यंत्यध्वभिरित्यापो वा अंबय इति ब्राह्मणाच्चेति बोध्यम् ।। आप्यभागेनेति ।। अधिकेनेति शेषः ।। अध्वरीयच्छब्दमिति ।। अध्वरशब्दात्सुप आत्मनःक्यजितीच्छायां क्यचि नश्छन्दस्यपुत्रस्येत्यत्रापुत्रादीनामिति वक्तव्यत्वादित्वनिषेधाभावे क्य चि चेतीत्वे कव्यध्वरपृतनस्य र्चिलोप इत्यकारलोपस्य छान्दसत्वादभावे क्यजन्ताल्लटः शत्रादेशे निष्पन्न इति शेषः ।। तस्यां दशायामिति ।। इच्छासमये सोमसवनाभावात्पृंचतीर्मधुनेत्युक्तसोमसंबन्धानुपपत्तेरित्यर्थः । सोमसवनकाले तु यज्ञस्य जायमानत्वादिच्छानुपपत्तेरिति भावः ।। अपां विशेषणेति ।। अंबयो जामय इत्युक्तविशेषणसमुच्चये इत्यर्थः ।। मधुना सोमेनेति ।। तथा च श्रुतौ मधुनेति तृतीयायाःसहार्थत्वाच्छब्दतोऽप्राधान्यविवक्षया व्युत्क्रमेण भाष्ये क्षीरं सोमं चेति व्याख्यातमिति भावः ।। पृची संपर्के इति ।। अस्माल्लटःशतरि रुधादित्वाच्छ्नमि श्नसोरल्लोप इत्यकारलोपे उगित्वान्ङीपि वा छन्दसीति जसःपूर्वसवर्णदीर्घ इति भावः ।। संपृक्ता इति ।। षट्सु द्वितीयेत्युक्तेःपय इति द्वितीया तृतीयार्थे । तथा च पयः पयसा संपृक्ताःसंबद्धा इत्यर्थः ।। नद्योऽनेनेति ।। मार्गैर्गमनकथनेन नदीस्थापो विवक्षिताः । तटाकाद्युदकस्य स्वतो गमनाभावादिति भावः ।। १६ ।।

अमूर्याः ।। उपसूर्ये इत्युभयोः पदयोः समासपदेनार्थमाह ।। सूर्यसमीप इति ।। अनेन सूर्ये इत्यस्य विभक्तिविपरिणामेन षष्ठ्यंतत्वं उपशब्दस्य समीपार्थस्य पश्चादन्वय इत्युक्तं भवति । भाष्यं तु तिष्ठतेरध्याहारेण श्रौतपदान्वयप्रदर्शकमिति भावेन तदनुवदति ।। सूर्यस्य समीपस्था इति ।। वाशब्दः समुच्चय इति ।। वाऽव्ययं स्यात्समुच्चये इत्येकाक्षररत्नमालोक्तेरिति भावः । भाष्ये द्वितीयपादस्याव्याख्यातत्वात्स्वयं व्याख्याय सहिता अपीति भाष्यं प्रथमार्धतात्पर्यार्थपरत्वेन योजयति ।। अन्योन्येति ।। तात्पर्यार्थपरत्वापेक्षया साक्षाद्व्याख्यानपरत्वं स्वरसमिति भावेनाह ।। यद्वेति ।। द्वितीयपादस्येति शेषः । भाष्ये सहिता इति नैकं पदं किन्तु सः हि ता इति पदत्रयमिति भावेन व्याख्याति ।। ससूर्य इति ।। याभिःसहेति श्रौतपदयोर्व्याख्यानम् ।। ता अपःप्राप्यैवेति ।। गच्छंत्विति ।। प्राप्नुवंत्वित्यर्थः ।। १७ ।।

(टीकाविवृतिः)

अपो देवीः ।। द्वितीयार्थे इति ।। सुपां सुपो भवन्तीत्युक्तेः । याः अपः ।। सर्वथेति ।। सर्वप्रकारमित्यर्थः । सोमादीत्यादिशब्देन चरुपुरोडाशादि गृह्यते ।। तदुद्देशेनेति ।। नद्यभिमानि-देवतोद्देशेनेत्यर्थः ।। पञ्चमी वेति ।। हेताविति शेषः । नद्याद्युदकेन सोमादिकरणादिति भावः ।। इति त्वन्निति ।। कृत्यार्थस्य भावकर्मरूपेणद्वैविध्यात्कृञोऽत्र कर्मार्थे त्वन्नित्यर्थः ।। १८ ।।

अप्स्वं१तः ।। अमृतं नाम सुधा तस्या उदकस्थत्वाभावात्कथमेतदुक्तमित्यतो यौगिकार्थाङ्गीकारेण तद्घटयति ।। मरणाभावेति ।। तेन न विद्यते मृतं मृतिर्यस्मात्कारणात्तदमृतमिति विग्रह इति भावः ।। द्रव्यमिति ।। जलशायिरूपमित्यर्थः । अप्स्वित्यस्य षष्ठ्यंतत्वाश्रयणारुचेराह ।। यद्वेति ।। अस्मिन्पक्षेऽदृश्यमिति भाष्यमन्तश्शब्दार्थपरमिति भावेन तन्निवर्त्याशङ्कामाह ।। कथमिति ।। अमृतमप्सु स्थितं चेत्कथमनुपलंभ इत्यर्थः । ननु श्रुतौ देवा भवतेत्यत्र देवशब्दस्य पचाद्यजन्तत्वेन चित इत्यन्तोदात्तत्वे प्राप्ते आमन्त्रितस्येति षाष्ठिकाद्युदात्तत्वेन संबोधनान्तत्वनिश्चयाद्यूय-मित्यध्याहारेण भवतेति मध्यमपुरुषप्रयोगोपपत्तेर्भाष्ये संत्विति प्रथमपुरुषप्रयोगेण प्रतिपदं कथमित्यत आह ।। पुरुषव्यत्यय इति ।। वायवायाहीत्यादिवद्देवतानामपि मध्यमपुरुष प्रयोगविषयत्वेन देवतात्वप्रतीतिं निवार्येति शेषः । पुरुषव्यत्यय इत्युपलक्षणम् । देवा इत्यत्र संबोधनांतव्यत्ययेन शुद्धप्रथमांतत्वं च ग्राह्यम् । श्रुतौ वाजिन इत्यस्य संबोधनान्तत्वाभावान्नामन्त्रितस्वरः ।। शेष इति ।। श्रुतेःशेषोक्तिरित्यर्थः । अभिप्रायमाह ।। अपामिति ।। १९ ।।

अप्सु मे ।। कथितमेवेति ।। अप्सु भेषजमित्युक्तमेवान्तर्विश्वानि भेषजेत्यनेनोच्यत इत्यर्थः । ननु पूर्वोक्तार्थे मे सोमो अब्रवीदिति प्रमाणकथनान्न पौनरुक्त्यमित्यत आह ।। अप्सु विश्वानीति ।। प्रमाणवाक्य एवापां भेषजत्वस्य द्विवारमुक्तेर्न पौनरुक्त्यपरिहार इति भावः । भाष्यमुपलक्षणत्वेन योजयति ।। प्रमाणोपन्यासादीति ।। आदिशब्देन सकलभेषजरूपत्वरूपार्थान्तरपरिग्रहः ।। विश्वानि भेषजानीति ।। सर्वौषधानामुदकोपादानत्वात्कारणरूपेणाप्सु स्थितिरित्यर्थः । पूर्वस्यामृचि अनुक्तोग्निःसमुच्चीयते इत्याह ।। किंचेति ।। अग्नेःसमुद्रे विद्यमानत्वादिति भावः । आपश्चेत्यस्य प्रथमान्तत्वात्तदनुसारेण विश्वभेषजीरित्यत्र जसः वा छन्दसीति पूर्वसवर्णदीर्घमाश्रित्य इति शब्दाध्याहारेणान्वयमाह ।। इत्यब्रवीदिति ।। पौनरुक्त्यन्तात्पर्यार्थ- मित्यंगीकृत्यैकार्थत्वेन व्याख्यायेदानीं पौनरुक्त्यमेव नास्तीत्याशये- नार्थान्तरमाह ।। यद्वेति ।। बहुव्रीहिपक्षे बहुव्रीहौ विश्वं संज्ञायामिति विश्वशब्दस्यान्तोदात्तत्वम् । अस्मिन्पक्षे परादिश्च परान्तश्च पूर्वान्तश्चापिदृश्यते इति वार्तिकेन विश्वशब्दस्यांतोदात्तत्वं ज्ञेयम् ।। २० ।। ११ ।।

ऋक्संहिता पदपाठसहिता (सू-२३, व-५)

(२५०) आपः पृणीत भेषजं वरूथं तन्वे३ मम ॥
ज्योक्च सूर्यं दृशे ॥ २१ ॥

(प०) आपः । पृणीत । भेषजम् । वरूथम् । तन्वे । मम ॥ ज्योक् ।
च । सूर्यम् । दृशे ॥ २१ ॥

(२५१) इदमापःप्रवहत यत्किंच दुरितं मयि ॥ यद्वाहमभिदुद्रोह यद्वा शेप
उतानृतम् ॥ २२ ॥

(प०) इदम् । आपः । प्र । वहत । यत् । किम् । च । दुःऽइतम् ।
मयि ॥ यत् । वा । अहम् । अभिऽदुद्रोह । यत् । वा । शेपे ।
उत । अनृतम् ॥ २२ ॥

(२५२) आपो अद्यान्वचारिषं रसेन समगस्महि ॥ पयस्वानग्न आगहि तं
मा संसृज वर्चसा ॥ २३ ॥

(प०) आपः । अद्य । अनु । अचारिषम् । रसेन । सम् । अगस्महि ॥
पयस्वान् । अग्ने । आ । गहि । तम् । मा । सम् । सृज ।
वर्चसा ॥ २३ ॥

(२५३) संमाग्ने वर्चसा सृज संप्रजया समायुषा ॥ विद्युर्मे अस्य देवा
इन्द्रोविद्यात्सह ऋषिभिः ॥ २४, १२, २३, ५ ॥

(प०) सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् ।
आयुषा ॥ विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् ।
सह । ऋषिऽभिः ॥ २४, १२, २३, ५ ॥

## ऋग्भाष्यम्

वरूथं गुप्तिरुद्दिष्टा ज्योतिर्विष्णुदृशे तथा । सूरिप्राप्यो यतो विष्णुः सूर्य इत्यभिधीयते । पृणदाने ॥ २१ ॥ अखिलं पापमापः प्रवहतापि नः । हिंसाजं शेपजं चैव तथैवानृतसम्भवम् ॥ २२ ॥ रसेन सङ्गताश्चस्मो यस्मादनुचरा हिवः ॥ २३ ॥ कुर्युर्मामपि विद्वांसं मदर्थं सर्वदा सुराः । एतं मामिति वार्थः स्यादनुजानंतु वोदितम् ॥ २४, १२, ४, ५ ॥

## ऋग्भाष्यटीका

आपः पृणीत । अत्र वरूथशब्दार्थमाह । वरूथमिति । उत्तरार्धं व्याख्याति । ज्योतिरिरिति । सूर्यशब्दं विष्णौ निर्वक्ति । सूरीति । तृतीयान्तसूरिशब्दोपपदाद्यातेः कर्मणि कः । सूरिशब्दात्तृतीयासमर्थात्प्राप्यार्थे वा तद्धितो यः । पृणीतेत्यस्य धातुं पठति । पृणदान इति । हे आपो मह्यं भेषजं पृणीत दत्त । मम तन्वे शरीराय । षष्ठ्यर्थे चतुर्थी । वरूथं गुप्तिं च दत्त । भेषजस्यैव वैतद्विशेषणम् । सूर्यं विष्णुं दृशे द्रष्टुम् । दृशे विख्ये चेत्यव्ययम् । यद्वा सूर्यमिति षष्ठ्यर्थे दृश इति चतुर्थी । विष्णुदृशे ज्योक् ज्योतिर्ज्ञानं च पृणीत ॥२१॥

इदमापः । अखिलम् । हे आपो यत्किञ्च मयि दुरितमिदं नोऽस्माकमखिलमपि पापं प्रवहत अपनयत । किं तत् । अहं यदभिदुद्रोहत्वा हिंसाजमित्यर्थः । यद्वा शेपे शेपशब्दोऽत्र शेफः शब्दपर्यायः । निमित्तसप्तम्येषा । शेफजं च । उतानृतम् अनृतसम्भवञ्च । तत्सर्वं प्रवहतैव । वा शब्दावुतशब्दश्च समुच्चये ॥ २२ ॥

आपः । रसेन । हे आपोऽद्य वयं यस्माद्वोऽन्वचारिषम् । एकवचनं बहुवचनार्थे । वोनुचरा अभूम तस्माद्रसेन सुखेन समगस्महि संगताःस्मः । हे अग्ने अग्निं च विश्वशम्भुवमित्युक्तः । पयस्वानद्भिः सहित आगहि अस्मानागच्छ । आगत्य च तम् एवं स्तुवन्तम् । मा माम् । वर्चसा तेजसा । संसृज संयोजय ॥२३॥

संमाग्ने । हे अग्ने मा माम् । वर्चसा संसृज संयोजय । प्रजया च संसृज । आयुषा च संसृज । उत्तरार्धं व्याख्याति । कुर्युरिति । अनेन विद्युरित्यन्तर्णीतण्यर्थस्य रूपम् । अस्य मे इति द्वितीयार्थे षष्ठ्यावित्युक्तं भवति । देवाः अग्न्याद्याः । अस्य मे एतं माम् । विद्युः विद्वांसमपि कुर्युः । ऋषिभिः सहेन्द्रश्च मां विद्याद्वेदयेत् । प्रकारान्तरेण व्याख्याति । मदर्थमिति । अनेन ये देवाः सर्वं विद्युः यश्चेन्द्रः सर्वं विद्यात् ते सर्वे सह ऋषिभिः सुरा अस्य मे सन्तु सर्वदा मदर्थं सन्तु । ममोपकारकाः संत्वित्युक्तं भवति । प्रकारान्तरेण व्याचष्टे ॥ एतमिति । अनेन षष्ठ्यौ द्वितीयार्थे विद्युरिति तु यथाश्रुतमेवेत्युक्तं भवति । देवा अग्न्याद्या अस्य

(ऋग्भाष्यटीका)

मे एतं मां कृपापात्रं विद्युर्जानीयुः । ज्ञात्वा च कृपां कुर्युरिति यावत् । इन्द्रश्च सह ऋषिभिर्विद्यात् जानीयात् । प्रकारान्तरेण व्याख्याति । अनुजानंत्विति ॥ अनुमोदंता मित्यर्थः ॥ अत्र देवा अस्य मे उदितं विद्युरिति योज्यम् ॥ २४, १२, ४, ५ ॥

## मन्त्रार्थमञ्जरी

(एकविंशी प्रतिष्ठा गायत्रीविशेषः) (हे) आपः (मह्यम्) भेषजम् । पृणीत, 'पृण दाने' (वै० नि० ३।२०) दत्त । मम । तन्वे, षष्ठ्यर्थे चतुर्थी, शरीरस्य । वरूथम्, गुप्तिम् । (च) (पृणीत) दत्त । सूर्यम्, सूरिभिः प्राप्यम्, सूरिशब्दात्प्राप्त्यर्थे तद्धितो यत्प्रत्ययः, 'यस्येति च' इतीवर्णलोपः, विष्णुम् । दृशे, द्रष्टुम्, 'दृशे विख्ये च' (इति निपातः, 'कृन्मेजन्तः') इत्यव्ययत्वम्, यद्वा– 'सूर्यम्, सूर्यस्य विष्णोः । दृशे, दर्शनाय' । इति षष्ठी– चतुर्थ्यौ ज्ञेये । ज्योक् च, (ज्योक्शब्दो) ज्योतिःपर्यायः, ज्ञानं च । (पृणीत) दत्त इति ॥ २१ ॥

तिस्रोऽनुष्टुभः । (हे) आपः । यत् किम् च मयि दुरितम् इदम्, अस्माकमखिलमपि पापम् । प्रवहत, अपनयत । किं तत्? अहम् । यत् वा अभिदुद्रोह, प्राणिहिंसामकार्षम्, तज्जन्यं वा । यत् वा शेपे, शेफशब्दपर्यायोऽत्र शेपशब्दः, निमित्तसप्तमी, शेपनिमित्तम्, शिश्नजम् । उत अनृतम्, अनृतसम्भवम् । (च) तत्सर्वम् 'प्र वहत' इति ॥ २२ ॥

(हे) आपः अद्य । (वयं यस्मात्) (वः) अनु अचारिषम्, एकवचनं बहुवचनार्थे, युष्मदनुचरा अभूम । (हि) यस्मात्, रसेन, सुखेन । सम् अगस्महि, संगताः स्मः । (तस्मात्) (हे) अग्ने । अग्निं च विश्वशंभुवम्, इत्युक्तः (त्वम्) पयस्वान्, अद्भिः सहितः । आ गहि, अस्मानागच्छ । आगत्य च तम्, एवं स्तुवन्तम् । मा, माम् । वर्चसा, तेजसा । सम् सृज, संयोजय ॥ २३ ॥

(हे) अग्ने । मा, माम् । वर्चसा । सम् सृज, संयोजय । प्रजया (च) सम् (सृज) आयुषा (च) सम् (सृज) । देवाः, अग्न्याद्याः । अस्य मे, एनं माम्, व्यत्ययात् । विद्युः, वेदयेयुः, विद्वांसमपि कुर्युः, विदेः अन्तर्णीतण्यर्थस्य लिङि रूपम् । ऋषिभिः सह इन्द्रः (च) (अस्य मे), एनं माम् । विद्यात्, वेदयेत् । यद्वा (ये) देवाः (सर्वम्) विद्युः (यश्च) इन्द्रः (सर्वम्) विद्यात् (ते, स च) ऋषिभिः सह अस्य । मे सन्तु, सर्वदा ममोपकारकाः सन्तु । अथ वा– देवाः, अन्याद्याः । अस्य मे, एनं माम् (कृपापात्रम्) । विद्युः, जानीयुः, ज्ञात्वा च कृपां कुर्युरिति यावत् । इन्द्रः (च) सह ऋषिभिः विद्यात्, कृपापात्रं जानीयात्, (ज्ञात्वा च कृपां कुर्यादिति यावत्) यद्वा देवाः अस्य मे (उदितम्) विद्युः, अनुमोदन्ताम् । इन्द्रः (च) सह ऋषिभिः । विद्यात्, अनुमोदताम् इति ॥ २४ ॥ इति द्वादशो वर्गः ॥ १२ ॥ त्रयोविंशं सूक्तम् ॥ २३ ॥ पञ्चमोऽनुवाकः ॥ ५ ॥

## रूपावतारः

आपः पृणीत। कर्मणि क इति। औणादिककप्रत्ययः उपपदेकारलोपश्चेति भावः। तद्धितो य इति। यस्येति च (६।४।१४८) इति इकारलोपे सूर्य इति रूपम्। दृशे विख्येच (३।४।११) इत्यव्ययमिति दृशे विख्ये च इति सूत्रेण दृशे इत्येतस्य शेप्रत्ययान्तस्य निपातनात् 'कृन्मेजन्तः' (१।१।३९) इति सूत्रेणाव्ययमिति ज्ञायत इति भावः॥ २१॥

इदमापः। अभिदुद्रोहेति। द्रुह् जिघांसायामित्यतः लिटि तदादेशमिपो णलि द्वित्वादौ दुद्रोहेति रूपम्॥ २२॥

आपो अद्य। समगस्महीति बहुवचनानुसारेण अन्वचारिषमित्येकवचनं बहुवचनार्थे व्याख्येयमित्याह एकवचनमिति समगस्महीति। सम्पूर्वात् गमेः 'समोम्यृच्छिभ्याम्' (१।३।२९) इति सूत्रेण सिचः कित्वात् 'अनुदात्तोपदेश' (६।४।३७) इति मकारलोपे अडागमे च समगस्महीति रूपम्। हे अग्न इति इतः परं टीकायां श्रूययाणं 'अग्निं च विश्वशम्भुवम्' इति वाक्यं प्रक्षिप्तम्। न टीकावाक्यम्। अनपेक्षितत्वात्। असंगतत्वाच्च॥ २३॥

संमाग्ने। अन्तर्णीतेति अनेन विद्युरित्यस्य वेदयेयुरित्यर्थ उक्तो भवति। इन्द्रे अश्विनोरिति। इन्द्रे स्तुते अश्विनोः स्तुतयोः उषसि च स्तुतायामित्यर्थः॥ २४, १२, ४, ५॥

## पदार्थप्रकाशिका

आपः पृणीतभेषजम्। यातेः कर्मणि क इति। तृतीयान्तसूरिशब्दोपपदात् याप्रापणे अस्मात् कर्मणि कप्रत्यये कित्वादातोलोप इटिचेति धात्वाकारलोपे निर्वचनत्वादुपपदस्थस्य इकारस्य लोपे प्रत्ययाकार सम्बन्धे च सति सूर्येति रूपम्। तद्धितो य इति। तथाच तद्धिते परे यस्येति चेतीकारलोपे सूर्येति रूपम्। षष्ठ्यर्थे चतुर्थी। अहल्यायै जार इतिवदिति भावः। भेषजस्यैवेति। तथाच वरूथं गुप्तिकरं भेषजं दत्तेत्यर्थो द्रष्टव्यः। दृशे इत्येतत् दृक् शब्दस्य चतुर्थी। अतो द्रष्टुमित्यव्ययतया कथं व्याख्यातम्। विधायकाभावादित्यत आह। दृशेविख्येचेत्यव्ययमिति। द्रष्टुं विख्यातुमर्थे इमौ एजन्तौ निपात्येते इति सूत्रार्थः। एवं चानेनैजं तत्वे सति कृन्मेजन्त इत्यनेनाव्ययत्वमित्यर्थः। ततश्च दृशेर्विख्याते चेत्यनेनैव सूत्रेणाव्ययत्वमिति व्याख्यानं त्वज्ञानमूलकमित्युपेक्ष्यम्। विष्णुदृशे इति। विष्णोः साक्षात्कारायेत्यर्थः। ज्योतिर्ज्ञानमिति। ध्यानरूपमित्यर्थः। एवं च ज्ञानाय ज्ञानं प्रणीतेति कथमिति चोद्यानवकाशः॥ २१॥

(पदार्थप्रकाशिका)

इदमापः प्रवहत । हिंसाजमिति । द्रुहहिंसायामिति धातोरिति भावः । शेफेति शिश्नसंज्ञा । निमित्तेति । तथा शेफनिमित्ते सति यत् पापं तज्जन्यमिति यावत् । तादृशं च पापं प्रमेहव्याध्यादिकं व्यभिचारादिकं वेति द्रष्टव्यम् । समुच्चय इति । त्रयाणां परस्परं समुच्चय इत्यर्थः ॥ २२ ॥

आपो अद्या अन्वचारिषम् । समगस्महीत्युत्तरत्र बहुवचनसद्भावादाह । एकवचनमिति । ननु पयस्वानग्र इत्यग्नेरप्साहित्यमनूद्यते । तदयुक्तम् । अग्नेरप्साहित्यस्य पूर्वं कुत्राप्यनुक्तत्वादित्यत आह । अग्निं च विश्वशम्भुवमित्युक्तेरिति । विश्वशम्भुवमग्निं चाप्स्वतस्थितं सोमो राजा अब्रवीदित्यग्नेरप्साहित्यस्य प्रमाणपूर्वकं पूर्वमुक्तत्वात् । पयस्वानद्भिः सहितेति युक्तमित्यर्थः । इत्युक्त इति पाठे इत्यप्सहितत्वेन पूर्वोक्तो यतोतो पयस्वानिति युक्तमित्यर्थो द्रष्टव्यः । तेजसेति । सामर्थ्येन वा कान्त्या वा ज्ञानेन वेत्यर्थः ॥ २३ ॥

सम्माग्नेवर्चसासृज । अन्तर्णीतण्यर्थस्येति । विदज्ञान इति धातोरिति शेषः । विद्यादिति । विद्वांसं कुर्यादित्यर्थः । विद्युः ज्ञातवन्तः ते सर्वे सुरा इत्यन्वयः । तदीयज्ञानमात्रस्य स्वतोपुरुषार्थत्वादाह । ज्ञात्वा चेति । इन्द्रश्च सहर्षिभिरित्यनन्तरं कृपापात्रमित्यनुवर्तते । तथाच ऋषिभिः सहित इन्द्रोपि मां कृपापात्रं विद्यात् । ज्ञात्वा च मयि कृपां कुर्यादित्यर्थः । अत्रेति । विद्युर्मे इत्यर्धर्चे उदितमिति शेषः । तथाच देवाः अस्य मे उदितं मदुदितं विद्यादनुजानंत्विति योजना द्रष्टव्या ॥ २४,२३,५,१२ ॥

## पदार्थदीपिका

शब्दार्थमाहेति । जॄवृञ्भ्यां ऊथन् इति वृञः ऊथन् प्रत्यये गुणरपरत्वयोर्वरूथ शब्दनिष्पत्तिरिति भावः । सूरीति । निरुक्तत्वादिकारलोप इति भावः । क इति । क्त्वा'दातो लोप इटि च' इत्याकारलोप इति भावः । य इति । पूर्ववदिकारलोप इति भावः । धातुं पठतीति । यद्यपि पृण प्रीणन इति तुदादौ पठ्यते । तथापि भेषजकर्मकप्रीणनायोगात् धात्वन्तरमिदं पठितमिति । अत्र च लोण्मध्यमबहुवचने व्यत्ययात् अकारो ज्ञेय इत्यभिप्राय इत्याहुः । वस्तुतः पॄ पालनपूरणयोरिति प्रसिद्धधातुपाठोक्तयोरर्थयोः प्रकृतानुपयोगात् पृणीयादिन्नाधमानाय तव्यान्' इति दाने प्रयोगाच्च दाने पठतीत्यर्थः । अत एव पृणीत दत्तेति । पॄपालनपूरणयोरित्यस्मात् लोण्मध्यमबहुवचनं 'थः' । तस्य तस्थस्थमिपामिति तादेशः । क्र्यादिभ्यः श्ना । प्वादीनां ह्रस्व इति ह्रस्वः । ईहल्यघोरितीत्वम् । ऋवर्णाच्चेति वक्तव्यमिति णत्वं चेति भावः । भेषजस्यैवेति । करणे ऊथन् प्रत्ययो भाष्ये च क्तिन् प्रत्ययो ज्ञेयः । अस्मिंश्च पक्षे वरूथं भेषजं मम पृणीत इत्यन्वयात् न पूर्वत्रेव मह्यं इत्यध्याहारः । न वा

(पदार्थदीपिका)

षष्ठ्यर्थे चतुर्थ्याश्रयणं नापि वाक्यभेदकल्पना इति विशेष इत्यवधेयम्। ननु कर्तृकर्मणोः कृति इति षष्ठ्या भाव्यत्वात् कथं सूर्यमिति द्वितीयेत्यत्राह। दृशे विख्ये चेत्यव्ययत्वमिति। दृशो विख्ये चेति तुमर्थे एजन्तस्य निपातनात् कृन्मेजन्त इत्यव्ययत्वमित्यर्थः। तेन न कश्चित् क्षुद्रोपद्रव इति बोध्यम्। षष्ठ्यर्थ इति। षष्ठ्या द्वितीयादेश इत्यर्थः। एवं सति पूर्वोक्ताव्ययत्वानुपपत्तेराह। दृश इतीति। संपदादिलक्षणे भावे क्विपि चतुर्थीत्यर्थः। श्रौतपदद्वयं पक्षद्वयेऽपि भाष्यपदेन संवादयति। विष्णुदृश इति। आद्यपक्षे तात्पर्योक्तिपरम्। द्वितीयपक्षे तु व्याख्यानमेवेति भावः ॥ २१ ॥

प्रवहत अपनयतेति। उपसर्गाणामनेकार्थत्वात् प्रशब्दोऽयं अपेत्यर्थे वर्तत इति भावः। अभिदुद्रोहेति। अभिपूर्वात् द्रुहजिघांसायां इत्यस्मात् णलि गुणे द्विर्वचनह्रस्वत्वहलादिशेषेषु विवक्षितरूपसिद्धिरिति भावः। शेपशब्द इति। औणादिकसकारान्तशेफशब्दवत् शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामिति वचनात् शुनःशेप इति प्रयोगदर्शनाच्च अकारान्तोऽपि शेपशब्दः शेफशब्दपर्याय इत्यर्थः। शेफशब्दोप्यकारान्तः सकारान्तश्चेति बहवः ॥ २२ ॥

हे आप इति। आमन्त्रितत्वेऽपि पादादित्वात् निघाताभाव इति भावः। एकवचनं बहुवचनार्थ इति। अन्वचारिषमिति श्रौतं एकवचनं समगमस्महीति श्रौतबहुवचनानुसारिभाष्यस्थानुचरा इति बहुवचनानुसारात् बहुवचनार्थ इत्यर्थः। चरगत्यर्थः। लुङि च्लेः सिच्। आर्धधातुकस्येड्वलादेरितीट्। नेटीति वृद्धिप्रतिषेधे प्राप्ते तदपवादतया अतोनान्तस्येति उपधाया दीर्घः वृद्धिरिति भावः। समगस्महीति। गमेः 'समोगम्पृच्छि' इति आत्मनेपदम्। महिङ् च्लेः सिच्। मन्त्रे घसेत्यादिना च्लेर्लुगभावः छान्दसः। एकाच उपदेशेऽनुदात्तात् इति इट् प्रतिषेधः। वागम इति सिचः कित्वात् अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः इति भावः। गहीति। लोटि गमेः सिपः हि। अपित्वेन ङित्वात् अनुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः। अतो हेरिति हेर्लुङ्न भवति। असिद्धवत्राभादिति नलोपस्यासिद्धत्वादिति भावः ॥ २३ ॥

अन्तर्णीतण्यर्थस्य रूपमिति। विदज्ञाने। अस्माल्लिङि झेर्जुस्, यासुट्। लिङः सलोप इति सकारलोपः। उस्य पदान्तादिति पररूपत्वमिति भावः। नन्वत्र षष्ठ्योर्द्वितीयार्थत्वे प्रथमव्याख्यानवैलक्षण्यं कथमित्यत आह। विद्युरिति त्विति। अस्येत्येतत् अवस्थत्वोक्त्या लब्धमर्थमाह। कृपापात्रमिति। अनुमोदन्तामिति। अनुज्ञाप्रार्थनस्य असङ्गतत्वात्तात्पर्यकथनमेतदित्यवधेयम् ॥ २४ ॥

## टीकाविवृतिः

आप:पृणीत ।। यातेरिति ।। औणादिक:क:तत्सन्नियोगात्सूरिशब्दस्ये- कारलोप इति भावः । अस्मादेवास्वरसात्पक्षान्तरमाह ।। प्राप्यार्थे वेति ।। तद्धिता इति बहुवचनादिति भावः । यस्येति चेतीकारलोपः ।। पृणीतेति ।। पृणप्रीणने इति तुदादौ पठितस्य धातूनामनेकार्थत्वाद्दानार्थत्वं भाष्ये उक्तं तस्मात्प्रार्थनायां लिङि व्यत्ययेनात्मनेपदे शपि च सीयुटि शपो बहुलं छन्दसीति लुगिति भावः । यद्वा महाव्याकरणोक्तादादिधात्वंतरं वा बोध्यम् । वरूथं गुप्तिं चेति ।। जृवृञ्भ्यामूथन्निति वृञ ऊथन्प्रत्यये निष्पन्नो वरूथशब्दः । वरूथं स्यात्तनुत्राणे रथगोपनवेश्मनोरित्यभिधानात्तनोः पृथग्ग्रहणात्राणमात्रार्थक अङ्गीकृत इति भावः ।। भेषजस्यैव वेति ।। अस्मिन्पक्षे वरूथं गोपकमित्यर्थो बोध्यः । करणे ऊथन् भाष्ये क्तिनपीति भावः ।। दृशे विख्ये चेति ।। दृश इति तुमर्थे शेप्रत्ययान्तनिपातनादेजंतत्वा- त्कृन्मेजन्त इत्यव्ययत्वमिति भावः ।। सूर्यमितीति ।। द्वितीयेति शेषः । सुपां सुपो भवन्तीति वा षट्सु द्वितीयेति वा षष्ठ्याःद्वितीयादेश इति भावः ।। दृशे इतीति ।। संपदादित्वात्किपि चतुर्थ्याःसाबेकाचस्तृतीयादिर्विभक्तिरित्युदात्तत्वमिति भावः । विष्णुदृशे इति भाष्यं प्रथमपक्षे तात्पर्यकथनपरं द्वितीयपक्षे तु व्याख्यानरूपमिति भावेनानुवदति ।। विष्णुदृशे इति ।। २१ ।।

इदमापः ।। अपां स्वस्थानात् गमनार्थतात्पर्यत्वस्य नदीप्रवहतीत्यत्र प्रतीते:प्रवहतेत्यत्रापि स एवार्थ इति भावेनाह ।। अपनयतेति ।। हिंसाजमिति भाष्यं संयोजयितुमाह ।। यदभिदुद्रोहेति ।। द्रुहजिघांसायामित्यतो लिटि मिपो णलि द्वित्वादीति भावः । हिंसाजमित्यस्य जिघांसाजन्यत्वमर्थः । हिंसाजमिति तात्पर्यार्थो वा बोध्यः ।। शेपशब्द इति ।। शेपश्शेपौ च शेफश्च शेफं प्रोक्तं च शेफसीतिद्विरूपकोशोक्तेःपर्यायत्वम् । भगो योनिर्द्वयोःशिश्नो मेढ्रो मेहनशेफ-सीत्यमरोक्तेरेषां शब्दानां गुह्येन्द्रियार्थत्वम् । तथा वृञ्शीङ्भ्यां रूपस्वांगयोः पुट्चेत्युणादिसूत्रेण शीङःस्वांगार्थेऽसुनि पुडागमे सार्वधातुकार्धधातुकयोरितिगुणे शेपस्शब्दनिष्पत्तिः । फुट्चेति पाठे शेफस्शब्दस्यापि बाहुलकेऽसुन:सकारलोपे शेपशेफशब्दयोरदन्तयोरपि निष्पत्तिर्बोध्या ।। २२ ।।

आपो अद्य ।। समगस्महीति बहुवचनानुसारेणान्वचारिषमित्येतच्छ्रौ- तमेकवचनान्तमनुचरा इति भाष्येण बहुवचनान्तेन व्याख्यातमिति भावेनाह ।। एकवचनमिति ।। चरेर्लुङि च्लेःसिचि इटि मिप अमादेशो वदव्रजेति प्राप्तवृद्धेर्नेटीति निषेधेपि अतोर्लान्तस्येति पुनःप्रसवाद- न्वचारिषमितिरूपमिति भावः । रसःसारो वरश्चेति शब्दाःपर्यायवाचकाः इत्युक्तेः रसेन श्रेष्ठेनेत्यर्थे

(टीकाविवृतिः)

सिद्धे विशेष्यमाह ।। सुखेनेति ।। समगस्महीति ।। संपूर्वत्वाद्गमेःसमो गम्यृच्छिभ्यामित्यात्मनेपदे लुङि महिङि सिचः वागम इति कित्वादनुदात्तोपदेशेत्यादिनानुनासिकलोप इति भावः । अग्नेरुदकसाहित्यस्य विरुद्धत्वात्पयस्वानिति कथमुच्यत इत्यत आह ।। अग्निं चेति ।। अग्नेःसमुद्रे स्थितत्वादप्साहित्यं युक्तमिति भावः ।। तेजसेति ।। ब्रह्मवर्चसेत्यर्थः ।। २३ ।।

संमाग्ने ।। विद्युरितीति ।। वेत्तेर्लिङि झेर्जुसि अदादित्वाच्छपो लुकि- लिङस्सलोपोऽनंत्यस्येति यासुटः सलोपे उस्यपदांतादिति पररूपमिति भावः । अन्तर्णीतण्यर्थत्वाद्वेदयेयुरित्यर्थस्तस्य तात्पर्यं विद्वांसं कुर्युरितिभावः । अस्मिन्पक्षे विद्युरित्यस्यान्तर्णीतण्यर्थत्वं अस्य मे इति षष्ठ्या द्वितीयार्थत्वं चाश्रयणीयमित्यस्वरसाद्व्याख्यानान्तरार्थं प्रवृत्तस्य मदर्थमिति भाष्यस्याभिप्रायमाह ।। अनेनेति ।। अस्मिन्पक्षे बह्वध्याहारभयात्प्रकारान्तरेण व्याख्यानाय प्रवृत्तभाष्यस्यपूर्वपक्षाद्विशेषं वदन्नाशयमाह ।। अनेन षष्ठ्याविति ।। अत्र पक्षेपि विभक्तिव्यत्ययः कृपापात्रशब्दाध्याहारश्चेत्यतोऽर्थान्तर-परस्यानुजानंत्वित्यस्य प्रकृतासङ्गतेरर्थं वदन् तृतीयपादं योजयति । अनुमोदन्तामित्यर्थ इत्यादिना ।। २४ ।। १२ ।। ४ ।। ५ ।।

### ऋक्संहिता पदपाठसहिता (सू-२४, व-१)

(२५४) कस्य॑ नू॒नं क॑त॒मस्या॒मृता॑नां॒ मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑ ।। को नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात्पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑च ।। १ ।।

(प०) कस्य॑ । नू॒नम् । क॒त॒मस्य॑ । अ॒मृता॑नाम् । मना॑महे । चारु॑ । दे॒वस्य॑ । नाम॑ ।। कः । न॒ः । म॒ह्यै । अदि॑तये । पुन॑ः । दा॒त् । पि॒तर॑म् । च॒ । दृ॒शेय॑म् । मा॒तर॑म् । च॒ ।। १ ।।

(२५५) अ॒ग्नेर्व॒यं प्र॑थ॒मस्या॒मृता॑नां॒ मना॑महे॒ चारु॑दे॒वस्य॒ नाम॑ ।। सनो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात्पि॒तरं॑च दृ॒शेयं॑ मा॒तरं॑ च ।। २ ।।

(प०) अ॒ग्नेः । व॒यम् । प्र॒थ॒मस्य॑ । अ॒मृता॑नाम् । मना॑महे । चारु॑ । दे॒वस्य॑ । नाम॑ ।। सः । न॒ः । म॒ह्यै । अदि॑दये । पुन॑ः । दा॒त् । पि॒तर॑म् । च॒ । दृ॒शेय॑म् । मा॒तर॑म् । च॒ ।। २ ।।

(२५६) अ॒भि त्वा॑ देवसवित॒रीशा॑नं॒ वार्या॑णाम् ।। सदा॑वन्भा॒गमी॑महे ।। ३ ।।

(ऋक्संहिता पदपाठसहिता)

(प०) अभि । त्वा । देव । सवितः । ईशानम् । वार्याणाम् ॥ सदा । अवन् । भागम् । ईमहे ॥ ३ ॥

(२५७) यश्चिद्धि त इत्था भगः शशमानः पुरा निदः ॥
अद्वेषो हस्तयोर्दधे ॥ ४ ॥

(प०) यः । चित् । हि । ते । इत्था । भगः । शशमानः । पुरा । निदः ॥ अद्वेषः । हस्तयोः । दधे ॥ ४ ॥

(२५८) भगभक्तस्य ते वयमुदशेम तवावसा ॥ मूर्धानं राय आरभे ॥ ५, १३ ॥

(प०) भगऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा ॥ मूर्धानम् । रायः । आऽरभे ॥ ५, १३ ॥

## ऋग्भाष्यम्

शुनः शेपो ददर्शात उत्तरं परमृक्शतम् । यूपादात्मविमोक्षाय स्तुवन्देवान्पृथक्पृथक् । त्र्यूनं शतमिहैवान्यच्चतुर्थे पञ्चमेऽपिच । मण्डले ब्रह्मणोक्तस्तु क्रमोत्रापि ह्यृचां भवेत् ॥ कर्तुः परानन्दतनोरिदानीं मनामहे चारु विष्णोः सुराणाम् । नामेशश्चेन्दिन्दिरायै पुनर्दाद्दृशेयं तां मातरं तं च देवम् । समुक्तानाममृतानामजेशमुख्यानां चाभ्यधिको यत्सुखादौ । तेनोक्तोऽसौ कतमोखण्डितत्वात्सचादितिर्महती तन्महीच । देशानंत्यात्तन्महत्त्वं गुणैस्तु कालाच्चोक्तं तस्य चाखण्डितत्वम् । स एव माताच पिताच देवस्तस्मिन्सदा संस्थितास्तत्पुनर्दात् । अत्ति विश्वं तेन चैवादितिस्स श्रीर्वा ब्रह्मा प्रोक्त एवं क एव । गुणाश्च तस्याभ्यधिकाः सदैव जीवेभ्यस्तत्सोपि तद्वाक्ययोग्यः । ददात्वसौ विष्णवे चेंदिरायै प्राप्तानस्मानपि तौ सर्वगत्वात् । विशेषदेशप्राप्तितस्तस्य चाप्तिर्वैकुण्ठादिर्लोक उक्तोहरेश्च ॥ १ ॥ तस्यैवान्यद्रूपमग्न्याख्यमुक्तं यो यज्ञेशो हूयते जामदग्न्यः । स देवानां प्रथमो नाम तस्य स्मृतं सार्थं सर्वकामप्रदं स्यात् ॥ २ ॥ सवितेत्यपरं रूपं जगत्कारणमीशितुः । वित्तानामीश्वरं तं तुवार्यं हि वरणीयतः । वित्तं रक्षन्नवन्नित्यमात्मानं भागमेम्यहम् । त्वामैश्वर्यादि समितिम् ॥ ३ ॥ योपि ते परमो

(ऋग्भाष्यम्)

भगः । इत्थं भूतो विकारित्वाच्छशमानः सुखाधिकः । नेदीयसो ब्रह्मणोपि पूर्वो द्वेषादिवर्जितः । हस्तयोस्तं दधे देव तव रूपमनामयम् । निदोदवीय इति तु विरुद्धार्थद्वयाभिधौ । दूरसामीप्यवचनावुभावपि महोदधौ । यदान्यस्सविता देवस्तव स्वामी भगो हरिः । अद्वेषो विष्णुरित्युक्तेस्तमहं हस्तयोर्दधे ॥ ४ ॥

विष्णुभक्तस्य ते रायो मूर्धानं राय उत्तमम् । तवावसारभेवियामुच्चैरश्नामि तत्फलम् । ऐश्वर्यादिगुणा यस्य भगो भक्तं परात्मनः । तस्य ते वित्तमश्नामि तवरक्षाबलाद्धरे ॥ ५, १३ ॥

## ऋग्भाष्यटीका

व्याख्याता मेधातिथिदृष्टा ऋचः । व्याचिख्यासितानामृषिमाह ॥ शुनःशेप इति । परम् उत्तमम् । यद्वाऽत उत्तरं त्र्यूनं शतं परं त्रयं चेत्यृक् शतम् । यूपादित्यादिना हरिश्चन्द्रो ह वैधस इति ब्राह्मणोक्तां कथां स्मारयति । तच्च उदुत्तमं वरुणपाशमित्यादेः सुबोधत्वाय । एवं सति त्वमग्ने प्रथम इत्यादीनामपि शुनःशेपदृष्टत्वं प्रसक्तमित्यत उक्तमत उत्तरं परमिति । तद्विवृणोति । त्र्यूनमिति । इह कस्य नूनमित्याद्यायामानुपूर्व्यां त्र्यूनमेव शतमस्ति अन्यत्रयं चतुर्थे पञ्चमेपि च मण्डलेऽस्ति । अतो न त्वमग्ने प्रथम इत्यादीनां शुनःशेपदृष्टत्वम् । नापि तस्य शतर्चित्वहानिः । ननु कस्मादेवं कल्प्यते शुनःशेप इदानीं त्र्यूनमेव शतं दृष्टवानित्यस्तु । शतर्चित्वं तु सामीप्याद्भविष्यतीत्यत आह ॥ ब्राह्मणोक्तस्त्विति ॥ ब्राह्मणे खल्वेकस्मिन्नेव काले देशेवस्थायां च शुनःशेपस्यान्यूनऋक्शतदर्शनं सप्रजापतिमेवेत्यादिनोक्तम् । स ब्राह्मणोक्तो ह्यृचां क्रमोत्राप्यनुसर्तव्यो भवेत् । अन्यथा तद्विरोधः स्यात् । अथवा अत्रापि त्र्यूने शतेपि । ब्राह्मणोक्त एव क्रमो भवेन्न तु यथा श्रुतः । तथाहि । यच्चिद्धि सत्यसोमपा इत्यादिकाभिरिन्द्रेऽश्विनो रुपसि च स्तुतायां विमुक्तपाशं शुनःशेपमधिकृत्य ब्रह्मणम् । तमृत्विज ऊचुस्त्वमेव नोस्याह्नः संस्थामृचेत्यादि । तत्र च यत्र ग्रावेत्यादीनां स्फुटं परत्वमवगम्यत इति । कस्यनूनम् । पञ्चदशर्चमिदं सूक्तम् । प्रजापतेरियमृक् । कर्तुरित्यादिना विष्णौ तावद्योजयति । ईशश्चेत् अत्र विवक्षितः तदैवं योज्यमिति शेषः । वयं कस्य करोतेर्डः । कर्तुः । अमृतानां सुराणां मध्ये कतमस्य सुखतमस्य परानन्दतनोर्देवस्य विष्णोः । चारु भद्रं नाम । नूनमिदानीम् । मनामहे । अत्रायं धातुः सामर्थ्यादुच्चारणाद्यर्थे वर्तते । स को नोस्मान्मह्यै अदितये इन्दिरायै पुनर्दात् दद्यात् । ततश्च पितरं तं देवं मातरं तां देवीं च दृशेयं पश्येयम् । अमृतानां कतम इत्येतत्प्रकारान्तरेण व्याख्याति । स इति । अमृतानामित्यनुवादेन मुक्तानामिति व्याख्यानम् । मुक्तानां सकाशादिति शेषः । सुखादावित्यनेन क शब्दोन्येषामपि गुणानामुपलक्षणार्थ इत्याचष्टे । प्राङ्गह्या अदितय

(ऋग्भाष्यटीका)

इतींदिराविषयं व्याख्यातम्। इदानीं परमेश्वरविषयं च भवतीत्याशयेन निर्वक्ति। अखण्डितत्वादिति। दो अवखण्डने। अस्मात्कर्मणि क्तिन्। ततो नञ् समासः। यस्मान्महती तत् तस्मान्मही च स्त्रीरूपः स इत्यर्थः। महत्त्वमखण्डितत्वं तत्वं चैकमेव। अतः पुनरुक्तिं परिहरति। देशानंत्यादिति। अखण्डितत्वं त्विति सम्बन्धः। द्वितीयश्चोवधारणे। पितरं मातरं चेति व्यधिकरणं प्राग्व्याख्यातम्। इदानीं द्वयमपि परमेश्वरविषयं चेत्याह॥ स एवेति। पुनः शब्दस्य तात्पर्यमाह॥ तस्मिन्निति। यस्मात्सदा तस्मिंस्थिताः तत् तस्मात्पुनर्दादित्युक्तमित्यर्थः। अदितिशब्दं विष्णौ प्रकारान्तरेण व्याख्याति। अत्तीति। अदेः कर्तरि क्तिन्। जग्ध्यादेशाभाव इडागमश्च सर्वं वा अत्तीति श्रुतेरनुसरणीय इत्येवशब्देनाचष्टे। मह्या अदितय इतीन्दिराविषयमुक्तं तत्केन निर्वचनेनेत्यत आह॥ श्रीर्वेति। वाशब्दश्चशब्दार्थे। श्रीश्चानेनैव निर्वचनेन मही चादितिश्चोक्तेत्यर्थः। विष्णावृचं व्याख्याय प्रजापतावपि व्याख्याति॥ ब्रह्मेति। ब्रह्माप्येवं कर्तृत्वादिना क इत्यादि शब्दैः प्रोक्तः। रूढश्चासौ शब्दस्तस्मिन्नित्याह। क एवेति। नन्वमृतानां कतमस्येत्येतद् ब्रह्मणि न युज्यते। विष्णुरमास्वसमानेभ्योधिकत्वाभावादित्यत आह॥ गुणाश्चेति। जीवेभ्यः स्वसमानव्यतिरिक्तेभ्यः तत् तस्मात्। उत्तरार्धं ब्रह्मणि योजयति। ददात्विति। पुनः शब्दतात्पर्यार्थमाह। प्राप्तानिति॥ तयोः सर्वगतत्वात्तौ प्राप्तानप्यस्मान्पुनर्ददातु। कथं तर्हि प्रार्थनमित्यत आह। विशेषेति। चतुर्थ्यर्थे तसिः। तस्य सर्वगतस्य चाप्तिः प्रार्थ्यत इति शेषः। कौसौ विशेषदेश इत्यत आह॥ वैकुण्ठादिरिति। उक्तो विशेषदेशत्वेन। हरेश्च सर्वगतस्यापि हरेर्व्यक्तिस्थानत्वादित्यर्थः॥ १॥

अग्नेर्वयम्। अग्नेयीयम्। तस्याः स्पष्टत्वादभिधेयमाह। तस्यैवेति। उक्तम् अस्यामृचि। कथं तर्हि प्रजापतिरुवाच। अग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति। सोग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चेति ब्राह्मणमित्यतः स एवाग्न्याख्या उक्त इत्यनुक्त्वा तस्यैवान्य द्रूपमित्युक्तम्। किं तद्रूपमित्यत आह। य इति। यज्ञेशो हूयत इत्यनेनाग्न्यादिशब्दानां प्रवृत्तिनिमित्तमुक्तम्। अमृतानां प्रथमस्येति व्याचष्टे। स इति। नन्वत्र पूर्वत्र च नाम मनामह इति हेतुः को नः स न इति फलं प्रार्थ्यते। तदयुक्तम्। नामस्मरणादिमात्रस्य वैकुण्ठादि प्राप्तिसाधनत्वस्य प्रमाणविरुद्धत्वादित्यत आह॥ नामेति। यद्वा चारुत्वस्योपपादनमेतत्॥ २॥

अभित्वा॥ सावित्रोऽयन्तृचः। तत्र कः सविता विष्णुरेव मुख्यतः। कथं तर्हि तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभित्वा देव सवितरित्यनेन तृचेनेति ब्राह्मणमित्यत आह॥ सवितेति॥ जगत्कारणमिति सवितृशब्द प्रवृत्तिनिमित्तम्। वार्याणामीशानमित्यस्यार्थमाह॥ वित्तानामिति॥ वित्तं कथं वार्यशब्दमित्यत आह॥ वार्यं हीति॥ वरणीयत्वतः। अवद्यपण्येत्युपाधेरविवक्षितत्वादृहलोर्ण्यदिति भवत्येवेति हेरर्थः। शिष्टं व्याख्याति। रक्षन्निति। हे सवितर्देव सदा नित्यम्। अवन् रक्षन्। कम्। अभ्यर्हितत्वादात्मानम्। अहं वार्याणां वित्तानाम्। ईशानं स्वामिनम्। भागं भग ऐश्वर्यादिगुणाः। तेषां समूहो भागम्। ऐश्वर्यादिसमिति रूपम्। त्वा त्वाम् अभीमहे।

(ऋग्भाष्यटीका)

अवन्नित्येकवचनादेतदप्येकवचनार्थे । एमि आत्मानं रक्षितुं त्वां शरणं गच्छामि । यद्यप्यवन्नित्येतत्सम्बुद्ध्यन्तं व्याख्यातुं शक्यते । तथापि साक्षात्प्रयोजनोक्तिलाभाय वचनव्यत्यासेन व्याख्यातम् । लक्षणहेत्वोः क्रियाया इति स्मरणात् ॥ ३ ॥

यश्चित् । योपि । हे देव विष्णो । इत्था अविकारित्वादित्थं भूतः । इदानींतनप्रकार एव सर्वदा शशमानः। शशब्दः सुखवाची । द्विर्वचनमतिशयार्थे । अधिकं सुखं शशं तन्मन्यतेऽनुभवतीति शशमानः । सुखाधिक इति यावत् । निदो नेदीयसः परस्मात् ब्रह्मणो हिरण्यगर्भादपि । पुरा पूर्वः । अद्वेषः उपलक्षणमेतत् । द्वेषादिदोषवर्जितः । एवं भूतो यश्चित् योपि ते भगः परमैश्वर्यादिरूपो विग्रहस्तवानामयं रूपं तमहं हस्तयोर्दधे पुत्र इव पितरम् । निद इत्यव्ययं क्वचित्सामीप्ये व्याख्यातं निदस्तस्य समीपगा इति । अत्र तु दूरत्वे । तत्कथमेतदित्यत आह । निद इति । यथाऽऽराच्छब्दो विरुद्धार्थद्वयवाची तथैतावपि प्रत्येकं विरुद्धार्थद्वयस्याभिधायकौ । मूलविभुजादित्वात्कः । तदिदमुक्तमुभावपीति । विरुद्धार्थ द्वयाभिधायित्वस्यैव विवरणं दूरसामीप्यवचनाविति । दूरेति भावप्रधानम् । महोदधौ नाम महोदधिनामके ग्रन्थे । कथितमेतदिति शेषः । एवं विष्णावृचं व्याख्याय देवतान्तरे व्याख्याति ॥ यदेति । अत्र विवक्षितस्तदैवं योजनेति शेषः । हे सवितर्देव यश्चिद्योपि ते तव स्वामी इत्था शशमानो निदः पुरा भग ऐश्वर्यादिरूपोऽद्वेषो हरिस्तमहं हस्तयोर्दध इति । कुत एषां विशेषणानां विष्णुविषयत्वमित्यत आह । अद्वेषइति । ग्रन्थान्तरेऽद्वेषो विष्णुरित्यद्वेषत्वस्य विष्णुलिङ्गत्वोक्तेः । निर्विकारत्वादेरपि विष्णुलिङ्गत्वे वचनान्युदाहर्तव्यानि ॥ ४ ॥

भगभक्तस्य । विष्णुभक्तस्य । हे सवितर्वयन्तवाऽवसारक्षणेनाऽऽरभे आरभामहे । विद्यां त्वदीयामिति शेषः । तत्फलं च भगभक्तस्य भग ऐश्वर्यादिरूपो विष्णुः । तद्भक्तस्य तत्सेवकस्य ते सम्बन्धिनं रायो मूर्धानम् । मूर्धशब्दो गौण्या वृत्त्योत्तममाह । राय उत्तमं प्रसिद्धाद्वित्तादुत्तमम् । वित्तं सुखमुदशेम उच्चैरश्नामि अश्नीमः । एवं देवतान्तरे व्याख्याय विष्णौ व्याख्याति । ऐश्वर्यादीति । हे हरे तवावऽसा तव रक्षाबलाद्वयमारभे । त्वदीयां विद्यामारभामहे । ततश्च भगभक्तस्य भग ऐश्वर्यादिगुणाः भक्तमन्नं भोग्यं यस्य परमात्मनः स तथोक्तः । तस्य ते रायो मूर्धानं प्रसिद्धाद्वित्तादुत्तमं मोक्षाख्यमुदशेम उच्चैरश्नामि । अश्नीमः ॥ ५, १३ ॥

## मन्त्रार्थमञ्जरी

'कस्यं नूनम्' इत्यारभ्य 'त्वमंग्ने प्रथमो' इत्यतः प्रागृक्त्रयन्यूनस्य ऋक्शतस्य शुनः शेप ऋषिः । तस्य शतर्चित्वप्रसिद्धावपि ऋक्त्रयस्य चतुर्थे पञ्चमे च मण्डले सत्त्वान्न तद्विरोधः । शुनःशेपकथा ब्राह्मणे (प० ७ अ० ३) व्यक्ता । तत्र 'कस्यं' इत्यादि– पञ्चदशर्चं वर्गत्रयात्मकं चतुर्विंशं सूक्तम् । एतत्तु प्रायस्त्रिष्टुपुछन्दस्कम् । त्रिष्टुब्देवता चेन्द्राणी । तत्र प्रजापतिदेवताकेयम् ऋक् ।

(मन्त्रार्थमञ्जरी)

(वयम्) कस्य, करोतेः डः, कर्तुः । अमृतानाम्, सुराणां च मध्ये । कतमस्य, सुखतमस्य । अमृतानाम्, मुक्तानां ब्रह्मादीनां सकाशात् । कतमस्य (सुखतमस्य) इति वा । देवस्य, विष्णोः चारु, भद्रम्, अर्थानुसंधानपूर्वकमावृत्तिकरणे मोक्षप्रदमिति यावत् नाम । नूनम्, इदानीम् । मनामहे, 'म्ना अभ्यासे' पौनः पुन्येनोच्चारयामः इत्यर्थः । (सः) कः, कर्ता । नः, अस्मान् । मह्यै, देशते महत्यै । अदितये, 'ॐ अत्ता चराचरग्रहणात् ॐ' (१।२।९) इत्यत्रोक्तदिशा 'सर्वं वा अत्ति' (बृ० उ० ३।२।५) इति श्रुतिसिद्धसर्वात्तृत्वहेतुना वा कालतो गुणतश्चाखण्डितत्वहेतुना वा 'अदिति' इत्युक्तायै विष्णुस्त्रीतनवे, श्रीदेव्यै वा । पुनः दात्, दद्यात्, सर्वदा सर्वगते हरौ देव्यां वा स्थितानस्मान्वैकुण्ठादिस्थरूपविशेषं प्रापयेदिति पुनःशब्दः, दाणः लिङर्थे लुङ्, अडभावः । ततश्च पितरम्, देवम् च । मातरं च, विष्णुस्त्रीतनुं च, स एव मुख्यतो माता लोकस्य, श्रीदेवीं वा । दृशेयम्, पश्येयम्, पश्यादेशाभावश्छान्दसः । अदितिपदस्याद्येऽर्थे 'अद भक्षणे' इत्यतः क्तिनीडागमे (च) रूपम्, द्वितीये तु- 'दो अवखण्डने' (इत्यतः) क्तिनि 'आदेच उपदेशे' इत्यात्त्व इडागमे ('द्यति' इत्यादिनेकारेऽन्तादेशे) आतो लोपे च नञ्समासे रूपम् । विरिञ्चपक्षे– कस्य, प्रजापतेरित्यर्थः । अमृतानां कतमत्वं (सुखतमत्वं) स्वाधमदेवतापेक्षया ज्ञेयम् । अन्यत्सर्वं प्राग्वत् ॥ १ ॥

इयम् आग्नेयी । 'अग्नेः' इति प्रसिद्धोऽग्निस्तदन्तर्गतस्ततोऽतिरिक्तो वा परशुरामाख्यविष्णुरूपविशेषश्च ग्राह्यः । पूर्वत्रेव स्पष्टार्था ॥ २ ॥

सावित्रोऽयं तृचो गायत्रीछन्दस्कः । (गायत्री) देवता तूक्तैव 'अ॒ग्निमी॑ळे' इत्यत्र । (हे) सवितः, 'हिर॑ण्यपाणिमू॒तये॑' इत्यत्रोक्तनिरुक्त्या विष्णो, प्रसिद्धसवितश्च । देव । सदा, नित्यम् । अवन्, 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शत्रन्तम्, रक्षितुम्, अभ्यर्हितत्वात् 'आत्मानम्' इत्यन्वेति । (अहम्) वार्याणाम्, वरणीयानाम्, 'अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु' इत्युक्तोपाधेरिहाविवक्षितत्वात् 'ऋहलोर्ण्यत्' इति वृञः ण्यत्, वित्तानाम् । ईशानम्, स्वामिनम् । भागम्, 'ऐश्वर्यस्य समग्रस्य' इत्यादेरैश्वर्यादि गुणाभगस्तत्समूहरूपम्, देवता(न्तर)पक्षे स्वार्थेऽण्, भगरूपेशसम्बन्धिनमिति वार्थः । त्वा, त्वाम् । अभि ईमहे, 'अवन्' इत्येकवचनात् 'अभि+एमि' इत्येकवचनार्थे बहुवचनम्, 'आत्मरक्षाकामस्त्वां शरणं गच्छामि' इत्यर्थः ॥ ३ ॥

(हे देव) विष्णो । इत्था, इत्थम्, अविकारित्वादित्थं भूतः, इदानींतनप्रकार एव सदेति यावत् । शशमानः, शंसुखम्, द्विर्वचनमतिशयार्थे, शशं मन्यतेऽनुभवतीति शशमानः सुखाधिकः । निदः, अव्ययमेतत्, नेदीयसः परकालीनाच्चतुर्मुखादपि । पुरा, पूर्वः । अद्वेषः, उपलक्षणम्–

(मन्त्रार्थमञ्जरी)

द्वेषादिदोषवर्जितः । यः चित्, एवं भूतो योऽपि । ते भगः, परमैश्वर्यादिरूपो विग्रहः । (तमहं पुत्र इव पितरम्) हस्तयोः । दधे, 'डुधाञ् धारणे' लट् धारयामि । हि, एव । 'निदः' इत्यस्य 'उत ब्रुवन्तु नो निदो' इत्यत्र 'निदस्तस्य समीपगाः' इति सपीपस्थार्थस्योक्तावपि (ऋग्भाष्ये) इह दूरस्थार्थत्वमविरुद्धम्, अर्थद्वयवाचित्वात्तस्य, इति ज्ञेयम् । देवतान्तरे तु (हे सवितः) देवः । इत्था । यः चित्, योऽपि । ते, तव । (स्वामी) शशमानः निदः पुरा । भगः, ऐश्वर्यादिरूपः । अद्वेषः, हरिः । (तमहम्) हस्तयोः दधे हि । इति योजना । अन्यथा, पूर्वयोजनेव 'ते भगः, त्वदीयो भगः' इत्यादियोजनायाम् 'ॐ सुखविशिष्टाभिधानादेव च ॐ' (१।२।१५) 'ॐ भूमा सप्रसादादध्युपदेशात् ॐ' (१।३।८) इत्यादौ विष्णुलिङ्गतया निर्णीतशशमानत्वरूपनिरतिशय-सुखत्वोक्तिविरोधः, तथा 'ॐ दहर उत्तरेभ्यः ॐ' (१।३।१४) इत्यत्रापहतपाप्मत्वादेर्हेतूकरणेन 'ॐ सर्वधर्मोपपत्तेश्च ॐ' (२।१।३८) इत्यादौ श्रुतोपपत्त्यादिना च विष्णुधर्मतया निर्णीताद्वेषादित्व रूपनिर्दोषत्वलिङ्गविरोधश्च स्यादिति ज्ञेयम् ॥ ४ ॥

(हे सवितः) हरे । तव । अवसा, रक्षणेन, त्वद्रक्षाबलेन । वयम् । आरभे, त्वदीयां विद्यामारभामहे । ततश्च– भगभक्तस्य, भग ऐश्वर्यादिर्भक्तमन्नं भोग्यं यस्य तस्य । ते । रायः, प्रसिद्धवित्तात् । मूर्धानम्, मूर्धन्शब्दोऽत्र गौण्या वृत्त्योत्तमपरः, उत्तमं वित्तं मोक्षाख्यं सुखम् । उत् अशेम, उच्चैरश्नीमः, 'अश भोजने' लिङ्, व्यत्ययेन शविकरणम् । देवतान्तरे तु (हे सवितः) वयम् तव अवसा । आरभे, त्वदीयां विद्यामारभामहे । ततश्च भगभक्तस्य, ऐश्वर्यादिरूपविष्णोर्भक्तस्य । ते, त्वत्सम्बन्धिनम् । रायः मूर्धानम्, सुप्रसिद्धवित्तादुत्तमं सुखम् । उत् अशेम इति । अत्रार्थद्वये विद्यारम्भस्य 'रायः, मूर्धानम्, उत्, अशेम' इत्यस्य च फलिफलभावो ज्ञेयः ॥ ५ ॥
इति त्रयोदशो वर्गः ॥ १३ ॥

### रूपावतारः

कस्य नूनम् ॥ करोतेर्ड इति । कर्तरीति शेषः । उच्चारणाद्यर्थ इति आदिशब्देन स्मरणं ध्यानं च ग्राह्यम् । आवृत्त्या सर्वेषामर्थानामिह बोधक इति भावः । दादिति । दाञो लिङि तिपि इकारलोपे यासुटा विकरणस्य च छान्दसत्वाददभावे दादिति रूपम् । दृशेयमिति । दृशेर्लिङि मिपो मादेशे "दृशेरग्वक्तव्यम्" (वा.सू. ३।१।८६) इति अक्प्रत्यये कित्वाद्गुणाभावे यासुटि इयादेशे दृशेयमिति रूपम् । दोऽवखण्डन इति । अस्मात् क्तिनि "आदेच उपदेशेऽशिति" (६।१।४५) इत्यात्वे "द्यतिस्यतिमास्थामित्तिकिति" (७।४।४०) इति आकारस्येकारादेशे नञ्समासे

(रूपावतारः)

अदितिरिति रूपम् । जग्ध्यादेशाभाव इति । ''अदो जग्धिर्ल्यप्ति किति'' (२।४।३६) इति सूत्रप्राप्तजग्ध्यादेशाभाव इत्यर्थः । चतुर्थ्यर्थ इति । ''विशेषदेशप्राप्तित'' इति तसिः चतुर्थ्यर्थ इत्यर्थः ॥ १ ॥

अग्नेर्वयम् ॥ ''यज्ञेशो हूयत'' इत्यनेन 'तदधीनत्वादर्थवत्' (ब्र. १।४।३) इति न्यायेन तत्तच्छब्दवाच्यत्वं सूचितमिति भावः । हेतुरिति । उक्त इति शेषः । तदुक्तमिति । नामस्मरणादिकमुक्त्वा तत्फलत्वेन भगवतः स्थानविशेषप्राप्तिप्रार्थनमयुक्तमित्याशयः ॥ २ ॥

अभि त्वा ॥ वरणीयत्वत इति । इतःपरं टीकायां श्रूयमाणं ''अवद्यपण्येत्युपाधेरविवक्षितत्वाद्दहलोर्ण्यदिति भवत्येवेति हेरर्थः ॥'' इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् ''वर्येति स्त्रियां निपात्यते । अनिरोधश्चेद्भवति । अनिरोधोऽप्रतिबन्धः । शतेन वर्या कन्या । स्त्रीलिङ्गनिर्देशः किमर्थः । ''वार्या ऋत्विजः'' इति काशिकोक्तेः 'अवद्यपण्य' (३।१।१०१) इति सूत्रे स्त्रियामेव वार्येति निपातस्य विहितत्वेन प्रकृते स्त्रीत्वाभावात् । अनिरोधरूपोपाधेरविवक्षितत्वात् निपातो न भवति अपि तु ण्यदेव भवतीत्यस्य हिशब्दार्थत्वकथनात् । अवन्नित्येकवचनदिति । अवन्नित्येकवचनादीमह इत्येकवचनार्थ इत्यर्थः ॥ ३ ॥

यश्चिद्धि ॥ तवाऽनामयं रूपमिति ऐश्वर्यादिरूपो विग्रहः तव रूपं स्वरूपम् । न तु देवतादीनां परिदृश्यमानविग्रहवत् भिन्न इति भावः । निद इत्यव्ययं क्वचिदिति । अत्र क्वचिदिति प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः । निद इत्यव्ययं सामीप्ये व्याख्यातम् । निदस्तस्य समीपगा इतीति । ननु विरुद्धार्थद्वयाभिधावित्यनुपपन्नम् । 'आतोऽनुपसर्गे सद्भावादित्यत आह । मूलविभुजादित्वादिति । 'कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् (वा.सू. ३।२।५) इति वचनात् कप्रत्यय इति भावः । नामैकदेशग्रहणमिति भावेनाह । नाममहोदधिनामक इति ॥ ४ ॥

॥ राय इति पञ्चमीति भावेनाह । रायो मूर्धानमिति । अशेमेति । अश भोजन
गपि यासुटि तस्येयादेशे अशेमेति रूपम् । अश्नीम इति ।
'ईहल्यघोः' (६।४।११३) इति ईत्वे अश्नीम इति

## पदार्थप्रकाशिका

परोत्तरशब्दयोः पर्यायत्वात्पुनरुक्तिरित्यत आह । परमुत्तममिति । अतो मेधातिथिदृष्ट ऋक्समुदायात् । परम् अन्यत् । आनुपूर्व्यन्तरस्थमित्यर्थः । इति ऋक्शतमिति । इत्येवं मिलित्वा ऋक्शतमित्यर्थः ब्राह्मणोक्तां कथां स्मारयति । हरिश्चन्द्रो राजा पुत्रमलभमानो नारदवचनात् पुत्रे जाते तेन त्वा यजामीत्युक्त्वा वरुणमुपाधावत् । तदनन्तरं रोहितोनाम पुत्रे जाते पश्चात् वरुण आगत्य अजनि ते पुत्रस्तेन मां यजस्वेत्याह । पश्चाद्राजा निर्दशश्चेत्य शुद्धः स्यादित्यादि नानाप्रकारेण तं प्रलोभ्यर्ते पुत्रमामन्त्रयामास । तातायं वै वरुणो मह्यं त्वामदात् त्वयाहं वरुणं यजामीति । पश्चात् स पुत्रो नेत्युक्त्वा अरण्यमगमत् तं च राजानं वरुणो महोदरव्याधिरूपेण जग्राह । स रोहितः महोदरव्याधिग्रस्तं पितरं श्रुत्वा ग्रामाभिमुखोऽभूत् । तमिन्द्रः पुरुषरूपेणागत्य निवारितवान् । एवं वर्षपञ्चकमरण्ये रोहितो निन्ये । अनन्तरं षष्ठे वर्षे आगमनसमये अशनायापरीतेऽस्याजी-गर्तमध्यमपुत्रं शुनःशेफं गवां शतेन विक्रयात् गृहीत्वा अरण्यात् ग्राममागत्य पित्रे प्रायच्छत् । अनन्तरं स राजा वरुणमुवाच । अनेन त्वा यज इति । पश्चाद्वरुणो भूयान्वै ब्राह्मणः क्षत्रियादतोऽनेनैव यजस्वेत्याह । पश्चाद्विश्वामित्रादीन् होतॄन् वरयित्वा यज्ञं कर्तुम् आरेभे । तत्र यज्ञे पशुभूतोयं शुनःशेफः आलभनाय यूपे बद्धोभूदिति सप्तमपञ्चिकायां खण्डषट्केनोक्तां कथां यूपादात्मविमोक्षायेत्यादि भाष्येण स्मारयतीत्यर्थः ।

ननु कथास्मरणेनापि किं प्रयोजनमित्यत आह । तच्चेति । कथास्मरणमित्यर्थः । तदुतमित्यादिनावबद्धं मां वरुणो मोचयेदित्यादि प्रार्थ्यते । तत्रैतत्कथाज्ञाने शुनःशेफः कस्माद्यूपे बद्ध इति शङ्का स्यात् । अतस्तस्य सुबोधत्वाय कथास्मरणं यूपादित्यादि भाष्येण कृतमित्यर्थः । इत्यादिना तिसृणाम् ऋचां प्रसक्तम् । अत उत्तरऋक्शतं ददर्शेत्युक्ते कस्य नूनमित्यारभ्य अस्मेधारयेत्येतत्पर्यन्तं सप्तनवतिसंख्याका ऋचो भवन्ति । ततः परं त्वामग्ने प्रथम इत्यादि ऋक्त्रयस्यापि शुनःशेफदृष्टत्वं प्रसक्तम् । अन्यथा ऋक्शतदर्शनानुपपत्तेरित्याशंकायां शुनःशेफो ददर्श । अत उत्तरम् ऋक्शतमित्युक्तं विवृणोतीत्यर्थः । अन्यदित्यनूद्य त्रयमिति व्याख्यातम् । शुनःशेफदृष्टम् ऋक्त्रयमित्यर्थः । यथोक्तं ब्राह्मणे । अथैनं द्रोणकलशमभ्यवनिनाय त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्याम् अथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार शुनः श्चित् शेफं निदितं सहस्रादित्यथ ह शुनःशेफ विश्वामित्रस्यांकमाससादेति चतुर्थे पञ्चमेऽपि वा मण्डलेऽस्तीति । अष्टाष्टकोपेतायाः ऋक्संहितायाः मण्डलदशकम् । तत्र वामदेवसंज्ञके चतुर्थे

(पदार्थप्रकाशिका)

मण्डले। वं तो अग्ने वरुणस्य विद्वान् देवस्य हैलो वया सिसिष्ठाः। यजुष्ठा वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्। सत्वं नो अग्नेऽवमी भवति नेदिष्ठास्या उषसो व्युष्ठो। शुनश्चित् शेफं निदितं सहस्राद्युपादमुंचो अशमिष्ठहीषः। एवास्मादग्ने विमुमुग्धि पाशान् त्वोताश्चिकित्व इहतूनिषद्येत्येका ऋगस्तीति विवेको द्रष्टव्यः।

इत्यादीनाम् ऋक्त्रयाणाम्। नापीति। नान्तरस्थैः तद्दृष्टऋक्त्रयसाहित्येन शतर्चित्वोपपत्तेरित्यर्थः। इदानीमिति। बद्धत्वावस्थायां मुक्तत्वावस्थायां चेत्यर्थः। तर्हि तस्य शतर्चित्वप्रसिद्धिविरोध इत्यत आह। शतर्चित्वं त्विति। सामीप्यादिति। शतं समीप एवास्तीत्यर्थः। यद्यपि ऋक्त्रयं न्यूनं तथाप्यल्पत्वात्तदविवक्षया शतर्चित्वव्यवहार इति भावः। स प्रजापतिमेवेत्यादिनेति। स प्रजापतिमेव प्रथमं देवतामुपससार कस्य नूनं कतमस्यामृतानामि-त्येतयर्चा तं प्रजापतिरुवाचाग्निर्देवानां नेदिष्ठस्तमेवोपधावेति। सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतया ऋचा। तमग्निरुवाच सविता वै प्रसवानामीशितामेवोपधावेति। स सवितारमुपससार अभित्वादेव सवितरित्येतया ऋचा। तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोसि तमेवोपधावेति स वरुणं राजानमुपससार। अत उत्तराभिरेकत्रिशता तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयमस्तं नुस्तुह्यत्वात्सृक्षाम इति। सोग्निं तुष्टावात उत्तराभिर्द्विंशत्या तमग्निरुवाच। विश्वान् देवान् स्तुह्यथ त्वोत्रक्षाम इति। स विश्वान् देवान् तुष्टाव। नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयार्चेत्यादिब्राह्मणे- नेत्यर्थः। अत्रापीति। संहितायामपीत्यर्थः।

नन्वेवं चेत् ब्राह्मणोक्तः एकदेशकालावस्थास्वन्यूनऋक्शतदर्शनरूपोर्थो अत्राप्यनुसर्तव्योर्थो भवेदित्येव वक्तव्यत्वेन ऋचां क्रम इति क्रमशब्दस्यास्वारस्यात्। अतस्तत्स्वारस्याय पक्षान्तरमाह। अथवेति। यथाश्रुतः। संहितायामिति शेषः। श्रुतौ न्यूनशतमध्य एव व्यत्यासेनोक्तत्वादिति ध्येयम्। तथाचादौ यच्चिद्धीत्यादिऋक्त्रयं पश्चाद्यत्र ग्रावेत्यादिकमेवं सर्वो मिलित्वा न्यूनशतक्रमः ब्राह्मणे उक्तोऽस्ति। स एवं क्रम इत्यर्थः। अत्रापि शतर्चित्वं पूर्वोक्तरीत्या उपपादनीयम्। यच्चिद्धीत्यादि। तं

बलिष्ठः सदिष्टः स उत्तमः विष्णुतमस्तं नु स्तुह्यथ

सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चशभिस्तस्मा

तमेतया प्रीतीयत शश्वदिन्द्र इति तमिन्द्र उवाचाश्विनौ

। अत उत्तरेण तृचेन तस्य हरिस्मृत्यां विपाशो मुमुच

(पदार्थप्रकाशिका)

त ऋत्विज ऊचुरित्यादि। तमृत्विज ऊचुस्त्वमेव नोस्याः संस्थामधिगच्छेत्यथ हैनं शुनःशेपोजः सत्वं ददर्श तमेताभिश्च तिसृभिः ऋग्भिस्तुष्टाव यच्चिद्धि त्वं ग्रहेग्रह इत्यनेनेन्द्रेण कलशमभ्यवनिनायोष्ठं चम्वोर्भरेत्येतयर्चाथ हास्मिन्नत्वारब्धो युग्मभिश्च तिसृभिः स स्वाहाकाराभिः जुहावांचकारेत्युक्तत्वादित्यवधेयम्। परत्वमवगम्यत इति। बाह्यत्वावस्थायां शुनःशेपदृष्टेभ्यः इन्द्रोषसां स्तुतिपराभ्यो यच्चिद्धीत्याद्यग्भ्र्यः। स पाशात् पाशमुक्त्यनन्तरं तद्दृष्टानां यत्रग्रावेत्यादीनाम् ऋचां परत्वं नमोंतरत्वं स्फुटमवगम्यते। अतो ब्राह्मणोक्त एव क्रमोऽत्रापि न्यूनशतेप्यनुसर्तव्यो भवेन्नतु यत्र ग्रावेत्यादिना ऋग्भ्यो यच्चिद्धीत्यादेः परत्वरूपो यथाश्रुतः क्रम इत्यर्थः॥

कस्य नूनं कतमस्यामृतानाम्। प्रजापतिमेव प्रथमं देवतामुपससार। कस्य नूनं कतमस्यामृतानामित्येतयर्चेति। ब्राह्मणवचनादिति भावः। कस्येत्यस्य कर्तरीत्यर्थमुपपादयति। करोतेर्ड इति। कृञ्करणे अस्मात् डप्रत्यये डित्वाट्टीभूतस्य कृञ् इत्यस्य लोपे केत्यकारान्तं प्रातिपदिकम्। तस्य षष्ठी कस्येति। अमृतानां कतमस्येत्यत्र निर्धारणेनैव सुखाधिक्यलाभात् तमप् छान्दसः पुरुतमं पुरुणामित्यत्र यथेति द्रष्टव्यम्। भाष्यं संवादयति। परानन्दतनोरिति। मनामह इत्यस्य मन् अवबोधन इति धातोः जानीम इत्यर्थः। स च प्रकृतानुपयुक्तोऽत आह। अत्रायमिति। अस्याम् ऋचीत्यर्थः। सामर्थ्यात् योग्यताबलात्। उच्चारणाद्यर्थ इति। आदिपदेन स्मरणं ग्राह्यम्। उत्तरत्र स्मरणादिमात्रस्येति वक्ष्यमाणत्वात्। तथाच विष्णोर्नाम मनामहे स सर्वकर्ता भगवानित्यर्थः। पुमर्थादिति। पुनःशब्दस्वारस्यं चोत्तरत्र वक्ष्यमाणं द्रष्टव्यम्। स मुक्तानामित्यादिभाष्ये मुक्तानां बन्धध्वंसवतां मध्ये अधिक इति योजनायां तस्य मुक्तसाजात्यप्रतीतेराह। मुक्तानां सकाशादिति शेष इति। यद्यप्यस्मिन् पक्षे द्विवचनविभज्योपपदेतर- सुनाविति सूत्रादमृतानां सकाशात् इत्येव वाच्यम्। तथापि तमपः छान्दसत्वं वा तरप्तमपोरेकार्थत्वं वेति द्रष्टव्यम्।

दोऽवखण्डन इति। इडागमश्चेत्यपि द्रष्टव्यम्। उत्तरत्र वक्ष्यमाणत्वात्। ओकारोऽत्रानुबन्धार्थः। द इत्येव धातुः। तत् तस्मात् तत् खण्डयत इति कर्मार्थे क्तिन् प्रत्यये ककारनकारयोर्लोपे इडागमेदितीति रूपम्। कित्वाद्गुणाभावो द्रष्टव्यः। अन्यथा देतीति स्यात्। ननु तर्हि अदितिरिति कथमित्यत आह। ततो न नसमास इति। तथाच दीयते खण्ड्यत इति दिति न दितिरदितिरिति नञ् समास इत्यर्थः। ननु परमेश्वरपक्षे कथं महती तन्मही चेति स्त्रीलिङ्गनिर्देश इत्यत आह। स्त्रीरूपः स

(पदार्थप्रकाशिका)

इति । पुनरुक्तिमिति । मह्यदिति शब्दयोरित्यर्थः । तस्मात् पुनर्ददाति । विशेषदेशावाप्तिं सम्पादयेत्यर्थः । अर्थान्तरसमुच्चयतद्व्यावृत्योश्च वशब्दोक्त्योः परस्परं विरुद्धत्वादाह । अदेरित्यादिना । अदेः अदभक्षणधातोरित्यर्थः । तथाच लाक्षणिकार्थसूचनायामेव तात्पर्यमेव-शब्दस्य नत्वर्थान्तरनिषेध इति भावः । नन्वदो जग्ध्यादेशाभावः किं बलादङ्गीकार्य इत्यत उक्तम् । सर्वं वेत्यादि । सर्वं वा अत्तीति तददितेरदितित्वमिति श्रुतिबलादित्यर्थः । तथाच अस्मात्कर्तरि क्तिन् प्रत्यये ककारलोपे इडागमे तुकारलोपे चादितिरिति रूपम् । मह्या आदितय इतीति । इतिपदद्वयमित्यर्थः । एवेतीति । तथाच को ब्रह्मेति समाख्यातः । ब्रह्मा क इति सम्प्रोक्तो विष्णुर्दक्षस्तथैव चेत्यभिधानात् ब्रह्मा क शब्दवाच्य इत्येतत्प्रसिद्धमेवेत्यर्थो द्रष्टव्यः । ब्रह्मणि प्रजापतौ स्वेसमानेभ्यो वायव्यादिऋजुभ्यः । एतत्तद्विषयमिति । कतमस्या अमृतानामित्येतद्वाक्यं चतुर्मुखविषयं कथं स्यादित्यर्थः ।

ननु जीवेभ्य इत्युक्त्या विष्णुरमाव्यावृत्तिलाभेपि स्वसमानऋजुजीवव्यावृत्यलाभेन तदपेक्षया गुणाधिक्याभावादित्यतो जीवेभ्य इत्येतदनूद्य तस्याभिप्रायमाह । जीवेभ्य इति । तत्तस्मादिति । तथाच यस्माज्जीवेभ्यः तस्य गुणा अधिकाः सन्ति तस्मादित्यर्थः । चतुर्थ्यर्थ इति । तथाच विशेषदेशप्राप्तय इत्यर्थः । प्रार्थ्यत इति । पुनर्दादित्यनेनेत्यर्थः । चब्दोप्यर्थो अध्याहृतेन सर्वगतस्येत्यनेन सम्बध्यत इत्यभिप्रेत्याह । सर्वगतस्यापि हरेरिति । तथाच सर्वगतस्यापि हरेः व्यक्तिस्थानत्वाद्वैकुण्ठादिदेशो विशेषदेशत्वेनोक्त इति भाष्यार्थो द्रष्टव्यः ॥ ११ ॥

अग्नेर्वयं प्रथमस्यामृतानाम् । अभिधेयमाहेति । एतदृक्प्रतिपाद्यं भगवद्रूपविशेषमाहेत्यर्थः । कथं तर्हीति । यदिप्राजापत्यापेक्षयाग्निर्भिन्नः स्यात्तदैवेदं ब्राह्मणमुपपन्नं स्यान्नचैवम् । भवन्मते प्राजापत्याग्नि शब्दाभ्यां तदन्तर्गतस्य भगवतः एकस्यैव वाच्यत्वाङ्गीकारादित्याशयः । अन्यद्रूपमित्युक्तमिति । तथाच विशेषबलात् रूपभेदविवक्षया ब्राह्मणमुपपन्नमिति भावः । प्रवृत्तिनिमित्तमुक्तमिति । यतो यज्ञसम्बन्धिसर्वदेवेशो मुख्याह्वानविषयश्च भगवानतस्तदधी-नत्वादिति न्यायेनाग्न्यादि शब्दानां तत्र प्रवृत्तिरित्यर्थः । अत्राग्नेर्वयमित्यस्याम् ऋषि । पूर्वत्र । कस्यनूतमित्यस्याम् ऋचिच । कोनः सन इति । यतो नाम मनामहे अतः को नो मह्यादितये पुनर्दादिति फलं पूर्वस्याम् ऋचि प्रार्थ्यते यतो नाम मनामहे अतः स नो मह्या आदितये पुनर्दादित्यस्याम् ऋचि प्रार्थ्यते इत्यर्थः । नामस्मरणादिमात्रस्येति । तत्प्रतिपाद्यार्थस्मरणं विना केवलनामस्मरणस्येत्यर्थः । चारुत्वस्येति । ऋग्द्वयोक्तनाम्नः चारुत्वं कथमित्यपेक्षायां नाम तस्येति भाष्येण सार्थस्य स्मृतमहीनाम्नः सर्वकामप्रदत्वाच्चारुत्वमिति चारुत्वमुपपद्यत इत्यर्थः ॥ २ ॥

(पदार्थप्रकाशिका)

अभित्वादेव सवितः। उत्तरमाह विष्णुरेवेति। सवित्रंतर्गतो विष्णुरेवेत्यर्थः। कथं तर्हीति। यद्यग्न्यपेक्षया सविता भिन्नः तदैवेदं ब्राह्मणमुपपन्नं स्यान्नचैवम्। भवद्भिरग्निसवितृशब्दाभ्यां तदन्तर्गतस्यैकस्यैव वाच्यत्वाङ्गीकारादिति भावः। भाष्ये सवित्राख्य इत्यनुक्त्वा अपरं रूपमिति वचनेन विशेषबलात् रूपभेदविवक्षयेदं ब्राह्मणमुपपन्नमित्युक्तं भवति। वार्यशब्दं वार्यशब्दवाच्यम्। नन्ववद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु गर्ह्यपणितव्यनिरोधेष्वर्थेषु सत्सु अवद्यपण्यवर्या इत्येतेशब्दाः यथासंख्यं निपात्यन्ते। अवद्यमिति निपाते गर्ह्यं चेद्भवति। अवद्यम् पापं पण्यमिति निपात्यते पणितव्यश्चेद्भवति। पण्यः कंबलः वर्येति स्त्रियां निपात्यते अनिरोधो अप्रतिबद्धश्चेत् भवति। शतेनवर्या कन्या। वार्या ऋत्विज इति प्रत्युदाहरणमिति काशिकायां व्याख्यातत्वेन सूत्रे वरणीयकन्यायां वाच्यायां वर्येतिनिपातितत्वाद्वार्येति कथमित्यत आह। अवद्येत्यादि। उपाधेः वर्येति निपातनिमित्तभूतस्य स्त्रीत्वनिरोधरूपोपाधेरित्यर्थः। प्रकृते च वार्यं वित्तं नपुंसकमिति तत्र स्त्रीत्वाद्युपाधिर्न विवक्षित इत्यर्थम्। तर्हि वार्यमिति कथं रूपमित्यत आह। ऋहलोर्ण्यत् इति। ऋदन्ताद्धलन्ताच्च धातोर्ण्यत्प्रत्ययः स्यादिति सूत्रार्थः। तथाच वृञ्वरण इति ऋदंताद्धातोर्ण्यत्प्रत्यये णिलोपे गुणे तस्य रपरत्वे णित्वादादिवृद्धौ वार्येतिरूपं द्रष्टव्यम्। रक्षन्। रक्षणामिच्छन्।

नन्वात्मानं इति कस्माद्वाच्यमित्यत आह। अभ्यर्हितत्वादिति। स्तोतृत्वेन प्रधानतया स्वस्यैव प्रकृतत्वादित्यर्थः। तेषां समूह इति। तथाच विचित्रा हि तद्धितगतिरिति वचनात् भगशब्दात् समूहार्थे ण्यत्प्रत्यये णित्वादादिवृद्धौ भाग्येतिरूपम्। समितिरूपम्। समूहरूपम्। नन्वीमहे इति बहुवचनानुसारेण भाष्येपि महे इत्येव प्रयोक्तव्यम्। एमीत्यकवचनं कथमित्यत आह। अवन्नितीति। अवन्नित्यस्य प्रार्थकविशेषत्वात्तस्य चैकत्वात्तदनुसारेण अभीमह इति बहुवचनमप्येकवचनार्थ इत्यर्थः। एमीति भाष्यमनूद्य तदभिप्रायमाह। आत्मानमिति। नन्ववन्नित्यस्य यदि प्रार्थकविशेषणत्वं तर्ह्येवं तदनुसारेणामीमहीति वचनव्यत्यासः कर्तव्यः स्यान्नचैवम्। किंन्नाम प्रार्थ्यस्यैव सवितुर्देवस्यैवेदं सम्बुध्यन्तं सद्विशेषणम्। तथाच हे अवन् रक्षक सवितर्देवं त्वां वयं शरणमभीमहे इति यथास्थितमेव किं नस्यादित्याशङ्क्य निषेधति। यद्यपीत्यादिना। साक्षादिति। भगवद्विशेषणत्वे वयं त्वां शरणमभीमहि इत्युक्ते यतस्त्वं रक्षकोऽतः शरणं प्राप्तानस्मान् रक्षेत्येवं रक्षकत्वस्य भगवद्विशेषणत्वोक्तिबलात्परंपरया शरणं प्राप्ते रक्षणरूपं प्रयोजनोक्तिर्लभ्यते। अतः साक्षाद्रक्षणस्य शरणप्राप्तिप्रयोजनत्वलाभायावन्नित्यस्य प्रार्थकविशेषणत्वमङ्गीकृत्य तदनुसारेण बहुवचनमप्येकवचनार्थे व्याख्येयमित्यर्थः।

(पदार्थप्रकाशिका)

ननु रक्षन्नहं त्वां शरणमेमीति व्याख्यानेपि रक्षणस्य कथं साक्षाच्छरणप्राप्तिप्रयोजनत्वलाभ इत्यत आह। लक्षणहेत्वोरिति। क्रियाया इति षष्ठी द्विवचनार्थे च। क्रियान्तरं प्रतिलक्षणत्वे हेतुत्वे च क्रियायाः धात्वर्थस्य तत्परस्य लटः शत्रादेशो भवतीत्यर्थः। अत्र शरणप्राप्तौ अवरस्य हेतुत्वं विवक्षितम्। हेतुत्वं चात्र निमित्तत्वापरपर्यायं प्रयोजनत्वमेव विवक्षितं न जनकत्वम्। तेन शरणप्राप्तेरेव रक्षणस्य शरणप्राप्तिजनकत्वाभावात् कथमेतदिति शङ्कानवकाशः। तथाचावन्नित्ययं शत्रन्तः। अवरक्षणे अस्माल्लटि अवेत्यस्य शत्रादेशे शकारऋवर्णयोर्लोपे तकारस्य नकारे अवन्निति भवति। एवं चार्जयन्वसतीत्यत्र वासे आर्जनस्य निमित्तत्वापरपर्यायं हेतुत्वमिव प्रकृतेपि रक्षन् शरणमेमीत्युक्ते शरणप्राप्तौ रक्षणस्य हेतुत्वं लभ्यते। एवं चावनेन हेतुनिमित्तेन शरणं गच्छामीत्यर्थलाभात् साक्षादवनस्य प्रयोजनत्वलाभ इति भावः॥ ३॥

त इत्थाभगः। ऋक्पदमनूद्य तत्र भाष्यं संवादयन् तद्व्याचष्टे। निद इत्यादिना। परस्मादितीति। परत्वं चात्र दूरत्वं विवक्षितं दूरत्वं च देशतो विवक्षितम्। एवं च परस्तादित्यस्य सत्यलोकादिरूप-बहुदूरदेशस्थादित्यर्थो द्रष्टव्यः। शशमानशब्दलब्धाभिप्रायकथनपरं तव रूपमनामयमित्युत्तर-भाष्यमित्याशयेन तदनुवदति। तवानामयं रूपमिति। हस्तयोः मदीय हस्ताभ्यां पुत्रमिव पितरमिति। यद्यप्ययं दृष्टान्तोत्र ऋग्भाष्ययोर्नास्ति। तथाप्युत्तरत्र तृतीयाध्याये कद्धनूनं कधः प्रियः पिता पुत्रं न हस्तयोर्दधिध्वे वृक्त बर्हिषः इत्यस्याम् ऋचि हस्ताभ्यां धारणे पिता पुत्रं नेति दृष्टान्तस्योक्तत्वात्तदनुसारेणायं दृष्टान्तष्टीकाकारैरुक्त इति ज्ञातव्यम्। क्वचिदिति। प्रथगाध्याये उपब्रुवन्तु नोनिद इत्यस्याम् ऋचीत्यर्थः। अत्र दूरत्व इति। देशतो दूरत्व इत्यर्थः। अत एव प्राक् निदो नेदीयसः परस्मादित्युक्तम्। तत्कथमिति। देशतः सामीप्यदूरत्वरूपविरुद्धार्थद्वयाभिधायित्वं कथमित्यर्थः। एकस्य शब्दस्य विरुद्धार्थद्वयाभिधायित्वमाधुनिकाभि- धायिकानाम् असम्प्रतिपन्न-मिति न वक्तव्यमित्याशयेन स्वयं तत्र दृष्टान्तमाह। यथा आराच्छब्द इति। आरात् दूरसमीपयोरित्यभिधानादित्यर्थः।

ननु भाष्ये अभिधाविति कथमुक्तमित्यत आह। मूलविभुजादिभ्यश्चेत्यनेन मूलविभुजादि-गणोपरिक प्रत्ययविधानात्। तस्य चाकृतिगणत्वेनास्या तदन्तर्गतत्वादभिपूर्वकत्वा-द्धातोरभिधायकेति कर्त्रर्थे कप्रत्यये कित्वाद्धात्वाकारलोपे अभिधेत्यकारान्तं प्रातिपदिकम्। तस्येदं द्विवचनमभिधाविति। ननु निददवीयःशब्दयोः क्रमाद् सामीप्यदूरत्वरूपविरुद्धार्थ-द्वयाभिधायित्वोपपत्तेः प्रत्येकं प्रत्येकमेकैकस्य विरुद्धार्थद्वयाभिधायित्वं कथं व्याख्यायते ज्ञापकाभावादित्यत आह। तदिदमुक्तमिति। प्रत्येकं शब्दद्वयस्य विरुद्धार्थद्वयवाचित्वमित्यर्थः।

(पदार्थप्रकाशिका)

सामीप्येत्यस्य भावप्रधानत्वात् तत्समभिव्याहृतदूरपदमपि भावप्रधानमित्याशयेनाह। दूरेतीति। महोदधिशब्देन समुद्ररूपार्थप्रसक्तिवारणायाह । नाममहोदधिनामकग्रन्थ इति । स्वरमहोदधिरूपग्रन्थप्रसक्तिवारणाय नामेत्युक्तम्। हस्तयोर्हस्ताभ्याम्। वचनान्युदाहर्तव्यानि। इति शब्दोक्तं निर्विकारत्वस्य विष्णुलिङ्गत्वे निर्विकारोक्षरः शुद्धोनिरातंकोऽजरोमरः। अविश्वो विश्वकर्ताजो यः परः सोभिधीयत इति वचनमुदाहर्तव्यम्। तथा शशमानशब्दोक्तसुखादिकत्वस्य विष्णुलिङ्गत्वे ज्ञानज्ञानः सुखसुखः सविष्णुः परमोऽक्षर इति वचनमुदाहर्तव्यम् । पुरा निदशब्दोक्तस्य हिरण्यगर्भात्पूर्वत्वस्य विष्णुलिङ्गत्वे एको नारायण आसीन्न ब्रह्मा न च शंकरः इत्यादि वचनमुदाहर्तव्यम्। भगशब्दोक्तऐश्वर्यादिरूपत्वस्य विष्णुलिङ्गत्वे तंत्वा भग प्रविशानिस्वाहेत्यादि वचनमुदाहर्तव्यमित्यर्थः ॥ ४ ॥

भगभक्तस्य ते वयम्। उदशेमेति बहुवचनश्रवणादाह। आरभ आरभाम इति। तत्फलं चेति। आरब्धविद्याफलमित्यर्थः । त्वत्सम्बन्धिन इति। दीयमानत्वेन त्वत्सम्बन्धिनो राय इत्यर्थः । हिरण्यपाणिमूतये सवितारमिति प्रसिद्धसवितृद्रव्यपाणित्वोक्तेः प्रसिद्धद्रव्यस्य सवितृसम्बन्धित्वादिति भावः । राय इति पञ्चमी । गौण्यावृत्त्येति । अङ्गेषु मूर्धम् उत्तमत्वात्तन्निष्ठोत्तमत्वरूपगुणयोगेन द्रव्यस्योत्तमत्वं मूर्धशब्द आहेत्यर्थः । रायो मूर्धानमिति ऋक्पदमनूद्य भाष्यं संवादयति । राय उत्तममिति । आरभ इत्येतदनुसारेण भाष्ये उदशेमेति बहुवचनमेकवचनार्थमित्यभिप्रेत्याश्नामीत्युक्तम्। तस्य ऋक्पदानुसारेणैवार्थमाह। अश्नीम इति। अशुङ्भोजन इति धातोरित्यर्थः। ततश्चेति। त्वदीयविद्यारम्भानन्तरम्। तत्फलं चेति शेषः। तस्य चेति। सम्बन्धिनो राय इत्यर्थः। यद्वा तस्य विद्याप्रतिपाद्यस्य ते सकाशादित्यर्थः ॥ ५, १३ ॥

## पदार्थदीपिका

परमुत्तममिति । तदेतत्परं ऋक्शतगाथं शौनःशेपमिति ब्राह्मणोक्तेरिति भावः । अन्यत् त्रयमिति। त्वं नो अग्ने। स त्वं नो अग्ने इति द्वे ऋचौ चतुर्थमण्डले स्तः। शुनश्चिच्छेपमित्यृक् पञ्चमे मण्डलेऽस्तीत्यर्थः। अनुक्रमणिकामनुरुन्धानः शङ्कते। नन्विति। न्यूनमिति। वामदेवो गौतमश्च चतुर्थं मण्डलं अपश्यतां त्वां ह्यग्ने विंशतिरिति चतुर्थमण्डलस्य वामदेवदृष्टत्वोक्तेः, ऋष्यन्तरदृष्टत्वानुक्तेश्च त्वां ह्यग्न इति सूक्तं मध्यस्थस्य त्वं नो अग्ने इत्याद्यृग्द्वयस्य शुनःशेपदृष्टत्वानुपपत्तेः। कुमारं मातेति मन्त्रस्य आत्रेयकुमारादिदृष्टत्वास्योक्तेः शुनःशेपदृष्टत्वानुक्तेश्च कुमारं मातेति सूक्तमध्यस्थायाः शुनश्चिच्छेपामित्यस्या ऋचोऽपि तदृष्टत्वानुपपत्तेरिति

(पदार्थदीपिका)

भावः। तर्हि कथं ऋषयः शतर्चिन आद्ये मण्डल इत्युक्तिरित्यत आह। शतर्चित्वं त्विति। अल्पेन ऋक्त्रयेण न्यूनमपि शतमित्येवोच्यत इति भावः। सप्रजापतिमिति। शुनश्शिच्छेपं निदितं सहस्रादित्यन्तेन विनियुक्तानां ऋचां क्रमगणनया शतस्य दर्शनमुक्त्वा तदेतत्परमृकूशतगाथं शौनशेपमाख्यानमिति शुनः शेपस्य अन्यूनर्क्शतदर्शनस्य वचनवृत्त्यैवोक्तेरित्यर्थः। एवं प्रकृतोपयोगित्वेन व्याख्याय ब्राह्मणोक्त इत्यादि भाष्यमत्राप्युक्तमतो दृष्टिरिति नैकक्रमो भवेदिति प्रागुक्तोपपादनपरतयापि व्याचष्टे। अथवेति। तत्र चेति। आधुनिकसंहितापाठे यच्चिद्धि सत्यसोमपा इत्यतः प्राक्तने यत्र ग्रावा इति नवर्चसूक्ते विद्यमानानां नवानामृचां यच्चिद्धि सत्यसोमपा आव इन्द्रमिति सप्तर्चद्वाविंशर्चसूक्तद्वयस्थाभ्य एकोनत्रिंशद्भ्यः ऋग्भ्यः आनन्तर्यं तमृत्विज ऊचुरित्यादि ब्राह्मणे अवगम्यत इत्यर्थः। न च तमृत्विज ऊचुरित्यादि ब्राह्मणे तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धित्वं गृहे गृह इत्येवोक्तम्। न तु अत उत्तराभिरेकत्रिंशतेत्यादिवत् क्रम उक्त इति वाच्यम्। क्रमस्यानुक्तावपि तं प्रजापतिरुवाचेत्यादि ब्राह्मणे सोऽग्निमुपससार अग्नेर्वयं प्रथमस्यामृतानां इत्यादाविव विनियुज्यमानार्थक्रमेण विनियोगक्रमेण च ऋचां क्रमावधारणसम्भवात्। अत एव इत्यादिभिः इन्द्रे अश्विनोरुषसि च स्तुतायां विमुक्तपाशं इत्याद्युक्तमिति ध्येयम्॥

प्रजापतेरियमृगिति। ''स प्रजापतिमेव प्रथमं देवतानां उपससार। कस्य नूनं कतमस्यामृतानां'' इत्येतया ऋचा इति ब्राह्मणवाक्यादिति भावः। तावदिति। करिष्यमाणप्रसिद्धप्रजापतिपरतया व्याख्यानापेक्षया तावच्छब्दः। ड इति। डित्वाट्टिलोप इति भावः। मनामह इति। मन ज्ञाने। व्यत्ययेन शबिति भावः। सामर्थ्यात् नाम्नः उच्चारणयोग्यत्वात्। दादिति। गातिस्थेति सिचो लुक्। बहुलं छन्दस्यमाङ्योगेऽपीति अडभाव इति ज्ञेयम्। दृशेयमिति। दृशिर् प्रेक्षणे आशीर्लिङि मिपः 'तस्थस्थमिपां तांतंताम' इत्यम्। दृशेरक् वक्तव्य इति अक् प्रत्ययः। शपोपवादः। कित्वात् लघूपधगुणाभावः। लिङि 'आशिष्यङ्' इति अङि हि सति ऋदृशोर्ङिगुण इति गुणप्रसङ्गात्। यासुट लोपः। अतो लोपः। आद्गुण इति गुण इति भावः। क्तिनिति। उपलक्षणमेतत्। 'द्यति स्यतिमास्था'मिति किति इकारान्तादेशश्च इत्यपि द्रष्टव्यम्। नन्वदेः कर्तरि क्तिनि 'अदोजग्धिर्ल्यप्तिकिति' इति जग्ध्यादेशे सति जग्धिरिति भवितव्यम्। जग्ध्यादेशाभावेऽपि अनिट्त्वात् अत्तिमित्येव भवितव्यं कथमदितिमिति निर्देश इत्यत आह। जग्ध्यादेशाभाव इत्यादिना॥ १॥

स एवाग्न्याख्य उक्त इत्यनुक्त्वा तस्यैवान्यद्रूपमिति किमर्थं भाष्यकारैः उक्तमित्यतः तन्निवर्त्यां शङ्कां दर्शयति। कथं तर्हि इति। तथोक्तौ प्रजापतेरग्नेश्चाभेदेनात्र कशब्दवाच्यस्य भगवत एव

(पदार्थदीपिका)

प्रतिपाद्यत्वापत्या 'तं प्रजापतिरुवाच' इत्यादिभेदाभिधानानुपपत्तिप्रसङ्गात् तथानुक्त्वा तस्यैवान्यद्रूपमित्युक्तमिति भावः । अन्यद्रूपमत्यन्ताभिन्नमपि विशेषवदित्यर्थः । विशेषबलाच्च सर्वमुपपन्नमिति हृदयम् । नामस्मरणादीत्यादिपदेन उच्चारणपरिग्रहः ॥ २ ॥

ननु वार्याणामिति कथम् । नच 'वृङ् सम्भक्ता' वित्यस्मात् 'ऋहलोर्ण्यदि'ति ण्यति णित्वात् वृद्धौ रपरत्वे च वार्यशब्दनिष्पत्तिरिति वाच्यम् । अवद्यपण्यवर्येति ण्यदपवादेन यत्प्रत्ययान्ततया वर्येति निपातनेन ऋहलोर्ण्यदिति ण्यत्प्रत्ययासम्भवादित्यतः । सत्यम् । ण्यदपवादेन यत्प्रत्ययान्तवर्यशब्दनिष्पादनमेतत् । तथापि न अविशेषेण । अवद्येति सूत्रे 'गर्ह्यपणितव्यानि रोधेषु' इति गर्ह्य विवक्षायामेव अवद्यमिति पणितव्य विवक्षायामेव पण्यमिति अनिरोधविवक्षायामेव वर्येति निपाताङ्गीकारात् । तथाच अनिरोधरूपोपाधिविवक्षायां ण्यदसम्भवेपि तदविवक्षायां अपवादाभावात् उत्सर्गतः प्राप्तण्यत्प्रत्यये युक्ता वार्यशब्दनिष्पत्तिरिति भावेनाह । अवद्येत्यादिना । ईशानामिति । ईश ऐश्वर्ये । अस्मात् लटः शानच् इति भावः । तेषां समूहो भाग इति समूहार्थे अणि सति णित्वादादिवृद्धिरिति भावः ।

ननु ईमह इति बहुवचनानुसारेण इम इत्येव भाष्ये वक्तव्यं तत्कथमेमीति एकवचनप्रयोग इत्यत आह । अवन्नित्येकवचनादिति । एतदपि ईमह इति बहुवचनमपि एकवचनार्थे 'सुपां सुलुगि'ति एकवचनस्य बहुलवचनादेश इत्यर्थः । तथा च कर्तुरेकत्वादेमीति एकवचनमेव युक्तमिति भावः । यद्यपीति वेदापव्याख्यानोक्तरीत्या सदा अवन् सदा रक्षक हे सवितः देव वार्याणां वरणीयानां धनानां ईशानं स्वामिनं त्वां प्रति भागं भजनीयं धनं अभि=सर्वतः ईमहे याचामह इति अवन् इत्यस्य सम्बुध्यन्तत्वेनापि व्याख्यातुं शक्यत्वेन अन्यथासिद्धत्वात् न तद्बलेन ईमह इत्यस्य एमीत्येकवचनान्ततया व्याख्यानमयुक्तमिति भावः । तथापीति । अवन्नित्यस्य सम्बुध्यन्ततया व्याख्याने प्रयोजनालाभप्रसङ्गात् तथा व्याख्यानमकृत्वा अवन्नहमित्येव व्याख्येयत्वेन तदनुसारेण ईमह इति बहुवचनस्य एकवचनतया व्यत्यासेन व्याख्यानं युक्तमित्यर्थः । परव्याख्यानेऽपि अध्याहारादिना प्रयोजनलाभसम्भवशंकापरिहाराय साक्षादित्युक्तम् । न च सम्बुध्यन्तत्वे आमन्त्रितस्येति निघातप्राप्तावपि तदनभ्युपगतौ निघातो न स्यादिति वाच्यं अर्थविशेषलाभाय स्वरानुपपत्तेः सोढव्यत्वादित्यत्र तात्पर्यात् ।

ननु अवन् इत्यस्य रक्षितुं इति व्याख्यानं कथं लभ्यत इत्यत आह । लक्षणहेत्वोरिति । लक्ष्यन्तेऽनेन इति लक्षणं चिह्नम् । जनको हेतुः । लक्षणे हेतौ च वर्तमानाद्धातोः लटः शतृशानचौ

(पदार्थदीपिका)

भवतः । तौ चेत् लक्षणहेतू क्रियाविषयौ भवत इति सूत्रार्थः । तथाच रक्षणक्रियाहेतौ शत्रन्तमेतदिति भावः । यद्यपि चावनं शरणागतिरूपक्रियापेक्षया पश्चाद्भावित्वात् न तत्र हेतुः । तथाप्यर्जयन् वसतीत्यादाविव तदुद्देशस्य पूर्वभावित्वात् हेतुत्वमुपपन्नमित्याहुः ।। ३ ।।

इति यावदिति ।। सुखादिक इनि भाष्यं न शशमानपदार्थकथन रूपम् । किन्तु तात्पर्यकथन-रूपमिति भावः ।। नेदीयस इति ।। निदःशब्दपर्यायोऽयं नेदीयः शब्द इति भावः । नेदीयस्त्वमेव व्याख्याति ।। परस्मादिति ।। परत्वमत्र देशतः कालतश्च विवक्षितम् । ततश्च ब्रह्मणो देशतः कालतश्च दूरत्वात् नेदीयस्त्वमिति भावः । अद्वेष इति श्रौत पदस्य द्वेषादिवर्जित इति कथं व्याख्यातमित्यत आह ।। उपलक्षणमिति ।। ततश्च श्रुतौ द्वेषपदं द्वेषमात्रराहित्योक्तेर्वैयर्थ्यात् दोषान्तरोपलक्षकमिति भावेन द्वेषादिवर्जित इति भाष्यकारेण व्याख्यातमिति भावः ।। विरुद्धार्थद्वयवाचीति ।। आराद्दूरसमीपयोरिति वचनादिति भावः । मूलविभुजादित्वात् क इति विरुद्धार्थद्वयाभिधाविति भाष्ये धाधातोः सोपसर्गतया आतोनुपसर्ग इत्यनेन कप्रत्ययाप्राप्तावपि कप्रकरणे मूलविभुजादिभ्य उपसंख्यानमिति वृत्तिकृतोपसंख्यानाङ्गीकारात् मूलविभुजादेश्चाकृति गणत्वात् अभियुक्तप्रयोग-त्वादस्यापि तत्रोपसंख्यानात् धाधातोः कप्रत्ययः । कित्वादातो लोप इटि चेत्याकारलोपश्चेति भावः ।। दूरेति भावप्रधानमिति ।। भाववाचक सामीप्यपदसन्निधानात् दूरपदमपि दूरत्वरूपधर्मपरमेवेत्यर्थः ।। ४ ।।

मूर्धानमुत्तममिति भाष्यकृता व्याख्यातम् । तत्कथं लभ्यत इत्यत आह ।। गौण्येति ।। अङ्गेषु मूर्ध्न उत्तमत्वात् तन्निष्ठोत्तमत्वसाम्यात् द्रव्यस्योत्तमत्वं मूर्धवद् मूर्धान्तं मूर्धानमिति गोण्या वृत्योत्तमत्वमाहेत्यर्थः ।। अशेमेति ।। धातूनामनेकार्थत्वात् दर्शनार्थादशूङ् व्याप्तावित्यस्मात् लिङि व्यत्ययेन परस्मैपदम् । श्ना विकरणस्याप्यस्य शब्विकरणत्वं चेति भावः । अत एव तथैवोदाहरति अश्नीम इति ।। ईहल्यघोरितीत्वमिति भावः ।। ५ ।।

## टीकाविवृतिः

उत्तरमित्यनेन पौनरुक्त्यपरिहाराय परशब्दं व्याचष्टे ।। परमुत्तममिति ।। अत उत्तरमिति ।। अव्यवहितोत्तरमित्यर्थः ।। परं त्रयं चेति ।। व्यवहितोत्तरमित्यर्थः ।। ब्राह्मणोक्तामिति ।। हरिश्चन्द्रेण वरुणाय संकल्पितपुत्रप्रतिनिधिभूतः शुनःशेपःपशुं कृत्वा यूपस्तंभे पाशैःस्थानत्रये बद्ध आत्मानं मोचयितुं देवान् तुष्टावेत्यादिरूपामित्यर्थः ।। सुबोधत्वायेति ।। कथाज्ञाने सति हि उत्तमपाशादिबद्धत्वमेतदृगुक्तं सुखेन ज्ञातुं शक्यते इत्यर्थः ।। एवं सतीति ।। शुनःशेपस्य

(टीकाविवृतिः)

शतऋग्द्रष्टृत्वे हिरण्यस्तूपदृष्टानां त्वमग्ने इति तिसृणामित्यर्थः ॥ अन्यत्रयमिति ॥ त्वन्नोअग्नेवरुणस्य विद्वानिति सत्वन्नो अग्नेऽवमोभवोतीति च ऋग्द्वयं चतुर्थे मण्डले तृतीयाष्टके चतुर्थाध्यायेस्ति। पञ्चमे मण्डले तृतीयाष्टकान्तिमाध्याये शुनश्चिच्छेपंनिदितंसहस्रादित्येका ऋगस्तीत्यर्थः। अनुक्रमणिकानुसारी शङ्कते ॥ नन्विति ॥ सामीप्यादिति ॥ अल्पत्वादविवक्षेति भावः ॥ अनुक्रमणिकायां चतुर्थमण्डलस्य वामदेवदृष्टत्वोक्तेस्त्वां ह्यग्ने इति सूक्तमध्यस्थस्य त्वंनो अग्ने इति ऋग्द्वयस्य ऋष्यन्तरानुक्तेर्वामदेवदृष्टत्वप्राप्त्याशुनःशेपदृष्टत्वानुपपत्तेः। तथा कुमारं मातेति सूक्तस्यात्रेयकुमार ऋषित्वस्य जारवृशऋषिकत्वस्य चोक्तेः। तन्मध्यस्थायाःशुनश्चिच्छेप- मित्यस्यास्तदृषिकत्वोपपत्तेः शुनःशेपदृष्टत्वानुपपत्तेरिति भावः ॥ इत्यादिनोक्तमिति ॥ सप्रजापतिमेव प्रथमन्देवतानामुपससार कस्य नूनं कतमस्यामृतानामित्येतयर्चेत्यारभ्य अथैनमवभृथमभ्यवनिनाय त्वंनो अग्ने वरुणस्य विद्वानित्येताभ्यामथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार शुनश्चिच्छेपं निदितं सहस्रादित्यन्तेन क्रमेण ऋकूशतस्य दर्शनमुक्त्वा तदेतत्परमृक् शतगाथं शौनःशेपमाख्यानमित्यनेनान्यून ऋकूशतदर्शनोक्तेरिति भावः। अस्मिन्पक्षे ब्राह्मणोक्तिरनुसर्तव्येति वक्तव्ये क्रम शब्दस्वारस्यं न दृश्यते। अतः पक्षान्तरमाह ॥ अथवेति ॥ तथा हीति ॥ नमो महद्भ्य इति श्रुत्यनन्तरमिति शेषः ॥ इत्यादीति ॥ तस्मिन्ब्राह्मणे हि आधुनिकैर्यच्चिद्धि सत्यसोमपा इत्यतः प्राक्पठितेपि यत्र ग्रावेति नवर्चसूक्ते विद्यमानानां यच्चिद्धित्वं गृहे गृहे इत्यादिपञ्चानामृचां कार्यमुक्त्वा ततःप्राक्तनाभिर्यत्र ग्रावेति चतसृभिर्होमः प्रतिपाद्यते इति शेषः। ततः किमित्यत आह ॥ तत्र चेति ॥ नवानामृचामिति शेषः। परत्वमौषस्य तृचात्। त्वमग्ने प्रथम इत्यतः पूर्वमिति शेषः। यद्यप्यत्र स इन्द्रन्तुष्टाव यच्चिद्धि सत्यसोमपा इति चैतेन सूक्तेनेत्येवोक्तं नत्वत उत्तरेण सूक्तेनेति। तथापि अग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा तथा अभित्वा देवसवितरित्येतेन तृचेनेति पाठक्रमो बोध्यः ॥ कस्य नूनम् ॥ पञ्चदशर्चमिति ॥ कस्य पञ्चोनाऽऽजीगर्तिःशुनःशेपःसकृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमादौ काय्याग्नेय्यौ सावित्रस्तृचो गायत्रोस्यांत्याभागीवेत्यनुक्रान्तत्वात्। अस्यार्थः। कस्येति सूक्तं ऋक् संख्या तु पञ्चोना विंशतिः पञ्चदशेत्यर्थः। अजीगर्तस्यापत्यमाजीगर्तिः शुनश्शेपो नामतः। अयमेव वैश्वामित्रः विश्वामित्रस्यापत्यम्। इदं न जन्यत्वादित्याशयेनोक्तम्। कृत्रिम इति। अत्रदेवरात इति नाम। वारुणं वरुणदेवताकम्। तुशब्दाद्द्वितीयसूक्तमपि वारुणम्। त्रैष्टुभं चतुश्चत्वारिंशदक्षरयुक्तत्वादृचां त्रिष्टुप् छन्दः। आदौ काय्याग्नेय्यौ। कःप्रजापतिस्तद्देवताका प्रथमा ऋक्। द्वितीया अग्निदेवताका। तत एकस्तृचः सावित्रः सवितृदेवताकः। अयं गायत्री छन्दस्कः। अस्य सावित्रस्यांत्याभगभक्तस्येति ऋकूभागीवा

(टीकाविवृतिः)

भगदेवताका वेति । कस्येत्यस्य कर्तुरिति भाष्योक्तं व्याख्यानं घटयति ।। करोतेर्ड इति ।। अमृतशब्दः मरणराहित्यार्थकामरशब्दपर्याय इति भावेनाह ।। सुराणामिति ।। अत एव कतमस्येत्यत्र तमपःसार्थक त्वात्परानन्दतनोरिति भाष्ये व्याख्यानमिति भावेनाह ।। सुखतमस्येति ।। सामर्थ्यादिति ।। नामशब्दग्रहणसामर्थ्यादित्यर्थः । उच्चारणादीत्यादिशब्दात्स्मरणा- वृत्त्यादि ग्राह्यम् । पूर्वार्धोक्तस्योत्तरार्धोक्तार्थं प्रतिहेतुत्वाश्रयेणाह ।। सक इति ।। कःकर्ता विष्णुः ।। दात् दद्यादिति ।। दाञो लेटि तिप इतश्च लोप इतीकारलोपे छन्दस्युभयथेत्यार्धधातु-कत्वाच्छबभावाच्छ्लुस्तन्निमित्त द्वित्वादि च नेति भावः ।। दृशेयं पश्येयमिति ।। दृशेर्लिङि मिपि शपि यासुटि अतो येय इतीयादेशे छान्दसःपाघ्राध्मेति- पश्यादेशाभावःपुगन्तेति गुणाभावश्चेति भावः । मुक्तेःसंसारमोचनत्वाद्विष्णोस्तदभावादमृतानां मध्ये कतम इत्युक्तेरित्यत आह ।। सकाशादिति शेष इति ।। अस्मिन्पक्षे अमृत एकःकः विष्णुरेकःकः अनयोरयमतिशयेन कःकतर इति स्यान्न तु कतम इति न शंकनीयम् । अमृतानामिति बहुवचनसामर्थ्यात् । मुक्ताःब्रह्मादयःबहवः अमृतत्वमवच्छेदकं विहाय प्रत्येकं विधारणविषया इति तमबुपपत्तेरिति भावः ।। कर्मणि क्तिन्निति ।। दो इति धातोरादेच इत्यात्वे औणादिके क्तिनि द्यति स्यति मास्थामित्तिकितीतीकारादेशः । दीयते खण्ड्यते इति दितिः । न दितिरदितिरिति विग्रह इति भावः । महतीति स्त्रीलिङ्गप्रतिपदोक्तेर्भावमाह ।। स्त्रीरूप इति ।। एकमेवेति ।। महदखण्डितशब्दयोर्व्याप्तत्वार्थकत्वादित्याशयः ।। अखण्डितत्वं त्वितीति ।। ततश्चैवं भाष्ययोजना । तन्महित्वं तस्य विष्णोर्महित्वं देशानंत्यात्सर्व देशव्याप्तेरुक्तम् । तस्य च विष्णोरेवाखण्डितत्वं तु गुणैःकालाच्चानंत्यादुक्तमिति ।। व्यधिकरणमिति ।। विष्णुलक्ष्मीविषयत्वेनेत्यर्थः ।। परमेश्वरविषयं चेति ।। चादनुक्तलक्ष्मीविषयत्वं गृह्यते ।। पुनर्दादित्युक्तमिति ।। विशेषतःप्राप्स्यभिप्रायेणेत्यर्थः ।। अदेःकर्तरि क्तिन्निति ।। औणादिक इति शेषः ।। जग्ध्यादेशाभाव इति ।। अदो जग्धिर्ल्यप्तिकितीत्यनेन तकारादिकित्प्रत्ययेऽत्तेर्जग्ध्यादे-शविधानात्प्राप्तजग्ध्यादेशाभावस्तथाऽनिट्सु पाठेऽपीडागमश्चात्तेःसर्वं वा अत्तीति तददितेरदितित्वमित्यदिति शब्दनिर्वचनपरश्रुतिबलादंङ्गीकरणीय इति भावः ।। वाशब्द इति ।। वाऽव्ययं स्यात्समुच्चये इत्येकाक्षररत्नमालोक्तेरिति भावः ।। अनेनैवेति ।। लक्ष्म्या अपि स्वयोग्यमहत्त्वाखण्डितत्वयोः सत्त्वादिति भावः । क एवेत्येवशब्दाभिप्रायमाह ।। रूढश्चेति ।। कःप्रजापतिरुद्दिष्टःकोवायुरिति शब्दित इति वररुच्युक्तेरिति भावः । स्वसमानेभ्य इति ।। ऋजुगणस्थेभ्य इत्यर्थः । वैकुण्ठादेर्विशेषदेशत्वं कुत इत्यत आह ।। हरेर्व्यक्तीति ।। १ ।।

(टीकाविवृतिः)

अग्नेर्वयम् ॥ अभिधेयमाहेति ॥ मुख्यमिति शेषः । स एवोक्त इत्यनेनाभिधेयोक्तिसिद्धेस्तस्यैवेत्यादिव्यर्थमित्यतस्तन्निवर्तनीयशङ्काप्रदर्शनपूर्वकं तत्कृत्यं वदन्नुत्तरग्रन्थमवतारयति ॥ कथं तर्हीति ॥ स एवेत्युक्तौ अस्यामप्यृचि प्रजापतिनामकस्यैव वाच्यत्व प्राप्तेः तं प्रजापति(रि)मिति भिन्नविषयप्रतिपादकब्राह्मणविरोधः स्यादित्याशङ्कापरिहारस्त्वग्न्याख्य इत्युक्तिमात्रेण भवति । तद्विहाय प्राजापत्यंतर्गतरूपात् भिन्नमाग्निनामकं रूपमत्रोक्तम् । तत्किंरूपमित्यर्थः । तर्हि जामदग्न्य इत्येवालं, यज्ञेशो हूयत इति किमर्थमित्यत आह ॥ यज्ञेश इति ॥ यज्ञभोक्तृदेवतेश इत्युक्त्या तदधीनत्वादिति न्यायेनाग्न्यादिनिष्ठाग्नित्वादीनां भगवदधीनत्वादग्न्यादिशब्दप्रवृत्तिरिति भावः । यद्वा यज्ञेश इतीन्द्रशब्दनिर्वचनम् । इदि परमैश्वर्ये इत्युक्तेः । तथा हूयते इत्यनेनापि अग्न्याद्यन्तर्गतस्य विष्णोर्होमविषयत्वोक्तेरत्तीत्यग्निरिति निर्वचनमुक्तं भवतीति भावः ॥ अत्रेति ॥ अस्यामृचि पूर्वस्यां च नामस्मरणादिकं भगवत्प्राप्तिहेतुरित्युच्यत इत्यर्थः ॥ प्रमाणविरुद्धत्वादिति ॥ नान्यःपंथा इत्युक्त्येशज्ञानातिरिक्तस्य मोक्षसाधनत्वनिषेधादिति भावः । भाष्ये सार्थमिति वचनादर्थज्ञानस्य विवक्षितत्वान्न प्रमाणविरोध इति भावः ॥ यद्वेति ॥ सार्थनामस्मरणेन सर्वाभीष्टप्राप्तेर्नाम्नश्चारुत्वमिति भावः ॥ २ ॥

अभि त्वा ॥ कथं तर्हीति ॥ यदि मुख्यतःसवितृशब्दवाच्यो विष्णुरेव तर्हि ब्राह्मणे प्रसवानामीशे इति सूर्यलिङ्गस्योत्पद्यमानेशितृत्वस्य वचनं कथमुपपद्यत इत्यर्थः ॥ तृचेनेति ॥ ऋक्त्रयेणेत्यर्थः ॥ सवितृशब्देति ॥ अनेन प्रसवानामीशे इत्येतदपि सवित्रन्तर्गत भगवत एव मुख्यं लिङ्गमित्युक्तं भवति ॥ वार्यशब्दमिति ॥ वार्यमिति शब्दो यस्य तत् वार्यशब्दवाच्यमित्यर्थः । नन्ववद्यपण्यवर्येति सूत्रेण ण्यदपवादयत्प्रत्यय निपातनाद्वार्यमिति कथमित्यत आह ॥ अवद्येति ॥ अवद्येति सूत्रोक्तस्य अनिरोधार्थरूपस्योपाधेरीशानं वार्याणामित्यत्राविवक्षितत्वाद्वरणीयत्व रूपयौगिकार्थस्य विवक्षणादृहलोरिति ण्यत्प्रत्यय इत्यर्थः । अत एव वृत्तिकारैः शतेन वर्या कन्येत्युदाहृत्य वार्या ऋत्विज इति प्रत्युदाहृतम् ॥ अभ्यर्हितत्वादिति ॥ आत्मानं सततं रक्षेद्दारैरपि धनैरपीत्युक्तेः स्वरक्षणस्यांतरंगत्वादित्यर्थः ॥ समितिरूपमिति ॥ सङ्गे सभायां समितिरित्यमरोक्तेः समितिःसभा समूह इति यावत् । सामानाधिकरण्यलभ्योर्थो रूपमिति । अभीमहे इत्यस्य बहुवचनान्तस्य भाष्ये एमीत्येकवचनान्तं प्रतिपदं कथमित्यत आह ॥ अवन्नित्येकवचनादिति ॥ ननु अवन्नित्यस्य सर्वानुदात्तत्वात्संबुध्यन्तत्वेन व्याख्याने ईमहे इत्यत्र वचनव्यत्यासो नाङ्गीकार्यः अग्नेर्वयमित्यतो वयमित्यस्यानुवृत्त्यान्वयसंभवादित्याशङ्क्य परिहरति ॥ यद्यपीति ॥ वचनव्यत्यासेनेति ॥ अवन्निति सवितुर्विशेषणोक्तिबलादपि रक्षणप्रयोजनलाभात्किं कर्तृविशेषणत्वेनेत्यत उक्तम् ॥ साक्षादिति ।

(टीकाविवृतिः)

उपलक्षणमेतत् । इणःपरस्मैपदित्वाद्व्यत्ययेनात्मनेपदं तथा अवन्नित्यस्य कर्तृविशेषणत्वे व्यत्ययेन निघात इत्यपि बोध्यम् । अवन्नित्यस्य कर्तृविशेषणत्वे कथं साक्षात्प्रयोजनलाभ इत्यत आह ॥ लक्षणहेत्वोरिति ॥ क्रियांतरस्य चिह्नवाचकाद्धेतुवाचकाच्च धातोःलटः शतृशानचौ स्यातामिति सूत्रार्थः । हेतुःसाधनं फलं चात्र विवक्षितं वृत्तिकारैः । अर्जयन्वसतीत्युदाहरणादर्जनस्य वासफलत्वात् । एवमत्रापि रक्षणं शरणगमनस्य फलत्वाद्धेतुरित्युच्यते । अतस्तद्वाचकादवतेः शतृप्रत्ययात्साक्षात्प्रयोजनलाभ इति भावः । गीताभाष्यटीकायां लक्षणहेत्वोःक्रियाया इति लक्षणेपि शतुर्विधानादित्युक्तेस्तद्विरोध इति चेन्न । पाठभेदाश्रयेण ग्रन्थद्वयप्रवृत्तेर्न विरोधः । अत्र कश्चिद्विशेषः प्रकरान्तरं चमत्कृत शाब्दिककण्ठमणौ ज्ञेयः ॥ ३ ॥

यश्चित् ॥ इत्थेत्यनेनाविकारित्वं कथमागतमित्यत आह ॥ इदानींतनेति ॥ शशब्दइति ॥ शं सुखे शर्मणि प्रोक्तमिति विश्वोक्तेरिति भावः ॥ अतिशयार्थे इति ॥ आधिक्योधिकमिति सूत्रादिति भावः । सकारान्तोनिदस् शब्दोतिशयितदूरार्थः । अथवा ईयसुन्सहितदूरशब्दस्य निदसादेश इति भावेन भाष्ये नेदीयस इति व्याख्यातम् । तद्व्याचष्टे ॥ परस्मादिति ॥ यद्यपि नेदादेशोन्तिकबाढयोर्नेदसाधावितीष्ठेय सुनोःपरयोरन्तिक शब्दस्य विहितस्तथापि नाममहोदधिग्रन्थानुसारेण दूरशब्दस्यापि बोध्य इति भावः । विष्ण्वर्थप्रतीतिनिरासाय ब्रह्मण इत्येतद्व्याचष्टे ॥ हिरण्यगर्भादिति ॥ सर्वत्रऋगर्थस्योक्तत्वात्तवरूपमनामयमिति भाष्यमसङ्गति-शङ्कापरिहारायोक्तार्थानां पदानां तात्पर्यार्थपरत्वेन योजयति ॥ एवं भूत इति ॥ हस्तयोर्दधे इति ॥ एतादृशरूपस्य हस्तौ ममाभीष्टं दातुं संगृह्णाति । जगृभ्मातेद-क्षिणमिन्द्रहस्तमित्युक्तेरिति भावः । तत्र दृष्टान्तमाह ॥ पुत्र इवेति ॥ यथा पुत्रःस्निग्धपितुर्हस्तद्वयं स्वाभीष्टदानाय गृह्णाति तथेत्याशयः ॥ क्वचिदिति ॥ प्रथमाध्याये उत ब्रुवन्तु नो निद् इत्येतदृग्व्याख्यावसरे इत्यर्थः ॥ आराच्छब्द इति ॥ आराद्दूरसमीपयोरित्यमरोक्तेः कुत्राप्यदृष्टत्वं न शङ्क्यमिति भावः । विरुद्धार्थद्वयाभि-धावित्यत्राभिपूर्वधाधातोरातोनुपसर्गे क इत्युक्तेः कप्रत्ययाभावात्कर्मण्यणित्यणि युगागमे च विरुद्धार्थद्वयाभिधायाविति भाव्यमित्यत आह ॥ मूलविभुजादित्वात्क इति ॥ आतो लोप इटि चेत्याकारलोपश्चेति शेषः । महोदधावित्यस्य समुद्रार्थकत्वेऽसङ्गतेः तन्नामकग्रन्थार्थ-कत्वेऽप्रसिद्धेरन्वयाभावाच्चेत्यतोऽध्याहारेण योजयति ॥ नाममहोदधीति ॥ भारतभीमादिशब्दवदिदं नामैकदेशग्रहणमिति भावः । अद्वेषत्वमात्रस्य विष्णुलिङ्गत्वे भाष्ये प्रमाणमुक्तं निर्विकारत्वादौ कथमित्यत आह ॥ निर्विकारत्वादेरपीति ॥ निर्विकारोऽक्षरःशुद्धः आनन्दमयोभ्यासात् वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः । ब्रह्मा देवानां प्रथमः संबभूव । निरनिष्ठो निरवद्य इत्यादीति शेषः ॥ ४ ॥

(टीकाविवृतिः)

भगभक्तस्य ॥ तत्फलं चेति ॥ अस्य सुखमित्यनेनान्वयः ॥ ते संबन्धिनमिति ॥ त्वया दीयमानमित्यर्थः ॥ गौण्या वृत्त्येति ॥ मूर्ध्न उत्तमांगत्वात्तन्निष्ठमुत्तमत्वं मूर्धशब्देनोच्यते इत्यर्थः। अश भोजने इत्यतःश्नाविकरणात्प्रार्थनालिङि व्यत्ययेन शपि यासुडादौ। अशेमेति रूपम्। भाष्ये आरभे इति उपसंहारप्रयोगानुसारेण वयमित्यस्य वचनव्यत्ययमाश्रित्ये दमपि तथा व्याख्यातमश्नामीति। टीकायान्तु पदद्वये व्यत्ययाश्रयणाद्वरमारभे इत्यत्रैव व्यत्ययाश्रयणमिति भावेन आरभामहे इति व्याख्यायाश्नामीत्येतदपि व्याचष्टे ॥ अश्नीम इति ॥ भक्तमन्नमिति ॥ भिस्सा स्त्री भक्तमंधोन्नमित्यमरोक्तेरिति भावः ॥ तस्य ते इति ॥ त्वया दीयमानं मोक्षाख्यमित्यन्वयः ॥ ५ ॥ १३ ॥

ऋक्संहिता पदपाठसहिता (सू-२४, व-२)

(२५९) नहि ते क्षत्रं नसहोन मन्युं वयश्च नामी पतयन्त आपुः ॥ नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ॥ ६ ॥

(प०) नहि । ते । क्षत्रम् । न । सहः । न । मन्युम् । वयः । च न अमी इति । पतयन्तः । आपुः । न । इमाः । आपः । अनिमिषम् । चरन्तीः । न । ये । वातस्य । प्रमिनन्ति । अभ्वम् ॥ ६ ॥

(२६०) अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ॥ नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥ ७ ॥

(प०) अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते । पूतऽदक्षः ॥ नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मेइति । अन्तः । निऽहिताः । केतवः । स्युरितिस्युः ॥७॥

(२६१) उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेत वा उं ॥ अपदे पादा प्रतिऽधातवेऽकरुतापवक्त्रा हृदयाविधश्चित् ॥ ८ ॥

(प०) उरुम् । हि । राजा । वरुणः । चकार ॥ सूर्याय । पन्थाम् । अनुऽएतवै । ऊँइति ॥ अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्त्रा । हृदयऽविधः । चित् ॥ ८ ॥

(टीकाविवृतिः)

(२६२) शतं ते राजन्भिषजःसहस्रमुर्वीगभीरा सुमतिष्टे अस्तु ॥ बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनःप्रमुमुग्ध्यस्मत् ॥ ९ ॥

(प०) शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु ॥ बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥ ९ ॥

(२६३) अमीय ऋक्षा निहितास उच्चा नक्तं दहृश्रे कुहचिद्दिवेयुः ॥ अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमानक्तमेति॥१०,१४ ॥

(प०) अमीइति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । दहृश्रे । कुह । चित् । दिवा । ईयुः ॥ अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥१०,१४॥

## ऋग्भाष्यम्

क्षतात्राणं ते बलसंविदं च पूर्णं नापुर्मुक्तिगा ये विशिष्टाः । अपि स्वयं संसृतेरुत्पतन्तः पतयन्तोऽन्यांच्छिष्यभक्तानुदाराः । सदा शुभान्याचरन्तोपि देवा अब्देवता आप इति श्रुतिर्यत् । गङ्गाद्यावावा युदेवस्य विष्णोरुत्पत्तिं ये जानते देवसङ्घाः । वयः सुपर्णा इति वापि ॥ ६ ॥ अबुध्ने प्रकाशतः सम्भजतः स्वमुच्चैः । स्तूपं स्थानं ददते पूतदक्षो नीचस्था अप्यूर्ध्वगास्तेन तस्थुः । नीचाश्रये मुक्तिगा मानुषाद्यास्तेषां बुध्नो नीचलोकः सुरेभ्यः । नीचा गुणा अप्रकाशोथ वैषां नीचोच्चत्वं क्रमशश्चाविरिंचात् । अस्माकमंतर्निहितानि नित्यं ज्ञानानि भूयासुरतोधिकानि । भवंत्यर्हा भवितुं वा भविष्याः स्युर्द्विग्रहे प्रार्थनैवाधिकार्थे ॥ ७ ॥ उरुं राजा रंजनाद्राजनाद्वा सूर्याय पंथानमसौ चकार । स्वाज्ञानुसारेण स दैवगत्यै पादावपादाय च गन्तवेऽकरोत् । अज्ञाय विज्ञानमकः सगन्तुमात्मानमित्यर्थ इहांजसोक्तः । बुद्धेर्धातुः शङ्करस्यापि दोषान्वक्ता ज्ञानाच्छिक्षकत्वाच्च विष्णुः ॥ ८ ॥ जगद्रक्षासाधनान्यप्यनन्तान्यनन्तधा सन्तिपुनस्तवेश । अगाधरूपा महती शुभाच मतिर्मम त्वद्विषये सदाऽस्तु । ऋतज्ञान प्रतिरूपत्वहेतोर्निर्ऋत्याख्यां दुर्मतिं दूर एव । बाधस्व दुर्ज्ञानिजनं निरस्य स्वर्गात्पराकृत्य

(टीकाविवृतिः)

च शश्वदेव । कृतं च पापं प्रमुमुग्धि मत्तः ॥ ९ ॥ ऋक्षाण्यमी निहितानि त्वयोच्चैः । दृश्यानिरात्रौ न दिवा त्वयैवेत्यादीनि कर्माण्यनिरोधितानि । पश्यन्परानंदत नोस्तवैव चन्द्रो नित्यं दृश्यमानस्त्वयैव । सम्प्रेरितो याति परेच देवा एवं त्वदाज्ञाकरणाः सदैव ॥ १०, १४ ॥

## ऋग्भाष्यटीका

न हिते । इतःपरा एकत्रिंशद्वरुणदेवताः । क्षतात्राणम् । हे वरुण । ते क्षत्रं प्रजानां क्षताद्धानेस्त्राणम् । वयश्चन विशब्दो विशिष्टवाची । चनशब्दोप्यर्थः । विशिष्टा अपि । अमी परोक्षाः ये मुक्तिगास्तेपि नापुर्हि । तथा ते सहो बलं च नापुः । मन्युं मनु अवबोधने । संविदं च नापुः । क्रोधस्य गुणत्वाभावात् । त्वदीयक्षत्रादिसदृशक्षत्रादिमन्तो मुक्ता अपि न सम्भवन्तीत्यर्थः । प्रमाणबाधपरिहारार्थमुक्तं पूर्णमिति । किञ्च ये पतयन्तः स्वार्थे णिच् । स्वयं संसृतेरुत्पतं तो जीवन्मुक्तास्तेपि नापुः । यद्वा हेतुमति णिच् । अन्यान् शिष्यभक्तान् संसृतेरुत्पतयन्त उद्गमयंतो ये उदारा आचार्यास्तेपि नापुः । किञ्च । अनिमिषं सदा चरन्तीः शुभान्याचरन्तः । इमा आपः इमे प्रसिद्धा देवा अपि नापुः । अप् शब्दस्य सर्वदेववाचित्वं कुत इत्यत आह । आप इति । यद्यस्मादापो वै सर्वा देवता इति श्रुतिरस्ति तस्मादुक्तं युक्तमिति । अप् शब्दः सर्वदेवतावाचित्वेन व्याख्यातः । तद्विशेषवाचित्वेनापि द्वेधा व्याख्याति । अब्देवता अबभिमानिदेवताः गङ्गाद्या न द्यो वा आप इत्युक्ताः । किञ्च । ये देवसङ्घाः वातस्य वायुदेवस्य विष्णोः पञ्चम्येषा । अभ्वम् उत्पत्तिपर्यायोऽयम् उत्पत्तिम् । प्रमिनन्ति जानते । तेपि महाज्ञानानापुः । वायु देवस्येत्यनुवादेन विष्णोरिति व्याख्यानं वा । उत्पत्तिं प्रादुर्भावम् । वय इत्यनुवादेन सुपर्णा इत्यपि वेतिव्याख्यानान्तरम् ॥ ६ ॥

अबुध्ने राजा । अबुध्ने प्रकाशतः । पूतदक्षो वरुणो राजा अबुध्ने बुध अवगमने क्विप् । तत्प्रतिषेधो बुध्नम् । नञः परनिपातादि छान्दसम् । तस्यापि प्रतिषेधोऽबुध्नं तृतीयार्थे सप्तमी । प्रकाशतो ज्ञानेन ज्ञानपूर्वम् । वनस्य वन षण सम्भक्तौ पचाद्यच् । स्वं सम्भजतः स्वात्मानं सेवमानायोर्ध्वमुच्चैः । स्तूपं स्थानमुत्तमं स्थानं ददते । दद दाने । किञ्च ये नीचीना नीचस्थाः पुरुषास्तेपि तेन वरुणेन सेवितेन निमित्तेन उपरि ऊर्ध्वगाः स्वर्गगाः स्थुः तस्थुः । यद्वा ये नीचीना नीचा मानुषाद्यास्तेपि उपरि स्थुः मुक्तिगा बभूवुरिति व्याख्यानान्तरम् । अर्थद्वये कथं ते नीचीनाः । तत्राद्ये ये(ए)षां तेषां स्वर्गं गमिष्यतां बुध्नोऽधोभागः सुरेभ्यो नीचलोको ह्यावासः । द्वितीये तु बुध्नशब्दोधस्तनत्वमाह । एषां मानुषादीनां बुध्नः सुरेभ्योऽधस्तनप्रकारो गुणा नीचाः । अथवैषां मानुषादीनां बुध्न उक्तप्रकारेणाप्रकाशोऽज्ञानमस्ति । न तु देवानां तस्मात्ते नीचाः । तृतीयपादं प्रकारान्तरेण व्याख्याति । नीचोच्चत्वमिति । अस्य वरुणस्याज्ञया य एव जीवाः किञ्चिदपेक्षया नीचीनास्त एव किंचिदपेक्षयोपरि स्थुः । किं निरवधिकमेतत् । न । एषां जीवानां

(ऋग्भाष्यटीका)

बुध्नो मूलभूतः कश्चिदस्ति विरिंच इति। तस्येदं तात्पर्यम्। विरिञ्चादा यत्क्रमशो जीवानां नीचोच्चत्वं तच्च वरुणेनेति। तस्य वरुणस्य प्रसादादस्मे अस्माकम्। शे आदेशः। अन्तर्हृदये केतवो निहिताः स्युः ज्ञानानि नित्यं निहितानि भूयासुः। ज्ञानिनो वयं भूयास्म। ननु संत्येव ज्ञानानि तत्कथं तत्प्रार्थना। अतो विद्यमानेभ्योप्यधिकानीति। तर्ह्ययोग्यप्रार्थनया प्रत्यवायो भवेदित्यतोभिप्राय माह। भवन्तीति। ये केतवो भविष्या आगामिनोस्माकं भवितुमर्हा भवन्ति वासंत्येव ते स्युरित्यनेन ये केतवोऽस्मेऽस्माकं अंतर्निहितानि गूढाः सन्ति ते स्युः व्यक्ता इति योजनान्तरं सूचितं भवति। अतोधिकानीति यद्व्याख्यानं तत्कथं लभ्यमित्यत आह। द्विर्ग्रह इति। पदकारेणात्र स्युरिति स्युरिति योद्विर्ग्रहः क्रियते तेन द्विर्ग्रहे द्विर्ग्रहेण द्विरुच्चारणेन प्रार्थनैवाधिकार्थेऽधिकार्थद्योतनाय भवतीति॥ ७॥

उरुं हि। उरुं राजा। रंजनात् अनुरागजननात्। राजनात् दीपनाद्वा राजा। रंजरागे। राजृदीप्तौ असौ राजा। अन्वेतवै स्वाज्ञानुसारेण गत्यै। उशब्द एवार्थे। तस्याध्याहृतेन सदाशब्देन सम्बन्धः कृतः। सूर्याय सूर्यस्य। उरुं विस्तीर्णम्। पन्थां पन्थानम्। चकार सूर्यसंचाराय मूर्तान्तर प्रतिघातरहितमन्तरिक्षं चकार। किञ्च। अपदे अपदायपुरुषाय प्रतिधातवे धावुगति शुद्धयोः। गन्तवे गन्तुम्। पादा पादौ। अकः अकरोत्। विकरणलोपात्। यद्वा अपदे पदगतौ गत्यर्थाः ज्ञानार्थाः। सम्पदादित्वात्क्विप्। न विद्यते पद्यस्य तस्मै अज्ञाय। पादौ घञन्तः विज्ञानं ज्ञानं चेति शेषः। स वरुणः प्रतिधातवे आत्मानं प्रति गन्तुमक इत्येषोर्थ इह पादेंऽजसा मुख्यया वृत्त्योक्तः। माहात्म्यातिशयस्य सूचकत्वात्। उत किञ्च वरुणो विष्णुर्हृदयविधः हृदयं बुद्धिस्तां विशेषेण धत्त इति विध् विच्। आकारलोपः। तस्य बुद्धेर्धातुः शङ्करस्य चिदपि अपवक्ता दोषान्वक्ता। कथं ज्ञानात्सूक्ष्मविज्ञानवत्त्वात्। शिक्षकत्वाच्च। शिक्षको हि त्वयेदमवद्यमाचरितमिति दोषं वक्ति। अनेन विज्ञानं शिक्षकत्वं चाभिप्रेतम्। न दौर्जन्यमित्यभिप्रायः॥ ८॥

शतं ते। जगद्रक्षा। हे राजन् ईश। ते तव। शतमनन्तानि सहस्रं पुनरपि प्रत्येकमनन्तधाभूतानि। भिषजो रक्षकत्वगुणयोगाज्जगद्रक्षासाधनानि सन्ति। अतो मम उर्वी महती। गभीरा अगाधरूपा। सुमतिः शुभामतिस्ते तव त्वद्विपयेति यावत्। सदास्तु। किञ्च। निर्ऋतिम् ऋगतौ। निर्निषेधे। ऋतिर्ऋतं ज्ञानं तत्प्रतिरूपत्वहेतोर्निर्ऋत्याख्यां दुर्मतिं दूर एव बाधस्व। बाधृलोडने। कथम्। पराचैः पराकृत्य दुर्ज्ञानिजनं स्वर्गादिस्थानाच्छश्वदेव निरस्य नरके क्षिप्त्वा चेत्यर्थः। किञ्च। कृतं मयेति शेषः। एनश्चित्पापं चास्मन्मत्तः। प्रमुमुग्धि प्रमोचय॥ ९॥

अमीये। ऋक्षाण्यमी। येऽमी ऋक्षा यान्यमूनि ऋक्षाणि नक्षत्राणि। तान्युच्चा उच्चैरंतरिक्षे निहितासो निहितानि त्वयैवेति शेषः। यच्च तानि नक्तं रात्रौ ददृश्रे ददृशिरे इरयोरे दृश्यानि दिवा कुहचित् कदाचिदेव ईयुः प्रतीयुः प्रतीयन्ते। यच्च दिवा सर्वदा न प्रतीयन्ते कदाचिदेव प्रतीयन्ते तदपि त्वयैव। वरुणस्य परानन्दतनोर्विष्णोस्तवैव व्रतानि इत्यादीन्युक्तानि कर्माण्यदब्धान्यनिरोधितानि अप्रतिहतानि। किञ्च।

(ऋग्भाष्यटीका)

चन्द्रमाश्चन्द्रो विचाकशत् चकाशृ दीप्तौ दीप्तिश्च दर्शनं पश्यन् समस्तमिति शेषः। नक्तम् उपलक्षणमेतत्। नित्यमेति याति तच्च त्वयैव। वरुणस्यादब्धानि व्रतानि विचाकशदित्येकवाक्यतया वा योज्यम्। विचाकशदित्यस्यार्थान्तरं दृश्यमान इति। चन्द्रमा नक्तं विचाकशत् दीप्यमानो दृश्यमान एति तदपि त्वयैवेति योजनान्तरं सूचयति। सम्प्रेरित इति। यो विचाकशत् चन्द्रमाः स त्वयैव सम्प्रेरितो नक्तमेति। उपलक्षणमेतदित्यभिप्रायेणाह। परे चेति। त्वदाज्ञायाः करणाः। कृत्युल्युटो बहुलमिति कर्तरि ल्युट्। व्यधिकरणो वा बहुव्रीहिः॥ १०, १४॥

## मन्त्रार्थमञ्जरी

एतदारभ्यैकत्रिंशन्मन्त्रा वरुणदेवताकाः। अग्रेतनं वरुणपदमत्राप्यन्वेति। (हे वरुण) 'मित्रं हुवे' इत्यत्रोक्तनिरुक्त्या हे विष्णो। ते। क्षत्रम्, प्रजानां क्षताद्धानेस्त्राणं रक्षणम्, त्रायतेः क उपपदान्तलोपश्च। वयः चन, विशब्दो विशिष्टवाची, चनशब्दोऽप्यर्थः। अमी, परोक्षाः विशिष्टा अपि, मुक्ता अपीति वा, 'विः पक्षिपरमात्मनोः' इत्युक्तेः सुपर्णा अपीति वार्थः। न हि आपुः। (ते) सहः, बलम् (च) न (आपुः) मन्युम्, ज्ञानम् (च) न (आपुः), 'मनु अवबोधने' इति धातोर्युं(च्) प्रत्ययः, क्रोधस्यागुणत्वात्। किं च, पतयन्तः, स्वार्थे णिच्, संसृतेरुत्पतन्तो जीवन्मुक्ताः, भक्तान्संसृतेः पतयन्तः, उद्गमयन्त आचार्या अपीति हेतुमण्णिज्वा। (न आपुः) किं च, अनिमिषम्, सदा। चरन्तीः, शुभानाचन्तरः। इमाः, प्रसिद्धाः। आपः, सर्वे देवाः, 'आपो वै सर्वा देवताः' इति श्रुतेः, अभिमानिनयन्यायेनाबभिमानिनो वा, गङ्गाद्या नद्यो वा। ते क्षत्रादिकम् न (आपुः) किं च, ये, देवसंघाः। वातस्य, मुख्यवायोः। अभ्वम्, उत्पत्तिपर्यायोऽयम्, विष्णोः सकाशादुत्पत्तिम्,। यद्वा- वातस्य, विष्णोः। अभ्वम्, प्रादुर्भावम्। प्रमिनन्ति, जानन्ति (तेऽपि) महाज्ञानाः। न (आपुः)॥ ६॥

पूतदक्षः, वरुणः राजा, व्याख्यातपदानि। अबुध्ने, 'बुध अवगमने' क्विप्, तत्प्रतिषेधो बुध्नमज्ञानम्, नञः परनिपातादिश्छान्दसः, तस्यापि प्रतिषेधोऽबुध्नम्, तृतीयार्थे सप्तमी, ज्ञानेन = ज्ञानपूर्वम्। वनस्य, वनाय, व्यत्ययात्, 'वन सम्भक्तौ' पचाद्यच्, स्वात्मानं सेवमानाय। ऊर्ध्वम्, उच्चैः। स्तूपम्, स्थानम्। ददते, 'दददाने' ददाति। किं च, (ये) नीचीनाः, नीचस्थानस्थाः पुरुषाः। (तेऽपि) (तेन), वरुणेन सेवितेन हेतुना। उपरि, ऊर्ध्वगाः, स्वर्गगाः। स्थुः, तस्थुः, स्थातेः (तिष्ठतेः) लुङ्यभावश्छान्दसः। यद्वा (ये) नीचीनाः नीचा मनुष्याद्याः। (तेऽपि) उपरि स्थुः, मुक्तिगा बभूवुः। अर्थद्वयेऽपि कथं ते नीचीनाः? इत्यत उक्तम्– 'बुध्न एषाम्' इति।

(मन्त्रार्थमञ्जरी)

आद्येऽर्थे– एषाम्, स्वर्गं गमिष्यताम् । बुध्नः, अधोभागो नीचलोको द्यावासः । द्वितीये तु बुध्नशब्दोऽधस्तनत्वपरः । एषाम्, मानुषादीनाम् । बुध्नः, सुरेभ्योऽधस्तनप्रकारः, गुणा नीचा इति वा । एषाम्, मानुषादीनाम् । बुध्नः, अज्ञानमस्ति, न तु देवानाम्, अतस्ते नीचीना इति वार्थः । (अस्य) वरुणस्य (आज्ञाया य एव जीवाः) किंचिदपेक्षया नीचीनाः । (त एव) किञ्चिदपेक्षया उपरि । स्थुः, अस्थुः, नीचोच्चभावेन स्थिता इति यावत् । तत्किं निरवधिकम् ? इत्यत उक्तम् 'बुध्न एषाम्' इति । एषाम्, तारतम्येन स्थितानां जीवानाम् । बुध्नः, मूलभूतः कश्चिदस्ति विरिञ्चः । इति वा तृतीयपादस्यार्थः । (तस्य) वरुणस्य । (प्रसादात्) अस्मे अस्माकम्, 'सुपां सुलुक्' इत्यादिना सुपः 'शे' इत्यादेशः, शकारस्येत्संज्ञया लोपे 'शेषे लोपः' इति 'अद्' इत्यस्य लोपे 'अस्मे' इति रूपम् । अन्तः, हृदये । केतवः, 'केतुं कृण्वन्' इत्यत्रोक्तदिशा ज्ञानानि । निहिताः, नित्यं निहितानि । स्युः, ज्ञानिनो वयं भूयास्म । अत्र 'स्युः' इत्यस्य पदकाले 'स्युरिति स्युः' इति द्विरुच्चारणं यावत्स्वयोग्यं तावतोऽपि ज्ञानस्याभिव्यक्त्यर्थं प्रार्थनाद्योतनार्थम् ।। ७ ।।

राजा, दीप्यमानः । वरुणः । अन्वेतवै, स्वाज्ञानुसारणै गत्यै, इणः तवैप्रत्ययः । उ, एव । (सदा) इति शेषः, सदैव गमनायेत्यर्थः । सूर्याय, सूर्यस्य । उरुम्, विस्तीर्णम् । पन्थाम्, पन्थानम् । चकार, सूर्यसंचाराय मूर्तान्तरप्रतिघातरहितमन्तरिक्षं चकार । हि । किं च, अपदे, पादहीनाय पुरुषाय । प्रतिधातवे, 'धावु गतिशुद्ध्योः' तवे(ङ्) प्रत्ययः, गन्तुम् । पादा, पादौ । अकः, अकरोत्, कृञः लङि विकरण लोपः । अपदे, गत्यर्थस्य पदेः सम्पदादित्वाद्भावे क्विप्, अज्ञाय । पादा, पादौ, पदेः घञ्, ज्ञानविज्ञाने । प्रतिधातवे, परमात्मानं गन्तुम् । अकः । इति वार्थः । उत, किं च । हृदयविधः, हृदयं बुद्धिः, तां विशेषेण धत्त इति धाञः विच्, आकारलोपः । चित्, अपि, बुद्धिधारकस्यापि शंकरस्य । अपवक्ता, दोषान्वक्ता, तदीयदोषाञ्ज्ञात्वा शिक्षयतीत्यभिप्रायः ।।८।।

(हे) राजन्, ईश । ते, तव । शतम्, अनन्तानि । सहस्रम् ।, पुनः प्रत्येकमनन्तधाभूतानि । भिषजः, रक्षकत्वगुणयोगाज्जगद्रक्षासाधनानि । (सन्ति) अतो मम उर्वी, महती । गभीरा, अगाधरूपा । सुमतिः, शोभनमतिः । ते, त्वद्विषय इति यावत् । सदा अस्तु किं च, निर्ऋतिम्, 'ऋ गतौ' निर्निषेधे, निर्गता ऋतिर्ज्ञानं यस्मादिति ज्ञानप्रतिरूपत्वहेतोर्निर्ऋत्याख्यां दुर्मतिम् । दूरे (एव) पराचैः, पराकृत्य, दुर्ज्ञानिजनं नरके क्षिप्त्वेति यावत् । बाधस्व, 'बाधृ(वि)लोडने' विलोडय । किं च, मया कृतम् । एनः चित्, पापं च । अस्मत्, मत्तः । प्र मुमुग्धि, मोचय, व्यत्ययेन श्लुविकरणम्, लोट् अन्तर्णीतणिच्च ।। ९ ।।

**(मन्त्रार्थमञ्जरी)**

(हे वरुण) ये अमीऋक्षाः, यान्यमून्यृक्षाणि, नक्षत्राणि। (तानि) उच्चा, उच्चैः, अन्तरिक्षे। निहितासः, निहितानि। (त्वयैव) इति शेषः। यच्च (तानि) नक्तम्, रात्रौ। ददृश्रे, ददृशिरे, 'इरयो रे' दृश्यानि। दिवा। कुह चित्, कदाचिदेव ईयुः, प्रतीयुः प्रतीयन्ते। रात्रौ सदा प्रतीयन्ते, दिवा तु कदाचिदेव इति। एतदपि (त्वयैव) इति भावः। वरुणस्य, परानन्दतनोर्विष्णोस्तवैव। व्रतानि, नक्षत्रस्थापनाद्युक्तकर्माणि। अदब्धानि, अप्रतिहतानि। किं च, चन्द्रमाः, चन्द्रः। विचाकशत्, 'चकाशृ(सृ)दीप्तौ' (काशृ दीप्तौ) दीप्तिश्च दर्शनम्।, समस्तं पश्यन्निति वा, वरुणस्य अदब्धानि व्रतानि पश्यन्निति वा, विचाकशत् दीप्यमानः सन्निति वा। नक्तम्। एति, याति। तदपि (त वयैव) इति। उपलक्षणम् चन्द्रादयः सर्वेऽपि त्वदाज्ञया त्वत्प्रेरिताः सन्त एव स्वस्वव्यापारान्कुर्वन्तीति॥ १०॥ इति चतुर्दशो वर्गः॥ १४॥

## रूपावतारः

न हि ते॥ वयमिति विशब्दस्य बहुवचने रूपमित्यभिप्रेत्याह। विशब्द इति। मनु अवबोधन इति। अस्मात् युप्रत्यये छान्दसे अनादेशाभावे मन्युमिति रूपम्। द्वेधा व्याख्यातीति। गङ्गादिनदीपरत्वेनैकं व्याख्यानम्। वायूत्पत्तिज्ञातृदेवपरत्वेनापरं व्याख्यानमिति द्रष्टव्यम्॥ ६॥

अबुध्ने राजा॥ नञः परनिपातादीति। आदिशब्देनानव्ययत्वं ग्राह्यम्। नीचीना इति। नीचशब्दात् सप्तम्यन्तात् तिष्ठतीत्यर्थे 'तद्धिताः' (४।१।७३) इति बहुवचनसूचिते खप्रत्यये खस्येनादेशे नीचीना इति रूपम्। अयं च बुध्नशब्दः अबुध्नशब्दान्तर्गतबुध्नशब्दात् भिन्न इत्यभिप्रेत्यार्थमाह। बुध्न अधोभाग इति। शेआदेश इति आमः ''सुपां सुलुक्....'' (७-१-३९)। इति शे इत्यादेश इत्यर्थः।॥ ७॥

उरुं हि राजा॥ धातव इति। 'धावृगतिशुद्ध्योरित्यस्मात्' 'तुमर्थे सेसेनस....' इति तवेन्प्रत्यये 'लोपो व्योर्वलि' (६-१-७६) इति वलोपे धातव इति रूपम्। विकरणेति। कृञो लङि तिपि विकरणलोपे कृञो गुणे अडागमे अकरिति रूपम्। आकारलोपश्छान्दस इति। अत्र छान्दस इति प्रक्षिप्तम्। विपूर्वात् धाञः विचि निष्पन्नात् विधाशब्दात् षष्ठचैकवचने ''आतो धातोः'' (६।४।१४०) इत्याकारलोपे सोमप इत्यादिवत् हृदयविध इति रूपसंभवेनाकारलोपस्य छान्दसत्वाभिधानायोगात्॥ ८॥

शतं ते॥ मुमुग्धीति। मुचःचुरादित्वेऽपि छान्दसे णिजभावे लोटः सिपः 'सेर्ह्यपिच्च' (३।४।८७) इति ह्यादेशे शपः श्लौ ''श्लौ'' (६।१।१०) इति द्विर्वचने 'हुझल्भ्योहेर्धिः' (६-४-१०१) इति धित्वे मुमुग्धीति रूपम्॥ ९॥

(रूपावतारः)

अमीये ॥ इरयोर इति । दृशेः झस्य ''लिटस्तझयोरेशिरेच्'' (३।४।८१) इति इरेजादेशो तस्य इत्यादेशः तस्य क्रादिनियमादनिटोऽपीडागमे सति पुनः इरे इति श्रवणं प्राप्तं तत्परिहार सेट्कस्यापि रेइत्यादेशस्य पुनः रे इत्यादेशः । ततश्च पुनरिडागमो न भवति । लिट्प्रयुक्तद्वित्वा ददृश इति रूपम् । ततश्च इरयोरे (६।४।७६) इति सूत्रस्य छन्दसि द्वयोरियो रे आदेशो भवतीत्य ज्ञेयः । (ददृश्रे) कर्तरि ल्युडिति । अनेन त्वदाज्ञाकरणा इत्येतस्य त्वदाज्ञायाः कर्तार इत्य ज्ञेयः ॥ १० ॥ १४ ॥

## पदार्थप्रकाशिका

नहि ते क्षत्रं न सहो न मन्युम् । हाने त्त्राणमिति । अनिष्टनिवारणानुकूलव्यापाराख्य गुणविशेषमित्यर्थः । अमी परेक्षा इति । अत एवासौ लोकपदेन परोक्षं स्वर्ग एव वाच्यः प्रसि इत्यवगन्तव्यम् । इत्यस्येदं रूपमिति । मनुधातोः यप्रत्यये सति मन्युरिति रूपमित्यर्थः । न मन्युशब्दस्य क्रौधार्थत्वाक्रोधं नापुरित्येवार्थः किं न स्यादित्यत आह । क्रोधस्येति । यद्यपि भगवत क्रोधो ज्ञानानन्दात्मकोऽस्ति । यथोक्तं बृहद्भाष्ये । क्रोधः क्षणात्मको यस्य चिदानन्दात्मकस्तथा अन्यक्रोधसमक्रोधः तस्य विष्णोः कथं भवेदिति । स च गुण एव तथापि प्रज्वलनात्मकस्य तमोगुणकार्यस्य क्रोधस्य भगवत्यभावेन तदपेक्षया गुणत्वाभावादित्युक्तमिति सम्प्रदायविदः ।

ननु मुक्ताः भगवदीयक्षतत्राणसंविदादिगुणवन्तो मा भवन्तु । स्वकीय क्षत्रादिमन्तस्तु भवन्त्येवेत्यतस्तात्पर्यमाह । त्वदीयेति । जीवे विद्यमानं त्वप्रयोजकमेवेति भावः । ननु मुक्तगुणानां भगवद्गुणप्रतिबिम्बत्वेन तत्सदृशत्वस्य तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् । 'परमतः सेतून् मानसम्बन्धव्यपदेशेभ्यः' इत्यादि सूत्रेणैतस्यैवानन्दस्यान्यानि मात्रामुपजीवन्ति इत्यादि श्रुत्या चसिद्धत्वेन त्वदीयक्षत्रादिसदृश- क्षत्रादिमन्तो मुक्ता न भवन्तीतिकथमुक्तमित्यत आह । प्रमाणबाधेति । पूर्णमितीति । गुणानां पूर्णत्वं नाम निःसीमत्वं ज्ञातव्यम् । प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यत इति वचनादिति भावः । तेन मुक्तगुणानामपि पूर्णत्वात् कथमेतदिति शंकानवकाशः । मुक्तसंविदादेर्भगवत्संविदादिसादृश्यंचार्थप्रकाशत्वादिमात्रेणैवेत्यवगन्तव्यम् । जीवन्मुक्ता इति । संसृतेरूत्पतन्त इत्यत्र भग्नलिङ्गदेहाः ये मुक्ताः ते न बाह्याः तेषां संसार तरणाख्योत्पतनस्य जनिमत्वेनेदानीमुत्पतन्त इति वर्तमानार्थकशब्दप्रयोगानुपपत्तेः । अतः इदानीमुत्पतन्तः उत्पतनमार्गे पतिताः । किंचिदुत्तीर्णाः किंचिन्नोत्तीर्णाः एतादृशाः दग्धपटायमानलिङ्गदेहाः ग्राह्याः तादृशाश्च जीवन्मुक्ताः एवेत्याशयेन जीवन्मुक्ता इत्युक्तमिति भावः ।

(पदार्थप्रकाशिका)

नापुरिति । त्वदीयक्षत्रादिसदृशक्षत्रादिकमिति शेषः । एवमुत्तरत्रापि नापुरित्यत्र शेषो द्रष्टव्यः । हेतुमत्तीति । प्रयोजकव्यापार इत्यर्थः । तमेव णिजर्थं दर्शयति । अन्यानिति । शिष्यभक्तानिति । शिष्यरूपान् भक्तान् शिष्यान् भक्तांश्चेति वेत्यर्थः । उद्गमयन्त इति । उपदेशादिनेति शेषः । आचार्य इति । अनपरोक्षज्ञानिनो जीवन्मुक्ताः ये न भवन्ति ते इत्यर्थः । व्याख्यात इति । देवा इत्यनेनेत्यर्थः। तद्विशेषेति । देवताविशेषेत्यर्थः । अबभिमानिदेवता इति । समस्तोदकाभिमानिदेवताभ्यः तत्तन्नदीजीवाः भिन्ना एवेति प्रमाणप्रमितमतोब्देवता गङ्गाद्या एवेति युक्तमिति द्रष्टव्यम् । वायुदेवस्येति । वाय्वाख्यस्य देवस्येत्यर्थः । वायुदेवस्येत्यनुवादेनेति । वातस्येति ऋक्पदस्य वायुदेवस्येत्यर्थक शब्देनानुवादो द्रष्टव्यः । वायोर्देवो वायुदेवः । तस्य विष्णोरित्यर्थः । नन्वस्मिन् पक्षे उत्पत्तिः कीदृशीत्यत आह । प्रादुर्भावमिति । इति वापीत्यत्रापिशब्दस्य व्यत्यासेन सम्बन्ध इत्याशयेनाह सुपर्णा इत्यपि वेति । विः पक्षिपरमात्मनोरित्यभिधानात् वयोऽतीतानागतवर्तमानाः । सुपर्णाः गरुडाः न जानन्तीत्यर्थः ॥ ६ ॥

अबुध्ने राजा वरुणो वनस्य । पूतदक्ष इति । पूताः दक्षा अनेनेति पूतदक्ष इतीरित इति पूतदक्षपदं प्राग्व्याख्यातम् । अत्र बुधधातोः क्विप् करणं कित्वेन गुणाप्राप्त्यर्थं । अन्यथाम् क्विबकचरणे गुणे सति बोधेति स्यादित्यवगन्तव्यम् । तत्प्रतिषेधो ज्ञानप्रतिषेधः । ज्ञानाभाव इति यावत् तथा चावगमार्थात् बुधधातोः क्विपि तस्य लोपे सति निष्पन्नो बुधशब्दो ज्ञानवाची । पश्चात्तत्प्रतिषेधार्थकनकारे बुध्नेति भवति । ननु बुध्नेत्ययुक्तम् । प्रतिषेधात्मकनञः पूर्वनिपातावश्यं भावेन नबुधेतिजाते पश्चान्नलोपे नञ् इति नञः तस्य लोपे अबुधेति स्यादित्यत आह । नञः परनिपातादीति । अत्रादिपदेन न लोपो नञ इति प्राप्तनलोपाभावो ग्राह्यः तथाच नबुधेत्यत्र नलोपाभावः छान्दसः आदौ द्रष्टव्यः । तर्हि नबुद्धेत्येव स्यादिति चेन्न । नञः परनिपाताङ्गीकारादिति पश्चाद्व्याख्येयम् । एवमव्याख्यायादौ नञः परनिपातमुक्त्वा पश्चान्नलोपाभाव इति व्याख्याने तु बुध्नेत्यत्र नलोपप्रसक्तिरेव नास्ति । उत्तरपदे तस्य स्मरणादिति द्रष्टव्यम् । तस्यापीति । बुध्नशब्दवाच्यज्ञानरूपप्रकाशप्रतिषेधस्यापीत्यर्थः । तथाच प्रतिषेधस्यापि प्रतिषेधाभावस्यैव स्थितिरिति अबुध्नशब्दवाच्यो ज्ञानरूपप्रकाश इत्यर्थः ।

सप्तमीति । अबुध्नेति सप्तमीत्यर्थः । भाष्येऽपि तसेः सार्वविभक्तिकत्वात् तृतीयार्थे तसिरित्यभिप्रेत्याह । प्रकाशतो ज्ञानेनेति । पचाद्यजिति । नन्दिग्रहपचादिभ्योल्युणिन्यच इति सूत्रेण वन्धातोः पचादिगणस्थत्वात् कर्तरि अच्प्रत्यये चकारलोपे वनेति रूपमित्यर्थः । कर्त्रर्थं दर्शयति । स्वं सम्भजत इति । उच्चैरित्यव्ययम् । उच्चमित्यर्थः । ननु दादान इति धातोः निष्पन्नस्य

(पदार्थप्रकाशिका)

ददत इत्यस्य बहुवचनतया वरुणो ददत इत्ययुक्तमत आह। ददान इति। तथाच नेदं दादान इत्यस्य रूपम्। किन्तु दददान इति धात्वन्तरस्यैव। अतस्तन्निष्पन्नस्य ददत इत्यस्यैक वचनत्वाद्वरुणो ददत इति युक्तमिति भावः। कथं ते निचीना इति। आद्येर्थे ते पुरुषाः मानुषाद्याः कथं निचीनाः नीचाः नीचस्थाः नीचस्थानत्वं तेषां कथमिति यावत्। द्वितीयेर्थे मानुषाद्याः कथं नीचीनाः नीचत्वं तेषां कथमिति यावदित्यर्थः। येषामित्यनूद्य तेषामिति व्याख्यानम्। बुध्न इत्यनूद्य अधोभाग इति व्याख्यानम्। तद्विवरणपरं भाष्यमित्याशयेनाह। सुरेभ्य इति। सुराधिष्ठितेभ्यो लोकेभ्योऽधोभागो नीचलोकोऽसौ यतोतस्तेषां नीचस्थानत्वं युक्तमिति भावः। अर्वाक्तन-प्रकारविवरणपरं भाष्यमित्याशयेनाह। गुणाः नीचाः इति। अतस्तेषां नीचत्वं युक्तमिति भावः। नीचगुणत्वेन नीचत्वमुपपाद्य प्रकारान्तरेण नीचत्वोपपादनपरं अप्रकाशोथवैषामिति भाष्यं व्याचष्टे। अथवेति। उक्तप्रकारेणेति। बुध अवगमने तत्प्रतिषेधो बुध्नमित्युक्तप्रकारेणेत्यर्थः। उपरिस्थुः उत्तमाः। तथा ऋष्याद्याः देवापेक्षया नीचाः। मानुषोत्तमापेक्षयोपरि तस्थुरेव देवाः ब्रह्मापेक्षया नीचाः। न ऋष्याद्यपेक्षया उपरितस्थुरित्यादि द्रष्टव्यम्। किं निरवधिकमेतदिति। किञ्चिदपेक्षया नीचा एवेत्यादिनोपपादितं जीवानां तारतम्यं कुत्राप्यपर्याप्तं किमित्यर्थः। एवं च ब्रह्मापि कस्माच्चिज्जीवान्नीचीनः कस्माच्चिदुपरि तस्या। इत्यादिरूपेण (अ) पर्यवसितमिति भावः। मूलभूत इति। अधिकारिवर्गे आदिभूतः इत्यर्थः। विरिञ्चादेति। तथाच अधिकार्युत्तमविरिंचपर्यन्तमेवायं जीवानां तारतम्यक्रम इत्यर्थः। तथाच तदपेक्षयाप्युत्तमो जीवो नास्तीति। तत्रायं जीवतारतम्यक्रमः पर्याप्त इति भावः।

नन्वस्माकमिति भाष्ये अस्मेतिकथमित्यत आह। शे आदेश इति। अस्मदः षष्ठीबहुवचनस्य सुपां सुलगित्यादिना शे इत्यादेशे शकारलोपे प्रातिपदिकान्तदकारलोपे अस्मे इति रूपमित्यर्थः। अभिप्रायमाह। ज्ञानिंन इति। प्रार्थनेति। स्युरित्यनेन क्रियत इत्यर्थः। उत्तरमाह। अत इति। भवंतिवेत्यनूद्य संत्येवेति व्याख्यानं ज्ञानादीनां स्वरूपत्वादिति भावः। अन्तर्निहिता इति। भवितुमर्हावा विद्यमाना वेत्यर्थः। पदकारणेति। पदद्रष्ट्रा शाकलेनेत्यर्थः। द्विरुच्चारणेनेति। द्विरुच्चारणोपेतेन स्युरित्यनेन क्रियमाणप्रार्थनेनेत्यर्थः। द्योतनायेति। तस्मादतो अधिकारीति व्याख्यानं युक्तमित्यर्थः।

तथाचायं ऋगर्थसङ्ग्रहः। पूतदक्षो वरुणो राजा अबुध्ने ज्ञानेन ज्ञानपूर्वं वनस्य स्वं सम्भजतः पुरुषस्योर्ध्वम् उच्चैरुच्चं स्तूपं स्थानं ददते। किं च ये नीचाः नीचस्थाः पुरुषास्तेपि तेन वरुणेन

(पदार्थप्रकाशिका)

सेवितेन निमित्तेन तत्प्रसादादुपरि तस्थुरूर्ध्वगाः स्वर्गगाः बभूवुः । ननु तेषां नीचीनत्वं कुत इत्यत आह । बुध्न येषामिति । तेषां स्वर्गं गमिष्यतां मानुषाद्यानां बुध्नः देवलोकापेक्षयाधोभागे नीचलोको भूरादिर्ह्यावास अतो नीचस्थानत्वेन नीचीना इत्यर्थः । यद्वा ये नीचीनाः नीचाः मानुषाद्याः तेपि वरुणस्य प्रसादादुपरि तस्थु मुक्तिगाः बभूवुः । ननु कुतस्ते मानुषाद्याः नीचाः इत्यत उक्तं बुध्न इति । येषां मानुषादीनां बुध्नः देवाद्यपेक्षया अर्वाक्तनप्रकाशः गुणाः नीचाः इत्यर्थः । अतो नीचगुणत्वेन तेषां नीचत्वमित्यर्थः । अथवा एषां मानुषाणां बुध्नो अप्रकाशोऽज्ञानमस्ति न तु देवानामतस्ते देवापेक्षया नीचाः इत्यर्थः । यद्वा समग्रतृतीयपादस्येत्थं योजना । अस्य वरुणस्याज्ञया य एव जीवाः किंचिदपेक्षया नीचीनाः । त एव किंचिदपेक्षया उपरि तस्थुः । किमेतत्कुत्राप्यपर्याप्तं नेत्याह । बुध्नयेषामिति । येषां जीवानां बुध्नो मूलभूतः कश्चिदस्ति । विरिंचस्तथाधिकारिवर्गे विरिंचस्यैव सर्वोपरिस्थितत्वेन तत्रायं जीवतारतम्यक्रः पर्याप्त इति भावः । तथाचैतादृशमहिम्नो वरुणस्य प्रसादादस्मे अस्माकम् अन्तर्हृदये केतवः ज्ञानानि नित्यं संनिहिताः संन्निहितानि स्युः । भूयासुर्ज्ञानिनो वयं भूयास्मेत्यर्थः । यद्वा ये केतवो अस्माकमन्तर्निहिताः भवितुमर्हाः विद्यमाना वा निगूढाः सन्ति । ते वरुणस्य प्रसादादतो अधिकं व्यक्ता स्युरित्यर्थः ।। ७ ।।

उरं हि राजा वरुणश्चकार । अर्थद्वयं क्रमेणोपपादयति । रंजरागे राजृदीप्ताविति । अनुपूर्वकादिण् गतावस्मात्तवैप्रत्ययनिष्पन्नस्यान्वेतवा इत्यस्यार्थमाह । स्वानुज्ञानुसारेणेति । ऋच्यभावात्कथं सदैवेति भाषितमित्यत आह । उशब्द इत्यादि । तादर्थ्ये इति । चतुर्थी तदर्थार्थेत्यादिसूत्रेणेत्यर्थः । तथाच सूर्यार्थमित्यर्थो द्रष्टव्यः । नन्वकरिति कथम् । कृञकरणे अस्मात् कर्तरि शपि अकारमात्रं विहाय तस्य लोपे तनादिकृञ्भ्यः उरिति उविकरणे रुकारस्य गुणेरपरत्वे कर्उ इति जाते तस्य गुणे करो इति जाते पश्चात्तिपि इकारपकारयोर्लोपे लुङ्लङ्लृङ् क्ष्वडुदात्त इति लङि धातोः पूर्वमडागमे अकरोदिति वक्तव्यत्वादित्यत आह । विकरणलोपादिति । उविकरणस्य लोपादित्यर्थः । तथाच कृ अस्माद्गुणे रपरत्वे अडागमे तिपस्तकारस्य हलड्याद्भ्य इति लोपे रेफस्य विसर्गे च सत्यकरिति रूपं युक्तमिति भावः । सम्पदादित्वादिति । पद अस्मात् सम्पदादिभ्यश्चेति सूत्रेणास्यापि तद्गणस्थत्वात् क्विप् प्रत्यये तस्य लोपे पदिति रूपम् । घञंत इति । पत् अस्मात् भावे घञ्प्रत्यये अकारं विहाय सर्वस्य लोपे ञित्वात् आदिवृद्धौ तकारस्य दकारे प्रत्ययाकारे च मिलिते सति पादेति भवति । तस्य द्विवचनं पादाविति । ऋच्यौकारस्य सुपांसुलुगित्याकारादेशो द्रष्टव्यः ।

ननु द्वितीयव्याख्याने विज्ञानस्यैकस्यैव पादशब्दार्थत्वेनोक्तत्वात् ऋचि पादाविति द्विवचनं कथमित्यत आह । ज्ञानंचेति शेष इति । विज्ञानमात्मयोग्यं स्यात् ज्ञानं साधारणं

(पदार्थप्रकाशिका)

स्मृतमित्युक्तप्रकारेण विज्ञानज्ञान शब्दार्थौ द्रष्टव्यः । आत्मानं प्रति गन्तुमिति । मुक्तो स्वप्राप्त्यर्थमित्यर्थः । ननु ज्ञान विज्ञानमित्ययमेवार्थः कस्मान्मुख्यवृत्योक्त इत्यत आह । माहात्मेति । प्रसिद्धपाददानापेक्षया ज्ञानदानस्य श्रेष्ठत्वादित्यर्थः । विशेषेण धत्त इति । सर्वज्ञ इत्यर्थः । विजिति । विपूर्वात् दुधाञ् धारणपोषणयोरिति धातोर्विप्रत्यये अकारलोपविधायकाभावेन छान्दसत्वाद्धात्वाकारलोपे हृदयविध् इति धकारान्तं प्रातिपदिकं तस्य षष्ठी हृदयविध इतीति द्रष्टव्यम् । यद्यप्यत्र धाधातोरुपरि क्विप्प्रत्ययमनीय कित्वाद्धात्वाकारलोपः सुखेन कर्तुं शक्यते तथापि विचमानीय आकारलोपः छान्दस इति वदतां टीकाकाराणाम् अभिप्रायविशेषोऽस्ति । तथाहि । क्विप्रत्ययकरणे अनुदात्तौ सु प्पिताविति सूत्रेण धकारे अनुदात्तस्वरापतेः । क्विपः पित्वात् । नचेष्टापत्तिः । धकारे स्वरितस्वरस्यैवाध्यापकैः पठ्यमानत्वादतो विचमानीयाकारलोपः छान्दस एवाश्रित इति सम्प्रदायविदः । बुद्धेर्धातुरिति । बुद्धिधारकस्य सर्वज्ञस्येत्यर्थः । परकीयदोषज्ञानाभावे तद्वत्कृत्वासम्भवात्तद्दोषज्ञानमेव कथम् ! ज्ञानेपीति तद्वत्कृत्वं कुतः । दौर्जन्यापत्तेः इत्याशंक्य क्रमेणोभयमप्युपपादयति । कथमित्यादिना । ज्ञानादित्येतच्छङ्करसाधारणमतो व्याचष्टे । सूक्ष्मेति । शंकरापेक्षयापीति शेषः । ननु परकीयदोषान् ज्ञात्वा वचने भगवतो दौर्जन्यं प्राप्तमत आह । अनेनेति । ज्ञानाच्छिक्षकत्वाच्चेति भाष्येणापवक्तेत्यत्र न दौर्जन्यमभिप्रेतं भगवतः । किन्नाम सूक्ष्मज्ञानं शिक्षकत्वं चेत्युक्तं भवतीत्यर्थः ॥ ८ ॥

शतं ते राजन् भिषजः सहस्रम् । ननु जगद्रक्षासाधनोपायविशेषाणां कथं भिषक्त्वमित्यतो गौण्या वृत्येत्याह । रक्षकत्वगुणेति । जगद्रक्षासाधनानीति । उपायजातानीति वा । कर्माणीति वा विशेष्यमध्याहार्यम् । सदास्त्विति । तथाच मम तद्विषये बुध्यनन्तरं रक्षासाधनोपायैर्मामपि रक्षेत्युक्तं भवति । किं चेत्यनन्तरं मम त्वदीयमत्यनन्तरमिति शेषः । कथमिति । ननु दुर्मतिलोडनं कथम् । तत्प्रेरकाणां दैत्यानां नरकपातेन दुर्मत्यभावेपि पूर्वार्जितपापेनैव तत्प्रवृत्तिः स्यादित्याशङ्कापरिहाराय चतुर्थपादः प्रवृत्त इत्याशयेनाह । किं च कृतमित्यादिना ॥ ९ ॥

अमीयऋक्षानिहिता सउच्चैरिति । उच्चस्थान इत्यर्थः । इरय इति । इरइत्यस्य षष्टी इरय इति । रे इत्ययमादेशो भवतीत्युणादिसूत्रार्थः । तथाच ददृशे इरे इत्यस्य रे इत्यादेशो ददृशिरे इतिरूपं युक्तमित्यर्थः । कदाचिदेवेति । सूर्योपरागसमये मात्रमित्यर्थः । महारिष्टकाल इत्यप्यर्थ इत्यप्याहुः । इत्यादीनीति । अन्तरिक्षे नक्षत्रस्थापनादीनीत्यर्थः । चकाशृदौप्तावित्यत्र चेत्यस्य दीर्घः केत्यस्य ह्रस्वश्च व्यत्ययेन द्रष्टव्यः । भाष्यं संवादयति । पश्यन्निति । यातीत्यनन्तरम् इति शेषः । पूर्वमिति । योजनायां समस्तमित्यध्याहारं वाक्यभेदरूपदोषं च मत्वा पक्षान्तरमाह । वरुणस्येति

(पदार्थप्रकाशिका)

विचकाशदिति। भगवत्कर्माणि पश्यन्नित्यर्थः। विचकाशदित्यनन्तरं चन्द्रमानित्यमेतीति यत्तदपि त्वयैवेति पूरणीयम्। अर्थान्तरमिति। वाक्यभेदमङ्गीकृत्यैवार्थान्तरमुच्यत इत्यर्थः। तदेव दर्शयति। चन्द्रमा इति ऋचि उक्तरीत्या नित्यं दीप्तिदर्शनमित्यभिप्रेत्य प्रवृत्तं भाष्यं संवादयति। दृश्यमान इति। सर्वैरिति शेषः। एतीति यत्। तदपीति। दीप्यमानत्वेन गमनमपीत्यर्थः। योजनान्तरमिति। वाक्यभेदमङ्गीकृत्यैवेत्यर्थः। तदेव दर्शयति। योविचाकशदिति। सत्वयैवेति। अनेन चन्द्रगमनमात्रमेव भगवत्प्रेरितमित्युच्यते। नतु दीप्यमानप्रकारोपेतमिति। अत्र विचाकशदित्युक्तेः स्वरूपकथनमात्रपरत्वादन्तः पूर्वोत्तरयोजनयोरर्थभेद इति द्रष्टव्यः। ननु कृञ् करण अस्मात् ल्युडि तस्यानादेशे नस्य णत्वे गुणे च सति निष्पन्नः करणशब्दः। ल्युट् च ल्युड्भावे करणाधिकरणयोश्चेति भावकरणाधिकरणेषु विहितो न तु कर्तरि। अतस्त्वदाज्ञाकरणास्त्वदाज्ञाकर्तार इत्येतत्कथमुपपद्यत इत्यत आह। कृत्यल्युट इति। कृत्यल्युटश्च बहुलं भवतीत्यर्थः। एवंच बहुलग्रहणात् कर्तर्यपि ल्युड्युक्त इति भावः। अत एवास्वरसादाह। व्यधिकरणोवेति। तथाच त्वदाज्ञायाः करणं येषां ते त्वदाज्ञाकरणा इति व्यधिकरणो बहुव्रीहिरित्यर्थः। अस्मिन् पक्षे भाव एव ल्युडभिप्रेत इत्यवगन्तव्यम्॥ १०,१४॥

## पदार्थदीपिका

वरुणदेवता इति। तं सवितो वाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोधावेति स वरुणं राजनिमुपससारात उत्तराभिरेकत्रिंशतेति ब्राह्मणवाक्यादिति भावः॥ त्राणमिति॥ त्रैङ् पालन इत्यस्मात् आदेच उपदेशेऽशिति इति कृतात्वादातोऽनुपसर्गे क इति कप्रत्यये कित्वादातो लोप इटि चेत्याकारलोपे त्रशब्दनिष्पत्तिरिति भावः। वयश्चनेति श्रौतपदद्वयं विशिष्टा अपीति भाष्येण संवादयितुमाह॥ विशब्दा इत्यादिना॥ आपुरिति॥ आप्लृ व्याप्तौ। लिटि उसि द्विर्भाव हलादिशेषौ। अत आदेरित्यात्वमिति भावः। तथा मन्युं त्वदीयं कोपमपि न प्रापुरिति वेदापव्याख्यां प्रत्याख्याति॥ क्रोधस्येति॥ पतयन्त इति॥ पत गतौ चुरादिरदन्तः। लटः शत्रादेशः। शप्। गुणायादेशाविति भावः। पतयन्त इति श्रौतपदस्य उत्पतन्त इति भाष्यपदेन विसंवादं परिहरति॥ स्वार्थे णिजिति॥ सति गत्यन्तरे स्वार्थिकत्वाश्रयणमनुचितमिति भावेन पतयन्तोऽन्यानिति पक्षान्तरमुक्तमित्याह॥ यद्वेति॥ चरन्तीति॥ वा च्छन्दसीति पूर्वसवर्णदीर्घ इति भावः। वायुदेवस्य विष्णोरिति समानाधिकरणे षष्ठ्यौ इति भ्रान्तिं परिहरति॥ विष्णोरिति पञ्चमीति॥ उत्पत्तिपर्यायोऽयमिति॥ तत्पर्यायेषु गणनादित्यर्थः। ततश्चोत्पत्तिमिति युक्तं व्याख्यानमिति भावः

(पदार्थदीपिका)

।। मिनन्तीति । मीञ् हिंसायाम् । क्र्यादिभ्यः श्ना । श्नाभ्यस्तयोरात इत्यकारलोपः । मिनातेर्निगम इति ह्रस्वः । अनेकार्थत्वाद्धातूनां ज्ञानार्थत्वमिति भावः ।। ६ ।।

क्विबिति ।। सम्पदादित्वाद्भावे क्विबित्यर्थः ।। तत्प्रतिषेध इति ।। न बुध् बुध्नमित्यर्थः । नन्वेवं नञिति समासशास्त्रे प्रथमा निर्दिष्टत्वान्नञः पूर्वनिपातेन भवितव्यं, तथा च नबुध् इत्येव स्यात् बुध्नमिति तु कथमित्यत आह ।। नञ इति ।। सर्वे विधयच्छन्दसि विकल्पन्त इति वचनात् नञः परनिपात इति भावः । परनिपातनादीत्यादिपदेन भाष्यभावाभावस्य परामर्शः । न विद्यते बुध्नो मूलं यस्येति बहुव्रीहि पक्षे नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वसम्भवेपि उक्तसमासे तत्पुरुषे तुल्यार्थेत्यव्ययपूर्वपदप्रकृतिस्वरत्वविधानात् उत्तरपदान्तोदात्तत्वानुपपत्तेरबुध्न इत्यत्राव्ययपूर्वपदस्वरव्यत्ययेन तदुत्तरपदान्तोदात्तत्वम् । तस्याप्यादिपदेन सङ्ग्रह इत्यवधेयम् । ।। पचाद्यजिति ।। वन इति ।। कर्तर्यच् प्रत्यय इति भावः ।। दद दान इति ।। भौवादिकोऽयमिति ध्येयम् ।। स्थुरिति ।। गातिस्थेत्यादिना सिचो लुक् । आत इति झेर्जुसादेशः । उस्यपदान्तादिति पररूपत्वम् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडागमाभाव इति भावः ।। शे. आदेश इति ।। सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सूत्रेणेति शेषः ।। स्युरिति ।। अस्तेर्लिङि श्नसोरल्लोप इत्यल्लोप इति भावः ।। ७ ।।

राजेति ।। कन् प्रत्ययान्तमेतत् ।। अन्वेतवा इति ।। अनुपूर्वादेतेः तुमर्थे सेसेनिति तवेन् प्रत्यय इति भावः ।। सूर्याय सूर्यस्येति ।। षष्ठ्यर्थे सूर्यायेति चतुर्थीत्यर्थः ।। पन्थामिति ।। पथिमथ्यृभुक्षामादिति द्वितीयायामपि व्यत्ययेनात्वमिति भावः । धातवः इति ।। धावुगति शुध्योरित्यस्मात् तुमर्थेसे सेनिति सूत्रेण तवेन प्रत्त्ययः । धात्वन्तवकारलोपश्चेति भावः ।

।। अकरिति ।। करोतेश्छन्दसि लुङ्लङ्लिट इति लोडर्थे लिङ् । तस्य तिप् । मन्त्रेघसेत्यादिना च्लेर्लुक् । गुणः रपरत्वम् । हल्ङ्याभ्य इति तिलोपः । अडागमश्चेति भावः ।। विकरणलोपादिति ।। तनादिकृञ्भ्य उरिति लक्षणप्राप्तस्य उविकरणस्य लोपादित्यर्थः । ।। घञन्त इति ।। ञित्वादादिवृद्धिरिति भावः ।। विजिति ।। आतो मनिन् क्वनिब्वनिपश्च इति सूत्रेण चकारात् विजित्यर्थः । तर्हि हृदयविधा इति हाहा इत्यादिवत् षष्ठ्येकवचनं स्यात् हृदयविध इति तु कथमित्यत आह ।। अकारलोप इति ।। आतो धातोरिति सूत्रेणेति शेषः । ततश्च धात्वाकारत्वेनातो धातोरिति विहिताल्लोपाप्रसक्त्या हाहा इत्येव षष्ठ्येकवचनत्वेऽपि धा इति धात्वकारत्वेनाल्लोपे सोमप इत्यादिवत् हृदयविध इति षष्ठ्येकवचनं युक्तमिति भावः ।। दोषानिति ।। अपवक्तेति तृन्योगे षष्ठ्या असंभवादिति भावः ।। ८ ।।

(पदार्थदीपिका)

सुमतिष्ट इति ।। अत्र संहितायां विसर्जनीय सकारस्य युष्मत्तत्तक्षुष्वन्तः पादमिति षत्वमिति ज्ञेयम् ।। प्रमुमुग्धीति ।। मुच्लृमोक्षणे । बहुलं छन्दसिति श्लुः । द्विर्भावः । हलादिः शेषः । हुझल्भ्यो हेर्धिः । तस्यापित्वेन ङित्वात् गुणाभावः । चोः कुरिति कुत्वमिति भावः ।। ९ ।।

नक्षत्राणीति ।। ऋक्षास्तृभिरिति नक्षत्राणीति यास्केनोक्तत्वात् ऋक्षशब्दो नक्षत्रवाचीति भावः ।। निहितास इति ।। आज्जसेरसुगिति भावः ।। ददृश्रे इति ।। दृशेर्लिटि इरयोरे इति रे आदेश इति भावः ।। इरयोर इति ।। अत्र इरयोः रे इति पदच्छेदः । रे शब्दस्य रेटां धातूनामिटि कृते पुना रेभावः क्रियते । तदर्थं च इरयोरिति द्विवचननिर्देशः । इरे च इरे च इरयौ । तयोरिरयोः । तत्रैकः लिटस्तझयोरेश् इरेचिति लक्षणप्राप्तःप्रसिद्धः । अपरः सेह्वोरेप्रत्ययस्तयोरे इत्ययमादेशो भवतीति सूत्रार्थः ।। कुहेति ।। वाह च छन्दसीति किं शब्दात् उत्तरस्य त्रलो हादेशः । कुतिहोरिति किं शब्दस्य कु आदेश इति भावः । विचाकशद्दीप्यमान इति ।। कशेः दीप्त्यर्थात् यङ्लुङ् तात् शतृप्रत्यय इति भावः । काशतेरेव व्यत्ययेनोपधाह्रस्वत्वमित्याहुः । ।। कर्तरि ल्युडिति ।। कुर्वन्तीति करणाः इति करोतेः कर्तरि ल्युटि योरनादेशे गुणे रपरत्वे च करणशब्दनिष्पत्तिरिति भावः । ल्युड्भावे करणाधिकरणयोश्चेति करणादविव कर्तरि ल्युडननुशासनात् कथं कर्तरि ल्युडित्यत आह ।। कृत्येति ।। सति गत्यन्तरे बाहुलकाश्रयणमनुचितमिति पक्षान्तरमाह ।। व्यधिकरण इति ।। अस्मिंश्च पक्षे कृतिः करणमिति भाव एव ल्युडिति हृदयम् । त्वदाज्ञायाः करणं येषामिति व्यधिकरणो बहुव्रीहिः गमकत्वादिति पूरणीयम् । तेन न कश्चित् क्षुद्रोपद्रवः ।। १० ।।

## टीकाविवृतिः

नहि ते ।। हानेस्त्राणमिति ।। अनिष्टपरिहारकरणमित्यर्थः ।। विशब्द इति ।। विर्लये च विशेषे चेत्येकाक्षररत्नमालोक्तेर्विशब्दो विशेषवाची । सोस्यास्तीत्यर्थे प्राप्तमतुपो गुणवचनेभ्यो मतुपो लुगिति वचनाल्लुकि विशब्दो विशिष्टार्थः । जसि वय इति रूपमिति भावः । अमी इत्यस्य व्याख्यानं परोक्षा इति । मुक्तिगा इति तु तात्पर्यार्थः ।। सहो बलमिति ।। शूषं सह इति बलनामसु पाठादित्यर्थः । मन्युशब्दस्य क्रोधनामसु पाठाद्रूढार्थं विहाय कथं योगार्थग्रहणमित्यत आह ।। क्रोधस्येति ।। अतो विष्णावसंभवादग्रहणमित्यर्थः । अन्यस्वरूपभूतगुणानामन्येन प्राप्तुमशक्यत्वा-द्विष्णौ को विशेष इत्यत आह ।। त्वदीयेति ।। तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदित्युक्तेर्विष्णु-गुणसदृश- गुणवत्त्वात्कथं निषेध इत्यत आह ।। प्रमाणेति ।। पूर्णमित्युक्त्याविष्णुगुण-सदृशपूर्णगुणनिषेध एव न तु यथाकथंचित्तद्गुणसदृशगुणनिषेध इति भावः । मुक्तानां

(टीकाविवृतिः)

क्षत्रत्वाद्यभावेपि जीवन्मुक्तादीना क्षत्रत्वादिकं भविष्यतीत्यत आह ।। किंचेति ।। स्वार्थ इति ।। बहुलमेतन्निदर्शनमित्युक्तेर्धात्वन्तरादपि स्वार्थे णिजिति भावः । भाष्ये विशेष्यानुक्तेराह ।। जीवन्मुक्ता इति ।। अपरोक्षज्ञानिन इत्यर्थः ।। शिष्यभक्तानिति ।। शिष्यांश्च भक्तांश्चेति द्वन्द्वः ।। उद्गमयन्त इति ।। उन्मोचयन्त इत्यर्थः ।। अनिमिषमिति ।। निमिषो निमेषः (कालविशेषः । तद्भिन्नःकालोऽनिमिषः ।) पक्ष्मनिमीलनन्तदभावोनिमिषन्तद्यथा भवति तथा सदेति यावत् । कालाध्वनोरिति द्वितीया । शुभानीति योग्याध्याहारः ।। आपो वा इति ।। सर्वा देवताः आपो वै अप्शब्दवाच्याःखल्विति श्रुत्यर्थः ।। द्वेधेति ।। अब्देवता रमाद्या इत्येकम् । स्वकर्मनिर्मिताब्देहाःगङ्गाद्या इति द्वितीयं व्याख्यानं ज्ञेयम् ।। विष्णोरिति ।। भाष्ये वा तस्योत्पत्तिःकस्मात्पुरुषादित्याशङ्कावारणाय विष्णोरिति शेषोक्तिर्बोध्या ।। उत्पत्तिपर्यायोऽयमिति ।। अस्यादभावे स्वल्पार्थे इति विश्वोक्तेःस्वल्पार्थककारोपपदाद्भवतेर्भावे औणादिककप्रत्यये निष्पन्नाभ्व शब्दस्याल्पकालसत्तार्थकत्वात्तस्य चोत्पत्त्यनतिरेकादिति भावः ।। अनुवादेनेति ।। जातस्येति श्रौतपदस्यार्थानुवादेनेत्यर्थः ।। वय इतीति ।। विहगे गगने च विरित्येकाक्षर-रत्नमालोक्तेरिति भावः ।। ६ ।।

अबुध्ने राजा ।। पूतदक्ष इति ।। पूतःपवित्रीकृतो दक्षो यजमानो येन स तथोक्त इत्यर्थः ।। किबिति ।। सपदादित्वाद्भाव इति शेषः । नञो बुध्शब्देन तत्पुरुषसमासे नञ उपसर्जनत्वात्पूर्वनिपाते नलोपे च अबुधिति भाव्यं न तु बुध्नमिति परनिपाते वा नङोऽव्यत्ययत्वेनालिङ्गत्वाद्विशिष्ट- स्याप्यलिङ्गत्वेन भाव्यं न तु नपुंसकत्वमित्यत आह ।। नञः परनिपातादीति ।। तस्यापीति ।। बुधःज्ञानस्याभावःबुध्नम् । तस्याप्यभावोऽबुध्नमतिशयित ज्ञानमित्यर्थः । अबुध्ने इत्यस्य व्याख्यानं प्रकाशत इति । तद्व्याचष्टे ।। ज्ञानेनेति ।। साहित्यार्थे इयं तृतीयेति भावेनाह ।। ज्ञानपूर्वमिति ।। वनस्येति षष्ठी संप्रदानत्वाविवक्षया शेषत्वविवक्षया ज्ञेयेति भावेनाह ।। सेवमानायेति ।। दाञःश्लुविकरणस्य ग्रहणे ददते इति बहुवचनत्वाद्वरुणेनैकेन कर्त्रानन्वितं स्यादत आह।। दद दाने इति ।। नीचस्था इति ।। नीचस्थाने मर्त्यलोकादौ स्थिता इत्यर्थः । अनेन नीचशब्दाद्भवार्थे तद्धिता इति बहुवचनात्खप्रत्यय इत्युक्तं भवति ।। यद्वेति ।। अस्मिन्पक्षे स्वार्थे खो ज्ञेयः ।। अर्थद्वये कथं ते नीचीना इति ।। एतावानेव शङ्काग्रन्थः । एतदुत्तरत्वेन बुध्न एषामित्येतद्योजयति ।। तत्राद्ये एषान्तेषामिति ।। एषामिति श्रौतपदस्य प्रतिपदन्तेषामिति भाष्ये तद्व्याख्यानं स्वर्गं गमिष्यतामिति । येषामिति पाठे तु तेषामिति भाष्योक्तेर्यच्छब्दाध्याहारोयमिति बोध्यम् ।। सुरेभ्यो नीचलोक इति ।। सुरेभ्यः सुरलोकात्स्वर्गान्नीचलोको हि यस्मादावासो निवासस्थानं

**(टीकाविवृतिः)**

अतःस्वर्गस्थापेक्षया भूस्था नीचीना इत्यर्थः । उपरीत्यनेन लभ्योयमर्थः । बुध्नशब्दस्य तात्पर्यार्थपरं भाष्यमित्याशयेन स्वयमर्थं वदन्भाष्यमनुवदति ।। अधस्तनप्रकारो गुणा नीचा इति ।। स्वरूपभूता आनंदादयो गुणाः यतो देवेभ्यः स्वल्पा इत्यर्थः ।। उक्तप्रकारेणेति ।। बुधो ज्ञानस्य प्रतिषेधो बुध्नमित्युक्तप्रकारेणेत्यर्थः । नीचीना स्थुरिति पादमुप- युक्ताध्याहारेण योजयन्भाष्यं च सङ्गमयति ।। अस्येति ।। वरुणेनेतीति ।। तेनेत्यनुवृत्तस्य व्याख्यानमेतत् ।। शे आदेश इति ।। अस्माच्छब्दात्परस्य षष्ठीबहुवचनस्य सुपां सुलगिति शे इत्यादेशे शेषे लोप इति टिलोपे अस्मे इति रूपमिति भावः ।। ज्ञानानीति ।। केतःकेतुरिति प्रज्ञानामसु पाठादिति भावः ।। तत्कथं तत्प्रार्थनेति ।। श्रुतौ केतवःस्युरिति प्रार्थनायां लिङ्प्रयोगात् । भाष्ये भूयासुरित्याशीर्लिङ्प्रयोगस्तु स्युरिति श्रौतप्रयोगस्य प्रार्थनालिङ्त्वद्योतनार्थ इति भावः । एतच्छंकापरिहारकत्वेनातोधिका- नीति भाष्यं व्याचष्टे ।। अत इति ।। शङ्कते ।। तर्हीति ।। ये केतव इति ।। अस्य भवन्ति वेति भाष्यार्थेन संत्येवेत्यनेनान्वयो बोध्यः । यदस्मद्योग्यं ज्ञानं स्वरूपत्वात्सदास्त्येव तद्व्यक्तं स्यादित्याशयः ।। अधिकार्थ इति ।। आधिक्येधिकमिति सूत्रादित्यर्थः ।। ७ ।।

उरुं हि ।। रञ्जनादित्यस्य मंजिष्ठादिरंगार्थकत्वभ्रान्तिनिरासायाह ।। अनुरागजननादिति ।। भक्तानां स्वस्मिन्स्नेहजननादित्यर्थः ।। रंजराग इति ।। अस्मात्कनिन्युवृषितक्षिराजीत्यनेन कनिन्प्रत्यय संनियोगेन नलोपोपधादीर्घनिपातनाद्राजेति रूपमिति भावः । निपातनाश्रयणारुच्या भाष्ये राजनाद्वेति पक्षान्तरमुक्तम् । तत्र धातुमाह ।। राजृदीप्ताविति ।। अन्वेतवा इत्यत्रानु- पूर्वादिणस्तुमर्थे सेसेनस इति तवैप्रत्यय इति भावेनाह ।। स्वाज्ञानुसारेण गत्या इति ।। सदैवेति भाष्योक्तं घटयति ।। उशब्द इति ।। सूर्यायेत्यत्र व्यत्यय इत्याशयेनाह ।। सूर्यस्येति ।। पंथामिति ।। पथिन्शब्दस्य द्वितीयैकवचनेपि पथिमथ्यृभुक्षामादिति सूत्रेण सौ परतो विधीयमाने आकारान्तादेशे छान्दसत्वाज्जाते इतोत्सर्वनामस्थाने इतीकारस्यादादेशे थोंथ इत्यंथादेशे अमि पूर्व इति पूर्वरूपत्वमिति भावः ।। धावु गतिशुद्ध्योरिति ।। अस्माद्धातोःतुमर्थे इति तवेन्प्रत्यये प्रतिशब्देन गतिसमासे समासान्तोदात्तत्वापवादेन तत्पुरुषे तुल्यार्थे इत्यनेनाव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते तदपवादस्य गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरस्यापवादे नतादौ च नितिकृत्यता- वित्यनेन तुशब्दभिन्नेतकारादिनित्प्रत्ययेऽनन्तर- गतेः प्रकृतिस्वरविधानात्प्रतिशब्दस्य निपाता आद्युदात्ता इत्याद्युदात्तत्वमितिभावः । सूत्रार्थो वर्ण्यते यत्र पदैःसूत्रानुकारिभिः ।। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरित्युक्तेर्यथासूत्रभाष्ये सूत्रानुकारिपदप्रयोगःकर्तव्यस्तथा वेदभाष्ये वेदानुकारिपदप्रयोगः कर्तव्य इति भावेन गन्तवे इति गमधातोस्तवेप्रत्यय प्रयोगो भाष्ये कृत इति

(टीकाविवृतिः)

भावेनाह ।। गन्तवे गन्तुमिति ।। विकरणलोपादिति ।। कृञो लङि अडागमे तनादिकृञ्भ्य उरिति विहितस्योप्रत्ययस्याप्यदिप्रभृतिभ्यः शपःबहुलं छन्दसीत्यत्र बहुलग्रहणाल्लोपे सार्वधातुकलक्षणे गुणे हल्ङ्याद्यादिसूत्रेण तिपोलोपे रेफस्य विसर्ग इति भावः । पादशब्दं द्विवचनान्तमनूद्य तस्य भाष्योक्तं विज्ञानार्थकत्वं घटयन् द्विवचनान्तत्वाच्छेषं पूरयति ।। पदाविति ।। घञंतःपादशब्दो भावे इति शेषः । कथमंघ्रिदानरूपार्थापेक्षयाज्ञानादिदानार्थस्यमुख्यार्थत्वं पादशब्दस्यांघ्रौ रूढत्वात् ज्ञाने यौगिकत्वादित्यत आह ।। माहात्म्यातिशयस्येति ।। इतस्ततो गन्तुं पाददानापेक्षया भगवत्प्राप्तये ज्ञानविज्ञानदानस्याधिक्यादिति भावः । हृदयविध इति श्रौतपदस्य भाष्यस्थं बुद्धेर्धातुरिति व्याख्यानं घटयति ।। हृदयं बुद्धिरिति ।। आतो मनिन्क्वनिप्वनिपश्चेत्यत्र चकारेण विच्ग्रहणात् धाञो विचि ङसि । आतो धातोरित्यालोपः । तथाच बुद्धेर्ज्ञानस्य धातुर्धारकस्य परोपदेशकस्य वेत्यर्थः ।। कथमिति ।। विष्णोःस्वभक्तेषु स्नेहाद्द्वेषिवत्कथं दोषवक्तृत्वमित्यर्थः । एतच्छंकापरिहाराय ज्ञानाच्छिक्षकत्वादित्यनेन विवक्षितमपवक्तेत्यस्याभिप्रायमाह ।। अनेनेति ।। ८ ।।

शतन्ते ।। शतसहस्रशब्दयोर्बहुनामसु पाठात्संख्याविशेषार्थकत्वेज्ञापकाभावादनन्तार्थत्वमित्याशयेन प्रवृत्तं भाष्यं व्याचष्टे ।। शतमनन्तानीति ।। भिषक्शब्दस्य वैद्यवाचकस्य कथं जगद्रक्षासाधनत्वमित्यत आह ।। रक्षकत्वगुणेति ।। बलानीति शेषः ।। वैद्यस्य रोगाद्रक्षकत्वेन बलानां च सर्वप्रकारेण जगद्रक्षकत्वाद्बलेषुभिषक् शब्दस्य गौणो व्यवहार इति भावः ।। अत इति ।। तादृशबलयुक्तत्वादित्यर्थः । रक्षणस्येष्टेष्टसाधनदानेनानिष्टपरिहारेणेति द्विविधत्वाज्ज्ञानादि प्रार्थनमिति भावः ।। निर्निषेधे इति ।। निर्निःशेषनिषेधयोरिति विश्वोक्तेरिति भावः ।। तत्प्रतिरूपत्वहेतोरिति ।। सम्यग्ज्ञानविरोधित्वाद्दुर्मतेरित्यर्थः ।। बाधृ लोटने इति ।। लोटनम् । प्रतिघातः लोडने इति पाठेप्ययमेवार्थः । तथाच बाधस्वेत्यस्य नाशयेत्यर्थ उक्तो भवति ।। कथमिति ।। दुर्मतिबोधकानां दुर्ज्ञानिनां सत्वात्कथं दुर्मतिनाश इत्यर्थः । एतच्छंकोत्तरत्वेन कर्माध्याहृत्य पराचैरित्येतद्व्याख्यानं भाष्योक्तमनुवदति ।। पराकृत्येति ।। उदिचेर्डैसिः । नौ दीर्घश्चेत्युणादिसूत्रे नौचेत्यन्वयाच्च शब्दस्यानुक्तसमुच्चयार्थत्वात्परशब्दे उपपदेपि चिनोतेर्डैसि प्रत्यये उपपददीर्घे च पराचैरिति रूपमिति भावः । स्वर्गान्निरस्येत्येतद्भाष्यन्तस्यैवा- भिप्रायान्तरकथनपरमिति भावेनाह ।। स्वर्गादिस्थानात् । शश्वदेवेति ।। अस्मन्मत्त इति ।। श्रुतौ गुरावात्मनि बहुवचनमित्युक्तेरस्मदित्युक्तं वस्तुतः शुनःशेपस्यैकत्वाद्भाष्ये मत्त इति प्रतिपदमुक्तमिति भावः ।। प्रमुमुग्धीति ।। मुच प्रमोचने मोदने चेत्यतो गणकार्यमनित्यमिति परिभाषया चुरादित्वात्प्राप्तणिचोऽभावाल्लोटि सिपि बहुलंछन्दसीति शपः श्लौ द्वित्वे हुझल्भ्य इति हेर्धित्वे कुत्वे जस्त्वमिति भावः ।। ९ ।।

(टीकाविवृतिः)

अमी ये ।। श्रुतौ अमी य ऋक्षा निहितास इत्येतेषु पुंस्त्वं छान्दसम् । भाष्ये तु अमी इति श्रौतानुवादरूपमित्याशयेनाह ।। यानीति ।। उच्चेति ।। उच्चैःशब्दात्परस्याःसप्तम्याः अव्ययादाप्सुप इत्यस्य संज्ञापूर्वकत्वेनानित्यत्वाल्लुगभावे सुपां सुलुगिति डादेश इति भावः ।। नक्तमिति ।। कालाध्वनोरत्यन्तसंयोगे द्वितीयेति भावेनाह ।। नक्तं रात्राविति ।। इरयोरे इति ।। सेड्धातोर्लिटो झस्य इरेजादेशरेइत्यस्येडागमे इरे इति यद्रूपं यच्च झस्येरेजादेशस्तयोःरे इत्यादेशःस्यादिति पाणिनिसूत्रार्थः । ददृश्रे इति कर्मणि प्रयोग इत्याशयेनाह ।। दृश्यानीति ।। कुहचिदिति ।। किंशब्दात्सप्तम्यन्ताद्वाह च छन्दसीति ह्प्रत्यये कुतिहोरिति कादेश इति भावः । छन्दसि लुङ्लृङ्लिट इति धातुसंबन्धे कालसामान्ये लुङादि विधानादत्रापि ददृश्रे इति धातुसंबन्धादिणो लिडिति भावेनाह ।। ईयुःप्रतीयुःप्रतीयन्ते इति ।। कुहचिद्दिवेयुरित्यस्य तात्पर्यमाह ।। यच्च दिवेति ।। कदाचित्खग्राससूर्यग्रहणादिकाले इत्यर्थः ।। तदपीति ।। कदाचित्केषांचिन्नक्षत्राणां दिवा प्रत्ययनन्तत्त्वयैव कृतमित्यर्थः । वरुणशब्दे वरशब्दस्योत्तमार्थत्वं ण शब्दस्य निर्वृतिवाचित्वं मनसि निधायाह ।। परानन्दतनोरिति ।। इत्यादीनीति ।। अन्तरिक्षे ऋक्षस्थापनादीनीत्यर्थः ।। अदब्धानीति ।। दंभुदंभ इत्यतःक्तप्रत्यये उदित्वादुदितोवेतिक्त्वायां विकल्पितेट्त्वाद्यस्य विभाषेतीडभावे झषस्तथोर्धोऽध इति तस्य धत्वे भकारस्य जस्त्वे नञ्समास इति भावः । दभ्नोतेर्वधकर्मसु पाठमाश्रित्याह ।। अप्रतिहतानीति ।। चकाशृदीप्ताविति ।। अस्माल्लटःशत्रादेश इति भावः । एवं व्याख्याने समस्तमित्यध्याहाराद्वाक्यभेदप्राप्तेश्चारुच्याह ।। वरुणस्येति ।। अर्थान्तरमिति ।। चकाशेःकर्मार्थे लटि व्यत्ययेन शत्रादेशे यगभावे चकाशदिति रूपमिति भावः ।। तदपीति ।। चन्द्रमसो नित्यं दृश्यमानत्वेन गमनमित्यर्थः ।। योविचाकशदिति ।। पूर्वयोजनायां विचाकशदिति विशिष्टगमनस्य भगवन्नियतत्वमुक्तं अस्यां योजनायान्तु गमनमात्रस्येति भेदः । ल्युटो भावे करणाधिकरणयोरनुशासनाद्देवास्त्वदाज्ञाकरण इति कथं कर्तरि प्रयोग इत्यत आह ।। त्वदाज्ञाया इति ।। बहुलग्रहणात् अर्थान्तरेऽपिकृत्यल्युटां विधानाश्रयणारुच्या भावे ल्युटमाश्रित्य पक्षान्तरमाह ।। व्यधिकरणो वेति ।। त्वदाज्ञायाःकरणं कृतिर्येष्विति विग्रहः ।। १० ।। १४ ।।

**ऋक्संहिता पदपाठसहिता** (सू-२४, व-३)

**(२६४) तत्त्वा॑यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒विर्भिः॑ ।।**
**अहे॑ळमानो वरुणे॒ह बो॒ध्युरु॑शंस॒ मा न॒आयुः॒ प्र मो॑षीः ।। ११ ।।**

(ऋक्संहिता पदपाठसहिता)

(प०) तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । तत् । आ । शास्ते । यजमानः । हविःऽभिः ॥ अहेळमानः । वरुण । इह । बोधि । ऊरुऽशंस । मा । नः । आयुः । प्र । मोषीः ॥ ११ ॥

(२६५) तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे ॥ शुनःशेपोयमह्वद्गृभीतःसो अस्मान्राजा वरुणो मुमोक्तु ॥ १२ ॥

(प०) तत् । इत् । नक्तम् । तत् । दिवा । मह्यम् । आहुः । तत् । अयम् । केतः । हृदः । आ । वि । चष्टे ॥ शुनःशेपः । यम् । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥ १२ ॥

(२६६) शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ॥ अवैनं राजा वरुणःससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३ ॥

(प०) शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः ॥ अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ १३ ॥

(२६७) अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ॥ क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥ १४ ॥

(प०) अव । ते । हेळः । वरुण । नमःऽभिः । अव । यज्ञेभिः । ईमहे । हविःऽभिः ॥ क्षयन् । अस्मभ्यम् । असुर । प्रचेतः । राजन् । एनांसि । शिश्रथः । कृतानि ॥ १४ ॥

(२६८) उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ॥ अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥१५,१५,२४॥

(प०) उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय ॥ अथ । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ॥ १५, १५, २४ ॥

## ऋग्भाष्यम्

एवं गुणो यत्त्वमतो व्रजामि सदा शरण्यं शरणं वेदवाचा । नमन्नन्योयजमाने हविर्भिस्तदाशास्ते त्वद्गतिं देव देव । अनिन्दन्नस्मान्नरमात्रबुद्ध्या सम्बोधयोच्चैः स्तुतमास्मदायुः । छेत्सीः ॥ ११ ॥ नक्तं दिवसे चैतदेव स्तोत्रं त्वदीयं प्राहुरार्याः सुकार्यम् । मह्यं केतो ज्ञानरूपो हृदिस्थो नारायणो वक्त्ययंतेन्यरूपम् । पश्यत्यपीशोयं समह्वद्गृहीतः सनोऽदेवो मोचयत्वग्र्यदुःखात् ॥ १२ ॥ शुनः शेपो ह्यह्वद्गृहीतः स्थानत्रये विक्रयाद्यैः सुबद्धः । द्रुतं प्राप्तानि द्रुपदानि विक्रयो यूपे बन्धः संज्ञपनोद्यमश्च । आदित्योसावादिसंस्थः परेशो वारीशान्तः संस्थितः स्तूयतेऽत्र । शुनःशेपोयमित्यादिकेन वारीशोपि ह्यृषिणा स्तूयमानः । गुणास्त्रयो द्रुपदानीति चोक्ता द्रवत्ययं जीवसङ्घोहि यत्र । करोत्वेनमवसृष्टं सृतेः स प्रसन्नोस्मान्कर्मपाशान्मुमोक्तु ॥ १३ ॥ निंदां च तेऽवाग्गतेर्हेतु-भूतामवगच्छामः सेयमित्यप्ययोग्याम् । नमस्कारैस्त्वद्गतैस्त्वन्मखैश्च हविर्युक्तैस्त्व-त्प्रसादात्सच त्वम् । क्षितिरस्मभ्यं प्राणरन्ताखिलज्ञो वियोजयास्मत्कृतान्याश्व-घानि ॥ १४ ॥ पुण्यं पापं मिश्रमित्येव पाशान्यथायोग्यं श्रथयान्येषु दत्वा । त्वन्निष्ठया तेन वयं त्वदीयलक्ष्म्याः पुत्राः स्याम मुक्ताः सृतेश्च । एषर्ग्विष्णोः केवलाप्येवमन्या अयोग्या या अन्यदेवेषु सम्यक् । वाक्यैर्विशिष्टैरपवादहीनैर्ज्ञेया गुणा अन्यदेवेषु चैव । पतिः सोमो वरुणस्याप्यथाग्नेः पतिः सूर्यस्त्वुभौ तुल्यवीर्यौ । सूर्याचन्द्रमसोः पतिरिन्द्रोस्य रुद्रः पतिर्ब्रह्मा पतिरस्यापि विष्णुः । पतिर्मुक्ते वासुदेवोथ दृष्टेर्ब्रह्मा विद्यायाः शर्व इन्द्रः क्रियायाः । क्रियांशानामधिपा अन्यदेवास्तथाफलानामपि मुक्तिमार्गे । यथायोग्यं स्वेन्द्रियप्रेरकाश्च ततः पूज्या देवता मुक्तिकामैः । इति श्रुतेस्तारतम्यं गुणानां ज्ञात्वा योज्याः श्रुतयस्तत्र तत्र ॥ १५, १५, ५ ॥

## ऋग्भाष्यटीका

तत्त्वायामि । तदिति परामर्शस्य विषयं दर्शयन्व्याख्याति । एवं गुण इति । यद्यस्मात्त्वमेवं गुणस्तदतः । शरण्यं त्वा त्वां यामि सदा शरणं व्रजामि । कथम् । ब्रह्मणा वेदवाचा । वेदमानो नमन्स्तु-वन्नभिवादयंश्चेत्यर्थः । किञ्च । यजमानः उपलक्षणमेतत् । मत्तोन्यो विद्वान् । हविर्भिर्हविःप्रदानादिभिः । तदेवाशास्ते वाञ्छति । किं तत् । यामीत्युक्तधात्वर्थ परामर्शोयमित्याह ॥ त्वदिति । त्वद्गतिं

(ऋग्भाष्यटीका)

त्वच्छरणप्राप्तिम्। हे वरुण देवदेव इहास्मासु। अहेळमानोऽवज्ञामकुर्वन्। नरमात्रमिति बुद्ध्यास्मांछरणं प्राप्तानिन्दन्निति यावत्। बोधि सम्बोधय। हे शुनःशेप श्रान्तोसीति। हे उरुशंस उरुभिः पुरुषैः शंस्यत इति उच्चैः स्तुत। न आयुरस्मदायुः। मा प्रमोषीः मा छेत्सीः न छिंद्याः॥ ११॥

तदित्। नक्तं दिवसे च। नक्तं रात्रौ। मह्यं तदित् तदेव। एतदेव ब्रह्मणा वन्दमान इति प्रकृतं त्वदीयं स्तोत्रं प्राहुराचार्याः। सुकार्यमिति शेषः। दिवा दिवसे च। तदेव कार्यमाहुः। किञ्च। हृदो हृदिस्थः। अणि वृद्ध्यभावश्छान्दसः। प्रत्ययान्तरं वा ल्यब्लोपनिमित्ता पञ्चमी वा। हृदधिष्ठायेति तस्य तात्पर्यार्थो हृदिस्थः। केतः ज्ञानरूपः। तेन्यरूपमयं नारायणः। तदेव कार्यमाविचष्टे सम्यग्वक्ति। पश्यत्यपि उभयत्रापि प्रयोगात्। एवं स्तुवन् गृभीतो गृहीतः। शुनःशेपोऽयं समह्वत् समाह्वयत् समाह्वयति। स राजेशो वरुणो देवो नोस्मान्मुमोक्तु मोचयतु। अग्र्यदुःखात्सांप्रतमुपस्थितात् संसारदुःखाद्वेति शेषः॥ १२॥

शुनःशेपोह्यह्वत्। अत्र प्रथमपादो निगदेनैव व्याख्यात इति दर्शयन् गृभीतपदं व्याख्याति। शुनःशेपइति। हृग्रहोर्भश्छन्दसि। त्रिषु द्रुपदेषु बद्ध इत्येतत् द्वेधा व्याख्याति। स्थानत्रये सुबद्धः विक्रयाद्यैः सुबद्ध इति। स्थानत्रयं यूपस्य द्रोर्वृक्षस्य यूपस्य पदानि स्थानानि तेष्विति प्रथमोर्थः स्यात्। द्वितीये तु के विक्रयाद्याः कथं च द्रुपदानीत्यत आह। द्रुतमिति। संज्ञपनमालम्भः। आदित्यशब्दं विष्णौ योजयति। आदित्य इति। अव्ययात्त्यबित्यत्र योगविभागादादिशब्दात्त्यप्। पूर्वन्यायेनात्र सूक्ते सर्वत्र वरुणोप्युच्यत इति शङ्कां निवारयति। परेश इति। न तु वारीश इत्यर्थः। किं सर्वथापि नेत्यत आह। शुनः शेप इति। यत्र वरुणः सम्भवति तत्र सोपि ग्राह्यः। न हि ते क्षत्रमित्यादौ तदसम्भवाद्विष्णुरेवेत्याशयः। द्रुपदशब्दस्यार्थान्तरमाह। गुणा इति। यत्र येषु गुणेषु। तृतीयपादतात्पर्यमाह। करोत्विति। चतुर्थस्यार्थमाह॥ प्रसन्न इति। त्रिषु पदेषु यूपस्थानेषु बद्धः। यद्वा द्रुतं पद्यंत इति द्रुपदानि विक्रयादीनि तेषु। तृतीयार्थे सप्तमी। तैर्बद्धः। यद्वा जीवानां द्रवस्य संसरणस्य पदानि द्रुपदानि सत्वरजस्तमांसि तैर्बद्धः। शुनः शेपः यमादित्य मह्वदाह्वयति। स वरुणो राजैनं शुनःशेपम् अवसृज्यात् अवसृजेत्। संसृतेरवसृष्टं करोतु। विकरणस्य श्लुः। कथम्। विद्वानस्मदाह्वानं जानन् ततश्च प्रसन्नः। अदब्धोऽप्रतिबद्धः। पाशान्विमुमोक्तु। अस्मान्कर्मपाशाद्विमुमोक्तु। अत्रापि बहुलं छन्दसीति श्लुः॥ १३॥

अवते। निन्दां च। अत्र क्रियापदस्यैकत्वाद्वावप्यवशब्दौ नोपसर्गौ युक्तावित्याशयेनाद्यस्यावमवाचितां विवक्षन् व्याख्याति। हे वरुण वयन्ते नमोभिस्त्वद्गतैस्त्वद्विषयैर्नमस्कारैः। हविर्भिर्यज्ञेभिर्हविर्युक्तैस्त्वन्मखैश्च। त्वन्नमस्कारत्वन्मख समुत्पन्नात्त्वत्प्रसादादिति यावत्। ते हेळो हेळनं निन्दां च। अव अवमाम् अवाग्गतेर्हेतुभूताम्। अवेमहे अवगच्छामः। ननु मुमुक्षोर्भगवन्निन्दा ज्ञातुमयोग्या। सत्यम्। उपादेयत्वेनायोग्यामपि सानिन्देयमवाग्गति हेतुभूतेत्यवगच्छामः। हे राजन् एवमस्माभिरवगतः स च त्वमस्मभ्यं क्षयन् क्षितिराश्रयो भवन्। अस्मत्कृतान्येनांस्यघानि। शिश्रथः अशिश्रथः। छान्दसश्श्लुः।

(ऋग्भाष्यटीका)

निश्चितत्वाल्लोडर्थे लुङ्। आशु वियोजय। असुरशब्दार्थः प्राणरन्तेति। असवः प्राणाः तेषु तैर्वा रमत इत्यसुरः। प्रचेतः शब्दार्थोऽखिलज्ञ इति। प्रकृष्टमखिलविषयं चेतो ज्ञानं यस्येति। यद्यप्यत्रे मौशब्दौ सम्बुद्ध्यन्तौ तथापि प्रातिपदिकार्थमात्रमत्रोक्तमिति ज्ञातव्यम्॥ १४॥

उदुत्तमम्। अत्रोत्तमाधममध्यमान्पाशान्व्याख्याति॥ पुण्यमिति॥ उत् अवबीत्युपसर्गार्थानाह। यथायोग्यमन्येषु दत्वेति। हे वरुणोत्तमं पाशं पुण्यमस्मदुच्छ्रथय अस्मत्सुहृद्भ्यो दत्वास्मत्तो वियोजय। अधमं पाशं पापमवश्रथय द्विषद्भ्यो दत्वास्मद्वियोजय। मध्यमं पाशं मिश्रं पुण्येन मिश्रं पापं विश्रयथ उदासीनेभ्यो दत्वा वियोजय। एवशब्देनास्य मुख्यार्थतामाह। अथ तेन वियोजनेन। हे आदित्य तव व्रते त्वत्कर्मणि त्वन्निष्ठयेति यावत्। अनागसो निर्दोषाः। सृतेश्च मुक्ता वयं तवादितये अदितेस्त्वदीयलक्ष्म्याः स्याम पुत्रा इति शेषः। परेश इत्यादिनोक्तं विवृणोति। एषेति। केवला प्रतिपाद्यान्तररहिता। एतदप्युक्तार्थत्व एव ज्ञातव्यम्। अर्थान्तरयोजनायान्तु देवतान्तरमपि न विरुध्यते। अयोग्यत्वं कथं ज्ञातव्यमित्यत आह॥ वाक्यैरिति। विशिष्टैरित्यस्यैव विवरणमपवादहीनैरिति। तान्येवोप-लक्षणयोदाहरति। पतिरिति। अत्र सोमो वरुणस्य पतिरित्युक्त्या विचाकशच्चन्द्रमानक्तमेतीति वरुणेऽयोग्यमिति लभ्यते। तावुभौ सूर्याचन्द्रमसौ। तुल्यवीर्यावित्यनेन उरुं हि राजेति वरुणे न योग्यमिति ज्ञायते। अस्येन्द्रस्य रुद्रः पतिरित्यनेनोतापवक्तेत्यस्य वरुणेऽयोग्यता प्रतीयते। अस्यापि विष्णुरिति विष्णोः सर्वोत्तमत्वोक्त्या न हि ते क्षत्रमित्येतद्वरुणे न योग्यमिति निश्चीयते। पतिर्मुक्तेर्वासुदेव इत्यनेनोर्ध्वं स्तूपमित्यादेरन्यत्रायोग्यताऽवधार्यते। दृष्टेर्ब्रह्मेत्यनेनास्मे अन्तरित्यादेर्वरुणेऽसम्भावितत्वं दृश्यते एवमन्यदप्यूह्यम्। मुक्तिमार्गे स्वेन्द्रिय प्रेरका इत्यन्वयः। गुणानां देवतासम्बन्धिनाम्। तत्र तत्र देवतासु॥ १५, १५॥

## मन्त्रार्थमञ्जरी

(हे) वरुण (यस्मात्त्वमेवं गुणः) तत्, तस्मात्। त्वा, त्वाम्। ब्रह्मणा, वेदवाचा। वन्दमानः, नमन्स्तुवँश्च। यामि (शरणम्) इति शेषः॥ किं च, यजमानः उपलक्षणमेतत्– मदन्यो विद्वान्। हविर्भिः हविःप्रदानादिभिः। तत् (एव) आशास्ते, त्वच्छरणगमनमेव वाञ्छति। (हे) (वरुण) इह, अस्मासु। अहेळमानः, अवज्ञामकुर्वन्। (त्वम्) 'नरमात्रम्' इत्यस्माच्छरणं प्राप्तान-निन्दन्निति यावत्। बोधि, सम्बोधय, बुध्यतेः लुङ्, 'दीपजन' इति चिण्, 'चिणो लुक्' इति तलोपः, अडभावः, 'हे शुनःशेप! श्रान्तोऽसि' इत्येवमादिवचनं कुरु। (हे) उरुशंस, उरुभिः पुरुषैः शंस्यत इत्युच्चैः स्तुत। नः आयुः, अस्मदायुः। मा प्र मोषीः, न च्छिन्द्याः॥ ११॥

(मन्त्रार्थमञ्जरी)

(हे वरुण) नक्तम्, रात्रौ। मह्यम्। तत् इत्, तदेव, 'ब्रह्मणा वन्दमानस्' इति प्रकृतं त्वदीयस्तोत्रमेव। (कार्यम्) इति शेषः। आहुः (आचार्याः) इति योज्यम्। दिवा, दिवसे (च) तत् (एव कार्यम्) (आहुः) किं च, हृदः, हार्दः, हृदि स्थित इति यावत्, अणि वृद्ध्यभावश्छान्दसः, अप्रत्ययो वा, ल्यब्लोपनिमित्ता पञ्चमी हृदधिष्ठायेति (वा) हृदिस्थ इति फलितोऽर्थः। केतः, ज्ञानरूपः। अयम्, तव रूपान्तरभूतो नारायणः। तत् (एव कार्यम्) आ वि चष्टे, सम्यग्वक्ति, पश्यत्यपि, चक्षिङः उभयत्रापि प्रयोगात्। एवं स्तुवन् गृभीतः, 'हृग्रहोर्भश्छन्दसि (हस्य) इति गृहीतः, यूपे बद्धः। शुनः शेपः यम्। अह्वत्, आह्वयति, ह्वयतेः लडर्थे लुङ्, 'लिपिसिचिह्वश्च' इति च्लेरङ्, आतो लोपः। आह्वानेन प्रसन्नः सः राजा वरुणः (देवः) अस्मान्। मुमोक्तु, मोचयतु, 'सांप्रतमुपस्थितान्मृत्युरूपादग्र्यदुःखाद्वा' इति योज्यम्, 'मुच्लृ मोक्षणे' श्लुविकरणं छान्दसम्॥ १२॥

(गृभीतः) त्रिषु। द्रुपदेषु, द्रोर्वृक्षस्य यूपस्य पदेषु स्थानेषु। बद्धः। द्रुतं पद्यन्त इति द्रुपदेषु, विक्रययूपबन्धनालम्भनरूपेषु, तृतीयार्थे सप्तमी, तैर्वा, जीवानां द्रवणस्य संसरणस्य पदानि निमित्तानि = द्रुपदानि सत्त्वरजस्तमांसि, तेषु तैर्वा। बद्धः शुनःशेपः (यम्) आदित्यम्, आदौ स्थितत्वहेतुनादित्यनामानं वरुणम्, 'अव्ययात्त्यप्' इत्यत्र योगविभागेनादि शब्दात्त्यप्। अह्वत्, आह्वयति। हि (सः) वरुणः राजा। एनम्, शुनःशेपम्। अव ससृज्यात्, अवसृजेत्, प्रागुक्तरूपबन्धादवसृष्टं करोतु, 'सृज विसर्गे' श्लुविकरणं छान्दसम्। कथम्? विद्वान्, अस्मदाह्वानं जानन्, ततश्च प्रसन्नः। अदब्धः, अप्रतिबद्धः। पाशान्। वि मुमोक्तु, अत्रापि 'बहुलं छन्दसि' इति श्लुः, मोचयतु। अत्र सूक्ते यास्वृक्ष्वन्यत्रानवकाशविष्णु- लिङ्गादीनि सन्ति, ता ऋचो वरुणान्तर्यामिपरतयैव नेयाः॥ १३॥

(हे) वरुण (वयम्) ते नमोभिः, त्वद्विषयैर्नमस्कारैः। हविर्भिः यज्ञेभिः, हविर्युक्तैस्त्वद्विषयैर्यज्ञैः। (च) त्वन्नमस्कारत्वन्मख- समुत्पन्नत्वत्प्रसाददिति यावत्। (ते) हेळः, हेलनम्, निन्दाम्। अव, अवमाम्, अवाग्गतिहेतुभूताम्। अव ईमहे, अवगच्छामः। (हे) राजन्। असुर, असुषु प्राणेष्वसुभिः प्राणैर्वा रममाण, रमेर्डः। प्रचेतः, प्रकृष्टज्ञान। एवमस्माभिवरगतः। त्वम् अस्मभ्यम्। क्षयन्, आश्रयो भवन्। अस्मत्कृतानि। एनांसि, पापानि। शिश्रथः, अशिश्रथः, 'श्रथु वियोगे' आशु वियोजय, निश्चितत्वाल्लोडर्थे लुङ् च्लेश्चङ् छान्दसः, द्विर्वचनम्, श्रथेर्वा चुरादेर्लुङ्॥ १४॥

**(मन्त्रार्थमञ्जरी)**

(हे) वरुण। उत्तमम् पाशम् पुण्यरूपम्। अस्मत् उत् (श्रथय) सुहृद्भ्यो दत्त्वास्मत्तो वियोजय। अधमम् (पाशम्) पापरूपम्। अव (श्रथय), द्वेषिभ्यो दत्त्वास्मत्तो वियोजय। मध्यमम् (पाशम्) मिश्रं पुण्यं मिश्रं पापं च। विश्रथय, उदासीनेभ्यो दत्त्वास्मत्तो वियोजय। अथ, तेन वियोजनेन। (हे) आदित्य, सर्वादौ विद्यमान। तव व्रते, त्वत्कर्मणि, त्वन्निष्ठयेति यावत्। अनागसः, निर्दोषाः, सृतेश्च मुक्ताः। वयम्। (तव) अदितये, अदितेः, त्वदीयलक्ष्म्याः। स्याम (पुत्राः) इति शेषः॥ १५॥ इति पञ्चदशो वर्गः॥ १५॥ चतुर्विंशं सूक्तम्॥ २४॥

## रूपावतारः

तत्त्वा यामि॥ बोधीति। बुधेर्णिचि लोटि तस्य सिपि सेः हीत्यादेशे हेर्लुकि 'बहुलं छन्दसि' (२।४।७३) इति शब्लुकि बोधीति छान्दसं रूपम्। मा प्रमोषीरिति। मुषेः 'माङि लुङ्' (३।३।१७५) इति लुङि 'न माङ्योगे' (६।४।७६) इत्यडभावे च्लेः सिचि इडागमे 'अस्ति सिचोऽपृक्ते' (७।३।९६) इति ईटि 'इट ईटि' (६।२।२८) इति सिचो लोपे रुत्वविसर्गयोः मा प्रमोषीरिति रूपम्॥ ११॥

तदित्॥ ननु हार्द इति भवितव्यं कथं हृद इति इत्यत आह। अणीति। प्रत्ययान्तरमिति। अच्प्रत्यय इत्यर्थः। गृभीत इति। हृग्रहोर्भश्छन्दसि (वा.सू. ३।१।८४) इति भत्वमूह्यम्। मुमोक्तु इति। मुचेः छान्दसे णिजभावे शपः श्लौ द्विर्वचने तिप एरुत्वे गुणे च मुमोक्त्विति रूपम्॥ १२॥

शुनःशेपो ह्यह्वत्॥ गृभीत इति रूपसिद्धिसूत्रं स्मारयति। हृग्रहोरिति। योगविभागादिति। प्रामाणिकप्रयोगसिद्ध्यर्थं योगविभागः कार्य इति भावः। अह्वदिति ह्वेञः लुङि 'आदेच उपदेशेऽशिति' (६।१।४५) इत्यात्वे 'लिपि सिचि ह्वश्च' (३।१।५२) इतिच्लेरङि 'आतो लोप इटि च' (६।४।६४) इत्याकारलोपे अह्वदिति रूपम्। अव ससृज्यादिति। सृजेर्लिङि शपः श्लौ द्विर्वचने यासुटि ससृज्यादिति रूपम्॥ १३॥

अव ते हेळः॥ छान्दसश्चङिति। श्रन्थ विमोचनप्रतिहर्षयोरित्यतो लुङि सिपि ण्यन्तत्वाभावेन छान्दसे चङादेशे अभ्यासाकारस्य इत्वे अडभावे सिपो विसर्गे शिश्रथ इति रूपमिति भावः। असुशब्दोपपदात् रमेरौणादिके डप्रत्यये असुरेति रूपम्॥ १४॥

उदुत्तमम्॥ मिश्रं पापमिति। स्वफलभोगावसरे पुण्यफलभोगावकाशदं पापं मिश्रमित्युच्यते। एतेन संसारदशायां विद्यमानपुण्यपापमात्रस्य मिश्रत्वाद्विभागेनोक्तिरयुक्तेति परास्तम्।

(रूपावतारः)

विवक्षाभेदेन विभागसंभवात्। परेश इत्यादिनेति। ''आदित्योऽसावादिसंस्थः परेशो वारीशान्तः संस्थितः स्तूयतेऽत्रे''त्यनेनोक्तं ईश्वरस्यैव ऋग्विशेषप्रतिपाद्यत्वमित्यर्थः। ''पतिः सोमो वरुणस्ये''त्याद्याचार्योक्तेः प्रयोजनमाह। अत्र सोमो वरुणस्येति यस्मात् सोमो वरुणस्य पतिरित्युक्त्या ''विचाकशच्चन्द्रमा नक्तमेती''ति वर्णनयोग्यमिति लभ्यते। तस्मादिदमुक्तमित्यर्थः। एवमुत्तरत्राप्यपेक्षितपदाध्याहारेण योजना द्रष्टव्या॥ १५॥ १५॥

## पदार्थप्रकाशिका

तत्वायामि ब्रह्मणा वन्दमानः। वदि अभिवादनस्तुत्योरिति धातोः णमुप्रह्वत्वे शब्दे चेत्यपि धातोः सत्वेन भाष्यस्यापि सत्वादाह। स्तुवन्नभिवादयंश्चेति। तदाशास्त इत्यत्र तच्छब्देन यामीत्युक्तकर्तृकमिप्- प्रत्ययविशिष्टधात्वर्थपरामर्शे अर्थासङ्गत्यापत्तेराह। यामीत्युक्तेति। अयम्। तदाशास्त इत्यत्रत्याशस्यशब्दः। सम्बोधनप्रकारमेव दर्शयति। हे शुनःशेपेति। शंस्यत इत्यर्थः। व्युत्पत्त्येति शेषः। माछेत्सीरिति भूतार्थकथनस्य प्रकृतानुपयोगादाह। नछिंद्या इति॥ ११॥

तदिन्नक्तं तद्दिवामह्यमाहुः। शेषो ऋचि हृदः हृदिस्थ इति। हृर्थ अस्मात् तस्येदमिति सम्बन्धात् अण्प्रत्यये तकारस्य दकारे च सति हृद इत्यकारान्तः शब्दस्तस्य व्याख्यानं हृदिस्थ इति।

ननु हृत् अस्मात् अण् प्रत्यये णित्वादादि वृद्धौ हार्द इति स्यादित्यत आह। अणीति। प्रत्ययान्तरं वेति। यस्मिन् प्रत्यये पूर्ववृद्धिर्नभवति। तादृश एव प्रत्ययः सम्बन्धार्थे आनेयः। स च अप्रत्यय इत्यवधेयम्। नेयं हृदशब्दस्य प्रथमा। किन्नाम हृच्छब्दस्य पञ्चमीत्याह। ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वाच्यम्। प्रासादात्प्रेक्षते आसनात्प्रेक्षते। प्रासादमधिरुह्य आसनमुपविश्य प्रेक्षत इत्यर्थ इति वार्तिकादिति भावः। तदेव दर्शयति। हृदिति। द्वितीयेयम्। तर्हि हृदिस्थ इति भाष्यं हृद इत्यस्य कथं व्याख्यानपरमित्यतो नेत्याह। तस्य तात्पर्यार्थ इति नारायणस्तोत्रमेव कर्तव्यमाविचष्ट इत्युक्ते वरुणसूक्तत्वभङ्गापत्तेराह। ते अन्यरूपमिति। वरुणस्य तवान्यरूपमयं हृदिस्थो नारायणस्तदेव दिवसेदिवसे त्वदीयं स्तोत्रमेव कर्तव्यमाचष्ट इत्यर्थः। अयं नारायणो अन्यरूपमिति नोद्देश्यविधेय भावः। विधेयस्योद्देश्यसमानलिङ्गतानियमात्। किन्नाम। ते अन्यरूपमयं नारायण इति। नचापि विधेयस्योद्देश्यसमानलिङ्गतापत्तिरिति वाच्यम्। विधेयं वोद्देश्यसमानलिङ्गकमिति नियमो न तु नियतलिङ्गकमपि। प्रकृते च नारायणशब्दस्य च नियतपुल्लिङ्गत्वेन न

(पदार्थप्रकाशिका)

विक्रयाद्यैरित्यत्र विक्रयोनाम द्रव्यं दत्वा ग्रहणम्। तथाहि। शुनःशेपो मातापितृभ्यां विक्रीत इति प्रसिद्धिः। स्थानानीति। मूलमग्रं मध्यं चेति स्थानानीत्यर्थः। द्रुपदानीति। द्रुपदशब्दवाच्या इत्यर्थः। भाष्ये द्रुतं शीघ्रं पदॢगताविति धातोः पदानि प्राप्तानि विक्रयादीनि द्रुपदानीत्यर्थः। आलम्भो वधः। सूत्रेणाव्ययादेव भावार्थे त्यप् विहितो न शब्दादुपरि। अत एव हेत्यः अत्रत्यः तत्रत्यः कुत्रत्यः इत्याद्युदाहरणम्। अत आदिशब्दात् कथं त्यबित्यत आह। अव्ययात्यबित्यत्रेति। अव्ययादित्येकं वाक्यम्। त्यबित्यपरं वाक्यम्। एवं चाव्ययात् त्यप् भवतीति प्रथमवाक्यार्थः। शब्दादपि त्यप् भवतीति द्वितीयवाक्यार्थः। तथाच आदिशब्दात् त्यप् युक्त इति भावः। पूर्वन्यायेनेति। यथा वाय्वादिसूक्ते वाय्वादेरप्यमुख्यवृत्या प्रतिपाद्यत्वम्। मुख्यतो वासुदेवेति गुणाः संत्येव सर्वशः। अनिषिद्धास्तदन्ये तु यथायोप्यतया मताः। इति पूर्वमुक्तं तन्न्यायेनेत्यर्थः। सर्वत्रेति। न हि तेक्षत्रमित्यादौ सर्वत्रैकत्रिंशदृक्ष्वित्यर्थः। तदसम्भवादिति। तस्य वरुणस्य प्रतिपाद्यत्वासम्भवादित्यर्थः। चतुर्थस्याहेति। चतुर्थपादस्यार्थमाहेत्यर्थः। ऋगर्थमाह। त्रिष्विदित्यादिना। संसारणस्य पदानि निमित्तानीति यावत्। अवसृष्टं विसृष्टम्। नन्ववेत्युपसर्गपूर्वकात् सृजविसर्गे अस्माल्लङि तस्य तिबादेशे तिप् इत्यस्य लोपे कर्तरि शपि तस्य लोपे यासुडागमे सुडित्यस्य लोपे भूयादितिवत् अवसृज्यादित्येव भाव्यम्। संसृज्यादित्यभ्यासः कथमित्यत आह। विकरणस्य श्लुरिति। शब्विकरणस्य श्लुरित्यर्थः। श्लुरिति लोपसंज्ञा। तथाच श्लौ इति सूत्रेण श्लौ परे पूर्वमभ्यासो जातः। अत एव विकरणस्य लोप इत्यनुक्त्वा श्लुरित्युक्तमित्यवगन्तव्यम्। एवमुत्तरत्रापि। एवं च श्लौ परे पूर्वमभ्यासे सति संसृज्यादिति युक्तमिति भावः। कथमिति। कथं संसृतेरवसृष्टं करिष्यामि बन्धकानां कर्मपाशानां सत्वादिति भावः। मुमोक्त्वित्यत्राभ्यासोपपत्यर्थमाह। अत्रापीति। मुचॢ मोक्षण इत्यस्य शविकरणत्वात्तस्य बहुलं छन्दसीति श्लुः। तथाच श्लावित्यनेन श्लौ परे पूर्वमभ्यासे मुमोक्त्वितियुक्तमिति भावः॥ १३॥

अवतेहेळोवरुणनमोभिः। नोपसर्गौ युक्ताविति। उपसर्गाः क्रियायोग इति क्रियायोग एवोपसर्गत्वश्रवणादिति भावः। अव अवमामवाग्गतेर्हेतुभूतामिति विशेषणमपस्यन् निन्दाम-वगच्छाम इत्येतावदेव दृष्ट्वा भ्रान्तः शंकते। नन्विति। अयोग्येति। भगवद्गुणोत्कर्षस्यैव मुमुक्षुज्ञेयत्वेन तन्निंदायां मुमुक्षुज्ञेयत्वे तत्र हेलोवगछाम इत्येतदयुक्तमिति भावः। अहो भ्रान्तोऽस्माभिः पूर्वमवगतेर्हेतुभूतामिति विशेषणप्रयुक्तमित्यभिप्रायेण तद्विशदनार्थमेव प्रयुक्तसेयमित्यादि भाष्यं व्याचष्टे। एवमस्माभिरवगत इति। अवगतिहेतुभूतनिन्दायाः

(पदार्थप्रकाशिका)

अविषयत्वेनावगत इत्यर्थः । क्षेत्यस्मिन्निति । अन्तर्णीतण्यर्थात् क्षिनिवासगत्योरिति धातोः शतृप्रत्यये क्षयन्निति शब्द आश्रयवाचीत्याशयेनाह । क्षयन्निति । भाष्यं तत्र संवादयित्वा व्याचष्टे । क्षितिरित्यादिना । लुङ्यमिति ज्ञापनार्थमशिश्रिय इत्यडागमसाहित्येन व्यवहृतमिति द्रष्टव्यम् ।

ननु णिश्रिद्रुस्रुभ्यः कर्तरि चङिति चङो विहितत्वेन तन्मध्ये श्रथि धातोः अभावेन कथं चङ् येन द्वित्वाभ्यासः स्यादित्यत आह । छान्दसश्चङिति । छन्दसि सर्वे विधयो विकल्प्यन्त इति वचनादिति भावः । चङि च शिश्रथ इति द्वित्वं युक्तमिति द्रष्टव्यम् । ननु शुनःशेपेन प्रार्थनायाः क्रियमाणत्वात् प्रार्थनायां च लोटो विहितत्वात् अनिश्चयार्थक लोट् योगेन भाव्यम् । अशिश्रयथ इत्यतीतार्थक लुङ्प्रयोगः कथमित्यत आह । निश्चितत्वादिति । पापवियोजनरूपैष्यदर्थस्य निश्चितत्वादित्यर्थः । एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यत इति वचनादिति भावः । अत एवैतायामिति ऋग्व्याख्यानसमये अतिनिश्चितार्थभूतशब्दश्चेत्याह सूत्रं परेश इत्यपि वक्ष्यतीति द्रष्टव्यम् । तेषु स्थित्वा । एवमवाग्गतिहेतुभूतनिन्दाविषयत्वेन । ननु ऋचि असुरप्रचेतःशब्दयोः सम्बुध्यन्तत्वात् भाष्कारैरपि प्राणरन्तः अखिलज्ञेति सम्बुध्यन्तया प्रयोक्तव्ये प्राणरन्ताखिलज्ञ इति कथं प्रयुक्तमित्याशङ्क्य परिहरति । यद्यपीत्यादिना । प्रातिपदिकार्थमात्रमिति । प्राणरंत्रखिलज्ञ- प्रातिपदिकयोरेवार्थकथने तात्पर्यं प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रेण प्रातिपदिकार्थकथने प्रथमायाः विहितत्वादिति भावः ॥ १४ ॥

उदुत्तुमं वरुणपाशमस्मात् । सुहृद्भ्यः इति । सुहृदः साधुकृत्यामिति हि श्रुतेरिति भावः । नन्वत्रापरोक्षज्ञानिना सुहृद्भ्यो दीयमानं पुण्यं कीदृशमिति चेत् । अपरोक्षज्ञानात्पूर्वं सम्पादितं यत्काम्यं पुण्यं स्वस्याभीष्टं तदिति वदामः । काममभीष्टं चेन्न नश्यति । अन्यथेष्टविरोधित्वेन ज्ञानस्यापुरुषार्थत्वप्रसङ्गात् । न च काम्यपुण्यस्य पापमिश्रितत्वेनोदासीनायामेव तद्योग्यतया सुहृद्भ्यो दानायोग्यम् इति वाच्यम् । अत्र काम्येपि विशेषः । अहमुत्तरजन्मनि राजा भविष्यामीत्यादि इच्छया कृतं पुण्यं म्लेंच्छजन्मसम्पादनद्वारा गोहत्यादि महापापसम्पादकमेकम् । अपरं चाहमुत्तरजन्मनि शुद्धो ब्राह्मणः स्यां तत्र शुद्धं धनं मे भूयात् । येन देवान् ब्राह्मणांश्चाराधयिष्ये इत्यादि इच्छया कृतं शुद्धं पापाद्यसम्पादकं काम्यम् । तत्राद्यकाम्यपुण्यभागिनः उदासीनाः । इदमेव च पुण्यं पुण्येन मिश्रं पापं चेत्यत्र विवक्षितम् । द्वितीयपुण्यभागिनस्तु सुहृद इति विवेको द्रष्टव्य इति सम्प्रदायविदः ।

(पदार्थप्रकाशिका)

ज्ञानेन प्रारब्धस्यापि पुण्यस्य विनाशो ज्ञातव्यः । अत्र सुहृदः चरमजन्मकालीना इति सम्प्रदायविदः । द्विषद्भ्य इति । द्विषन्तः पापकृत्यामिति श्रुतेरिति भावः । मिश्रपदमनूद्य व्याचष्टे । मिश्रं चेति । अस्येति । पुण्यादिरूपया विमोचनमेव मुख्यार्थो नतु प्रसिद्धपाप-विमोचनमित्येवशब्देनाहेत्यर्थः । आदितेः । इति आदित्यसंस्थत्वदीयलक्ष्म्याः त्वद्भार्याभूतायाः लक्ष्म्याः देवतांतरस्य प्रतिपाद्यत्वात् । सम्भवसूचनाय त्वदीयेत्युक्तम् । परेश इत्यादिनेति । परेशो वा नरे शान्तः संस्तितः स्तूयतेऽत्रेत्यनेनोक्तमित्यर्थः । एतदपीति । प्रतिपाद्यान्तरराहित्यमपीत्यर्थः । उक्तार्थ एवेति । पुण्यं पापमित्याद्युक्तार्थत्वे एवेत्यर्थः । पुण्यपापादिरूपपापविमोचनप्रार्थनस्य त्वदीयलक्ष्म्याः पुत्रः स्यामेति प्रार्थनस्य देवतां तरपक्षे असम्भवादिति ।

अर्थान्तरादिति । पाशादिशब्दस्य प्रसिद्धपाशपरतामङ्गीकृत्य योजनायामित्यर्थः । तत्प्रकारस्तु हे वरुण् उत्तमं पाशं यूपाग्रभागस्थं यद्बन्धकं पाशम् अस्मान् उच्छ्रथय । अस्मत्तो वियोजय । अधमं यूपमूलभागस्थं मद्बन्धकपाशं च अविश्रथय । मध्यमं यूपमध्यभागस्थं मद्बन्धकपाशं च विश्रथय । अथ पापवियोजनानन्तरं हे आदित्य आदिभव तव कर्माणि त्वदुद्देश्यके कर्मणि स्थितानागसो यूपबन्धापादकदोषशून्याः वयं पाशबन्धान्मुक्ताः सन्तः तवादितये त्वद्भार्यायाः पातिव्रत्यादि-गुणैरखण्डितत्वाददिति शब्दवाच्यायाः भागीरथ्याः पुत्राः स्याम । त्वदुद्देशेनालम्भनाय क्लृप्ताः वयं त्वदनुग्रहेण मुक्ताः तव पुत्राः सन्तः सुखेन यत्र कुत्रचिदसामेति । देवतान्तरं वरुणरूपम् । अपवादहीनैरिति । अन्यदेवानां प्रतिपाद्यत्वाङ्गीकारे बाधकशून्यैरित्यर्थः । तान्येवेति । एषु वाक्येष्वन्यदेवानां प्रतिपाद्यत्वाङ्गीकारे अपवादो नास्ति । तत्र तेपि प्रतिपाद्याः । एषु तदङ्गीकारे अपवादोऽस्ति । तत्र केवलो विष्णुरेव प्रतिपाद्य इति पूर्वग्रन्थेनाभिप्रेतोर्थस्तत्र केषु वाक्येषु अन्यदेवानां प्रतिपाद्यत्वङ्गीकारे अपवादो अस्तीत्याशंकायामपवाद- वाक्यान्येव केवलं विष्णोः प्रतिपाद्यत्वज्ञापनाय वरुणादेः तदयोग्यत्वज्ञापनाय चोपलक्षणया कानिचिदुदाहरतीत्यर्थः इति संप्रदायविदः । केचित्तु अपवादहीनवाक्यान्येवोदाहरतीत्यर्थ इत्याहुः । तद्वरुणे अयोग्यमिति लभ्य इत्यादि स्पष्टोत्तरग्रन्थाननुकूलमितिज्ञातव्यम् ।

वरुणे अयोग्यमिति । सोमस्य वरुणादुत्तमत्वेन वरुणस्य प्रसादाद्दिवाकशचन्द्रमा नक्तमेतीति न युज्यत इत्यतः इदं वरुणे अयोग्यमित्यर्थः । वरुणे न योग्यमिति । सूर्यस्य सोमसमानत्वेन वरुणादुत्तमात्सूर्याय गन्तुं वरुणः पन्थानं चकारेत्युक्तमयुक्तमितीदमपि न वरुणयोग्यमित्यर्थः । वरुण अयोग्यतेति । वरुणोत्तमसूर्याद्युत्तमेन्द्रोत्तमस्य रुद्रस्य वरुणो दोषवक्तेत्येतदयुक्तमित्यस्य कैमुत्यसिद्धत्वादुतापवक्तेति वाक्यस्य वरुणप्रतिपादकत्वयोग्यता नास्तीत्यर्थः । न हित इति ।

(पदार्थप्रकाशिका)

सर्वाप्राप्यपूर्णगुणत्वेन सर्वोत्तमत्वस्य तत्रोक्तत्वेन तस्य वरुणे अयोगान्न तत्र वरुणः प्रतिपाद्य इत्यर्थः। ऊर्ध्वमिति। ऊर्ध्वं स्तूपं ददत इति मुक्तिदातृत्वस्योक्तेस्तस्य भगवल्लिङ्गत्वेनावगमेन वरुणे अयोगान्न तत्र स प्रतिपाद्य इत्यर्थः। अस्मे इति। अत्र हि रूढज्ञानव्यक्तिर्वरुणस्य प्रसादात्प्रार्थ्यते। ज्ञानव्यक्तेश्च ब्रह्माधीनतया दृष्टे ब्रह्मेत्युक्तत्वेन ज्ञानव्यक्तिकत्वस्य वरुणे असम्भावित्वेनेदं वाक्यं तत्रायोग्यमित्यर्थः।

एवमन्यदपीति। अग्नेः पतिः सूर्य इत्यनेन यत्राप्याग्नेय्यामेव कस्यांचित्सूर्योग्निप्रसादान्माहात्म्यमवापेत्यादिप्रतिपादितमस्ति। तत्राग्निर्न प्रतिपाद्यः। तस्य सूर्यादधमत्वेन एतादृशसामर्थ्याभावादतस्तद्वाक्यमग्नावयोग्यम्। किन्तु विष्णावेवेति योग्यम्। तथा सूर्यचन्द्रमसोः पतिरिन्द्रमित्यनेन सूर्यचन्द्रमसोः प्रसादादिन्द्रः स्वर्गाधिपत्यमापेत्यादि सूर्यचन्द्रदेवताकायामेव कस्यांचिदृच्यस्ति। तत्र न सूर्यचन्द्रमसोः प्रतिपाद्यत्वं तयोरिन्द्राधिपत्यदातृत्वाभावादतस्तद्वाक्यं तयोरयोग्यम्। किंतु विष्णावेवेत्यादि द्रष्टव्यम्। भाष्ये तथा तथा फलानामधिपाः अन्यदेवाः इत्यन्वयो द्रष्टव्यः। स्वामिनः फलश्रुतेरिति वचनादिति भावः। मुक्तिमार्गे मुक्तिसाधनव्यापारे। भगवत्सम्बन्धिगुणानां तारतम्याभावादाह। देवतासम्बन्धिनामिति॥ १८, १८॥

## पदार्थदीपिका

बोधीति॥ बुध अवगमन इति लोटः सेर्हिः बहुलं छन्दसीति विकरणस्य लुग्वा छन्दसीत्यपित्वाभावेन ङित्वाभावात् लघूपधगुणः। हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः। धातोरन्त्यलोपः छान्दस इति भावः॥ मोषीरिति॥ मुष स्तेये अस्माल्लुङि वद व्रजेति प्राप्ताया वृद्धेर्नेटीति प्रतिषेधे सति लघूपधगुणः। न बहुलं छन्दस्यमाङ्योगेऽपीत्यडभाव इति भावः॥ ११॥

आहुरिति॥ ब्रुवः पञ्चानामादित आहो ब्रुव इति ब्रुवो लिटि झेरुसादेशः धातोराहादेशश्चेति भावः। ननु हृदिस्थ इति विग्रहे हार्द इति भवितव्यं, हृद इति तु कथमित्यत आह॥ अणि वृध्यभावः छान्दस इति॥ सर्वे विधयश्छन्दसि विकल्पन्त इति वचनात् आदिवृध्यभावः छान्दस इत्यर्थः॥ प्रत्ययान्तरं वेति॥ भवार्थे अप्प्रत्यय एवायं नत्वण्। अतो न वृद्धिप्रसक्तिरपीत्यर्थः। उक्तार्थे प्रत्ययान्तरस्याननुशासनात् पक्षान्तरमाह॥ ल्यब्लोपनिमित्तेति॥ ननु तर्हि हृदधिष्ठायेति व्याख्येयम् हृदिस्थ इत्यनुपपन्नमेवेत्यतो नेदमर्थकथनं किन्तु तात्पर्यकथनमिति नानुपपत्तिरित्याह॥ तस्येति॥ उभयत्रेति॥ सम्यग्वचनदर्शनयोरित्यर्थः॥ अह्वदिति॥ ह्वेञो लुङि लिपि सिचि ह्वश्चेति च्लेरङादेशः। आतो लोप इटि चेत्याकार लोपः इति भावः॥ मुमोक्त्विति॥ बहुलं छन्दसीति विकरणः श्नुः। तेन शविकरणस्यास्य कथं द्विर्वचनादिकमिति शंकानवकाश इति द्रष्टव्यम्॥ १२॥

(पदार्थप्रकाशिका)

हृग्रहोरिति ॥ हृग्रहोः हकारस्य छन्दसि भकारः स्यादिति सूत्रार्थः । विकरणस्य श्लुरिति । सृजविसर्गे प्रार्थनायां लिङ् । बहुलं छन्दसीति विकरणस्य श्लुः । द्विर्भावहलादिशेषाविति भावः ॥ विद्वानिति ॥ विदज्ञाने । विदेः शतुः वसुः । उगिदचामिति नुम् । हल्ङ्यादिसंयोगान्तलोपौ ।

संहितायां दीर्घादटि समानपद इति नकारस्य रुत्वम् । आतोऽटि नित्यमिति सानुनासिकाकार इति भावः ॥ अदब्ध इति ॥ दम्भु दम्भन अस्मात् निष्ठायामनिदितामिति नलोपे झषस्तथोर्धो धत्वमिति भावः ॥ अत्रापीति ॥ नकेवलं ससृज्यात् इत्यत्र किन्तु मुमोक्त्वित्यत्रापीत्यपिशब्द सम्बन्धः । विकरणस्येति शेषः । ततश्च न द्विर्भावाद्यनुपपत्तिरेवेति भावः ॥ १३ ॥

अवेमह इति ॥ ईङ् गतौ । विकरणस्य लुगिति भावः ॥ क्षयन्निति ॥ क्षि निवासगत्योरित्यस्माल्लटः शतरि व्यत्ययेन शबिति भावः । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः छान्दस इत्याह ॥ अशिश्रथ इति ॥ ननु णिश्रिदुश्रुभ्यः कर्तरि चङिति चङ्विधौ श्रथधातोः अश्रवणात् कथं तस्मात् परस्य च्लेश्चङादेश इत्यत आह ॥ छान्दस इति ॥ तथाच श्रथधातोश्चुरादेरदन्तात् लुङि णिश्रिदुश्रुभ्यः इति च्लेः छान्दसश्चङ् । द्विर्भावः हलादिः शेषः । अग्लोपित्वात् सन्वद्भावेऽपि बहुलं छन्दसीत्यत्राभ्यासस्येत्वमिति भावः । ननु प्रार्थनायां लोटो विधानात् कथं तत्रातीतार्थकलुङः योग इत्यत आह ॥ निश्चितत्वादिति ॥ अतिनिश्चितेऽर्थे भूतशब्दश्चेत्याह सूत्रं परेश इति वक्ष्यमाणत्वात् अतीतत्वाभावेऽपि लुङ् युक्त इति भावः । अथा वयमिति संहितायां छान्दसो दीर्घ इति भावः ॥ १४,१५ ॥

## टीकाविवृतिः

तत्त्वा यामि ॥ त्वायामीत्यसंगतमुच्यते विष्णोरव्यक्तत्वेन तं प्रतिगमनस्यासंभवादित्यतो भाष्ये शरणपदाध्याहारेण योजितमनुवदति ॥ सदा शरणमिति ॥ कथमिति ॥ शरणगमनं केन प्रकारेणेत्यर्थः ॥ ब्रह्मणा वेदवाचेति ॥ ब्रह्म प्रोक्तं तपोध्यात्मवेदज्ञानेषु सूरिभिरिति विश्वोक्तेरिति भावः । वदि अभिवादनस्तुत्योरित्यतः शानचि वन्दमान इति रूपमित्यभिप्रेत्यैतदुभयार्थत्वेन भाष्ये नमन्निति प्रयोग इत्याशयेनाह ॥ स्तुवन्नभिवादयंश्चेति ॥ णमु प्रह्वत्वे शब्दे चेति धातोरिति भावः ॥ भाष्ये यजमान इत्युक्त्वापि अन्य इति किमर्थमुच्यते इत्यतोभिप्रायमाह ॥ उपलक्षणमिति ॥ यामीत्युक्तेति ॥ यामीत्यत्र प्रकृतिभूतो यो धातुस्तदर्थस्य परामर्श इत्यर्थः । यामीत्युक्तार्थस्य शरणगन्तुःपरामर्शे प्रकृतोपयोगाभावाद्धात्वर्थ इत्युक्तम् । अस्मिन्पक्षे यस्मादन्योपि विद्वान् त्वच्छरणप्राप्तिं वांछति तस्मादहमपि शरणं यामीत्युपयोगःसूचितः ॥ अहेळमानोवज्ञामकुर्वन्निति ॥

(टीकाविवृतिः)

रीढावमाननाऽवज्ञावहेलनमसूर्क्षणमित्यमरोक्तेरिति भावः । बुधेर्णिजन्ताल्लोटि सिपि शपि हित्वे अतो हेरिति हेर्लुकि बहुलं छन्दसीति शब्लुकि च बोधीति रूपमिति भावेनाह ॥ बोधि संबोधयेति ॥ कथं संबोधनमित्यतआह ॥ हे शुनःशेपेति ॥ हे उरुशंसेति ॥ अत्र पादादित्वान्नाष्टमिको निघात इति भावः । मुषस्तेये इत्यतो माङ्योगाल्लिङपवादोयं माङिलुङिति लुङ् नमाङ्योगे इत्यडभावश्चेत्याशयेनाह ॥ न छिंद्या इति ॥ ११ ॥

तदिन्नक्तम् ॥ तदिदिति श्रौतपदव्याख्यानरूपमेतदेवेति भाष्यं व्याचष्टे ॥ ब्रह्मणा वंदमान इति प्रकृतमिति ॥ पुनस्तच्छब्दग्रहणात्तद्दिवेति भिन्नवाक्यतया योजयति ॥ दिवा दिवसे चेति ॥ हृद इत्यस्य भाष्ये हृदिस्थ इति प्रतिपदोक्त्या हृच्छब्दात्तत्र भव इत्यणि आदि वृद्धौ हार्द इति स्यात् हृद इति कथमित्यत आह ॥ वृद्ध्यभाव इति । प्रत्ययान्तरं वेति ॥ आकार मात्रमित्यर्थः । ल्यब्लोपपक्षे हृद इति कर्मणि पञ्चमीत्याशयेनाह ॥ हृदधिष्ठायेति ॥ केतो ज्ञानरूप इति ॥ केतशब्दस्य प्रज्ञानामसु पाठादिति भावः ॥ अन्यरूपमिति ॥ स्तुत्यवरुणादिरूपादन्यरूपं व्यासादिरित्यर्थः ॥ उभयत्रापीति ॥ चक्षिङ् व्यक्तायां वाचीति धातुपाठे वचने प्रयोगात् । चष्टे विचष्टे इति पश्यति कर्मसु प्रयोगाच्चेति भावः ॥ समह्वदिति ॥ ह्वेञ् स्पर्धायां शब्दे इत्यतश्छन्दसि लुङ्लङ्लिट इति कालसामान्ये लुङि आदेच इत्यात्वे च्लेर्लिपि सिचि ह्वश्चेत्यङादेश इति भावः ॥ उपास्थितादिति ॥ यूपबन्धनजनितादित्यर्थः ॥ १२ ॥

शुनःशेपो ह्यह्वत् ॥ निगदेनैवेति ॥ पाठेनैवेत्यर्थः ॥ हृग्रहोरिति ॥ एतयोर्धात्वोर्हकारस्य भकारादेश इति सूत्रार्थः ॥ स्थानत्रयं यूपस्येति ॥ ऊर्ध्वाधोमध्यभागरूपमित्यर्थः ॥ द्रोर्वृक्षस्येति ॥ पलाशीद्रुद्रुमागमा इत्यमरोक्तेरिति भावः ॥ संज्ञपनमालंभ इति ॥ हिंसनमित्यर्थः ॥ पूर्वन्यायेनेति ॥ अग्निमीळे इत्यादावध्यात्मादिभेदेनार्थत्रयपरत्वं यथा प्रतिपादितं तेन न्यायेनेत्यर्थः ॥ किंसर्वथापीति ॥ एतत्सूक्तस्थसर्वऋक्ष्वपि वरुणो नैव प्रतिपाद्यःकिमित्यर्थः । शुनःशेपोऽयमि-त्यादिकेनेत्युक्त्या शतन्ते राजन्नित्यादिपूर्वर्क्षु साधारणासु वरुणो न प्रतिपाद्य इति प्रतीयते तन्निरासायाह ॥ यत्रेति ॥ यस्यामृचीत्यर्थः । विष्णुरेवेत्यस्य स्थलं दर्शयति ॥ नहिते इति ॥ तदसंभवात् नहिते इत्यादौ अन्याप्राप्यक्षत्रत्वाद्युक्तेर्वारीशस्य प्रतिपाद्यत्वासंभवादित्यर्थः ॥ येषु गुणेष्विति ॥ सत्त्वादिष्वित्यर्थः ॥ चतुर्थस्येति ॥ पादस्य तात्पर्यमित्यनुवर्तते । सर्वऋगर्थमाह ॥ त्रिष्विति ॥ पदानीति ॥ स्थानानि चिह्नानि वेत्यर्थः ॥ अवसृष्टमिति ॥ वियुक्तमित्यर्थः ॥ विकरणस्येति ॥ बहुलं छन्दसीत्यत्र बहुलग्रहणात्सृजेस्तुदादित्वाज्जातशप्रत्ययस्यापि श्लौ द्वित्वादीति भावः ॥ कर्मपाशादिति ॥ कर्मपाशेभ्य इत्यर्थः ॥ अत्रापीति ॥ मुचेरन्तर्णीतण्यर्थात्तुदादिशस्य श्लुरित्यर्थः ॥ १३ ॥

(टीकाविवृतिः)

अवते हेळः ।। द्वावपीति ।। यद्यप्येकस्मिन्धातौ उपसर्गद्वयं युज्यते प्रणिभवतीत्यादौ दर्शनात्तथापि सदृशयोर्नोपसर्गत्वं एकेनैव क्रियाविशेषावगमेन द्वितीयस्य वैयर्थ्यादित्याशयेनावशब्दावित्युक्तम् । प्रप्रवस्त्रिष्टुभमित्यादौ तु तस्यैकस्यैवार्थविशेषद्योतनाय द्विरुक्तिरिति भावः ।। अवेमहे इति ।। इणो व्यत्ययेनात्मनेपदम् ।। भगवन्निंदेति ।। निन्दां भगवतःशृण्वन् तत्परस्य जनस्य वा । ततो नापैति यःसोपि यात्यधः सुकृताच्च्युत इति भागवतोक्तेरिति भावः ।। क्षयन् क्षितिराश्रय इति ।। क्षि निवासगत्योरिति धातोःशतृप्रत्यय इति भावः ।। शिश्रथ इति ।। श्नाविकरणात् श्रथविमोचनप्रतिहर्षयोरित्यतो लुङि च्लेश्चङादेशे चङीति द्वित्वे सन्वल्लघुनीति सन्वद्भावे सन्यत इत्यभ्यासस्येत्वे बहुलं छन्दस्यमाङ्योगेपीत्यडभाव इति भावः । ण्यन्तादित्वाभावात्कथं णिश्रितिच ङित्यत आह ।। छान्दसश्चङिति ।। लुङो भूते विधानात्कथं भाष्ये वियोजयेति लोट्प्रयोग इत्यत आह ।। निश्चितत्वादिति ।। आशंसायां भूतवच्चेत्यनेन निश्चितत्वादिना प्रशंसायां विवक्षितायां भूतकालप्रत्यया विधीयन्ते अतोत्र लुङ् । वक्ष्यते चैतदेतायामेत्येतदृग्व्याख्यानभाष्ये । उपलक्षणं चैतत्सन्वद्भावोपि छान्दसो ग्राह्यः । श्रुतिभाष्ययोर्विसंवादमाशंक्य परिहरति ।। यद्यप्यत्रेति ।। अत्र श्रुतौ । इमौ असुरप्रचेतःशब्दौ । अत्रोक्तं भाष्ये उक्तम् । प्राणरन्ताखिलज्ञ इत्यनेनेत्यर्थः ।। १४ ।।

उदुत्तमम् ।। उदववीतीति ।। ऋक्प्रथमार्धोक्तोपसर्गत्रयार्थानित्यर्थः । तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति श्रुतिं मनसि निधायान्येषु दत्वेतिभाष्यं त्रेधा व्याचष्टे ।। सुहृभ्द्यो दत्वेति ।। श्रुतौ अस्मदिति पञ्चमीत्याशयेनाह ।। अस्मत्त इति ।। प्रसिद्धपाशवियोजनरूपार्थस्यापि संभवात्पुण्यादिवियोजनमेव भाष्ये कुत उक्तमित्यत आह ।। एवशब्देनेति ।। मुख्यार्थतां परममुख्यार्थतामित्यर्थः ।। अनागसो निर्दोषा इति ।। न विद्यते आगोऽपराधः उपलक्षणत्वेन सर्वो दोषो येषान्ते इति विग्रहः । सृतेश्च मुक्ता इति तु तात्पर्यार्थ इति भावः । ननु एषर्ग्विष्णोरित्यनेनास्या ऋचःविष्णुप्रतिपादकत्वमुच्यते । इदं परेशो वारीशान्तःसंस्थितःस्तूयतेऽत्रेत्यनेनास्य सूक्तस्य विष्णुप्रतिपादकत्व वचनेन पुनरुक्तमित्यत आह ।। परेश इत्यादिनेति ।। वारीशपक्षे प्रसिद्धपाशमोचनप्रार्थन संभवात्कथं प्रतिपाद्यान्तरराहित्य- मित्यत आह ।। एतदपीति ।। उक्तार्थत्वे पाशादिशब्दानां पुण्याद्यर्थत्वे इत्यर्थः । शतं ते राजन्नित्यादावप्येवमेव बोध्यम् ।। अयोग्यत्वं कथमिति ।। अन्यदेवेषु ऋचामयोग्यत्वं केन प्रकारेण । इदमुपलक्षणम् । विष्णौ योग्यत्वं च कथं ज्ञातव्यम् । ऋग्योग्यत्वायोग्यत्वे च तत्तदृगुक्तगुणयोग्यत्वायोग्यत्वाभ्यां ज्ञेये । तच्च कथं ज्ञातव्यमित्यपि ग्राह्यम् । वाक्यैरित्यादि अन्यदेवेषु चैवेत्यन्तं ज्ञेयमित्यर्थः । भाष्ये अन्यदेवेष्वयोग्यगुणानहि ते क्षत्रमित्याद्युक्ताविष्णावेव योग्याश्च विशिष्टैर्वाक्यैर्ज्ञेया

(टीकाविवृतिः)

इत्युक्तेस्तासामृचामन्यदेवेष्वयोग्यत्वं विष्णौ योग्यत्वं च सिद्ध्यतीति भावः । अथवा विष्णौ अन्यदेवेषु च योग्या गुणाः विशिष्टैर्वाक्यैर्ज्ञेया इत्येतावता पूर्तेरपवादहीनैरिति किमर्थमित्यत आह ॥ विशिष्टैरितीति ॥ तान्येवेति ॥ वाक्यान्येवेत्यर्थः । उपलक्षणतयेत्युक्त्या न ते विष्णो जायमानो न जातो देव महिम्नः परमंतमापेत्याद्युदाहार्यम् । पतिःसोमो वरुणस्येत्यादिना कुत्र कुत्र कथं वरुणयोग्यगुणकथनमुच्यत इत्यत आह ॥ अत्र सोम इति ॥ विचाकशदित्यत्र इन्द्रप्रेरकत्वमुच्यते । उरुं हीत्यत्र सूर्यगमनाय मार्गकर्तृत्वम् । उतापवक्तेत्यत्र रुद्रशिक्षकत्वम् । न हि ते इत्यत्रान्याप्राप्यबलादि- युक्तत्वम् । ऊर्ध्वंस्तूपमित्यत्रोत्तमस्थानदातृत्वम् । अस्मे अन्तर्निहिता इत्यत्र स्वरूपज्ञानव्यञ्जकत्वम् । एतानि वरुणे अयोग्यानीत्यर्थः ॥ एवमन्यदिति ॥ अग्नेःपतिःसूर्य इत्यनेन आनो बर्हीरिशादसो वरुणो मित्रो अर्यमा । सीदंतु मनुषो यथेत्यत्राग्नेय्यामृचि मित्रार्यमाख्य-सूर्यस्थापकत्वमग्नावयोग्यमुच्यते । विद्यायाः शर्वोधिप इत्यनेन अतो विश्वान्यद्भुतेत्यादौ वरुणेऽयोग्यं सर्वाश्चर्यदर्शनमुच्यते । इन्द्रःक्रियाया इत्यनेन वेदमासो धृतव्रत इत्यादौ वरुणेऽयोग्यसर्व-कर्मधारणमुच्यते इत्याद्यूह्यमित्यर्थः ॥ मुक्तिमार्गे इति ॥ मुक्तिसाधने संपादनीये यथायोग्यं स्वस्वाभिमन्यमानेन्द्रियप्रेरकत्व इत्यर्थः । विष्णुगुणानान्तारतम्याभावादाह ॥ देवतासंबन्धि-नामिति ॥ १५ ॥ १५ ॥ ५ ॥

**ऋक्संहिता पदपाठसहिता** (सू-२५, व-१)

(२६९) **यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ॥**
**मिनीमसि द्यविद्यवि ॥ १ ॥**

(प०) **यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण ।**
**व्रतम् । मिनीमसि । द्यविऽद्यवि ॥ १ ॥**

(२७०) **मानो वधाय हत्नवे जिहीळानस्य रीरधः ॥ मा हृणानस्य**
**मन्यवे ॥ २ ॥**

(प०) **मा । नः । वधाय । हत्नवे । जिहीळानस्य । रीरधः ॥ मा ।**
**हृणानस्य । मन्यवे ॥ २ ॥**

(२७१) **विमृळीकाय ते मनो रथीरश्वं न संदितम् ॥**
**गीर्भिर्वरुणसीमहि ॥३॥**

(प०) वि मृळीकार्य । ते । मनः । रथीः । अश्वम् । न । सम्ऽदितम् ॥ गीःऽभिः । वरुण । सीमहि ॥ ३ ॥

(२७२) परा हि मे विमन्यवःपतन्ति वस्यइष्टये ॥ वयो न वसतीरुप ॥ ४ ॥

(प०) परा । हि । मे । विऽमन्यवः । पतन्ति । वस्यःऽइष्टये ॥ वयः । न । वसतीः । उप ॥ ४ ॥

(२७३) कदा क्षत्रश्रियं नरमा वरुणं करामहे ॥ मृळीकायोरुचक्षसम् ॥ ५, १६ ॥

(प०) कदा । क्षत्रऽश्रियम् । नरम् । आ । वरुणम् । करामहे ॥ मृळीकाय । उरुऽचक्षसम् ॥ ५, १६ ॥

## ऋग्भाष्यम्

दिवसे दिवसे देव कुर्मो यदपि ते व्रतम् । यथैवसुजनाः ॥ १ ॥ मानो हन्तु साधय निघ्नते । जिहीळानस्त्यजन्धर्मं हरतो माच मन्यवे ॥ २ ॥ मनस्त्वयि निबध्नीमो गीर्भिरश्वं वियोजितम् । बध्नाति सारथिर्यद्वन्मृळीको रक्षकोधिकम् । त्वन्मनोस्मासु वा गीर्भीरक्षणाय विसीमहि ॥ ३ ॥ पराक्पतंति प्रज्ञा मे विविधाः शुभलब्धये । पक्षिणोवसतीर्यद्वद्धानत्वां प्राप्नुवंति च ॥ ४ ॥ अतोखिलक्षत्रपतिमाह्वयामः कदा वयम् । अविनाशिनं रक्षणाय महादर्शनमञ्जसा ॥ ५, १६ ॥

## ऋग्भाष्यटीका

यच्चित् । एकविंशत्यृचमिदं सूक्तम् । दिवसे । हे वरुण देव विशः प्रजाः । सुजना यथा तथैव वयं यच्चिद्यदपि ते व्रतं सेवात्मकं तत्सर्वम् । द्यवि द्यवि दिवसे दिवसे । प्रमिनीमसि । वैदिको धातुः । कुर्मः ॥१॥

मानोवधाय । मानोहन्तुम् । हे वरुण नोस्मान्वधाय हन्तुं हननाय । हत्नवे हन्तीति हत्नुस्तस्मै । निघ्नते पुरुषाय । षष्ठ्यर्थे चतुर्थी । जिहीळानस्त्यजन् धर्ममिति शेषः । तस्य जिहीळानस्य । अनेकार्थत्वाद्धातूनां हिळतिस्त्यागार्थे । दीर्घश्छान्दसः । जहातेर्वा छान्दसमेतद्रूपम् । मा रीरधः मा साधय तस्य वशान्माकार्षीः । किञ्च । हृणानस्य हरतः पुरुषस्य । मन्यवे कोपाय च । मा रीरधः व्यत्ययेन हरतिः श्नाविकरणः । धात्वन्तरं वा हृणातिः ॥ २ ॥

(ऋग्भाष्यटीका)

विमृळीकाय ॥ मनस्त्वयि । हे वरुण वयं मनोऽस्मदीयम् । गीर्भिः वेदवाग्भिः तच्छ्रवणादिना । मृळीकाय ते मृळीके त्वयि । विसीमहि षिञ्बन्धने । निबध्नीमः । त्वद्विषयं कुर्मः । तत्र दृष्टान्तः रथीः सारथिः । सन्दितं सम्यक् खण्डितं वियोजितरथाद्वियुक्तमश्वं न अश्वं यद्वद्रथे बध्नाति रश्मिभिस्तथा। मृळीकायेति वरुणविशेषणं व्याख्याति । मृळीक इति ॥ मृळसुखने । अस्मात्कर्तरी कक् । अनेकार्था हि धातव इति रक्षणार्थत्वम् । वीत्यस्यार्थोधिकमिति । प्रकारान्तरेण व्याख्याति । त्वन्मन इति । हे वरुण ते मनः त्वन्मनः । कृपारूपां त्वन्मनोवृत्तिं गीर्भिः स्तुतिरूपाभिः । मृळीकाय भावे प्रत्ययः रक्षणाय । विसीमहि निबध्नीमः । अस्मास्विति शेषः । दृष्टान्तः पूर्ववत् ॥ ३ ॥

पराहि । पराक् । मे मम । विविधाः अनेकविषयत्वात् । मन्यवः प्रज्ञाः बुद्धिवृत्तयो वस्य इष्टये वस्यःशब्दः शुभपर्यायः । इष्टिः प्राप्तिः इषुगतौ । शुभलब्धये । परा पराक् । त्वत्पराङ्मुखतया पतन्ति गच्छन्ति । हि हा कष्टम् । किमिव । वयः पक्षिणो वसतीरुप न नीडानि प्रति यद्वत् । वैषयिकसुखलाभार्थं मदीया बुद्धयो विषयानेव धावन्ति धिङ् मामिति तात्पर्यम् । यद्वाऽऽत्यन्तिक सुखसाधनता हीनेष्वपि विषयेष्वात्यन्तिक सुखलाभाय पतन्तीति भ्रान्तोस्मीति । प्रकारान्तरेण व्याख्याति । न त्वामिति । पक्षिण इत्याद्यप्यत्रानुवर्तते । नेत्यावर्तनीयम् । ततश्चव सतीरुप वसतीः प्रति वयो न पक्षिणो यद्वदिति व्यतिरेकदृष्टान्तः । तथा मे मन्यवः प्रज्ञाः वस्य इष्टये मोक्षादि शुभलब्धये परा दूरतस्त्वां न विपतन्ति न प्राप्नुवन्ति । हा कष्टमिति च योज्यम् ॥ ४ ॥

कदा । पूर्वसङ्गतत्वेन व्याख्याति । अत इति यतोस्मद्बुद्धयो विषयानेव धावन्ति नव रुणमतस्तं प्रति गन्तुमित्यर्थः । (वयं) कदा मृळीकाय रक्षणाय अस्मदीयस्यमनस इति शेषः । क्षत्रश्रियं क्षत्रं क्षत्रियाः धनं बलं वा तच्छ्रयतियं सक्षत्रश्रीः तम् । अखिलक्षत्रपतिं नरं नरिष्यतीत्यविनाशिनम् । उरुचक्षसम् उरु चक्षो दर्शनं यस्यासावुरुचक्षास्तं महादर्शनं वरुणम् । आकारामहे अञ्जसाह्वयामः ॥ ५, १६ ॥

## मन्त्रार्थमञ्जरी

अथ 'यच्चिद्धि' इत्याद्येकविंशत्यृचं वर्गचतुष्टयात्मकं गायत्रीछन्दस्कं पञ्चविंशं सूक्तम् । देवता तु 'वरुणः' इत्युक्तमेव । हे वरुण देव । विशः, प्रजाः सुजनाः । यथा हि (तथैव वयम्) यत् चित्, यदपि । ते । व्रतम्, सेवात्मकम् । (तत्सर्वम्) द्यविद्यवि, दिवसेदिवसे । प्रमिनीमसि, वैदिको धातुः (वै० नि० २।१४, १९) कुर्म इत्यर्थः ॥ १ ॥

(हे वरुण) नः, अस्मान् । वधाय, हननाय । हत्नवे, हन्तीति हत्नुः, हन्तेः क्नुः, 'हनस्त च' इति नकारस्य तकारः (कृहनिभ्यां क्नुः' इति क्नुः, कित्त्वादनुनासिकलोपः) षष्ठ्यर्थे चतुर्थी, निघ्नतः

(मन्त्रार्थमञ्जरी)

पुरुषस्य । जिहीळानस्य (धर्मम्) इति शेषः, धर्मं त्यजतः, 'ओहाक् त्यागे' इत्यस्य च्छान्दसं रूपम् । मा रीरधः, न साधय, तद्वशान्मा कार्षीः । किं च, हृणानस्य, हरतः, अपहरतः पुरुषस्य । मन्यवे, कोपाय (च) मा (रीरधः) 'राध, साध संसिद्धौ' लुङि णिचि चङ्चुपधाह्रस्वः । हृञः व्यत्ययेन श्नाविकरणस्य शानजन्तस्य रूपम् ॥ २ ॥

(हे) वरुण (वयम्) मनः अस्मदीयम् । गीर्भिः, वेदवाग्भिः, त्वच्छ्रवणादिना । मृळीकाय ते, मृळी (डी) के रक्षके त्वयि, मृडतेः ईकक् (कीकच्) वि सीमहि, 'षिञ् बन्धने' निबध्नीमः, त्वद्विषयं कुर्मः । रथीः सारथिः । संदितम्, सम्यक्खण्डितम्, रथाद्वियुक्तम् । अश्वम् न, अश्वं यथारथे बध्नाति तथा । 'त्वयि मनो (नि) बध्नीमः' इति पूर्वेणान्वयः ॥ यद्वा (हे) वरुण । ते मनः, त्वदीयं मनः, कृपा रूपां त्वन्मनोवृत्तिम् । गीर्भिः, स्तुतिरूपाभिः । मृळीकाय, भावेऽर्थः ईकक् (कीकच्) मृळ (ड) नाय रक्षणाय, अनेकार्थत्वाद्धातूनां सुखनार्थोऽपीह रक्षणार्थः । वि सीमहि, निबध्नीमः । (अस्मासु) इति शेषः । दृष्टान्तः पूर्ववत् ॥ ३ ॥

(हे वरुण) मे, मम । विमन्यवः, विविधा अनेकविषयकत्वान्मन्यवो बुद्धिवृत्तयः । वस्य इष्टये, वस्यसः शुभस्येष्टये, 'इषगतौ' प्राप्तये । परा, पराक्, त्वद्विमुखतया । पतन्ति, गच्छन्ति । हि, हा कष्टम् । किमिव ? वयः, विशब्दोऽयम्, पक्षिणः । वसतीः उप न, नीडानि प्रतीव । इति वैषयिकसुखलाभार्थं मदीया बुद्धयो विषयानेव धावन्ति, यथा दूरे डयमानाः पक्षिणः पक्षौ संकुच्य स्वनीडानि प्रति पतन्ति, एवम् । अतो धिङ्माम् इति तात्पर्यम् । यद्वा वयः, पक्षिणः । वसतीः उप न, नीडानि प्रतीव, व्यतिरेकदृष्टान्तोऽयम् । तथा मे । विमन्यवः, विविधाः प्रज्ञाः । वस्यइष्टये, मोक्षादिरूपशुभलब्धये । परा, दूरतः । (नः) पतन्ति, त्वां न पतन्ति, न शब्दस्यावृत्त्यात्राप्यन्वयः, न शक्नु (प्राप्नु) वन्ति । हि, हा कष्टम् इति ॥ ४ ॥

यतोऽस्मद्बुद्धयो विषयानेव धावन्ति, न वरुणम्, अतस्तं प्रति गन्तुमित्यर्थः । (वयम्) कदा मृळीकाय, रक्षणाय । (अस्मदीयस्य मनसः) इति शेषः । क्षत्रश्रियम्, क्षत्रं क्षत्रियजातं धनं बलं वा यं श्रयति स क्षत्रश्रीस्तम्, अखिलक्षत्रपतिम् । नरम्, न रिष्यतीत्यविनाशिनम् । उरुचक्षसम्, उरुमहच्चक्षो दर्शनं यस्य तं महादर्शनम् । वरुणम् । आ करामहे, अञ्जसाह्वयामः, कृञः शब्विकरणं छान्दसम् ॥ ५ ॥ इति षोडशो वर्गः ॥ १६ ॥

## रूपावतारः

यच्चित् । वैदिको(ऽयं)धातुरिति । धातुपाठे मीञ् हिंसायामिति पठ्यते । अयं च तद्भिन्नः वैदिको ह्रस्वो धातुरित्यर्थः । मिधातोः श्नाप्रत्यये "ईहल्यघोः" (६।४।११३) इतीत्वे 'इदंतो मसि' (७।१।४६) इति मसप्रत्यये तस्येदन्तत्वेमिनीमसीति रूपम् ।। १ ।।

मानो वधाय ।। हत्नव इति । हन्तेः क्त्नुप्रत्यये अनुदात्तोपदेश....(६।४।३७) इति नकारलोपे चतुर्थ्यैकवचने हत्नव इति रूपम् । जिहीळानस्येति । हिळतेः शानचि श्लौ द्विर्वचने छान्दसे धातोर्दीर्घे षष्ठ्यैकवचने जिहीळानस्येति रूपम् । जहातेर्वेति । ओहाक् इत्यस्मात् लटः शानचि श्लौ धातोरीकारादेशे द्वित्वे अभ्यासस्य ह्रस्वत्वे लुगागमे षष्ठ्यैकवचने जिहीळानस्येति रूपम् । मा रीरध इति ।। राध संसिद्धावित्यतो णिजन्तात् माङ्योगात् लोडर्थे लुङि 'जिश्रि... (३।१।४८) इति च्लेश्चङि' णौ चङ्युपधाया ह्रस्व (७।४।१) इति ह्रस्वत्वे द्वित्वादौ सन्वल्लघनि....(७।४।१३) इति सन्वद्भावे "सन्यतः" (७।४।७६) इतीत्वे 'दीर्घो लघोः' (७।४।९४) इति अभ्यासस्य दीर्घे च मा रीरध इति रूपम् । व्यत्ययेनेति हृधातोः लटः शानचि श्नाप्रत्यये हृणानस्येति रूपम् ।। २ ।।

विमृळीकाय ।। सीमहीति । षिञः महिङि छान्दसे विकरणाभावे धातोर्दीर्घे टेरेत्वाभावे च सीमहीति रूपम् । रथीरिति । रथशब्दात् अस्यास्तीत्यर्थे इनिप्रत्यये नकारस्येकारे सवर्णदीर्घे सोः रुत्वे तस्य विसर्गे च रथीरिति रूपम् । भावेप्रत्यय इति । ईककूप्रत्यय इत्यर्थः (मृळीकाय) ।। ३ ।।

परा हि ।। वस्यस्शब्द इति । वस आछादन इत्यस्मात् औणादिके यस् प्रत्यये वस्यस् शब्दः सकारान्त इति बोध्यम् । पतन्तीति । पतन्तीति हेतोरहं आत्यन्तिकसुखासाधने तत्साधनत्वभ्रमवानित्यर्थः । दूरत इति । दूरत्वान्निमित्तात् न विपतन्तीत्यर्थः ।। ४ ।।

कदा ।। करामह इति ।। कृञ् कृतावित्यस्माद्भौवादिकात् शप्प्रत्यये गुणे महिङि करामहे इति रूपम् ।। ५ ।। १६ ।।

## पदार्थप्रकाशिका

यच्चिद्धि ते विशो यथा । सुजना यथेति । यथान्ये सज्जनास्त्वत्सेवात्मकं कर्मकुर्वन्ति तथा वयमपीत्यर्थः । सेवात्मकं व्रतं सेवारूपं कर्म तिष्ठतीति शेषः । ननु मीकरण इति धातोः प्रमीनीमसीति वक्तव्यम् । कथं प्रमिनीमसीति । मिनोतेर्ह्रस्व इत्यत आह । वैदिकोयं धातुरिति । निगमे मिनो रण इति मिनोतेः ह्रस्वतायाः विधानात् प्रमिनीमसीति युक्तमिति भाव इत्याहुः ।

मिनोतेर्हि सार्थकत्वात् कथं कुर्म इति व्याख्यानमित्यत आह। वैदिकोयं धातुरिति। हिंसार्थकोपि अयं धातुर्वेदे करणार्थक इत्यप्याहुः ॥ १ ॥

मानोवधाय हत्नवे । निघ्नते हननशीलाय । नृशंसायेत्यर्थः । जिहिलानस्य निघ्नत इत्यनयोर्विशेषणविशेष्यभावोपपत्यर्थमाह। षष्ट्यर्थ इति। अहल्यायै जारेतिवदिति भावः। ननु हिलृप्रेरणे हिलृअनादर इति धातोः त्यजन्निति कथं व्याख्यातमित्यत आह। अनेकार्थत्वादिति। ननु जिहिलानस्येत्येव स्यात्। ननु जिहीलानस्येति दीर्घः। विधायकाभावादित्यत आह। जहातेर्वेति। ओहाक् त्याग इति धातो रूपं जिहीलान इत्येवमाकारमेव भवतीति भावः। ननु ओहाक् त्याग इति धातोः परस्मैपदित्वादात्मनेपदिनि विहितः कानच् प्रत्ययः कथमित्यत उक्तम्। छान्दसमेतदिति। तस्येति। पूर्वोक्तहिंसकपुरुषस्येत्यर्थः। हरतोरपहर्तुः। योन्यथा संतमात्मानम् अन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणेशापहारिणेति वचनात् हरत ईशमपहरतश्चोरस्य मायावादिन इत्यर्थः।

ननु हृणानस्येति कथम्। हृञ्हरणे अस्माच्छपि अकारमात्रं विहाय तस्य लोपे शानचि शकारचकारयोः लोपे गुणे तस्य च रपरत्वेन नस्य णत्वे हर आप्तेति जाते आनेमुगिति मुगागमे उगित्यस्य लोपे हरम् आण हरमाणेति स्यादित्यत आह। व्यत्ययेनेति। शब्विकरणव्यत्ययेनेत्यर्थः। तथा हृञ् अस्मात् छन्दस्त्वाच्छब्विकरणव्यत्ययेन श्नाविकरणे शेकारलोपे नस्य णत्वे शानचि शकारचकारयोर्लोपे पूर्वसवर्णदीर्घे हृणानेति रूपम् । अत्र श्नाविकरणस्यापि सत्वेन सार्वधातुकमपिदिति सार्वधातुकस्य ङित्कार्यकारित्वोक्तेः क्‍िङितिचेति ङिति परे गुणप्रतिषेधे हृणानस्येति युक्तमिति भावः। नेदं हृञ् हरण इति धातोः रूपम्। एतत्तस्य धातोः शब् विकरणत्वेन श्नाविकरणत्वव्यत्ययेनाश्रयणीयं स्यात्। किन्नाम श्नाविकरणान्तधातुमध्ये पठितमिदं धात्वन्तरमेवेति पक्षान्तरमाह । धात्वन्तरं चेति । तथाच यो हननशीलो नृशंसोऽत एव धर्मत्यागीतत्कर्तृकवधायास्मान् तद्वशान्माकार्षीः। तथात्वे सहनिष्पत्तिस्तत योस्मदपहर्ता ईशापहर्ता वा पुरुषः तत्कोपविषयांश्चास्मान् माकार्षीरिति ऋक् तात्पर्यं द्रष्टव्यम् ॥ २ ॥

विमृळीकाय ते मनः। तच्छ्रवणादिना विसीमहीत्यन्वयः। चतुर्थी सप्तम्यर्थ इत्याशयेनाह। मृळीके त्वयीत्यादिना । वक्ष्यमाणरीत्या रक्षके त्वयीत्यर्थः । रश्मिभिः रज्जुभिः । ईकगिति । मृड् अस्मात् ईकक्प्रत्यये ककारलोपे मृडिकेति भवति । बह्वृचास्तु डकारस्थाने लकारं पठन्ति मृळीत्युपपन्नमिति ज्ञातव्यम्। नन्वेवं तर्हि मृळीको रक्षक इति व्याख्यानं कथमुपपन्नमित्यत आह। अनेकार्थाहीति। सुखार्थस्यापि मृडधातोरित्यर्थः। 'क्रियावाचित्वमाख्यातुमैकैकोर्थः प्रदृश्यते।

प्रयोगतोऽनुगन्तव्याः अनेकार्था हि धातवः' इति वचनादिति भावः। भाव इति मृङ्धातोः भाव एव। ईकक् प्रत्ययो न कर्तरीत्यर्थः। तथाच स्तुतिरूपाभिर्गीर्भिः त्वन्मनोवृत्तिभिः स्तुत्वा पश्चादन्तःकरणे स्थापयित्वा ध्यायेमेति तात्पर्यम्। दृष्टान्त इति। रथीरश्वमिति दृष्टान्तः। पूर्वयोजनायामिवेत्यर्थः॥ ३॥

पराहिमेविमन्यवः। वीत्यस्यार्थो विविधा इति। विविधत्वं कुत इत्यत आह। अनेकेति। इषुगताविति गतिः प्राप्तिः। अस्माद्भावे किप्रत्यये कित्वाद्गुणाभावे ष्टुत्वे च इष्टिरिति भवतीति द्रष्टव्यम्। शुभलब्धय इति। वैषयिकशुभप्राप्तय इत्यर्थः। त्वत्पराङ्मुखतया शुभलब्धय एव पतन्तीत्यर्थः। श्रौतहिशब्दे व्याख्यानपरस्य हा इत्यस्यार्थः कष्टमिति। वसेत्युपनेति पदत्रयस्य क्रमेणार्थमाह। नीडानि प्रति यद्वदिति। गछन्तीति शेषः। श्रौतहीत्येतल्लब्धं तात्पर्यं दर्शयति। वैषयिकेति। विषयानेवेति। त्वत्पराङ्मुखतयेति शेषः। श्रौतहिशब्दस्यैव तात्पर्यान्तरमाह। यद्वेति। पतन्तीति। त्वत्पराङ्मुखो भूत्वेति शेषः। आवर्तनीयमिति। एकस्य इवेत्यर्थः। आवर्तितस्य तु निषेधोर्थ इत्यवगन्तव्यम्। व्यतिरेकदृष्टान्त इति। यथा पक्षिणो वसतीः प्रति गच्छन्ति तद्वन्मे प्रजाः दूरतो वन्द्यमानं त्वां प्रति मोक्षादिशुभलब्धये न पतन्तीत्यर्थः। प्राप्नुवन्ति। विषयीकुर्वन्ति। ननु पूर्वोत्तरयोजनयोः को भेद इति चेदुच्यते। पूर्वं बुद्धयः पराङ्मुखतया विषयान् प्रति पतन्तीत्युक्तम्। इदानीं तु परावरे विद्यमानं भगवन्तं प्रति मोक्षप्रयोजनाय पतन्तीत्युच्यते इति स्पष्टो महान् भेदः।४।

कदा क्षत्रश्रियं नरम्। अत इत्यनेन सूचितसङ्गतिं विवृणोति। यत इति। रक्षणायेति। यथा विषयान् प्रतिगच्छति तथा रक्षणायेत्यर्थः। क्षत्रशब्दस्य क्षत्रियनबलनामसु पाठादाह। क्षत्रिया धनं बलं वेति। तत्तु क्षत्रियादिकम्। श्रयति। आश्रित्य वर्तते। यं वरुणम्। अखिलक्षत्रेति। क्षत्रशब्दवाच्यम् अखिलं यत्क्षत्रियधनबलरूपं तत्परमित्यर्थः। आह्वयाम इति। तथाच तदाह्वानकरणे बुद्धीनां तं प्रति गमनसम्भवेन मनसो विषयेषु गमनासम्भवात्तद्रक्षणं भविष्यतीति भावः॥ ५, १६॥

## पदार्थदीपिका

वैदिको धातुरिति॥ मीकरणे। अस्मात् लडुत्तमपुरुषबहुलवचनं मस्। इदन्तो मसिरिति इदन्तोपजनः क्र्यादित्वात् श्ना। ईहल्यघोरितीकार इति भावः। यद्यपि वैदिकधात्वनाश्रयणेऽपि मीङ् हिंसायाम्। इन्दन्तो मसिः। क्र्यादिभ्यः श्ना। मीनातेर्निगम इति ह्रस्वत्वम्। ईहल्यघोरितीकार इति वेदापव्याख्यानरीत्या व्युत्पादयितुं युक्तम्। तथापि हिंसार्थत्वस्य

(पदार्थप्रकाशिका)

प्रकृतेऽनुपयुक्तत्वात् तदानेकार्थतयास्यैव करणार्थतायाश्चागतिकत्वात् तदनाश्रयणमिति ध्येयम् । यद्वा नायमर्थः । मीङ् हिंसायामिति धातु परित्यागेन प्रकृत्यन्तरमेतदिति । किन्नामानेकार्थत्वाद्धातूनां मीङ् हिंसायामित्यस्यैव करणार्थत्वम् । वैदिकत्वोक्तिस्तु इदन्तो मसिरित्यस्य वैदिककार्यस्याश्रयणीयत्वाभिप्रायेणेत्यनवद्यमिति ध्येयम् ।। १ ।।

त्यागार्थ इति ।। त्यागार्थात् हिलते र्लिटि तस्य लिटः कानज्वेति कानच् । द्विर्भाव हलादिशेषौ । कुहोश्चुरिति चुत्वम् । अभ्यासे चर्चेति जश्त्वेन जकार इति भावः । नन्वेवं जिहिळानस्येति भवेत् जिहीळानस्येति कथं दीर्घ इत्यत आह ।। दीर्घ इति ।। जहातेर्वेति ।। तथा च ओहाक् त्याग इति तस्य त्यागार्थतया पाठान्नानेकार्थत्वाश्रयणमिति भावः । जहाविति जिहीळान इति व्युत्पत्तिः । ननु तस्य परस्मैपदित्वात् आत्मनेपदे विहितः कथं कानच् स्यादित्यत उक्तम् ।। छान्दसमिति ।। ततश्च जहातेर्लिटः कानज्वा । द्विर्भावहलादिशेषह्रस्वत्वचुत्वजस्त्वेष्वभिमतरूप-सिद्धिरिति भावः ।। मारीरध इति ।। राध साध संसिद्धावित्यस्मात् चङि णिलोपोपधा-ह्रस्वत्वद्विर्भावहलादिशेष ह्रस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः । न माङ्योग इत्यडभाव इति भावः ।। व्यत्ययेनेति । हरतेर्व्यत्ययेन श्नाप्रत्यये लटि शानचि अभिमतरूपसिद्धिरिति भावः । ।। धात्वान्तरं वेति ।। तथा च न व्यत्ययाश्रयणमिति भावः । ततश्च ह्णीङ् हरण इति हरणार्थात् हृणातेः लटि शानचि पृषोदरादित्वात् अभिमतरूपसिद्धिरिति ज्ञेयम् ।। २ ।।

षीञ् बन्धन इति ।। अस्माद्विकरणस्य लुक् । दीर्घश्छान्दस इति भावः ।। रथीरिति ।। मत्वर्थीयेकारोऽत्र ज्ञेयः ।। सन्दितमिति ।। दो अवखण्डने निष्ठेति क्तः । द्यति स्यतिमास्थामितीकारादेश इति भावः ।। चक्षो दर्शनमिति चक्षेर्बहुलं सिप्प्रत्ययासुन्शिद्वद्भावात् ख्याञादेश इति भावः ।। ३ ।।

क्षत्रं क्षत्रिया इति ।। उपक्षत्रं पृंचीतेत्युत्तरमन्त्रस्य क्षत्रशब्दस्य उपपृक्तः क्षत्रियैः सः इति क्षत्रियपरत्वस्य भाष्यकारेण वर्णितत्वात् तदनुसारेण अत्रापि क्षत्रशब्दः क्षत्रियपर इत्यर्थः ।। धनमिति ।। मद्यं रेक्णं रिक्थमिति अष्टाविंशतिधननामसु क्षत्रं भग इति पठितत्वात् इह धनं वा क्षत्रमित्यर्थः ।। जलं वेति ।। अर्णक्षोद इति एकशतोदकनामसु सुखं क्षत्रमावधा इति पठितत्वात् जलं वा क्षत्रमित्यर्थः । अत्र टीकायां जलमित्येव मूलपाठः । बलमिति तु लेखकदोष प्रयुक्त इति ज्ञेयम् ।। तच्छ्रयन्ति यं सक्षत्रश्रीरिति ।। एतच्च तात्पर्यमात्रकथनम् । नत्विदं विग्रहवाक्यम् । अत्र कर्मणि क्विपा तस्यासमानार्थत्वात् वृत्तिसमानार्थेनैव हि विग्रहवाक्येन भवितव्यमिति भाष्योक्तेः । विग्रह

(पदार्थप्रकाशिका)

वाक्यं तु क्षत्रेण श्रीयते आश्रीयत इति क्षत्रश्रीः । क्विप् वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं चेति कर्मणि क्विप् दीर्घश्चेति द्रष्टव्यम् ।। करामह इति ।। करोतेर्व्यत्ययेन शबिति भावः ।। ५, १६ ।।

## टीकाविवृतिः

यच्चिद्धि ते ।। एकविंशत्यृचमिति ।। यच्चित्सैकेत्यनुक्रान्तत्वात् । अस्यार्थः । यच्चिदिति सूक्तम् । सैका एकयासहिता विंशति र्ऋचामिति । विशो यथेति श्रौतदृष्टान्तवाक्यं व्याचष्टे ।। विशःप्रजा इति ।। मनुष्यनामसु पाठादिति भावः ।। द्यविद्यवीति ।। द्युरह्निवह्नौ त्रिदिवे इति विश्वोक्तेर्दिनवाचकात् द्युशब्दात्सप्तम्येकवचने छान्दसत्वा दच्च घेरित्यस्याप्रवृत्तौ घेर्ङितीति गुणेऽवादेशे वीप्सायां द्वित्वादहर्नामसु पाठाच्चेति भावः । मीङ्हिंसायामित्यतःश्नाप्रत्ययस्य श्नाभ्यस्तयोरात इतीत्वे मस्प्रत्ययस्य इदंतो मसिरितीदंतत्वे मीनीमसीति स्यात्कथं धातो र्ह्रस्वत्वमित्यत आह ।। वैदिको धातुरिति ।। धातुपाठान्ते बहुलमेतन्निदर्शनमित्युक्तेरिति भावः । अनेन कुर्म इत्यर्थोप्युपपादितो भवति ।। १ ।।

मानो वधाय ।। हत्नवे इति ।। हंतेःकृहनिभ्यां क्त्नुरिति क्त्नुप्रत्यये अनुदात्तोपदेशवनतीत्यनेन नकारलोपे हत्नुरिति रूपमिति भावः । हत्नवे इत्यस्य जिहीळानस्येत्येतत्सामानाधिकरण्यायषष्ठ्यर्थे इति । हिळभावकरण इति धातोःकथं त्यागार्थत्वमित्यत आह ।। अनेकार्थत्वादिति ।। तर्हि अस्माल्लिटःकानज्वेति कानचि द्वित्वादौ च जिहिळान इति धातोर्ह्रस्व एव स्याद्दैर्घ्यं कथमित्यत आह ।। दीर्घ इति ।। जहातेर्वेति ।। ओ हाक् त्यागे इत्यस्माच्छान्दसानि कार्याणि लटःकानज्रूपात्मनेपदं धातोरीकारादेशोलुगागमश्चेत्येतानि ज्ञेयानीत्याशयः ।। मारीरध इति ।। राध साध संसिद्धावित्यतो णिजन्तान्माङ्योगाल्लोडर्थे लुङिणिश्रीति च्लेश्चङि णौ चङ्युपधाया इत्युपधाह्रस्वत्वे द्वित्वादौ सन्वल्लघुनीति सन्वद्भावे सन्यत इतीत्वे दीर्घो लघोरित्यभ्यासदीर्घ इति भावः ।। तस्य वशानिति ।। घातकस्य धर्महीनस्य पुरुषस्य वशीकरणेऽस्माकं हननं स्यादिति भावः ।। किंचेति ।। न इत्यनुवर्तते । हरतश्चोरस्य कोपोऽस्मासु मा भूदित्याशयः । हरतेःशब्विकरणत्वाल्लटः शानचि आने मुगिति मुगागमे हरमाण इति स्यात्कथं हृणानस्येत्यत आह ।। व्यत्ययेनेति ।। व्यत्ययो बहुलमित्युक्तेरिति भावः ।। २ ।।

विमृळीकाय ।। षिञ्बन्धन इति । अस्माल्लटि छान्दसेषु स्वादित्वात्प्राप्तश्नुप्रत्ययाभावो धातोर्दैर्घ्यं महिङ्ष्टित आत्मनेपदानामित्येत्वाभाव इत्येतेषु कृतेषु सीमहीति रूपमिति भावः ।। रथीरिति ।। रथो नियोज्यत्वेनास्यास्तीत्यर्थे इनिप्रत्यये रथिन ईकारो वाच्य इत्यलोंत्यपरिभाषया

(टीकाविवृतिः)

नकारस्येकारादेशो सवर्णदीर्घे सोःरुत्वविसर्गाविति भावः ।। संदितमिति ।। संपूर्वाद्दोवखण्डने इत्यतःक्तप्रत्यये द्यतिस्यतिमास्थामित्तिकितीति धातोरिकारादेश इति भावः ।। रश्मिभिरिति ।। रज्जुभिरित्यर्थः ।। वरुणविशेषणमिति ।। प्रथमव्याख्याने वरुणविशेषणम् । द्वितीयव्याख्याने प्रयोजनपरत्वात्तस्येति- भावः ।। कर्तरीकगिति ।। मृडःकीकच्कंकणाविति विहितेकप्रत्ययस्य कित्वादीकगित्यनुवादोयम् । सौत्रस्य यथाश्रुतानुवादे तु कीकजित्युक्तिः स्यात् । अत एव मृळीकशब्दश्चित्वाच्चित इत्यन्तोदात्तः । येत्यस्य सुस्वादनुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति स्वरितत्वं ज्ञेयम् ।। प्रकारान्तरेणेति ।। दृष्टान्तांशं विहायेति शेषः ।। भावेप्रत्यय इति ।। उणादयो बहुलमित्युक्तेरीकग्भावे इत्यर्थः ।। ३ ।।

पराहि ।। विमन्यव इत्यत्र विशब्दार्थमाह ।। विविधा इति ।। मन्यवःप्रज्ञा इति ।। मनु अवबोधने इत्यतो भावे यजिमनिशुंधिदसिजनिभ्यो युजिति युच्प्रत्यय इति भावः ।। वस्यःशब्द इति ।। वस आच्छादने इत्यतःकर्मणि औणादिके यस्प्रत्यये वस्यते आच्छाद्यते इति वस्यःशुभं गोप्यत्वादिति भावः ।। वय इति ।। विःपक्षिपरमात्मनोरित्यभिधानादिति भावः । श्रौतपूर्वार्धतात्पर्यमाह ।। वैषयिकेति ।। वस्य इष्टये इत्यस्य तात्पर्यार्थःवैषयिक सुखलाभार्थमिति । परापतन्तीत्यस्य विषयानेत्र धावन्तीति । तात्पर्यान्तरमाह ।। यद्वेति ।। मुख्यामुख्यन्यायेन वस्य इष्टये इत्यस्यात्यन्तिक-सुखलाभायेति तात्पर्यार्थकथनम् । तथा परापतन्तीत्यस्यात्यन्तिक सुखसाधनताहीनेष्वपि विषयेषु पतन्तीति ।। इति भ्रान्तोस्मीति ।। इति हेतोरात्यन्तिकसुखसाधनता ज्ञानात् भ्रान्तोस्मीत्यर्थः ।। नेत्यावर्तनीयमिति ।। तत्रैकोनशब्द उपमार्थे वय इत्यनेन संबध्यते । द्वितीयो निषेधार्थः । पतन्तीत्यनेनेत्याशयेनाह ।। ततश्चेति ।। परादूरत इति ।। स्थितमिति शेषः । अव्यक्तस्वभावमिति यावत् । न प्राप्नुवन्ति न विषयीकुर्वन्तीत्यर्थः ।। ४ ।।

कदा क्षत्रश्रियम् ।। पूर्वसंगतत्वेनेति ।। अत इति पदं भाष्ये पूर्वऋगुक्तार्थस्यैतदर्थं प्रतिहेतुत्वद्योतनाय गृहीतं न तु श्रौतपदव्याख्यानायेति भावः ।। अतस्तं प्रतिगन्तुमित्यर्थः इति ।। अत इत्यस्य तं प्रतिगन्तुमित्यर्थो बोध्यः । बुद्धीनां वरुणविषयकत्वरूपप्रयोजनस्य विद्यमानत्वादित्याशयः । रक्षणस्य रक्ष्यसापेक्षत्वादाह ।। अस्मदीयस्येति ।। मनसो रक्षणं नामविषयान्प्रतिगमननिवारणपूर्वकं हरौ स्थापनं बोध्यम् । भाष्ये अखिलेत्युक्तिस्वारस्याय क्षत्र शब्दार्थानाह ।। क्षत्रं क्षत्रिया धनं बलं वेति ।। क्षत्रशब्दस्य क्षत्रियवाचकत्वात् धनबलनामसु पाठाच्चेति भावः ।। तच्छ्रयतीति ।। तत्क्षत्रं कर्तृ यं वरुणं श्रयतीत्यर्थः ।। न रिष्यतीति ।।

(टीकाविवृतिः)

निषेधार्थकनशब्दोपपदाद्रिष हिंसायांचेत्यतो दैवादिकादौणादिको ड इति भावः ।। आकरामहे इति ।। कृञ्करणे इति भौवादिकात् डुकृञ्करणे इत्यतो वा व्यत्ययेन शपि रूपमेतदिति भावः ।। ५ ।। १६ ।।

ऋक्संहिता पदपाठसहिता (सू-२५, व-२)

(२७४) तदित्समानमाशाते वेनन्ता न प्र युच्छतः ।। धृतव्रताय दाशुषे ।। ६ ।।

(प०) तत् । इत् । समानम् । आशातेइति । वेनन्ता । न । प्र । युच्छतः ।। धृतऽव्रताय । दाशुषे ।। ६ ।।

(२७५) वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।। वेद नावः समुद्रियः ।। ७ ।।

(प०) वेद । यः । वीनाम् । पदम् । अन्तरिक्षेण । पतताम् । वेद । नावः । समुद्रियः ।। ७ ।।

(२७६) वेदमासो धृतव्रतो द्वादश प्रजावतः ।। वेदा य उपजायते ।। ८ ।।

(प०) वेद । मासः । धृतऽव्रतः । द्वादश । प्रजाऽवतः ।। वेद । यः । उपऽजायते ।। ८ ।।

(२७७) वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ।। वेदा ये अध्यासते ।।९।।

(प०) वेद । वातस्य । वर्तनिम् । उरोः । ऋष्वस्य । बृहतः ।। वेद । ये । अधिऽआसते ।। ९ ।।

(२७८) नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा ।। साम्राज्याय सुक्रतुः ।। १०, १७ ।।

(प०) नि । ससाद । धृतऽव्रतः । वरुणः । पस्त्यासु । आ ।। साम्ऽराज्याय । सुऽक्रतुः ।। १०, १७ ।।

## ऋग्भाष्यम्

तत्प्रसादाद् ब्रह्मवायू सममेवावगच्छतः । वेनन्तौ हि विजानन्तौ तौ हि ज्ञानिवरौ ौ । यथाज्ञानं प्रयोगं च दाशुषे कुरुतो नतौ । अश्विनौ वरुणश्चेत्स्यात् ॥ ६ ॥ आकाशे क्षेणां पदम् । वेत्त्यसौ सूक्ष्मविज्ञानात्तथा नावो जलेब्धिगः । मुक्तानां च स्थितिं वेद नस्य च गतिं पराम् । क्षीराब्धिशयनो विष्णुः ॥ ७ ॥ कालं कालोद्भवैः सह । य त्मनः समीपेच जायते तं च पद्मजम् । मुक्तं वा ॥ ८ ॥ वर्तनां ोर्महतोतिप्रकाशिनः । बृहतो ज्ञानिनश्चैव बृहतो महतोपि वा । अधिकानि पदान्येव अध्यासतेपि तान् ॥ ९ ॥ साम्राज्याय सपस्त्यासु निषसाद प्रजासु च । ानः ॥ १०, १७ ॥

## ऋग्भाष्यटीका

ादित् । तत्प्रसादात् । तत् तस्माद्वरुणात्तत्प्रसादादिति यावत् । समानमित् सममेवाशाते । अशूव्याप्तौ र्थाः ज्ञानार्थाः अवगच्छतः । कौ । ब्रह्मवायू । कुत एतत् । वेनंताविति विशेषण ्थ्यादित्याशयवान्व्याचष्टे । वेनन्ताविति । अनेनापि कथं ब्रह्मवायू निश्चीयेते इत्यत आह ॥ तौ हीति । भूतौ यौ तौ धृतं व्रतं येनासौ धृतव्रतस्तस्मै धृतव्रताय । दाशुषे यजमानाय । न प्रयुच्छतो न प्रयच्छतः । रुतः । किं यथार्थज्ञानं प्रयोगं च कर्मणः योग्यतातिरेकेणेति शेषः । यद्वा युच्छ प्रमादे । यौ तौ ताय दाशुषे यथार्थज्ञानं प्रयोगं च न प्रयुच्छतो न कुरुतो विभ्रष्टमिति शेषः । एवं विष्णुपक्षे आशाते याः क्रियायाः कर्तारौ ब्रह्मवायू कथितौ । प्रसिद्धवरुणपक्षे तयोरसम्भवात्कावित्यत आह ॥ नाविति । अत्र वरुणशब्देन प्रसिद्धवरुणो विवक्षितः स्याच्चेत्तदाश्विनौ आशाते इत्यस्याः क्रियायाः ौ ज्ञातव्याविति शेषः ॥ ६ ॥

दायः । आकाशे । य्रोसौ वरुणोंतरिक्षेण सप्तम्यर्थे तृतीया । आकाशे । विवक्षाभेदेनाधिकरणस्यैव त्वमिति वा । पततां गच्छताम् । वीनां पक्षिणाम् । पदं वेद वेत्ति । कथमेतत् । सूक्ष्मविज्ञानात् । ः समुद्रियः समुद्राभ्राद्धन् । अब्धिगः जलेनावः पदं वेद तदिति पूर्वेण सम्बन्धः । ऋचं प्रकारान्तरेण याति । मुक्तानां चेति । यः समुद्रियः समुद्रे भवः क्षीराब्धिशयनो विष्णुरन्तरीक्ष्यत इत्यन्तरिक्षं परं न । पततां तत्प्रसादात्संसारादुत्पतताम् । वीनां विशिष्टानां मुक्तानाम् । पदं स्थितिं वेद । नयतीति नौ ् । तस्य ज्ञानस्य च पदं पराङ्गतिं मुख्यं विषयं स्वस्वरूपं वेद ॥ ७ ॥

(ऋग्भाष्यटीका)

वेदमासः । कालम् । धृतं व्रतं कर्म येनासौ धृतव्रतो वरुणः । प्रजावतः प्रजायन्त इति प्रजाः कार्याणि । तद्युक्तान्द्वादश मासो मासान्वेद । मासशब्दपर्या योमास्शब्दः । तत्तत्कालोद्भवैः कार्यैः सह सकलं कालं च वेदेति यावत् । यश्चोपाऽऽत्मनः समीप एव जायते न तु व्यवधानेन तं पञ्चजं च वेद । अव्यवधानेन जन्मप्रदर्शनाय पञ्चजमित्युक्तम् । यद्वा य आत्मन उप समीपे जायते प्रवर्तते सामीप्यादिमान् भवति तं मुक्तं वेद । जातावेकवचनम् ॥ ८ ॥

वेदवातस्य । वर्तनाम् । अत्रोरोर्बृहत इति पर्यायौ । पौनरुक्त्यपरिहारार्थमुरोरिति तावद्व्याख्याति । महत इति । परिमाणादिगुणैः । बृहत इत्येतदृष्वस्येत्येतद्विशेषणतया व्याख्याति । अतिप्रकाशिन इति । ऋष्वशब्दो बलवत्प्रकाशस्यापि वाचकः । ब्राह्मप्रकाशवचनत्वमुक्तं ज्ञानप्रकाशमादायापि बृहतः ऋष्वस्येति विशेषणविशेष्यभावेन व्याख्याति । बृहत इति । एवशब्दोस्यार्थस्य मुख्यत्वं द्योतयति । यद्वा बृहत इत्येतदुरोरित्येतस्यैव विशेषणमित्याह । बृहत इति । उरोरित्युक्ते ह्युपचारेणापि महत्त्वं शङ्क्येत । तन्माशङ्कीति बृहत इत्यनेनोरुत्वं विशेष्यत इत्यर्थः । ततश्च उरोर्ऋष्वस्य बृहतो वातस्य । वर्तनिं वर्तनां प्रवृत्तिं वेद । येदेवा अधि अधिकान्येव पदान्यध्यासतेऽधितिष्ठन्ति तानपि वेदेति । अत्राधीत्येतदावृत्त्या योजितमिति ज्ञातव्यम् ॥ ९ ॥

निषसाद । साम्राज्याय । सुक्रतुः सुज्ञानः । धृतव्रतः सः वरुणः । साम्राज्याय सकलपरिपालनाय । पस्त्यासु प्रजासु । निषसाद प्रजा अधिष्ठितवान् । चशब्दात् गृहेष्विति च समुच्चिनोति ॥ १०, १७ ॥

## मन्त्रार्थमञ्जरी

तत्, तस्मात्, वरुणप्रसादादिति यावत् । वेनन्ता, वेनन्तौ, जानन्तौ, ब्रह्मवायू । (वरुणम्) समानम् इत्, समानमेव । आशाते, 'अशू व्याप्तौ' (धा० १२६५) व्याप्तेर्गतिपर्यायत्वाज्ज्ञानार्थोऽयमत्र धातुः, अवगच्छतः ॥ (यौ) वेनन्तौ । धृतव्रताय, धृतं व्रतं येन तस्मै । दाशुषे, यजमानाय । यथार्थज्ञानं कर्मप्रयोगं च न प्र युच्छतः, न प्रयच्छतः, योग्यतातिरेकेण न कुरुतः, यद्वा– 'युछ प्रमादे' भ्रष्टं न कुरुतः इत्यर्थः । प्रसिद्धवरुणपक्षे– वेनन्ता, वेनन्तौ, अश्विनौ ज्ञेयौ ॥६॥

यः, असौ वरुणः । अन्तरिक्षेण, सप्तम्यर्थे तृतीया, आकाशे । पतताम् वीनाम्, गच्छतां पक्षिणाम् । पदम् । वेद, वेत्ति– सूक्ष्मज्ञानात् । तथा (यः) समुद्रियः, 'समुद्राभ्राद्घः', अब्धिगः । जले– नावः, प्लवस्य । (पदम्) वेद । 'तत्' इति पूर्वेण अन्वयः । यद्वा यः । समुद्रियः, समुद्रे भवः, क्षीराब्धिगः । (वरुणः) वरानन्दो विष्णुः । अन्तरिक्षेण, अन्तरीक्ष्यत इत्यन्तरीक्षेण परब्रह्मणा, ईक्षतेः कर्मण्यकारप्रत्ययः, धात्वादेर्ह्रस्वता, अन्तरिक्षप्रसादेनेति यावत् । पतताम्, संसृतेरुत्पताम् ।

(मन्त्रार्थमञ्जरी)

वीनाम्। विशिष्टानाम्, मुक्तानाम्। पदम्, स्थितिम्। वेद। नयत्युन्नयतीति नौर्ज्ञानम्, तस्य-नावः। (पदम्), मुख्यविषयं स्वस्वरूपम्। (च) वेद। 'तत्' इत्यन्वयः ॥ ७॥

धृतं व्रतं सर्वं कर्म येनासौ धृतव्रतः वरुणः। प्रजावतः, प्रकर्षेण जायन्त इति प्रजाः कार्याणि, तद्वतः कार्ययुक्तान्। द्वादश। मासः, मासान्। वेद, मासशब्दपर्यायोऽत्र मास्शब्दः, तत्तत्कालोद्भवैः कार्यैः सह सकलं कालं च वेदेति यावत्। यः (च) उपजायते, उपात्मनः समीपे-अव्यवधानेन जायते। (तम्), पद्मजम्। (च) वेद। यद्वा उपजायते, आत्मनः उप समीपे जायते वर्तते सामीप्यादिमान्भवति मुक्तः, जातावेकवचनम्। (तान्) वेद। इति ॥ ८॥

(वरुणः) उरोः परिमाणादिगुणैर्महतः। 'बृहतः, ऋष्वस्य' इति विशेषणविशेष्यभावः, बृहत्प्रकाशवतः, ऋष्वशब्दो बलस्येव प्रकाशस्यापि वाचकः, अर्शआदित्वादच्, बृहज्ज्ञानिन इति वा, ज्ञानस्यान्तरप्रकाशत्वात्। वातस्य, वायोः। वर्तनिम्, प्रवृत्तिम्। वेद। ये, देवाः। अध्यासते, अधिकान्येव पदान्यध्यासतेऽधितिष्ठन्ति, 'अधि' इत्यस्यावृत्तिः। (तानपि) वेद॥ ९॥

सुक्रतुः, सुज्ञानः। धृतव्रतः वरुणः। साम्राज्याय, सकलपरिपालनाय। पस्त्यासु, प्रजासु गृहेषु च। आ नि ष (स) साद, प्रजा गृहाश्चाधिष्ठितवान्॥ १०॥ इति सप्तदशो वर्गः ॥ १७॥

## रूपावतारः

तदित्। वेनन्ताविति। वेनधातोः शतृप्रत्यये प्रथमाद्विवचने नुमि च वेनन्ताविति। विभ्रष्टमिति शेष इति। कुरुत इति भाष्ये विभ्रष्टमिति शेष इत्यर्थः। ऋचि तु प्रयच्छत इत्यनेनैव तस्यार्थस्य लाभात्॥ ६॥

वेदायः॥ विवक्षाभेदेनेति। 'विवक्षातः कारकाणि भवन्ति' इत्युक्तेः विवक्षावशादधिकरणस्य च करणत्वमिति भावः। समुद्रिय इति रूपसिद्धिं स्फोरयितुं सूत्रमुदाहरति। समुद्राभ्रादिति। 'समुद्राभ्राद्घः' (४।४।११८) इत्येव पाठः। समुद्राभ्राद्घन् इति पाठस्तु प्रामादिकः। समुद्राभ्राद्घन इति सूत्रस्यादर्शनात्। समुद्रशब्दात् 'समुद्राभ्राद्घ' (४।४।११८) इति घप्रत्यये आयनेयी.... (७।१।२) इति सूत्रेण इयादेशे समुद्रिय इति रूपम्। तदिति पूर्वेण संबन्ध इति। तदित्समानमाशात इति पूर्वेण तच्छब्देन संबन्ध इत्यर्थः॥ ७॥

वेद मासः॥ पदादयः पृथक्शब्दा इत्येके मन्यन्ते तन्मतानुसारेणाह। मासशब्देति। एतेन पद्दनः.... (६।१।६३) इति सूत्रेण मासशब्दस्य मास् इत्यादेशविधानात् पर्यायत्वकथन-मयुक्तमिति परास्तम्॥ ८॥

(रूपावतारः)

वेद वातस्य ॥ पदान्यध्यासत इति। अत्र 'अधिशीङ्स्थासां कर्म' (१।४।४६)। इति आधारस्य कर्मसंज्ञायां पदानीति द्वितीयोपपन्ना ॥ ९ ॥

निषसाद ॥ पस्त्यासु प्रजास्विति । पस्त्याशब्दस्य प्रजासु बहुलं प्रयोगादिति भावः ॥ १० ॥ १७ ॥

## पदार्थप्रकाशिका

तदित्समानमाशाते। गत्यर्था इति। विशेषेणाप्तिर्व्याप्तिः। अप्तिर्नाम गतिरेवेत्यवधेयम्। कुत एतदिति। अत्र ब्रह्मवायू विशेष्यभूताविति कुतो ज्ञायत इत्यर्थः। अनेनापीति। वेनंतावपि देवदत्तयज्ञदत्तौ कुतो न स्यातामित्यर्थः। ननु ब्रह्मवाय्वोरेव ज्ञानादिप्रेरकत्वेन तत्प्रतिपादकत्वात् कथं तौ न प्रयुच्छत इत्युच्यत इत्यत आह। योग्यतातिरेकेणेति। यथार्थज्ञानकर्मणः प्रयोगे च यावती योग्यता तदनुसारेणैव यथार्तज्ञानादिकं प्रयच्छतो न योग्यतातिरेकेणेत्यर्थः। भाष्ये त इत्येवोक्तत्वात् शेषं पूरयति । विभ्रष्टमितीति । विभ्रंशः प्रमादस्तद्युक्तं विभ्रष्टम् । युच्छधातोः प्रमादार्थत्वाद्यथार्थज्ञानादिकं न प्रयुच्छतो न प्रमादोपेतं कुरुत इत्यर्थः। विष्णुपक्ष इति। तदित्यस्य वरुणस्य प्रसादादिति व्याख्यातत्वादिति भावः। असम्भवादिति। प्रसिद्धवरुणप्रसादात् ब्रह्मवायू आसात इत्यस्यासम्भवादित्यर्थः। अश्विनाविति। तथाच वरुणस्य प्रसादादश्विनौ सममेवाशत इत्यर्थो द्रष्टव्यः ॥ ६ ॥

वेदा यो वीनां पदमन्तरिक्षेण पतताम् । ऋक्स्थमन्तरिक्षेणेति पदं भाष्ये आकाश इति सप्तम्यन्ततया व्याख्यातम्। तत्कथमित्यतः प्रकारद्वयेन समाधानमाह। सप्तम्यर्थ इति। विवक्षेति। विवक्षातः कारकाणि नाम्नः भवन्तीति वचनादिति द्रष्टव्यम्। अधिकरणस्येति। इह पतत्रिणः पतन्तीत्यन्तरिक्षस्य पक्षिणां प्रत्यधिकरणत्वादिति भावः। समुद्रभ्रा इत्येव पाणिनीयसूत्रपाठः। धन्निति पाठः प्रामादिकः। समुद्रशब्दादभ्रशब्दाच्च तत्रभव इत्यर्थे घप्रत्ययः स्यादिति सूत्रार्थः तथाच समुद्रशब्दात् भावार्थे घप्रत्यये घस्य च आयनेयीनीयः फढखचेत्यादि सूत्रेणेयादेशे त्रायस्वेति चेति तद्धिते परे भस्याकारस्य लोपे समुद्रियेति रूपम् । अब्धिग इति । भगवत्पक्षे बडवानलरूपेणाब्धिगः सन्नित्यर्थो द्रष्टव्यः। नावः जलोत्तारणसाधनभूतस्य नौकस्य। तदिति पूर्वेणेति। वेदायोवीनामित्यत्रत्ययच्छब्दस्य यो वरुणो वीनां पदं वेद नावश्च वेद। तस्माद्वरुणा-त्तत्प्रसादात्समानमित् समानमेव वेनन्तावश्विनावाशात इति पूर्वेण सम्बन्ध इत्यर्थः। प्रकारान्तरेति। विष्णुविषय इत्यर्थः। अन्तरीक्षत इति। ज्ञानिभिः हृदयान्तरिक्षत इत्यर्थः। नयति। मुक्तिमिति

(पदार्थप्रकाशिका)

शेषः । मुख्येति मोक्षसाधनज्ञानस्य मुख्यतो भगवद्विषयकत्वादिति भावः । वेदेति । अस्यामपि योजनायां यच्छब्दस्य तदित्समामाशाते ब्रह्मवायू इति सम्बन्धो द्रष्टव्यः ।। ७ ।।

वेदमासो धृतव्रतः । प्रति प्रकर्षेणेत्यर्थः । मास्शब्द इति । पदन्नोमास् इत्यादिसूत्रे पाददन्तनासिकामासेत्यादीनां पत्पद्नस्मास्इत्यादयः आदेशाः भवन्तीत्युक्त्वा पदादय एत आदेशाः ते पृथक्शब्दा अपि भवन्तीत्येवं पदादयः पृथक्शब्दाः इत्येक इति वार्तिककारोक्तत्वेन माः मासौ मास इति मास् इत्यस्यापि पृथक्शब्दत्वात् तदनुसारेण मासशब्दपर्यायोऽयं मास्शब्द इत्युक्तम् । तद्द्वितीय बहुवचनं मास इति भवतीति द्रष्टव्यम् । ननु माः मासौ मासः मासं मासौ मास इत्येवंरूपमास्शब्दस्यापि द्वितीयाबहुवचनं मास इत्येव भवति । तथाच मासः मासौ मासाः मासं मासौ मासः मासान् इत्येवंरूपस्याकारान्तस्यापि मासशब्दस्य द्वितीयाबहुवचनं मास इत्येव भवति । अतो मासशब्दपर्यायोऽयं मास्शब्द इति कस्मादुक्तमिति चेत् । सत्यम् । पदादयः पृथक्शब्दाः इत्येकइति वचनात् मासशब्दोप्येकोऽस्ति । तस्येदं द्वितीयाबहुवचनमिति शिष्यशिक्षणार्थमुक्तमित्येवात्र समाधानं द्रष्टव्यम् । पद्मजमितीति । पद्मं च साक्षात् स्वनाभिसम्बन्धत्वेनाव्यवधायकत्वादिति भावः । जाताविति । समुदायापेक्षमेकवचनम् । तथाच मुक्तसमुदायं वेदेत्यर्थः ।। ८ ।।

वेदवातस्यवर्तनिम् । अतीतिबृहत इत्यस्यार्थ इति द्रष्टव्यम् । ननु ऋष्वशब्दस्य बलवाचकत्वात्कथं प्रकाशवाचकमित्यत आह । ऋष्वशब्द इति । तथाच प्रकाशिनो बृहत्वोक्त्या विशेषणीभूतप्रकाशस्यापि बहुत्वमुक्तं भवति । विशिष्टविधिः विशेषणमुपसङ्क्रामति इति न्यायादवगन्तव्यम् । तथाच प्रकाशन इत्यस्यातिदेहकान्तिमत इत्यर्थः । उक्तमतिप्रकाशित इति भाष्येण । ज्ञानप्रकाशेति । ज्ञानरूपान्तरप्रकाशेत्यर्थः । बृहत इतीति तथाच बृहतो ज्ञानिन इत्यस्यातिज्ञानिन इत्यर्थः । अत्रापि ज्ञानवतो बृहत्वोक्त्या ज्ञानस्यापि बृहत्वमुक्तं मन्तव्यम् । पूर्वोक्तन्यायात् अत्यर्थस्येति । बाह्यप्रकाशमादाय कथितार्थापेक्षयान्तरज्ञानरूपं प्रकाशमादायार्थकथनस्य मुख्यत्वमेवैवशब्दो द्योतयति । नतु तदर्थव्यावृत्तिमित्यर्थः । ननु बृहदुरुशब्दयोः पर्यायत्वात् किमर्थमुरुत्वं बृहत्वेन विशिष्यत इत्यत आह । उरोरित्युक्ते हीति । महत्वपरिमाणादिगुणैः उरुत्वं विशेष्यत इति । तथाच परिमाणादिगुणैर्महत्ववतो बृहत्वोक्त्या पूर्वन्यायेन विशेषणीभूतानां परिमाणादिगुणानामपि बृहत्वमुक्तं भवतीति वेदितव्यम् । तथा च परिमाणादिगुणानां महत्वादेर्महत्वं वा तस्य नौपचारिकमिति भावः । पदानि स्थानानि । अत्रेत्यनन्तरम् अधिकानि

(पदार्थप्रकाशिका)

पदानि अध्यासन्त इति भाष्येणेति शेषः । आवृत्येति । एकस्यैवाधीत्यस्याध्याहृतपदविशेषणत्वमासात इति क्रियाविशेषणत्वं च व्यावृत्येत्यर्थः ॥ ९ ॥

निषसादधृतव्रतः । अधिष्ठितवानिति । सन्निहित इत्यर्थः ॥ १०,१७ ॥

## पदार्थदीपिका

अशूव्यासाविति ॥ अश्नोतेर्लिटि द्विर्भावहलादिशेषौ । अत आदेरित्यात्वम् । अनित्यमागमशासनमिति वचनादश्नोतेश्चेति नुडभाव इति भावः ॥ दाशुष इति ॥ दाशृदान इत्यस्मात् दाश्वान् साह्वानिति क्वसुप्रत्ययो निपातितः । वसोः सम्प्रसारणमिति सम्प्रसारणम् । शासिवसिघसीतां चेति षत्वमिति भावः ॥ ६ ॥

करणत्वमिति ॥ विवक्षातः कारकाणि भवन्तीति वचनात् करणत्वविवक्षया तृतीया श्रुतैवोपपन्नेति भावः ॥ वेदेति ॥ विदो लटो वेति तिपो लघ्वचोतः तिङः इति संहितायां दीर्घ इति भावः । समुद्राब्भव इति भवार्थे समुद्रा इति घप्रत्यय इति भावः । आयनेयीय इति घस्य इयादेश इति भावः ॥ तदिति पूर्वेणेति ॥ यः पदं वेति तस्मात् तत्प्रसादादिति पूर्वेण सम्बन्ध इत्यर्थः ॥ ७ ॥

प्रजावत इति ॥ जनी प्रादुर्भावे । प्रपूर्वादस्मात् जनसनखनक्रमगमो विडिति विट्प्रत्ययः । विड्वनोरित्यात्वमिति भावः ॥ द्वादशेति ॥ द्वौ च दश चेति द्वन्द्वः । द्वयष्टनः संख्यायामित्यात्वमिति भावः ॥ मासानिति ॥ चैत्रादीन् फाल्गुनान्तानिति भावः ॥ मासशब्दपर्याय इति ॥ यद्यपि पद्दन्नित्यादिना मास शब्दस्य मसित्यादेशेनाप्येतत् सिध्यति । तथापि अनादेशभूतस्वतन्त्रप्रातिपदिकानामपि एतेषां सत्वेन पद्दन्नित्यादेश विधिरेवानारभ्य इत्यभिप्रायेण इदमुक्तम् । यत्तु कैश्चिदुक्तम् । स्वतन्त्राणामप्येषां शसादावेव प्रयोगो यथा स्यात् प्रथमादौ प्रयोगो माभूत् इत्येवं प्रयोगनियमार्थं पद्दन्निति आदेश विधेरारंभ इति । तत्तुच्छम् । शस् प्रभृतिष्वित्युच्यते अशस् प्रभृतिष्वपि दृश्यते शिलादोषणी ककुद्दोषणी इति । नपुंसकाच्चेत्यौङः शीत्यादि भाष्योक्तेः प्रयोगनियमार्थतया एतस्यारम्भणीयत्वानुपपत्तेः ॥ उपजायत इति । जनेः कर्मकर्तरि लिट् । कर्मवद्भावात् आत्मने पदमिति भावः ॥ जातावेकवचनमिति ॥ जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामिति स्मरणादिति भावः ॥ ८, ९,१० १७ ॥

## टीकाविवृतिः

तदित्समानम् ।। अशूव्याप्ताविति ।। अस्माल्लटि व्यत्ययेन विकरणलोपोधातोर्दीर्घश्चेति भावः । व्याप्तिस्तु सर्वदेशगतिरित्याशयवानाह ।। गत्यर्था इति ।। कुत एतदिति ।। समानमेव जानीत इत्यत्र ब्रह्मवायू एव कर्तारावित्येतत्कुत इत्यर्थः ।। वेनन्तावितीति ।। वेनतिमेनतीतिगतिकर्मसु पठितवेनधातोः शतरि रूपमेतदिति भावः । युच्छत इत्यत्राकारस्य व्यत्ययेनोकार इति भावेनाह ।। प्रयच्छत इति ।। धृतव्रतायापि यजमानाय यदि यथार्थज्ञानं कर्मणः प्रयोगं च न कुरुतस्तर्हि तयोरसुज्ञत्वं स्यादित्यत आह ।। योग्यतातिरेकेणेति ।। किन्तुयोग्यतानुसारेणेति भावः । यथाश्रुतधात्वर्थमाश्रित्यापि व्याचष्टे ।। यद्वेति ।। तर्हि युच्छत इत्यस्य भाष्ये कुरुत इति कथं व्याख्यानमित्यत आह ।। विभ्रष्टमिति शेष इति ।। तथाच युच्छत इत्यस्य विभ्रष्टं विनष्टं कुरुत इत्यर्थ उक्तो भवति । प्रमादे इत्युक्तधात्वर्थस्याप्ययमेवार्थ इति भावः ।। तयोरसंभवादिति ।। ब्रह्मवाय्वोर्वरुणादुत्तमत्वाद्वरुणप्रसादेन समज्ञानवत्त्वासंभवादित्यर्थः ।। ६ ।।

वेदायः ।। योऽसौ वरुण इति ।। वारीशो विष्णुर्वा । एतद्व्याख्यानस्योभयसाधारण्यादिति भावः । अन्तरिक्षेणेति सप्तम्यर्थे व्यत्ययेन तृतीयाश्रयणीयेत्यरुचेराह ।। विवक्षाभेदेनेति ।। विवक्षातःकारकाणि भवन्तीत्युक्तेरधिकरणस्यैव साधकतमत्वविवक्षया तृतीयेति भावः ।। वेद वेत्तीति ।। विद ज्ञाने इत्यतो विदो लटो वेति लडादेशति पो णलादेश इति भावः ।। समुद्राभ्राद्घनिति ।। प्राचीनसूत्रपाठोयम् । इति सूत्रेण समुद्रशब्दाद्भवार्थे घप्रत्यये आयन्नादिषूपदेशनिद्वचनं स्वरार्थमित्युक्तेः प्रत्ययस्वरात्पूर्वं तस्येयादेशे पश्चात्प्रत्ययाद्युदात्तत्वेनेकार उदात्तः । नित्स्वरस्तु छान्दसत्वान्न भवति । समुद्राभ्राद्घ इति नकाररहितकाशिकास्थसूत्रपाठे तु न काप्यनुपपत्तिरिति बोध्यम् ।। नावःपदमिति ।। पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरोक्तेः पदं रक्षणं लक्षणं वा स्थानं वा ज्ञेयम् ।। तदिति पूर्वेणेति ।। पूर्वऋक्स्थतच्छब्देनास्या ऋचोन्वय इत्यर्थः ।। प्रकारान्तरेणेति ।। विष्णुपक्षे इति शेषः ।। वीनां विशिष्टानामिति ।। ज्ञानादिभिर्युक्तानामित्यर्थः । वीगत्यादावित्यत औणादिके डिप्रत्यये ज्ञानादिविशिष्टार्थकत्वादित्याशयः । अस्मिन्व्याख्यानेपि तत्प्रसादादिति पूर्वेण संबन्धो ज्ञेयः ।। ७ ।।

वेदमासः ।। मासशब्दपर्याय इति ।। पद्न्नोमासिति सूत्रेण शसादौ परे मासशब्दस्य मासित्यादेशविधानानान्मास्स्मृतश्चन्द्रमासयोरिति विश्वोक्तेश्चेति भावः । प्रजावत इत्यादेःकालं कालोद्भवैरित्यादिभाष्यं तात्पर्यपरमित्याह ।। तत्तत्कालोद्भवैरिति ।। पद्मजमित्युक्तमिति ।।

(टीकाविवृतिः)

स्वनाभिपद्मजातत्वाच्चतुर्मुखस्याव्यवहितं जन्मेति भावः ॥ सामीप्यादिमानिति ॥ सामीप्यादिलक्षणमुक्त्यादिमानित्यर्थः । आदिशब्दात्सायुज्यादि ग्राह्यम् ॥ जाताचेकवचनमिति ॥ जातिश्छन्दसि सामान्ये मालत्या मोघजन्मनोरिति विश्वोक्तेर्जातौ समूह इत्यर्थः । तथाच सर्वान्मुक्तान्वेदेत्याशयः । नतु जातिःसामान्यम् । तस्यास्माकं मते प्रत्येकं पर्यवसितत्वेन व्यक्तितुल्यत्वात्सर्वग्राहकत्वाभावात् । अत एव सुधायां तत्र तत्र समूहे एकवचनमित्युच्यते इति बोध्यम् ॥ ८ ॥

वेदवातस्य ॥ पर्यायाविति ॥ उरुबृहच्छब्दयोर्महद्वाचकत्वादिति भावः ॥ विशेषणतयेति ॥ उभयोरेकवाचकत्वेपि उरुशब्दस्य वायुविशेषणत्वाद्बृहत इत्यस्य वायुविशेषणत्वान्न पौनरुक्त्यमिति भावः । अतीतिबृहच्छब्दार्थः । प्रकाशिन इति ऋष्वशब्दार्थो भाष्ये उक्तः । मुख्यामुख्यन्यायमाश्रित्याह ॥ ऋष्वेति ॥ अपि यद्यपि । तथापि बृहत इति वचनादृष्वशब्दोत्र प्रकाशमात्रार्थो गृहीत इति शेषः । ब्रध्नःऋष्व इति महन्नामसु पाठात् महःशब्दस्य च महो भवेदुत्सवतेजसोश्चेति विश्वकोशे प्रकाशार्थत्वोक्तेरिति भावः ॥ बाह्यप्रकाशेति ॥ शरीरकान्तिवाचकत्वमित्यर्थः । ज्ञानरूपप्रकाशस्यान्तरत्वादित्याशयः ॥ मुख्यत्वमिति ॥ बाह्यकांत्यपेक्षया ज्ञानस्य स्वरूपविशेषनिर्णायकत्वादिति भावः । उरुबृहच्छब्दयोरेकार्थयोःकथं विशेषणविशेष्यभाव इत्यतआह ॥ उरोरित्युक्ते हीति ॥ वर्तनिमिति ॥ वृतेश्चेत्यौणादिके भावे अनिप्रत्यये उपधागुण इति भावः ॥ पदानीति ॥ सप्तलोकादिस्थानानीत्यर्थः । अधिशीङ्स्थासां कर्मेतीत्यधिकरणस्य कर्मत्वाद्द्वितीयेति भावः । भाष्येऽधिशब्दद्वयं कृत्यमित्यत आह ॥ अत्राधीत्येतदिति ॥ ९ ॥

निषसाद ॥ सुक्रतुरिति ॥ अत्र समासान्तोदात्तत्वापवादे बहुव्रीहौ प्रकृत्या पूर्वपदमिति प्राप्ते तदपवादस्य नञ्सुभ्यामित्यंतोदात्तत्वस्याप्यपवादः ऋत्वादयश्चेत्युत्तरपदाद्युदात्तत्वं भवतीति ज्ञेयम् । समीचीनो राजा सकलसद्धर्मपालकःसम्राट् । तस्य भावःकर्म वा साम्राज्यमित्यर्थमभिप्रेत्याह ॥ साम्राज्यायेति ॥ पस्त्यासु प्रजास्विति ॥ पस्त्यशब्दःगृहनामसु पठितत्वेन गृहिणी गृहमुच्यत इति वचनात्पत्नीपर्यायः । तस्माद्भवार्थे दिगादिभ्यो यदिति यत्प्रत्यये प्रजार्थक इति भावः । पस्त्यशब्दस्य निघंटूक्तार्थमात्राभिप्रायेणाह ॥ चशब्दादिति ॥ १० ॥ १७ ॥

ऋक्संहिता पदपाठसहिता (सू-२५, व-३)

(२७९) अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ॥ कृतानि या च कर्त्वा ॥ ११ ॥

(प०) अतः । विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति ॥ कृतानि । या । च । कर्त्वा ॥ ११ ॥

(२८०) स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ॥ प्रण आयूंषि तारिषत् ॥ १२ ॥

(प०) सः । नः । विश्वाहा । सुऽक्रतुः । आदित्यः । सुऽपथा । करत् ॥ प्र । नः । आयूंषि । तारिषत् ॥ १२ ॥

(२८१) बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् ॥ परिस्पशो नि षेदिरे ॥ १३ ॥

(प०) बिभ्रत् । द्रापिम् । हिरण्ययम् । वरुणः । वस्त । निःऽनिजम् ॥ परि । स्पशः । नि । सेदिरे ॥ १३ ॥

(२८२) न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् ॥ न देवमभिमातयः ॥ १४ ॥

(प०) न । यम् । दिप्सन्ति । दिप्सवः । न । द्रुह्वाणः । जनानाम् ॥ न । देवम् । अभिऽमातयः ॥ १४ ॥

(२८३) उत यो मानुषेष्वा यशश्चक्रे असाम्या ॥ अस्माकमुदरेष्वा ॥ १५,१८ ॥

(प०) उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि । आ ॥ अस्माकम् । उदरेषु । आ ॥ १५, १८ ॥

## ऋग्भाष्यम्

तत्र सन्विश्वान्यद्भुतानि च पश्यति । कर्ता चिकित्वान्स कृतकर्तव्यानि च पश्यति ॥ ११ ॥ विश्वान्यहानि नो देवः सुपथानि करोत्वसौ । ददात्वायूंषि नो नित्यं मुक्तौ वा ॥ १२ ॥ अतिद्रुतभ्रमम् । हितं च रमणीयं च चक्रं स्वर्णं च वर्णतः । अबिभ्रच्चसुनिर्णिक्तं शुद्धं वस्त्रमवस्तव । अविज्ञातचरा देवाः स्पशस्तस्य निषेदिरे । परितोवरुणः पाशमबिभ्रद्द्रुतबन्धनम् ॥ १३ ॥ स्तम्भयन्ति नयं वीरास्तंभका अपि राक्षसाः । जनानां द्रोहिणो दैत्याः शत्रवश्चाभिमातयः ॥ १४ ॥ असमं च यशश्चक्रे योस्माकं हृदयेषु च । आमानुषेषु चान्येषु समन्तादात्मनः सदा । अज्ञेष्वपि च मर्त्येषु व्यतनोदात्मनोयशः ॥ १५, १८ ॥

## ऋग्भाष्यटीका

अतो विश्वानि । तत्र सन् । अतः सप्तम्यर्थे तस् । अत्र तत्र प्रजासु गृहेषु सन्वर्तमानः । चिकित्वान्कर्ता कित निवास इत्ययं करणेपि वर्तते । स वरुणो विश्वानि च सर्वाण्यप्यद्भुतान्याश्चर्याण्यभिपश्यति । किञ्च । या यानि वस्तूनि कृतानि । यानि च कर्त्वा कर्तव्यानि । कृत्यार्थ इति त्वन् । तानि कृतकर्तव्यानि च पश्यति ॥ ११ ॥

सनः । विश्वानि । सोऽसौ सुक्रतुरादित्यो देवो विश्वाहा विश्वानि सर्वाण्यहानि दिनानि । नोस्माकम् । सुपथा सुपथानि । निर्विघ्नानीति यावत् । करत् करोतु । नोस्माकमायूंषि तारिषत् । तरतिर्दानार्थः । लेट् । ददातु । इदं प्रार्थनं मुक्तौ मुख्यमन्यदा तूपचार इत्याह ॥ नित्यं मुक्तौ वेति ॥ १२ ॥

बिभ्रत् । अतिद्रुत । वरुणो द्रापिं द्रुगतौ आप्लृव्याप्तौ आभ्यामिकारप्रत्ययः । आद्यस्य चाकारः । द्रुतमाप्नोतीति द्रापिः । तं द्रापिम् अतिद्रुतभ्रमम् । हिरण्ययं हितं च रमणीयं च । हिरण्मयं वा । निपातनात्साधुः । ततश्च वर्णतः स्वर्णं स्वर्णसदृशम् । चक्रं सुदर्शनम् । बिभ्रदबिभ्रत् । विकरणव्यत्यासो द्विर्वचनं च छान्दसः । वचनव्यत्यासो वा । अबिभः शत्रंततयाप्युपपन्नमिति चेत् सत्यम् । प्रकारान्तरमेतत् । किञ्च । निर्णिजं सुनिर्णिक्तं णिजिर्शौचे । शुद्धं वस्त्रमिति शेषः । वस्त अवस्त । आच्छादितवान् । स्पशोऽविज्ञातचरा देवाः । परि तस्य तं वरुणं परितः । निषेदिरे सेवायै निषण्णाः प्रसिद्धवरुणे योजयति । वरुण इति । प्रसिद्धो वरुणो द्रापिं पूर्ववत् । द्रुतबन्धनमिति यावत् । पाशमबिभ्रदिति ॥ १३ ॥

(ऋग्भाष्यटीका)

नयम्। स्तम्भयन्ति। यं वरुणम्। दिप्सवो दम्भितुमिच्छवः। इच्छया करणमुपलक्ष्यते। स्तम्भकाः। वीरा अपि राक्षसा इति यावत्। न दिप्सन्ति। अत्राप्युपलक्षणम्। न स्तम्भयन्ति। किञ्च। जनानां द्रुह्वाणो द्रोहिणः द्रुह जिघांसायाम्। अन्येभ्योपि दृश्यन्त इति क्वनिप्। दैत्या यं न दिप्सन्ति यस्मै न द्रुह्यन्तीति वा। जनानामिति दिप्सव इत्यत्रापि सम्बध्यते। किञ्च। अभिमातयः शत्रवश्च राक्षसेभ्यो दैत्येभ्यश्चान्ये यं देवं न दिप्सन्ति इत्यादि योग्यक्रियान्वयः। यच्छब्दस्य पूर्वेण परेण वा सम्बन्धः॥ १४॥

उत यः। असमं च। यो वरुणः। असामि समशब्दपर्यायः सामिशब्दः। न विद्यते सामि यस्य। यद्वा सममस्यास्तीति साम तदेव सामि। न सामि असामि असममात्मनो यशोऽस्माकमुदरेषु सामीप्याद्धृदयेषु आसमन्तात् सर्वस्मिन्काले सदा चक्रे। अस्मान्स्वयशोविदश्चक्रे। न केवलमस्मासु अन्येष्वप्यासम्यक् भूतेषु मानुषेषु मनुष्येष्वा समन्ताच्चक्रे। आद्यश्चशब्दो वरुणस्य क्रियासमुच्चये। अन्याावितरेतरसमुच्चये। उतशब्दस्य कैमुत्यार्थस्य तात्पर्यमाह॥ अङ्गेष्वपीति। किमुत देवादिषु। अस्यापि पूर्ववत्सम्बन्धः॥ १५, १८॥

## मन्त्रार्थमञ्जरी

अतः, सप्तम्यर्थे तसिः, अत्र, प्रजासु गृहेषु वा वर्तमानः। चिकित्वान्, कर्ता, 'कित निवासे' इत्ययं 'कित करणे' इत्यप्यस्ति, लिट् क्वसुः। (सः) वरुणः। विश्वानि (च) सर्वाण्यपि। अद्भुता। अद्भुतानि, आश्चर्याणि। अभिपश्यति। किं च, या, यानि, वस्तूनि। कृतानि। (या) यानि। च। कर्त्वा, कर्तव्यानि, कृञः 'कृत्यार्थे' इत्यादिना त्वन्। (तानि) च (अभि) पश्यति॥ ११॥

सः, असौ। सुक्रतुः आदित्यः (देवः)। विश्वाहा, विश्वानि–सर्वाण्यहा–अहानि। नः, अस्माकम्। सुपथा, सुपथानि, निर्विघ्नानीति यावत्। करत्, करोतु, लोडर्थे लङ्, शब्विकरणम्, अडभावः। नः, अस्माकम्। आयूंषि। प्र तारिषत्, तरतिः दानार्थः, लेट्, अडागमसिप्प्रत्ययौ, इट् (सिपो णित्त्वेन) धातोर्वृद्धिः, ददातु॥ १२॥

वरुणः। द्रापिम्, 'द्रु गतौ' 'आप्लृ व्याप्तौ', आभ्यामिकारप्रत्ययः, आद्यस्याकारः, द्रुतमाप्नोतीति द्रापिस्तं द्रापिमतिद्रुतभ्रमणम्। हिरण्ययम्, हितं च रमणीयं च हिरण्ययम्, हिरण्मयम् 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' इति षष्ठान्ते निपातनात्साधुः, स्वर्णसदृशं चक्रम्। बिभ्रत्, अबिभ्रत्, शब्विकरणं द्विर्वचनं च च्छान्दसम्। किं च, निर्णिजम्, निर्णिक्तम्, 'णिजिर् शौचे' शुद्धम्। (वस्त्रम्) इति शेषः। वस्त, अवस्त, आच्छादितवान्, 'वस आच्छादने' लङ्। 'बिभ्रत्' इति शत्रन्ततया 'द्रापिम् हिरण्ययम्। बिभ्रत्, दधानः। 'निर्णिजम् वस्त'

इत्येकान्वयो वा। स्पशः, अविज्ञातचरा देवाः। परि (तस्य) तं वरुणं परितः। नि षे(से)दिरे, सेवायै निषण्णाः। प्रसिद्ध वरुणपक्षेद्रापिम्, द्रुतमाप्नोतीत्युक्तदिशा पाशम्। बिभ्रत्, अबिभ्रदित्यर्थः। शिष्टं प्राग्वत्॥ १३॥

यम्, वरुणम्। दिप्सवः, दम्भितुमिच्छवः, करणोपलक्षणम् स्तम्भकाः, वीराः राक्षसा इति यावत्। न दिप्सन्ति, अत्राप्युपलक्षणम्– न स्तम्भयन्ति। किं च, जनानाम्। द्रुह्वाणः, द्रौहिणः, 'द्रुह जिघांसायाम्' 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्, दैत्याः। (यम्) न (दिप्सन्ति) इत्यस्य 'यस्मै न द्रुह्यन्ति' इति वार्थः। अभिमातयः, शत्रवः। (च) 'मीङ् हिंसायाम्' क्तिन्, धातोरात्त्वम्, राक्षसेभ्यो दैत्येभ्यश्चान्ये। (यम्) देवम् न (दिप्सन्ति) इत्येवं योग्यक्रियान्वयः। यद्शब्दस्य पूर्वेण परेण वान्वयः॥ १४॥

यः, वरुणः। असामि, सममस्यास्तीति समि, तदेव सामि, न साम्यसामि, असममित्यर्थः। आत्मनः यशः अस्माकम्। उदरेषु, सामीप्याद्धृदयेषु। आ, समन्तात्सर्वस्मिन्काले। चक्रे, अस्मान्स्वयशोविदश्चक्रे। न केवलमस्मासु, अन्येष्वपि– आ, सम्यग्भूतेषु। मानुषेषु (अपि) आ समन्तात्। (चक्रे) उत, 'किमुत देवेषु?' इत्युतशब्दार्थः। अत्रापि यद्शब्दस्य पूर्वत्रैव अन्वयः॥ १५॥ इत्यष्टादशो वर्गः॥ १८॥

### रूपावतारः

अतो विश्वानि॥ चिकित्वानिति। कितधातोः लिटः क्वस्वादेशे द्विर्वचनादौ ''उगिदचाम्...'' (७।१।७०) इति नुमि चिकित्वानिति प्रथमैकवचने रूपम्॥ १॥

सनः॥ विश्वाहेति। विश्वानि च तान्यहानि चेति समासे ''राजाहः सखिभ्यष्टच्'' (५।४।९४)। इति टचि 'अह्नष्टखोरेव' (६।४।१४५) इति टिलोपे सुपां सुलुक्... (७।१।३९) इति शसः आकारादेशे विश्वाहेति रूपम्। करदिति। कृञो लेटि तिपि इतो लोपे 'लेटोऽडाटौ (३।४।९४) इति अडागमे गुणे च करदिति रूपम्। तारिषदिति। तरतेः लेट् 'सिब्बहुलं लेटि' (३।१।३४) इति सिपि इडागमे ''सिब्बहुलं णिद्वक्तव्यम् (व्यः)' (वार्तिकं, सू. ३।४।९४) इति णित्वाद् वृद्धौ तारिषदिति रूपम्। इदं प्रार्थनमिति। मुक्तौ मुख्यतः सफलम्। अन्यत्र तु सफलमात्रमिति भावः॥ १२॥

(रूपावतारः)

बिभ्रत् ॥ ''दाण्डिनायन.... (६।४।१७४) इति सूत्रे हिरण्मयेति निपातनात् कथं हिरण्ययेतीत्यत आह । निपातनादिति । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' (६।४।१७५) इति छन्दसि निपातनादयं प्रयोगः साधुरिति भावः । ननु भृञः यदि शपः श्लुः तदा अभिभरिति भवेत् । यदि शप् तदा द्विर्वचनं न स्यादित्यत आह । विकरणव्यत्यास इति । शविकरणत्वं द्विर्वचनं च छान्दसमित्यर्थः । भृञः लङि तिपि इकारलोपे शविकरणे छान्दसे द्विर्वचने अभ्यासस्येत्वे गुणाभावे च बिभ्रदिति रूपम् । वचनेति । तिपो व्यत्यासेन शिप्रत्यये श्लौ द्विर्वचने ''सर्वे विधयश्छन्दसि विकल्प्यन्ते'' इति वचनात् 'सिजभ्यस्तविधिभ्यश्च' इति जुसादेशाभावे 'अदभ्यस्तात्' (७।१।४) इति अदादेशे 'भृञामित्' (७।४।७६) इति अभ्यासेत्वे बिभ्रदिति रूपम् । 'वचनव्यत्यासो वेति' वाक्यं प्रक्षिप्तम् । मूलकोशेष्वदर्शनादिति विद्याधीशस्वामिन आहुरिति संप्रदायविदः । अबिभरिति भृञस्तिपि इतो लोपे श्लौ द्विर्वचने अडागमे धातोर्गुणे 'हल्ङ्याब्.... (६।१।६८) इति तिलोपेऽबिभरिति रूपम् ॥ १३ ॥

न यम् ॥ दिप्सन्तीति । दम्भेःसनि द्वित्वे झिप्रत्यये अन्तादेशे 'दम्भ इच्च' (७।४।५६) इति इकारे अत्र लोपोऽभ्यासस्य (७।४।५८) इति अभ्यासलोपे 'अनिदितां....' (६।४।२४) इति धातुनकारलोपे चर्त्वे दिप्सन्तीति रूपम् । पूर्वेण परेण वेति । तं वरुणं परितो निषेदिर इति पूर्वेण वा तं सर्वज्ञमदर्शमित्युत्तरेण वा संबन्ध इत्यर्थः ॥ १४ ॥

उतयः ॥ आद्यश्चशब्द इति 'असमं च यशचक्र' इति भाष्यस्थः चशब्द इत्यर्थः ॥ १५ ॥ १८ ॥

## पदार्थप्रकाशिका

अतोविश्वान्यद्भुता । सप्तम्यर्थं दर्शयित्वा भाष्यं संवाद्य तद्व्याचष्टे । अत्र तत्र प्रजास्विति । पूर्वस्याम् ऋचि उभयोरपि प्रकृतप्रजासु ग्रहेष्वित्युक्तम् । ननु कितधातोः निवासार्थकत्वात् कथं कर्तेति करणार्थत्वमित्यत आह । कितनिवास इति । करणे कृतावित्यर्थः । धातूनामनेकार्थत्वादिति भावः । कितधातोः कर्तरि सुप्रत्यये ककारलोपे लिटि अभ्यासचर्त्वे च कित्वस् इति प्रातिपदिके सिद्धे पश्चात्स्वाद्युत्पत्तौ च कित्वानिति प्रथमैकवचनं द्रष्टव्यम् । कृत्यार्थे इति कर्मार्थ इत्यर्थः । अत एव कर्तव्यानीति कर्मार्थो दर्शितः । तथाच कृञ्करणे अस्मात् कृत्यार्थे तवैकेन् केन्यत्वन इति सूत्रेण त्वन् प्रत्यये नकारलोपे गुणे कर्त्वेति प्रातिपदिकम् । तस्य स्त्रीलिङ्गं कर्त्वेति भवतीति ध्येयम् । भाष्यं संवादयति । कृत्तेति ॥ ११ ॥

(पदार्थप्रकाशिका)

सनोविश्वाहसुक्रतुः । स इति ऋक्पदमनूद्यासाविति भाष्यपदं संयोजितम् । आदित्यः आदौ भवः । लेडिति । तथाच तृप्लवनतरणयोरित्यस्माल्लेटि तस्य तिबादेशे इप् इत्यस्य लोपे कर्तरि शपि अकारमात्रं विहाय तस्य लोपे सिब्बहुलं लेटीति सिबागमे इप् इत्यस्य लोपे गुणे तस्य रपरत्वे तरस् अत् इति जाते तकारस्थाकारस्य वृद्धौ इडागमे सस्य षत्वे च सति तारिषदिति लेटि रूपं द्रष्टव्यम् । मुक्तौ मुख्यमिति । सर्वेषामप्यह्ननिर्विघ्नतायाः नित्यायुष्मत्वस्य च मुक्तावेव मुख्यत्वादिति भावः । नित्यमित्यस्य सदा संसारावस्थायामिति भावः ॥ १२ ॥

बिभ्रद्रार्पिं हिरण्मयम् । द्रुगतावित्यादि । तथाच द्रुगतौ आप्लृव्याप्तौ आभ्यामिकारप्रत्यये आद्यस्य द्रु इत्यत्रत्यस्य उकारस्याकारे सवर्णदीर्घे सति द्रापीति रूपं द्रष्टव्यम् । धातुद्वयादेकप्रत्ययस्तु अधिभूभ्यां डुतजिति वदतां परेषामपि संमत इति पूर्वमुपपादितमनुसन्धेयम् । पदार्थमुक्त्वा भाष्यं तात्पर्य कथनपरमित्याशयेनाह । अतिद्रुतभ्रमणमिति । अतिशीघ्रभ्रमणादित्यर्थः । अतिद्रुतभ्रभणं विना द्रुतप्राप्त्यसम्भवादिति भावः । हितं च रमणीयं चेति । अस्मिन् व्याख्याने निर्वचनत्वात् हितशब्दस्य हि इत्यादेशे वा नकारलोपे वा सति रमणीय इत्यत्र मकारलोपे ईकारस्य यकाररूपवर्णविकारे च सति हिरण्यय इति साध्विति समाधानम् । इन्द्रो वज्री हिरण्यय इत्यत्रोक्तं द्रष्टव्यम् । हिरण्मयंवेति । हिरण्यविकारं वेत्यर्थः । ननु तर्हि हिरण्मयमित्येव स्यात् न तु हिरण्यय इति तत्राह । निपातनात्साधुरिति । ऋक्त्रयव्याख्यानात् हिरण्ययानि छन्दसीति सूत्रेण हिरण्यशब्दाद्विकारार्थे प्राप्तस्य मयटो मकारस्य लोपनिपातनादित्यर्थः । तथाच हिरण्ययेति युक्तमिति भावः ।

ननु भगवच्चक्रस्य शुद्धायोमयस्य कथं प्रसिद्धस्वर्णविकारित्वं हिरण्मय इत्यनेन कथ्यत इत्यतः तत्तात्पर्यकथनपरं स्वर्णं च वर्णत इति भाष्यं व्याचष्टे । ततश्चेति । स्वर्ण सदृशवर्णवत्वात् स्वर्णविकारित्वमौपचारिकमित्यर्थः इत्याहुः । तत्तुच्छम् । अयोमयत्वस्यैवाप्रामाणिकत्वात् । तथात्वे कृष्णवर्णप्राप्त्या स्वर्णवर्णायोगात् लोकवैलक्षण्येनोपपत्तेश्चागतिकागतित्वात् ततश्चेत्यस्या-स्वारस्याच्च । वस्तुतस्तु ननु हिरण्यविकारित्वेन हिरण्मयत्वेपि हिरण्याभेदप्राप्त्या स्वर्णं च वर्णत इति भेदगर्भसादृश्योक्तिः कथमित्यतः तत्साध्यकथनपरं भाष्यमित्याशयेनाह । ततश्चेति । हिरण्य-विकारित्वादेवेत्यर्थः । वर्णतः पीतरूपतः । स्वर्णसदृशमिति ।

चक्रस्य सुवर्णोपादानकत्वेन तेन भेदाभेदसद्भावात् । कार्ये च कारणसादृश्यस्यापेक्षितत्वात् पीतरूपेणोपादानभूतस्वर्णसादृश्यकथनं युक्तमित्यवधेयमिति सम्प्रदायविदः । अनेन

(पदार्थप्रकाशिका)

सुदर्शनचक्रादिभगवदायुधानां चिदात्मकत्वं वदन्तो निरस्ताः वेदितव्याः । भूषणायुधलिङ्गाख्यं धत्ते शक्त्या स्वमाययेत्यस्य च भूषाहेतिध्वजेष्वज इति तात्पर्य एवान्यथाव्याख्याततत्वादित्यवधेयम्।

ननु भृञ् धारणपोषणयोरिति धातुः श्लुविकरणः । तथाच भृ इत्यस्मात् लङि तस्य तिपि इतश्चेत्यनेन इकारस्य हलन्त्यं इत्यनेन पकारस्य च लोपे भृत् इति स्थिते शपि तस्य श्लुविकरणे गुणे रपरत्वे भर्त् इति जाते श्लावित्यनेन धातोरभ्यासे भर् भर्त् इति जाते भृञामिदित्यभ्यासस्य श्लौपरे इकृतविधानादभ्यासस्य इकारे भिभ्रदिति जाते अभ्यासे च र्चेति सूत्रेणाभ्यासे झलांचरोजशश्च स्युरिति विधानादभ्यासभकारस्य बकाररूपे जशिबिभरदिति जाते संयोगान्तस्य लोप इति तकारलोपे लङ् लुङ् लृंङ् ष्वडुदात्त इति लङि अडागमविधानात् अडागमे रेफस्य विसर्गे च सति अबिभ्र इति लङि प्रथमपुरुषैकवचनस्य रूपं भवेत्तत्कथं बिभ्रदितिरूपमित्यत आह। विकरणव्यत्यास इति । श्लुविकरणस्य शब्विकरणत्वेन व्यत्यास इत्यर्थः । ननु शब्विकरणत्वेपि अबिभ्रदिति रूपमयुक्तम्। तथाहि। भृअस्माल्लङि तस्य तिपि इबित्यस्य लोपे कर्तरि शपि अकारं विहाय शपो लोपे भृअदिति जाते यणादेशे लङि अडागमे अभ्रदिति रूपं स्यात्। नत्वबिभ्रदित्यभ्यासः। शपि परे तद्विधानाभावादित्यत आह । द्विवचनं चछान्दसमिति । शब्विकरणत्वेपि द्विवचनमाश्रितं छान्दसत्वादिति भावः। च शब्दाद्बिभ्रदिति। अत्राडभावोपि छान्दस इति द्रष्टव्यम्।

नन्वथापि वरुणोबिभ्रदित्ययुक्तम्। तदाहि युक्तं स्यात् यदि अबिभ्रदित्येकवचनं स्यात्। नचैवम्। किंतु वस्तुतः श्लुविकरणस्य भरतेः लङो बहुवचनमेव। तथाहि। भृअस्माल्लङि प्रथमपुरुषबहुवचने झीत्यादेशे झिप्रत्ययस्य झोंत इति प्राप्तान्तादेशापवादेन अदभ्यस्तादिति सूत्रेणाभ्यस्तात्परस्य स्यदादेशविधानात्। अत् इत्यादेशे भृ अदिति जाते वस्तुतः श्लुविकरणत्वात् श्लावित्यभ्यासे चर्चेत्यनेन जस्त्वे बिभर अदिति जाते गुणापवादेन यणादेशे अडागमे च सति बिभ्रदिति लङः प्रथमपुरुषः। वरुणश्चात्र कर्तैकएवातो वरुणो अबिभ्रदिति कथमिति चेत्तत्राह। वचनव्यत्यासो वेति। वाशब्दश्चार्थे। अबि इत्येकवचने प्रयोक्तव्ये तस्य व्यत्यासः छान्दस इत्यर्थः। तथाच बहुवचनमपि छान्दस्त्वाद्युक्तमित्युक्तं भवति । अत एव स्वयमेकवचनान्तमेव प्रतिपदमाह । अबिभ इति। धृतवानित्यर्थः।

ननु अबिभ्रदित्यस्य बहुवचनत्वाद्वरुणोऽबिभ्रदिति कथमिति शङ्कैव नोदेति। येन वचनव्यत्यासो वेति समाधानं वाच्यं स्यात् । तथाहि । भृञ्धातोर्लङो बहुवचने अदभ्यस्तादित्यादेशः तदैवोक्तरीत्याबिभ्रदिति बहुवचनं स्यात् । नचैवम् । किन्तु भृञ्धातोर्लङि तस्य झीत्यादेशे

तस्यांतादेशापवादेन अदभ्यस्तादित्यदादेशो विहितः। तथादादेशापवादेन झेर्जुशिति सूत्रेण झेर्जुस् इत्यादेशविधानात् जुस् इत्यादेशे जकारलोपे भृ उस् इति जाते गुणे भ्र उसितिजाते श्लुविकरणत्वादभ्यासे तस्य जस्त्वे अडागमे सस्य रुत्वे विसर्गे च अबिभरुः इत्येव लङो बहुवचनस्य भाव्यत्वादिति चेत्सत्यम्। तथाझेर्जुस् इति इत्यडादेशापवादकं विशेषसूत्रमनालोच्य यदा मन्दाशङ्का तदैवेदं वचनव्यत्यासो वेत्युत्तरमुक्तं वेदितव्यम्। अत एव वचनव्यत्यासो वेतिवाक्यं क्वचित्पुस्तके नास्त्येव।

ननु बिभ्रदित्यस्य क्रियापदत्वमङ्गीकृत्योक्तकुसृष्ट्या समाधानकरणं वृथा। लवणं जग्ध्वा पानीयान्वेषणन्यायमनुसरति। यतोऽबिभ्रदित्यस्य शत्रंतशब्दतयापि बिभ्रद्वरुणो वस्तेति वरुणविशेषणत्वसम्भवात्। भृ इत्यस्माल्लटि तस्य परस्मैपदिनि शत्रादेशो शकारऋवर्णयोर्लोपे शपि अकारं विहाय तस्य लोपे यणादेशे छांदसेऽभ्यासे तस्य जस्त्वे च सति बिभृदित्यस्य निष्पन्नत्वात्। तथाचापि बिभ्रद्वरुणो वस्त्रं वस्तेत्यन्वयसम्भवादित्याशङ्कते। शत्रन्ततयापीति। प्रकारान्तरमेतदिति। अस्मिन् समाधाने सत्येव शिष्यशिक्षणार्थं प्रकारान्तरेण समाधानमस्माभिरुक्तमित्यर्थः। स्पशाज्ञातदृशाविति धातुं मनसि निधायाह। अज्ञातेति। पूर्ववदिति। अतिद्रुत-भ्रममित्युक्तरीत्येत्यर्थः। अबिभ्रदितीति। वचनव्यत्यासेनाबिभ्रः धृतवानित्यर्थो द्रष्टव्यः॥ १३॥

नयं दिप्सन्ति दिप्सवः। इच्छार्थकसन्नन्तदिष्णुशब्दार्थमाह। दंभितुमिछव इति। स्तम्भितुमिछव इत्यर्थः। तर्हि भाष्ये स्तंभका स्तम्भनकर्तार इति कथं दिप्सुशब्दार्थ उक्त इत्यत आह। इच्छयेति। स्तम्भनकरणस्येछां विनाऽसम्भवादिति भावः। उपलक्षणमिति। इच्छया करणस्योपलक्षणमित्यर्थः। न स्तंभयन्तीति। स्तम्भनं कुर्वन्तीत्यर्थः। ननु द्रुहजिघांसायामस्मात् क्वनिप् प्रत्यये ककारस्येप् इत्यस्यचलोपे द्रुह्वन् इति प्रातिपदिकं पश्चात्स्वाद्युत्पत्तौ द्रुह्वा द्रुह्वाणौ द्रुह्वाणः इति शब्दो भवति। तत्रेयमाशङ्का। द्रुहधातोः कथं क्वनिप् प्रत्ययः। अतो मनिन् क्वनिब् वनिपश्चेति सूत्रेणाकारान्ताद्धातोरेव क्वनिपो विधानात् द्रुहधातोश्चाकारान्तत्वाभावादित्यत आह। अन्येभ्योपीति। अकारान्तधातुभिन्नेभ्योपि धातुभ्यः क्वनिप् प्रत्ययो भवतीति सूत्रार्थः। वनिपं विहाय क्वनिप्करणं कित्वाद्गुणाभावार्थः। अन्यथा द्रुहन्नितिस्यादित्यवधेयम्। न दिप्सन्तीति धातूनामनेकार्थत्वात् न जिघांसन्तीत्यर्थः। दैत्येषु द्रुहाण इति विशेषणसामर्थ्याद्योग्याङ्गी-क्रियामध्याहरति। यस्मै न द्रुह्यन्तीति। क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इति द्रुह्धातोर्योगे चतुर्थ्या विधानात् यस्मा इत्युक्तमित्यवधेयम्। इत्यत्रापीति। न केवलं द्रुह्वाण इत्यत्रेत्यर्थः।

(पदार्थप्रकाशिका)

इत्यादीति । यथा न द्रुह्वाण इत्यत्र दिप्सन्तीत्यनुवर्त्य धातूनामनेकार्थत्वान्न जिघांसन्तीत्यर्थ उक्तः । दिप्सन्तीत्यनुवर्त्य न जिघांसन्तीति योग्यक्रियाध्याहारो वा कृतः । एवमभिमातय इत्यत्रापि दिप्सन्तीति क्रियापदमनुवर्त्य धातूनामनेकार्थत्वमङ्गीकृत्यापकारं न कुर्वन्तीत्यर्थो वाच्यः । आदिपदादभिमातय इत्यत्र दिप्सन्तीति क्रियापदमनुवर्त्यापकुर्वन्तीति योग्यक्रियामध्याहृत्यान्वयो वक्तव्य इत्यर्थः । पूर्वेणपरेणवेति । नायं दिप्सन्ति तं वरुणं परितो निषेदिर इति वा नायं वरुणं दिप्सन्ति । तदित्समानमाशात इति वा पूर्वेण तच्छब्देन स यामनि प्रतिश्रुधीति परेणोत्तरेण वा सम्बन्ध इत्यर्थः ॥ १४ ॥

उतयोमानुषेष्वा । तदेव । स एव । आङ् इत्यस्यान्वयपूर्वकमर्थमाह । आसमन्तादित्यादिना आमानुषेष्वित्यत्रत्यम् आइत्येतदनूद्य तस्यार्थमाह । आ सम्यग्भूतेष्विति । समीचीनेष्वित्यर्थः । क्रियासमुच्चय इति । पूर्वोक्तं चक्रवस्त्रादिधारणरूपवरुणकर्तव्यसमुच्चायको असमंचयशश्चक्र इत्यत्रत्यश्चशब्द इत्यर्थः । कैमुत्यमेव दर्शयति । देवेष्विति । अज्ञेष्वस्मदादिमर्त्येषु यदा यशो व्यतनोत्तदा देवेषु व्यतनोदिति किं वक्तव्यमित्यर्थः । अस्यापीति । अस्यापि यछब्दस्य तदित्समानमाशात इति पूर्वत्र सयामनीत्युत्तरत्र वा सम्बन्धः ॥ १५,१८ ॥

## पदार्थदीपिका

करणेऽपि वर्तत इति ॥ लिटः क्वसुः । द्विर्भावहलादिशेषचुत्वानि । वस्वेकाजाद्धसामिति नियमात् इडभावः । पूर्ववद्रुत्वानुनासिकाविति भावः ॥ कृत्यार्था इति ॥ कृत्यार्थे तवैकेन्केन्यत्वनः इति सूत्रेण करोतेस्त्वन् गुणः रपरत्वं चेति भावः ॥ ११ ॥

करदिति ॥ प्रत्ययस्य करोतेर्लेटि व्यत्ययेन शप् । शपो वा लुकि लेटोडाटावित्यडागमः । इतश्च लोप इतीकारलोपः । यद्वा लोडर्थे छान्दसे लुङि कृमृद्रुरुहिभ्य इति च्लेरङ् । ऋदृशोऽङि गुण इति गुणः । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभाव इति द्रष्टव्यम् ॥ लेडिति ॥ तारयतेर्लोडर्थे लेट्याडागमः । सिब्बहुलं लेटीति सिप् । आदेशप्रत्यययोरिति षत्वम् । इतश्च इतीकारलोप इति भावः ॥ १२ ॥

आभ्यामिकार इति ॥ धातुसमुदायादपि प्रत्यय अद्भुतमित्यादौ दर्शनात् धातुद्वयादपि प्रत्ययो युज्यत इति भावः ॥ आद्यस्येति ॥ द्रु इत्यस्याकारः निरुक्तत्वादिति भावः ॥ हितं चेति ॥ उक्तनिरुक्तौ हितरमणीयमिति भवितव्यं हिरण्यमिति तु कथमिति चेन्न, हितशब्दस्य हिरित्यादेशः । रमणीयशब्दे मकारादिलोपश्चेत्यस्यार्थस्यादेशादिकमूह्यमित्यनेनानुपदमेवोक्तत्वात् ॥ हिरण्मयं

(पदार्थदीपिका)

चेति ।। हिरण्यविकारत्वाद्वा हिरण्मयमित्यर्थः । तर्हि हिरण्यमयमिति स्यादित्यत आह ।। निपातनादिति ।। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि इति हिरण्यशब्दात् विकारार्थे विहितस्य मयटः शब्दलोपो निपात्यत इति भावः । ननु भृञो लङि तिपि श्लुविकरणतया श्लाविति द्वित्वे उरदित्यत्वे रपरत्वे हलादिशेषे अभ्यासे चर्चेति जश्त्वे भृञामितीत्वे गुणे रपरत्वे हल्ङ्याबिति तिलोपे विसर्गे च सति अबिभरिति रूपेण भाव्यम् । तत्कथमबिभ्रदित्यनुवाद इत्यतः श्लुविकरणस्यास्य व्यत्ययेन शविकरणत्वाश्रयणात् बिभृ अदित्यत्र सति यणादेशे अबिभ्रदिति रूप निष्पत्तिरविकलैवेत्याह ।। विकरणव्यत्यास इति ।। तर्हि द्विर्भावानुपपत्तिरित्यत आह ।। द्विर्वचनं चेति ।। अत्र पक्षे उभयव्यत्यासाश्रयणाद्गौरवं मनसि निधाय लघुभूतं पक्षान्तरमाह ।। वचनव्यत्यासो वेति ।। अबिभरित्येकवचने प्रयोक्तव्ये अबिभ्रदिति बहुवचनप्रयोगात् वचनव्यत्यास इत्यर्थः ।। अदभ्यसादिति ।। अभ्यस्तात्परस्य झस्यादादेशे अबिभ्रदिति लङि प्रथमपुरुष बहुवचनमेतदिति भावः ।

यद्यपि च सिजभ्यस्तविदिभ्यश्चेत्यत्र झेर्जुसित्यतो जुसित्यनुवृत्तेः अभ्यस्तविदिग्रहणस्या-सिजर्थत्वात् लडादावप्रसङ्गाय नित्यं ङित इत्यतो ङित इत्यनुवृत्या अभ्यस्तात् ङितो झेर्जुस्विधायकत्वेन सिजभ्यस्तेत्यस्याविशेष विषयकतया अदभ्यस्तादिति प्राप्ताद्बाधकत्वेन अबिभरुरित्येव लङो बहुवचनम्, नत्वबिभ्रदिति वचन व्यत्यासोक्तिरनुपपन्नेति भाति । तथाप्यत्राभ्यस्तांशे ङिद्ग्रहणाननुवृत्तौ उभयोरपि समानविषयकतया ददतीत्यादावबिभयुरित्यादौ चोभय प्रसङ्गे विकल्पापत्योक्तस्थलद्वये चोभयप्रयोगादर्शनेन ददतीत्यादौ जुसः अबिभयुरित्यादौ चादः प्रसक्तिं वारयितुं प्रायिकत्वादनुवर्तमानं ङित्वमबिभ्रदर्यमादण्डमित्यादौ बिभ्रतेरद्यापि प्रयोगदर्शनेन न तद्बाधयितुं क्षममिति तत्र विकल्पेनोभयस्यापि सम्भवात् अबिभ्रदिति बहुवचनोपपत्तिरित्याशयेनास्य प्रवृत्तेर्न दोष इति तत्वम् ।। शत्रन्ततयापीति ।। बिभ्रतेः शतरि नाभ्यस्ताच्छतुरिति नुमभाव इति भावः ।। वस्त अवस्तेति ।। वस आच्छादने लङि अदादित्वाच्छपो लुक् । बहुलं छन्दस्यमाङ् योगेऽपीत्यडभाव इति भावः ।। निषेदिर इति ।। ष दॢृ-विशरणगत्यवसादनेषु अस्मात् गत्यर्थात् कर्मणि लिट् । एत्वाभ्यासलोपौ सदिरप्रतेरिति षत्वमिति ज्ञेयम् ।। १३ ।।

दिप्सव इति ।। सन्नन्तात् दम्भेः सनाशंसभिक्ष उरित्युप्रत्यय इति भावः ।। दिप्सन्तीति ।। दम्भु दंभे । अस्मात् सनि सनीवन्तर्धेत्यादिना इडभावः । हलन्ताच्चेत्यत्र हल्ग्रहणस्य जातिवाचित्वात्

(पदार्थदीपिका)

सनोऽकित्वात् दम्भ इच्चेति दकारात् परस्याकारस्येकारः । अनिदितामिति नलोपः । भष्भावा-भावश्छान्दसः । अत्र लोपोऽभ्यासस्येत्यभ्यासलोप इति भावः ॥ अन्येभ्योऽपि दृश्यन्त इति क्वनिबिति ॥ अन्येभ्योऽपि धातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्चानाकारान्तेभ्योऽपि मनिन् क्वनिप् वनिप् विच्चेति एते प्रत्यया भवन्ति । अपिशब्दस्य सर्वोपाधि व्यभिचारार्थत्वात् । दृशिग्रहणं तु प्रयोगानुसारार्थमिति सूत्रार्थः ॥ पूर्वेण परेण वेति ॥ तं वरुणं परितो निषेदिर इति पूर्वेण मेघी तमस्तं परितो यन्तीति परेण वा यच्छब्दस्य सम्बन्ध इत्यर्थः ॥ १४ ॥

क्रियासमुच्चय इति ॥ न केवलं वरुणो द्रापिं बिभ्रत् किं नामासमं यशश्च चक्र इति क्रिया समुच्चय इत्यर्थः ॥ पूर्ववदिति ॥ पूर्वेण परेण वा यच्छब्दसम्बन्ध इत्यर्थः ॥ १५ ॥

## टीकाविवृतिः

अतो विश्वानि ॥ सप्तम्यर्थे तमिति ॥ आद्यादिभ्य उपसंख्यानमिति वार्तिकादित्यर्थः ॥ अत्र तत्रेति ॥ एतत्तच्छब्दयोःपूर्वप्रकृतपरामर्शकत्वाद्भाष्ये अत इत्यस्य तत्रेति प्रतिपदं नत्वक्षरार्थपरं तयोरपरोक्षपरोक्षार्थयोःपर्यायत्वाभावादिति बोध्यम् ॥ कित निवासे इतीति ॥ करणे करोत्यर्थे इत्यर्थः । अस्माल्लिटः क्वस्वादेशे द्वित्वादाविदं रूपमिति शेषः ॥ कृत्यार्थे इतीति ॥ कृत्यार्थे तवैकेन्केन्यत्वन इति सूत्रेण भावकर्मार्थयोस्त्वनोविधानादितिभावः ॥ ११ ॥

सनः ॥ तच्छब्दादसुशब्दयोःपर्यायत्वादाह ॥ सोसाविति ॥ विश्वाहेति ॥ विश्वानि च तान्यहानि चेति विग्रहेण कर्मधारयसमासे जसः सुपां सुलुगिति डादेशे च कृते समासस्येत्यन्तोदात्तत्वापवादः- परादिश्छन्दसिबहुलमिति अहन्शब्दस्याद्युदात्तत्वं बोध्यम् ॥ सुपथेति ॥ अत्रापि नञ्सुभ्यामित्यनेन परपदान्तोदात्तत्वे प्राप्ते आद्युदात्तम् । द्व्यच्छन्दसीत्यनेन सोःपरं द्व्यच्कं यदाद्युदात्तं पदं तस्य बहुव्रीहा वाद्युदात्तविधानात् पथिन्शब्दस्य ग्रामादीनां चेति फिट्सूत्रेणाद्युदात्तत्वात् द्व्यच्कत्वाच्च बहुव्रीहावाद्युदात्तत्वमिति भावः ॥ करदिति ॥ कृञो लेटस्तिबादेशेऽडागमे इकारलोपे धातोर्गुण इति भावः ॥ लेडिति ॥ तॄ इत्यतो लेटि तिप अडागमे सिब्बहुलं लेटीति सिप्प्रत्यये सिप आर्धधातुकत्वादिडागमे सिब्बहुलंणिद्वक्तव्य इति सिपो णित्वाद्धातोर्वृद्धिरिति भावः ॥ १२ ॥

बिभ्रद्रापिम् ॥ आद्यस्य चाकार इति ॥ द्रुधातोरुकारस्याकारादेश इत्यर्थः ॥ द्रुतमिति ॥ शीघ्रेण देशान्तरानाप्नोति तीव्रेण भ्रमतीति यावदित्याशयः ॥ निपातनादिति ॥ ऋत्व्यवास्त्व्यवास्त्व-माध्वीहिरण्ययानि छन्दसीति सूत्रे मयटो मकारस्य यकारादेशनिपातनादिति भावः ।

(टीकाविवृतिः)

भृञः शब्विकरणस्य ग्रहणे शपः श्लोरभावाद्द्वित्वं न स्यात्तथा शपः पित्वाद्गुणे यणादेशो न स्यात्। श्लुविकरणस्य ग्रहणे तु लङि तिपः इतश्चेतीकारलोपः श्लौ द्वित्वादौ भृञामिदित्यभ्यासस्येत्वे बिभृत् इति स्थिते सार्वधातुकार्धधातुकयोरिति गुणे रपरत्वे हल्ङ्यादिलोपेन तिपो लोपे रेफस्य विसर्गे अबिभ इति स्यात्कथं श्रुतौ बिभ्रदिति रूपं भाष्ये चाबिभ्रदिति प्रतिपदमित्यत आह ॥ विकरणव्यत्यास इति ॥ तुदादिभ्य उक्ते शविकरणे व्यत्ययोक्त्या भृञोपि जाते छान्दसे द्वित्वे चाभ्यासेत्वे च छान्दसे शस्यङित्वाद्गुणाभावाद्यणादेश इति भावः। विकरणव्यत्यासा-द्याश्रयणारुचेराह ॥ वचनव्यत्यासो वेति ॥ भृञो लङः तिपि भवितव्ये व्यत्ययेन झि इत्यादेशे शपः श्लौ द्वित्वादौ- च झेःसर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनात्सिजभ्यस्तविदिभ्यश्चेति-जुसभावेऽदभ्यस्तादित्यदादेशे रूपमेतदिति भावः। पूर्वत्र पक्षे छान्दसत्रयाश्रयणादस्मिन्पक्षे द्वयाश्रयणाल्लाघवमिति भावः ॥ शत्रंततयापीति ॥ बिभ्रदिति ॥ श्रौते पदे शतरि शपः श्लौ द्वित्वादौ च शतुर्ङित्वाद्गुणाभावे यणादेशे सति सिद्धे अबिभ्रदिति भाष्ये किमर्थमुक्तमित्याशयः ॥ णिजिर्शौचे इति ॥ निष्पूर्वादस्मादिगुपधलक्षणे के उपसर्गादसमासेऽपि णोपदेशस्येति ण इति भावः ॥ वस्तेति ॥ वस आच्छादने इत्यतो लङि तादेशे अदादित्वाच्छपो लुकि बहुलं छन्दस्यमाङ्योगेपीत्यडभाव इति भावः ॥ स्पश इति ॥ स्पशबाधनस्पर्शनयोरित्यतःक्विप्। अनेकार्थत्वाद्धातूनामविज्ञात चरार्थत्वमुक्तम्। पूर्वमविज्ञाता अविज्ञातचराः। अविज्ञाताःसन्तश्च-रन्तीति वार्थः ॥ पूर्ववदिति ॥ द्रुतमाप्नोतीत्यर्थे प्रकृति प्रत्ययविभागादिपूर्ववदित्यर्थः ॥ द्रुतबन्धनमिति यावदिति ॥ शीघ्रेण बन्धसाधनमित्यर्थः ॥ १३ ॥

नयम् ॥ दिप्संव इति ॥ दंभुदंभे इत्यतः सनि द्वित्वादौ दंभ इच्चेतीत्वे अत्र लोपोभ्या-सस्येत्यभ्यासलोपे हलंताच्चेति कित्वे अनिदितां हल इति नकारलोपे चर्त्वे उप्रत्यय इति भावः। स्तंभका इति भाष्यं घटयितुमाह ॥ इच्छया करणमिति ॥ कृतिमित्यर्थः। स्तंभका निरोधका इत्यर्थः। द्रुह्वाण इत्यस्य दिप्संतीत्येतदावृत्यान्वयमभिधाय द्रुह्वाण इत्येतद्वचनसामर्थ्यलभ्य-क्रिययाप्यन्वयमाह ॥ यस्मै न द्रुह्यन्तीति वेति ॥ दैत्यराक्षसानामेव शत्रुत्वात्पुनः शत्रुग्रहणे पौनरुक्त्यमित्यत आह ॥ अन्ये शत्रव इति ॥ न दिप्संतीत्यादीति ॥ आदिशब्दान्न द्रुह्यन्ति न घ्नंतीति क्रियान्वय इति भावः ॥ यच्छब्दस्येति ॥ पूर्वेण बिभ्रद्रापिमिति वाक्येन। परेण सयामनिप्रतिश्रुधीत्युत्तरवाक्येन वेत्यर्थः ॥ १४ ॥

उत यः ॥ समशब्दपर्याय इति ॥ समशब्दात्तद्धिता इति वचनात्स्वार्थे णिप्रत्यये आदिवृद्धिरिति भावः ॥ तदेव सामीति ॥ आदिवृद्धिश्छान्दस इति भावः। यशसःउदरेषु करणासंभवाद्भाष्ये

(टीकाविवृतिः)

लक्षणयोदरेष्विति पदं हृदयेष्विति व्याख्यातन्तत्र संबन्धं दर्शयति ॥ सामीप्यादिति ॥ श्रौताङ्त्रये प्रथमाङ्गे भाष्ये समन्तादित्यक्षरार्थमुक्त्वा सदेति तात्पर्यार्थ उक्तः । तमनुवदन्नेव सर्वस्मिन्काले इति सदेत्यस्यार्थमाह ॥ आसमन्तात्सर्वस्मिन्निति ॥ द्वितीयस्याह ॥ आसम्यग्भूतेष्विति ॥ क्रिया समुच्चयेति ॥ बिभ्रद्रापिं हिरण्ययमित्याद्युक्तक्रियासमुच्चये इत्यर्थः ॥ अन्याविति ॥ अस्माकं हृदयेषु च मनुष्येषु चेत्यन्योन्यसमुच्चये इत्यर्थः ॥ अस्यापीति ॥ यच्छब्दस्य पूर्वेण वाक्येन परेणेवेत्यर्थः ॥ १५ ॥ १८ ॥

ऋक्संहिता पदपाठसहिता (सू-२५, व-४)

(२८४) परा मे यन्ति धीतयो गावो न गव्यूतीरनु ॥
इच्छन्तीरुरुचक्षसम् ॥ १६ ॥

(प०) परा । मे । यन्ति । धीतयः । गावः । न । गव्यूतीः । अनु ॥
इच्छन्तीः । उरुऽचक्षसम् ॥ १६ ॥

(२८५) सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् ॥ होतेव क्षदसे
प्रियम् ॥ १७ ॥

(प०) सम् । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतम् ॥
होताऽइव । क्षदसे । प्रियम् ॥ १७ ॥

(२८६) दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि ॥
एता जुषत मे गिरः ॥ १८ ॥

(प०) दर्शम् । नु । विश्वऽदर्शतम् । दर्शम् । रथम् । अधि । क्षमि ॥
एताः । जुषुत । मे । गिरः ॥ १८ ॥

(२८७) इमं मे वरुण श्रुधी हवमद्या च मृळय ॥
त्वामवस्युरा चके ॥ १९ ॥

(प०) इमम् । मे । वरुण । श्रुधि । हवम् । अद्य । च । मृळय ॥
त्वाम् । अवस्युः । आ । चके ॥ १९ ॥

(ऋक्संहिता पदपाठसहिता)

(२८८) त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि ॥ स यामनि प्रति श्रुधि ॥ २० ॥

(प०) त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि ॥ सः । यामनि । प्रति । श्रुधि ॥ २० ॥

(२८९) उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ॥ अवाधमानि जीवसे ॥ २१, १९, २५ ॥

(प०) उत् । उत् । ऽतमम् । मुमुग्धि । नः । वि । पाशम् । मध्यमम् । चृत ॥ अव । अधमानि । जीवसे ॥ २१, १९, २५ ॥

## ऋग्भाष्यम्

महाज्ञानं परेशानमिच्छंत्यो मम धीतयः । सर्वतो यांति यद्वच्च गावःशृङ्गस्वरानु ॥ १६ ॥ आपूर्णं मधु मोक्षस्थं सुखं पचसि मेग्निवत् । तत्संवोचावहै भूयः प्रियस्त्वं मम यत्सदा ॥ १७ ॥ अदर्शं तं च सर्वज्ञं तद्रथं च भुवि स्थितम् । सुगिरो मेजुषतच ॥ १८ ॥ त्वाऽवनेप्सुरहं चके । पश्येयम् ॥ १९ ॥ त्वं च विश्वस्य राजाभवसिमेधिरः । मेधावान् ग्मःपृथिव्याश्च सकाले च प्रतिश्रुधि ॥ २० ॥ सत्वं त्रिगुणपाशान्नो मुमुग्धिछिन्धिचांजसा ॥ २१, १९, ६ ॥

## ऋग्भाष्यटीका

परा मे । महाज्ञानम् । मे मम । धीतयो बुद्धिविशेषाः । इच्छन्तीरिच्छंत्यः । निश्रेयसमिति शेषः । उरुचक्षसं महाज्ञानम् । परा सर्वतः । सर्वं परित्यज्य यन्ति यान्ति । तमेवेच्छंत्य इति वा । किमिव । गव्यूतीः गवामूतय आह्वानानि गव्यूतयस्ताः शृङ्गस्वरान् । अनु प्रति । गावो न गावो यद्वत्तथा ॥ १६ ॥

संनु । आपूर्णम् । यतस्त्वं होतेवाग्निवत् । अग्निर्यथौदनादिकं पचति तथा । मे मदीयम् । आभृतं मधु आपूर्णं मधु मोक्षस्थं सुखम् । क्षदसे पचसि । व्यक्तीकरोषीति यावत् । यद्यस्माच्च त्वं मम सदा प्रियं प्रियः । तत्तस्मात् नु इदानीम् । पुनर्भूयो भूयः । आवां संवोचावहै सम्भाषणं करवावहै ॥ १७ ॥

दर्शं नु । अदर्शम् । अहं नु इदानीम् । विश्वदर्शतं सर्वज्ञम् । तं वरुणं च । दर्शम् अदर्शम् अद्राक्षम् । अधिक्षमि क्षमामधिकृत्य तृतीयोतिशये । भुवि स्थितम् । रथं तद्रथं चादर्शम् । स एवं दृष्टो वरुणः एता वेदरूपा गिरो मे सुगिरः । जुषत जुषतां च । आकर्णयतु ॥ १८ ॥

(ऋग्भाष्यटीका)

इमं मे त्वावनेप्सुः। हे वरुण मे इमं हवमिदमाह्वानम्। श्रुधि शृणु। अद्यच अद्यैव। मृळय सुखय। रक्ष वा माम्। कुतः। अवस्युः अवनेप्सुः। अवशब्दस्यक्यजंतस्येदं रूपम्। अहं त्वां त्वा आचके पश्येयम्। दृष्टवानस्मि। चक तृप्तावित्यस्य दर्शनार्थत्वम्॥ १९॥

त्वं विश्वस्य त्वं च। मेधिरो मेधावान्। मत्वर्थ इरः। हे मेधिर यस्त्वमेव विश्वस्य कृत्स्नस्य जगतः। तस्यैव प्रपञ्चः दिवः स्वर्गस्य च। ग्मः पृथिव्याश्च। आकारलोपः छान्दसः। राजसि राजा भवसि। सयामनि काले। अस्माकमापत्काल एव प्रति श्रुधि। विज्ञापनमाकर्णय। मोचयामि त्वामिति प्रतिजानीहि वा॥ २०॥

उदुत्तमम्। तात्पर्यमाह॥ सत्वम्। हे वरुण स एवं विज्ञापितस्त्वम्। नोऽस्माकम्। उत्तमं पाशं सत्वगुणाख्यम्। उदंजसा मुमुग्धि मुञ्च। सुहृद्भ्यो दत्वा। मध्यमञ्च रजोगुणनामकं पाशम्। विचृत चृती हिंसायाम्। अञ्जसा छिंधि। उदासीनेभ्यो दत्वा। अधमानि च बन्धनानि तमोवृत्तिरूपाणि। जीवसे जीवितुं मुक्त्यर्थम्। अवचृत द्विषद्भ्यो दत्वेति॥ २१, १९, ६॥

## मन्त्रार्थमञ्जरी

मे, मम। धीतयः, बुद्धिविशेषाः। इच्छन्तीः, इच्छन्त्यः। (निःश्रेयसम्) इति शेषः। उरुचक्षसम्, महाज्ञानम्, परमेश्वरम्। परा, सर्वं पराकृत्य। यन्ति, यान्ति। किमिव ? गव्यूतीः, गवां यूतय आह्वानानि गव्यूतयस्ताः शृङ्गस्वरान्। अनु, प्रति। गावः न, गावो यथा, तथा इति॥ १६॥

(हे वरुण) यतः (त्वम्) होतेव, अग्निरिव, अग्निर्यथौदनादिकं पचति, तथा। मे, मदीयम्। आभृतम्, आपूर्णम्। मधु, मोक्षस्थं सुखम्। क्षदसे, क्षरसि, (पचसि) व्यक्तीकरोषीति यावत्। (यत्) यस्मात्। (त्वम्) मम प्रियम्, सदा प्रियः। (तत्) तस्मात्। नु, इदानीम्। पुनः, भूयोभूयः। (आवाम्) सम् वोचावहै, सम्भाषणं करवावहै॥ १७॥

(अहम्) नु, इदनीम्। विश्वदर्शतम्, विश्वेन दर्शनं तं ततम्, व्युत्पादितमेतत्पदं 'वायवा याहि दर्शत' इत्यत्र, सर्वज्ञं, तं वरुणं च। दर्शम्, अदर्शम्, अद्राक्षम्, दृशेः लुङि 'इरितो वा' इति च्लेरङ्, 'ऋदृशोऽङि गुणः' 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। अधि क्षमि, क्षमामधिकृत्य, 'तृतीयोऽतिशये' (म० व्या० सू०)। भुवि स्थितम् रथम्, तद्रथम्। (च) दर्शम्, अदर्शम्। (सः) एवं दृष्टो वरुणः। एताः मे गिरः। जुषत, जुषताम्, आकर्णयतु॥ १८॥

(हे) वरुण मे। इमम् हवम्, इदमाह्वानम्। श्रुधि, शृणु। अद्य च, अद्यैव। मृळय, सुखय, रक्ष वा। (माम्) इति वा योज्यम्। कुतः ? अवस्युः, अवनेप्सुः, अवसुशब्दात्क्यच्, तत उः। (अहम्) त्वाम्, त्वा। आ चके, पश्येयम्, 'चक तृप्तौ' इत्यस्य दर्शनार्थत्वं ध्येयम्॥ १९॥

मेधिर, मेधाविन्, मत्वर्थ इरन्प्रत्ययः । (यः) त्वम् (एव) । विश्वस्य, कृत्स्नस्य जगतः । तस्यैव प्रपञ्चनम् दिवः, स्वर्गस्य । च । ग्मः च, ग्मायाश्च, पृथिव्याश्च, आतो लोपश्छान्दसः । राजसि, राजा भवसि । सः (त्वम्) यामनि, काले, अस्माकमापत्काले । (एव) प्रति श्रुधि, विज्ञापनमाकर्णय, 'मोचयामि त्वाम्' इति प्रतिजानीहि इति वा ॥ २० ॥

(हे वरुण) (सः) एवं विज्ञापितस्त्वम् । नः अस्माकम् । उत्तमम् पाशम्, सत्त्वगुणाख्यम् । उत्, अञ्जसा । मुमुग्धि, सुहृद्भ्यो दत्त्वा मोचय । मध्यमम् (च) रजोगुणनामकम् । विचृत, 'चृती हिंसायाम्' अञ्जसा छिन्द्धि, उदासीनेभ्यो दत्त्वास्मत्तो वियोजय । अधमानि (च), बन्धनानि तमोवृत्तिरूपाणि । जीवसे, जीवितुम्, मुक्त्यर्थम् । अव (चृत), द्विषद्भ्यो दत्त्वा वियोजय इति । प्रसिद्धपाशत्रयमोचनप्रार्थनं तु व्यक्तम् ॥ २१ ॥ इति नवदशो वर्गः ॥ १९ ॥ पञ्चविंशं सूक्तम् ॥ २५ ॥

## रूपावतारः

परा मे ॥ विनापि शेषं योजनामाह । तमेवेछन्त्य इति ॥ १६ ॥

संनुवोचावहै ॥ वोचावहै इति । वचेर्लेटो वह्यादेशे ''आडुत्तमस्य पिच्च'' (३।४।९२) इत्याडागमे । 'एत ऐ' (३।४।९३) इत्यैकारादेशे अदादित्वात् शपो लुकि छान्दसे उमागमे वोचावहै इति रूपम् ॥ १७ ॥

दर्शं नु ॥ दर्शमिति । दृशेर्लुङि 'इरितो वा' (२।४।७७) इति च्लेरङादेशे ''ऋदृशोऽङिगुणः'' (७।४।१६) इति गुणे छान्दसे अडभावे मिपो मादेशे दर्शमिति रूपम् । अद्राक्षमिति । दृशेर्लुङि च्लेः सिचि 'सृजि दृशोर्झल्यमकिति' (६।१।५८) इत्यमागमे यणादेशे ''वद व्रज.... (७।२।३) इति वृद्धौ व्रश्च... (८।२।३६) इति षत्वे ''षढोः कः सि (८।२।४१) इति कत्वे'' ''आदेशप्रत्यययोः'' (८।३।५९) इति सिचः षत्वे मिपोऽमादेशे अडागमे अद्राक्षमिति रूपम् । क्षमामधिकृत्येति । इतः परं टीकायां श्रूयमाणं 'तृतीयोऽतिशये' इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । अधिक्षमीत्यनयोर्भिन्नपदत्वेनाव्ययीभावसमासाभावात् ''अव्ययीभावश्च'' (२।४।१८) इति नपुंसकत्वाभावेन 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१।२।४७) इति ह्रस्वत्वाभावात् इकारस्य तृतीयत्वाभावेन 'तृतीयोऽतिशय' इत्युक्त्ययोगात् । क्षमामित्याकारस्य छान्दस इकारे ''सुपां सुलुक्'' ...(२७।१।३९) इति अमो लुकि क्षमीति

(रूपावतारः)

रूपम्। जुषतेति। परस्मैपदं मध्यमपुरुषो बहुवचनं चेतित्रयं छान्दसमिति द्रष्टव्यम्। जुषत इति भाष्ये तु परस्मैपदमात्रं छान्दसमित्यूह्यम्॥ १८॥

इमं मे॥ क्यजन्तस्येति। अवसुशब्दात् "सुप आत्मनः क्यच्" (३।१।८) इति क्यचि 'क्याच्छन्दसि' (३।२।१७०) इति उप्रत्यये अतो लोपे अवस्युरिति रूपम्। आचके इति। आङ्पूर्वात् चकेर्लट इटि 'टित आत्मनेपदानां टेरे' (३।४।७९) इति एत्वे आचक इति रूपम्॥ १९॥

त्वं विश्वस्य॥ मत्वर्थे इर इति। मेधाशब्दाकारलोपश्चेति शेषः। आकारलोप इति। ग्माशब्दाकारलोप इत्यर्थः। राजसि। राजा भवसि। शोभमानत्वं राज्ञोऽसाधारणो धर्म इति भावः। एवमुत्तरत्रापि द्रष्टव्यम्॥ २०॥

उदुत्तमम्॥ एतेन पुण्यादीनामेव सुहृदः साधु कृत्यामित्यादिना दानस्य प्रमाणसिद्धत्वात् सत्वादिगुणानां दानाभिधानमयुक्तमिति परास्तम्। अवपूर्वात् चृती हिंसाग्रन्थनयोरिति धातोः तुदादौ पठितात् लोटि शे सिपो हित्वे "अतो हेः" (६।४।१०५) इति लुकि, अवचृतेति रूपम्॥ २१॥ १९॥ ६॥

## पदार्थप्रकाशिका

परामे यन्ति धीतयः। सर्वतः ल्यब्लोपनिमित्ता पञ्चमीत्याशयेनोक्तं सर्वं परित्यज्येति। परेशा नयन्तीति सम्बन्धः। यन्ति विषयीकुर्वन्ति। तमेवेच्छन्त्य इति वेति। पूर्वमिछन्तीरित्यत्र निःश्रेयस इति शेषः पूरित। इदानीं तमेव इच्छन्त्य इत्यवधेयम्। इदं चैकान्तभक्ताभिप्रायेणेति मन्तव्यम्। तथाच यो वरुणः पूर्वोक्तगुणकः तमेवेछन्त्यो मम धीतयः। परा सर्वं परित्यज्योरुचक्षसमेव यन्तीति योज्यम्। आह्वानानीति। आहूयते एभिरिति आह्वानानि आह्वानसाधनानीत्यर्थः। आह्वानसाधनान्येव दर्शयितुं प्रवृत्तं भाष्यमनुवदति। शृङ्गस्वरानिति। गवामिति। यथा गावः शृङ्गस्वरान् श्रुत्वा सर्वं परित्यज्य यान्ति तथैवेत्यर्थः॥ १६॥

संनुवोचावहै। पुनः संवोचावहै सम्भाषणं करवावहै इति। मोक्षसुखव्यक्तिसाधनम् इदानीमपि त्वद्विषयकव्याख्यानादि सम्भाषणं करिष्यामीति भावः॥ १७॥

दर्शन्नु विश्वदर्शतम्। विश्वविषयकेण दर्शनेन ज्ञानेन ततो विश्वदर्शत इति विग्रहमभिप्रेत्य तदर्थमाह। सर्वज्ञमिति। क्षमामिति। गोरिलाकुम्भिणीक्षमेत्यभिधानात्। क्षमां भुवमधिकृत्य

(पदार्थप्रकाशिका)

वर्तमानामित्यर्थः। तृतीयोऽतिशय इति। ननु क्षमाशब्दस्याकारान्तत्वेन आकारापेक्षया इकारस्य तृतीयत्वाभावात् कथमिति चेदुच्यते। अत्र क्षमामधिकृत्यवर्तमानमिति अव्ययीभावसमासस्य विवक्षितत्वात् सनपुंसक इति अव्ययीभावस्य नपुंसकत्वाभिधानात्। अधिक्षममिति भवति। तथाचाव्ययीभावसमासानन्तरमकारान्तत्वप्राप्त्या तदपेक्षया इकारस्य तृतीयत्वमुपपन्नमिति भावः। अत्र यद्यपि अधिक्षमि इति द्वैपदेनशाकल्याः पठन्ति। तथाच एकपदत्वाभावेनाव्ययीभाव समासोऽनुपपन्न एव। तथापि तदुलंध्य सर्वज्ञाचार्यैरेकपदमङ्गीकृत्य भुविस्थितमिति व्याख्यातम्। तत्प्रकारश्चास्माभिर्दर्शित इत्यदोषः। रथं चेति रथं रथमारुह्य वरुणः समागतः। तं रथं चेत्यर्थः ॥ १८ ॥

इमं मे वरुण श्रुधीहवम्। क्यजन्तस्येदं रूपमिति। अवसुशब्दात् क्यच्प्रत्यये ककारचकारयोर्लोपे क्याच्छन्दसीति ताच्छीलिके डप्रत्यये अवस्युरिति रूपं द्रष्टव्यम्। ननु चकधातोः तृप्त्यर्थकत्वात्कथं दर्शनार्थत्वमित्यतो धातूनामनेकार्थत्वादिति भावेनाह। चकतृप्ताविवितीति ॥ १९ ॥

त्वं विश्वस्यमेधिरः। मत्वर्थे इर इति। मेधाशब्दात् मत्वर्थे इरप्रत्यये अकारलोपे मेधिरे इति रूपम्। तस्यैव विश्वस्येत्यस्यैव। ननु ग्माशब्दस्याकारलोपे ग्म् ग्मौ ग्मः इति हलन्तः शब्दो भवति। तस्य षष्टी ग्म इति भवतीति द्रष्टव्यम्। स इति। यो विश्वस्य राजा भवति स इत्यर्थः ॥२०॥

उदुत्तमं मुमुग्धिनः। उत वि अव इत्युपसर्गाणां क्रमेण सम्बन्धं वदन् शेषपूरणेन योजयति। हेवरुणेत्यादिना। मुञ्चेति। अस्मत्तो मोचयेत्यर्थः। सुहृभ्द्यो दत्वेत्यादेः पूर्वोक्त एवाभिप्रायो द्रष्टव्यः। पुण्यादिपरत्वेनोत्तमादिपाशशब्दव्याख्याने उत्तममित्यनेन पुनरुक्तिप्रसङ्गाद्गुणपरत्वेनात्र व्याख्यानम् इत्यवगन्तव्यम् ॥ २१,१९,६ ॥

## पदार्थदीपिका

इच्छन्त्य इति ॥ इषु इच्छायां लटः शत्रादेशः। तुदादिभ्यः शः। इषुगमियमां छः इति छत्वमिति भावः। टीकायां गवां यूतय इत्येव पाठः साधुः। गोर्यूतौ छन्दसीति यूतिशब्दे च परतोऽवादेश विधानात्। गवामूतय इति क्वचित्कः पाठस्तु मृग्यः। अवादेशे गवूतय इति, अवङादेशे च गवोतय इति प्रसङ्गेन विवक्षितरूपासिद्धेरिति द्रष्टव्यम् ॥ १६ ॥

वोचावहा इति ॥ लोडर्थे छान्दसे लुङि ब्रुवो वचिः। अस्यति वक्तीति च्लेरङादेशः। वच उमिति उमागमे गुणः। व्यत्ययेन टेरेत्वम्। यद्वा लोट एव लुडादेशः। स्थानिवद्भावात् एत्वमिति द्रष्टव्यम् ॥ १७ ॥

(पदार्थदीपिका)

विश्वदर्शतमिति ।। दृशेः भृमृदृशीत्यादिना भावे तजिति भावः ।। दर्शमिति ।। दृशोरिरितो वेति च्लेरङादेशः । ऋदृशो ङि गुण इति गुणः । पूर्ववदडभाव इति भावः । तृतीयोऽतिशय इति क्षमामधिकृत्येति समासार्थस्यात्र विवक्षितत्वात् एकपद्यैकस्यैकविभक्तिकत्वाभावात् असमासेन पाठे विवक्षितसमासार्थे विभक्त्यर्थाधिशब्दपूर्वपरत्वेनाव्ययीभावसमासेऽव्ययी-भावश्चेत्यव्ययत्वेऽव्ययीभावश्चेति नपुंसकत्वे च सति ह्रस्वो नपुंसके प्रातिपदिकस्येत्याकारान्त क्षमाशब्दस्य ह्रस्वत्वे च सति लक्षणप्राप्ताकारापेक्षतृतीये वर्णे अतिशयविवक्षया तृतीयोऽतिशय इति जाते अव्ययादाप्सुप इति विभक्तिलोपे अकारान्तत्वाभावादेव नाव्ययीभावादतोऽम्त्वपञ्चम्या इत्यस्याप्राप्तेः अधिक्षमीति रूपसिद्धिः । एवं च क्षमाशब्दस्याकारान्तत्वात् तदपेक्षयातिशयार्थ तृतीयोऽपि दीर्घ एव ईकारः स्यात् । नत्वकारापेक्षयातिशयार्थ तृतीय इकार इति चोद्यं परिहृतं भवति । यद्वा आकारस्येकारेऽपि ह्रस्वो नपुंसक इति ह्रस्वतयाभिमतसिद्धिः । न चातो धातोरित्यत्र आत इति योगविभागात् क्षमाशब्दे आकारलोप इति वेदापव्याख्यानोक्तरीत्या क्षमाशब्दस्याकारलोपे सप्तम्यन्तं क्षमीति भविष्यति इति किमलाक्षणिकबहुकार्याश्रयणेनेति वाच्यम् । अन्तलोपस्याप्यलाक्षणिकत्वात् । किञ्च समासविवक्षायां स्थितमित्यस्य वृत्तावन्तर्भूततया लाभेऽपि असमासे तदध्याहार प्रसङ्गः । अर्थातिशयस्य वा समासे लाभादर्थगौरवानुरोधेन शब्दालाक्षणिककार्याङ्गीकारस्यादोषत्वाद्युक्तं समासाश्रयणमिति ध्येयम् ।। १८ ।।

श्रुधीति ।। श्रु-श्रवणे । लोटो हिः । श्रुश्रुणुपृकृवृभ्यश्छन्दसीति हेर्धिरादेशः । बहुलं छन्दसीति विकरणस्य लुक् । अन्येषामपि दृश्यत इति संहितायां दीर्घ इति भावः ।। अवशब्दस्य क्यजन्तस्येदं रूपमिति ।। अवशब्दादिच्छार्थे सुप आत्मनः क्यजिति क्यच् । क्याच्छन्दसीति क्यजन्तात् उप्रत्ययः । अतो लोप इत्यल्लोपः । क्यचि चेतीत्वम् । अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घत्वं न भवति । न छन्दस्यपुत्रस्येति निषेधात् । सर्वप्रतिपदिकेभ्यो लालसायां सुग्वक्तव्य इति सुगागमः । अवसशब्दादेव क्यच् व्युत्पाद्य इति न कोऽपि दोषः ।। चकतृप्तावित्त्यस्येति ।। अनेकार्थत्वाद्धातूनामिति भावः ।। १९ ।।

मत्वर्थ इर इति ।। तद्धिता इति बहुवचनबलादित्यर्थः ।। ग्मः पृथिव्या इति ।। भूनामसु पठितत्वादिति भावः ।। आकारलोपश्छान्दस इति ।। यद्यपि चात्र आतो धातोरित्यत्रात इति योगविभागाश्रयणात् अधातोरप्यालोप इत्यङ्गीकारात् तच्छान्दसोऽक्तिरनुपपन्नेति भाति । तथाप्यात इति योग विभागेऽप्यनाप इति वक्तव्यमिति महाभाष्योक्तेः अत्र धातोरित्यस्य

(पदार्थदीपिका)

नित्यार्थत्वेन तस्य आत इति योगविभागविषये विभाषात्वाभ्यनुज्ञापकत्वात् । तस्याश्च व्यवस्थितविभाषात्वात् । आबन्तस्य लोपाभावोऽन्यस्य तु यथाप्रयोगं विकल्प इति कैय्यटोक्तेश्च योगविभागेऽप्याबन्ते ग्माशब्दे नाकारलोपप्राप्तिरित्याशयेन तच्छान्दसत्ववर्णनस्य श्लिष्टत्वात् इति भावः ॥ २० ॥

मुमुग्धीति ॥ मुच्लृमोक्षणे । बहुलं छन्दसीति विकरणस्य श्लुः । द्विर्भावः । हलादिःशेषः । हुझल्भ्यो हेर्धिरिति हेर्धिरादेश इति भावः ॥ चृती हिंसायामिति ॥ लोटो हिः । तुदादिभ्यः शः । अतो हेरिति हेर्लुगिति भावः ॥ जीवसे जीवितुमिति ॥ तुमर्थे सेसेनित्यसेप्रत्यय इति भावः ॥ २१-१९ ॥

## टीकाविवृतिः

परामे ॥ धीतय इति ॥ ध्यैचिन्तायामित्यत औणादिके वसेस्तिरित्युक्तेति प्रत्यये संप्रसारणे च बहुलोक्तेर्जातेनिष्पन्नधीति शब्दे प्रत्ययस्वर इति भावः ॥ उरुचक्षसमिति ॥ चक्षिङ्व्यक्तायां वाचीत्यतः चक्षेर्बहुलंशिच्चेत्युणादिसूत्रेणासुन्प्रत्यये शित्वोक्तेः ख्याञादेशाभाव इति भावः । पराशब्दस्य पराविमोक्ष प्राधान्यप्रातिलोम्येषु धीषणे इति विश्वोक्तेर्विमोक्षस्य परित्यागरूपत्वेन परित्यागार्थस्य सर्वत इत्यध्याहारेणान्वय इत्याशयेनाह ॥ परा सर्वत इति ॥ निश्रेयसमित्यध्याहारास्वरसादाह ॥ तमेवेच्छंत्य इति वेति ॥ तं परेशानम् । इदं व्याख्यानमेकान्तभक्तापेक्षयेति ज्ञेयम् । अवतेरनेकार्थात् क्तिनि ऊतियूतिजूतीति निपातनात्संप्रसारणे दैर्घ्ये च निष्पन्नस्य गोशब्देन समासे छान्दसे युडागमे गोर्यूतौ छन्दस्युपसंख्यानमित्यवादेश इत्याशयेनाह ॥ गवामूतय आह्वानानीति ॥ शृङ्गस्वरानिति ॥ शृङ्गवेण्वादिध्वनीनित्यर्थः । भाष्येऽनुशब्दःलक्षणार्थे कर्मप्रवचनीय इत्याशयेनाह ॥ अनुप्रतीति ॥ १६ ॥

संनु ॥ मधुशब्दस्य प्रसिद्धक्षौद्रार्थत्वे अल्पत्वाल्लक्षणयार्थान्तरमाह ॥ मोक्षस्थं सुखमिति ॥ क्षदसे पचसीति ॥ बहुलमेतन्निदर्शनमित्युक्तेः पचनार्थकःक्षदिर्धातुरभ्यनुज्ञातः तस्य यत इति यच्छब्दयोगाद्यद्वृत्तान्नित्यमिति निघाताभाव इति भावः ॥ वोचावहा इति ॥ वचेर्लोटो वह्यादेशे आडुत्तमस्य पिच्चेत्याडागमे एत ऐ इत्यैकारादेशे शपोऽदादित्वाल्लुकि वच उमित्यङ्चुक्त उमागमश्छान्दसत्वादङभावेपि जात इति भावः ॥ १७ ॥

दर्शं नु ॥ विश्वदर्शतमिति ॥ दृशेःभृमृदृशीत्यादिना अतच्प्रत्यय इति भावः । दृशेर्लुङि च्लेरिरितो वेत्यङादेशे ऋदृशो ङि गुण इति गुणे छान्दसे अडागमाभावे मिप अमादेश इति भावेनाह ॥

(टीकाविवृतिः)

दर्शमदर्शमिति ।। एतस्य प्रतिपदान्तरमाह ।। अद्राक्षमिति ।। अङ्भावे न दृश इति च्लेःक्सादेशनिषेधात्सिजादेशे सृजि दृशोर्झल्यमकितीत्यमागमे यणादेशे वदव्रजेति वृद्धौ शस्य व्रश्चेति षत्वे षढोःकस्सीति कत्वे आदेशप्रत्यययोरिति सिचःषत्वे च रूपमेतदिति भावः । अधिक्षमीति पदद्वयन्तात्पर्यतो भाष्ये भुविस्थितमिति व्याख्यातं तत्राक्षरार्थमाह ।। क्षमामधिकृत्येति ।। विद्यमानमिति शेषः । क्षमां भूमिं धरा वसुमती धात्री क्षमा विश्वंभरावनिरिति धनंजयोक्तेः । ननु क्षमते इति व्युत्पत्तौ क्षम् धातोःपचाद्यचि अदंतात्क्षमशब्दात्स्त्रीत्वविवक्षायामजाद्यतष्टाबिति टापा भवितव्यं क्षमीतीकारःकथमित्यत आह ।। तृतीयोतिशये इति ।। ह्रस्वाकारापेक्षया ह्रस्वेकारस्तृतीयत्वाट्टापं बाधित्वा जातः । ततः सुपां सुलुगिति द्वितीयायाः लुगिति भावः । क्षमायामित्यधिक्षमीति विभक्त्यर्थेऽव्ययीभावं कृत्वा अव्ययीभावश्चेति नपुंसकत्वे ह्रस्वो नपूंसक इति ह्रस्वत्वे जाते इकारस्तृतीयःकार्य इत्यप्याहुः । अस्मिन्पक्षे शाकलदृष्टपदद्वयविरोधपरिहारप्रकारस्तु द्रवत्पाणी शुभस्पतीत्य त्रोक्तोऽनुसंधेयः ।। तद्रथं चेति ।। वरुणरथमित्यर्थः । श्रुतौ द्वितीयदर्शमिति शब्दस्य पादादित्वात्तिङ्ङतिङ इति न निघातः । जुषतेति श्रौते पदे जुषेरात्मनेपदित्वाल्लोटः प्रथमपुरुषैकवचनतादेशस्य छान्दसत्वेन एत्वाभावादामभाव इत्याशयेनाह ।। जुषतां चेति ।। जुषी प्रीतिसेवनयोरित्यस्य तौदादिकस्य सेवनार्थं गृहीत्वा तात्पर्यमाह ।। आकर्णयत्विति ।। १८ ।।

इमं मे ।। हवमिति ।। ह्वेञ् स्पर्धायां शब्दे चेत्यतः शब्दार्थात् ह्वःसंप्रसारणमित्यधिकारे बहुलं छन्दसीति संप्रसारणे ऋदोरबित्यप्प्रत्यये गुणावादेशावितिभावः ।। श्रुधीति ।। श्रुधातोर्व्यत्ययेन श्रुवःशृचेत्युक्तश्नुप्रत्यय श्नादेशयोरभावे श्रुशृणुपॄकृवृभ्यश्छन्दसीति हेर्धित्वमिति भावः ।। अवशब्दस्येति ।। अवतेर्भावे अकारप्रत्ययान्तस्य सर्वप्रातिपदिकानां क्यचि लालसायामसुक्सुकौ वाच्याविति सुगागमे क्याच्छन्दसीति उप्रत्यय इति शेषः ।। १९ ।।

त्वं विश्वस्य ।। मत्वर्थे इर इति ।। मेधाशब्दात्तुदादिभ्य इलच्चेतीलप्रत्यये रलयोरभेदाल्लस्य र इति भावः ।। आकारलोपश्छान्दस इति ।। पृथिवीनामसु पठितग्माशब्दस्थस्याकारस्य ङसि परत आतो धातोरित्यत्रात इति योगविभागान्महाभाष्ये छन्दोर्थं कृताल्लोपः । अत एव सूत्राणां छन्दस्तुल्यत्वाक्त्वःश्न इत्युदाहृतमिति भावः । राजतीत्यैश्वर्यकर्मसु पाठादाह ।। राजसि राजा भवसीति ।। यामनि काले इति ।। याधातोःसर्वधातुभ्यो मनिन्निति मनिन्प्रत्यय इति भावः ।। २० ।।

उदुत्तमं मुमुग्धि ।। चृती हिसायामिति ।। चृती हिंसाग्रथनयोरिति तुदादौ पठिताल्लोटि शे सिपो हित्वे अतो हेरिति लुक् । प्रकृते हिंसार्थस्यैवोपयोगात् हिंसायामित्युक्तमिति बोध्यम् । वीत्यस्य

(टीकाविवृतिः)

व्याख्यानमंजसेति ॥ जीवसे इति ॥ जीवप्राणधारणे इत्यतः तुमर्थे सेसेनसे असेनिति असेप्रत्यय इति भावः ॥ २१ ॥ १९ ॥ ६ ॥

ऋक्संहिता पदपाठसहिता (सू-२६, व-१)

(२९०) वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते ॥ सेमं नो अध्वरं यंज ॥ १ ॥

(प०) वसिष्व । हि मियेध्य । वस्त्राणि । ऊर्जाम् । पते ॥ १ ॥

(२९१) नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः ॥ अग्ने दिवित्मता वचः ॥ २ ॥

(प०) नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मऽभिः ॥ अग्ने । दिवित्मता । वचः ॥ २ ॥

(२९२) आ हि ष्मा सूनवे पितापिर्यजत्यापये ॥ सखा सख्ये वरेण्यः ॥ ३ ॥

(प०) आ । हि स्म । सूनवे । पिता । आपिः । यजति । आपये ॥ सखा । सख्ये । वरेण्यः ॥ ३ ॥

(२९३) आ नो बर्हीरिशादसो वरुणो मित्रो अर्यमा ॥ सीदन्तु मनुषो यथा ॥ ४ ॥

(प०) आ । नः । बर्हिः । रिशादसः । वरुणः । मित्रः । अर्यमा ॥ सीदन्तु । मनुषः । यथा ॥ ४ ॥

(२९४) पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च ॥ इमा उ षुश्रुधी गिरः ॥ ५, २० ॥

(प०) पूर्व्य । होतः । अस्य । नः । मन्दस्व । सख्यस्य । च ॥ इमाः। ऊं इति । सु । श्रुधि । गिरः ॥ ५, २० ॥

## ऋग्भाष्यम्

अथ स्तौत्यग्निगं विष्णुमग्निमप्यग्निगोचरैः । वचनैः । सर्वदेवानां पूजायै प्रोद्यतो भवन् । वसिष्वोत्तमवस्त्राणि भूषणैरप्यलङ्कुरु । कुर्वन्नुत्सवमत्यन्तमस्मदीयं मखं यज । नित्यमेध्य हरे देव भोग्यान्नानां सदापते । ऊर्जितानां जनानां वा स्वस्मिन्नो अध्वरं यज । रमयत्यध्वनि शुभे येन तेनाध्वरो मखः ॥ १ ॥ वचो नोनिनयात्यंतं दिवि व्याप्ततया सदा । अशेषदेवगत्वेन मन्मभिर्मतिभिः सह । अवमो दशदेवेषु वह्निर्विष्णुस्तु तत्स्थितः ॥ २ ॥ सख्येच सूनवे मह्यमायजत्येष देवताः । आपिः प्राप्यो मम स्वामी भृत्यत्वान्मह्यमापये ॥ ३,४ ॥ अस्य मेर्थे कुरुमदं स्वातंत्र्यान्मादयस्व वा ॥ ५, २० ॥

## ऋग्भाष्यटीका

वसिष्वेति दशर्चं सूक्तम् । अश्वं नेति त्रयोदशर्चम् । तत्रांत्या दैवी । तां विहाय द्वाविंशतेर्देवतामाह ॥ अथेति । अग्निगोचरैरग्नेर्योग्यैः । वसिष्व । सर्वदेवानाम् । यद्वा सर्वदेवानामित्यादि शुनःशेपस्यैव विशेषणम् । वसिष्वेत्याद्येव व्याख्यानम् । हे मियेध्य नित्यमेध्य सदापवित्र मेधेभव वा । ऊर्जाम् ऊर्जबलप्राणनयोः । करणे क्विप् । बलादिकरणानां भोग्यान्नानाम् । वैशिष्ट्यद्योतनाय भोग्येत्युक्तम् । ऊर्जं देवान्नमुद्दिष्टमिति वचनात् । यद्वा कर्तरि क्विप् । ऊर्जितानां बलादिमतां जनानाम् । सदा पते हरे देव । अग्निगतेन रूपेण सर्वदेवानां पूजायै प्रोद्यतो भवन्वस्त्राणि वसिष्वाच्छादय । वस्त्राच्छादनं विना प्रार्थनयासिद्धमत आह ॥ उत्तमेति । उपलक्षणमेतत् । भूषणैरप्यलङ्कुरु आत्मानमिति शेषः । स एवमत्यन्तमुत्सवं कुर्वंस्त्वम् । नोस्मदीयमिममध्वरं मखं यज देहि । सम्प्रदानानुक्तेः स्ववाक्यमेव विवृणोति । स्वस्मिन्निति । सम्प्रदानस्याधिकरणत्वविवक्षया । अक्षय्यं ब्राह्मणे दानमिति यथा । नो अध्वरमिति प्रकृतिर्वेदानुकरणेन । यद्वा । नो अध्वरं यजेत्यनुवादेन स्वस्मिन्नस्मदीयं मखं यजेति व्याख्यानम् । मखे अध्वरशब्दं निर्वक्ति । रमयतीति । शुभोऽध्वा स्वर्गादिमार्गः । ज्ञानं वा । तदङ्गभूतानां द्रव्याणामुपलक्षणमेतत् ॥ १ ॥

निनः । वचो नः । हे यविष्ठाग्ने होता वरेण्यस्त्वं नोऽस्मदीयं वचो मन्मभिः मनज्ञाने । ततः करणे मनिन् । मतिभिर्बुद्धिवृत्तिभिः सह । सदा दिवित्मता दिविव्याप्ततया तनोतेर्ङ्तुप् । भावप्रधानं चेदम् । दिवीति तत्रस्थोपलक्षणम् । अशेषदेवगत्वेन सर्वदेवविषयत्वेनेति यावत् । नि अत्यन्तम् । नय प्रवर्तयेति योग्यक्रियाध्याहारः । अग्नेर्यविष्ठत्वं कथमित्यत आह ॥ अवम इति । उषाः स्वाहा च पर्जन्यो मित्रोग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः । इत्युक्तेषु दशदेवेष्ववमः । तस्माद्यविष्ठ इति शेषः ।

(ऋग्भाष्यटीका)

विष्णोस्तु कथं यविष्ठत्वमित्यत आह ॥ विष्णुस्त्विति । यवीयसि तिष्ठतीति यविष्ठ इत्यर्थः । तदधीनत्वादर्थवदिति वा ॥ २ ॥

आहि । सख्ये च । वरेण्यो मम पितैषोग्निः सूनवे मह्यं मदर्थे । यद्वा मम सखैष सख्ये च मह्यम् । अथवा आपिः कर्मणीकारः । प्राप्यः । मम स्वामीति यावत् । एषभृत्यत्वादापये कर्तरीकारः । मह्यमायजति हि स्म देवता इति शेषः । नानाविधः सम्बन्धो जीवेश्वरयोरनेनोच्यते ॥ ३ ॥

आनः । हे अग्ने वरुणो मित्रोऽर्यमा इत्येवमादयः । रिशादसो देवाः । नो बर्हिरागत्य सीदन्तु उपविशन्तु । मनुषो मनुष्या यथा तथा प्रत्यक्षीभूताः ॥ ४ ॥

पूर्व्यहोतः । अस्य मे । हे पूर्व्य पूर्वस्मिन्काले भव । होतरग्ने । अस्यैवं स्तुतवतः सख्यस्य च भावभवित्रोरभेदात् । सख्युश्च नः मेऽर्थे मन्दस्व मदं कुरु । इमा मदीयाः । गिरश्च सुश्रुधि सम्यक्शृणु । उ एव । मन्दस्वेति प्रकारान्तरेण व्याख्याति । स्वातन्त्र्यादिति । स्वातन्त्र्यात्कारणात् णिचोंतर्णीतत्वेन मन्दस्वेत्यस्य मादयस्वेति वार्थः । अस्मिन्पक्षेऽस्य नः सख्यस्येति षष्ठ्यो द्वितीयार्थाः । यद्वा देवानित्यध्याहारः ॥ ५, २० ॥

## मन्त्रार्थमञ्जरी

अथ 'वसिष्वा' इति षड्विंशं दशर्चं वर्गद्वयात्मकमाग्नेयं गायत्रं सूक्तम् । (हे) मियेध्य, नित्यमेध्य, 'आधिक्येऽधिकम्' (म०व्या०सू०) इत्युक्तेः, सदा पवित्र । ऊर्जाम्, 'ऊर्ज बलप्राणनयोः' करणे क्विप्, बलादिकरणानां भोग्यान्नानाम्' 'ऊर्जं देवान्नमुद्दिष्टम्' (बृ० भा०) इति वचनात्, यद्वा– कर्तरि क्विप्, ऊर्जां बलादिमतां जनानाम् । सदा– पते, हरे । अग्निगतेन रूपेण सर्वदेवानां पूजायै प्रौद्यतो भवत् (त्वम्) वस्त्राणि, उत्तमवासांसि । वसिष्व, आच्छादय, उपलक्षणमेतत्– भूषणैरप्यलंकुरु । (आत्मानम्) इति योज्यम् । हि । सः, एवमत्यन्तमुत्सवं कुर्वंस्त्वम् । नः, अस्मदीयम् । इमम् । अध्वरम्, अध्वनि स्वर्गमार्गे ज्ञानमार्गे वा रमयतीति रमेः ण्यर्थाड्डः, मखम् । यज, देहि, स्वस्मिन्कुर्विति भावः । 'सोऽचि लोपे चेत्पादपूरणम्' इति 'सेमम्' इति साधु । 'प्रकृत्यन्तःपादमव्यपरे' इति 'नो अध्वरम्' इत्यपि साधु ॥ १ ॥

(हे) यविष्ठ, यवीयः । अग्ने । होता, होतरि स्थितस्तन्नामा । वरेण्यः, वरणीयः, वृञः 'वृञ एण्यः' इत्येण्यः । (त्वम्) नः, अस्मदीयम् । वचः । मन्मभिः, मतिभिः, बुद्धिवृत्तिभिः सह, 'मन ज्ञाने' इत्यतः करणे मनिन् । दिवित्मता, 'दिवि' इति द्युस्थोपलक्षणम्, तनोतेः ड्मतुप्, भावप्रधानम्, द्युस्थाशेषदेवेषु व्याप्तत्वेन, सर्वदेवविषयत्वेनेति यावत् । नि, अत्यन्तम् । सदा । (नय)

(मन्त्रार्थमञ्जरी)

प्रवर्तय' इति योग्यक्रियाध्याहारः । 'उषाः स्वाहा च पर्जन्ये मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः' (अनुव्या० ३।३।३५) इत्युक्तानां मध्ये दशदेवेष्वधमतया यविष्ठत्वमग्नेर्ज्ञेयम् । विष्णोस्तु– यवीयसि स्थितत्वेनोपचारः, तदधीनत्वन्यायेनान्यगतय- विष्ठत्वं प्रति स्वातन्त्र्याद्धेतोर्मुख्यमेव वा यविष्ठत्वम् ॥ २ ॥

वरेण्यः । मम पिता । (एषोऽग्निः) सूनवे, पुत्राय । (मह्यम्) मदर्थे । यद्वा मम मखा (एषः) सख्ये (च मह्यम्) अथ वा आपिः, कर्मणीकारः, प्राप्यः, मम स्वामीति यावत् (एषः) भृत्यत्वात् । आपये, कर्तरीकारः, आप्नुवते । (मह्यम्) आ यजति हि स्म (देवताः) इति शेषः । नानाविधः सम्बन्धो जीवेश्वरयोरनेनोच्यते ॥ ३ ॥ (हे अग्ने) 'वरुणः, मित्रः, अर्यमा' इत्येवमादयः । रिशादसः, प्रागुक्तनिरुक्त्या अधिकसुखवन्तो देवाः । नः बर्हिः । आ, आगत्य । मनुषः, मनुष्याः । यथा (तथा) प्रत्यक्षीभूताः सीदन्तु, उपविशन्तु ॥ ४ ॥

(हे) पूर्व्य, पूर्वस्मिन्काले भव, पूर्वशब्दाद्भवार्थे यत् । होतः, अग्ने । अस्य, एवं स्तुवतः । सख्यस्य च, भावभवित्रोरभेदात् सख्युश्च । नः, अस्मदर्थे । मन्दस्व, मदं कुरु, मादयस्वेति वा, तथात्वे 'अस्य' इत्यादिषष्ठ्यो द्वितीयार्थाः (देवान्) इति वा शेषः । इमाः, मदीयाः । गिरः (च) सु श्रुधि, सम्यक्छृणु । उ, एव ॥ ५ ॥ इति विंशो वर्गः ॥ २० ॥

## रूपावतारः

वसिष्व ॥ वसिष्वेति ऋचः 'सर्व देवानां पूजायै प्रोद्यतो भवानि' त्यादिकं व्याख्यानमित्यभिप्रेत्य भाष्यं प्रतीकत उपादत्ते । सर्वदेवानामिति । अनेन भाष्यस्याग्निगतेन रूपेण सर्व देवानां पूजायै प्रोद्यतो भवान् त्वमुत्तमवस्त्राणि वसिष्वेति योजनामभिप्रैतीति द्रष्टव्यम् । सर्व देवानां पूजायै प्रोद्यतो भवान् शुनःशेपः अग्निनामानं स्तौतीति भाष्ययोजनान्तरमभिप्रेत्याह । यद्वेति । मेध्येति भवितव्ये यत् मियेध्येति अधिकं शब्दरूपं तस्यार्थमाह । नित्यमेध्येति । स्वस्मै नो अध्वरं यजेति भवितव्यं कथं स्वस्मिन्नितीत्यत आह । संप्रदानस्येति । अधिकरणत्वविवक्षा कृतेति शेषः । ननु नो अध्वरमिति प्रकृतिभावो न युक्तः प्रापकाभावादित्यत आह । नो अध्वरमितीति । अनुकरणस्य अनुकार्याधीनत्वात् प्रकृतिभावः । पूर्वं स्वस्मिन्नो अध्वरं यजेत्येतत् अस्मदीयं मखं यजेति स्ववाक्यविवरणमिति व्याख्यातम् । इदानीं तच्चेदं च मिलित्वा एकमेव वाक्यमिति भावेनाह । यद्वेति ॥ १ ॥

(रूपावतारः)

निनो होता ॥ तनोतेर्ड्मतुबिति । दिवीति सप्तम्यन्तोपपदात् तनोतेर्ड्मतुपि सप्तम्या अलुकि दिवित्मतेति रूपम् ॥ २ ॥

आहिष्मा ॥ कर्मणीकार इति । आप्लृ व्याप्तावित्यतः कर्मणि इकारप्रत्यये आपिरिति रूपम् ॥ ३ ॥

आनः ॥ सीदन्त्विति । षद्लृविशरणगत्यवसादनेष्विति धातोः लोटि झेरिकारस्य उत्वे शप्रत्यये 'प्राघ्राध्मा....' (७।३।७८) इति सीदादेशे झेरन्तादेशे सीदन्त्विति रूपम् । मनुष इति । मनेरुसि प्रत्यये जसि च मनुषः इति रूपम् ॥ ४ ॥

पूर्व्य होतः ॥ मन्दस्वेति । हर्षार्थान्मदेर्लोटि शपि थासः से आदेशे सवाभ्यां वामौ (३।४।९१) इति एकारस्य वत्वे नुमागमे मन्दस्वेति रूपम् ॥ ५ ॥ २० ॥

## पदार्थप्रकाशिका

वसिष्वा हि मियेध्य । तत्रान्त्या देवीति । नमोमहद्भ्य इत्यस्याम् ऋचि जायमानदेवान् आवृक्षिदेवा इत्युक्तत्वेन अस्याः सर्वदेवताकत्वादिति । द्वाविंशतेर्देवतामाहेति । सोतुष्टावात उत्तराभिर्द्वाविंशत्येति ब्राह्मणानुसारेण इत्यर्थः । सर्वदेवानामित्यारभ्यैव ऋग् व्याख्यानमित्याशयेनैव भाष्यप्रतीकं गृह्णाति । सर्वदेवानामिति । सर्वदेवानां पूजायां प्रोद्यते । भवन् सन् वस्त्राणि वसिष्वेति अग्नेर्विवरणमिति द्रष्टव्यम् । पक्षान्तरमाह । यद्वेति । शुनःशेफस्यैवेति । तथाच यूपादात्मविमोक्षाय स्तुत्यादिना सर्वदेवानां पूजायै प्रोद्यतो भवन् शुनःशेफोऽग्निगोचरैरग्निगं विष्णुमग्निमपि स्तौतीत्यन्वयो द्रष्टव्यः । अस्मिन् पक्षे किमारभ्य ऋग् व्याख्यानमित्यत आह । वसिष्वेत्यादीति । अस्मिंश्च पक्षे वसिष्वेति ऋग्भाष्ययोस्तंत्रेण प्रतीकग्रहणमिति द्रष्टव्यम् । मियेध्येत्यत्र यकारोऽधिकः । तदर्थमाह । नित्येति । मेधेभव । यज्ञे पूज्यतया स्थितेत्यर्थः । डुकृशब्दात् करणे क्विपि तस्य लोपे डुकृशब्दो बलादिसाधनवाचीत्यर्थः । वैशिष्ट्येति । पावित्र्यादिना इतरान्नवैलक्षण्येनेत्यर्थः । भोग्यत्वोक्त्या कथं वैशिष्ट्यद्योतनमित्यत आह । ऊर्जमिति । तर्हि देवभोग्यान्नं कुत्सितं भविष्यति । अतस्तद्विशिष्टमेवेति भावः । कर्तरीति डुकृ शब्दादित्यर्थः । कर्त्रर्थं दर्शयति । ऊर्जितानामिति सर्वदेवानाम् अग्नेरेव हविरादिदातृत्वेनाग्नेरेव पूजादिकर्तृत्वात् तदन्तर्गतस्य देवानां प्रजायै प्रोद्योतत्वं युक्तमिति भावः ।

(पदार्थप्रकाशिका)

विनाप्रार्थनयेति । नग्नस्यागमनासम्भवादिति भावः । यः स्वतन्त्रत्वे हविरादि । यज देवपूजासङ्गतिदानेष्विति धातोराह । देहीति । सम्प्रदानानुक्तेरिति । कर्मणा यमभिपैति स सम्प्रदानम् । दानकर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यादित्युक्तत्वेन ब्राह्मणाय गां ददातीत्यत्र ब्राह्मणायेत्यादिवत् अत्र सम्प्रदानानुक्तेरित्यर्थः । स्ववाक्यमेवेति । स्वपदानि च वर्ण्यन्त इति भाष्यलक्षणादिति भावः । ननु सम्प्रदाने चतुर्थ्याः विधानात् स्वस्मै इति स्यात् । स्वस्मिन्निति कथमित्यत आह । सम्प्रदानस्येति । अधिकरणत्वविवक्षयेति विवक्षातः कारकाणि भवन्तीति वचनात् सम्प्रदानस्याधिकरणत्वविवक्षया सप्तमी युक्तेति भावः । सम्प्रदानस्य अधिकरणत्वविवक्षया प्रयोगस्योदाहरणमाह । अक्षय्यमिति ।

ननु भाष्ये नोअध्वरमित्ययुक्तम् । एङः पदान्तादतीति सूत्रेण पदान्तादेङः अतिपरे पूर्वरूपविधानात् । प्रकृते च ओकाररूपस्यैङः अकाररूपे अति परे पूर्वरूपे सति नोध्वरमिति वक्तव्यत्वात् विष्णो अव विष्णोव इतिवदित्यत आह । नोअध्वरमिति । प्रकृतिरिति । संध्यभाव इत्यर्थः । वेदानुकरणेनेति । ऋचि नो अध्वरमिति प्रकृतिकरणात्तदनुसारेण भाष्येण भाष्येपि प्रकृतिकरणं युक्तमित्यर्थः । अनुवादेनेति । तथाच भाष्ये यथास्थितऋक्पदानुवादरूपत्वान्न दोषः इति भावः । ऋचि प्रकृतिस्तु छान्दसत्वाद्युक्तेत्यवगन्तव्यम् । शुभोऽध्वेति । येन कारणेन शुभे अध्वनि स्वर्गादिमार्गे पुरुषं रमयति । कर्मणाज्ञानमातनोतीति श्रुतेः तेन कारणेन मखो अध्वरशब्दवाच्य इति भावः । ननु मखस्य क्रियारूपस्य दानासम्भवाद्यजेत्ययुक्तमित्यत आह । तदङ्गेति । क्रियाङ्गभूतानां हविरादिद्रव्याणामित्यर्थः । अङ्गाङ्गिभावरूपे लक्षणाबीजसम्बन्ध-सद्भावप्रदर्शनाय तदङ्गेत्युक्तम् ॥ १ ॥

निनोहोतावरेण्यः । ततः करणे मनिनिति । ततश्च मन् अस्मात् कर्मणि मनिन् प्रत्यये इन् इत्यस्य लोपे मन्मन् इति रूपम् । तस्येदं तृतीयाबहुवचनं मन्मभिरिति । बुद्धिवृत्तिभिः बुद्धिसाधनैरित्यर्थः । तथाच ज्ञानसाधनेन्द्रियैः सह वचो वागिन्द्रियं दिवि तानि नयेत्यन्वयो द्रष्टव्यः । तनोतेड्मर्तुबिति । सप्तम्यन्ते दिवि उपपदे तनुविस्तार इति धातोः ड्मतुप्प्रत्यये डप् इत्यस्य लोपे डित्वाट्टीभूतस्यानु इत्यस्य लोपे दिवित्मदिति प्रातिपदिकं तस्येयं तृतीया दिवित्मतेति । भावप्रधानमिति । दिवित्मत्वेनेत्यर्थः । दिविस्थदेवताव्याप्ततयेत्यस्य तात्पर्यं अशेषदोषगत्वेनेति । योग्याक्रियेति । ऋचि नीत्युपसर्गमात्रश्रवणेन तस्य क्रियासापेक्षत्वेन नयेति तद्योग्यक्रियाध्याहारो भाष्ये कृत इत्यर्थः । इत्युक्तेषु दशदेवेष्विति इत्यनुव्याख्यानोक्तेषु अग्निमारभ्य मारुतांतेषु दशदेवेषु अग्निरवम इत्यर्थः । तदधीनत्वादिति । अग्नेर्यविष्टतायाः विष्ण्वधीनत्वात् विष्णोरपि तच्छब्दवाच्यत्वं युक्तम् । राजा जयीत्यादिवदित्यर्थः ॥ २ ॥

(पदार्थप्रकाशिका)

आहिष्मासुनवेपिता। यद्वेत्यादिविकल्पः सम्बन्धान्तरकथन इत्यवगन्तव्यम्। कर्मणीकार इति। आप्लृव्याप्तौ इत्यस्मात् कर्मणीकारे आपीति रूपम्। एषः आपिः स्वामी। एषोऽग्निः कर्तरीति। तथाचापये प्राप्तये इत्यर्थः। मह्यं मदर्थे। देवता उद्दिश्य आयजति। हविरादिकं ददातीत्यर्थः। अग्नेः पितृत्वे सखित्वात् पितृत्वरूपविशेषणाभिप्रायमाह। नानाविध इति। पितापुत्रभावः सखित्वस्वामिभृत्यभावरूपः सम्बन्धो विशेषणात्र यदानेनोच्यत इत्यर्थः ॥ ३ ॥

आनोबर्हीरिशादसः। स्पष्टत्वादाचार्यैरव्याख्याताम् ऋचं स्वयं व्याचष्टे। अग्न इति। रिशादस इति। शमदन् रमते यतः अन् नसुखभोक्तृत्वाद्दशादा इति कीर्तित इति न्यायेन अन् नसुखभोक्तार इत्यर्थः। बर्हिरिति। देवस्थानं बर्हिस्तृणीति चेति पूर्वं भाषितत्वात्। धृतस्थामाप्तमतो विद्यमानं द्देवोवोपवेशनं योग्यं स्थानं तद्बर्हिरित्युच्यते। तत्प्रत्यागत्येत्यर्थः। उपविशंत्विति। त्वत्प्रेरिताः सन्त इति शेषः ॥ ४ ॥

पूर्व्यहोतरस्यनः। सख्युर्भावः सख्यमिति सख्यशब्दस्य भाववाचित्वेन सख्यस्येत्यस्यासङ्गतत्वादाह। भावभवित्रोरिति। धर्मधर्मिणोरित्यर्थः। अर्थमेव दर्शयति। सख्युश्चेति। मदं कुर्विति। कर्मन्यूनतां क्षमित्वा संतोषं प्राप्नुहीत्यर्थः। षुश्रुधीत्यत्र सु इति हि पदछेदः। तत्र एवार्थकस्य उशब्दस्य श्रुधीवेति सम्बन्धो द्रष्टव्यः। स्वातन्त्र्यादिति। स्वातन्त्र्ये विवक्षिते स्वातन्त्र्याल्लुप्तयो भवेदिति यकारनिमित्तणिचो लोपविधानादित्यर्थः। णिजन्तभावेन मादयस्वेति व्याख्यानपक्षे अस्येत्यादि षष्टी अनुपपन्ना इत्यत आह। अस्मिन् पक्ष इति। तथाच हेपूर्व्यहोतः अस्य एनं सख्यस्य सखायं नः मंमदस्व मादयस्व सुखिनं कुर्वित्यर्थो द्रष्टव्यः। मन्दस्वेत्यस्य मादयस्वेति व्याख्यानपक्षेपि अस्य नः इत्यादिषष्ट्योः यथास्थित एव। नत्वर्थासम्भवः। देवानित्यध्याहारकरणादित्याह। यद्वेति। तथाच पूर्वहोतरस्य सख्या नोऽर्थे देवान् हविरादिना मादयस्वेत्यर्थो द्रष्टव्यः ॥ ५,२० ॥

## पदार्थदीपिका

मियेध्येति ॥ मकारैकारयोर्मध्ये इयागमश्छान्दस इति भावः ॥ कर्तरि किबिति ॥ क्विप्चेति सूत्रेणेति शेषः ॥ वसिष्वेति ॥ वस आच्छादने लोटि थासः से सवाभ्यां वामौ छन्दस्युभयथेति आर्धधातुकत्वात् आर्धधातुकस्येड्वलादेरितीडागमः। अन्येषामपि दृश्यत इति संहितायां दीर्घ इति भावः ॥ विना प्रार्थनयेति ॥ प्रार्थनया विनेति सम्बन्धः ॥ उपलक्षणमेतदिति ॥ वस्त्राणि वसिष्वेति श्रौतं पदं भूषणैरलंकरणस्योपलक्षणमिति भावेन भूषणैरप्यलंकुर्विति भाष्यकृतोक्तमिति भावः। ननु दानं प्रति स्वस्यैव सम्प्रदानत्वे सम्प्रदाने चतुर्थीविधानात् स्वस्मा इति भवितव्यम्।

(पदार्थदीपिका)

स्वस्मिन्निति तु कथमित्यत आह ।। सम्प्रदानस्येति ।। तथा च विवक्षातः कारकाणि भवन्तीत्युक्तत्वात् अधिकरणत्वविवक्षया स्वस्मिन्निति सप्तमी युक्तेति भावः । तत्रैवानुरूपं दृष्टान्तमाह ।। अक्षय्यमिति ।। अत्र सेममिति संहितायां सोचिलोपे चेत् पादपूरणमिति सोर्लोप इति ज्ञेयम् । ननु नोध्वरमिति वक्तव्ये कथं भाष्ये नो अध्वरमित्युक्तमित्यत आह ।। नो अध्वरमिति प्रकृतिरिति ।। प्रकृतिः प्रकृतिवद्भाव इत्यर्थः ।। वेदानुकरणेनेति ।। स्ववाक्यस्य वेदतुल्यत्वसूचनाय भाष्यकारेण तथा प्रयुक्तमिति भावः ।। १ ।।

यविष्ठेति ।। युवशब्दादिष्ठनि स्थूलदूरेत्यादिना यणादिपरस्य लोपः । पूर्वस्य गुणश्चावादेश इति भावः ।। करणे मनिनिति ।। अन्येभ्योऽपि दृश्यत इति सूत्रेणेति शेषः ।। ड्मतुबिति ।। डित्वात् टिलोप इति भावः ।। भावेति ।। ततिस्तता व्याप्तिस्तस्या भावस्त्मतात्वमिति भावेन दिवि व्याप्तत्वेनेति अनुवाद इति चोद्यानवकाश इति द्रष्टव्यम् ।। दशदेवेष्विति ।। अत्रोषा-स्वाहापर्जन्यमित्रान् विना दश ग्राह्याः । तेषां चतुर्णामग्र्यपेक्षयाऽवमत्वादिति द्रष्टव्यम् ।। २ ।।

कर्मणीति ।। आप्यत इत्यापिरित्यर्थः ।। कर्तरीति ।। आप्नोतीत्यापिरिति कर्तरीत्यर्थः ।। ३,४ ।।

सख्यस्येति ।। सख्युर्भावः सख्यम् । सख्युर्य इति यप्रत्यये यस्येति चेतीकारलोपे भाववाचिनः सख्यशब्दस्य निष्पत्तेरित्यर्थः ।। द्वितीयार्था इति ।। एनं सखायं मामिति द्वितीयार्था इत्यर्थः ।। यद्वेति ।। अस्मिन् पक्षे षष्ठ्यो यथास्थितार्था एवेति ध्येयम् ।। ५-१ ।।

## टीकाविवृतिः

वसिष्वाहि ।। दशर्चमिति ।। वसिष्वदशाग्नेयं त्वित्यनुक्रमणिकायां वसिष्वेति सूक्तस्य दशसंख्याकत्वं अग्निदेवताकत्वं चोक्त्वा तुशब्दादुत्तर सूक्तस्यापि अग्निदेवता कत्वेक्तेरिति भावः ।। अश्वं नेति त्रयोदशर्चमिति ।। अश्वं सप्तोना गायत्रेंत्यादैवीत्रिष्टुबित्यनुक्रमणिकायां अश्वं नेति सूक्तस्य सप्तोना विंशतिःसंख्या गायत्रीछन्दस्केऽस्मिन्सूक्ते अंत्या नमो महद्भ्य इति ऋक्सर्वदैवत्या चतुश्चत्वारिंशदक्षरयुक्तत्वात्रिष्टुप् छन्दस्का चेत्युक्तेरिति भावः ।। अन्त्या दैवीति ।। सविश्वान् देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चेति ब्राह्मणोक्तेरिति भावः ।। द्वाविं शतेरिति ।। तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तन्नुस्तुह्यथत्वोत्स्रक्ष्याम इति सोग्निं तुष्टावात उत्तराभिर्द्वाविंशत्येति ब्राह्मणं मनसि निधायेति शेषः ।। वसिष्वाहि ।। सेमं नो अध्वरं यजेत्यत्र यजेर्देवपूजार्थकस्य ग्रहणात्तात्पर्यार्थ कथनपरं सर्वदेवानामित्यादिभवन्नित्येतदंतं संबुध्यन्तमग्ने

**(टीकाविवृतिः)**

इत्येतद्विशेषणरूपं भाष्यमित्याशयेन प्रतीकं गृहीत्वेदानीं श्रुतौ तदर्थकस्पष्टपद भावात्पक्षान्तमाह ॥ यद्वेति ॥ तथाच भवन्निति प्रथमान्तं शुनःशेप इति अध्याहृतस्य प्रथमांतस्य विशेषणभूतं अग्निगं स्तौतीत्यनेनान्वितं इति भावः । मेधृसंगमे चेत्यतो धातोः ऋहलोर्ण्यदित्यर्हार्थे ण्यत्प्रत्यये मेधितुं सङ्गमितुं योग्यं पवित्र इति भवितव्ये मियेध्येति इकारयकारयोरधिकयोरर्थमाह ॥ नित्येति ॥ मेधे भव वेति । मेधःक्रतुःक्रियामेधेत्यभिधानात् मेधे क्रतौ भवेत्यर्थे दिगादित्वाद्यत्प्रत्यये मेध्येति रूपम् । अत्रापीकारयकाराधिक्यं पूर्ववद्बोध्यम् ॥ करणे क्विबिति ॥ औणादिक इति भावः । ऊर्जितानामिति भाष्यं लापयति ॥ यद्वेति ॥ श्रुतौ ऊर्ज्जामित्यस्य पदस्य सुबामन्त्रिते इति परांगवद्भावादूर्जांपते इति पदद्वयस्याष्टमिकामन्त्रितस्येति निघातः ॥ वसिष्वेति ॥ वस आच्छादने इत्यतो लोटि थासः से इत्यादेशे सवाभ्यामिति वत्वे छन्दस्युभयथेत्यार्ध धातुकत्वादिडागम इति भावः ॥ विना प्रार्थनयेति ॥ प्रार्थनया विनेत्यन्वयः ॥ यजदेहीति ॥ यज देवपूजासङ्गतिकरणदानेष्विति यजेर्दानार्थकत्वादिति भावः ॥ स्ववाक्यमेव विवृणोतीति ॥ भाष्यत्वादिति शेषः । तर्हि संप्रदाने चतुर्थी स्यादित्यत आह ॥ संप्रदानस्येति ॥ विवक्षातः कारकाणि भवन्तीति न्यायादिति भावः । ननु भाष्ये नो अध्वरमित्यत्रैङः पदान्तादतीति पूर्वरूपत्वेन भाव्यं प्रकृतिभावःकथमित्यत आह ॥ प्रकृतिर्वेदानुकरणेनेति ॥ वेदनिष्ठस्य नो अध्वरमिति शब्दस्यानुकरणरूपो हि भाष्यस्थःशब्दस्तेन प्रकृतिभाव इत्यर्थः । ननु यज्ञस्य सोमयागादिरूपकर्मणः कथं दानमित्यत आह ॥ तदंगभूतानामिति ॥ यज्ञांगभूतचरुपुरोडाशानामित्यर्थः ॥ १ ॥

नि नो होता ॥ करणे मनिन्निति ॥ उणादयो बहुलमित्युक्तेरिति भावः ॥ बुद्धिवृत्तिभिरिति ॥ मन्यतेज्ञायते अपरोक्षीक्रियतेयाभिर्बुद्धिवृत्तिभिस्तामन्मानस्ताभिर्मन्मभिरिति विग्रह इति भावः ॥ तनोतेड्र्मतुबिति ॥ उणादय इत्यत्रादिशब्दस्य प्रकारार्थत्वादयमपि प्रत्ययो धातोर्ज्ञेयः । अत एव महाभाष्ये संज्ञासु धातुरूपाणि प्रत्ययाश्च ततःपरे इत्याद्युक्तम् । एवमक्षरार्थपरं भाष्यं व्याख्याय तात्पर्यार्थपरं भाष्यं व्याचष्टे ॥ दिवीतीति ॥ अग्नेर्यविष्ठत्वमिति ॥ यद्यपि युवन् शब्दादतिशयार्थे ष्ठेयसुन्प्रत्यययोः परयोःस्थूलदूरयुवह्रस्वेति सूत्रेण यणादिपरलोपपूर्वगुणयोः कृतयोरवादेशे यविष्ठो यवीयानिति रूपयोर्जातयोरतिशयेन तरुणत्वमर्थःप्रतीयते तथापि यवीयो वरजानुजा इत्यभिधा-नात्कनिष्ठभ्रातृवाचकत्वप्रतीतेरग्नौ तदसंभवात्कनिष्ठमात्रार्थत्वमुक्तमिति ज्ञेयम् ॥ दश देवेष्ववम इति ॥ मारुतवाण्यादिदशदेवेष्वित्यर्थः ॥ यवीयसि तिष्ठतीति ॥ नेदं यविष्ठशब्दनिर्वचनं किन्तु मार्गाश्चिलंतीतिवद्यविष्ठशब्दो यविष्ठस्थलक्षक इति भावेनेदमुक्तमिति बोध्यम् । यविष्ठशब्दस्य विष्णावमुख्यवृत्त्याश्रयणा स्वरसादाह ॥ तदधीनत्वादिति ॥ अग्निनिष्ठयविष्ठत्वस्य विष्ण्वधीन-त्वाद्यविष्ठशब्दो विष्णावर्थवान् मुख्य इति यावदिति ब्रह्मसूत्रार्थः ॥ २ ॥

(टीकाविवृतिः)

आहिष्म ।। कर्मणीकार इति ।। अच इरित्युक्त इप्रत्ययो बहुलोक्तेः आप्लृव्याप्ताविति हलंताद्धातोरपि कर्तरि कर्मणि च भवतीति भावः ।। मह्यमायजति हि स्मेति ।। अग्निर्मदभीष्टसिद्ध्येमयादेवान्संग मया मासेत्यर्थः । यजेःसङ्गतिकरणेपि पाठाल्लट्स्मे इति भूतानद्यतनपरोक्षार्थे लडिति भावः । हिशब्दयोगाद्धिचेति सूत्रेण तिङ्ङतिङ इति प्राप्तनिघातनिषेधो बोध्यः । स्मेत्यत्र संहितायां पूर्वपदादिति सूत्रेण पूर्वपदस्थेण्कवर्गाभ्यां परस्य सस्य षत्वविधानात्षत्वं निपातस्य चेति दीर्घःचादीनामाकृतिगणत्वाच्चादयोनुदात्ता इत्यनुदात्तत्वमपीति भावः ।। ३ ।।

आनः ।। सीदंत्विति ।। पाघ्राध्मास्थेति सूत्रेण षद्लृविशरणगत्यवसादनेष्वित्यतो लोटि सीदादेशे लोट्चेति निघातप्रतिषेध इति भावः ।। मनुष इति ।। जनेरुसिरित्युक्तउसि र्बहुलोक्तेर्मनेरपि जात इति भावः । यथेत्यत्र यथेति पादांत इति फिट्सूत्रेण सर्वानुदात्तत्वम् ।। ४ ।।

पूर्व्यहोतः ।। पूर्व्येति ।। पूर्वशब्दाद्दिगादित्वाद्यत्प्रत्यय इति भावः । सखिशब्दाद्भावार्थे सख्युर्य इति यप्रत्यये निष्पन्नसख्यशब्दस्य कथं शुनःशेपविशेषणत्वमित्यत आह ।। भावभवित्रोरिति ।। न इति बहुवचनं व्यत्ययेनाह ।। मे इति ।। मदमिति ।। मदी हर्षे इति धातोर्मदं सुखमित्यर्थः ।। स्वातन्त्र्यादिति ।। स्वातन्त्र्याल्लुप्तयो भवेदित्यत्र महाव्याकरणसूत्रव्याख्यानरूपेय शब्देन णिज्ग्रहणाल्लुप्तणिच्कः शब्दःस्वातन्त्र्यात्कारणात्प्रयुक्तो भवेदित्युक्तेरिति भावः ।। द्वितीयार्थां इति ।। तथा च इमं मां सखायं मादयस्वेत्यन्वय इति भावः ।। यद्वेति ।। अस्मिन्पक्षे ममेज्यान् इन्द्रियाभिमानित्वेनोपकारिणोदेवान्मादयस्वेत्यर्थः ।। ५ ।। २० ।।

**ऋक्संहिता पदपाठसहिता** (सू-२६, व-२)

**(२९५) यच्चिद्धि शश्वंता तनां देवंदेवं यजांमहे ।।**
**त्वे इद्धूंयते हविः ।। ६ ।।**

**(प०) यत् चित् हि शश्वंता । तनां । देवम्ऽदेंवम् । यजांमहे ।।**
**त्वेइतिं । इत् । हूयते । हविः ।। ६ ।।**

**(२९६) प्रियो नों अस्तु विश्पतिर्होतां मन्द्रो वरेंण्यः ।। प्रियाः स्वग्नयों**
**वयम् ।। ७ ।।**

**(प०) प्रियः । नः । अस्तु । विश्पतिंः । होतां । मन्द्रः । वरेंण्यः ।**
**प्रियाः । सुऽअग्नयंः । वयम् ।। ७ ।।**

(ऋक्संहिता पदपाठसहिता)

(२९७) स्वग्नयो हि वार्यं देवासो दधिरे च नः ॥
स्वग्नयो मनामहे ॥ ८ ॥
(प०) सुऽअग्नयः । हि । वार्यम् । देवासः । दधिरे । च । नः ॥
सुऽअग्नयः । मनामहे ॥ ८ ॥
(२९८) अथा न उभयेषाममृत मर्त्यानाम् ॥ मिथः सन्तु प्रशस्तयः ॥९॥
(प०) अथ । नः । उभयेषाम् । अमृत । मर्त्यानाम् ॥ मिथः । सन्तु ।
प्रऽशस्तयः ॥ ९ ॥
(२९९) विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ॥ चनो धाः सहसो
यहो ॥ १०, २९, २६ ॥
(प०) विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इदम् । वचः ।
चनः । धाः । सहसः । यहो इति ॥ १०, २१, २६ ॥

## ऋग्भाष्यम्

शश्वद्विस्तरतः सर्वान्यदा देवान्यजामहे । तदा त्वय्येव हि हविर्हूयते ॥ ६ ॥ स प्रियोभव । मन्द्रोमदकरः ॥ ७,८ ॥ स्त्रीणां पुंसां चोभयवर्गिणाम् ॥ ९ ॥ चनः सुखं धा अस्मासु वायोः पुत्रोग्निरेव चेत् । भगवान्वायुना व्यंग्यो ॥ १०, २१, ७ ॥

## ऋग्भाष्यटीका

यच्चित् । शश्वत् । शश्वता शश्वत् । सर्वेषु कालेषु । तना विस्तरतः सर्वदेशेषु । चिदपि । यद्यदा देवं देवं सर्वान्देवान्यजामहे सर्वे वयं यजमानाः । तदा त्वे इत् त्वय्येव । हविर्हूयते हि ॥ ६ ॥

प्रियो नः । सम्प्रियः । विश्पतिर्विशां प्रजानां पतिः । मन्द्रः मन्दतेः कर्तरि रः मदकरः । सुखकरो वरेण्यो होताग्निः । नः प्रियोऽस्तु । स एवं गुणविशिष्टस्त्वं नः प्रियो भवेति यावत् । स्वग्नयः शोभनोग्निर्येषामस्ति ते तथोक्ताः । वयमपि तस्य प्रिया असाम ॥ ७ ॥

स्वग्नयो हि । स्वग्नयो देवासो देवाः । नोस्मभ्यम् । वार्यं वरणीयम् । वित्तं दधिरे दत्तवन्तः । चशब्दात्पालयांबभूवुश्च । स्वग्नयो वयं च । तन्मनामहे मन्यामहे । अस्मदीयं देवताभिपूजनं देवानां चास्मभ्यं वित्तदानादिकं सर्वमग्निनिमित्तकमिति ॥ ८ ॥

(ऋग्भाष्यटीका)

**अथानः । स्त्रीणाम् । हे अमृत अथ अन्यच्च । उभयेषाम् उभयवर्गिणां स्त्रीणां पुसां च । नोस्माकं मर्त्यानाम् । मिथः परस्परम् । प्रशस्तयः स्तुतयः । सन्तु सम्प्रीतिरस्त्विति यावत् ॥ ९ ॥**

**विश्वेभिः । चनः । हे अग्ने विश्वेभिः सर्वैरग्निभिः सह । इमम् अस्मदीयं यज्ञमिदं वचश्च । स्वीकुर्विति शेषः । चनोधा इत्यस्यार्थमाह ॥ चन इति ॥ धा अधाः । धेहि । सहसो यहो इत्येतदग्नौ विष्णौ च क्रमेण व्याख्याति । वायोरिति । अग्निरेव चेद्विवक्षितः तदा सहसो वायोर्यहो पुत्रेति व्याख्येयम् । भगवांश्चेत्तदा वायुना व्यंग्य इति कृत्वा सहसोयहो इति सम्बुद्धिर्युक्ता । प्राणं वाव महान् सह ओजो बलमित्याचक्षत इति हि श्रुतिः । यहुशब्दोऽपत्यनामसु पठितः ॥ १०, २१, ७ ॥**

## मन्त्रार्थमञ्जरी

शश्वता, शश्वत्, सर्वेषु कालेषु । तना, विस्तरतः, सर्वदेशेषु, तनोतेः आकारः । चित्, अपि । यत्, यदा । देवं देवम्, सर्वान्देवान् । यजामहे, सर्वे वयं यजमानाः । (तदा) त्वे इत्, त्वय्येव । हविः हूयते हि ॥ ६ ॥

विश्पतिः, विशां प्रजानां पतिः । मन्द्रः, मन्दतेः कर्तरि रक्, मदकरः, सुखकरः । वरेण्यः । होता, अग्निः । नः प्रियः अस्तु, स एवं गुणविशिष्टस्त्वं नः प्रियो भवेति यावत् । स्वग्नयः, शोभनोऽग्निर्येषामस्तीति स्वग्नयः । वयम् (अपि) तस्य प्रियाः (असाम) ॥ ७ ॥

स्वग्नयः । देवासः, देवाः । नः, अस्मभ्यम् । वार्यम्, वरणीयं वित्तम् । दधिरे, दत्तवन्तः । (हि) चशब्दात्पालयांबभूवुश्च । स्वग्नयः (वयं च तान्) मनामहे, मन्यामहे । अस्मदीयं देवता पूजनं देवतानां चास्मभ्यं वित्तदानादिकं सर्वमग्निप्रसादहेतुकमिति ॥ ८ ॥

(हे) अमृत । अथ, अन्यच्च । उभयेषाम्, उभयवर्गिणां स्त्रीणां पुंसां च । नः, अस्माकम् । मर्त्यानाम् । मिथः, परस्परम् । प्रशस्तयः । सन्तु, सम्प्रीतिरस्त्विति यावत् ॥ ९ ॥

(हे) अग्ने । विश्वेभिः, सर्वैः । अग्निभिः (सह) इमम्, अस्मदीयम् । यज्ञम् इदम् वचः (च) (स्वीकुरु) इति शेषः । सहसः, बलदेवताया वायोः । यहो, पुत्र । (अग्ने) वायुव्यङ्ग्यत्वाद्धरेरपि तत्पुत्रत्वं ज्ञेयम्, 'प्राणं वाव महान्त्सह ओजो बलमित्याचक्षते' इति श्रुतेः सहो वायुः, यहुशब्दोऽपत्यनामसु (वै०नि०२।२) पठितः (त्वम्) चनः, सुखम् । धाः 'डुधाञ् धारणपोषणयोः' लोडर्थे लुङ्, अडभावः, अस्मासु धेहीत्यर्थः ॥ १० ॥ इत्येकविंशो वर्गः ॥ २१ ॥ षड्विशं सूक्तम् ॥ २६ ॥

## रूपावतारः

यच्चित् ॥ शश्वतेति । शश्वच्छब्दादाकारागमे शश्वतेति छान्दसं रूपम् । तनेति । तनोतेः पचाद्यचि सप्तमीबहुवचनस्य आकारदेशः ततश्च तनेति रूपम् । सर्वे वयं यजमाना इति । सर्वेषु देशेषु कालेषु वर्तमानाः सर्वे वयं यजमानाः यदा देवान् यजामह इत्यन्वयो बोध्यः । एतेन कालवाचकेन शश्वतेत्यनेन गतार्थत्वात् यदेत्यर्थकं यदिति पदं व्यर्थमिति परास्तम् ॥ ६ ॥

प्रियोनः ॥ असामेति । अस्तेर्लोडुत्तमपुरुषे मसि शपो लुकि 'आडुत्तमस्य पिच्च' (३।४।९२) इत्याडागमे लोटो लङ्वद्भावेन सलोपे असामेति रूपम् ॥ ७ ॥

स्वग्नयः ॥ मनामह इति ॥ मन्यतेर्विकरणव्यत्ययेन शपि मनामह इति रूपम् ॥ ८ ॥

अथानः प्रशस्तय इति । प्रपूर्वात् शंसुकथन इत्यतः क्तिनि "अनिदितां...." (६।४।२४) इति नलोपे जसि प्रशस्तयः इति रूपम् ॥ ९ ॥

विश्वेभिः ॥ धा इति । धाञः लोडर्थे लुङि 'गातिस्था....' (२।४।७७) इति सिजूलुकि अडभावे धा इति रूपम् । श्रुतिरिति । सहशब्दस्य वायुवाचित्वे प्रमाणमिति शेषः । पठित इति । अतोऽपत्यवाची यहुशब्द इति शेषः ॥ १० ॥ २१ ॥ ७ ॥

## पदार्थप्रकाशिका

यच्चिद्धिशश्वतातना । देवं देवमिति वीप्सायाः अर्थमाह । सर्वानिति । यजमानाः देवानुद्दिश्य यजनकर्तारः । त्वय्येवेति । अग्निर्वै देवानां मुखमिति वचनेनाग्नावेव हविरादेर्दानादिति हि शब्दार्थः ॥ ६ ॥

प्रियोनो अस्तुविश्पतिः । मन्दतेरिति । सुखार्थकात् मन्दधातोः कर्तरि रप्रत्यये मन्द्रेति रूपम् । वरेण्यो वरणीयो भजनीयः । वृञः कर्मणि ण्यप्रत्यय इति भावः । स्वग्नय इति । तथाच त्वमस्मत्प्रियो भव । वयं च तव प्रिया भवेमेति ऋगभिप्रायः ॥ ७ ॥

स्वग्नयो हि वार्यम् । पालयाम्बभूवुरिति । दत्तं वित्तं विघ्नपरिहारेण रक्षितवन्त इत्यर्थः । तान् एवमुपकारिणो देवानित्यर्थः । मन्यामहे । ध्यायेम । ननु ये देवाः दधिरे तान् मनामह इति वित्तदातृत्वेन ध्येयत्वेन च देवानामेव प्राधान्योक्तेः तेषामेव देवतात्वं प्रतीयते । नाग्नेरतोऽग्निदेवता-कत्वसंरक्षणाय ऋगभिप्रायमाह । अस्मदीयमिति । देवताभिपूजनमिति । मन्यामह इत्युक्तध्यानादि-

(पदार्थप्रकाशिका)

देवताभिपूजनमित्यर्थः । देवानाम् । ध्यानप्रसन्नानां कर्तरि षष्ठी । देवैः क्रियमाणं वित्तदानमित्यर्थः । अग्निनिमित्तकमिति । देवतापूजनाभावे वित्तालाभेन यज्ञाद्यसिध्याऽग्निपूजनं नसिध्येदित्येवं अग्निपूजानिमित्तकमेवैतद्दगुक्तं सर्वदेवताभिपूजनमित्येवमग्नेरेव प्राधान्यप्राप्त्या देवतात्वं युक्तमिति भावः ॥ ८ ॥

अथान उभयेषाम् । मिथ इति । स्तोत्रं स्वीकुर्यात् । अहं च स्त्रियं स्तोष्यामीत्यर्थः । अभिप्रायमाह । सम्प्रीतिरस्त्विति ॥ ९ ॥

विश्वेभिरग्ने अग्निभिः । सर्वैरिति । अग्नीनामेकोनपञ्चाशतां सत्वादिति भावः । एत एवैकोनपञ्चाशत्साकं पितृपितामहैः । आग्नेयाम् इष्टयो यत्र निरुप्यन्तेग्नयस्तु ताः । इति भागवतवचनादिति ज्ञेयम् । तदा सहसोवायोर्यह्वोपुत्रेति । आवयोरग्निरिति श्रुतेरिति भावः । युक्तेति । विष्ण्वग्न्योरित्यर्थः । ननु सहसोय इत्यस्य वायोः पुत्रेति व्याख्यानं तदोपपन्नं स्यात् यदि सहः शब्दो वायुवाची यशब्दश्चापत्यवाची स्यात्तदेव कुतः इत्यत आह । प्राणं वावेत्यादिना ॥ १०,२१ ॥

## पदार्थदीपिका

देवंदेवमिति ॥ नित्यवीप्सयोरिति द्विर्भाव इति भावः ॥ त्वे इत् त्वय्येवेति ॥ युष्मच्छब्दात् सप्तम्येकवचनस्य सुपां सुलुगिति शे आदेशः । त्वमावेकवचन इति मपर्यन्तस्य त्वादेशः । शेषे लोप इति परपूर्वत्वम् । शे इति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचीति प्रकृतिभावः ॥ हूयत इति ॥ अकृत्सार्वधातुकयोरिति दीर्घ इति भावः ॥ ६,७ ॥

वार्यं वरणीयमिति ॥ वृञ् वरणे । ऋहलोर्ण्यदिति ण्यत् प्रत्यय इति भावः । मनामहे । व्यत्ययेन शबिति भावः ॥ ८ ॥

अथा न इति संहितायां निपातस्य चेति दीर्घः ॥ सन्त्विति ॥ श्नसोरल्लोप इति अल्लोप इति भावः ॥ ९ ॥

धा अधा इति ॥ लुङि गतिस्थेति सिचो लुक् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभाव इति भावः । विवक्षितार्थसिध्यर्थं सहःशब्दस्य प्राणपरत्वे यहुशब्दस्य च पुत्रनामत्वे नियामकमाह ॥ प्राणमित्यादि ॥ १०-२१ ॥

## टीकाविवृतिः

यच्चिद्धि शश्वता ।। शश्वत्सर्वेषु कालेष्विति ।। शश्वत्पुनःसदार्थयोरिति विश्वकोशादिति भावः । श्रुतौ शश्वतेति अव्ययाच्छस्वच्छब्दादाकारागमोबोध्यः ।। तनेति ।। तनोतेःपचाद्यचि सप्तमी बहुवचनस्य सुपां सुलुगिति डादेश इति भावः । देवं देवमित्यत्र नित्यवीप्सयोरिति द्विर्वचनमिति भावेनाह ।। सर्वान्देवानिति ।। त्वे इति ।। युष्मच्छब्दात्सप्तम्येकवचनस्य सुपां सुलुगिति शे इत्यादेशे त्वमावेकवचने इति त्वादेशे शेषे लोप इति अद्शब्दलोप इति भावः ।। ६ ।।

प्रियो नः ।। विशां प्रजानामिति ।। विशःक्षितय इति मनुष्यनामसु पाठादिति भावः ।। कर्तरि र इति ।। स्फायितं चीतिसूत्रे मंदिचन्दीति पाठात् रक्प्रत्यय इति भावः ।। असामेति ।। लोडुत्तमपुरुषबहुवचनमेतत् ।। ७ ।।

स्वग्नयो हीति ।। स्वग्नय इति देवेषु आत्मनि च किमर्थं विशेषणमित्यत आह ।। अस्मदीयमिति ।। अग्निनिमित्तकं अस्माभिरग्निरूपाधिष्ठाने देवानां हविषो दानरूपपूजनात्तेन संतुष्टैरस्मभ्यं वित्तादिदानादित्यर्थः ।। ८ ।।

अथा नः ।। प्रशस्तय इति ।। प्रपूर्वात् शंसु कथने इत्यतःक्तिनि स्तुत्यर्थकत्वमिति भावः ।। ९ ।।

विश्वेभिरग्ने ।। धाञःछन्दसि लुङ्लङ्लिट इति लुङि गातिस्थेति सिजलुगित्याशयेनाह ।। धाः अधाः धेहीति ।। वायोःसहःशब्दवाच्यत्वे प्रमाणमाह ।। प्राणं वा वेति ।। यहुशब्द इति ।। अपत्यं यहुःसूनुरित्यत्रेति शेषः ।। १० ।। २१ ।। ७ ।।

### ऋक्संहिता पदपाठसहिता (सू-२७, व-१)

(३००) अश्वं न त्वा वारवन्तं वन्दध्यां अग्निं नमोभिः ।। सम्राजन्तमध्वराणाम् ।। १ ।।

(प०) अश्वम् । न । त्वा । वारऽवन्तम् । वन्दध्यै । अग्निम् । नमःभिः ।। सम्ऽराजन्तम् । अध्वराणाम् ।। १ ।।

(३०१) स घा नःसूनुःशवसा पृथुप्रगामा सुशेवः ।। मीढ्वाँ अस्माकं बभूयात् ।। २ ।।

(प०) सः । घ । नः । सूनुः । शवसा । पृथुऽप्रगामा । सुऽशेवः ।। मीढ्वान् । अस्माकम् । बभूयात् ।। २ ।।

(ऋक्संहिता पदपाठसहिता)

(३०२) स नो दूराच्चासाच्च नि मर्त्यादघायोः ॥
पाहि सदमिद्विश्वायुः ॥ ३ ॥

(प०) सः । नः । दूरात् । च । आसात् । च । नि । मर्त्यात् । अघऽयोः ॥ पाहि । सदम् । इत् । विश्वऽआयुः ॥ ३ ॥

(३०३) इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् ॥
अग्ने देवेषु प्र वोचः ॥ ४ ॥

(प०) इमम् । ऊँ इति । सु । त्वम् । अस्माकम् । सनिम् । गायत्रम् । नव्यांसम् ॥ अग्ने । देवेषु । प्र । वोचः ॥ ४ ॥

(३०४) आ नो भज परमेष्वावाजेषु मध्यमेषु ॥ शिक्षा वस्वो अन्तमस्य ॥ ५, २२ ॥

(प०) आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु ॥ शिक्ष । वस्वः । अन्तमस्य ॥ ५, २२ ॥

## ऋग्भाष्यम्

वारवान्बडबामुखः । स्वदृष्टान्तो हरेर्यस्माद्विष्णुः सबडवामुखः ॥ १ ॥ सूनुः स शवसो वायोः पृथुज्ञानः सुशेवकृत् । सुखकृन्नो भवेन्मीढ्वान्स्वामिनः सूनुरेववा । व्यंग्यत्वाद्वायुना सार्धं सुशेवः सुसुखात्मकः ॥ २ ॥ आसात्समीपतश्चास्मान-घार्थायोर्निपाहि च । प्रतिप्रति सदो नित्यो विश्वायुः ॥ ३ ॥ त्वमिमां स्तुतिम् । सनिं दानस्वरूपांच गायत्री छन्दआत्मिकाम् । नव्यां संस्तुतिषु श्रेष्ठां वद देवेषु सादरम् ॥ ४ ॥ उत्तमाधममध्येषु भोगेष्वस्मानवाप्नुहि । रक्षकत्वेन शिक्षास्मान्ज्ञानवस्वर्थमेव च । अन्ते मोक्षे मितत्वेन ज्ञानमन्तममुच्यते ॥ ५, २२ ॥

## ऋग्भाष्यटीका

अश्वं न । अत्र वारवच्छब्दस्याभिधेयमाह ॥ वारवानिति । अश्वं नेत्यस्य तात्पर्यमाह ॥ स्वदृष्टान्त इति । कुत इत्यत आह ॥ यस्मादिति । सोऽश्वोबडवामुखश्च विष्णुरेव यस्मात्तस्मात्स्वदृष्टान्त इति । अहमध्वराणां

(ऋग्भाष्यटीका)

संम्राजन्तम् ईशानम्। वारवंतमग्निं त्वाम् अश्वं न अश्वं त्वामिव। नमोभिर्नमस्कारात्मकैर्वाक्यैर्वन्दध्यै उत्तमपुरुषार्थेध्यै वन्दे। यद्वा तुमर्थ एवाध्यै तथासति प्रारभ इति क्रियाध्याहारः। प्रह्वन्यमिव त्वां स्तोतुमुचितमिति॥ १॥

सघा। सूनुः। शवसा षष्ठ्यर्थे तृतीया। शवसो बलरूपस्य वायोः सूनुः पृथुप्रगामा गमेर्भावे अनिण्। पृथु विस्तृतम्। प्रगाम प्रकृष्टज्ञानं यस्यासौ तथोक्तः पृथुज्ञानः। सोग्निर्नोस्माकम्। शुशेवः शोभनं शेवं यस्माद्भवति स तथोक्तः। सुशेवकृत् सुखकृत्। बभूयात् भवेत्। द्विर्वचनं छान्दसः। किञ्च। सघ स एव। अस्माकं मीढ्वान्। सेचको दाता स्वामी च बभूयात्। प्रकारान्तरेण व्याख्याति। नः सूनुरिति। नः सूनुरित्येव वा योज्यम्। कथं विष्णोर्वायुसूनुत्व मृषिसूनुत्वं चेत्यत आह॥ व्यंग्यत्वादिति॥ वायुना ऋषिणा चेति शेषः। तर्हि शवसेत्यस्य कथं सम्बन्ध इत्यत आह॥ वायुनेति॥ वायुना सार्धं सूनुरिति वा मीढ्वान् बभूयादिति वा योज्यम्। सुशेव इत्यस्यार्थान्तरमाह॥ सुशेव इति॥ २॥

सनः। आसात्। विश्वायुर्विश्वं पूर्णमायुरस्येति नित्यः। सोऽग्निस्त्वम्। नोस्मान्। सदं सीदंत्यस्मिन्निति सदशब्दः सदःशब्दपर्यायः। अध्याहृतकर्मप्रवचनीय प्रतिशब्दयोगे द्वितीया। स च वीप्सायाम्। इच्छब्दो वा तदर्थः। अत उक्तं प्रतिप्रतिसद इति। सर्वेष्वपि स्थानेष्विति यावत्। दूराच्च दूरस्थाच्च। आसाच्च समीपतश्च । अन्तिकनामसु पाठात्। समीपस्थाच्चाघायोरघार्थायोः। आयुःशब्दसमानार्थोऽयमायुशब्दः। यद्वा गमनमायुशब्दम्। तादर्थ्याच्च ताच्छब्द्यम्। मर्त्यान्निश्रितं पाहि। चशब्दः प्रार्थनासमुच्चये॥ ३॥

इममूषु। त्वमिमाम्। हे अग्ने। त्वमस्माकम्। इमं स्तवमिति शेषः। इमां स्तुतिम्। सनिं दानस्वरूपाम्। षणु दाने। देहीत्युपलक्षितामिति यावत्। गायत्रं गायत्रीछन्द आत्मिकाम्। नव्यांसं नवतराम्। अत्यन्तापूर्वां स्तुतिषु श्रेष्ठाम्। देवेषु सु प्रवोचः। सादरं वद च। देवान्प्रापयेति यावत्। उशब्दश्चशब्दार्थे। लकारव्यत्ययः छान्दसः॥ ४॥

आनः। उत्तम। हे अग्ने त्वम्। परमेषु वाजेषु अन्नेषु। नोस्मानाभज। तथा मध्यमेषु वाजेषु न आभज। अत्र परममध्यमग्रहणमधमानामप्युपलक्षणम्। तथा वाजग्रहणं सर्वभोगानाम्। तथाचोत्तमाधममध्यमेषु भोगेष्वस्माभिर्भुज्यमानेषु सत्सु त्वमस्मान् रक्षकत्वेनावाप्नुहि। त्वद्रक्षिता वयं सर्वभोगभोक्तारो भूयास्मेत्युक्तं भवति। तथांतमस्य ज्ञानलक्षणस्य वस्वो वसुनः। चतुर्थ्यर्थे षष्ठी। ज्ञानवस्वर्थं चास्मान् शिक्षेति यावत्। इदमेव मुख्यं प्राथ्यं न तु भोगा इत्येव शब्दः। अन्तमशब्दस्य ज्ञानवाचित्वं कथमित्यत आह॥ अन्त इति। अन्ते संसारस्येति शेषः। तस्यार्थो मोक्ष इति। तादर्थ्ये सप्तमी। मोक्षसाधनतयेति यावत्। मितत्वेन प्रमितत्वेन। आतोनुपसर्गे कः॥ ५, २२॥

## मन्त्रार्थमञ्जरी

अथ 'अश्वं न' इति सप्तविंशं त्रयोदशर्चं वर्गत्रयात्मकं सूक्तम्। तत्र अन्त्या दैवी त्रिष्टुप्। अन्या आग्नेय्यो गायत्र्यः। (अहम्) अध्वराणाम्। सम्राजन्तम्, ईशानम्, राजतेः झप्रत्ययः, 'झोऽन्तः' इत्यन्तादेशः। वारवन्तम्, बडवामुखम्। अग्निम्। (त्वा) त्वाम्)। अश्वम् न, अश्वरूपं त्वामिव, 'गगनं गगनाकारम्' (काव्यालंकारसूत्रवृत्तिः ४।३।१४) इत्यादिवत्। नमोभिः, नमस्कारात्मकैर्वाक्यैः। वन्दध्यै, वन्दे, वन्दतेः उत्तमपुरुषार्थे ध्यैप्रत्ययः, यद्वा– तुमर्थएव 'तुमर्थे सेसेन्' इत्यध्यैप्रत्ययः, वन्दितुम्, तथात्वे (प्रारभे) इति क्रियाध्याहारः। 'नह्यन्यमिव त्वां स्तोतुमुचितम्' इत्याकूतम्॥ १॥

शवसा, षष्ठ्यर्थे तृतीया, शवसो बलरूपस्य वायोः। सूनुः। 'शवसा, वायुना सह। नः, ऋषेः। सूनुः' इति वा, व्यङ्ग्यत्वात्। पृथुप्रागमा, गमेः भावेऽनिण्, पृथु विस्तृतं प्रगाम प्रकृष्टज्ञानं यस्यासौ तथोक्तः, पृथुज्ञानः। सः। अग्निः। नः, अस्माकम्। सुशेवः, शोभनं शेवं सुखं यस्माद्भवति स सुशेवः, सुखकृत्। बभूयात्, भवेत्, द्विर्वचनं छान्दसम्। किं च, (सः) घ, स एव। अस्माकम्। मीढ्वान्, सेचको दाता स्वामी च। (बभूयात्)॥ २॥

विश्वायुः विश्वं पूर्णमायुर्यस्येति विश्वायुः, नित्यः। सः अग्निः। (त्वम्) नः, अस्मान्। सदम्, सदस्शब्दपर्यायोऽयम्, सीदन्त्यस्मिञ्जना इति सीदतेः अधिकरणेऽकारप्रत्ययः (प्रति) इति शेषः, स च 'लक्षणेत्थं भूत' इत्यादिना वीप्सायां कर्मप्रवचनीयः, सदं सदं प्रति, 'सदम् इत्' इतीत् शब्दस्य वा 'सदं सदं प्रति' इत्यर्थः, सर्वेष्वपि स्थानेष्विति यावत्। दूरात् च, दूरस्थाच्च। आसात् च, समीपतश्च, अन्तिकनामसु (वै० नि० २।१६) पाठात्समीपस्थाच्च। अघायोः, अघार्थायुष्मतः, आयुस्शब्दपर्यायोऽत्रायुशब्दः, यद्वा– अयतेः उण् (एतेः ऊण्) अघार्थगतिमतः। मर्त्यात्। नि, निश्चितं यथा तथा। पाहि॥ ३॥

(हे) अग्ने त्वम् अस्माकम्। इमम् (स्तवम्) इति शेषः, इमां स्तुतिम्। सनिम्, दानस्वरूपाम्, 'षणु दाने' इत्यत इकारः, 'देहि' इत्युपलक्षितामिति यावत्। गायत्रम्, गायत्रीछन्दआत्मिकाम्। नव्यांसम्, नवतराम्, अत्यन्तापूर्वाम्, स्तुतिषु श्रेष्ठाम्। देवेषु। सु प्र वोचः (उ), सादरं वद च, देवान्प्रापय चेति यावत्, उशब्दश्चशब्दार्थः, लोडर्थे लुङ् अडभावः॥ ४॥

(हे अग्ने त्वम्) परमेषु। वाजेषु, अन्नेषु। नः, अस्मान्। आ भज। तथा मध्यमेषु (वाजेषु) आ (भज) अत्र परममध्यमग्रहणमधमानामप्युपलक्षणम्, तथा वाजग्रहणं सर्वभोगानाम्, ततश्च –

(मन्त्रार्थमञ्जरी)

उत्तममध्यमाधमभोगेष्वस्माभिर्भुज्यमानेषु सत्सु त्वमस्मान्नक्षकत्वेनावाप्नुहि, त्वद्रक्षिता वयं सर्वभोगभोक्तारो भूयास्मेत्युक्तं भवति। तथा अन्तमस्य, ज्ञानलक्षणस्य। वस्वः,वसुनः, चतुर्थ्यर्थे षष्ठी, ज्ञानवस्वर्थम्। (चास्मान्) शिक्ष– इति यावत्। अन्ते संसृतेरन्ते मोक्षे मोक्षार्थं मितं मोक्षहेतुत्वेन प्रमितमित्यन्तमं ज्ञानं ध्येयम्, अन्तशब्दोपपदात् 'माङ् माने' इत्यतः 'आतोऽनुपसर्गे कः' ॥ ५ ॥ इति द्वाविंशो वर्गः ॥ २२ ॥

## रूपावतारः

अश्वं न त्वा ॥ उत्तमपुरुषार्थे ध्या इति ॥ वदेः छान्दसत्वाद् ध्यैप्रत्यये धातोर्नुमागमे वन्दध्या इति रूपम्। यद्वेति। वदेः अध्यैप्रत्यये नुमागमे वन्दध्या इति रूपमिति भावः। अश्वं त्वामिवेति तस्यैव दृष्टान्तत्वोक्तेः प्रयोजनमाह। नहीति। हि यस्मात् अन्यमश्वमिव त्वां स्तोतुं नोचितं तस्मात् अश्वं त्वामिव वारवन्तं त्वां वन्दध्यै इति पूर्वेण संबन्धः ॥ १ ॥

सघानाः ॥ भाष्ये सुशेवकृदिति प्रतिबिम्बं व्याख्यातम्। सुखकृदिति स्वपदविवरणमिति भावेन सुशेवकृदित्यस्य व्याख्येयं पदमुपादाय भाष्यस्य तद्व्याख्यानत्वसिद्धये विग्रहमाह। सुशेव इत्यादिना। एतेन-श्रुतौ सुशेवकृदिति पदाभावात् सुशेवकृदित्यनूद्य व्याख्यानमनुपपन्नमिति परास्तम्। छान्दसमिति। उपलक्षणमेतत्। आशीर्लिङ्व्यत्ययश्च छान्दस इति द्रष्टव्यम्। प्रार्थनांलिङो भाव्यत्वात्। कथं विष्णोरिति। पूर्वमुक्तं वायुसूनुत्वमिदानीमुच्यमानं ऋषिसूनुत्वं च कथमित्यर्थः ॥ २ ॥

स नः ॥ सच वीप्सायामिति। प्रतेर्वीप्सायां कर्मप्रवचनीयत्वात् तद्युक्तसदःशब्दे द्विर्वचनं, द्वाभ्यामपि सदःशब्दाभ्यां प्रतेर्योगः। अन्यथा एकत्रैव द्वितीया स्यादपरत्र न स्यादिति सूचयितुं भाष्ये प्रति प्रति सद इति प्रतिशब्दो द्विरुच्चारित इति द्रष्टव्यम्। एतेन नानाभूतार्थवाचिनां यानि वाच्यानि तेषां गुणक्रियाभ्यां व्याप्तीच्छा वीप्सा तस्यां विहितं द्विर्वचनं ग्रामो रमणीय इत्यादौ ग्रामादीनामेव वीप्साविषयत्वेन ग्रामादिशब्द एव दृष्टमिति इहापि सदःशब्दवाच्येष्वेव सदःस्सु प्रयोक्तुः रक्षणक्रियया व्याप्तुमिच्छासद्भावेन इच्छाविषयवाचकसदःशब्द एव द्विर्वचनस्य भाव्यत्वेन भाष्यकारीयं प्रतिशब्दद्विर्वचनमनुपपन्नमिति परास्तम्। इच्छब्दो वेति। अस्मिन्पक्षे सदमिति द्वितीया छन्दस्त्वादूह्या। अघार्थायोरिति। अनेन अघाय आयुर्यस्येति व्यधिकरणबहुव्रीहिरिति सूचितमिति बोध्यम्। समानाधिकरण एव बहुव्रीहिरिति भावेनाह। यद्वेति। गमनमिति। अयधातोर्गत्यर्थत्वात् गमनमायुश्शब्दवाच्यमित्यर्थः। गमनस्यायुश्शब्दार्थत्वं व्युत्पाद्य बहुव्रीहेः

(रूपावतारः)

सामानाधिकरण्यसिद्ध्यर्थं गमनस्याघशब्दवाच्यत्वमप्याह। तादर्थ्यादिति। अघार्थत्वात् गमनस्याघशब्दवाच्यत्वमित्यर्थः। अनेन नाघमायुर्यस्येति समानाधिकरणो बहुव्रीहिः सूचित इति भावः। (अत्र ग्रन्थपातोवर्तते)॥ ३, ४॥

वसुशब्दात् ङसि 'इकोऽचि विभक्तौ' (७।१।७३) इति नुमागमशासनस्यानित्यत्वादप्रवृत्तेः 'घेर्ङिति' (७।३।१११) इति गुणस्य संज्ञापूर्वकविधेरनित्यत्वेनाभावात् यणादेशे वस्व इति रूपम्। आतोऽनुपसर्गे क इति। नेदं कप्रत्यय विधायकसूत्रोदाहरणं अन्तमस्येत्यस्य कर्मोपपदत्वाभावात्। किं तु 'सुपिस्थः' (३।२।४) इति सूत्रे योगाविभागेनोक्तस्य सुपि उपपदे आदन्तात् कप्रत्ययस्य स्फोरकं स्ववाक्यमित्यूह्यम्॥ ५॥ २२॥

## पदार्थप्रकाशिका

अश्वं नत्वा वारवन्तम्। कुत इतीति। यद्यश्वो वारवांश्च विष्णुः स्यात्तदैव स्वदृष्टान्तः स्यात्तदेव कुत इत्यर्थः। भाष्यस्थं तच्छब्दमनूद्य व्याख्याति। सोऽश्व इति। दृष्टान्तभूतोश्व इत्यर्थः। विष्णुरेवेति। हयवदनस्य विष्णुत्वादिति भावः। वारवंतमग्निं त्वामिति। बडवानलोग्निः समुद्रगः प्रसिद्धः। यो वाडवाग्निः नृहरिर्विचिंत्य इति विष्णुरपि प्रसिद्धोऽतो वारवच्छब्दो विष्ण्वग्निसाधारणो बोद्धव्यः। अश्वंत्वामिवेति। यथाऽश्वरूपं हयग्रीवरूपं त्वां लोकाः नमस्कुर्वन्ति तथा वारवन्तं त्वामपि वन्दध्यै इत्यर्थः। प्रसिद्धाग्निपक्षे तु उत्तमदृष्टान्त इत्यवगन्तव्यम्। ननु वन्दे इति वक्तव्यम्। वन्दध्या इति कथम्। तुमर्थे सेसेन् असे असेन् कसेकसेन् अध्यै अध्यैन् कध्यै कध्यैन् शध्यै शध्यैन् तवैन् तवेङ् तवेन इति सूत्रेण तुमनोऽर्थ एव धातोरध्यै इत्यादेश विधानादित्यत आह। उत्तमपुरुषार्थे अध्यै इति। वेदे उत्तमपुरुषस्य इङोर्थे अध्यै इत्यादेशः छान्दस्त्वादित्यर्थः। तमेवार्थं दर्शयति। तं वन्द इति। वारवन्तं वन्द इत्यर्थः। अत एवास्वरसादाह। यद्वेति। तथाच वन्द इत्यस्मात् तुमर्थे अध्यै इत्यादेशे वन्दध्या इति रूपं भवतीत्यर्थः। तर्हि नमोभिर्वंदितुमित्येतत् क्रियासापेक्षत्वादपूर्णं वाक्यमापन्नमित्यत आह। प्रारभ इति। तथाच वन्दितुं प्रारभ इत्यर्थः। नन्वश्वं नत्वेति स्वदृष्टान्तः कस्मादुपात्त इत्यत आह। नह्यन्यमिवेति। अन्यं पुरुषमिवेत्यर्थः। किन्नाम त्वामिवैवत्वा स्तोतुमुचितमतः स्वदृष्टान्त इत्यर्थः। नन्वश्वं नत्वेति स्वदृष्टान्तः कस्मादुपात्त इत्यत आह। नह्यन्यमिवेति। अन्यं पुरुषमिवेत्यर्थः। किन्नाम त्वामिवैवत्वा स्तोतुमुचितमतः स्वदृष्टान्त इत्यर्थः। वारवच्छब्दव्युत्पत्तिस्त्वित्थम्। वारं समूहो वारं तद्वान् वारवानिति। अप्युमुदकाश्रय इत्यर्थः इति सम्प्रदायविदः। वारि उदकानि भवति प्रविशन्तीति वारवानिति व्युत्पत्तिः॥ १॥

(पदार्थप्रकाशिका)

सघानः सूनुः शवसा। गमेर्भावेऽनिण्णिति। प्रोपदात् गमलृगतावस्माद्भावे अनिणिप्रत्यये इण् इत्यस्यलोपे णित्वादादिवृद्धौ प्रगामेति रूपम्। भावार्थमेव दर्शयति। ज्ञानमिति। ननु भूसत्तायामस्मादाशीर्लिङि तस्य तिबादेशे इबित्यस्य लोपे यासुडागमे सूडित्यस्य लोपे भूयादित्येव स्यात्। बभूयादिति कथम्। लिङि अभ्यासविधायकाभावादित्यत आह। द्विवचनमिति। तथाच भूधातोः छान्दसे अभ्यासे चर्चेति अभ्यासस्य जंस्त्वे बभूयादिति साध्विति भावः। निह सेचन इति धातोराह। सेचक इति। जस्यार्थो दातेति अभिलषितदातेत्यर्थः। स्वामी चेति भाष्योक्तार्थः। प्रकारान्तरेणेति पूर्वोत्तरार्धयोर्नो अस्माकमिति पदद्वयसद्भावेन तदनुसारेण भिन्नवाक्यत्वेन योजितमिति द्रष्टव्यम्। पूर्वं न इत्यस्य सूनव इत्यनेन सम्बन्ध उक्तः। इदानीं तु प्रकारान्तरेणेत्यर्थः। विष्णोरग्निशब्दवाच्यस्य। वायुसूनुत्वमिति। पूर्वयोजनानां शवसः सूनुरिति वा सुनुत्वस्योक्तत्वादिति भावः। ऋषिः शुनःशेपः। न इत्यस्मछब्देनोक्तः। वायुना सार्धम् नः सूनुरिति। अनेन भाष्ये व्यवहितानामन्वय उक्तो भवति। वायोरग्निशब्दवाच्यविष्णोश्च ऋषिणा। दृष्टत्वादृषिसूनुत्वमुभयोरपि युक्तमिति द्रष्टव्यम्। केचित्तु सूनुरग्निवायुना सार्धं मीढ्वान् भूयात् इत्यन्वय इत्याहुः। पूर्वं शवसेति तृतीयायाः षष्ट्यर्थतया व्याख्यानादिदानीं तृतीयायाः यथास्थिताया एव व्याख्यातत्वात् तदपेक्षया इति वेत्युक्तम्। अर्थान्तरमिति। सुखकृदित्युक्तार्थापेक्षया अर्थान्तरमित्यर्थः॥ २॥

सनोदूराच्चासाच्च। नित्य इति। इति व्युत्पत्या नित्य इति लभ्यत इत्यर्थः। ननु ऋचि सदमित्यकारान्तसदशब्दसद्भावाद्भाष्ये कथं सद इति नपुंसकसदःशब्दो व्यवहृत इत्यत आह। सदःशब्दपर्याय इति। द्वयोः पर्यायत्वेनादोषादिति भावः। ननु प्रतिप्रतिसद इति व्याख्यानं कथं शब्दमात्राल्लभ्यत इत्यतस्तदुपपादयति। अध्याहृतेत्यादि। लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव इति सूत्रेण कर्मप्रवचनीयसंज्ञको यः प्रतिशब्दः सौत्रादध्याहृतः। तथाचाध्याहृतकर्मप्रवचनीयसंज्ञकप्रतिशब्दयोगे कर्मप्रवचनीय युक्ते द्वितीयेति सूत्रेण सदमिति द्वितीयेत्यर्थः। सचेति। प्रतिशब्द इत्यर्थः। आसादित्यस्य समीपत इत्यर्थमुपपादयति। अन्तिकनामस्विति। आसाछब्दस्येति शेषः। नन्वायुशब्दस्य षकारान्तत्वादघार्थ आयुष इति वक्तव्ये कथमघायुरित्युकारान्तत्वमित्यत आह। आयुःशब्देति। अत एवास्वरसादाह। यद्वेति। अयपयगतावस्मादुण्प्रत्यये णित्वादादिवृद्धौ गमनम् आयुशब्दवाच्यमित्यर्थः।

तथाचाघायोः पापार्थं प्रवृत्तिमत इत्यर्थः। ननु ऋचि अघार्थयोरिति वक्तव्यत्वेनाघायोरिति कथमायुषोऽघत्वोक्तिरित्यत आह। तादर्थ्यादिति। तदर्थत्वात्तछब्दवाच्यत्वमायुर्वैघृतमित्यादाविवोपपन्नमिति भावः। एवं च प्रकृतेऽपि तदीयाः पुरुषं प्रवृत्ते वारघार्थदघायोरिति

(पदार्थप्रकाशिका)

सामानाधिकरण्यं युक्तमिति । नीत्यस्यार्थो निश्चितमिति । चशब्द इति । निपाहिचेत्यत्र विद्यमानश्चशब्दः अघान इति पूर्वऋक् प्रार्थनायाः समुच्चय इत्यर्थः ।। ३ ।।

इममुषत्वमस्माकम् । स्तुतेर्देहिरूपत्वासम्भावादाह । देहीत्युपलक्षितामिति । देहीति पदघटितामित्यर्थः । गायत्रीछन्दआत्मिकामिति । गायत्री वसिष्वाहिमियेध्येत्यादिरूप- मित्यर्थः । स इत्यस्यार्थः सादरमिति । देवान् प्रापयेति । हे देवाः शुनःशेपो वः स्तौतीति देवान् प्रति विज्ञापयेत्यर्थः । चार्थ इति । अत एव वद चेत्युक्तम् । पूर्वं प्रार्थनासमुच्चयार्थश्चशब्द इति द्रष्टव्यम् । ननु विधिनिमंत्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्लोट्चेति स्मरणात् प्रकृते च शुनःशेपेनाग्निं प्रति प्रार्थनायाः क्रियमाणत्वादग्ने देवेषु वदेति लोटा भाव्यं प्रावोच इत्यतीतार्थकलुङ्योगः कथमित्यत आह । लकारव्यत्यय इति । लोटो व्यत्ययेन लुङ्प्रयोगः छान्दस इत्यर्थः ।। ४ ।।

आनोभज परमेषु । ननु परमेषु मध्यमेष्वित्युक्त्योत्तममध्यमभोगप्राप्तावपि अधमग्रहणा- भावादुत्तमाधममध्यमेष्विति च कथं भाषितं तथा श्रुतौ वा अज्मात्रग्रहणो न भोगेष्विति च कथं सामान्येन भाषितमित्यत आह । अत्रेत्यादिना । त्वमस्मान् रक्षकत्वेनाप्नुहीत्युक्त्या स्वेषामेव प्राधान्येनैतदृग्देवतात्वप्राप्त्या अग्नेस्तदलाभात् । अतोऽग्निदेवताकत्वसिध्यर्थमाह । त्वद्रक्षिता इति । तथाचाग्नेः प्राधान्यप्राप्त्याव देवतात्वोपपत्तिरिति भावः । एवशब्देन पूर्वप्रार्थनानिषेधः प्रतीयते अत आह । इदमेवेति । ज्ञानरूपं वस्त्वेवेत्यर्थः । नतु भोगाः इति । पूर्वार्धे च उक्ताः मुख्यतो न प्रार्थ्या इत्यर्थः । प्रमितत्वेनेति । तमेवं विद्वानमृत इह भवति इत्यादिना प्रमितत्वेनेत्यर्थः । अतोनुपसर्गे क इति । आदन्ताद्धातोः कप्रत्ययः स्यादिति सूत्रार्थः एवं चान्तःशब्दोपपदान्माज्ञान इति धातोः कर्मणि कप्रत्यये कित्वाद्धात्वाकारलोपे प्रत्ययाकारे मिलिते सति अन्तमेति प्रातिपदिकप्रसिद्धेः पश्चात्स्वाद्युत्पत्तौ अन्तमस्येति भवतीति द्रष्टव्यम् । नन्वस्मिन् सूत्रे कर्मणि इत्यभिप्रेत्य वृत्तिकारैः कर्मण्युपपद इति व्ययाख्यातम् । गोदः कंबलदः इत्युदाहृतं च । प्रकृते च कर्मण्युपपदस्याभावात् कथमत्रैतत्सूत्रोदाहरणमिति चेदुच्यते । कर्मण्यण् । आतोनुपसर्गे कः सुपि स्थ इति हि सूत्रक्रमः । तत्र पदमञ्जर्यां कर्मणीत्यनुवृत्तिमनङ्गीकृत्य उत्तरसूत्रस्थस्य सुपीत्यस्यात्र सम्बन्धमङ्गीकृत्य सुबन्ते उपपद इत्येव व्याख्यातम् । अत एव तद्व्याख्यानं हृदि निधाय सर्वज्ञकल्पैष्टीकाकारैः सप्तम्यन्ते उपपदे अनेन सूत्रेण क प्रत्ययो आनीत इत्यवगंतव्यम् । इदमेव च व्याख्यानं हृदि निधाय अक्षयं पुरुषस्याक्षमित्यत्र तत्वनिर्णयटीकायामपि नञुपपदात् क्षैक्षय इत्यस्माद्धातोनुपसर्गे क इति कप्रत्यय इत्युक्तम् । नञुपरिप्राप्तस्य सुपो लुप्तत्वेन नञ् उपपदत्वेपि सुबन्तोपपद- त्वसम्भवादित्यवगन्तव्यम् ।। ५,२२ ।।

## पदार्थदीपिका

अध्वरेशमिति प्राचीनभाष्यं मनसि निधायाह ।। अध्वराणां सम्राजं तमीशानमिति ।। राजते रौणादिको झः । झोऽन्त इति तस्यान्तादेशः । तेनेशवाचककाकारान्तराजन्तशब्दनिष्पत्तिर्द्रष्टव्या । न त्वयं लडादेशशत्रन्तः । तथा सत्यध्वराणामिति षष्ठी न स्यात् । न लोकाव्ययनिष्ठाखलर्थ तृनामिति लादेशयोगे तन्निषेधादिति भावः ।। तुमर्थ एवेति ।। वदि अभिवादन स्तुत्योः । इदितो नुम् धातोरिति इदित्वान्नुम् । तुमर्थे सेसेनसेअसेन्कसेकसेन्नध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैङ तवैन इति सूत्रेण तुमर्थे अध्यैप्रत्यय इत्यर्थः । तर्हि वन्दितुमित्यर्थापत्या साकांक्षस्यास्य वाक्याभासत्वं स्यादित्यत आह ।। तथा सतीति ।। भगवत्स्तवनप्रतिबन्धकनिवर्तकमुपायं प्रारभ इत्यर्थः ।। नहीति ।। महाफल-साधनतया भगवद्वन्दने बहुविघ्नप्रसङ्गात् तन्निवर्तकोपायानुष्ठानमावश्यकमेवेति भावः ।। १ ।।

षष्ठ्यर्थ इति ।। सुपां सुलुगिति ङसष्टादेश इति भावः । प्रकर्षेण गमनं प्रगामः । हलाश्चेति भावे घञ् । पृथुः प्रगामो यस्यासौ पृथुप्रगामा । सुपां सुलुगिति पूर्वसवर्णाकार इति व्याख्याने प्रयत्नगौरवं मनसि निधाय प्रकारान्तरेण व्याख्याति ।। गमेर्भावेऽनिण्णिति ।। णित्वादत उपधाया इति वृद्धिरिति भावः । तथा नान्तस्योपधाया इति दीर्घविधानात् सुपां सुलुगिति पूर्वसवर्णस्याकारस्यास्मिन् पक्षेऽनाश्रयणात् प्रयत्नलाघवमिति भावः ।। छान्दसं द्विर्वचनमिति ।। भवतेर्लिङस्तिप् । इतश्च लोपः । परस्मैपदेष्विति इकारलोपः । तस्य यासुट् परस्मैपदेष्विति यासुडागमः । लिटि परतो विहितो द्विर्भावः सर्वे विधयः छन्दसि विकल्पन्त इत्युक्तेः लिङ्यपि भवति । पूर्वोभ्यासः अभ्यासस्य ह्रस्वः । अभ्यासे चर्चेति जस्त्वम् । भवतेर इत्यत्वम् । लिङाशिषीति आर्धधातुकत्वात् शबभाव इति भावः । मीढ्वानिति ।। मिहसेचने । अस्मात् क्वसुन् प्रत्ययान्तो दाश्वान् साह्वान् मीढ्वांश्चेति निपातितत्वादिति भावः ।। इति वेति ।। शवसेत्यस्य शवसा वायुना सार्धं मीढ्वान् बभूयात् इति वा सम्बन्ध इत्यर्थः ।। २ ।।

सदःशब्दपर्याय इति ।। अन्यथा सदसमिति स्यादिति भावः । प्रतिसद इति भाष्यमुपपादयति ।। अध्याहृतेति ।। स चेति ।। प्रतिश्च वीप्सायां कर्मप्रवचनीय इत्यर्थः । लक्षणेत्थं भूताख्यान-भागवीप्सासु प्रतिपर्यनव इति स्मरणादिति भावः ।। इच्छब्दो वेति ।। वीप्सार्थ इत्यर्थः । अत्र च पक्षे नाध्याहार इति विशेषः । अत उक्तमिति भावेनोक्तमित्यर्थः ।। आयुःशब्दसमानार्थ इति ।। अन्यथा अद्यायुष इति स्यादिति भावः ।। यद्वेति ।। इण् गतावित्यस्मात् इणश्चन्दसीत्युणि अचो ञ्णितीति वृध्दावायादेशे चोकारान्तायुशब्दनिष्पत्तेरिति भावः । यद्यप्ययं पापमनिष्टं कर्तुमिच्छतीति इच्छार्थे

(पदार्थदीपिका)

अघशब्दात् सुप आत्मनः क्यजिति क्यचि क्याच्छन्दसीति तदन्तादुप्रत्यये अतो लोप इत्यकारलोपे अश्वघस्यादित्यात्वमिति वेदापव्याख्यानरीत्यापि अघायुशब्दनिष्पत्तेरुक्तरीत्या बहुप्रयत्नाश्रयण-मनर्थकं तथापि अर्थातिशयलाभात् तदाश्रयणमिति ध्येयम् ॥ तादर्थ्यादिति ॥ आयुषोद्यत्वाभावेऽपि तादर्थ्यात् दधित्रपुसं प्रत्यक्षो ज्वर इत्यादाविव तच्छब्दमित्यर्थः ॥ ३ ॥

शेष इति ॥ भाष्ये शेषोक्तिरित्यर्थः ॥ षणुदान इति ॥ धात्वादेः षः सः । सनिकषीत्यादिना सनतेरिकारप्रत्यय इत्यर्थः । स्तुतेर्दानस्वरूपत्वं किं नामेत्यत आह ॥ देहीत्युपलक्षणमिति ॥ देहीति पदोपेतत्वमेव तदुपलक्षितत्वमिति भावः ॥ नव्यांसमिति ॥ नवशब्दादियसुन् ईकारलोपश्छन्दस इति भावः ॥ लकारव्यत्यय इति ॥ छन्दसि लुङ्लङ्लिट इति लोडर्थे प्रार्थनायां लुङ् । ब्रुवो वचिः । अस्य तिः वक्तीत्यादिना च्लेरङादेशः । वच उमित्युमागमे गुण इति भावः । आतोऽनुपसर्गे क इति इत्यस्मात् कप्रत्यये कित्वादातो लोप इटि चेत्याकारलोप इति भावः ॥ ४,५ २२ ॥

## टीकाविवृतिः

अश्वं नत्वा ॥ अभिधेयमाहेति ॥ विशेष्यमाहेत्यर्थः । अक्षरार्थस्तु रलयोरभेदाद्वारं वालम् । डलयोरभेदाद्वाडन्तदेव वाडवम् । पृषोदरादित्वाद्वशब्दलोपात् वडवाया इदं मुखं वाडवं तद्वान्वारवान्वडवामुख इत्यर्थः । यद्वा वारां समूहो वारं सामुद्रोदकम् । तदस्यास्ति स्थानत्वेन भक्ष्यत्वेन वा वारवानित्यर्थः । यद्वा वारः सूर्यादिदिवसे द्वारेऽवसरवृंदयोरिति विश्वोक्तेर्गुणसमुदा-यवान्भक्तसमुदायवान्वा अर्थो ज्ञेयः ॥ सोश्व इति ॥ अश्वस्त्ररूपो ब्रह्माभूदश्वरूपाज्जनार्दनात् ॥ तत्र संनिहितो विष्णुरश्वरूपःस्वयं प्रभुरिति बृहदारण्यकभाष्योक्तेः । अश्वान्तर्ग-ताश्वाकारमूर्तिरित्यर्थः ॥ वडवामुख इति ॥ स्त्रीरूपोश्वो वडवा तस्याःमुखमिव मुखं यस्य स इति विग्रह इत्यर्थः । इदं समुद्रान्तस्थितवडवाग्निरूपं बोध्यम् । भूतादिभूतोंबुनिधानमध्ये भूत्वा हरिःसर्वहरोति धाम्ना ॥ अगाधमंभो विदधाति भस्मयो वाडवाग्निर्नृहरिर्विचिंत्य इति नृसिंहध्यानचक्रे । हयग्रीवरूपस्तु पुरुषाश्वमुखसदृशमुखवान् । स्त्रीरूपो हयशीर्षवान् ॥ तथैव वडावावक्त्र इति श्रीमन्महाभारततात्पर्यनिर्णये भेदेनोक्तेरिति भावः ॥ उत्तमपुरुषार्थे ध्यै इति ॥ वंदतेःशपि इटो व्यत्ययो बहुलमिति ध्यै इत्यादेश इत्यर्थः ॥ यद्वेति ॥ तुमर्थे सेसेनसे इत्यादिना अध्यैप्रत्यय इत्यर्थः । ननु वडवामुखत्वाद्विष्णोरश्वसाम्ये वाच्ये तस्य विष्णुरूपत्वग्रहःकुत इत्यत आह ॥ न ह्यन्यमिवेति ॥ विष्णुव्यतिरिक्ताश्वमिवेत्यर्थः । अन्याश्वस्यात्रोक्ताध्वरेशत्वनमोभिर्वंद्यत्व-योरसंभवादिति भावः ॥ १ ॥

## पदार्थदीपिका

अध्वरेशमिति प्राचीनभाष्यं मनसि निधायाह ॥ अध्वराणां सम्राजं तमीशानमिति ॥ राजते रौणादिको झः । झोऽन्त इति तस्यान्तादेशः । तेनेशवाचकाकारान्तराजन्तशब्दनिष्पत्तिर्द्रष्टव्या । न त्वयं लडादेशशत्रन्तः । तथा सत्यध्वराणामिति षष्ठी न स्यात् । न लोकाव्ययनिष्ठाखलर्थ तृनामिति लादेशयोगे तन्निषेधादिति भावः ॥ तुमर्थ एवेति ॥ वदि अभिवादन स्तुत्योः । इदितो नुम् धातोरिति इदित्वान्नुम् । तुमर्थे सेसेनसेअसेन्क्सेकसेन्नध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैङ तवैन इति सूत्रेण तुमर्थे अध्यैप्रत्यय इत्यर्थः । तर्हि वन्दितुमित्यर्थापत्या साकांक्षस्यास्य वाक्याभासत्वं स्यादित्यत आह ॥ तथा सतीति ॥ भगवत्स्तवनप्रतिबन्धकनिवर्तकमुपायं प्रारभ इत्यर्थः ॥ नहीति ॥ महाफल-साधनतया भगवद्वन्दने बहुविघ्नप्रसङ्गात् तन्निवर्तकोपायानुष्ठानमावश्यकमेवेति भावः ॥ १ ॥

षष्ठ्यर्थ इति ॥ सुपां सुलुगिति ङसष्टादेश इति भावः । प्रकर्षेण गमनं प्रगामः । हलाश्चेति भावे घञ् । पृथुः प्रगामो यस्यासौ पृथुप्रगामा । सुपां सुलुगिति पूर्वसवर्णाकार इति व्याख्याने प्रयत्नगौरवं मनसि निधाय प्रकारान्तरेण व्याख्याति ॥ गमेर्भविऽनिण्णिति ॥ णित्वादत उपधाया इति वृद्धिरिति भावः । तथा नान्तस्योपधाया इति दीर्घविधानात् सुपां सुलुगिति पूर्वसवर्णस्याकारस्यास्मिन् पक्षेऽनाश्रयणात् प्रयत्नलाघवमिति भावः ॥ छान्दसं द्विर्वचनमिति ॥ भवतेर्लिङस्तिप् । इतश्च लोपः । परस्मैपदेष्विति इकारलोपः । तस्य यासुट् परस्मैपदेष्विति यासुडागमः । लिटि परतो विहितो द्विर्भावः सर्वे विधयः छन्दसि विकल्पन्त इत्युक्तेः लिङ्यपि भवति । पूर्वोभ्यासः अभ्यासस्य ह्रस्वः । अभ्यासे चर्चेति जस्त्वम् । भवतेर इत्यत्वम् । लिङाशिषीति आर्धधातुकत्वात् शबभाव इति भावः । मीढ्वानिति ॥ मिहसेचने । अस्मात् क्वसुन् प्रत्ययान्तो दाश्वान् साह्वान् मीढ्वांश्चेति निपातितत्वादिति भावः ॥ इति वेति ॥ शवसेत्यस्य शवसा वायुना सार्धं मीढ्वान् बभूयात् इति वा सम्बन्ध इत्यर्थः ॥ २ ॥

सदःशब्दपर्याय इति ॥ अन्यथा सदसमिति स्यादिति भावः । प्रतिसद इति भाष्यमुपपादयति ॥ अध्याहृतेति ॥ स चेति ॥ प्रतिश्च वीप्सायां कर्मप्रवचनीय इत्यर्थः । लक्षणेत्थं भूताख्यान-भागवीप्सासु प्रतिपर्यनव इति स्मरणादिति भावः ॥ इच्छब्दो वेति ॥ वीप्सार्थ इत्यर्थः । अत्र च पक्षे नाध्याहार इति विशेषः । अत उक्तमिति भावेनोक्तमित्यर्थः ॥ आयुःशब्दसमानार्थ इति ॥ अन्यथा अद्यायुष इति स्यादिति भावः ॥ यद्वेति ॥ इण् गतावित्यस्मात् इणश्चन्दसीत्युणि अचो ञ्णितीति वृध्दावायादेशे चोकारान्तायुशब्दनिष्पत्तेरिति भावः । यद्यप्यघं पापमनिष्टं कर्तुमिच्छतीति इच्छार्थे

(पदार्थदीपिका)

अघशब्दात् सुप आत्मनः क्यजिति क्यचि क्याच्छन्दसीति तदन्तादुप्रत्यये अतो लोप इत्यकारलोपे अश्वघस्यादित्यात्वमिति वेदापव्याख्यानरीत्यापि अघायुशब्दनिष्पत्तेरुक्तरीत्या बहुप्रयत्नाश्रयण-मनर्थकं तथापि अर्थातिशयलाभात् तदाश्रयणमिति ध्येयम् ।। तादर्थ्यादिति ।। आयुषोघत्वाभावेऽपि तादर्थ्यात् दधित्रपुसं प्रत्यक्षो ज्वर इत्यादाविव तच्छब्दमित्यर्थः ।। ३ ।।

शेष इति ।। भाष्ये शेषोक्तिरित्यर्थः ।। षणुदान इति ।। धात्वादेः षः सः । सनिकषीत्यादिना सनतेरिकारप्रत्यय इत्यर्थः । स्तुतेर्दानस्वरूपत्वं किं नामेत्यत आह ।। देहीत्युपलक्षणमिति ।। देहीति पदोपेतत्वमेव तदुपलक्षितत्वमिति भावः ।। नव्यांसमिति ।। नवशब्दादियसुन् ईकारलोपश्छन्दस इति भावः ।। लकारव्यत्यय इति ।। छन्दसि लुङ्लङ्लिट इति लोडर्थे प्रार्थनायां लुङ् । ब्रुवो वचिः । अस्य तिः वक्तीत्यादिना च्लेरङादेशः । वच उमित्युमागमे गुण इति भावः । आतोऽनुपसर्गे क इति इत्यस्मात् कप्रत्यये कित्वादातो लोप इटि चेत्याकारलोप इति भावः ।। ४,५ २२ ।।

## टीकाविवृतिः

अश्वं नत्वा ।। अभिधेयमाहेति ।। विशेष्यमाहेत्यर्थः । अक्षरार्थस्तु रलयोरभेदाद्वारं वालम् । डलयोरभेदाद्वाडन्तदेव वाडवम् । पृषोदरादित्वाद्वशब्दलोपात् वडवाया इदं मुखं वाडवं तद्वान्वारवान्वडवामुख इत्यर्थः । यद्वा वारां समूहो वारं सामुद्रोदकम् । तदस्यास्ति स्थानत्वेन भक्ष्यत्वेन वा वारवानित्यर्थः । यद्वा वारः सूर्यादिदिवसे द्वारेऽवसरवृंदयोरिति विश्वोक्तेर्गुणसमुदा-यवान्भक्तसमुदायवान्वा अर्थो ज्ञेयः ।। सोश्व इति ।। अश्वस्वरूपो ब्रह्माभूदश्वरूपाज्ज्ञानार्दनात् ।। तत्र संनिहितो विष्णुरश्वरूपःस्वयं प्रभुरिति बृहदारण्यकभाष्योक्तेः । अश्वान्तर्ग-ताश्वाकारमूर्तिरित्यर्थः ।। वडवामुख इति ।। स्त्रीरूपोश्वो वडवा तस्याःमुखमिव मुखं यस्य स इति विग्रह इत्यर्थः । इदं समुद्रान्तस्थितवडवाग्निरूपं बोध्यम् । भूतादिभूतोंबुनिधानमध्ये भूत्वा हरिःसर्वहरोति धाम्ना ।। अगाधमंभो विदधाति भस्मयो वाडवाग्निर्नृहरिर्विचिंत्य इति नृसिंहध्यानचक्रे । हयग्रीवरूपस्तु पुरुषाश्वमुखसदृशमुखवान् । स्त्रीरूपो हयशीर्षवान् ।। तथैव वडावावक्त्र इति श्रीमन्महाभारततात्पर्यनिर्णये भेदेनोक्तेरिति भावः ।। उत्तमपुरुषार्थे ध्यै इति ।। वंदतेःशपि इटो व्यत्ययो बहुलमिति ध्यै इत्यादेश इत्यर्थः ।। यद्वेति ।। तुमर्थे सेसेनसे इत्यादिना अध्यैप्रत्यय इत्यर्थः । ननु वडवामुखत्वाद्विष्णोरश्वसाम्ये वाच्ये तस्य विष्णुरूपत्वग्रहःकुत इत्यत आह ।। न ह्यन्यमिवेति ।। विष्णुव्यतिरिक्ताश्वमिवेत्यर्थः । अन्याश्वस्यात्रोक्ताध्वरेशत्वनमोभिर्वंद्यत्व-योरसंभवादिति भावः ।। १ ।।

(टीकाविवृतिः)

सघानः ॥ शवसेति ॥ शवःतर इति बलनामसु पाठादिति भावः ॥ गमेर्भाव अनिण्णिति ॥ ग्रहेरनिरित्युक्तो बहुलोक्तेरस्मादपि जातः वृद्धिदर्शनात्स णिच्चेति भावः ॥ सुखकृदिति ॥ शेवं शिवमिति सुखनामसु पाठादिति भावः । सुशेव इत्यत्र बहुव्रीहिस्वरापवादेन नञ्सुभ्यामित्यनेन प्राप्तोत्तरपदांतोदात्तत्वं क्रत्वादयश्चेत्यनेन सोःपरस्याद्युदात्तत्वं विधायकेन बाधितमिति कृत्वा शेवशब्द आद्युदात्तो बोध्यः ॥ द्विर्वचनमिति ॥ भूधातोःप्रार्थनालिङि बहुलंछन्दसीति शपःश्लोश्छान्दसत्वाद्द्वित्वं छान्दसं एवमभ्यासात्वं च छान्दसं ज्ञेयम् ॥ मीढ्वानिति ॥ मिह सेचने इत्यतो दाश्वान् साह्वान् मीढ्वांश्चेति क्वसौ द्वित्वाभावदीर्घौ निपात्येते इति भावः ॥ नः सूनुरितीति ॥ नः शुनःशेपादि ऋषीणामित्यर्थः ॥ इति वा योज्यमिति ॥ वायुना सार्धं विष्णुर्मीढ्वान्बभूयादिति योज्यमित्यर्थः ॥ २ ॥

स नो दूरात् ॥ सदशब्द इति ॥ क्लिशेरन्लोलोपश्चेत्युक्त अन्प्रत्ययः सदेरप्यधिकरणे जात अत अदंतोऽयंसदशब्दः असुनि तु सांतोपीति भावः ॥ स च वीप्सायामिति ॥ लक्षणेत्थंभूताख्यानेति सूत्रेण प्रतिशब्दो वीप्सायां कर्मप्रवचनीयसंज्ञ इत्यर्थः ॥ इच्छब्दो वेति ॥ तदर्थः वीप्सार्थकः । तथा च न प्रतिशब्दाध्याहारः । द्वितीया तु षट्सु द्वितीयेति महाव्याकरण सूत्रात्सप्तम्यर्थे ज्ञेयेति भावः । दूराच्चासाच्चेत्येतयोर्मर्त्यादित्यस्य विशेषणत्वात्तत्स्थलक्षणामाश्रित्याह ॥ दूरस्थाच्चेति ॥ अन्तिकनामस्विति ॥ तळित् आसात् अंबरमित्यनेनेति शेषः ॥ आयुःशब्देति ॥ एतेर्णिच्चेत्युसिप्रत्यये आयुःशस्तत्समानार्थश्छंसीण इत्युण्प्रत्ययान्त आयुशब्द इत्यर्थः ॥ यद्वेति ॥ इणो भावे उण्प्रत्यये आयुशब्दवाच्यं गमनमित्यर्थः ॥ आयुशब्दस्यायुष्मार्थत्वे गमनार्थत्वेवा सति कथमघशब्दान्वय इत्यत आह ॥ तादर्थ्यादिति ॥ स अर्थो यस्य भावस्तादर्थ्यम् । एवं सशब्दो यस्य तच्छब्दस्तस्य भावस्ताच्छब्द्यम् । तथाचाघमायुर्यस्येत्येव विग्रहः । आयोरघजनकत्वेनाघार्थत्वादघशब्दवाच्यत्वात्सामानाधिकरण्येनान्वय इति भावः । नन्वघमात्मन इच्छतीति क्यचि अश्वाघस्यादितीत्वापवादे आत्वे क्याच्छंदसीत्युप्रत्यये अघायुरिति सिद्ध्यति । अत एव शाकलेन युशब्दात्पूर्वमवग्रहःपठ्यते । न त्वायुशब्दादिति चेन्न । आत्मन अघेच्छासंभवात् । प्रकारान्तरत्वाद्वा । अस्मिन्पक्षे पदकाले अघशशब्दे ह्रस्वतायुशब्दात्पूर्वमवग्रहश्छान्दस इति भावः ॥ मर्त्यादिति ॥ पीडकोपलक्षणमेतत् ॥ चशब्दइति ॥ भाष्ये श्रौतचशब्दद्वयस्य समीपतश्च निपाहि चेत्यन्वयःप्रदर्शितः । टीकायां तु यथाश्रुतश्रौतचशब्दान्वयमाश्रित्यैकस्यावृत्तिमाश्रित्य क्रियान्वितच शब्दः पूर्वऋगुक्तप्रार्थनासमुच्चायक इत्युक्तम् ॥ ३ ॥

(टीकाविवृतिः)

सममूषु ।। स्तवमिति शेष इति ।। श्रुतौ शेषोक्तिरियम् ।। षणु दाने इति ।। अस्मादौणादिक इप्रत्यय इति शेषः ।। देहीत्युपलक्षितामिति ।। मदभीष्टं देहीति वचनयुतामिति भावः ।। गायत्रमिति ।। गायत्री अस्मिन्स्तवेस्तीति गायत्रः । गायत्रीशब्दादर्शआद्यचि यस्येति चेतीकारलोप इति भावः ।। नव्यांसमिति ।। नवशब्दादतिशयार्थे ईयसुनि यस्येति चेत्यकारलोपे पृषोदरादित्वादीकारलोपे अमि उगिदचामिति नुमि अत्वसन्तस्येति दीर्घ इति भावः । सनिंदानस्वरूपां चेति भाष्योक्तचशब्दस्य वद चेत्यन्वयं प्रदर्श्य ऋचि तत्प्रतिपादकं पदं दर्शयति ।। उशब्दइति ।। प्रार्थनायां लिङादौ वक्तव्ये वोच इति लुङ्प्रयोगः कथमित्यत आह ।। लकारव्यत्यय इति ।। छन्दसि लुङ्लङ्लिट इति कालसामान्ये लुङ्विधानाच्छान्दसत्वेन धातुसंबंधाभावेपि लुङि सिपि च्लेरस्यति वक्तिख्यातिभ्यो ङित्यङादेशे वचउमित्युमागमे वोच इति रूपमिति भावः ।। ४ ।।

आनो भज ।। ननु उत्तमाधममध्येष्विति भाष्ये ऋगनुक्ताधमग्रहणं कथं तथा वाजःपय इत्यन्ननामसु पाठाद्वाजशब्दस्य भोगार्थत्वोक्तिश्चेत्यत आह ।। अत्र परमेति ।। भाष्यं तात्पर्यपरत्वेन योजयति ।। तथा चेति ।। भोगकालमात्रे रक्षणप्रार्थनाभ्रान्तिं निवारयितुं पुनस्तात्पर्यमाह ।। त्वद्रक्षिता इति ।। वस्व इति ।। धनार्थकाद्वसुशब्दात् ङसि इकोचि- विभक्ताविति नुमागमस्यागमशासनमनित्यमित्युक्त्या अभावे संज्ञापूर्वको विधिरनित्य इति वचनाद्धेर्ङितीति प्राप्तगुणाभावे च यणादेश इति भावः ।। चतुर्थ्यर्थे षष्ठीति ।। चतुर्थ्यर्थे बहुलं छन्दसीति सूत्रादिति भावः । ज्ञानवसुनः शिक्षासंभवाद्भाष्येऽस्मानिति तात्पर्यमुक्तमिति भावेनाह ।। अस्मान्शिक्षेति यावदिति ।। इदमेवेति ।। भगवद्दानमेवेत्यर्थः ।। तादर्थ्ये सप्तमीति ।। सुपां सुपो भवन्तीति वार्तिकोक्तेस्तादर्थ्ये चतुर्थ्योः सप्तम्यादेश इति भावः ।। आतोनुपसर्गे इति ।। माङ्माने इत्यतः कर्मणि कप्रत्यये आतो लोप इटि चेत्याकारलोप इति भावः ।। ५ ।। २२ ।।

**ऋक्संहिता पदपाठसहिता** (सू-२७, व-२)

(३०५) **विभक्तासिं चित्रभानो सिन्धौरूर्मा उंपाक आ ।। सद्यो दाशुषें क्षरसि ।। ६ ।।**

(प०) **विऽभक्ता । असि । चित्रभानोइतिचित्रऽभानो । सिन्धौः । ऊर्मौ । उपाके । आ ।। सद्यः । दाशुषें । क्षरसि ।। ६ ।।**

(३०७) **यमंग्ने पृत्सु मर्त्यमवा वा जेषु यं जुनाः ।। स यन्ता शश्वंतीरिषंः ।। ७ ।।**

(प०) यम् । अ॒ग्ने॒ । पृ॒त्ऽसु । मर्त्य॑म् । अवाः॑ । वाजे॑षु । यम् । जु॒नाः ॥ सः । यन्ता॑ । शश्व॑तीः । इषः॑ ॥ ७ ॥

(३०७) नकि॑रस्य सह॑न्त्य पर्ये॒ता कय॑स्य चित् ॥ वाजो॑ अस्ति श्र॒वाय्यः॑ ॥ ८ ॥

(प०) नकिः॑ । अ॒स्य॒ । स॒ह॒न्त्य॒ । प॒रि॒ऽए॒ता । कय॑स्य । चि॒त् ॥ वाजः॑। अ॒स्ति॒ । श्र॒वाय्यः॑ ॥ ८ ॥

(३०८) स वाजं॒ विश्व॑चर्षणि॒रर्व॑द्भिरस्तु॒ तरु॑ता ॥ विप्रे॑भिरस्तु॒ सनि॑ता ॥ ९ ॥

(प०) सः । वाज॑म् । वि॒श्वऽच॑र्षणिः । अर्व॑त्ऽभिः । अ॒स्तु॒ । तरु॑ता ॥ विप्रे॑भिः । अ॒स्तु॒ । सनि॑ता ॥ ९ ॥

(३०९) जरा॑बोध॒ तद्वि॑विड्ढि वि॒शेवि॑शे य॒ज्ञिया॑य ॥ स्तोमं॑ रु॒द्राय॒ दृशी॑कम् ॥ १०, २३ ॥

(प०) जरा॑ऽबोध । तत् । वि॒वि॒ड्ढि॒ । वि॒शेऽवि॑शे । य॒ज्ञिया॑य ॥ स्तोम॑म् । रु॒द्राय॑ । दृशी॑कम् ॥ १०, २३ ॥

ऋग्भाष्यम्

क्षीराब्ध्यूर्मिसमीपस्थो मुक्त भोगविभागदः । यजमानाय सद्यश्च क्षरस्यखिल-मीप्सितम् । नित्यमुत्तमतेजस्त्वाच्चित्रभानुर्हरिः स्मृतः ॥ ६ ॥ यं मर्त्यं रक्षसि विभो यं युत्सुप्रेरयस्यपि । ज्ञानाज्ञानात्मकेष्वेव सङ्गता नित्यसत्सुखम् । भोगान्वा मुक्तिगान्नित्यानिह चेदुपचारतः ॥ ७ ॥ परिपूर्णोस्य नैवास्ति त्वदीयस्य तु कस्यचित् । भोगोपि बहुलो यस्माद्दित्सस्येव पुनः पुनः । सहंत्यः सन्ततबलः सहसः पुत्र एव वा । श्रवाय्यः श्रवणीयश्च सुप्रसिद्धतमोपि वा ॥ ८ ॥ वाजं तारयिताऽऽनेता सोर्वद्भिगो-समाश्रितः । [illegible] विपुलदानतः । युद्धस्य तारकोन्नस्य दाता भोगस्य

[illegible] रुता ज्ञानदोथवा ॥ ९ ॥ स्तुतिबोद्धा यतस्तां

[illegible] त्वा तत्फलं वेत्तेति कथ्यते । रुजां विद्रावकेशाय

[illegible] १०, २३ ॥

## ऋग्भाष्यटीका

विभक्तासि। क्षीराब्धि। हे चित्रभानो त्वम्। सिंधोः समुद्रस्योर्मौ। षष्ठ्यर्थे सप्तमी। जातावेकवचनम्। ऊर्मीणामुपाके। अन्तिकनामैतत्। स्थित इति शेषः। क्षीराब्ध्यूर्मिसमीपस्थः सन्नाविभक्ता विभागकर्ता मुक्तभोगविभागदोसि। दाशुषे यजमानाय। सद्य एवाविलम्बेन। क्षरसि नित्यं ददासि। अखिलमीप्सितमिति शेषः। चित्रभानुशब्दं हरौ निर्वक्ति। उत्तमेति। एतच्चोक्तस्मरणार्थम्॥ ६॥

यमग्ने। यं मर्त्यम्। हे अग्ने विभो त्वं यं मर्त्यम्। पृत्सु युत्सु अध्यात्मं ज्ञानाज्ञानात्मकेषु तत्कर्तृकेष्वेव युद्धेष्ववाः रक्षसि। यमपि यं च वाजेष्वन्नेषु जुनाः जुन गतौ। गमयसि प्रेरयसि। स एव मर्त्यः शश्वतीर्नित्या इषोन्नानि नित्यसत्सुखं मुक्तिगतं यन्ता। यमिरत्र गत्यर्थः। गन्ता। शश्वतीरिष इत्यस्य व्याख्यानान्तरं नित्यान् भोगान्वेति। कथं भोगानां नित्यत्वमित्यत उक्तम्। मुक्तिगानिति। अग्निविषये कथमिति चेत्। ऐहिकभोगविषयं व्याख्यास्यामः। कथमिह नित्यत्वमित्यत आह॥ इहेति। उपचारबीजं च बहुकालीनत्वम्॥ ७॥

नकिः। परिपूर्णः। सन्ततबलः सहंत्यः। सह इति बलनाम। त्य इति तनोतेर्ड्यः। सहसा बलेन त्यः सन्ततः सहंत्यः। सहः शब्दस्य मुमागमः। यद्वा सहयो वायोः पुत्र एवाग्निरिति सहंत्यः। त्य इत्यपत्यार्थे तद्धितः। हे सहंत्य अस्य यं मर्त्यमिति प्रकृतस्य। त्वदीयस्य तु कयस्य चित्कस्यचिच्छ्रवाय्यः श्रवणीयः। श्रुतिसुखकृत्सु प्रसिद्धतमोपि वा बहुलोपीति यावत्। वाजो भोगः। पर्येता पर्याप्तः। परिपूर्णो नकिर्नैवास्ति। महानपि भोगस्त्वद्भक्तानां परिपूर्णो न भवतीत्येतदुपपादयति॥ यस्मादिति। दित्ससि ददासि च। यतो महाभोगान्पुनः पुनस्तेभ्यो ददासि तस्मात्तेषां न कोपि भोगोन्तिम इति भावः। यद्वा यस्मात्पुनः पुनरित्यत्युच्चमोक्षभोगं ददासि तस्माद्बहुलोपि सांसारिको भोगस्तेषां न परिपूर्णस्तुच्छ एवेति॥ ८॥

सवाजम्। वाजं तारयिता। अग्ने स प्रकृतस्त्वदीय एव विश्वचर्षणिः सर्व प्रजाधिपो भूत्वा दानेन गवां बलीवर्दानां च समाप्तत्वात्। अर्वद्भिरश्वैर्वाजमन्नं तरुता तारयिता। तरतिरत्रानयत्यर्थे। आनेताऽस्तु भवेत्। त्वद्भक्तश्चक्रवर्तीभवतु। अर्थिभ्यो गाश्च ददातु। यथा गोदाने धान्यानयनादिकमश्वैरेव कुर्यात्तथेत्यभिप्रायः। किञ्च विप्रेभिः विप्रैः करणैः। सनिता दाताऽस्तु। कुतः विपुलदानतः तावद्विपुलदाता भवतु। यदेकस्य दातुमशक्तत्वेन विप्रान्करणी कुर्यादिति भावः। प्रकारान्तरेण व्याचष्टे। युद्धस्येति। स त्वादीयो विश्वचर्षणिर्भूत्वार्वद्भिरश्वैर्वाजं तरुता युद्धस्य तारकः पारगोस्तु। तथाविप्रेभिर्विप्रेभ्यो वाजं सनिता अन्नस्य भोगस्य वा दाता भवेदिति। प्रकारान्तरेण व्याख्याति। इन्द्रियैरिति। स त्वदीयो विश्वचर्षणि र्बहुशिष्योऽर्वद्भिरिन्द्रियैस्त्वद्विषयैर्वाजं तमसागुणेन सह यद्युद्धं तस्य। तरुतास्तु। तथा विप्रेभ्यः सनिता ज्ञानदोस्त्वित्यथवार्थः॥ ९॥

(ऋग्भाष्यटीका)

जराबोध। स्तुतिबोद्धा। जरतिः स्तुत्यर्थः। जरां स्तुतिम्। बुध्यत इति जराबोधः। हे जराबोध यतस्त्वं जराबोधः स्तुतिबोद्धा। तत्तस्माद्रुद्राय रुजां विद्रावकायेशाय विष्णवे तुभ्यम्। दृशीकं स्तोमं प्रत्यक्षामुच्चैः क्रियमाणां तां स्तुतिम्। विविड्ढि विशेषेण विद्धि। सर्वदावधारय। त्वद्विषयामिमां स्तुतिं त्वमेवावधारयेत्यर्थः। ननु परमेश्वरः सर्वज्ञः तत्कथं विशिष्यस्तुति बोद्धा कथ्यते कथं च नित्यज्ञानो विविड्ढीति प्रार्थ्यत इत्यत आह। नित्येति। सर्वज्ञोपीत्यपि ग्राह्यम्। तत्फलं स्तुतिफलम्। वेत्ता स्तुतेः। विद्धीति प्रार्थ्यते चेत्यपि द्रष्टव्यम्। किमर्थम्। यज्ञियाय यज्ञे भवाय। विशेविशे सर्वस्मै जनाय तत्प्रयोजनसिद्धये। प्रसिद्धाग्नौ व्याख्याति। तववेति। अनेन रुद्रपदमत्राग्निविषयम् अन्यत्समानमित्युक्तं भवति। ईशायेति वदता शिवोप्यत्र रुद्र इति सूचितम्। अत्रेतिहासो भवति। अग्निः स्तूयमानः शुनःशेपमुवाच रुद्रं स्तुहि रौद्रा हि पशव इति। स तं प्रत्युवाच। नाहं जानामि रुद्रं स्तोतुम्। त्वमेवैनं स्तुहीति। तदिदमुच्यते जराबोधेति। हे जराबोध रुद्र स्तुतिवेत्तस्तत्तस्मादेव यज्ञियाय विशेविशे आदरार्थं द्विर्वचनम्। मह्यमिति यावत्। रुद्राय रुद्रस्य स्तोमं त्वमेव विविड्ढि कुर्विति यावत्॥ १०, २३॥

## मन्त्रार्थमञ्जरी

(हे) चित्रभानो, निरुक्तं प्राक् 'इन्द्रा याहि चित्रभानो' इत्यत्र। (त्वम्) सिन्धोः, समुद्रस्य। ऊर्मौ, षष्ठ्यर्थे सप्तमी, जातावेकवचनम्, ऊर्मीणाम्। उपाके, अन्तिकनामैतत् (वै० नि० २।१६) समीपे (स्थितः) इति शेषः, क्षीराब्ध्यूर्मिसमीपस्थः सन्। आ विभक्ता, विभागकर्ता, मुक्तभोगविभागदः। असि। दाशुषे, यजमानाय। सद्यः, सद्य एवाविलम्बेन। क्षरसि, नित्यं ददासि। (अखिलमभीप्सितम्) इति शेषः॥ ६॥

(हे) अग्ने, विष्णो। (त्वम्) यम् मर्त्यम्। पृत्सु, पृतनायाः पृत्, पृतनाकर्तृकेषु युद्धेषु, अध्यात्मम्– ज्ञानाज्ञानात्मकेषु युद्धेषु। अवाः, रक्षसि। यम् (च) वाजेषु, अन्नेषु। जुनाः, 'जुन गतौ' इत्यतोऽन्तर्णीतण्यर्थाल्लडर्थे लेट्, 'लेटोऽडाटौ' इत्यडागमे 'इतश्च लोपः' इति सिप इकारलोपे रुत्वविसर्गौ, गमयसि, प्रेरयसि। सः, स एव मर्त्यः। शश्वतीः, शाश्वतीः, नित्याः। इषः, अन्नानि, नित्यसत्सुखम्, नित्यान्भोगान्वा। यन्ता, गन्ता, यमिः अत्र गत्यर्थः। मुक्तिफलं प्राप्नोतीत्यर्थः। प्रसिद्धाग्निपक्षे तु बहुकालीनैहिकभोगावाप्तिर्ज्ञेया॥ ७॥

(हे) सहंत्य, सहसा बलेन तत, तनोतेः ड्यः पूर्वस्य मुमागमोऽन्त्यलोपश्च, सहसो वायोः पुत्रेति वा, अपत्यार्थे त्यः, पूर्ववद्रूपम्, अग्ने। अस्य, 'यं मर्त्यम्' इति प्रकृतस्य। त्वदीयस्य कयस्य चित्, कस्य चित्। श्रवाय्यः, श्रवणीयः, श्रुतिसुखकृत्, सुप्रसिद्धतमोऽपि वा, बहुलोऽपीति यावत्।

वाजः, भोगः । पर्येता, पर्याप्तः, परिपूर्णः । नकिः, न । अस्ति, महानपि भोगस्त्वद्भक्तानां परिपूर्णो न भवति, उपर्युपरि यथेष्टं भोगविशेषं ददासीति वा, 'महाफलमोक्षरूपं पुमर्थं ददासीति कृत्वा बहुलोऽप्यैहिको भोगो न परिपूर्णः, तेषां तुच्छ एव' इति भावः ॥ ८ ॥

(हे अग्ने) । सः, प्रकृतः । त्वदीय एव विश्वचर्षणिः, विश्वाश्चर्षणयः प्रजा अस्य स तथा, सर्वाधिपो भूत्वा । दानेन (गवाम्) बलीवर्दानाम् । समाप्तत्वात् अर्वद्भिः, अश्वैः । वाजम्, अन्नम् तरुता, तारयिता, तरतिः अत्रानयत्यर्थे, आनेता । अस्तु, भवेत्, त्वद्भक्तश्चक्रवर्ती भवतु, अर्थिभ्यो गाश्च ददातु, यथा गोदाने धान्यानयनादिकमश्वैरेव कुर्यात्तथेत्यभिप्रायः ॥ किं च, विप्रेभिः, विप्रैः करणैः । सनिता, 'षणु दाने' दाता । अस्तु, यदैकस्य दातुमशक्तत्वेन विप्रान्करणीकुर्यात्तावद्विपुलदाता भवत्विति भावः । यद्वा– (हे अग्ने) सः, त्वदीयः । विश्वचर्षणिः (भूत्वा) अर्वद्भिः, अश्वैः । वाजम् तरुता, युद्धस्य तारकः, पारगः । अस्तु । तथा विप्रेभिः, विप्रेभ्यः । (वाजम्) सनिता, अन्नस्य भोगस्य वा दाता । अस्तु, भवेत् इति । अथ वा सः, त्वदीयो भक्तः । विश्वचर्षणिः, बहुशिष्यः । अर्वद्भिः, इन्द्रियैस्त्वद्विषयैः । वाजम्, तमोगुणेन सह यद्युद्धं तस्य । तरुता अस्तु । तथा विप्रेभिः । सनिता, ज्ञानदः । अस्तु इत्यर्थः ॥ ९ ॥

(हे) जराबोध, जरां स्तुतिं बुद्ध्यत इति जराबोध, स्तुतिबोद्धः, हेतुगर्भम् । तत्, स्तुतिबोद्धृत्वात् । रुद्राय, रुजां द्रावकाय, विष्णवे तुभ्यम् । प्रसिद्धाग्निपक्षे तु– रुद्राय, प्रसिद्धाग्नये तुभ्यम् । दृशीकम्, प्रत्यक्षम्, दृशेः कर्मणीकक् (कीकच्), उच्चैः क्रियमाणम् । स्तोमम्, स्तुतिम् । विविड्ढि, विशेषेण विद्धि, सर्वदाऽवधारय, त्वद्विषयामिमां स्तुतिं त्वमवधारयेत्यर्थः । किमर्थम् ? यज्ञियाय, यज्ञे भवाय, यज्ञशब्दाद्धः । विशेविशे, सर्वस्मै जनाय, तत्प्रयोजनसिद्धये । 'विविड्ढि' इत्यन्वयः । अत्रेतिहासो भवति शुनः शेपेन स्तूयमानोऽग्निस्तमुवाच, रुद्रं स्तुहि रौद्रा हि पशव इति । स तं प्रत्युवाच, नाहं जानामि रुद्रं स्तोतुं त्वमेव स्तुहीति । तदिदमुच्यते जराबोधेति । (हे) जराबोध, रुद्रस्तुतिबोद्धः, हे अग्ने । तत् । यज्ञियाय, यज्ञे भवाय । विशेविशे, द्विरुक्तिरादरार्था, मह्यं जनायेति यावत् । रुद्राय, रुद्रस्य । दृशीकम् स्तोमम् । त्वमेव- विविड्ढि, कुर्विति यावत् ॥ १० ॥
इति त्रयोविंशो वर्गः ॥ २३ ॥

## रूपावतारः

विभक्तासि ॥ क्षरसीति । दानार्थात् क्षरतेः शपि सिपि क्षरसीति रूपम् ॥ ६ ॥

(रूपावतारः)

यमग्ने ॥ अवा इति । अवतेर्लोटः सिपि इतो लोपे 'लेटोऽडाटौ' (३।४।९४) इत्याडागमे रुत्वे विसर्गे च अवाः इति रूपम् । जुनगताविति । अस्माल्लेटः सिपि इतो लोपे आडागमे च जुनाः इति रूपम् ॥ ७ ॥

न किरस्य ॥ मुमागम इति । सलोपश्चेत्यपि ग्राह्यम् । नैवास्तीति । अन्तिमो न भवतीत्यर्थः । लोके हि स्वाश्रितेभ्यः प्रभुणा प्रतिदिनं दीयमानं नान्त्यं स्वल्पत्वात् । किं तु श्रवणीयं बहुलं वित्तं दीयते चेत् तद्वित्तमन्त्यं भवति । तत्प्राप्यनन्तरमाश्रिताः प्रभुं विहाय स्वदेशं ऋच्छन्तीति दर्शनात् । प्रकृते च श्रवणीयं बहुलं त्वया दीयमानमपि भक्तस्यान्तिमं दानं न भवतीति भावः । दित्ससीति । दाञःस्वार्थे सनि सिपि द्वित्वे 'अत्र लोपोऽभ्यासस्य' (७।४।५८) इति अभ्यासलोपे 'सनि मीमाघुरभलभराशकपतपदामच इस्' (७।४।४१) इति अकारान्तस्य इसादेशे 'सःस्यार्धधातुके' (७।४।४१। इति सकारस्य तकारे दित्ससीति रूपम् ॥ ८ ॥

स वाजम् ॥ तरुतेति । तरतेस्तृन्प्रत्यये इडागमेगुणे 'ग्रसितस्कभितस्तभितोत्तभितचत्त-विकस्ताविशस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च' (७।२।३४) इति सूत्रेण तरुतृ इत्यस्य निपातनात् इकारस्योकारादेशे तरुतेति रूपम् । वाजं तरुतेति । ''न लोकाव्यय.....'' (२।३।६९) इति षष्ठीनिषेधात् कर्मणि वाजमिति द्वितीयेति भावः ॥ ९ ॥

जराबोध ॥ विविड्ढीति । विपूर्वात् विदेः लोटः सिपो हित्वे शपो लुकि 'हुझल्भ्योहेर्धिः' (६।४।१०१) इति हेर्धीत्यादेशे छान्दसे धकारस्य ढकारे ष्टुत्वे विविड्ढीति रूपम् ॥ १० ॥ २३ ॥

## पदार्थप्रकाशिका

विभक्तासिचित्रभानो । जातावेकवचनमिति । सप्तम्येकवचनस्य षष्ट्येकवचनार्थत्वेन षष्ट्येकवचनसमुदायापेक्षयेत्यर्थः । एतत्तु उपाक इत्येतत्तु । क्षीराब्ध्यूर्मिसमीपशब्देन श्वेतद्वीपो ग्राह्यः। तत्रस्थः तत्रस्थः सन्नित्यर्थः । आविभक्तेति । तत्तारतम्यानुसारेण सम्यग्विभज्य मुक्तभोगदा-तासीत्यर्थः । नन्विद्रायाहि चित्रभानो इत्यत्र चित्रं भद्रं चितो । चिद्रतेश्चादनीयत्वाददनाद्वाचितो भिदा । तादृशा रश्मयो ज्ञानमस्येति भगवान् परः । चित्रभानुरिति प्रोक्ताः तेजो वा तादृशं विभोरिति चित्रभानुशब्दस्य पूर्वं निरुक्तत्वात्तदपेक्षयात्रार्थान्तरकथनस्यादर्शनाद्व्यर्थमिदं निर्वचनकरणं भाष्ये इत्यत आह । एतच्चेति । उक्तस्मरणमेव प्रयोजनमिति न वैय्यर्थ्यमिति भावः ॥६॥

(पदार्थप्रकाशिका)

यमग्नेपृत्सुमर्त्यम् । रक्षसीति ज्ञानाज्ञानयोर्युद्धे प्रसक्ते ज्ञानं दत्वाऽज्ञानं विनाश्य यं सज्जनं रक्षतीत्यर्थः । शश्वतीरिति वक्तव्ये शाश्वतीरिति आङोऽभावः छान्दसो द्रष्टव्यः । नित्यसत्सुखमिति । सुखस्यापि भोग्यत्वेनान्नत्वादिति द्रष्टव्यम् । ननु यम उपरम यमधातोः उपरमार्थत्वात्कथं गन्तेति व्याख्यानमित्यत आह । यमिरत्र गत्यर्थ इति । धातूनामनेकार्थत्वादिति भावः । इहचेदुपचारत इति वाक्यमवतारयितुं शङ्कते । अग्निविषये कथमिति । हे अग्ने यं मर्त्यं पृत्सु अवाः यं च वाजेषु जुनाः समर्त्यः शाश्वतीरिषो मुक्तिगतं नित्यसत्सुखं नित्यं मुक्तिगान् भोगान्वयन्तेति व्याख्यानस्याग्निविषये असम्भवादिति भावः । उत्तरमाह । ऐहिकेति । मुक्तिसुखं मुक्तिगभोगविषयतया न व्याख्यायते । किन्नामाधिकं सुखं च ऐहिकविषयतयैवातो नानुपपत्तिरिति भावः । पुनः शङ्कते । कथमिहेति । यद्यैहिकभोगविषयतया व्याख्यानं तर्हि इह ऐहिकभोगादौ शाश्वतीरिति पदोक्तं नित्यत्वं कथमुपपन्नमित्यर्थः । बहुकालीनत्वमिति । ऐहिकभोगानामपि बहुकालीनत्वादिति भावः ॥ ७ ॥

नकिरस्य सहंत्य । तद्व्याख्यानमुपपादयति सह इतीत्यादिना । तनोतेर्ड इति । तनु विस्तारे अस्मात् डप्रत्यये डित्वाट्टिभूतस्य न इत्यस्य लोपे त्येति रूपम् । इत्यस्यार्थः संतत इति । सम्यग्व्याप्त इत्यर्थः । तर्हि सहत्य इति स्यात् सहंत्य इति कथं इत्यत आह । सहःशब्दस्येति । अलोंत्यस्येति परिभाषया सहः शब्दांत्यहकारोपरि मुमागमः संयोगांतस्य लोप इति सहस्शब्दांत्यसकारलोपो द्रष्टव्यः । ननु वायोः पुत्रेत्ययं कथं सहंत्यशब्दार्थ इत्यत आह । त्य इतीति । तथाच वायुवाचिनः सहः शब्दादपत्यार्थे त्यप्रत्यये यकारलोपे मुमागमे सहंत्येति रूपमिति भावः । तद्धिता इति सूत्रे बहुवचनस्यानुक्तप्रत्ययसङ्ग्राह- कत्वादिति द्रष्टव्यम् । भाष्ये तुशब्दः प्रकृतत्वानुसंधानार्थ इत्याशयेन प्रकृतत्वं दर्शयति । यं मर्त्यमितीति । कस्यचिदिति । लोकविलक्षणस्येत्यर्थः भगवद्भक्तस्य लोकविलक्षणत्वादिति भावः । परिपूर्णः समाप्तः कोपि भागः पर्याप्तो नेत्यस्य फलितमर्थं वदन् उत्तरवाक्यमवतारयति । महानपीति । अन्तिमोंतेभवः । यदि भोगः समाप्तः स्यात्तर्ह्येव कश्चन भोगोंतिमः स्यान्नचैवम् । एकैकभोगस्य समाप्त्यनन्तरं पुनः पुनः परस्य दानादिति भावः । अत्युच्चेति । सांसारिकभोगापेक्षया अत्युच्चेत्यर्थः । तुच्छ एवेति । त्वदीयस्य भक्तस्य वायोः बहुलोपि वाजः सांसारिकोपभोगः पर्येता परिपूर्णः । अनेनैवालमित्यलं बुध्यापादको नैव अत्युच्यमोक्ष-भोगदानेन सांसारिकभोगस्य तदपेक्षया तुच्छत्वादिति भावः ॥ ८ ॥

सवाजं विश्वचर्षणिः । त्वदीय एवेति । त्वद्भक्त एवेत्यर्थः । भाष्ये गोसमाप्तित इत्युक्तम् । तत्र निमित्तमाह । दानेनेति । अन्नम् अत इति व्युत्पत्या । अन्नं धान्यादि । ननु तृ(ञ्) प्लवनतरणयोरिति

(पदार्थप्रकाशिका)

धातोः तरतेः प्लवनार्थत्वात्कथमानेतेति व्याख्यानमित्यत आह। तरतिरत्रेति। अर्धर्चतात्पर्यमाह। त्वद्भक्त इत्यादिना विश्वचर्षिणिरित्यस्य तात्पर्यं चक्रवर्तीत्यादिना । अर्वद्भिरस्तुततेत्यस्य तात्पर्यमाह। अर्थिभ्य इति। नन्वद्भिस्तरुतास्त्वित्यनेन गाः ददात्विति गोदानं कथं लभ्यत इत्यत आह। यथा गोदानेति। सदानेसति इत्यर्थः। अत्र धान्यानयनादिकम् अश्वैः कुर्यादित्युच्यते। इदं च मुख्यतो धान्यानयनसधनानां गवां दानेन समाप्तिं विना न सम्भवतीत्यर्थाद्गोदानं लभ्यत इति भावः। तथैवभवेत्। करणीकुर्यात्। दान इति शेषः। इन्द्रियैरिति। तज्जन्यैः समीचीनज्ञानैरिति यावत्। तमसा गुणेनेति। तत्कार्यज्ञानादिनेत्यर्थः। यद्वा इन्द्रियैः सत्वगुणाभिध्यनन्तरं तमोगुणेन सह यद्युद्धं तस्य तरुतापारगोस्तु पश्चात्तमो गुणनाशानन्तरं विप्रेभ्यो ज्ञानाधिकारिभ्यः सत्वगुणकार्यं ज्ञानदोऽस्त्वित्यर्थः॥ ९॥

जराबोधतद्विविड्ढि। रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन इति प्रमाणं हृदि निधाय प्रवृत्ते रुजां विद्रावकेशायेति भाष्ये कर्मधारयो विवक्षितो न षष्ठीतत्पुरुष इति भावेनाह। रुजांविद्रावकेशायेति। कथ्यत इति। जराबोधपदेनेत्यर्थः। सर्वज्ञोपीत्यादि। सर्वज्ञोपि स्तुति फलवेत्तृत्वाद्विशिष्य स्तुतिवतेति कथ्यते। तथा नित्यज्ञानोपि स्तुतिफलवत्वादेदवविविड्ढीति प्रार्थ्यते चेत्यर्थः। किमर्थमिति। तस्य स्तुतिफलवेत्तृत्वेपि तव तत्प्रार्थनं किमर्थमित्यर्थः। यज्ञे भवायेति। तथाच यज्ञशब्दात् भवार्थे रप्रत्यये तस्येयादेशे यस्येति चेति भस्याकारस्य लोपे यज्ञियायेति भवतीति द्रष्टव्यम्। प्रयोजनसिद्ध्य इति। तथाच मया मत्प्रयोजनसिध्यर्थं मत्स्तुति श्रोतृणां यज्ञे विद्यमानानां च प्रयोजनसिध्यर्थं स्तुतेः क्रियमाणत्वात्। तव च तत्फलवे तृत्वात्तद्देहीत्याशयेन प्रार्थ्यत इति भावः। अन्यदिति। जराबोधेत्यादिकमित्यर्थः। हे जराबोधाग्ने यस्मात्वं जराबोधः तस्माद्रुद्रायाग्नये तुभ्यं क्रियमाणां स्तुतिं जनानां प्रयोजनसिद्धये विविड्ढीति प्रयोजनं समानमित्यर्थः। वदतेति भाष्ये करणेनेत्यर्थः। अत्रेतिहासो भवतीति। पुराणसिद्धमेत दित्यर्थः। रौद्रा हीति। रुद्रदेवताका इत्यर्थः। तथाच पशूनां रुद्रदेवताकत्वात्तवापि यज्ञे पशुत्वेन यूपे बद्धत्वेन रुद्रदेवताकत्वान्मोचनार्थं रुद्रमेव स्तुहीति भावः। सतं प्रत्युवाचेति। स शुनः शेपो अग्निं प्रत्युवाचेत्यर्थः। तदिदमुच्यत इति। इतिहासत्वमेव तं स्तुहीति शुनःशेपेनाग्निं प्रति उक्तमेव प्रमेयं जराबोधेति ऋचोच्यत इत्यर्थः। रुद्रस्तुतिवेत्तरिति। हे अग्ने इति विशेष्याध्याहारः कार्यः। तस्मादेव रुद्रस्तुतिवेत्तृत्वादेव। मह्यमिति। यज्ञे भवाय अविशेज्जनाय मह्यम्। यज्ञे यूपे बद्धस्य मम तन्मोक्षरूपप्रयोजनसिध्यर्थमित्यर्थः॥ २३॥

## पदार्थदीपिका

अवा इति ।। लङ्यम् । अवाः आवत्यकाराकारयोर्विपर्ययः । यद्वा लेटि लेटोडाटावित्याडागमः इतश्चेति सिप् इकारलोप इति भावः ।। जुन् गताविति ।। सौत्रोऽयं धातुः । लेटः सिप् आडागमः । इतश्चेतीकारलोपः । रुत्वविसर्गाविति भावः । यद्वा लङ् सिप् । क्र्यादिभ्यः श्ना । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभाव इति भावः ।। ७ ।।

तनोतेर्ड्यं इति ।। तनोतीति त्यः । तनोतेर्ड्यप्रत्यये डित्वात् टिलोपे त्य इति रूपसिद्धिरित्यर्थः ।। मुमागम इति ।। उपलक्षणं चैतत् । सहस् शब्दान्त्य सकारलोपश्चेति द्रष्टव्यम् ।। अपत्यार्थ इति ।। तद्धिता इति सूत्रेणेति शेषः । पूर्ववन्नुमागमांत्यलोपाविति भावः ।। कयस्येति ।। प्रकारोपजनश्छान्दस इति भावः ।। श्रवाय्य इति ।। श्रुदक्षिस्पृहिगृहिभ्य आय्य इत्याय्यप्रत्यय इति भावः ।। नकिर्नैवेति ।। नकिर्माकिस्मसीत्यादिना प्रोक्ताधिक्यविवक्षया युक्तिरिति भावः ।। ८ ।।

अर्वद्भिरश्वैरिति ।। ऋगतौ । अन्येभ्योऽपि वनिप् । भिसि अर्वणस्त्रसावनञ इति नकारस्य तृ इत्त्ययमादेश इति भावः ।। तरुतेति ।। तॄप्लवन तरणयोः । अस्मात् तृन्नंत तरुतृशब्दो ग्रसित स्कभितेत्यादौ निपातितः । निपातनादेवेकारस्योत्वमिति भावः । यदि तॄप्लवन तरणयोरित्यस्येदं रूपं कथं तर्हि आनेतेति भाष्यकारेण व्याख्यातमित्यत आह ।। अत्रानयत्यर्थे इति ।। अनेकार्थत्वाद्धातूनामिति भावः ।। ९ ।।

जरतिः स्तुत्यर्थ इति ।। जरा स्तुतिः ।। जरतेः स्तुतिकर्मणो यास्केन व्याख्यातत्वादिति भावः ।। जरामिति ।। जॄष् वयो हानौ इत्यस्मात् षिद्भिदादिभ्यो ङित्यङ् प्रत्ययः । ततष्टाबिति भावः ।। बुध्यत इतीति ।। बुध इत्यस्मात् बाहुलकात् कर्तर्यपियकि लघूपध गुण इति भावः ।। दृशीकमिति ।। अनिहृशिभ्यो किच्चेति सूत्रेण अनिहृषिभ्यामेव किदीकन् प्रत्यय विधानेऽपि बाहुलकात् दृशेरिति कीकन् प्रत्यय इति भावः ।। विविड्ढीति ।। विश प्रवेशने अस्मात् लोटि बहुलं छन्दसीति शपः श्लुः ।

अभ्यासहलादिशेषौ । हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः । तस्य छान्दसं ढत्वम् । ष्टुत्वम् । धातोश्चानर्थकत्वमिति भावः । यद्वा विष्लृ-व्याप्तावित्यस्माल्लोण्मध्यमैकवचने अभ्यासस्य गुणाभाव इति बोध्यम् । यद्वा विदज्ञाने इत्यतो लोटः सिपो हिरादेशः । शपः श्लौ द्वित्वादौ दस्य ढत्वे च बाहुलकाज्ज्ञातेर्हेर्धीत्यादेशे ष्टुत्वे च विविड्ढीति रूपमिति ज्ञेयम् ।। यज्ञे भवायेति ।। यज्ञर्त्विग्भ्यां घखञाविति यज्ञशब्दात् घ प्रत्यय इति भावः ।। १०, २३ ।।

## टीकाविवृतिः

विभक्तासि ।। जाताविति ।। समुदाये इत्यर्थः ।। अन्तिकेति ।। आके उपाके इत्यन्तिकनामसु पाठादिति भावः ।। मुक्तभोगेति ।। मुक्तानां भोगविशेषं तारतम्येन दातेत्यर्थः ।। इन्द्रायाहि चित्रभानो इत्येतद्व्याख्यावसरेव्याख्यातत्वात्पुनरुक्तमेतदित्यत आह ।। एतच्चेति ।। पूर्वोक्तस्मरणार्थ-त्वान्नायं दोष इति भावः ।। ६ ।।

यमग्ने ।। पृत्स्विति ।। पृत्सु समत्स्विति संग्रामनामसु पाठादिति भावः ।। तत्कर्तृकेष्विति ।। ज्ञानाज्ञानकर्तृकेष्वित्यर्थः ।। अवा इति ।। अवतेर्लेटि सिपि लेटोडाटावित्याडागमे इतश्चलोप इतीकार लोपे रुत्वविसर्गा विति भावः । लेट्चात्र छान्दसत्वाल्लडर्थ इति भावेनाह ।। रक्षसीति ।। जुन गताविति ।। अत्रापि पूर्ववल्लेड्रूपत्वंज्ञेयम् । अस्य तुदादित्वाच्छे तस्य ङित्वान्नोपधागुण इति भावः ।। कथमिहेति ।। ऐहिकभोगे इत्यर्थः ।। उपचारबीजमिति ।। ऐहिकभोगे शश्वतीरिति शब्दस्य गौण्या वृत्त्या प्रयोगे कारणमित्यर्थः ।। बहुकालीनत्वमिति ।। कालशब्दाद्भवार्थे शेषाधिकारोक्तेन कालाट्ठञित्यनेन युष्मदस्मदोरन्यतरस्यांखञ्चेत्यतो मण्डूकप्लुत्या संबंधानुवृत्तिपक्षेण वा खञनुवृत्तेःखञि खस्येनादेशे आदिवृद्धौ पश्चाद्बहुशब्देन समासेपि सविशेषण इति न्यायेन बहुशब्दस्य कालेनान्वय इति भावः ।। ७ ।।

नकिरस्य ।। बलनामेति ।। शूषंसह इति बलनामसु पाठादिति भावः ।। ड्य इति ।। उणादयो बहुलमित्युक्तेरिति भावः ।। सहश्शब्दस्येति ।। उपलक्षणमेतत् । निरुक्तत्वादंत्यसलोपोपिग्राह्यः ।। वायोःपुत्र एवेति ।। वायोरग्निरिति श्रुतेरिति भावः ।। त्यइतीति ।। तद्धिता इति बहुवचनादिति भावः ।। अस्येति ।। इदमो ङसि इदमोन्वादेशेऽशनुदात्तस्तृतीयादावित्यनुदात्तेऽऽशादेशेस्य शब्दस्य सुस्वादनुदात्तसर्वानुदात्तमस्येति पदम् । अन्वादेशस्योक्तस्य पुनरुक्तिरूपत्वात्पूर्वत्रऋक्प्रकृतार्थ परामर्शकमिति भावेनाह ।। अस्य यं मर्त्यमिति प्रकृतस्येति ।। कयस्येतिय शब्दआधिक्येऽधिकमिति सूत्राद्विशेषार्थ इति भावेनाह ।। त्वदीयस्य त्विति ।। श्रवाय्य इति ।। श्रुदक्षिस्पृहिगृहिभ्य आय्य इत्यनेन श्रुइत्यत आय्यप्रत्यय इति भावः ।। पर्येतेति ।। परिपूर्वादिणस्तृच्प्रत्यय इति भावः । भाष्ये दित्ससीति स्वार्थे सन्निति भावेनाह ।। ददासीति ।। तात्पर्यार्थो वा ।। सांसारिकभोगस्य दुःखसंभिन्नत्वान्नमाहात्म्यातिशय इत्यत आह ।। यद्वेति ।। ८ ।।

सवाजम् ।। प्रकृत इति ।। यमग्ने पृत्सु मर्त्यमित्यत्रेति शेषः । विश्वाश्चर्षणयो यस्य स्म इति षष्ठ्यर्थे बहुव्रीहिः । षष्ठ्यर्थश्च स्वस्वामिभाव इति भावेनाह ।। सर्वप्रजाधिप इति ।। दानेनेति ।।

(टीकाविवृतिः)

गोमिथुनदानेनेत्यर्थः ।। वाजमन्नमिति ।। धान्यरूपमामान्नमित्यर्थः ।। तरुतेति ।। तरतेस्तत्साधुकारित्वार्थे तृनि सार्वधातुकलक्षणे गुणे इडागमे तस्येटस्तृतीयोतिशये इत्युकारादेश इति भावः ।। करणीकुर्यादिति ।। सहायान्कुर्यादित्यर्थः । वाजशब्दस्यान्ननामसु संग्रामनामस्वपि पाठादाह । वाजं तरुता युद्धस्य तारकः । तरुतेत्यस्य तृन्नंतत्वात्तद्योगे षष्ठीनिषेधाद्वाजमिति द्वितीयेति भावः ।। अर्वद्भिरिंद्रियैरिति ।। इन्द्रियाणि हयानाहुरित्युक्तेर्हयार्थस्यार्वच्छब्दस्येन्द्रियार्थत्वं बोद्धव्यम् ।। विप्रेभ्य इति ।। शिष्येभ्य इत्यर्थः ।। ९ ।।

जराबोध ।। जरतिस्तुत्यर्थ इति ।। जरतेर्ह्वयतेस्तौतीत्यादीनामर्चति- कर्मसु पाठाज्जरिता कारुरिति स्तोतृनामसु पाठाच्चेति भावः ।। रुजामिति ।। रुज्शब्दजकारस्य दकारःद्रुधातोर्डप्रत्यय उणादयो बहुलमित्युक्तेरुद्रशब्द निष्पत्तिरिति भावः ।। स्तोममिति ।। अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदिय क्षिनीभ्यो मन्निति स्तौतेर्मन्प्रत्यय इति भावः ।। विविड्ढीति ।। लुग्विकरणात् विद ज्ञाने इत्यतो लोटि सिपो ह्यादेशे व्यत्ययेन शपः श्लौ द्वित्वादौ दस्य ढत्वे च हेर्धत्वष्टुत्वे इति भावः । व्यत्ययस्यार्थमाह ।। विशेषेणेति ।। वेत्तेत्युक्तेस्तदुपयोगिपदमध्याहरति ।। सर्वज्ञोपीति ।। नित्यज्ञानोपीत्युक्तोपयोगायाह ।। विद्धीति प्रार्थ्यते चेतीति ।। तथा च सर्वज्ञोपि स्तुतिफलदानाज्जराबोधेत्युच्यते । तथा नित्यज्ञानोपि स्तुतिफलं दातुं स्तोमं विविड्ढीति प्रार्थ्यते इति भावः । यज्ञियायेत्यत्र यज्ञमर्हतीत्यर्थे यज्ञर्त्विग्भ्यां घखञाविति घप्रत्यये घस्यायन्नादिसूत्रेणे यादेश इति भावेनाह ।। यज्ञे भवायेति ।। यज्ञे योग्यायेत्यर्थः । विशे विशे इत्यत्र जन्तवःविश इति मनुष्यनामसु पाठात् शकारान्तविश्शब्दात्तादर्थ्ये चतुर्थ्येकवचने वीप्सायां द्वित्वमिति भावेनाह ।। सर्वस्मै जनायेति ।। तात्पर्यमाह ।। तत्प्रयोजनसिद्धये इति ।। यजमानप्रयोजनसिद्धये इत्यर्थः । अस्य स्तोमं विविड्ढीत्यनेनान्वयो ज्ञेयः ।। अन्यत्समानमिति ।। तथा च हे जराबोध अग्ने । रुद्राय तुभ्यं रुग्द्रावकाय तुभ्यम् । स्तोमं विविड्ढीत्याद्यन्वयो ज्ञेय इति भावः । प्रकारान्तरेण ऋचं योजयितुमाह ।। ईशायेति वदतेति ।। अग्निसूक्ते कथं रुद्रप्रतिपादनमित्यत आह ।। अत्रेतिहास इति ।। पौराणिक इति शेषः ।। १० ।। १३ ।।

**ऋक्संहिता पदपाठसहिता** (सू-२७, व-३)

**(३१०) स नो॑ म॒हाँ अ॑निमा॒नो धू॒मके॑तुः पु॒रु॒श्च॒न्द्रः । धि॒ये वाजा॑य हिन्वतु ॥ ११ ॥**

(प०) सः । नः । महान् । अनिऽमानः । धूमऽकेतुः ॥ पुरुऽचन्द्रः ॥
धिये । वाजाय । हिन्वतु ॥ ११ ॥

(३११) स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥ १२ ॥

(प०) सः । रेवान्ऽइव । विश्पतिः । दैव्यः । केतुः । शृणोतु । नः ॥
उक्थैः । अग्निः । बृहत्ऽभानुः ॥ १२ ॥

(३१२) नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ॥
यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमा
वृक्षिदेवाः ॥ १३, २४, २७ ॥

(प०) नमः । महत्ऽभ्यः । नमः । अर्भकेभ्यः । नमः । युवऽभ्यः ।
नमः । आशिनेभ्यः ॥ यजाम । देवान् । यदि । शक्नवाम ।
मा । ज्यायसः । शंसम् । आ । वृक्षि । देवाः ॥१३,२४,२७॥

## ऋग्भाष्यम्

नितरामममितत्वेन महान्पुरु सुखश्च सः । धूत्करोति गरुत्मान्यद्धरेश्चेद्धूमकेतुता । ताच्छील्येम इति ह्यस्मात्सूत्राद्धूम इतीरितः । ज्ञानायान्नायच सनः प्रहिणोतु सुकर्मणाम् ॥ ११ ॥ देवानां केतुभूतोऽसौ वित्तवान्विश्पतिर्यथा । अस्मदीयानि चोक्थानि बृहत्तेजाः शृणोतु ॥ १२ ॥ अथ । नारायणब्रह्मपुरःसरास्तु देवा महांतः शिशवः स्कन्दपूर्वाः । वटुस्वरूपाश्च त एव कुत्रचिद्युवान इन्द्रादय एत एव । महत्त्वमेषां गुणतोपि यूनामिन्द्रादयो मध्यगुणा युवानः । आपेक्षिकाल्पैश्च गुणैस्तदीयैः समीरिता आशिना अर्भकाश्च । कृतं नमः शक्तिमन्तो यजाम न ज्यायसां स्तुतिमात्रं लुपामः । एकस्य विष्णोरपि रूपभेदा अणीयांसः संत्यथवा महान्तः । युवत्वसाम्येपि महत्त्वभेदाद्युवामहानित्यपि भेद उक्तः ॥ १३, २४, ८ ॥

## ऋग्भाष्यटीका

सनः । अनिमानशब्दार्थं वदंस्तस्य महच्छब्देन गतार्थतां वारयति । नितरामिति । यद्यपि नीतिमानशब्देन समस्तं तथापि सामर्थ्यान्नञर्थेन सम्बध्यते । महत्त्वं ह्यापेक्षिकं भवति अतो नितरामन्मानत्वेन तद्व्याख्यातमित्यर्थः । पुरुश्चन्द्रः चदेराह्लादनार्थत्वात्पुरुसुखः । पारस्करादित्वात्सुट् । स इति प्रसिद्धः । उत्तरत्र पुनः स इति श्रवणात् । यद्वा निमानत्वादिविधानेन भिन्नवाक्यार्थत्वाद्विः स इत्युक्तम् । तेन चशब्दश्च समर्थितः । धूमः केतुरस्येत्यग्नेर्धूमकेतुत्वं प्रसिद्धम् । हरेस्तु कथमित्यत आह ॥ धूत्करोतीति । हरेश्चेद्धूमकेतुता विवक्षिता तदा धूञ् कम्पन इत्यतः ताच्छील्ये म इत्यस्मात्सूत्रात्ताच्छील्य विशिष्टकर्तरि मप्रत्यये कृते यद्यस्माद्धूत्करोति तस्माद्गरुत्मान् धूम इतीरितः । स केतुरस्येति व्याख्यातव्यमित्यर्थः । स एवंभूतोग्निः नोऽस्मान् । धिये ज्ञानाय । वाजायान्नाय च हिन्वतु । सुकर्मणां करणे प्रहिणोतु । यैः कर्मभिर्धीमंतो वाजवन्तश्च स्याम (तत्र प्रेरयतु) ॥ ११ ॥

स रेवान् । देवानाम् । विश्पतिरिव राजा यथा तथा रेवान् वित्तवान् । दैव्यो देवसम्बन्धी केतुः देवानां केतुभूतोऽग्रगामित्वात् । बृहद्भानुः बृहत्तेजाः । सोऽसावग्निर्नोऽस्मदीयान्युक्थैः उक्थानि स्तोत्राणि च । शृणोतु ॥ १२ ॥

नमः । अथ । अथ देवाः स्तूयन्त इति शेषः । अत्र महदादि शब्दनिर्दिष्टान्देवानाह ॥ नारायणेति । वटुस्वरूपाश्चेत्यनेनाशिन शब्दो वटुवाचीत्युक्तम् । नम आवटुभ्य इति पुराणसमाख्यानात् । एत एव अर्भकत्वादिनैवोक्ता एव । स्कन्द पूर्वा इत्युक्तानेवेन्द्रादय इति परामृशति । कथमेकत्रैव त्रिप्रकारत्वमित्यत उक्तम् । कुत्रचिद्रूपविशेषे । एतदुक्तं भवति । नारायणादय इन्द्रान्ता अवान्तरपित्रादिसम्बन्धप्रसिद्धिशून्या महान्तः । शिवादि पित्रादि सम्बन्धवत्त्वेन प्रसिद्धाः स्कन्देन्द्रादयोर्भकाः । त एव रूपविशेषे युवान आशिनाश्चेति । एतेन नारायणादीनां सर्वेषामपि देवानां निर्जरत्वात्कथं महत्त्वमित्याशङ्काप्यपास्ता भवति । युवत्वेपि प्रकारभेदेन महत्त्वाद्युक्तेः । प्रकारान्तरेण यूनामपि नारायणादीनां महत्त्वं व्याख्याति । महत्त्वमिति । यूनामप्येषां महत्त्वं युज्यते यतो गुणतो महत्त्वमुच्यते न जरसेत्यर्थः । तर्हि वयः प्रकरणविरोधः स्यादित्यतो युवत्वादिकमपि गुणत एवेत्याह ॥ इन्द्रादय इति । त एव तदीयैः स्वैः स्वैरापेक्षिकाल्पैर्गुणैराशिना अर्भकाश्च समीरिताः । नारायणादिवदनंतगुणत्वस्य अस्मदादिवदत्यल्पगुणत्वस्य चाभावान्मध्यगुणत्वाद्युवान एवेन्द्रादयो ब्रह्मादीन्मध्य मगुणान्यूनोपेक्ष्याल्पगुणत्वादस्मदादिभ्योत्यल्पगुणेभ्योधिकगुणत्वादाशिनाः । नारायणादिभ्योत्यल्पगुणत्वादर्भका इति । एवं महदादि पदार्थानुक्त्वा पूर्वार्धवाक्यार्थमाह ॥ कृतमिति । महदादिभ्यो देवेभ्यो नमः अस्माभिर्नमस्कृतम् । उत्तरार्धं व्याख्याति । शक्तिमन्त इति । देवैर्यूपान्मोचिता वयं यदि शक्नवाम यजने शक्तिमन्तो भवाम तर्हि देवान्यजाम । शक्त्यभावेपि ज्यायसो ज्यायसां देवानाम् । शंसं शंसनं स्तुतिमात्रं मावृक्षि । व्रश्चू छेदन

ऋग्भाष्यटीका)

इत्यम्येदं रूपम्। न लुपामः। न लुप्तं करिष्यामो हे देवा इति। अस्त्वेवं महत्त्वादि व्याख्यानं यदा समस्ता देवा विवक्षिताः स्युः। यदा तु विष्णुरेक एव विवक्षितस्तदाकथमित्यत आह। एकस्येति। रूपभेदा रूपविशेषाः। वाशब्दान्मध्यमप्रकारद्वयोपेताः। ततः किमित्यत आह। युवत्वेति। महत्त्वभेदात् परिमाणभेदात्। अपिशब्देनार्भकाशिनयोः समुच्चयः॥ १३, २४॥

## मन्त्रार्थमञ्जरी

अनिमानः, मानं मर्यादा, मितिरिति यावत्, नितरां न विद्यते मानं मितिर्यस्य स इत्यनिमानः, हेतुगर्भमिदम्। नितराममितत्वात् – महान्। पुरुश्चन्द्रः, चन्देः आह्लादनार्थत्वात्पुरुसुखः, पारस्करादित्वात्सुट्। सः, प्रसिद्धः। धूमकेतुः, धूमः केतुर्यस्येति धूमकेतुः, विष्णुपक्षे 'धूञ् कम्पने' इत्यतस्ताच्छील्ये (ताच्छील्ये मः (म० व्या० सू०) इति) मप्रत्यये धूत्करोति पक्षवातादिना कम्पत इति धूमो गरुत्मान् केतुर्यस्येति ज्ञेयम्। स एवं भूतोऽग्निः। नः, अस्मान्। धिये, ज्ञानाय। वाजाय, अन्नाय। (च) हिन्वतु, प्रहिणोतु, यैः कर्मभिर्धीमन्तो वाजवन्तश्च स्याम तत्कर्मसु प्रेरयतु॥ ११॥

(रेवानिव विश्पतिः, विश्पतिरिव रेवान्) विश्पतिरिव राजेव रेवान्वित्तवान्। दैव्यः, देवसम्बन्धी। केतुः, देवानां केतुभूतः, अग्रगामित्वात्। बृहद्भानुः बृहत्तेजाः। सः, असौ। अग्निः। नः, अस्मदीयानि। उक्थैः, उक्थानि। (च) शृणोतु॥ १२॥

महद्भ्यः, देशकालगुणापरिच्छेदवद्भ्यो विष्णो रूपविशेषेभ्यः। नमः॥ अर्भकेभ्यः, लोकदृष्ट्यार्भकपरिमाणरूपविशेषेभ्यः। नमः। युवभ्यः, युवपरिमाणरूपविशेषेभ्यः। नमः। आशिनेभ्यः, वटुरूपविशेषेभ्यः। नमः। (हे) देवाः, क्रीडादिगुणसम्पूर्णा भगवन्तः। यूपान्मोचिताः। (वयम्) यदि। शक्नवाम, यजने शक्तिमन्तो भवेम। (तर्हि) देवान् यजाम। शक्त्यभावे ज्यायसः, ज्यायसां देवानां विष्णुरूपविशेषाणाम्। शंसम्, शंसनम्, स्तुतिमात्रम्। मा आ वृक्षि, 'ओव्रश्चू छेदने' कर्मणि लुङ्, चिण्, शकारचकारयोः ककारषकारौ, 'ग्रहिज्या' इति

लुम्पामः, लुप्तं न करिष्यामः, यद्वा– वृश्चतेः व्यत्ययेनात्मने

'स्वरति सूति' इतीडभावः, 'स्कोः संयोगाद्योर्'

सि' इति कत्वम्, 'आदेश प्रत्यययोः' इति षत्वम्, 'न

नारायणादीन्द्रान्तदेवेभ्यः। नमः। अर्भकेभ्यः,

देवेभ्यः। नमः। युवभ्यः, स्कन्देन्द्रादिदेवानामेव

वटुरूपेभ्यः। नमः। इत्यर्थः। उत्तरार्धं पूर्ववत्।

(मन्त्रार्थमञ्जरी)

देवपदेन नारायणादयः सर्वे देवा ग्राह्याः ॥ १३ ॥ इति चतुर्विंशो वर्गः ॥ २४ ॥ सप्तविंशं सूक्तम् ॥ २७ ॥

## रूपावतारः

सनः ॥ यद्यपीति । नीतिशब्दो मानमित्यनेन समस्त इति भातीत्यर्थः । सामर्थ्यात् । नञ् विशेषेण बोधकत्वसामर्थ्यादित्यर्थः । अत्र न विद्यते नितरां मानो यस्येति न विग्रहः । किंतु नितरां न विद्यते मानो यस्येति विग्रहः । नीत्यस्य परनिपातः छान्दस इति भावः । च शब्द इति । 'पुरुसुखश्च स' इति भाष्यस्थः चशब्द इत्यर्थः । तच्छील्येम इत्यस्मात् सूत्रादिति । ताच्छील्येम इति महाव्याकरणसूत्रस्य ताच्छील्यविशिष्टे मप्रत्ययो भवतीत्यर्थ इति भावः ॥ ११ ॥

स रेवान् ॥ विश्पतिरिवेति । यद्यपि रेवानिवेति एकमेव शाकल्यदृष्टं पदं तथापि रेवान् इवेति पदद्वयमपि भवति । एवं च इवशब्दस्य विश्पतिरित्यनेन संबन्ध इति भावेन भाष्यकृता विश्पतिर्यथेत्युक्तम् । तज्ज्ञापनाय टीकाकृता विश्पतिरेवेत्युक्तमिति बोध्यम् ॥ १२ ॥

नमः ॥ प्रकारभेदेनेति । अवान्तरापत्रादिसंबन्धप्रसिद्धिशून्यत्वतत्प्रसिद्धिमत्त्वरूपप्रकार-भेदेनेत्यर्थः । ओ व्रश्चूछेदन इत्यस्येदं रूपमिति । वृश्चतेर्माङ्योगाल्लुङि व्यत्ययेनोत्तमपुरुषैकवचने इटि च्लेः सिचि उदित्वेन वेट्त्वादिडभावे कारलोपे 'व्रश्चेति' चस्य षत्वे ''षढोः कः सि'' (८।२।४१) इति कत्वे 'आदेशप्रत्यययोः' (८।३।५२) इति सिचः षत्वे संप्रसारणे वृक्षीति रूपम् ॥ १३ ॥ २४ ॥ ८ ॥

## पदार्थप्रकाशिका

स नो महा अनिमानः । सामर्थ्यादिति । मितत्वापरपर्यायस्य मानत्वस्य भगवति प्रमाणसिद्धत्वेन तन्निषेधस्य बाधात् तस्मिन्नितरामित्येतदेव निषिध्यते । तथाच नितरामित्यस्यैव नञर्थेन सह सम्बन्धेऽर्थाबाधरूपयोग्यतासम्पत्तिरायातीत्यर्थः । इदमत्राकूतम् । यद्यत्र नञः प्रसज्यप्रतिषेधार्थत्वं तदा घटो नास्तीत्यादौ नञः क्रियान्वयदर्शनेन इतरपदेनासामर्थ्यत्वादसमर्थेन समासानुपपत्तिः । समर्थः पदविधिरिति स्मरणात् । तस्मात्पर्युदासार्थत्वमेव वाच्यम् । अत्रापि नञो निषेधप्रतियो-गिनैवान्वयोघटः पट इत्यादौ दृष्टः । तथाच प्रकृते यदा मानमित्यस्य निषेधप्रतियोगित्वमङ्गीकृत्य तेन सह नञोऽन्वयस्तदा प्रमितत्वतस्य प्रमाणसिद्धत्वेन निषेध्यत्वात् ते तस्मिन् नितरामित्येतदेव निषेधप्रतियोगीत्यङ्गीकृत्य नीत्येतदेव नञर्थेनान्वीयत इत्याशयेन प्रवृत्तं नितराममितत्वेनेति भाष्यं युक्तमिति ज्ञातव्यम् ।

(पदार्थप्रकाशिका)

नन्वत्र नञः प्रसज्यप्रतिषेधार्थत्वमेवास्तु। न चासामर्थ्येन समासानुपपत्तिः। यथा राजदाराः सूर्यं न पश्यन्तीति नञः क्रियान्वयेपि असूर्यं पश्याः राजदाराः अश्राद्धभोजी ब्राह्मणः इत्यादौ प्रतियोगिवाचकपदेन समासो दृष्टः एवमिहापि नियमो न भवतीति नञः क्रियान्वयेपि अनिमान इति प्रतियोगिवाचकपदेन समासो युक्त एवेति चेत्सत्यम्। प्रकारान्तरानुपपत्तावेवा-सामर्थ्यात्समासाश्रयणं कर्तव्यं। प्रकृते पर्युदासरूपप्रकारान्तरसद्भावान्नानुपपत्तिरिति। नन्वेतावता अनिमान इत्यस्य महानित्यनेन वक्तव्यम्। पुनरुक्तिपरिहार इत्यत आह। महत्वेहीति। एकापेक्षया एकं महदिति महत्वं सावधिकमित्यर्थः। तदिति। महत्त्वमित्यर्थः। ननु पुरुचन्द्र इति स्यात्। न तु पुरुश्चन्द्र इति तत्राह। पारस्करादित्वादिति। पारं करोतीति पारकरः प्रवाह इति भाव्ये पारस्करप्रभृतीनि चेति सूत्रेण सुडागमे पारस्करः इत्यादि भवति एवमिहापि पारस्करादेराकृति-गणत्वेन पुरुश्चन्द्र इति युक्तमिति भावः। यद्यपि ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे इत्यनेन सूत्रेण मन्त्रविषये चन्द्रपदे परतः ह्रस्वात्परस्य चन्द्रपदस्य सुडागमो विहित एव। तथाच पारस्कारादि-त्वाश्रयणमयुक्तम्। तथापि पारस्कारादीनामाकृतिगणत्वस्यावश्यकत्वात्पारस्कर प्रभृतीनि चेति सूत्रेणैवोपपत्तौ चन्द्रेत्यादिसूत्रमेव न कर्तव्यमिति सूत्रप्रत्याख्यानस्यैव पूर्वतनैः कृतत्वात्तदभिप्रायेणै-तत्समाधानमित्यवगन्तव्यम्।

ननु सः प्रसिद्ध इति कस्माद्व्याख्येयमित्यतः स्वयमेव तत्र निमित्तमाह। उत्तरत्रेति। भिन्नवाक्यत्वार्थमिति। सह महान् सोनिमानः स धूमकेतुः स पुरुश्चन्द्र स धिये वाजार्थं हिन्वतु इति भिन्न वाक्यत्वसूचनार्थं द्विवारं स इत्युक्तमित्युक्तम्। तेनेति। एवं भिन्नत्वाङ्गीकारेणैव पुरुसुखश्च स इति भाष्ये विद्यमानश्चशब्दः समर्थितो भवति अन्यथा तद्वैय्यर्थ्यापत्तेरित्यर्थः। तथाच द्विः स इत्युक्त्या च भिन्नवाक्यत्वं ज्ञापितमिति भावः। प्रसिद्धमिति। अत एव धूमध्वज इत्यग्नेर्नामेति भावः। स केतुरस्येति। सगरुडस्य हरेः केतुः ध्वजापरपर्यायकेतुस्थः। तथाच गरुडध्वज इत्यर्थः। ननु ऋचि धिये वाजाय हिन्वतु इत्येवं विद्यमानत्वात्सुकर्मणामित्यसङ्गतं कथं भाषितमित्यत आह। यैरिति। साक्षादेव ज्ञानायान्नाय च प्रेरणासम्भवादिति भावः॥ ११॥

सरेवा इवविश्पतिः। अग्रगामित्वादिति। प्रसिद्धो ध्वजोपि रथाग्रे गामी अग्निरपि देवातामग्रगामी कुत इति चेत्। अग्निद्वारं विना देवानां यज्ञ भोक्तृत्वाभावादिति भावः। उक्थशब्देन स्तोत्रविशेषः गृह्यते॥ १२॥

(पदार्थप्रकाशिका)

नमोमहद्भ्योनमो अर्भकेभ्यः । ननु ऋचि तद्वाचकपदाभावात् वटुस्वरूपाश्चेति कथं भाषितमित्यत आह । वटुभ्य इति पुराणेति । नमो महद्भ्योस्तु नमः शिशुभ्यः । नमोयुवभ्यो नम आवटुभ्यः । ये ब्राह्मणाः गामववधूतलिङ्गाश्चरन्ति तेभ्यः शिवमस्तु राज्ञामिति पञ्चमस्कन्धे रहूगणराज्ञः वचनमिदम् । भाष्ये नारायण ब्रह्मपुरःसराणाम् इत्यनेन रुद्रान्तदेवाः ग्राह्याः । अर्भकत्वादिनोक्ता एवेति । न तु महत्वेनोक्ता इत्यर्थः । नन्वर्भकत्वेनोक्ता एवचेद्युवानस्तर्ह्यर्भकत्वेनोक्ताः स्कन्दपूर्वा एवते युवानः । स्कन्दा एवेति वक्तव्यम् इन्द्रादय एवेति कथं भाषितमित्यत आह । स्कन्दपूर्वा इत्युक्तानेवेति । इन्द्रकामयोः समत्वात् स्कन्दपूर्वा इत्यत्र पूर्वपदेनेन्द्रादिसङ्ग्रहः अत्रत्विन्द्राद्याः इत्यादिपदेन स्कन्दादिसङ्ग्रह इति न कोपि दोष इति भावः । एकत्रैवेति । इन्द्रस्कन्दादिष्वेवार्भकत्ववटुत्वयुवत्वाख्यं प्रकारत्रयं कथमित्यर्थः ।

ननु कथमनेन एकत्र प्रकारत्रयोपपादनम् इत्यत आह । एतदुक्तं भवतीति । इन्द्रांता इति । इन्द्रपर्यन्ता इत्यर्थः । इन्द्रपर्यन्तास्तदुत्तमा एव ग्राह्याः । नत्विद्रोपीति भावः । ब्रह्मव्यतिरिक्ताः शिवाशिवाद्यवान्तरपित्रादीत्यर्थः । रूपविशेष इवेति । प्रद्युम्नगाध्यर्जुनरूपविशेषयुवानो भवन्ति । तथा वटवश्च क्षत्रियत्वेन तदानीमुपनयनसद्भावादिति भावः । निर्जरत्वादिति । यो हि लोके जरावान् वृद्धः स महानन्यो युवेत्याद्युच्यते । प्रकृते च नारायणादीनां सर्वेषामपि देवानां जराद्यवस्थाशून्यत्वेन नित्ययौवनोपेतत्वेन युवात्वात्कथं जरोपाधिकं महत्वमित्यर्थः । महत्वमित्युपलक्षणम् । वयेपाधिकार्भकत्वादि च कथमित्यपि द्रष्टव्यम् । महत्वाद्युक्तेरिति वक्ष्यमाणत्वात् । युवत्वेपीति । निर्जरत्वेन सदायुवत्वेपीत्यर्थः । प्रकारभेदेनेति । नह्यत्र महत्वार्भकत्वादिकवृद्धत्वशिशुत्वाद्याख्यं वयोपाधिप्रयुक्तं वैवक्षिकं किंचित् निर्जरत्वेन सदायौवनवस्त्वपि देवेषु युक्तमिति तत्प्रयुक्तं महत्वार्भकत्वाद्यपि युक्तमिति भावः ।

नारायणादीनामिति । नारायणादिरुद्रान्ताः इत्यर्थः । यूनां नित्ययौवनवताम् । एषां नारायणादिरुद्रानाम् । नजरसेति । येन तेषां निर्जरत्वाज्जरोपाधिकं महत्वं कथमिति शङ्का स्यादिति भावः । तर्हि वयः प्रकरणेति । यदि महत्वं गुणप्रयुक्तमेव न जराप्रयुक्तं तर्हि नमो युवभ्यो अर्भकेभ्य इति वयःप्रकरणविरोधः स्यात् । युवादिशब्दानां वयोविशेषविशिष्टवस्तुवाचित्वादिति भावः । गुणत एवेति । महत्वमिव युवत्वादिकमपि गुणत एव । न वयोविशेषोपाधिकम् । येन प्रकरणविरोधः स्यादिति भावः । इन्द्रादिदेवेषु युवत्वादिकम् आपेक्षिकगुणापेक्षयोक्तं व्युत्पादयति । नारायणादिवदित्यादिना । आदिपदेन लक्ष्मीर्ग्राह्या । तस्याः ब्रह्माद्यपेक्षया कोटिगुणाधिकत्वेनानन्तगुणत्वमेव ।

(पदार्थप्रकाशिका)

ब्रह्मणि रुद्रे च ज्ञातव्यम्। नारायणविवक्षयैवानन्तगुणत्वं लक्ष्मीमारभ्यरुद्रपर्यन्तानाम् गुणेष्वनन्तत्वं नाम बहुत्वं ज्ञातव्यम्। नारायणादिवदनन्तगुणत्वस्याभावेन महत्वाभावादिव तदल्पगुणत्वा-भावेनार्भकत्वाभावान्मध्य गुणत्वेन युवान इत्यर्थः। युवावस्थापि महत्वार्थकत्वयोर्मध्यावस्थैवेति हृदयम्। ब्रह्मादीन् रुद्रपर्यन्तान् मध्यगुणयूनापेक्षयाल्पगुणत्वादित्यनेन युवत्वव्यावृत्तिः। अस्मदादिभ्योल्पगुणेभ्यो अधिकगुणत्वादित्यनेनार्भ- कत्वव्यावृत्तिः। आशीनावस्था इति युवावस्था अर्भकावस्थयोर्मध्यावस्थैवेति भावः। अत्र यद्यपि ब्रह्मादीनां महत्वमेवोक्तम्। न मध्यमगुणत्वेन न्यूनत्वम्। तच्चेन्द्रादीनामेवोक्तम्। तथाच ब्रह्मादीन् मध्यमगुणान् यूनः अपेक्ष्यैतदयुक्तम्। तथापि नारायणापेक्षयानन्तगणत्वाभावादिन्द्राद्यपेक्षया अल्पगणत्वाभावेन मध्यमगुणत्वात् ब्रह्मादिरुद्रां तानामपि यूनत्वमनया विवक्षयोक्तमिति ज्ञातव्यम्।

अर्भकाः इन्द्रादय एवेति वर्तते। नारायणादिभ्यः रुद्रपर्यन्तेभ्य अर्भकावस्थापि महत्वावस्थापेक्षया। अत्यल्पैवेति ज्ञातव्यम्। महदादिभ्यः महत्वाद्युपेतेभ्यः नलुपाम इति। यजने शक्त्यभावे स्तुतिमात्रं कारयिष्याम इति भावः। विवक्षिता इति। एतदृक्प्रतिपाद्यत्वेनेति शेषः। तदा कथमिति विष्णौ युवत्वार्भकत्वादिकमुक्तरीत्या प्रतिपादयितुं न शक्यत इति भावः। मध्यमप्रकारद्वयेति। युवत्ववटुत्वलक्षणप्रकारद्वयोपेता इत्यर्थः। युवत्वेतीति। सर्वेष्वपि रूपेषु वयोगुणाद्यनुपाधिकनित्ययौवनसद्भावेऽपि परममहत्परिमाणो- पेतरूपाणामपेक्षया महत्ववचनम्। तदपेक्षयाप्यल्पपरिमाणरूपाणामपेक्षया आशिनत्ववचनं तदपेक्षयाप्यल्पपरिमाणानामणीयसां रूपाणाम् अपेक्षया अर्भकत्ववचनं चोपपन्नमित्यर्थः॥ १३,२४॥

## पदार्थदीपिका

सामर्थ्यादिति॥ नीत्यस्य मानशब्देन सम्बन्धे नितरां मानं निमानम्। न विद्यते निमानं यस्येति नितरां यन्मानं तस्यैव निषेधप्रसंगेन अल्पं मानं वर्तत इति स्यात्। तच्च सकलप्रमाणबाधितमिति न नीत्यस्य तेन सम्बन्धः किन्तु मानराहित्यरूपे नञर्थेनैव। ततश्च सर्वथा मानराहित्यं इति लाभ इति नोक्तदोष इति भावः॥ तद्व्याख्यानमिति॥ ततश्च व्याख्यानव्याख्येयभावेन न पौनरुक्त्यमिति भावः॥ प्रसिद्ध इति॥ तथाचाद्यस्य स इत्यस्य विशेषणशब्दत्वात् द्वितीयस्य च विशेष्यशब्दत्वात् नैकस्यापि वैय्यर्थ्यमिति भावः॥ भिन्नेति॥ सः धियेवाजया हिन्वतु। इत्येको योगः। सोऽनिमानादिश्चेत्यपरो योग इति भिन्नवाक्यतासूचनार्थमित्यर्थः॥ हिन्वत्विति॥ हिविः प्रेरणार्थः। इदितो नुम् धातोरिति इदित्वान्नुमिति भावः॥ ११॥

(पदार्थदीपिका)

स रेवानिति संहितायां एतत्तदोरिति सोर्लोप इति ज्ञेयम् ।। रेवानिति ।। रयेर्मतौ बहुलमिति सम्प्रसारणम् । परपूर्वत्वं आद्गुणः । छन्दसीर इति मतुपो वत्वमिति भावः ।। १२ ।।

निर्जरत्वादिति ।। तथा च सर्वेषां युवत्वात् न कस्यापि महत्वादिकमिति शङ्काभिप्रायः ।। प्रकारभेदेनेति ।। पित्रादिसम्बन्धप्रसिद्धिन्यूनत्वादिरूपोक्तप्रकारभेदेनेत्यर्थः ।। शक्तिमन्तो भवामेति ।। शक्लृ शक्ताविति स्मरणादिति भावः । धनादिसम्पत्येति पूरणीयम् ।। शक्त्यभावेऽपीति ।। धनाद्यसम्पत्येति शेषः । ज्यायसः प्रशस्यशब्दादियसुनि ज्यचेति ज्यादेशः । ज्यादादीयस इति ईयसुन ईकारस्यात्वमिति भावः ।। शंसमिति ।। शंसुस्तुतावित्यस्मात् हलश्चेति घञिति भावः ।। इदं रूपमिति । व्रश्चू छेदन इत्यस्मात् व्यत्ययेनात्मनेपदोत्तमपुरुषैकवचनमिट् । च्लेः सिच् । ग्रहिज्येत्यादिना सम्प्रसारणम् । स्वरति सूतीत्यादिना इडभावः । स्कोः संयोगाद्योरित्युपधासकारलोपः । व्रश्चादीनां षत्वम् । षढोः कः सीति कत्वम् । आदेश प्रत्यययोरिति षत्वम् । नमाङ्योग इत्यडभाव इति भावः ।। प्रकारद्वयेति ।। युवत्व-वटुत्वरूपप्रकारद्वयेत्यर्थः ।।१२,२४ ।।

## टीकाविवृतिः

सनो महान् ।। यद्यपीति ।। श्रुतौ अनिमानशब्दे नितरां मानो निमानः निमानःयस्य सोऽनिमान इति निशब्दस्य मानशब्देन समासे पश्चान्नञा बहुव्रीहौ निमानराहित्यमर्थो भाष्ये वक्तव्यः स्यात्तत्कथं नितराममितत्वेनेत्युक्तमित्याशंकाशयः । परिहरति ।। तथापीति ।। नितरां मितत्वाभावे किंचिन्मितत्वं स्यात्तच्च प्रमाणबाधितमित्ये- तत्सामर्थ्यादित्यर्थः । गतार्थतानिवारणप्रकारमाह ।। महत्त्वं हीति ।। अत इति ।। मक्षिकादेर्मशकाद्यपेक्षया महत्त्वदर्शनादापेक्षिकमहत्त्ववारणाय तन्महत्त्वं नितराममितत्वेन व्याख्यातम् । अतो व्याख्यानव्याख्येयभावान्न पौनरुक्त्यमिति भावः ।। चदेरिति ।। चदि आह्लादने दीप्तौ चेतिधातु व्याख्यानादिति भावः । ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे इति सुडागमे पुरुश्चन्द्र इति सिद्धावपि प्रकारान्तरमाह ।। पारस्करादित्वादिति ।। पारस्करादेराकृति-गणत्वादित्याशयः । यद्वा ह्रस्वाच्चन्द्रोत्तरपदे इत्यादीनां पारस्करप्रभृतीनि चेत्येतद्विवर-णरूपत्वात्पारस्करादित्वेनैव सिद्धःसुट्ह्रस्वाच्चन्द्रेत्यनेन कृत इति भावः । ननु ज्ञानायान्नाय च सन इत्युत्तरत्र भाष्ये पूर्वप्रकृत परामर्शकस्य तच्छब्दस्य सत्त्वात्पुरुसुखश्च स इत्यत्र पुनस्तच्छब्दो व्यर्थ इत्यत आह ।। स इति प्रसिद्ध इति ।। प्रसिद्धार्थकस्य प्रकृते उपयोगाभावादाह ।। यद्वेति ।। सोऽनिमानो महान्पुरुसुखश्च भवेत् । स एव च धियै वाजाय च हिन्वत्विति वाक्यभेदार्थमित्यर्थः ।।

(टीकाविवृतिः)

चशब्दश्चेति ।। भाष्योक्त इति शेषः ।। धूमःकेतुरिति ।। केतुर्द्युतौ पताकायामिति विश्वोक्तेर्धूमोऽग्नेरूर्ध्वभागे विद्यमानात्वात्पताकास्थानीय इति भावः ।। सूत्रादिति ।। महाव्याकरणसूत्रादित्यर्थः ।। धूत्करोतीति ।। शत्रुकंपनं स्वभावेन करोतीत्यर्थः ।। स केतुरस्येति ।। केतुः केतुस्थःपताकास्थ इत्यर्थः ।। हिन्वत्विति ।। श्नुविकरणात् हि गतौ वृद्धौ चेत्यतोंतर्णी तण्यर्थाल्लोटि तिपश्छान्दसोडागम इति भावः ।। ११ ।।

सरेवान् ।। विश्पतिरिवेति ।। यद्यपीवेत्येतत् रेवानित्यनेन समस्तं तथापि सामर्थ्याद्विश्पतिशब्देनान्वितम् । छान्दसत्वादसामर्थ्यं न दोषायेति भावः ।। रेवानिति ।। रयिशब्दान्मतुपि छन्दसीर इति इकारान्तरेफान्तान्मतुपो वत्त्वविधानाद्वत्त्वे रयेर्मतौ बहुलमिति वार्तिकेन संप्रसारणे पूर्वरूपत्वे च आद्गुण इति भावः ।। दैव्य इति ।। देवेषु भव इत्यर्थे दिगादित्वाद्यदिति भावः ।। बृहद्भानुरिति ।। भानुः करो मरीचिः स्त्री इत्यमरोक्तेरिति भावः ।। १२ ।।

नमो महद्भ्यः ।। आशिन शब्द इति ।। अश्नुवंति व्याप्नुवंति श्रौतं स्मार्तं च कर्म ते आशिनाः अश्नोतेर्बहुलमन्यत्रापीति इनच्प्रत्यये बाहुलके णित्वे चैतद्रूपमिति भावः । तत्र प्रमाणमाह ।। नम इति ।। नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्य इति भागवतसमाख्यानादित्यर्थः ।। अर्भकत्वादिनोक्तानां स्कंदादीनामेत एवेत्यनेन कथं परामर्शः इन्द्रादय इति पृथग्विशेष्योक्तेरित्यत आह ।। स्कंदपूर्वा इत्युक्तानेवेति ।। नारायणादिरूपेषु महत्त्वादिविवक्षा केननिमित्तेनेत्यत आह ।। रूपविशेषे इति ।। एतदुक्तं भवतीति ।। अवस्थाविशषे परिमाणविशेषे वेत्यर्थः ।। निर्जरत्वादिति ।। एतदनन्तरं युवत्वादिति शेषः ।। प्रकारभेदेनेति ।। उक्तपित्रादिप्रसिद्ध्यभावादिनेति शेषः ।। न जरसेति ।। वृद्धत्वेनेत्यर्थः । इन्द्रादीनां युवत्वे कथमाशिनत्वमित्यत आह ।। ब्रह्मादीनिति ।। विष्ण्वपेक्षया मध्यमगुणत्वाद् ब्रह्मादयो युवानः । तानपेक्ष्याल्पगुणा अस्मदपेक्षयाधिकगुणाश्चेति कृत्वेन्द्रादय एव वटव इत्यर्थः ।। शक्नवामेति ।। शक्लृ शक्तावित्यतो लोटि स्वादिभ्यः श्नुरिति श्नुप्रत्यये मस आडुत्तमस्य पिच्चेत्याडागमे तस्य पित्वं प्रत्ययार्थमिति मसःपित्वाच्छ्नुप्रत्ययस्य सार्वधातुकलक्षणे गुणे अवादेशे मसःपित्वादनुदात्तत्वे आकारस्यागमानुदात्ता इत्यनुदात्तत्वे विकरणस्वर इति भावः । श्रुतौ जात्येकवचनमिति भावेनाह ।। ज्यायसो ज्यायसामिति ।। व्रश्चू छेदन इतीति ।। अस्मान्माङ्योगाल्लुङि व्यत्ययेनात्मनेपदे उत्तमपुरुषैकवचने इटि च च्लेःसिचि ऊदित्वेन वेट्त्वादिडभावे श्चुत्वस्यासिद्धत्वात्स्कोः- संयोगाद्योरिति सलोपे व्रश्चेति चस्य षत्वे षढोःकस्सीति कत्वे सि च आदेशप्रत्यययोरिति षत्वे छान्दसे संप्रसारणे रूपमेतदिति भावः ।। रूपविशेषा इति ।।

(टीकाविवृतिः)

अव्याकृताकाशादिनिष्ठव्याप्तानि रूपाणि महान्तीत्युच्यन्ते । मन आदिनिष्ठानि अणुरूपाणि वामनादीनि वटुरूपाणि रामादीनि युवरूपाणीति भावः ॥ १३ ॥ २४ ॥ ८ ॥

ऋक्संहिता पदपाठसहिता (सू-२८, व-१)

(३१३) यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे ॥
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ १ ॥

(प०) यत्र । ग्रावा । पृथुऽबुध्नः । ऊर्ध्वः । भवति । सोतवे ॥
उलूखलऽसुतानाम् । अव । इत् । ऊँइति । इन्द्र । जल्गुलः ॥१॥

(३१४) यत्र द्वाविव जघना धिषवण्या कृता ॥ उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ २ ॥

(प०) यत्र । द्वौऽइव । जघना । अधिऽसवन्या । कृता ॥ २ ॥

(३१५) यत्र नार्यपच्यवमुपच्यवं च शिक्षते ॥ उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ३ ॥

(प०) यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते ॥ ३ ॥

(३१६) यत्र मन्थां विबध्नते रश्मीन्यमितवा इव ॥ उलूखल-सुतानामवेद्विन्द्र जल्गुलः ॥ ४ ॥

(प०) यत्र । मन्थाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव ॥ ४ ॥

(३१७) यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ॥ इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ ५, २५ ॥

(प०) यत् । चित् । हि । त्वम् । गृहेऽगृहे । उलूखलक । युज्यसे ॥
इह । द्युमत्ऽतमम् । वद । जयताम्ऽइव । दुन्दुभिः ॥ ५,२५॥

ऋग्भाष्यम्

विस्तीर्णाधस्तना यत्र ग्रावाणोभिषवोद्धृताः । धिषणाभिषुतान्सोमानवनः स्वीकृतस्तुते । गुरुस्वीकार इत्यस्माद्धातोः स्तुत्यो हि जल्गुलः ॥ १ ॥ फलकेभिषवस्यैव

(ऋग्भाष्यम्)

स्त्रियो जघनसाम्यतः । प्रोक्ते ॥ २ ॥ उपच्यवश्चापच्यवः सङ्गतिभेदतः । जिह्वाग्रा वाथवाग्युक्तिरुच्यतेऽभिषवस्तथा । खलश्चोरुस्तथा देहः सोमो मन इतीरितः । ज्ञानोत्पत्तौ च फलकस्थाने ओष्ठे उदीरिते ॥ ३ ॥

मन्थरश्मीनश्वरश्मीन्यथायत्र निबध्यते । रश्मयो यत्रनाड्यश्च ॥ ४ ॥ यस्माद्युक्तो गृहे गृहे । देहे देहेऽथवा तेन द्युमद्दुंदुभिवद्वद । पृथिवीदेवता तस्य तद्गतोवा स्वयं हरिः । सोमामात्योऽपरो देवो वनस्पतिरितीरितः । सोमोवा तद्गविष्णुर्वा श्रुतः फलकदेवता । वृक्षाणामपि सर्वेषामतः ॥ ५, २५ ॥

## ऋग्भाष्यटीका

यत्र ग्रावा । नवर्चमिदं सूक्तम् । तत्राद्याश्चतस्र ऐन्द्र्यः । विमुक्तपाशः शुनःशेप एताभिर्जुहवांचकार । विस्तीर्ण । हे जल्गुलः । नःस्वीकृतस्तुते इन्द्र यत्र यज्ञे । पृथुबुध्नः जातावेकवचनम् । पृथु विस्तीर्णं बुध्नमधस्तनभागो येषां ते तथोक्ताः । विस्तीर्णाधस्तनाः भागशब्दोध्याहार्यः । ऊर्ध्वः ऊर्ध्वदेशसम्बन्धी । अभिषवोद्धृताः सोमाभिषवे ऋत्विग्भिरुद्धृताः । ग्रावाः ग्रावाणः । सोतवे सोमं सोतुम् । भवति सन्ति । तत्रोलूखलसुतानां द्वितीयार्थे षष्ठी । उलूखले सुतान् । धिषणाभिषुतान् । धिषण इत्युलूखलनाम । नोस्मदीयान् सोमानिति शेषः । अवेदु अवतिरवाप्त्यर्थः । सत् उ इति निपाताववधारणे । सर्वथैवावाप्नुहि । जल्गुल इत्येतत्कथं स्वीकृतस्तुतित्वं वदेदित्यत आह ॥ गुरेति ॥ अस्माद्धातुव्याख्यानात् । स्तुत्यः । स्तुतेः स्वीकर्ता । जरतिस्तावत्स्तुत्यर्थः ततो भावे सम्पदादित्वात्क्विप् गुरतेश्च कसुन् । उभयत्रापि रोल इति योगविभागेन रेफस्य लकारः । जरं गुरतीति जल्गुलाः तस्य सम्बुद्धिर्जल्गुलः जल्गुल इति सम्बोध्यत इति शेषः ॥ १ ॥

यत्र द्वौ । पूर्वार्धतात्पर्यमाह ॥ फलके इति । अत्र सोमाभिषवस्य हेतूफलके स्त्रियो जघनसाम्येन प्रोक्ते । अत्र स्त्रीग्रहणाभावेऽप्युत्तरत्र नारीग्रहणात् स्त्रिय इति लभ्यते । मैथुन काले स्त्रीपुंसजघनाविवेति व्याख्याननिरासायैवशब्दः । फलकयोरुत्तराधरभावाभावात् । अधिषवणीशब्दस्य फलक एव प्रसिद्धस्योलूखलग्राव्णोर्व्याख्यातुमयुक्तत्वात् । जघनैकदेशयोर्जघनशब्दस्य वृत्तेर्द्वावित्यादिकं चोपपद्यते । यत्र यज्ञे द्वौ जघनाविवाधिषण्या अधिषूयते सोम एतयोरिति द्वे फलके । कृता कृते । तत्रोलूखल सुतानामिति पूर्ववत् । फलकयोरेवाधिषवणीत्वादुलूखलसुतानामिति सर्वत्रोपचारः ॥ २ ॥

यत्र नारी । यत्र यज्ञे स्थितयोः फलकयोरपच्यवमधोगमनमुपच्यवमुपरिगमनं च । नारी तज्जघन-युगलमिति यावत् । शिक्षते उपादत्ते । तस्यापि गतावपच्यवोपच्यवसद्भावात् । तत्रोलूखलसुतानामिति

(ऋग्भाष्यटीका)

फलकयोः किं निमित्तावुपच्यवापच्यवावित्यत आह ॥ उपच्यवश्चेति । सङ्गति भेदतः फलकद्वयसंयोगस्य शिथिलत्वात् । ततः प्रहारपर्यायेणेति शेषः । ऋक् त्रयगतान् ग्रावादिशब्दानध्यात्मं व्याख्याति । जिह्वेति । वागिन्द्रियमिह जिह्वेत्युपलक्ष्यते । वाग्युक्ति र्वाचोमनसा वेदद्वारको योगः । अथ शब्दः समुच्चये । कुतः तथा सादृश्यादिति यावत् । एवमुत्तरोपि तथाशब्दः । सादृश्यं च यथासम्भवमूह्यम् । उरुःखलश्च देहः । उलूखल इति वक्तव्ये उरुः खल इति वचनमूर्ध्वं खमस्येत्युलूखलशब्दव्याख्याननिरासार्थम् । बहोरलाक्षणिकस्याङ्गीकारात् । यत्र हि धान्यादिकं चूर्ण्यते तत्र खलशब्दो वर्तते । तस्य चोरुत्वं भूमेरूर्ध्वत्वम् । सोम इति मन इति चैकोर्थ ईरित इति योज्यम् । अन्यथेरितमिति स्यात् । मनः सोमलतास्थानीयमिति यावत् । ज्ञानोत्पत्ताविति सर्वत्रान्वयः । अनेन सोमरसस्थानीयं ज्ञानमिति सूचयति । ओष्ठशब्दोर्धर्चादि त्वात्पुन्नपुंसकलिङ्गः ॥ ३ ॥

यत्र मन्थाम् । मन्थरश्मीन् । यत्र यज्ञे । रश्मीनुलूखलस्येति शेषः । द्रव्यान्तरेण दार्ढ्याय विबध्नते । किमिव । मन्थां मन्थानम् । यमितवा इव नियन्तुं यथा । मन्थरश्मीन्यथा चाश्वं नियन्तुमश्वरश्मीं स्तम्भादौ विबध्नंति तथा तत्रोलूखलसुतानाम् । के अध्यात्मं रश्मय इत्यत आह ॥ रश्मय इति ॥ अन्यत्र बाह्यात् । चस्त्वर्थः ॥ ४ ॥

यच्चित् । इयमुत्तरा चौलूखल्यौ । यस्मात् । हे उलूखलक स्वार्थे कः । यद्यस्मात्त्वं गृहे गृहे । चित् अपि सर्वेष्वप्येतद्यजमानानुष्ठित यज्ञगृहेषु । अथ वाध्यात्मन्देहे देहे युज्यसे युक्तो वर्तसे । पूज्यतयेति शेषः । हि तेन कारणेन । इह यज्ञे । जयतामिव दुन्दुभिर्जयतां पुंसां दुन्दुभिवत् । द्युमत्तमं द्युमत्प्रकाशवत्तमम् उच्चैरिति यावत् । वद ध्वनिं कुरु । कथमचेतनस्योलूखलस्यैवं प्रार्थनमित्यत आह ॥ पृथिवीति । तस्य उलूखलस्य । तद्गतः पृथिवीगतः । वनस्पतिरिति शब्देनेरितः सोमस्यामात्योप्यपर उलूखलस्य देवः । वनस्पतिरितीरित इत्यनेन द्वितीयायामृचि वनस्पत इत्येतदुक्तार्थं भवति । आयजी इति द्वे ऋचावुलूखलमुसलयोरिति केचित् । तदसत् । अधिषवण्योः प्रकृतत्वेन तयोरेवद्विवचनविषयत्वोपपत्तेः । फलकयोरप्यचेतनयोः प्रार्थनादिसम्भवार्थं प्रसङ्गाद्देवतामाह ॥ सोमो वेति ॥ अत्रापि सोमामात्य इत्युक्तमनुवर्तते । तेन वनस्पती इति व्याख्यातं भवति । सोमस्य तद्गतस्य विष्णोश्च कथं वनस्पतित्वमित्यत आह ॥ वृक्षाणामपीति । देवतेति वर्तते । एवं पृथिव्यास्तद्गतस्य हरेश्च वनस्पतित्वं समर्थनीयम् । अतः यच्चिद्धीत्याद्यासुचत सृषूक्तं युक्तमिति शेषः । एतेन प्राग्देहस्योलूखलत्वमुक्तमिदानीं तूलूखलाधिकरणत्वमिति विरोधोपि परास्तः । पूर्वमचेतनस्येदानीं देवताया उलूखलशब्दोक्तत्वात् ॥ ५, २५ ॥

## मन्त्रार्थमञ्जरी

अथ 'यत्र ग्रावा' इति नवर्चं वर्गद्वयात्मकमष्टाविंशं सूक्तम् । तत्र आद्याश्चतस्र ऐन्द्र्योऽनुष्टुभः । विमुक्तपाशः शुनः शेप एताभिर्जुहवांचकार । (हे) जल्गुलः, 'जर स्तुतौ', सम्पदादित्वाद्भावे

(मन्त्रार्थमञ्जरी)

क्विप्, 'गुर स्वीकारे' इत्यतः कसुन्, जरं स्तुतिं स्वीकरोतीति जर्गुरः, 'कृपो रो लः' इत्यत्र योगविभागादुभयत्र लत्वम्, संबुद्धिः, स्वीकृतस्तुते । (हे) इन्द्र । यत्र, यज्ञे । पृथुबुध्नः, जातावेकवचनम्, पृथवो विस्तीर्णा बुध्ना अधस्तनभागा येषां ते तथोक्ताः । ऊर्ध्वः, ऊर्ध्वाः, ऊर्ध्वदेशसम्बन्धिनः, सोमाभिषव ऋत्विग्भिरुद्धृताः । ग्रावा, ग्रावाणः । सोतवे, 'षूञ् अभिषवे' तुमर्थे तवेन्, सोमं सोतुम् । भवति, सन्ति । 'यत्र' इति (श्रुतौ) श्रवणात् 'तत्र' इत्यन्वेति (तत्र) यज्ञे । उलूखलसुतानाम्, द्वितीयार्थे षष्ठी, उलूखले सुतान् । (नः) अस्मदीयान् । (सोमान्) इति शेषः । अव इत् । उ, एव । अवतिः अत्रावाप्त्यर्थः, सर्वथैवावाप्नुहि इति । अध्यात्मं तु– यत्र, ज्ञानयज्ञे । (हे) जल्गुलः इन्द्र) पृथुलमूलभागः । ऊर्ध्वः, व्याहर्तुमुद्यतः । ग्रावा, वागिन्द्रियम् । (सोमम्) मनः । सोतवे, वेदवाक्यपर्यालोचनेनालोडयितुम् । भवति, अस्ति । (तत्र) यज्ञे । (उलूखलसुतानाम्), उलूखले, धान्यचूर्णनस्थलं हि खलशब्दार्थः, तस्य चोरुत्वं भूमेरुच्चस्थत्वम्, उरुखलसदृशे देहे सुतान्मनोवृत्तिविशेषान् । अव इत् उ । इत्यर्थः ॥ १ ॥

अत्र सोमाभिषवस्य हेतू फलके स्त्रियां जघनसाम्येन स्तूयेते, अत्र स्त्रीपदाभावेऽप्यग्रे नारीपदश्रवणात् यत्र, यज्ञे । (द्वाविव जघना) द्वौ जघनाविव । (अधिषवण्या), अधिषवण्यौ, अधिषूयते सोम एतयोरिति द्वे फलके । कृता, कृते । (तत्र) उलूखल सुतानाम्' इति प्राग्वत् फलकयोरेवाधिषवणीत्वात् 'उलूखलसुतानाम्' इति सर्वत्रोपचारः । अध्यात्मं तु– अधिषवण्यावोष्ठौ ज्ञेयौ । शिष्टं तुल्यम् ॥ २ ॥

यत्र, यज्ञे स्थितयोः फलकयोः । अपच्यवम्, अधोगमनम् । उपच्यवम्, उपरिगमनम् । च । नारी, तज्जघनयुगलमिति यावत् । शिक्षते, उपादत्ते, तस्यापि गतावपच्यवोपच्यवसत्त्वात्फलकयोश्चान्योन्यसंयोगस्य शिथिलत्वाद्ग्राव प्रहारपर्यायेणोपच्यवादिर्ज्ञेयः । अन्यत्प्राग्वत् ॥ ३ ॥

यत्र यज्ञे । रश्मीन् (उलूखलस्य) इति शेषः । द्रव्यान्तरेण दार्ढ्याय विबध्नते, निबध्नाति । किमिव ? मन्थाम्, मन्थानम् । यमितवा इव, यमितुमिव, नियन्तुमिव, नियन्तुं यथा मन्थानं मन्थरश्मीन्यथा वाश्वं नियन्तुमश्वरश्मीन्स्तम्भादौ निबध्नाति तथा । (तत्र) उलूखलसुतानाम्' इति पूर्ववत् । अध्यात्मं तु (उलूखलकस्य) देहस्य । रश्मीन्, नाडीः । विबध्नते । इति ज्ञेयम् । अन्यत्पूर्ववत् ॥ ४ ॥

इयम् उत्तरा चौलूखल्यावनुष्टुभौ । (हे) उलूखलक, स्वार्थे कः (कन्) । यत्, यस्मात् । त्वम् । गृहेगृहे, सर्वेष्वेतद्यजमानानुष्ठितयज्ञ गृहेषु, अध्यात्मम्– देहेदेहे । चित्, अपि । युज्यसे, युक्तो

(मन्त्रार्थमञ्जरी)

वर्तसे। (पूज्यतया) इति शेषः। हि, तेन कारणेन। इह, यज्ञे। जयतामिव दुन्दुभिः, जयतां पुंसां दुन्दुभिवद्भेरीवत्। द्युमत्तमम्, प्रकाशवत्तमम्, उच्चैरिति यावत्। वद, ध्वनिं कुरु। अत्रोलूखलस्य जडस्यैव प्रार्थनायोगादभिमानिनयन्यायाच्चोलूखलदेवता धरादेवी तद्गो हरिश्च सोमामात्यो वनस्पत्याख्यदेवस्तद्गतो हरिश्च ज्ञेयाः ॥ ५ ॥ इति पञ्चविंशो वर्गः ॥ २५ ॥

## रूपावतारः

यत्र ग्रावा ॥ उभयत्रापीति। जरगुर इत्यत्रापीत्यर्थः ॥ १ ॥

यत्र द्वाविव ॥ द्वौ जघनाविवेति। यद्यपि द्वाविवेति शाकल्यदृष्टमेकमेव पदम्। तथापि पदद्वयमपि भवतीत्यभिप्रेत्य जघनाविवेति व्याख्यातमिति द्रष्टव्यम् ॥ २ ॥

यत्र नारी ॥ उलूखल इति वक्तव्य इति। अध्यात्मं उलूखलशब्दवाच्यस्य दर्शनीयत्वात् देहः उलूखल इति वक्तव्य इत्यर्थः। बहोरिति। परव्याख्याने ऊर्ध्वशब्दोकारस्य ह्रस्वादेशः र्ध्वशब्दस्य लूभावः खशब्दस्य लगागम इति बहोरलाक्षणिकस्य कार्यस्याङ्गीकार्यत्वं प्रसज्यत इति भावः। अन्यथेति। (अर्थशब्दस्येति) अर्थशब्दाध्याहाराभाव इत्यर्थः। ननु ओष्ठशब्दस्य पुल्लिङ्गत्वादोष्ठमिति भाष्ये प्रयोगः कथमित्यत आह। अर्धर्चादित्वादिति ॥ ३ ॥

यत्र मन्थाम् ॥ श्रौतं मन्थामिति पदमुपलक्षणमिति भावेन भाष्यकृता अश्वरश्मी-नित्युक्तमभिप्रेत्याह। यथा वेति ॥ ४ ॥

यच्चिद्धि ॥ औलूखल्याविति। उलूखलशब्दात् देवतार्थे अणि ङीपि द्विवचने यणादेशे च औलूखल्याविति रूपम्। दुन्दुभिवदिति। यद्यपि शाकल्यदृष्टं जयतामिवेत्येकं पदं तथापि पदद्वयमपि भवतीत्यभिप्रेत्य दुन्दुभिवदिति व्याख्यातमिति द्रष्टव्यम्। वनस्पते इत्येतदिति। उलूखलस्य वनस्पते इति संबोधनमुपपादितं भवतीत्यर्थः। तेन वनस्पती इत्यपीति। तानो अद्य वनस्पती इत्युक्त ऋचि वनस्पती इति द्विवचनं सोमतदमात्यविषयमिति व्याख्यातं भवतीत्यर्थः ॥ ५ ॥ २५ ॥

## पदार्थप्रकाशिका

यत्रग्रावा पृथु बुध्नः। यत्र ग्रावा नवेत्यनुक्रमणिकां हृदि निधायाह। नवर्चमिति। ऐन्द्रिया इति। इन्द्रजल्गुलः इति चतसृस्वृक्ष्विन्द्रशब्दश्रवणादिति भावः। तस्य हस्मर्च्युक्तायां विपात्रौ

(पदार्थप्रकाशिका)

मुमुचे तमृत्विजऊचुस्त्वमेव नोस्याह्नः संस्थामधिगच्छेति । अथहैनं शुनः शेपोऽजसवं ददर्शतामेताभिश्चतसृभिरित्याद्युक्ता अथहास्मिनन्वारब्धे पूर्वाश्चतसृभिः सस्वाहाकाराभिर्जुहावांचकारेति ब्राह्मणं हृदि निधायाह । विमुक्तपाश इत्यादिना । ताविति । बुध्नग्रावा ऊर्ध्वः भवतीत्येकवचनं समुदायापेक्षमित्यर्थः । भागशब्द इति । तथाच विस्तीर्णाधस्थनभागा इत्यर्थः । सोमाभिषव इति । सोमखण्डनार्थमित्यर्थः । तत्रेति । यज्ञ इत्यर्थः । ऋग्भाष्ययोः संवादायाह । धिषण इतीति । अवतिरावास्यर्थ इति । अव रक्षण गतिकान्तिप्रीति तृप्त्यवगमप्रवेश-श्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभाग वृद्धिष्विति धातोरिति भवः । उभयोरपि निपातयोः अवधारणार्थत्वोक्त्या अभिप्रायमाह । सर्वथैवेति । तत इति । जरस्तुताविति धातोरित्यर्थः । वसूनिति । कित्वाद्गुणाभावो द्रष्टव्यः । अन्यथा उकारस्य ओकारेतिस्यादिति भावः । उभयत्रापीति । जरधातौ गुरुधातौ चेत्यर्थः । ननु कृपोरोल इतिसूत्रेण कृपेरेफस्यैव लत्वविधानात् ल्कप्तिरित्युदाहृतत्वाच्च कथं जरगुरेत्यत्र रेफयोः कथं लत्वमित्यत आह । कृपोरोल इतीति । क्रृपोरित्येकं वाक्यं रोल इत्यपरं वाक्यमिति योगविभागेनेत्यर्थः । तथाच जरगुरेत्यस्मात् कसुन्प्रत्यये ककारलोपे रेफयोर्लत्वेलारस्थाकारयोर्लोपे जल्गुलस् इति प्रातिपदिके जाते पश्चात्सुप्रत्यये तस्य लोपे अत्वसन्तस्य चाधातोरित्यनेना सन्तत्वादुपधादीर्घे जल्गुलास् इति जाते सस्य रुत्वे विसर्गे च जलुगुला इति प्रथकमैवचनं द्रष्टव्यम् । तस्येति जल्गुलास्शब्दस्येत्यर्थः । इति सम्बोध्यत इति । तथाच स्तुत्योपि पुमान् जल्गुल इति सम्बोध्यत इति भाष्यार्थो द्रष्टव्यः ॥ १ ॥

यत्रद्वाविवजघना । सोमाभिषवस्य हेतुफलक इति । आदौ ऊलूखले ग्राव्णा सोमः किंचित् खंड्यते । तदपेक्षाया तत्र ग्रावेति पूर्वऋक् प्रवृत्तिः पश्चात् हस्ताभ्यां कोष्टमये द्वेफलके गृहीत्वा तन्मध्ये आदौ किंचिदुलूखले ग्राव्णा खण्डितं सोमं स्थापयित्वा सङ्घर्षणे कृते सति रसः स्रवतीत्यस्तिमस्तदपेक्षयेयम् ऋक्प्रवृत्ता । अतः सोमाभिषवस्य हेतुफलके इत्युक्तमिति द्रष्टव्यम् । जघनसाम्येनेति । यथा स्त्रियो गमनसमये जघने परस्परंसम्बन्धे भवतः । एवं रसोद्गमनार्थं फलकाभ्यां सोमस्य घर्षणसमये फलकेति परस्पर सम्बन्धे भवतः इत्येवं षरस्परसम्बन्धत्वेन फलकयोर्जघनसाम्यं द्रष्टव्यम् । नन्वस्या ऋचि स्त्रीवाचाकपदाभावात् स्त्रियो जघनसाम्यत इति कथं भाषितमित्यत आह । अत्रेति । उत्तरत्रेति ।

यत्र नारीत्यस्याम् ऋचि इत्यर्थः । यत्र द्वाविवेत्यादिकमेवं परो व्याचक्षते । तथा मैथुनकाले स्त्रीजघनमधरीभूतं पुरुषजघनमूर्ध्वभृतमिति तावत्प्रसिद्धम् । एवं च यथा मैथुनकाले स्त्रीपुंसजघनौ ऊर्ध्वाधरीभावयुक्तौ कृतौ तथा अधिषवण्यौ फलके सोमखंण्डनसमये ऊर्ध्वाधरीभावयुक्ते

(पदार्थप्रकाशिका)

कृते इति। तामिमामपव्याख्यामनूद्य प्रत्याख्याति। मैथुनकाल इति। निरासायेति। तथाच प्रोक्ते इत्यपव्याख्यानं नान्यथेति भाष्यार्थो द्रष्टव्यः दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यान्नेदं व्याख्यानं युक्तमित्याह। फलकयोरिति। हस्ताभ्यां फलकयोः सममेव गृहीतत्वेन जघनवदुत्तराधरीभावादित्यर्थः। नन्वत्राधिषवणीशब्दो न फलकपरतया व्याख्यायते। येनोक्तदोषः किन्तु उलूखलग्रावपरतया सोमखण्डनसमये चोलूखलाधरीभूतो ग्रावा ऊर्ध्वभूत इति दृष्टान्तदार्ष्टान्तिकभावो युक्त इत्याशंक्याह। अधीषवणीशब्दस्येति।

ननु मैथुनकाले स्त्रीपुंसजघनाविति व्याख्याने तयोर्द्वित्वाज्जघनाविति द्विवचनमनुपपद्यते। भवत्पक्षेष्वेकस्या एव स्त्रियः स्फिगपरपर्यायजघनग्रहणे तस्यैकत्वात् द्विवचनमयुक्तमित्यत आह। जघनैकदेशयोरिति। सव्यदक्षिणभागरूपैकदेशयोरित्यर्थः। तथाचैकस्य जघनस्यैव प्रदेशद्वयमादाय द्विवचनं युक्तमिति भावः। लक्षणाबीजसम्बन्धोपपादानर्थमेतदिति द्रष्टव्यम्। वृत्तेरिति। लक्षणयेत्यर्थः। इत्यादिकं चेत्यादिपदेन जघनाविति द्विवचनं ग्राह्यम्। तत्र यज्ञे। ननु ऊलूखलसुतानामित्ययुक्तम्। आदौ उलूखलेन किंचित् खण्डितस्य सोमस्य पश्चात्समग्रसागमनाय हस्तधृतफलकाभ्यामेव खण्ड्यमानत्वादस्यैव च प्रमेयस्य एतस्याम् ऋचि उच्यमानत्वात् फलकसुतानामिति वक्तव्यमिति चेत् सत्यमित्याह। फलकयोरेवेति। अधीषवणीयत्वादधिषवणीशब्दवाच्यतयोच्यमानत्वादित्यर्थः। सर्वत्रेति। एतदृचमारभ्योत्तरत्र समस्तऋक्षूलूखलसुतानामित्येतदुपचरितम्। तथाच फलकसुतानामित्येवमिति भावः॥ १२॥

यत्रनार्यपच्यवम्। ननु नारीजघनस्यैवापच्यवोपच्यवयुक्तत्वेन नार्यास्तदभावान्नारीशिक्षित इत्ययुक्तमित्यत आह। तज्जघनेति। उपादत्त इति। नारीजघनयुगलं फलकनिष्ठापच्यवोपच्यवेदृष्टा एतत्सदृशापच्यवोपच्यवौ ममापि स्यातामिति मत्वा ता उपादत्ते स्वीकरोति। अनुकरोतीति यावदित्यर्थः। ननु जघनस्योर्ध्वाधरीभावो न दृश्यते। अतोऽयुक्तमेदित्यत आह। तस्यापीति। जघनस्यापीत्यर्थः। गताविति। गमनसमय इत्यर्थः। फलकद्वयसंयोगस्येति। सङ्गतिशब्दार्थः। भेदत इत्यस्यार्थः शिथिलत्वादिति। तत इति। सङ्गतिभेदत इत्यनन्तरमित्यर्थः। पर्यायेण क्रमेण हस्तस्थितयोः फलकयोः दृढतर सम्बधे तथैव स्थिते सति खंडनासम्भवेन रसोद्गमासम्भवात्तयोः संयोगः शिथिलः क्रियते। तथाच प्रहारपर्यायेणैकफलकम् उपरिभवति। अपरं च किंचिदध इत्येवं सङ्गतिभेदतः प्रहारपर्यायेणापच्यवोपच्यवे फलकयोर्युक्ताविति भावः। रसज्ञान साधनीभूतरसनेन्द्रियापरपर्यायस्य जिह्वेन्द्रियस्य मनःपूर्वकवेदोच्चारणरूपाभिष वसाधनोच्चमानग्रवस्यानीयतायाः

(पदार्थप्रकाशिका)

बाधितत्वात् भाष्येप्युत्तरत्र वाग्युक्तिरित्युक्तत्वात्तदनुसारेण जिह्वाशब्दार्थमाह। वागिन्द्रियमिति। वाचो वागिन्द्रियस्य।

योगस्य सम्बन्धिद्वयसापेक्षत्वान्मनसेति योग्यतया पूरितम् । वागिन्द्रियस्य निर्विषयेण केवलमनसा योगस्य ज्ञानाख्यसोमरसोद्गमहेतुत्वासम्भवेनाभिषवस्थानीयतायाः अयोगादुक्तम् । वेदद्वारक इति । तथाच मनः पूर्वकं वागिन्द्रियेण वेदोच्चारणादिकमेवाभिषवस्थानीयमिति यावदित्यर्थः । समुच्चय इति । अध्यात्मं कथ्यमानग्रावाभिषवोलूखलसोमादीनां परस्परसमुच्चय इत्यर्थः । कुत इति । वाग्युक्तेरभिषवस्थानीयत्वं कुत इत्यर्थः । एवमिति । उत्तरार्धे विद्यमानोपि तथाशब्द एवं सादृश्यार्थक एवेत्यर्थः । सर्वत्राप्येकप्रकारेण सादृश्यासम्भवादाह। सादृश्यंचेति। वाग्युक्तेरभिषवसादृश्यं रसोद्गमहेतुत्वरूपं मनसः सोमसादृश्यं रसाधिकरणत्वरूपम् ओष्ठयोः फलकसादृश्यं च सङ्गतिभेदतो रसोद्गमप्रयोजकत्वादिरूपं यथासम्भवममित्यर्थः । खलश्चोरुरित्यत्र व्यत्यासेनान्वय इत्यभिप्रेत्याह । ऊरुःखलश्चेति । उरुः खलश्चेति वचनमिति । ऊलूखलेति समस्ततया कथनं विहाय उरुश्चासौ खलश्चेति कर्मधारयसमाससूचनाय यत् उरुः खलश्चेति विच्छिद्योक्तं तदित्यर्थः । खंछिद्रमस्यां प्रसिद्धोलूखलस्य । उलूखल इति समस्ततयोक्तौ बहुव्रीहिप्रतीतिः स्यात्। तथा परेण व्याख्यातत्वात्। तन्निरासार्थम्। तथा व्याख्याने को दोष इत्यत आह। बहोरिति। उत्कृष्टत्वावाचिनः उरुशब्दस्य ऊर्ध्वत्वलक्षणबहुव्रीहावन्यपदार्थे लक्षणेत्येव बहोरनेकस्य लाक्षणिकस्यार्थस्याङ्गीकारापातात् । अस्मत्पक्षेतु उरुशब्दस्यैकस्यैवोर्ध्वत्वमात्रे लक्षणेति न वहोर्लाक्षणिकस्याङ्गीकारप्रसङ्ग इति भावः । बहोरलाक्षणीकस्येति पाठे लक्षणं ज्ञापकम्। अभिधानसूत्रादिग्रन्थस्तत्सिद्धस्य बहोरर्थस्याङ्गीकारप्रसङ्गात् । ऊर्ध्वशब्दस्योलू इत्यादेशो वा खशब्दस्य च खल इत्यादेश इत्यदिकं बहुतरलाक्षणीकमाश्रयणीयमित्यर्थः ।

ननु देहस्योलूखलत्वं कुत इत्यतो यथातथेत्यनेन यथासम्भवं सादृश्यमुक्तं तद्वक्तुमाह। यत्रहीति। भूमेः सकाशादिति शेषः। देहस्यापि भूम्यपेक्षयोर्ध्वं सत्वादुलूखलसादृश्यं युक्तमिति भावः। ननु सोम इति मन ईरितमिति नपुंसके प्रयोक्तव्ये कथं ईरित इति पुल्लिङ्गप्रयोग इत्यत आह। सोम इतीति। अन्यथेति । अर्थशब्दाध्याहारेण योजनाकरण इत्यर्थः । सर्वत्रेति । ज्ञानोत्पत्तौ जिह्वाग्रावाज्ञानोत्पत्तौ वाग्युक्तिरभिषवः । ज्ञानोत्पत्तौ देह उलूखलः ज्ञानोत्पत्तौ मनः सोमः ज्ञानोत्पत्तौ ओष्टे फलकस्थानीये इति सर्वत्र ज्ञानोत्पत्तावित्यस्य अन्वय इत्यर्थः । नन्वतेषां ज्ञानोत्पत्तौ कथमुपयोग इति चेत्। उच्यते सोमरसनिष्पत्तौ तावदुलूखलादीनामुपयोगः प्रसिद्धः

(पदार्थप्रकाशिका)

अध्यात्मं च सोमरसस्थानीयं मनोजन्यं ज्ञानमेवेति तदर्थमेतेषामुपयोग इत्याशयः। नन्वोष्ठशब्दस्य नियतपुल्लिङ्गत्वात्कथम् ओष्ठे इति नपुंसक प्रयोगइत्यत आह। ओष्ठशब्द इति। अर्धर्चाः पुंसिचेति सूत्रेण चशब्दादर्धर्चादिगणानां नपुंसकताविधानादोष्ठशब्दस्य अप्यर्धर्चादिगणस्थत्वे नपुंसकत्को-द्युक्तो नपुंसकलिङ्गप्रयोग इत्यर्थः ॥ ३ ॥

यत्र मन्थां विबध्नते। रश्मिशब्दो रज्जुपर्यायः। द्रव्यान्तरेण स्तम्भनादिना। सोमकण्डनकाले उलूखले उलूखलेन चलनस्य प्रत्यवायापादकत्वात्तस्य ततश्चलनपरिहारयादौ उलूखलं सम्यग्रश्मि-भिर्बध्वा तेच रश्मयः पुनः कस्मिंश्चित् स्तम्भादौ बध्यन्त इति प्रसिद्धम्। तदेतदत्रोच्यत इति ज्ञातव्यम्। वैदिकनिघण्टौ मन्थशब्दस्याश्वपर्यायितया पाठादश्वरश्मीनित्युक्तम्। तथाच यथा मन्थानं बध्नातीति व्युत्पत्या प्रतिपक्षमथनशीलत्वादश्वं यमितवै नियन्तुम् अश्वरश्मीन् स्तम्भादौ निबध्नतीति योज्यम्। भगवत्पादैरेव दृष्टान्तान्तरमिदमुक्तमिति केचित्। अध्यात्मरश्मिस्थनीयानां नाडीव्यति-रिक्तानामदर्शनाच्चशब्देन समुच्चयान्तरकथनमयुक्तमित्यत आह। चस्त्वर्थ इति। तथाच बद्धादन्यत्राध्यात्मं रश्मयस्तु नाड्य इति योजना द्रष्टव्या ॥ ४ ॥

यच्चिद्धित्वं ग्रहेग्रहे। यच्चिद्युक्त स्मोरलूखलयादिति अनुक्रमणिकां हृदि निधायाह इयमुत्तेराचेति उत्तरेति उतस्मृत इति ऋगित्यर्थः। कप्रत्ययस्याधिक्यादाह। स्वार्थ इति। उलूखल एवोलूखलक इत्युच्यत इत्यर्थः। सर्वेष्वपीति। सर्वशब्दस्यासङ्कोचव्यञ्जनमपि शब्दप्रयोजनं यावन्तो ब्राह्मणाः ते सर्वेप्याकार्याः इतिवदितिभावः। देहे देह इति। आध्यात्ममुलूखलत्वेनोक्तस्य देहस्य कथमुलूखलाधिकरणत्वं कथ्यते विरोधादिति निःशङ्का त्वनुपदमेव परिहरिष्यते। युक्तो नियुक्तः स्थापित इति यावत्। ऋक्स्थोहिशब्दस्तेनेत्यर्थः। इत्यभिप्रेत्याह। हितेनेति। अर्थप्रकरणे पठितो य इति शब्दः शब्दपदार्थक इत्यभिप्रेत्याह। वनस्परिति शब्देनेति। सोमामात्योपरो देव इत्येव वक्तव्ये वनस्पतिरितीरित इत्येतत् प्रकृतानुपयुक्तत्वात् व्यर्थमित्याशंक्याह। वनस्पतिरितीरित इत्यनेनेति। द्वितीयायाम् उतस्मृते वनस्पत इत्यस्याम् उलूखलमुसलयोः प्रतिपादक इतिशेषः।

केचिदिति। अनुक्रमणिकाकाराः। तथाह्यनुक्रमणिका। परमौसलयौचेति। चशब्दात्पूर्वोक्तस्य उलूखलाया इत्यस्यानुकर्षः। तथाच परे उत्तमे य इत्यपेक्षया परे उत्तरत्र विद्यमाने आयजि नानो अद्येति ऋचौ उलूखलमुसलदेवताके द्विवचनप्रयोगबलादित्यतुक्रमणिकार्थो द्रष्टव्यः। प्रकृतत्वेनेति। यत्र द्वाविवेत्यस्याम् ऋचि फलकयोरेवाधिषवणीशब्देन प्रकृतत्वादित्यर्थः। द्विवचनेति। अयाजीत्यादि द्विवचनेत्यर्थः। प्रसङ्गादिति। उलूखलदेवताकथनप्रसङ्गादित्यर्थः।

(पदार्थप्रकाशिका)

किम्वनुवर्तमानस्य प्रयोजनमित्यत आह। तेनेति। अनुवृत्या सोमामायोरुभयोर्देवतात्व कथनेन तानो अद्येत्युत्तरस्याम् ऋचि विद्यमानं वनस्पती इतिद्विवचनं व्याख्यातं भवतीत्यर्थः। कथं वनस्पतित्वमिति। वनस्पतिशब्दोक्तफलकदेवतात्वं कथमित्यर्थः। वृक्षाणामपीति। सोमविष्ण्वोः समस्तवृक्षदेवतात्वाद्वनस्पतिशब्दोक्तफलकयोरपि वृक्षविकारित्वेन सोमविष्णुदेवताकत्वं युक्तमिति भावः।

ननु इयमुत्तरा चोलखल्यावित्युक्तत्वेन तस्य ते वनस्पते इत्यस्याम् ऋचि वनस्पतिशब्देन तावदुलूखलमुच्यते। तथाच पृथिवीदेवता तस्य तद्वतौ या स्वयं हरिरिति तयोरुलूखलदेवताकत्वेन तच्छब्दवाच्यत्वमेव। न वनस्पतिशब्दवाच्यत्वमतः कथं वनस्पतित्वं तयोरित्यत आह। वृक्षाणामपीतीति सर्वेषां देवतेत्युक्तप्रकारेणेत्यर्थः। सर्ववृक्षाणां पार्थिवत्वेन पृथिव्यादेर्वृक्षदेवतासत्वादुलूखलस्य च वृक्षविकारित्वात्पृथिवीदेवता या नवजडभूतवृक्षदेवतात्वेन वनस्पतित्वोपपत्तौ तद्विकारभूतोलूखलदेवतात्वस्याप्युपपत्या उतस्मेत्यृचि वनस्पतिशब्देन उलूखलग्रहणोपपत्या पृथिवी विष्ण्वोस्तद्देवतात्वोक्तिरुपपन्नेत्याशयः। अत इति। यच्चिद्धि उतस्मेति ऋगद्वये उलूखलशब्देन पृथिवीविष्ण्वोर्देवतयोरभिधानात्। अयाजीत्यादि ऋगद्वये फलकदेवानां विष्णुसोमतदमात्यानामेवाभिधानाद्यच्चिद्धीत्यादिचेतस उलूखलफलकयोः प्रति प्रार्थनमुपपन्नम् अचेतनत्वे तदयोगादिति भावः। उक्तमिति। खलश्चोरुस्तथा देह इत्यनेनेत्यर्थः। इदानींत्विति। देहे वेत्यनेनेत्यर्थः। एतेनेत्युक्तं विवृणोति। पूर्वमिति। अचेतनस्य। देह इदानीमिति। तथाच उलूखलशब्दोक्तपृथिव्यादिदेवतां प्रति देहस्याधिकरणत्वसम्भवेन देहेदेहे पूज्यतया अर्च्यत इति उलूखलं प्रति प्रार्थनोपपत्तेर्न विरोध इति भावः॥ ५,२५॥

## पदार्थदीपिका

भागशब्द इति॥ भाष्ये अधस्तनशब्दात्परं भागशब्दोऽध्याहार्य इत्यर्थः। ततश्च विस्तीर्णाधस्तना इति भाष्यस्य युक्तं पृथुबुध्नपदार्थकथनरूपत्वमिति भावः। सोतवे सोमं सोतुमिति॥ षुञभिषवे। अस्मात्तुमर्थे सेसेन् इति तवे प्रत्यय इति भावः॥ उलूखलनामेति॥ ततश्चोलूखलसुतानामित्यस्य धिषणाभिषुतानिति युक्तं व्याख्यानमिति भावः॥ कथमिति॥ गल अदन इत्यस्माल्लेण्मध्यमैकवचने सिपि लेटोऽडाटावित्यडागमे इतश्चेतीकारलोपे उपधाया उत्वे द्विर्भावे हलादिशेषभावे च पृषोदरादित्वान्निष्पन्ने व्युत्पन्नस्य जल्गुल इत्यस्य भक्षणार्थत्वेऽपि न स्वीकृतं स्तुतित्ववाचकत्वम्। तदर्थे शब्दनिष्पत्तिप्रकाराप्रतीतेरिति भावः॥ स्तुत्यर्थ इति॥ जरतेस्तुतिकर्मण

(पदार्थदीपिका)

इति यास्कोक्तेरिति भावः । क्वसुन्निति ।। कित्वान्न लघूपधगुण इति भावः ।। रो ल इति योग विभागेनेति ।। कृपोरोल इति सूत्रे रो ल इति योगविभागेनेत्यर्थः ।। जल्गुल इति सम्बोध्यत इति ।। शेष इति ।। जल्गुल इत्यन्तरं भाष्ये इति सम्बोध्यत इति शेष इत्यर्थः ।। १ ।।

मैथुनकाल इति ।। ऊर्ध्वाधरीभावेन संलग्नस्त्रीपुंसजघनाविव फलके इत्यपव्याख्यान निरासार्थमित्यर्थः ।। फलकयोरिति ।। ततश्च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यत आह ।। अधिषवणी शब्दस्येति ।। व्याख्यातुमशक्यत्वे हेतुः ।। फलक एव प्रसिद्धस्येति ।। तथा च तथा व्याख्याने प्रसिद्धिबाधः स्यादिति भावः । ननु स्त्रियो द्वौ जघनाविव फलके कृत इति योजनायामपि स्त्रीजघनस्यैकत्वात् द्वावित्त्यनुपपत्तेः तथा व्याख्यानमयुक्तमित्यत आह ।। जघनैकदेशयोरिति ।। जघनस्यैकत्वेऽपि प्रदेशद्वयोपेतत्वात् प्रदेश द्वयाभिप्रायेण द्वावित्याद्युपपन्नमिति भावः । अधिषूयते सोम एतयोरिति । षुञभिषवे । धात्वादेः षः सः । ल्युट् भावे करणाधिकरणयोश्चेत्यधिकरणे ल्युट् । योरनादेशः । गुणावादेशौ । भवेश्छन्दसीति यदुपसर्गात्सुनोतीत्यादिना षत्वमिति भावः ।। कृताकृते इति ।। सुपां सुलुगिति आकार इति भावः ।। २ ।।

अपच्यवमित्यादि ।। च्युङ् गतौ । ऋदोरबित्यप् । गुणावादेशाविति भावः ।। वेदद्वारक इति ।। वाचोच्चारितानामपि वेदानां मनसा विषयीकरणादित्यर्थः ।। अथशब्दः समुच्चय इति ।। न केवलमध्यात्म जिह्वा ग्रावा किन्तु वाग्युक्तिरभिषवश्चेत्यपि समुच्चय इत्यर्थः ।। एवमुत्तरोऽपीति ।। खलश्चोरुस्तथा देह इत्युत्तरोऽपि तथाशब्दः कुत इत्यवतार्य यथा सादृश्यादिति व्याख्येय इत्यर्थः ।। व्याख्याननिरासार्थामिति ।। उतस्म ते वनस्पत इत्यृग्व्याख्यानावसरे वेदापव्याख्याने ऊर्ध्वमस्येत्युलूखलशब्दव्याख्यानात्तन्निरासार्थमित्यर्थः । कथं तन्निरासस्तत्राह ।। वहोरिति ।। सर्वत्रेति ।। ज्ञानोत्पत्तौ जिह्वाग्रावेत्यादिरूपेण सर्वत्र अन्वय इत्यर्थः ।। अर्धर्चादित्वादिति ।। अर्धर्चादिशब्दानां पुल्लिङ्गत्वस्य चशब्दान्नपुंसकलिङ्गत्वस्य चोक्तेरिति भावः ।। ३ ।।

बध्नत इति ।। बन्ध बन्धने इति ।। क्र्यादिभ्यः श्ना । अनिदितां इति नलोपः । श्नाभ्यस्तयोरात इत्याकार लोपः ।। मन्थामिति ।। पथिमथ्यृभुक्षामादिति द्वितीयायामप्यात्वमिति भावः ।। यमितवा इति ।। यमु उपरमे । तुमर्थे सेसेनिति तवैन् प्रत्ययः । इडागमश्छान्दस इति भावः । यद्वा ण्यन्तात्तवैप्रत्ययस्येडागमे सति णिलोपश्छान्दस इति द्रष्टव्यम् ।। ४ ।।

हे उलूखलकेति ।। अपादादाविति पर्युदासात् दार्ष्टान्तिकनिघाताभावे षाष्टिकमाद्युत्तत्वमेवेति भावः ।। द्युमत्तममिति ।। दीव्यते दीप्त्यर्थस्य सम्पदादिलक्षणः क्विप् । दिव उत् इत्युत्वम् । यणादेश

(पदार्थदीपिका)

इति भावः । न च दिव उदित्त्यत्र प्रादिपदिकं गृह्यते न धातुरित्युक्तत्वात् अक्षद्युरित्यादाविवात्राप्यूढा भवितव्यम् इति वाच्यम् । एवं तर्हि दीप्तिमत्स्वर्गवाचकेन दिवप्रातिपदिकेन दीप्तिर्लभ्यत इत्यभिप्रायात् ॥ ५, २५ ॥

## टीकाविवृतिः

यत्र ग्रावा ॥ नवर्चमिति ॥ यत्र ग्रावा नव षळनुष्टुबादीत्यनुक्रान्तत्वात् । यत्र ग्रावेति नवर्चं सूक्तं तत्राद्याःषड्चोऽनुष्टुप्छन्दस्काः आदयो यस्य सूक्तस्य तदनुष्टुबादीत्यर्थः ॥ ऐन्द्र इति ॥ अनादेशेत्विंद्रो देवतेत्युक्तेरित्यर्थः ॥ एताभिर्जुहवामिति ॥ अथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिःसस्वाहाका राभिर्जुहवां चकारेति ब्राह्मणोक्तेरिति भावः ॥ जातावेकवचनमिति ॥ चतुर्भिर्ग्रावभिःसोमसवनस्य क्रियमाणत्वात् ग्रावेत्यादि पदानां समुदायार्थे एकवचनमित्यर्थः । बुध्नशब्दःचर्मपात्रविशेषवाचको गौण्या वृत्त्या तद्वद्विद्यमानपाषाणादस्तनार्थ इति भावेनाह ॥ वुध्नमिति ॥ ऊर्ध्वपदतात्पर्यमाह ॥ अभिषवोद्धृता इति ॥ षुञ्अभिषवे इत्यतः तुमर्थे इति तवेन्प्रत्यय इति भावेनाह ॥ सोतवे सोमंसोतुमिति ॥ कण्डितुमित्यर्थः ॥ द्वितीयार्थे षष्ठीति ॥ कर्मणःशेषत्वविवक्षणादिति भावः ॥ धिषण इत्युलूखलनामेति ॥ धृषु संहतौ हिंसायां चेत्यतो हिसार्थात् धृषेर्धिष च संज्ञायामिति सूत्रेणाधिकरणे क्युप्रत्यये धिषादेशे च युवोरनाकावित्य नादेश इति भावः । अवेद्धिति(अव-इत्-उ-इति)पदत्रयं व्याचष्टे ॥ अवतिरिति ॥ अवरक्षणगतिकांत्याद्यर्थसमूहदीप्त्यवाप्त्यालिङ्गनेति पाठादित्यर्थः ॥ गुरतेश्च कसुनिति ॥ सर्वधातुभ्यो सुनित्यसुन्स चकिदित्यर्थः ॥ न तु सृपितृदोः कसुन्नित्युक्तःकसुन्प्रत्ययस्तस्यात्र प्राप्त्यभावात् क्त्वातोसुन्कसुन इत्यव्ययत्वे जल्गुला इति प्रयोगश्च न स्यादिति भावः ॥ उभयत्रापीति ॥ जरतिगुरत्योरित्यर्थः । कृपो रो ल इत्यत्रेति शेषः ॥ जरं गुरतीति ॥ स्तुतिं स्वीकरोतीत्यर्थः । ननु स्तुत्य इत्यस्य प्रथमांतत्वाज्जल्गुल इति संबुध्यन्तेन कथमन्वय इत्यत आह ॥ संबोध्यते इति शेष इति ॥ स्तुत्यो हि जल्गुल इति संबुध्यन्तपदेनोच्यत इत्यर्थः ॥ १ ॥

यत्र द्वाविव ॥ भाष्ये अभिषवस्येति षष्ठी हेत्वर्थेत्याशयेनाह ॥ सोमाभिषवस्य हेतू इति ॥ अत्र याज्ञिकानामयमाचारः । भूमौ उपरानामकं गर्तचतुष्टयं कृत्वा तदुपरि पलाशात्मकपीठद्वयं अधिषवणीफलकनामकं स्थापयित्वा तदुभयोपरि आनुडुहं चर्म प्रसार्य तदुपरि उपलनामकं विस्तृतपाषाणं स्थापयित्वा तत्राध्वर्युगणस्थैश्चतुर्भिर्ऋत्विग्भिश्चतुर्भिर्ग्रावभिःसोमाभिषवःक्रियते इति । अतः फलकयोपरंपरया सोमाभिषवहेतुत्वं बोध्यम् । अस्यामृचि स्त्रीग्रहणाभावात्कथं भाष्ये

(टीकाविवृतिः)

स्त्रियो जघनसाम्यत इत्युक्तमित्यत आह ।। अत्रेति ।। उत्तरत्र यत्र नार्य पच्यवमित्यत्रेत्यर्थः । परभाष्यस्थव्याख्याननिराकरणपरतयाऽभिषवस्यैवेत्येवकारं योजयति ।। मैथुनेति ।। फलकयोरिति ।। समं प्रसृतत्वादिति शेषः । नन्वधिषवणीशब्देनोलूखलग्राव्णोर्ग्रहणादूर्ध्वाधरीभावोपपत्तिरित्यत आह ।। अधिषवणीशब्दस्येति ।। प्रसिद्धस्य याज्ञिकानामिति शेषः । स्त्रीकट्याःक्लीबे तु जघनं पुर इत्यमरोक्तेःस्त्रीकट्याःपुरोभागस्य नाभेरधस्तनस्य जघनशब्दवाच्यत्वात्तस्य चैकत्वात्कथं द्वावित्याद्युक्तिरित्यत आह ।। जघनैकदेशयोरिति ।। द्वावित्यादिकं चेत्यत्रादिशब्दाज्जघनेति द्विवचनं गृह्यते ।। द्वौ जघनाविवेति ।। यथा गमनादिव्यापारकाले जघनैकदेशौ चलनयुक्तौ तथाभिषवकाले फलके चलनयुक्ते कृते इति भावः ।। तत्रोलूखलेति ।। तस्मिन्यज्ञे उलूखलसुतान्सोमान्प्राप्नुहीत्याद्युत्तरार्धार्थः पूर्ववदित्यर्थः । ननु सोमाभिषवे उलूखलस्याभावादुपलाभिषुतस्य कथमुलूखलसुतत्वमित्यत आह ।। सर्वत्रोपचार इति ।। यत्र ग्रावेत्यादि ऋक्षट्के इत्यर्थः । उपलस्य कंडनसाधनत्वेनोलूखलसाम्यादुलूखलसुतानामित्यस्योपलसुतानामित्यर्थ इति भावः । तर्ह्यधिषवणीशब्देन सवनसाधनोपलोक्तेरुलूखलग्रहणं व्यर्थमित्य उक्तं तस्मारयति ।। फलयोरेवाधिषवणीत्वादिति ।। अधिषवणी शब्दवाच्यत्वेन याज्ञिकप्रसिद्धेरित्याशयः ।। २ ।।

यत्र नारी ।। अपच्यवमिति ।। च्युङ्गतावित्यतो ऋदोरबित्यप्प्रत्यये उपसर्गेणार्थविशेष इति भावः । नारीशब्दस्तदवयवलक्षक इति भावेनाह ।। तज्जघनेति ।। तस्यापीति ।। नारीजघनयुगलस्य । गतौ गमनकाले । ऊर्ध्वाधोगमनसद्भावादित्यर्थः । तथाच फलकयोरपच्यवं च कर्मकर्तृभूतं नारीजघनयुगलं शिक्षते उपादत्ते अनुकरोतीति पूर्वार्धाशयः । उत्तरार्धतात्पर्यमतिदिशति ।। तत्रेति ।। पूर्ववदिति शेषः ।। शिथिलत्वादिति ।। फलकयोर्गर्तोपरि स्थितत्वाच्छिथिलत्वमित्यर्थः ।। ततः प्रहारपर्यायेणेति ।। सोमकण्डनकाले ग्रावभिः प्रहारे अधोगमनं तदभावे ऊर्ध्वगमनमित्यर्थः । मूकसाधारणजिह्वायाः ज्ञानकारणत्वाभावादाह ।। वागिन्द्रियमिति ।। एवमिति ।। खलश्चोरुस्तथा देह इत्यत्रस्थ इत्यर्थः ।। यथासंभवमिति ।। वागिन्द्रियस्य ग्रावसादृश्यन्तु देहलक्षणोपलसंबन्धाद्वेदद्वारकवाग्योगस्यज्ञानाख्यसोमरसजनकत्वादभिषवसाम्यम् । देहस्य मनोरूपसोमाधारत्वादुलूखलसाम्यम् । मनसो ज्ञानाख्यरसोपादानत्वात् सोमलतासाम्यम् । ओष्ठयोर्वेदोच्चारणेन ज्ञानजननोपयोगात्फलकसाम्यमित्यूह्यमिति भावः ।। ऊर्ध्वं खमस्येतीति ।। खं अवकाश इत्यर्थः ।। बहोरिति ।। ऊर्ध्वमित्यत्र पूर्वाक्षरस्य ह्रस्वता ऊर्ध्वमित्यस्य लू इत्यादेशः खल इत्यत्र खशब्दात्परो लकारागम इति बहोरित्यर्थः ।। यत्र हीति ।। यस्यां भूमौ धान्यं स्वतृणात् वृषभसंचारेण पृथक्क्रियते तत्स्थलं खलशब्दवाच्यम् । तत्साम्यात्पाषाणदार्वादिमयं शाल्यादीनां वितुषीकरणसाधनमपि

(टीकाविवृतिः)

खलशब्दवाच्यमित्यर्थः । ननु मनस उद्देश्यत्वान्मनःसोम इतीरितमित्यपेक्षितमित्यत आह ।। सोम इति मन इति चेति ।। सर्वत्रान्वय इति ।। जिह्वाग्रावेत्यादाविति शेषः ।। दन्तवासोधरोप्योष्ठ इति धनंजयोक्तेःपुल्लिङ्गप्रतीतेःकथमोष्ठे उदीरिते इति नपुंसकप्रयोग इत्यत आह ।। ओष्ठशब्द इति ।। अर्धर्चाःपुंसि चेत्यनेनार्धर्चादेःपुंनपुंसकत्वविधानात्तस्याकृतिगणत्वादिति भावः ।। ३ ।।

यत्र मंथाम् ।। उलूखलस्येति शेष इति ।। उपलस्येत्यर्थः ।। द्रव्यान्तरेणेति ।। दार्ढ्याय द्रव्यान्तरेण फलकादिना विबध्नते इत्यन्वयः ।। मंथानमिति ।। दधिमथनसाधनं काष्ठमयं मंथानमित्यर्थः ।। यमितवा इवेति ।। यमुधातोस्तुमर्थे इति तवैप्रत्यये इडागमे च निष्पन्नयमित- वशब्दस्य इवशब्देन इवेन समासो विभक्त्यलोपःपूर्वपदप्रकृतिस्वरत्वं चेति वार्तिकेन समासे पूर्वपदप्रकृति स्वरत्वे च पूर्वपदस्याद्युदात्तांतोदात्तत्वं तवैचान्तश्च युगपदिति सूत्रेणानन्तरगतिप्रकृतिस्वरत्ववैप्रत्ययान्तो-दात्तत्व- विधानेपि प्रकृते गतेरभावात् गतिरनन्तर इत्यस्याननुवृत्त्याश्रयणेनधातोरपि प्रकृतिस्वर इति भावः । रश्मीनित्यस्य प्रत्यासत्त्या मंथसंबन्धमभिप्रेत्याह ।। मंथरश्मीनिति ।। प्रसिद्धत्वादश्वसंबन्धं चाश्रित्याह ।। यथा चेति ।। चस्त्वर्थ इति ।। तथा चान्यत्र तु देहे नाड्यो रश्मयो ज्ञेया इत्यन्वयः सूचितः ।। ४ ।।

यच्चिद्धि त्वम् ।। इयमुत्तरा चेति ।। ऋगिति शेषः । एते उलूखलदेवताके । देवतार्थे अणि ङीपि द्विवचने यणादेशः । यच्चिद्ध्यौ लूखल्यावित्यनुक्रान्तत्वादित्याशयः । अनुक्रमणिकायां यच्चिद्धीति ऋग्द्वयप्रतीकग्रहणं ज्ञेयम् । हि हेताववधारणे इत्यभिधानाश्रयेण श्रौतहिशब्दं व्याचष्टे ।। तेन कारणेनेति ।। केचिदिति ।। परे मौसल्यौ चेत्यनुक्रमणिकायां आयजीत्येतदृग्द्वयंमुसलदेवताकं चकारादुलूखलदेवताकं चेत्युक्तेरिति भावः ।। अधिषवण्योरिति ।। अधिषवण्याकृतेत्यत्र फलकयोः प्रकरणादायजी वनस्पती इत्यादिवचनविषयत्वोपपत्तेरेकत्वात् मुसलस्योलूखलस्य वा ग्रहणा योगादिति भावः ।। प्रार्थनादिसंभवार्थमिति ।। इन्द्रायमधुमत्सुतमिति प्रार्थनम् । आदिशब्दात् आयजी वाजसातमेति स्तुति सोमभक्षणे गृह्येते । ननु सोमस्यैकत्वात्फलकार्थकवनस्पतिशब्देन द्विवचनान्तेन कथं संबोधनमित्यत आह ।। अत्रापीति ।। तथा च सोमसोमामात्यौ वनस्पती इति द्विवचनान्तसंबोध्यावित्यर्थः ।। एवं पृथिव्या इति ।। सर्ववृक्षजनकत्वाधारत्वाभ्यामिति शेषः ।। एतेन प्राग्देहस्येति ।। प्राक्खलश्चोरुस्तथा देह इत्यत्र ।। इदानीमिति ।। गृहे इत्यनेन देहं गृहीत्वा तस्येति शेषः ।। एतेनेत्युक्तं विशदयति ।। पूर्वामिति ।। पूर्वऋक्चतुष्टये उलूखलशब्देनाचेतन-स्योक्तत्वात्सोमाख्यमनोधिकरणत्वेन देहो गृहीतः । अस्यामृचि तूलूखलशब्देन देवताया उक्तत्वात्तदाधारत्वेन गृह शब्देन देहो गृहीत इत्यविरोध इति भावः ।। ५ ।। २५ ।।

ऋक्संहिता पदपाठसहिता (सू-२८, व-२)

(३१८) उत स्म ते वनस्पते वातो वि वात्यग्रमित् ॥ अथो इन्द्राय पातवे सुनु सोममुलूखल ॥ ६ ॥

(प०) उत । स्म । ते । वनस्पते । वातः । वि । वाति । अग्रम् । इत् ॥ अथोइति । इन्द्राय । पातवे । सुनु । सोमम् । उलूखल ॥६॥

(३१९) आयजी वाजसातमा ता ह्यु१च्चा विजर्भृतः । हरी इवान्धांसि बप्सता ॥ ७ ॥

(प०) आयजीइत्यायजी । वाजऽसातमा । ता । हि । उच्चा । विऽजर्भृतः ॥ हरीइवेतिहरीऽइव । अन्धांसि । बप्सता ॥ ७ ॥

(३२०) ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः ॥ इन्द्राय मधुमत्सुतम् ॥ ८ ॥

(प०) ता । नः । अद्य । वनस्पतीइति । ऋष्वौ । ऋष्वेभिः । सोतृऽभिः ॥ इन्द्राय । मधुऽमत् । सुतम् ॥ ८ ॥

(३२१) उच्छिष्टं चम्वोर्भर सोमं पवित्र आसृज ॥ नि धेहि गोरधित्वचि ॥ ९, २६, २८ ॥

(प०) उत् । शिष्टम् । चम्वोः । भर । सोमम् । पवित्रे । आ । सृज ॥ नि । धेहि । गोः । अधि । त्वचि ॥ ९, २६, २८ ॥

ऋग्भाष्यम्

वृक्षाग्र एवतु । वा युर्वातिवनानां वाभजनीयदिवौकसाम् । पतिर्विष्णुस्तु तस्याग्रे वायुर्देवो हि गच्छति । पातवे स्वस्य सोमं वा मनो वासुनु विष्णवे ॥ ६ ॥ आयाज्यावन्नलब्धॄणामुत्तमावतिभक्षकौ । जहभक्षण इत्यस्माद्यथाश्वावन्नभक्षकौ । सोमस्य भक्षकावत्र ॥ ७ ॥ ऋष्वावतिमहत्तरौ । महद्भिः सोतृभिः सोममिन्द्राय मधुमत्सुतम् ॥ ८ ॥ सोममुत्पवनायैतं द्रोणोपरि पवित्रके । भरशिष्टं च मसयोर्ऋजीषं गोरधित्वचि । भरेत्यात्मानमेवाह स्वान्तर्यामिणमेववा । शिरोभेदौ तु चमसौ द्रोणं

(ऋग्भाष्यम्)

चोदरमीरितम् । पवित्रं बुद्धिरेवात्र मनः शुद्धिस्तया यतः । मुखचर्मैव गोचर्म मन एतेषु विष्णवि । धार्यम् ॥ ९, २६, ९ ॥

## ऋग्भाष्यटीका

उतस्म । वृक्षाग्रे । हे वनस्पते उलूखल । वात उत वायुस्तु वायुरपि । ते अग्रमित् त्वदभिमतवृक्षाग्र एव । विवाति विविधं वाति स्म । एतत् घटनार्थं च प्राग्वृक्षाणामपीत्युक्तम् । विष्णौ पूर्वार्धतात्पर्यमाह ॥ वनानामिति । विष्णुस्तु वनानां प्रसिद्धानां भजनीयत्वेन वनशब्दार्थानां दिवौकसां वा पतिः । तस्माद्वनस्पतिरिति शेषः । वनतेः कर्मण्यकारः । देव इति प्रसिद्धवायुव्युदासार्थम् । अग्रे गच्छतीति सेवक इति यावत् । यत एवमिन्द्रः स्वीयेन वातेन त्वदीय वृक्षाग्रमेव चालयति न तून्मूलयति । अथो तस्मादिन्द्रेणोपकृतत्वादिति देवतान्तरे । विष्णौ तु यत एवं त्वमतिसमर्थः अथो तस्मादिन्द्राय प्रसिद्धाय विष्णवे च । षष्ठ्यर्थे चतुर्थी । विष्णुं प्रति तु स्वस्य पातवे पानाय । सोमं वा प्रसिद्धं बाह्ये अध्यात्मं मनो वा । सुनु ॥ ६ ॥

आयजी ॥ द्वेफलकदेवताके इत्युक्तम् । आयाज्यौ । आयजी कर्मणीकारः । आयाज्यौ सम्यग्याज्यौ । वाजसातमा वाजमन्नं सनुत इति वाजसौ । जनसनखनक्रमगमो विट् । अतिशयेन वाजसौ वाजसातमौ । अन्नलब्धॄणामुत्तमौ । उच्चा उत्कृष्टौ । ता तौ फलकौ । विजर्भृतोहि विशेषेण भक्षयतो हि । अतिभक्षकौ वर्तेते । कथमिदं लभ्यत इत्यत आह ॥ जहेति । अस्मात्प्रथमपुरुषद्विवचने हकारस्य भकारे रमागमे बहुलग्रहणादकारे च विकरणे कृते सतीदं रूपं सिध्यतीत्यर्थः । काविव हरी इव । अश्वौ इन्द्रस्येति शेषः । यथाधांस्यन्नानि बप्सता बप्सन्तौ । अत्तिकर्मायम् । अन्नभक्षकौ तथा । ननु हरी धाना ऋजीषादेरंधसो भक्षकौ प्रसिद्धौ फलकयोस्तु कथं व्याख्यानमित्यत आह ॥ सोमस्येति । सवनकाले सोमस्य भक्षकाविति अत्र फलकविषये व्याख्येयमित्यर्थः ॥ ७ ॥

तानः । ऋष्वौ । हे ऋष्वावतिमहत्तरौ वनस्पती । ता तावुक्तस्वरूपौ युवाम् । ऋष्वेभिः महद्भिः सोतृभिः सहेन्द्राय । नोस्मदीयम् । मधुमत् स्वादुयुक्तम् । सोममिति शेषः । सुतं सुनुतम् । यद्यप्यृष्वशब्दो महन्नामैव तथापि सोतॄणां महत्त्ववद्देवतामहत्त्वं न भवतीति प्रदर्शनायातिमहत्तरा वित्युक्तम् ॥ ८ ॥

उच्छिष्टम् ॥ प्रजापतेर्हरिश्चन्द्रस्यांत्या चर्मप्रशंसा वेति केचित् । तदसत् । अप्रतिभासनात् । सोमस्यैव संस्कार्यतया प्राधान्यप्रतीतेश्च । अतः सोमोत्रदेवतेति गम्यते । सोमम् । एतं सोमम् । उत् उत्पवनाय । पवित्रे द्रोणोपरिपवित्रके द्रोणकलशस्योपरि स्थिते पवित्रे । आसृज विसृज । शिष्टं सोमं चम्वोश्चमसयोः । भर पूरय । गोरधित्वचि चर्मण उपरिनिधेहि स्थापय । सोमस्य चर्मणि निधानस्याप्रसिद्धत्वादृजीषमिति शेषः ।

(ऋग्भाष्यटीका)

**यद्यप्यत्रैतमिति द्रोणोपरीति च नास्ति। तथाप्यथैनन्द्रोण कलशमभ्यवनिना योच्छिष्टं चम्वोर्भरेत्येतयर्चेति ब्राह्मणस्मरणायोक्तम्। तेनापि सोम एवात्र देवतेति सिद्ध्यति। अत एव बृहद्देवताकार आह सोममंत्या प्रशंसतीति। नन्वत्र भर सृज निधेहीति कं प्रत्युच्यत इत्यत आह॥ भरेति। उपलक्षणमेतत्। अन्यस्याभावादिति भावः। अध्यात्मं चमसादिशब्दाभिधेयमाह॥ शिर इति। इदं तच्छिर इति हि श्रुतिः। उदरशब्देन हृदयमुपलक्ष्यते। तत्र हि सोमशब्दस्य मनसः प्राचुर्येण वृत्तिः। सोम शुद्धिहेतोः पवित्रस्य बुद्धेश्च साम्योपपादनं मनः शुद्धिस्तयायत इति। गो शब्दावाङ्खेस्तीति मुखचर्मैव गोचर्म। एतेषु सोमस्य भरणादिकं व्याख्याति। मन इति। एतेष्वाधारेषु स्थित इति शेषः। अस्मिन्पक्षे निधेहीत्यत्रापि सोमस्यैव कर्मत्वम्। विष्णवीति प्रयुंजानो वेदतुल्यत्वं भाष्यस्य सूचयति॥ ९, २६॥**

## मन्त्रार्थमञ्जरी

(हे) वनस्पते, वनानां वृक्षाणां पते, पारस्करादित्वात्सुट्। उलूखल। वातः उत, वायुरपि। ते अग्रम् इत्, त्वदभिमन्यमानवृक्षाग्र एव। वि वाति, विविधं वाति। स्म। यत एवमिन्द्रः स्वीयेन वातेन त्वदीयवृक्षाग्रमेव चालयति अथो, तस्मात्, इन्द्रेणोपकृतत्वात्। इन्द्राय, षष्ठ्यर्थे चतुर्थी, प्रसिद्धेन्द्रस्य। पातवे, पानाय। सोमम्। सुनु, अभिषुणु। यद्वा वनस्पते, वनतेः कर्मण्यकारः, (वनानां) वननीयानां भजनीयानां देवानां पते। (हे) उलूखल, उलूखल देवतान्तर्गत हरे। वातः उत, वायुरपि। ते अग्रम्, इत्, त्वदग्र एव। वि वाति, विविधं धावति, त्वत्सेवकः सन् गच्छति। स्म। यत एवं त्वमतिसमर्थः। अथो, तस्मात्। इन्द्राय, इन्द्रस्य, विष्णोः। पातवे। सोमम्, अध्यात्मम् मनः। सुनु– इत्यर्थः। उलूखलो देहाभिमानिस्थः॥ ६॥

इयम् उत्तरा च फलकदेवताके गायत्र्यौ। आयजी, आङ्पूर्वस्य यजतेः कर्मणीकारः, आयाज्यौ, सम्यग्याज्यौ। वाजसातमा, वाजमन्नं सनुत इति वाजसौ, 'जनसनखनक्रमगमो विट्' 'विड्वनोरनुनासिकस्य' इत्यनुनासिकस्यात्त्वम्, अतिशयेन वाजसौ वाजसातमौ, अन्नलब्धॄणामुत्तमौ। उच्चा, उत्कृष्टौ। ता, तौ, फलकौ, तदभिमानिनौ सोमवनस्पती। विजर्भृतः हि, विशेषेण भक्षयतो हि, सोमाभिषवकालेऽतिभक्षकौ वर्तेते, 'जह भक्षणे' इत्यतो हकारस्य भकारे रमागमे बहुलग्रहणाद्दकाररूपे च विकरणे कृते 'विजर्भृतः' इति रूपम्। तत्र दृष्टान्तः हरीइव, इन्द्रस्याश्वौ यथा। अन्धांसि, अन्नादीनि। बप्सता, बप्सतौ भक्षयन्तौ, तथा– इति, 'बप्स उदने' इत्यतः शतृ, यद्वा– 'प्सा अदने' श्लुविकरणम्, द्विर्वचनम्, शत्रन्तम्॥ ७॥

(मन्त्रार्थमञ्जरी)

(हे) ऋष्वौ, अतिमहत्तरौ। वनस्पती, सोमतदमात्यौ। ता, तौ, उक्तस्वरूपौ युवाम्। ऋष्वेभिः, महद्भिः। सोतृभिः, अभिषवकर्तृभिः सह। इन्द्राय। नः, अस्मदीयम्। मधुमत्, स्वादुयुक्तम्। (सोमम्) इति शेषः। सुतम्, सुनुतम्॥ ८॥

सौमी गायत्रीयम् ऋक्। (एतम्) सोमम्। उत्, उत्पवनाय। पवित्रे, द्रोणकलशस्योपरिस्थितपवित्रे। आ सृज, विसृज। शिष्टम् (सोमम्) चम्वोः, चमसयोः। भर, पूरय। गोः। अधि त्वचि, चर्मण उपरि। (ऋजीषम्) इति शेषः। नि धेहि, स्थापय– इत्यृषिरात्मानं प्रति वा स्वान्तर्यामिणं प्रति वाह– इति ज्ञेयम्। अध्यात्मं तु (एतम्) सोमम्, मनः। उत्, उत्पवनाय, शोधनार्थम्। पवित्रे, बुद्धौ। आ सृज। शिष्टम्। (सोमम्), मनोवृत्तिविशेषम्। चम्वोः, चमसशब्दितशिरोभेदयोः। भर, 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ० उ० ४।२।३) इति श्रुतेः। गोः अधि त्वचि, मुखचर्मणि, गोपदस्य वाक्पर्यायतयात्र मुखं गोपदार्थः। (ऋजीषम्) ऋजीषस्थानीयं मनोवृत्तिविशेषम्। नि धेहि, बुद्ध्यादिस्थानेषु स्थिते हरौ मनो निवेशयेति तात्पर्यार्थः॥ ९॥ इति षड्विंशो वर्गः॥ २६॥ अष्टाविंशं सूक्तम्॥ २८॥

## रूपावतारः

उतस्म ते॥ एतद्धटनार्थं चेति। ते अग्रमित् इत्येतद्धटनार्थं उलूखलदेवस्य वृक्षदेवत्वमुक्तम्। ततश्च त्वदभिमतवृक्षाग्रे वायुर्वातीत्यर्थो लभ्यत इति भावः। कर्मण्यकार इति। पारस्करादित्वात्सुडित्यपि द्रष्टव्यम्॥ ६॥

आयजी॥ वाजसेति रूपसिद्धिं स्मारयति। जन सनेति। वाजशब्दोपपदात् षणु लाभ इत्यस्मात् विट्प्रत्यये तस्य सर्वापहारिलोपे 'विड्वनोरनुनासिकस्यात्' इति नकारस्यात्वे सवर्णदीर्घे वाजसेति रूपमिति ज्ञेयम्। बहुलग्रहणादिति 'व्यत्ययो बहुलम्' इत्यत्र बहुलग्रहणात्। विकरणस्य ऋकारादेशे कृते विजर्भृत इति रूपमिति भावः॥ ७॥

ता नः॥ सुतमिति। विकरणस्य श्नुप्रत्ययस्य छान्दसे लोपे सुतमिति रूपम्॥ ८॥

उच्छिष्टम्॥ अधित्वचीत्यत्वच उपरीत्यर्थे उक्तचर्मण उपरीत्यर्थो लभ्यत इति भावेनाह। चर्मण उपरीति। यद्यपीति अत्र अस्यां ऋचि। एतमिति द्रोणोपरीति च नास्तीति सोमं पवित्रे आसृजेत्येव व्याख्यानं कर्तव्यमिति भावः। सोमस्य देवतात्वं ब्राह्मणवाक्यपर्यालोचनयापि सिद्धमित्याह। तेनापीति। उपलक्षणमेतदिति। भरेत्यात्मानमेवाहेति भाष्यस्थं भरेति पदमुपलक्षणम्। आसृज

(रूपावतारः)

निधेहीत्यपि ग्राह्यम्। ततश्च भरेत्यात्मानमेवाह। आसृजेत्यात्मानमेवाह निधेहीत्यात्मानमेवाहेति भाष्ययोजनेति भावः। आत्मनमाहेति कुतः कल्प्यत इत्यत आह अन्यस्येति। संबोध्यस्येति शेषः। स्थित इति शेष इति एतेष्वाधारेषु स्थिते विष्णवि मनो धार्यमिति भाष्ययोजनेति भावः। अस्मिन्पक्ष इति। अध्यात्मपक्षे ऋजीषाभावात् सोमं निधेहीत्येव श्रुतियोजनेति भावः। वेदतुल्यत्वमिति। यत्सोममिन्द्रविष्णवीति वेदे प्रयोगदर्शनादिति भावः॥ ९॥ २६॥ ९॥

## पदार्थप्रकाशिका

उतस्मतेवनस्पते। एतद्धटनार्थं चेति। न केवलं सोमस्य तद्गतस्य विष्णोश्च कथं वनस्पतित्वमित्याशङ्कापरिहारायैव वृक्षाणामपि सोमोविष्णुश्चेति भाष्यं प्रवृत्तम्। किं नाम वृक्षाणां वनस्पत्यभिमन्यमानत्वघटनार्थं चेत्यर्थः। तथाच पृथिवीसोमामात्य योरुलूखलदेवतात्वात्तयोरेव वृक्षाभिमानिदेवतात्वेनोक्तत्वात् हे उलूखल पृथिवीसोमामात्यवा त्वदभिमतवृक्षाग्र एव वायुर्वातीत्युपपद्यत इति भावः। प्रसिद्धमिति। वृक्षसमुदायरूपवनानामित्यर्थः। भजनीयदि-वौकसाम् इत्येतदेकं पदमभिप्रेत्य व्याख्याति। भजनीयत्वेत्यादिना। वनतेरिति। वनषण सम्भक्तावित्यस्मात्कर्मण्यप्रत्यये वनेति रूपमित्यर्थः। तथाच वन्यन्त इति वनाः इत्यर्थो द्रष्टव्यः। प्रसिद्धवाय्विति। वयः प्रत्यहं वाति प्रवहः तद्व्युदासार्थमित्यर्थः। तथाच प्रधानवायुरत्र विवक्षित इत्याशयः।

स्वीयेन वातेनेति। स्वभृत्यभूतेन प्रवहवायुनेत्यर्थः। उपकृतत्वादिति। स्वभत्येन त्वदभिमतं वृक्षं नोन्मूलयतीति यत् स एवेन्द्रकृतोपकारस्तवेति भावः। देवतांतरे। पृथिवीसोमामा-त्ययोर्वनस्पतिशब्दोक्तो उलूखलदेवतात्वविविक्षापक्षे। अतिसमर्थ इति। प्रधानवायुरूप-सेवकवत्वादिति भावः। इन्द्रविष्णुपक्षे क्रमेणेन्द्रायेत्यस्यार्थमाह। इन्द्राय प्रसिद्धायेत्यादिना। ननु कृतीति कृद्योगे षष्ठ्याः विधानात् पातव इत्यस्य पातुमित्यर्थकत्वेन तुमनः कृत्वात्तद्योगे षष्ठ्या भाव्यम्। अतः कथमिन्द्रायेति चतुर्थीत्यत आह। षष्ठ्यर्थ इति। अहल्यायै जारेतिवदित्यर्थः। मनः सुन्विति। त्वद्विषयवेदार्थविचाररूपेण मनोरूपसोमस्य खण्डनेन जन्यं ज्ञानरसं पिब तद्विषयो भव तेन तृप्तो भवेति तात्पर्यार्थो द्रष्टव्यः॥ ६॥

आयजी वाजसातमा। इत्युक्तमिति। सोमो वा तद्गतविष्णुर्वा श्रुतफलकदेवतेत्यनेन यजीत्यादि ऋगृद्वयस्य फलकदेवताप्रार्थनरूपत्वेन त देवताकत्वमुक्तमित्यर्थः। कर्मणीकारप्रत्यय इति। आङ्पूर्वकात् यजधातोः कर्मणीकारप्रत्यये आयजी इति रूपम्। तथाच आ सम्यक् इज्यत इति

(पदार्थप्रकाशिका)

आयजी। तस्यार्थकथनमायाज्या इति। सनुत इति। यद्यपि षण् दानार्थः। तथाप्यत्र लाभार्थः। अत एवान्नलब्धॄणामित्युक्तम्। सनुते लभत इत्यर्थः। ननु वाजं सनुत इति वाजसनाविति स्यात्। न तु वाजसाविति तत्राह। जनसनेति। एतेषां धातूनां विट्प्रत्ययो भवतीति सूत्रार्थः। तथाच वाजशब्दोपपदात् षणलाभ इत्यस्मात् धातोर्जनसनेति विट्प्रत्यये विटि परे विडनोरनुनासिकस्येति णकारस्याकारे धात्वादेः षस्य सत्वे विटः सर्वस्यापि क्विब्बलोपे वाजसाशब्दः सोमपा-शब्दवदाकारातः सिध्यति। तस्येदं द्विवचनं वाजसाविति।

कथमिदमिति। विजर्भृत इत्यस्मात् शब्दादतिभक्षकावित्यर्थः कथं लभ्यत इत्यर्थः। अस्मादिति। विपूर्वकादिति शेषः। प्रथमपुरुषद्विवचन इति। तसुप्रत्यये पर इत्यर्थः। तथाच विपूर्वकात् जहभक्षण इत्यस्माद्धातोः प्रथमपुरुषद्विवचने तसुप्रत्यये हकारस्य भकारे गमेर्मित्वात् अंत्याच् यो जकारस्थाकारस्तस्मात् परतो जाते विजभृतस् इति जाते ऋकाररूपो विकरणो यद्यपि शास्त्रे अप्रसिद्धस्तथापि बहुलं छन्दसीति सूत्रे बहुलग्रहणात् ऋकाररूपे विकरणे भृइत्यस्याद्धातोर्जाते सस्य रुत्वे विसर्गे च सति विजर्भृत इति रूपं सिध्यतीति द्रष्टव्यम्। यद्यपि ग्रहोर्भछन्दसीति सूत्रात् हृञ्हरणे ग्रह उपादान इति धातुद्वयसम्बन्धिहकारस्यैव भकारो विहितो न तु जहधातुहकारस्य। तथापि बहुलग्रहणात् प्रयोगवशात् च जहधातुहकारस्यापि भकारो भवतीति द्रष्टव्यम्। अन्नभक्षकाविति व्याख्यानोपपादनायाह। अतिकर्मायमिति। कर्मशब्दोऽत्र विषयपरः। तथाचायं बप्सुधातुरदनकर्मा। अदनविषयक ओदनार्थक इत्यर्थः। धानाऋजीषादेरंधस इति। धानाश्रणकाद्याः। तद्रूपस्यांधसः तथा सोमखंण्डनानन्तरं निःसारं यत् वल्कलवशिष्यते तत् ऋजीषमित्युच्यते इति उत्तरत्र स्पष्टत्वात्तदादेरंधस इत्यर्थः। फलकयोस्तु कथमिति। अचेतनयोः फलकयोर्भक्षकत्वमसम्भावितमित्यर्थः। भक्षणकर्माऽप्यत्र किमिति भावः। अत्रेत्यस्यार्थ-द्वयमभिप्रेत्याह। सवनकाल इति। सोमखण्डनकाल इत्यर्थः। तथाच फलक़ाभ्यां सोमखण्डनकाले फलकयोरसन्नेयो भवति। तदपेक्षया भक्षकाविति उपचरितमित्याशयः॥ ७॥

तानो अद्य वनस्पतीति। फलकावित्यर्थः। उक्तस्वरूपाविति। अयोज्यत्वादिधर्मवन्तावित्यर्थः। स्तोतृभिरिति। सोमखण्डनं कुर्वद्भिः ऋत्विग्भिरित्यर्थः। स्वादुयुक्तमिति। स्वादुरसयुक्तमित्यर्थः। षूञ्अभिषवणे इति धातुमभिप्रेत्याह। सुतं सुनुतमिति। खण्डनं कुरुत इत्यर्थः। ननु ऋष्वशब्दस्य महन्नामसु पठितत्वेन ऋष्वौ महान्तौ इत्येव वक्तव्यम्। अत एव ऋष्वेभिरिति एतत् महद्भिरित्येव व्याख्यातम्। अतो अतिमहत्तराविति कथमभाषयदित्याशङ्क्याह। यद्यपीत्यादिना। स्तोतृणां

(पदार्थप्रकाशिका)

महत्ववदिति। नहि स्तोतृणां पुरुषाणाम् ऋत्विजां महत्वं देवानां महत्वं चैकप्रकारमिति वक्तुं युक्तमिति भावः ॥ ८ ॥

उच्छिष्टं चम्वोरिति । यास्कोक्तानुक्रमणिकामनूद्य दूषयति । प्रजापतिरिति । अंत्या-उच्छिष्टमिति। ऋक् हरिश्चन्द्रस्य तन्नाम्नः प्रजापते राज्ञः प्रातिपदिकचर्मप्रशंसा । गोस्त्व-चीत्युक्तत्वात् गोचर्मप्रशंसावेवेत्यनुक्रमणिकार्थः। अप्रतिभासनादिति। हरिश्चन्द्र श्रुतौ लिङ्गादेर-भावेन तस्य सर्वथाप्रतिपाद्यत्वेनाप्रतिभासनात्। गोचर्मणः प्रतिभानेपि त्वचीति सप्तम्यां तस्य चमसादिपात्रसाधारण्येनाधारत्वेनैव प्रतीतेर्देवता त्वेनाप्रतिभासनात्तयोः देवतात्वं कथमुक्तमित्यर्थः। संस्कार्यतयेति । उत् उत्पवनाय सोमं पवित्र आसृजेति उत्पवनादिसंस्कार्यत्वप्रतीतेरित्यर्थः । द्रोणकलशस्येति। तन्नामककलशस्येत्यर्थः। पवित्र इति। सोमखण्डनानन्तरम् ऋजीषादिकं विहाय पात्रतः शुद्धरस एव पूरणीयो भवति। तदर्थं पात्रान्तः यथा शुद्धरस एव पतेत् न ऋजीषं तथा शोधनाय सूक्ष्मो वस्त्रविशेषः पात्रोपरि स्थाप्यते। स पवित्रशब्देनोच्यत इति सम्प्रदायविदः। तथाच पवित्रेण रसं संशोध्य द्रोणपात्रे सम्पूर्य पश्चात् दूर्वारसमयपवित्रेणोत्पवनं कार्यमिति भावः।

शिष्टमिति। द्रोणकलशपरिपूर्त्यनन्तरं शिष्टसोमरसमित्यर्थः। चमसयोर्भरेति। तत्पात्रद्वयोपर्यपि पवित्रम् अवस्थाप्य तेन रसं संशोधयित्वा पूरयेत्यर्थः। अप्रसिद्धत्वादिति। याज्ञिकप्रसिध्यभावात् गोचर्मणि सोम रसस्यावस्थानासम्भवाच्चेत्यर्थः। शेष इति। ऋचि भाष्येद्भिः पूरित इत्यर्थः। अत्रेति ऋचीत्यर्थः। तथाच भाष्यकारस्तत्पदद्वयम् अधिकं किमर्थं स्थापितवानित्यर्थः। एतमिति। एतं सोमद्रोणकलशम् अभि प्रति अवनिनायेत्यर्थः । तथाचास्य सोमस्य द्रोणकलशं प्रत्यानयने उच्छिष्टमिति मन्त्रस्य ब्राह्मणेन नियोजितत्वात्तदनुसारेण भाष्ये एतं द्रोणोपरीति पदद्वयं प्रक्षिप्य व्याख्यातमिति भावः । तेनापीति । सोमानयन एव उच्छिष्टमिति मन्त्रं विनियोजयता ब्राह्मणेनापीत्यर्थः। सोम एवेति। न हरिश्चन्द्रो गोचर्म वेत्यर्थः। तथाच अनुक्रमणिकाकारस्य ब्राह्मणविरोधोऽपि स्यादिति भावः। अत एवेति। हरिश्चन्द्रादेः प्रतिपाद्यत्वं न प्रतिभासते। सोमस्यैव प्राधान्यं च प्रतीयते। ब्राह्मणानुकूल्यं च यतोऽत एवेत्यर्थः। सोममिति। अंत्या उच्छिष्टमिति ऋक् सोमं प्रशंसतीत्यर्थः। तथाच सोम एवात्र देवतेति तस्यापि सम्मतमिति भावः।

ननु भाष्यकारेण भरेत्येतत् स्वात्मानं स्वान्तर्यामिणं वा प्रत्युच्यत इत्युक्तम्। नतु सृजनि धेहीत्येतदत आह। उपलक्षणमेतदिति। भाष्ये भरेत्येतत् सृजनिधेहीत्यनयोरुप लक्षकमतस्तदपि स्वात्मानं प्रत्येवोच्यते शुनःशेपेनेत्यवगन्तव्यमिति भावः। ननु स्वात्मस्वांत्मान्तर्यामिणोरेव

(पदार्थप्रकाशिका)

सम्बोध्यत्वं कुतः कल्पनीयमित्यत आह । अन्यस्येति । भरेत्यादिना सम्बोध्यस्यान्यस्याभावात्स्वात्मान्तर्यामिणोरेव सम्बोध्यत्वं सिध्यतीत्यर्थः । भाष्ये शिरोभेदे द्वौ शिरोभागविशेषावित्यर्थः । चमसशब्दस्य शिरोवाचकत्वे प्रमाणमाह । इदं तच्छिर इति हीति । इदं तच्छिरः एषह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः इति श्रुतेरयमर्थः । अर्वाग्बिलश्चमस ऊर्ध्वः इति व्याख्येयमन्यदुक्तं तदिदं प्रतीयमानं शिरः कुतः यत एव चमसोऽर्वाग्बिलः ऊर्ध्वबुध्नः प्रसिद्धशिरोपि तादृशं अतश्चमसत्वमिति ।

ननु उदरस्य कथं द्रोणत्वम् । द्रोणस्य सोमरसावस्थानाधिकरणत्वं प्रसिद्धम् । नह्यध्यात्मम् । सोमस्थानीयस्य मनसोऽवस्थानम् उदरेऽस्ति । येन तस्य द्रोणात्वोपपत्तिः । हृदय एव हृदयान्मनो मनसश्चन्द्रमा इति श्रुतेः मनसो हृदयगोलकस्थितत्वावगमादतः कथं द्रोणं चोदरमीरितमित्मुक्तमत आह । उदरशब्देनेति । हृदयादधो नाभेरूर्ध्वस्थितो भागविशेषः उदरशब्देनोच्यते । उदरादूर्ध्वभागस्तु हृदयमित्युच्यते । तथाच उदरशब्देन हृदयोपलक्षणायां मुख्यार्थानुपपत्तिं दर्शयति । तत्र हीति । हृदय इत्यर्थः । सोमशब्दस्य । सोमशब्दवाच्यस्य । ननु मनसश्चक्षुरादीन्द्रियेषु प्रसिद्धेस्तेष्वेवावस्थानं हृदय इत्युक्तम् । प्राचुर्येणेति । हृदयान्मन इति श्रुतेः मनोरूपेन्द्रियावस्थानं हृदयरूपावस्थान एव प्राचुर्येणास्ति । चक्षुरादिषु संचरणं च कादाचित्कमिति भावः । शुद्धिः शोधनम् । पवित्रस्य वस्त्रविशेषस्य ।

ननु गोचर्मशब्देन मुखचर्म कथं ग्राह्यमित्यतो लक्षणयेत्याशयेन तद्बीजसम्बन्धं दर्शयति । गोशब्दावाक् मुखे स्तीति । मुखं चर्मैव गोचर्मेति । गोशब्दो वाचकत्वेनास्यास्तीति गोशब्दः गोशब्दवाच्येत्यर्थः । एतादृशी वाक् मुखे वर्तते । वाग्व्यवहारकरणभूतं वागिन्द्रियं मुखे वर्तत इति यावत् । इति हेतोर्लक्षणया गोशब्देन मुखं गृह्यते । तथाच गोरधित्वचीत्यत्र गोचर्मशब्देन मुखचर्मग्रहणं युक्तमित्यर्थः । गोशब्दो वा वाङ्मुखेऽस्तीत्यपि पाठः । तत्र वाङ्मुखे वाक् प्रभृतिष्वपीत्यर्थः । नन्वयुक्तमेतत् । यदि गोशब्दो मुखवाची स्यात्तदा गोचर्मेत्युक्तं मुखचर्म स्यान्नह्येवं गोशब्दो वाङ्मुख इति वाग्वाचितयोक्तत्वादिति चेन्न । अत्र वाङ्मुख इत्यत्र वाक्शब्देन वागिन्द्रियाधिष्ठानभूतमुखस्यैवात्र लक्षणया ग्रहादित्याहुः । अन्येतुमुखशब्दस्य प्रभृत्यर्थकत्वेनोक्तत्वात् मुखमित्यपि ग्राह्यम् । तथाच गोशब्दवाचि मुखे चास्तीति हेतोर्मुखचर्मैव गोचर्मेत्यर्थ इत्याहुः । गोशब्दोवाङ्मुखे गवाधिष्ठानभूते मुखे लक्षणयास्तीति मुखचर्मैव गोचर्मेत्यर्थ इति प्रतिभाति । मरणादिकमित्यत्रादिपदेन आसर्जविधानविधानयोर्ग्रहणम् । एतेष्वाधारेष्विति ।

(पदार्थप्रकाशिका)

चमसद्रोणगोचर्मस्थानीयेषु शिरोभेदहृदयमुखचर्मरूपेष्वाधारेषु स्थिते विष्णौ सोमस्थानीयं मनो धार्यमित्यर्थः । बाह्ये सोमरसस्य चर्मणि निधानस्यासम्भवादजीषमिति शेषपूरणेन व्याख्यानं कृतम्। अध्यात्मं तु मनोलक्षणस्य सोमस्य मुखचर्मस्थिते विष्णौ विधानसम्भवेनानुपपत्य-भावान्निधेहीत्यत्रापि भरणसर्जनयोरिव सोमस्यैव साक्षात् कर्मत्वमवगन्तव्यमित्याह। अस्मिन् पक्ष इति। अध्यात्मयोजनापक्ष इत्यर्थः। ननु विष्णुशब्दस्य सप्तमी विष्णाविति भवेत् नतु विष्णवीति तत्राह। विष्णवीतिप्रयुंजान इति। वेदेति। मदे सुतस्य विष्णवीति प्रयोगात् इति भावः ॥ ९,२६ ॥

## पदार्थदीपिका

कर्मणीति ॥ वन्यत इति वेना इति कर्मणीत्यर्थः। पारस्करादित्वात् सुडिति भावः ॥ पातव इति कृद्योगे षष्ठ्या भवितव्यम्। कर्तृकर्मणोः कृतीति अनुशासनादित्याह ॥ षष्ठ्यर्थ इति ॥ षष्ठी च न कर्मणि। विष्णोः पानकर्तृत्वेन कर्मत्वाभावादित्याह ॥ विष्णुं प्रतीति ॥ विष्णोः कर्तृत्वे किमस्य कर्मेत्यत आह ॥ स्वस्येति ॥ त्वदभिमन्यमानसोमस्येत्यर्थः ॥ पातव इति ॥ पा पाने । तुमर्थे सेसेनिति तवेन्प्रत्यय इति भावः ॥ सुन्विति ॥ उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुगिति भावः ॥६॥

विडिति ॥ षणदान इत्यस्मात् इति शेषः । विड्वनोरनुनासिकस्यादित्यात्वमिति भावः ॥ विजर्भृत इति ॥ विशेषेण भक्षकौ अतिभक्षकौ इति व्याख्यातं तदसत् । शब्दार्थनिरुक्ता-वुक्तार्थालाभात्। तथाहि हृञ् हरणे। अस्माद्यङ्लुकि अभ्यास हलादिशेषोरदत्वजश्त्वेषु कृतेषु रुग्रिकौ च लुकीति रुगागमः। ततः प्रत्त्ययलक्षणे धातुसंज्ञायां लिटि द्विवचने तस्। अदादिवच्चेति वचनात् शपो लुक्। गुणे प्राप्ते ङिति चेति निषेधः। हृग्रहोर्भश्छन्दसीति भत्वम्। तेन विजर्भृत इति अभिमतरूपसिद्धिः । तथा च पुनः पुनः विशेषेण विहारं कुरुत इत्येव परभाष्यरीत्या व्याख्येयमित्यभिप्रेत्य शङ्कते ॥ कथमिदं लभ्यत इति ॥ ऋकारे च विकरणे कृते सतीति ॥ विकरणस्य शपो बहुलग्रहणात् दकारे सतीत्यर्थः । ॥ अन्नानीति ॥ चणकादीनीत्यर्थः ॥ बप्सतेति ॥ भस लक्षणे। अस्माल्लटः शत्रादेशः। जुहोत्यादित्वात् श्लुः। द्विर्भावहलादिशेषजस्त्वेषु वसिभसोर्ह-शिचेत्युपधालोपः। नाभ्यस्तादिति नुम् प्रतिषेध इति भावः ॥ ७ ॥

सुतं सुनुतमिति ॥ बहुलं छन्दसीति श्लुविकरणस्य लुगिति भावः ॥ ८ ॥

सोमस्येति प्रक्षेपे सत्यवशिष्टं सोमं गोस्त्वचि आनड्। हे चर्मणि अधिनिधेहीति कश्चित् व्याख्यातवान् । तदसत् । सोमस्य चर्मणि निधानस्याप्रसिद्धत्वेन तस्य चर्मोपरि निधाने

(पदार्थदीपिका)

कर्मत्वायोगात् । तथासति चर्मोपरि निधाने कर्मभावप्रसक्तिरिति न वाच्यम् । ऋजीषस्यैव तत्सम्भवात् इति भावेन ऋजीषं गोरधित्वचीत्यनेन ऋचि भाष्यकारेण ऋजीषमिति शेषः पूरित इति भावः । देहीत्यत्र घ्वसोरेद्धावभ्यासलोपश्च इत्यभ्यासलोप इति भावः ।। उपलक्षणमेतदिति ।। भरेत्यात्मानमाहेत्युपलक्षणम् । आसृजा निधेहि इत्यपि आत्मानमेवाहेत्यपि द्रष्टव्यम् । आत्मानमेवेत्यवधारणे हेतुभूतां युक्तिमाह ।। अन्यस्येति ।। ननु गोचर्मशब्देन कथं मुखचर्मग्रहणमित्यत आह ।। गोशब्द इति ।। गंगाशब्दार्थभूतप्रवाहसम्बन्धात्तीरस्य लक्षणया गंगाशब्दार्थवत् गोशब्दार्थभूतवाचि मुखे विद्यमानत्वेन गोशब्दार्थवाक् सम्बंधित्वात् मुखस्यापि लक्षणया गोशब्दार्थत्वमिति भावः । योजना तु मुखचर्मैव गोचर्म, मुखस्य गोशब्दार्थत्वात् इति भावः । कथं तस्य गोशब्दार्थत्वमित्यतो लक्षणयेति भावेन लक्षणायाः हेतुभूतमुख्यार्थसम्बन्धाभिधानं गोशब्दो वाङ्मुखेऽस्तीति गङ्गाशब्दो गङ्गासम्बन्धितीरे इव गोशब्दो गोशब्दवाच्यवाग्युक्ते मुखेऽस्तीत्यर्थः । केचित्तु गोशब्दो वाङ्मुखेऽस्तीति पाठं कल्पयित्वा गोरिति शब्दो गोशब्दः गोशब्दाः अस्य विद्यन्ते वाचकतयेति गोशब्दा गोशब्दवाच्या वाक् मुखे वर्तत इति कृत्वा लक्षणया गोशब्दं न मुखग्रहणात् गोचर्मेत्यनेन मुखचर्मग्रहणं युक्तमित्याहुः ।। ९, २६ ।।

## टीकाविवृतिः

उतस्म ते ।। त्वदभिमतवृक्षाग्र इति ।। त्वदभिमन्यमानवृक्षाग्र इत्यर्थः ।। एतद्धटनार्थं चेति ।। न केवलं वनस्पतिशब्दव्युत्पादनार्थं वृक्षाणामपीत्युक्तिः किन्तु अग्रमित्यस्य वृक्षाग्र इत्यर्थघटनार्थं चेत्यर्थः ।। तथा च सोमस्य तद्गतविष्णोश्च वृक्षदेवतात्वात्तदन्तर्गतसोमविष्ण्वोः प्रीतये वृक्षाग्रे वायुः शीतलसुगन्धमन्दरूपेण विविधं वातीति पूर्वार्धाशय उक्तो भवति ।। प्रसिद्धानामिति ।। वृक्षसमूहरूपाणामित्यर्थः । वन षण संभक्ताविति धात्वर्थाश्रयणेनार्थान्तरमाह ।। भजनीयत्वेनेति ।। वनतेरिति ।। औणादिक इति शेषः । वन्यन्त इति वनाः देवास्तेषां पतिर्वनस्पतिरिति समासे पारस्करप्रभृतित्वात्सुडागम इति भावः ।। प्रसिद्धवायुव्युदासार्थमिति ।। जडवायुव्यावृत्त्यर्थमित्यर्थः । प्रसिद्धेन्द्रपक्षे पूर्वोत्तरार्धयोर्हेतुहेतुमद्भावं दर्शयन्नग्रमिदित्युक्तेः प्रयोजनं च दर्शयति ।। यत एवमिति ।। विष्णौ त्विति ।। इन्द्रशब्देन गृहीते इति शेषः । इदानीमुत्तरार्धं बाह्ये विष्णौ च योजयति ।। इन्द्राय प्रसिद्धाय विष्णवे चेति ।। विष्णुं प्रति त्विति ।। वनस्पते इति विष्णुं प्रति प्रार्थनायां त्विंद्रायेत्यस्य स्वस्येत्यर्थ इति भावः ।। ६ ।।

टीकाविवृतिः)

आयजी ।। द्वे इति ।। ऋचावित्यर्थः ।। कर्मणीकार इति ।। अच इरित्युक्त इप्रत्यय उणादयो हुलमित्युक्तेर्यजेरपि कर्मणि जात इति भावः ।। जनसनेति ।। अनेन सूत्रेण षणु लाभे इत्यतो वेट्प्रत्यये तस्येकारटकारयोरित्संज्ञायां वेरपृक्तस्येति वलोपे विड्वनोरनुनासिकस्यादिति कारस्यात्वे सवर्णदीर्घे च वाजसेत्याकारान्तं प्रातिपदिकमिति भावः ।। अस्मादिति ।। जह् त्यस्माद्धातोर्लेटि तसीति शेषः । बहुलग्रहणादित्यस्य देहलीप्रदीपन्यायेनोभयत्र संबन्धाद्व्यत्ययो हुलमित्युक्तेर्हकारस्य भकारे रमागमे विकरणभूते ऋकारे च जर्भृत इति रूपसिद्धिः । अत्र हि चेति सूत्रेण हिशब्दयोगे तिङन्तस्यनिघातनिषेधात्सर्वानुदात्तत्वाभावे सति परिशिष्टपरिभाषया तस उदात्तत्वे तिङ्चोदात्तवतीति विशब्दस्य गतित्वादनुदात्तत्वात्समासान्तोदात्तत्वमिति भावः ।। अत्तिकर्मेति ।। बप्सति भसथ इति अत्तिकर्मसु पाठादिति भावः ।। ऋजीषादेरिति ।। सवनानन्तरं संनिष्कास्योर्वरितं नीरसं ऋजीषमित्युच्यते ।। सवनकाले इति ।। फलकोपरिस्थोपले सोमसंबन्धात्फलकयोः सोमभक्षकत्वोपचारः अश्वमुखसंबद्धतृणसाम्यात्सोमस्येतिभावः ।। ७ ।।

तानः ।। उक्तस्वरूपाविति ।। फलकावित्यर्थः ।। सोतृभिरिति ।। सोमखण्डनकारिभिरित्यर्थः । सहार्थेयं तृतीयेति भावेन सहेत्युक्तम् । सोतृसहितौ युवां सुनुतमिति भावः ।। सुतमिति ।। व्यत्ययो बहुलमित्युक्तेःश्नुप्रत्ययाभाव इति भावः । ऋष्वः बृहदिति महन्नामसु पाठादृष्वौ महान्ताविति वक्तव्येऽतिमहत्तराविति कथमुक्तं भाष्ये इत्याशङ्कते ।। यद्यपीति ।। परिहरति ।। तथापीति ।। सोतृषुमुख्यामुख्यन्यायस्य बाधितत्वाद्देवतायामबाधितत्वादिति भावः ।। ८ ।।

उच्छिष्टं चम्वोः ।। अनुक्रमणिकां दूषयितुमनुवदति ।। प्रजापतेरिति ।। अंत्या ऋक् प्रजापतेर्हरिश्चन्द्रस्य प्रशंसा गोचर्मप्रशंसा वेत्यर्थः । हरिश्चन्द्रस्तुतेरप्रतिभासो गोचर्मणश्चम- सपवित्रवत्प्रतिभासेपि स्तुतेरप्रतिभासे अस्यामृचि किंप्रधानमित्यत आह ।। सोमस्यैवेति ।। ननु गोचर्मणोधिकरणत्ववत्प्रधानभूतभरणादिक्रियां प्रति सोमस्य कर्मत्वात्कथं प्राधान्यमित्यत उक्तम् ।। संस्कार्यतयेति ।। गृहं संमार्ष्टीत्यत्र यथा संमार्गलक्षणक्रियाया गृहस्य संस्कार्यत्वात्प्राधान्यं तथा चमसभरणादिना सोमस्य संस्कार्यत्वात्प्राधान्यमित्यर्थः । ततःकिमित्यत आह ।। अतःसोम इति ।। उपसर्गाणां क्रियासंनिधानाभावे ससाधन क्रियावाचकत्वमिति भावेनाह ।। उत् उत्पवनायेति ।। पूरणगुणेति सूत्रे सदव्ययतव्येत्यव्ययस्याष्टाध्यायस्थकृन्मध्यपतितत्वात्तादृशकृदव्ययस्यैव षष्ठीसमा- सनिषेधादुपरीत्यस्याताद्दशाव्ययत्वात्षष्ठीसमास इति भावेनाह ।। द्रोणोपरीति ।। न लोकाव्य- यनिष्ठेत्यत्रापि उकनिष्ठा इत्यष्टाध्याय्युक्तकृत्प्रत्ययमध्यपतितत्वादव्ययशब्दस्य तादृशाव्ययोगे

(टीकाविवृतिः)

षष्ठीनिषेधादुपरीत्यस्याताद्दशत्वत्तद्योगे षष्ठी स्यादेवेति भावेनाह ।। द्रोणकलशस्योपरीति ।। सोमरसपूरणार्थं यत्स्थूलं कुण्डं स्थाप्यते तद्द्रोणकलशनामकं ज्ञेयम् ।। चमसयोरिति ।। एतन्नामकपात्रयोरित्यर्थः ।। सोमस्य चर्मणीति ।। सोमरसस्य चर्मणि स्थापनस्य याज्ञिकप्रसिद्ध्यभावाद्भाष्ये ऋजीषमिति शेषोक्तिरिति भावः ।। यद्यप्यत्रेति ।। अत्रास्यामृचीत्यर्थः ।। अथैनमिति ।। अथाभिषवानन्तरम् । एनं सोमरसम् । उच्छिष्टं चम्वोरित्यनया ऋचा द्रोणकलशं प्रति शुनःशेपो नीतवानिति ब्राह्मणवाक्यार्थः ।। तेनापीति ।। ब्राह्मणेपि ऋचः सोमनयने विनियोगकथनेनापीत्यर्थः ।। बृहदेवताकार इति ।। इदं प्रमेयमनुक्रमणिकाभाष्ये स्पष्टम् । भरेत्यात्मानमेवाहेति भाष्ये भरेत्यस्यैवसंबोध्योक्तेःसृजनिधेहीत्यनयोरनुक्तेराह ।। उपलक्षणमेतदिति ।। आत्मानं स्वांतर्यामिणं वा प्रत्येव भरसृजनिधेहीत्युक्तिरिति कुत इत्यत आह ।। अन्यस्येति ।। एतत्क्रियाणां कर्तुरिति शेषः ।। इदं तच्छिर इतीति ।। एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति श्रुतिशेषेणान्वयो ज्ञेयः । भाष्ये शिरोभेदावित्यस्य शिरोभागावित्यर्थः । उदरशब्देन हृदयोपलक्षणे बीजमाह ।। तत्र हीति ।। हृदये सोमशब्दवाच्यमनसो वृत्तेः । सुषुप्तौ मनसो नाडीप्रवेशात्प्राचुर्येणेत्युक्तम् ।। तया यत इतीति ।। तया बुद्ध्येत्यर्थः ।। गोशब्देति ।। गोशब्दवाच्येत्यर्थः । तथा च गोशब्देन वागाधारभूतं मुखं लक्ष्यत इति भावः ।। एतेष्विति ।। शिरोहृदयमुखेषु । सोमस्य मनस इत्यर्थः ।। सोमस्यैव कर्मत्वमिति ।। न तु बाह्यार्थवद्दजीषस्येति भावः ।। वेदतुल्यत्वमिति ।। तथा च सर्वे विधयश्छन्दसि विकल्प्यंत इत्युक्तेरच्चघेरिति ङेरौत्वं घिसंज्ञस्याकारादेशश्च नेति भावः ।। अथवा संज्ञापूर्वकविधेरनित्यत्वादत्रापि घिसंज्ञानाश्रयणा-दौत्वादि न भवन्तीति ज्ञेयम् । अस्याः परिभाषाया ओर्गुण इत्यनेन ज्ञापितत्वात् विधेये संज्ञाग्रहणे अनित्यत्वमिति तु कैयटेन नाङ्गीकृतम् ।। स्पृहिगृहीति सूत्रे कैयटे श्रद्धालुरिति प्रयोगसाधनावसरे संज्ञापूर्वस्यानित्यत्वात् श्वाविति द्वित्वाभावोक्तेः ।। ९ ।। २६ ।।

## ऋक्संहिता पदपाठसहिता (सू-२९)

**(३२२) यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि । आतू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।। १ ।।**

**(प०) यत् । चित् । हि । सत्य । सोमऽपाः । अनाशस्ताःऽइव । स्मसि ।। शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ।। १ ।।**

(ऋक्संहिता पदपाठसहिता)

(३२३) शिप्रिन्वाजानां पते शचीवस्तव दंसना ॥ आतून इन्द्र शंसय
गोष्वश्वेषु शुभ्रिषुसहस्रेषु तुवीमघ ॥ २ ॥

(प०) शिप्रिन् । वाजानाम् । पते । शचीऽवः । तव । दंसना ॥ २ ॥

(३२४) नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ॥ आतून इन्द्र शंसय
गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ३ ॥

(प०) नि । स्वापय । मिथुऽदृशा । सस्ताम् । अबुध्यमानेइति ॥ ३ ॥

(३२५) ससन्तु त्या अरातयो बोधन्तु शूर रातयः ॥ आतून इन्द्र शंसय
गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ४ ॥

(प०) ससन्तु । त्याः । अरातयः । बोधन्तु । शूर । रातयः ॥ ४ ॥

(३२६) समिन्द्र गर्दभं मृण नुवन्तं पापयामुया ॥ आतून इन्द्र शंसय
गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ५ ॥

(प०) सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम् । पापया । अमुया ॥५॥

(३२७) पताति कुण्डृणाच्या दूरं वातो वनादधि ॥ आतून इन्द्र शंसय
गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ६ ॥

(प०) पताति । कुण्डृणाच्या । दूरम् । वातः । वनात् । अधि ॥ ६ ॥

(३२८) सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ॥ आतून इन्द्र शंसय
गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७, २७, २९ ॥

(प०) सर्वम् । परिऽक्रोशम् । जहि । जम्भय ।
कृकदाश्वम् ॥ ७,२७,२९ ॥

## ऋग्भाष्यम्

यत्सद्गुणा शस्ता इव स्मसि वयं ततः । शुभ्रवाङ्गनआदीनां विषयेऽस्मान्प्रशंसय । बहुवाच्यज्ञेययुक्तान्कृत्वास्मांस्त्वं महामख ॥ १ ॥ सुखिन्नन्नपते वाग्ज्ञ तव कर्माणि-सर्वशः ॥ २ ॥ दैत्यरक्षः प्रजे मिथ्यादृशौ सस्तां पुनर्बहु । अबुध्यमाने नित्यं च यथा

(ऋग्भाष्यम्)

निष्वापयेश्वर ॥ ३ ॥ स्वपन्तुते शत्रवस्ते सर्वदाऽज्ञानमोहिताः । बोधंतु चैव मित्राणि तवरूपं सुनिर्भयम् ॥ ४ ॥ पापया मायया मिथ्या स्तुवन्तं त्वामपि प्रभो । मायामयास्तवगुणा नसन्ति परमार्थतः । इति नित्यं रुवन्तं च मायावाद्याख्यगर्दभम् । संचूर्णय तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा ॥ ५ ॥ दूरं च पातयत्वेनान्वायुस्तस्मिंस्तमस्यधः । वनं दृढग्रहेणैव तत्तमो वेदनोल्बणा । कुण्डृणाचीति सम्प्रोक्ता कुण्डान्नीचत्वतोधिकम् । कुम्भः कुण्डाभिधः कुम्भीपाकान्नीचाहि तद्गतिः । रेफः स्वरव्यत्ययश्च तदाधिक्यार्थमीरितौ ॥ ६ ॥ सर्वं परिक्रोशकरं पापिनं जहि जंभय । दंशय श्वादिभिर्नित्यं क्रकचै र्दंशनं यथा ॥ ७, २७, १० ॥

## ऋग्भाष्यटीका

यच्चिद्धि । सप्तर्चमिदं सूक्तम् । आव इन्द्रमिति द्वाविंशत्यर्चम् । आद्येनोत्तरस्य च पञ्चदशभिरिन्द्रं तुष्टाव । यत्सत् । हे सत्य सद्गुण । सोमपाः तुविमघ महामख सर्वमखार्चनीयेन्द्र । यत् यस्माच्चित् एव । वयमिदानीम् । अनाशस्ता इवास्तुत्या इव । स्मसि स्मः । अत्यन्ता प्रशस्तानीश्वरोपि न प्रशस्तान्करोतीतीव शब्दः । ततः कारणात् । त्वन्तु त्वमेव । नोस्मान् शुभ्रिषु शुभ्रेषु । सहस्रेषु सहस्रसंख्याकेषु । गोष्वश्वेषु च तद्विषये । आशंसय प्रशंसय लोकेनेति । बाह्ये स्फुटम् । अध्यात्मन्तु गौर्वाक् । अश्वा मन आदीनि ज्ञानेन्द्रियाणि । ततश्च शुभ्रवाङ्मन आदीनां विषयेऽस्मान्प्रशंसयेत्यर्थः । वागादीनां शुभ्रत्वं शुद्धत्वं भविष्यति । सहस्रत्वसम्पादनाय बहुवाच्येत्युक्तम् । ततश्च विषयद्वारकं वागादीनां सहस्रत्वमित्युक्तं भवति । बहवश्च परमात्मगुणादयः ॥ १ ॥

शिप्रिन् । सुखिन् । हे शिप्रिन् सुखिन् । वाजानां पतेऽन्नपते । शचीवः शचीति वाङ्नाम । तद्वत्त्वं च तत्प्रयोगादिज्ञत्वेन । वागज्ञ । दंसना दंसनानि । सर्वशो लोकस्य कर्माणि । तव त्वत्प्रेरितानि त्वद्विषयाणि च । स एवंविधस्त्वमातूनः ॥ २ ॥

निष्वापय । दैत्य । हे इन्द्र ईश्वर । मिथुदृशा मिथु इति निपातो मिथ्यार्थे मिथ्यादृशौ । सामर्थ्याद्दैत्यरक्षःप्रजे । सस्तां षस स्वप्ने । अज्ञानितन्यौ भवताम् । मिथ्यादृशोस्तत्प्रार्थनं व्यर्थमित्यत उक्तं पुनर्बह्विति । कथम् । यथानित्यं चाबुध्यमाने भवतस्तथा त्वं तान्निष्वापय । किञ्च आतूनः ॥ ३ ॥

ससंतु । स्वपन्तु । हे शूर । त्यास्ताः । व्यत्ययेन ते प्रसिद्धाः । अरातयस्ते तव शत्रवः । ससंतु स्वपन्तु सर्वदाऽज्ञानमोहिता भवंत्विति यावत् । किञ्च । रातयस्तव मित्राणि बोधंत्वेव । जानंत्वेव तव रूपमिति शेषः । शूरेति सम्बोधनस्य तात्पर्यं सुनिर्भयमिति । स्वार्थमेव वा त्या इति स्त्रीलिङ्गमिति ज्ञापनाय प्रजाशब्दः प्रागुक्तः । अन्यथा दैत्यरक्षसी इत्यवक्ष्यत् । किञ्च । आतूनः ॥ ४ ॥

(ऋग्भाष्यटीका)

समिन्द्र । पापया । हे इन्द्र प्रभो । गर्दभं दुर्वाक्त्वादिसाम्यान्मायावाद्याख्यं गर्दभम् । संमृण हिंसार्थोयम् । तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा संचूर्णय । कथं भूतम् । नुवन्तं त्वां स्तुवन्तमपि । स्तुवतो हिंसानुपपन्नेति च न वाच्यम् । पापयामुया माययेति शेषः । माय्या स्तुतिं विवृणोति । मिथ्येति । शाठ्येनेत्यर्थः । प्रकारान्तरेण मायया नुवन्तमित्येतद्व्याख्याति । मायामया इति ॥ ततश्चमायामाश्रित्येत्यर्थः । अनेन दयाशील देव प्रसीदेत्यादिस्तुतेः शाठ्यमूलत्वं निराकारमोंकारगम्यमित्यादि रवणस्यास्तुतित्वमुक्तं भवति । किञ्च । आतूनः ॥ ५ ॥

पताति । दूरं च । किञ्च । वातो वायुदेवः एनान्प्रकृतांस्त्वन्निन्दकान् वनात् वने । कुण्डृणाच्या कुण्डृणाच्याम् । तस्मिन् प्रसिद्धे अन्धेतमसीति यावत् । दूरं दूरात् । अधिपताति अन्तर्णीतण्यर्थाल्लेट् । पातयतु च । किञ्च । आतूनः ॥ कथं तमो वनमित्यत आह ॥ वनमिति । वनतिः सम्भजनार्थः । सम्भजनं च दृढग्रहः । वियोगाभावः । अतस्तत्तमो दृढग्रहेण वनमित्युच्यते । कुण्डृणाचीशब्दस्य सनिमित्तमभिधेयमाह ॥ एवेति । तत्तम एवोल्बणावेदना कुण्डृणाचीति सम्प्रोक्ता । स्त्रीलिङ्गसम्पादनाय वेदनोल्बणेत्युक्तम् । कुतः कुण्डान्नीचत्वतः । कःकुण्डः कुतश्च तमसस्ततो नीचत्वमित्यत आह ॥ कुम्भ इति । कुम्भः कुम्भीपाकः । हीति रौरवोऽथमहानित्यादि वाक्यप्रसिद्धिं दर्शयति । तद्गतिस्तेषां निन्दकानां गतिस्तमः । एवं तर्हि कुण्डनीचेति भवितव्यं कुण्डृणाचीति कथमित्यत आह ॥ रेफ इति । अत्र रेफशब्देन श्रुतिसाम्यादृकार उच्यते । कुण्डशब्देऽकारस्य ऋकारः नीचेत्यत्र रवरयोरीकाराकारयोर्व्यत्ययश्च तस्य कुम्भीपाकान्नीचत्वस्याधिक्यज्ञापनार्थं प्रयुक्तौ अत एव प्रागधिकमित्युक्तम् ॥ ६ ॥

सर्वम् । सर्वम् । हे इन्द्र परिक्रोशं परिक्रोशकरं निन्दकम् । सर्वं पापिनं जनं जहि । जम्भय श्वादिभिर्नित्यं दंशय । कथम् । कृकदाश्वं कृकाः क्रकचाः तैर्दाश्वं दंशनम् । क्रकचैर्दारुणो दंशनं यथेति शेषः । किञ्च । आतूनः ॥ ७, २७ ॥

## मन्त्रार्थमञ्जरी

अथ 'यच्चिद्धि' इति सप्तर्चं नवविंशमेकवर्गात्मकमैन्द्रं पाङ्क्तं सूक्तम् । (पङ्क्तिंच्छन्दो देवता तु शची) (हे) सत्य, सद्गुण । सोमपाः । तुविमघ, महामख, सर्वमखार्चनीय । इन्द्र । यत् यस्मात् । चित्, एव । वयमिदानीम् अनाशस्ता इव, अस्तुत्या इव । स्मसि, स्मः । हि । अत्यन्ताप्रशस्तानीश्वरोऽपि नः प्रशस्तान्करोतीतीवशब्दः । ततः कारणात् (त्वम्) तु, त्वमेव । नः, अस्मान् शुभ्रिषु, शुभ्रेषु । सहस्रेषु, सहस्रसंख्याकेषु । गोषु अश्वेषु (च), तद्विषये । आशंसय, प्रशंसय । (लोकेन) इति योज्यम् । अध्यात्मं तु गौर्वाक्, अश्वा मनआदीनि ज्ञानेन्द्रियाणि, ततश्च–शुभ्रवाङ्मनसादीनां विषयेऽस्मान्प्रशंसयेत्यर्थः, वागादीनां शुभ्रत्वं शुद्धत्वं, तेषां सहस्रत्वं भगवद्गुणादिरूपविषयबाहुल्याज्ज्ञेयम् ॥ १ ॥

(मन्त्रार्थमञ्जरी)

(हे) शिप्रिन्, सुखिन्। वाजानाम्, अन्नानाम्। पते। शचीवः, 'शची' इति वाङ्नाम (वै० नि० १।११), शचीवन्, तद्वत्त्वं च तत्प्रयोगादिज्ञत्वेनेति वागभिज्ञ, 'मतुवसो रुः सम्बुद्धौ छन्दसि' इति 'शचीवः' इति साधु। दंसना, दंसनानि, सर्वलोककर्माणि। तव, त्वत्प्रेरितानि त्वद्विषयाणि च। (सः) एवं विधस्त्वम्। 'आ तू न इन्द्र' इत्यादि पूर्ववत्॥ २॥

(हे) इन्द्र, ईश्वर। मिथुदृशा, 'मिथु' इति निपातो मिथ्यार्थे, मिथ्यादृशौ, सामर्थ्यात् दैत्यरक्षः प्रजे। सस्ताम्, 'षस स्वप्ने' अज्ञानिन्यौ भवताम्। कथम्? यथा नित्यं च अबुध्यमाने भवतस्तथा त्वं ते प्रजे नि ष्वा (स्वा)पय, नितरां स्वापय। किं च, 'आ तू न' इत्यादि॥ ३॥

(हे) शूर। त्याः, ताः, व्यत्ययात् ते, प्रसिद्धाः। अरातयः, तव शत्रवः। समन्तु, स्वपन्तु, 'षस स्वप्ने' सदाज्ञानमोहिता भवन्त्विति यावत्। किं च, रातयः, तव मित्राणि। बोधन्तु (एव) जानन्त्वेव। (तव रूपम्) इति शेषः। किं च, 'आ तू न' ॥ ४॥

(हे) इन्द्र। गर्दभम्, दुर्वाक्त्वादिसाम्यान्मायावाद्याख्यगर्दभम्। पापया अमुया। (मायया) इति शेषः, शाठ्येनेति यावत्। नुवन्तम्, स्तुवन्तमपीत्यर्थः, यद्वा– 'मायामयास्तव गुणाः' (ऋ० भा० इत्यादिरूपेण नुवन्तं रुवन्तम्। सम् मृण, 'मृण हिंसायाम्', तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा संचूर्णय, एतेन 'दयाशील देव प्रसीद' (शिवभुजंगप्रयातस्तोत्रम् ८) इत्यादिस्तुतेः शाठ्यमूलत्वं 'निराकारमोंकारगम्य (वेद्य)म्' (वेदसारशिवस्तवः ५) इत्यादिरवणस्यास्तुतित्वमुक्तं भवति, अनाद्यनिर्वाच्यपापभूतमायामाश्रित्यानेकमानसिद्धभगवद्गुणसत्यजगत्कारणत्वचिदानन्दादिदिव्य - महामहिम्नोऽपलापादिति भावः॥ किं च, 'आ तू न' ॥ ५॥

वातः, वायुदेवः। (एनान्) प्रकृतांस्त्वन्निन्दकान्। वनात्, वने, वनति सम्भजति स्वस्मिन्पतितं सर्वथा न मुञ्चतीति वनाख्ये। कुण्डृणाच्या, कुण्डृणाच्याम्, कुम्भीपाकादपि नीचत्वेन प्रसिद्धेऽन्धे तमसीति यावत्। दूरम्, दूरात्। अधि 'पताति' इत्यन्तर्णीतण्यर्थाल्लेट्, 'लेटोऽडाटौ' पातयतु। (च) किं च, 'आ तू न' कुण्डशब्दि-तात्कुम्भीपाकान्नीचा गतिः (कुण्डनीचा), कुण्डनीचैव कुण्डृणाची, ईकाराकारव्यत्ययोऽधिक दुःखद्योतनार्थः, पूर्वपदस्य ऋकारश्च॥ ६॥

(हे) इन्द्र। परिक्रोशम्, परिक्रोशकरम्, निन्दकम्। सर्वम् (पापिनम्) जहि। जम्भय, श्वादिभिर्नित्यं दंशय। कथम्? कृकदाश्वम्, कृकाः क्रकचास्तैर्दाश्वं दंशनम्, क्रकचैर्दारुणं दंशनम्। (यथा) इति शेषः, तथेत्यर्थः॥ ७॥ इति सप्तविंशो वर्गः॥ २७॥ नवविंशं सूक्तम्॥ २९॥

## रूपावतारः

यच्छिद्धि सत्य ।। अनाशस्ता इवेति । इवशब्दप्रयोगस्य प्रयोजनमाह अत्यन्ताप्रशस्तानिति । अप्रशस्तेन्द्रियादिमतः तमोयोग्यान् ईश्वरोऽपि प्रशस्तेन्द्रियादिमतः न करोतीति हेतोः स्वस्य तमोयोग्यत्वं वारयितुं इवशब्दः प्रयुक्त इति भावः ।। १ ।।

शिप्रिन् ।। शचीवरिति । शचीशब्दात् मतुपि 'छन्दसीरः' इति मस्य वत्वे 'मतु वसोः...' इति रुत्वे विसर्गे च शचीवरिति रूपम् ।। २ ।।

निष्वापय ।। सस्तामिति । षसः लोटस्तसस्तामादेशे अदादित्वात् शपो लुकि सस्तामिति रूपम् ।। ३ ।।

ससन्तु ।। ननु अरातिशब्दस्य पुल्लिङ्गत्त्वात् कथं तद्विशेषणस्य त्या इत्यस्य स्त्रीलिङ्गत्वमित्यत आह । व्यत्ययेनेति । त्या इत्यस्य स्त्रीलिङ्गत्वं व्यत्ययेनेत्यर्थः । त्या इति न लिङ्गव्यत्ययेन किं तु स्त्र्यर्थवाचकत्वात् न्यायप्राप्तमेव स्त्रीत्वमित्याशयेनाह । स्वार्थमेव वेति । एतस्य स्त्रीलिङ्गत्वं न्यायप्राप्तमेवेत्यत्र भाष्यकारसंमतिमाह । इति ज्ञापनायेति । अस्मिन्पक्षे अरातयः त्याः प्रसिद्धाः प्रजाः ससन्तु इति ऋग्योजना द्रष्टव्या ।। ४ ।।

समिन्द्र ।। मृणेति । मृण हिंसायामित्यस्मात् लोटि शप्रत्यये लोटः सेर्हि इत्यादेशे 'अतो हेः' (६।४।१०५) इति हेर्लुकि मृणेति रूपम् ।। ५ ।।

पताति ।। अन्तर्णीतेति । पतेरन्तर्णीतण्यर्थाल्लेटि तिपि लेट आडागमे इतो लोपाप्रवृत्तौ पतातीति रूपम् । वनमित्युच्यते इति । वनतेः कर्तर्यकारप्रत्यये वनमिति रूपम् । ननु तम एव कुण्डूऋणाचीत्युच्यत इत्येव वक्तव्यम् । उल्बणा वेदनेति किमर्थमुक्तमित्यत आह । स्त्रीलिङ्गत्वेति । कुण्डूऋणाचीशब्दस्य स्त्रीलिङ्गत्वघटनाय उल्बणा वेदनेति स्त्रीलिङ्गविशेष्यमुक्तमित्यर्थः । अनेनैव तम एवोल्बणा वेदनेत्युच्यते सोल्बणा वेदना कुण्डूऋणाचीति संप्रयोक्तेति भाष्ययोजनाप्युक्ता भवति । अन्यथा संप्रोक्तमिति स्यात् । ऋकार उच्यत इति । गौण्या वृत्त्येति शेषः ।। ६ ।।

सर्वं परिक्रोशम् ।। परितः क्रोशो यस्मादिति विग्रहं मनसि निधायाह । परिक्रोशकरमिति ।। ७ ।। २७ ।। १० ।।

## पदार्थप्रकाशिका

यच्चिद्धि सत्यसोमपाः। अत्रानुक्रमणिका। यच्चिद्धि सत्यपाङ्क्तमिति। यच्चिद्धीति सूक्तं सप्तर्चं पङ्क्तीछदोबद्धं पञ्चपादोपेतमिति तदर्थः। एतामनुक्रमणिकां मनसि निधायाह। सप्तर्चमिति। आबोध्यधिकांविशदित्यनुक्रमणिकां हृदि निधायाह। आद्येनेति। सप्तर्चेन सूक्तेनेत्यर्थः। उत्तरस्य चेति। सप्तर्चसूक्तादुत्तरस्य द्वाविंशत्यर्चस्य सूक्तस्य मध्येविद्यमानाभिः पञ्चदशभिः ऋग्भिः यूपे बद्धः शुनःशेपः इन्द्रं तुष्टावेत्यर्थः। यदत्र वक्तव्यं तत्पूर्वमेव ब्राह्मणोक्तमोत्रापि ह्यृचौभवेदिति भाष्य एव स्पष्टं प्रतिपादितमनुसंधेयम्। सतो निर्दुष्टान् योग्यतायाः गुणान् याति प्राप्नोतीति व्युत्पत्या सद्गुणत्वं सत्यशब्दार्थ इत्यभिप्रेत्याह। हेसत्यसद्गुणेति महेति तु विशब्दार्थः। कथमिन्द्रस्य महामखवत्वमित्यतस्तत्तात्पर्यं दर्शयति। सर्वमखार्चनीयेति। अस्तुत्या इति। यत् इदानीं वयं यूपे पशुत्वेन बद्धाः स्मः अतो अस्तुत्या इत्यर्थः। त्रिष्वादित्यं द्रुपदेषु बद्ध इत्युक्तत्वादिति भावः। इवशब्दाभिप्रायमाह। अत्यन्तेति। सर्वप्रशंसायोग्यानित्यर्थः। करोतीति। नहि शतेनापि प्रयत्नानां नरो वानरीकर्तुं शक्यते इति भावः। इवशब्द इति। तथाचेदानीं बद्धत्वादेव स्तुत्यत्वं न सर्वथेति ज्ञापनायेवशब्द इत्याशयः। ऋच्यध्याहृतेन तत इत्यनेन एवार्थक शब्द सम्बन्धो द्रष्टव्य इत्याशयेनाह। तत एव कारणादिति। इदानीं बद्धत्वादेव कारणादित्यर्थः। ऋच्यध्याहृतेन त्वमित्यनेन तुशब्दसम्बन्धः। सचेवार्थ इत्याशयेनाह। त्वं त्विति। शुभ्रेषु शुद्धेषु। तद्विषय इति। त्वमेव सम्बन्धान्मोक्षानन्तरं कालान्तरे गवाश्वादिसम्पदं त्वा शुनः शेपोऽयं धन्यः सभाग्य इति लोकैरस्मान् स्तुत्यान् कुर्वित्यर्थः। स्फुटमिति। अतो न तत्र भाष्यकारेण योजना दर्शितेति भावः।

शुभ्रवाङ्मनआदीनां विषय इति। शुद्धां वाचं मन आदीन्द्रियाणि च दत्वेत्याशयः। प्रशंसयेति। शुद्धवागिन्द्रियवान् यतो अतोऽयं हरिःस्तोता महाज्ञानी चेत्येव लोकेन प्रशंसयेदित्यर्थः। शुद्धत्वं भगवत्प्रतिपादकत्वेन तद्विषयत्वेन च वाचो मन आदीन्द्रियाणां च विषयद्वारा सहस्रत्वमुक्तम्। के ते बहवो विषया इत्यत आह। बहवश्चेति। त एव वाच्या ज्ञेयाश्चेत्याशयः आदिपदेन क्रियादेः सङ्ग्रहः तथाच बहूनां परमात्मगुणानां वाच्यानां सत्वात् तत्प्रतिपादकतया वागिन्द्रियस्य सहस्रत्वम्। बहूनां परमात्मगणानां ज्ञेयानां सत्वात् तद्विषयकज्ञानां जनकज्ञानेन्द्रियाणां च सहस्रत्वं

॥ १ ॥

जानांपते। शिप्रशब्दस्य सुखनामसु पाठादाह। सुखिन्निति। शचीव इत्यस्य
:यति। शचीति। वाङ्नामेति। तद्वत्वं चेति मतुपोऽर्थः। शचीशब्दात् मतुप् प्रत्यये

(पदार्थप्रकाशिका)

मादुपधायाश्च मतो वादिभ्यः इति मतुपो मकारस्य वकारे तकारस्य नकारे यकार लोपे शचीयन्निति जाते न लोपः प्रातिपदिकान्तस्येति नकारलोपे सम्बुद्धौ सुप्रत्ययस्य मतुवसोरुः सम्बुद्धौ छन्दसीति मत्वन्तत्वात् रुत्वे विसर्गे च सति सम्बन्धिनीत्यर्थः। तदेव विशदयति। त्वत्प्रेरितानीति। अत्र पूर्वार्धर्चे क्रियान्तराभावादातून इन्द्र शंसयेत्युत्तरार्धेन कारकान्वय इत्यभिप्रेत्याह। स एवंविधस्त्वमिति। सुखित्वसर्वलोककर्मप्रेरकत्वादिगुण युक्तस्त्वमित्यर्थः ॥ २ ॥

निष्वापयामिथुदृशा। सामर्थ्यादिति। मिथ्यादृशावित्यस्य विशेष्यतया समीचीनप्रजाग्रहणे बाधापत्तेरित्यर्थः। मिथ्यादृशोस्तत्प्रार्थनं व्यर्थमिति। मिथ्याज्ञानवत्योर्दैत्यरक्षः प्रजयोर्भगवदज्ञानप्रार्थनं व्यर्थं स्वत एवसिद्धत्वादित्यर्थः। कथमिति। पुनर्बहुनिष्वापयेति कथमित्यर्थः। यथेत्यादि सज्जनानां कदाचिदज्ञानप्राप्तौ पुनः सत्सङ्गत्येश्वरबोधो यथाभवति। न तथा। किन्नाम कदाचित्कथंचिदपि ईश्वरबोधो यथा तयोर्न स्यात्तथा ज्ञानिन्यौ भवतामित्यर्थः। अत्र पूर्वार्धे क्रियांतरसद्भावादातून इन्द्रेति प्रार्थनांतराभिप्रायेण योजयति। किंचातून इति। एवमेवोत्तरत्रापि किं चातून इति वाक्यं व्याख्येयम् ॥ ३ ॥

तुत्या अरातयः। ननु ऋचि अरातय इति पुल्लिङ्गसद्भावात्तद्विशेषणतया ऋचि ते इति पुल्लिङ्गप्रयोगे कर्तव्ये त्या इति स्त्रीलिङ्गप्रयोगः कथमित्यत आह। व्यत्ययेन ते इति। त्या इत्येतत् स्त्रीलिङ्गं व्यत्ययेन ते इति व्याख्येयमित्यर्थः। स्यार्थभूतं स्त्रीत्वं न विवक्षितमिति भावः। ते इत्यस्याभिप्रायमाह। प्रसिद्धा इति। तात्पर्यमिति। तव शूरतया निर्भयत्वे त्वदभिन्नस्य त्वद्रूपस्यापि भयाभावादिति भावः। सुनिर्भयं यथास्यात्तथा बोधयन्तु इति क्रियाविशेषणम्। न रूपविशेषणम्। तव शूरत्वेन त्वा जानतां भयाभावादिति भावः। स्वार्थमेवेति। ऋचि त्या इति स्त्रीलिङ्गं स्वार्थमेव विवक्षितमेव। नतु व्यत्ययेन ते इति व्याख्येयमित्यर्थः। प्रागुक्त इति। दैत्यरक्षःप्रजे इति भाष्ये उक्त इत्यर्थः। तथाच त्यास्ताः अरातयो जातिविरुद्धाः। मित्रविरुद्धाः दैत्यरक्षोरूपाः इत्यर्थो द्रष्टव्यः। अस्मिन् पक्षे शत्रवस्ते इति भाष्यं त्वर्थकथनमात्रपरमिति ज्ञातव्यम्।

अन्यथेति। अस्याम् ऋचि त्या इति स्त्रीलिङ्गप्रयोग सद्भावात्तदभिप्रायेण पूर्वं प्रजाशब्दः प्रयुक्तः इत्यनङ्गीकारे मिथ्यादृशाभिर्दैत्यरक्षसीत्येव वक्तव्यत्वापत्या तत्र प्रजाशब्दो न प्रयुज्येत। स्त्रीलिङ्गान्तप्रजाशब्दयोगे पदयोर्विशेषणविशेष्यभावानुपपत्यादिरूपनिमित्ताभावादिति भावः ।४।

समिन्द्रगर्दभंमृणा। ननु कथं मायावादिनो गर्दभसाम्यमित्यत आह। दुर्वाक्त्वादिसाम्यादिति। दुर्वाक्त्वादिना धर्मेण गर्दभसाम्यादित्यर्थः। अयं मृणधातुः चूर्णयेति। चूर्णनस्यैव हिंसात्वादिति

(पदार्थप्रकाशिका)

भावः । शाठ्यम् । गूढद्वेषः । अर्थद्वयपक्षेपि माययास्तुवन्तमिति कथं स्तवने मायया: करणत्वाभावादित्यत आह। ततश्चेति।

तथाच आद्ये मायां शाठ्यम् आश्रित्य स्तुवन्तम् अनेनापि दयाशीलदेवेत्यादिना सगुणतयैव स्तुतिः कृतेति लोकानां बुध्युत्पादनाय गूढद्वेषेणैव स्तुवंतमित्यर्थः। द्वितीये मायां अनिर्वचनीयाविद्यां आश्रित्य स्तुवन्तं तवगुणाः मायामयाः । परमार्थतो न सन्तीत्येव निराकारमित्यादिना स्तुवन्तमित्यर्थो द्रष्टव्यः। नन्वनेन स्तुवतो हिंसानुपपन्नेत्यतो किमुत्तरजातमित्यत आह। अनेनेति। शाठ्येनेति। तथाच शाठ्येनैव स्तोतृत्वात् हिंसोपपन्नेति भावः। इत्यादिरवणस्येति। इत्यादिना निराकारत्वादिप्रतिपादनस्येत्यर्थः। अस्तुतित्वमिति। निराकारमित्यादिना स्तुतिकरणेपि स्तुवतः स्तुतिरेव सा न भवति। गुणप्रतिपादकवचनं हि स्तुतिः। निराकारमित्यनेन तु देहाद्याकारा-भावोक्त्या ज्ञानानन्दादिगुणाभाव एवोक्तः स्यात्। साकार एव वस्तुनि तेषां सम्भवात्। तथाच निराकारमित्यादेरर्थात् गुणाभावप्रतिपादकत्वेनास्तुतित्वमित्यर्थः।

केचित्तु निराकारमित्यनेन ज्ञानानन्दादि गुणात्मकाकारराहित्यमुच्यते। तथाच तव गुणाः परमार्थतो न सन्तीत्युक्तं स्यात्। तथाच नेयं स्तुतिः। गुणाप्रतिपादकत्वादित्यर्थ इत्याहुः ॥ ५ ॥

पताति कुण्डृणाच्या । दूरं चेति भाष्यस्य चशब्दाभिप्रायमाह । किञ्चेति । न केवलं मायावाद्याख्यगर्दभानां चूर्णनमेव प्रार्थ्यम् । किन्नामान्यच्चानिष्ठम् । तेषां प्रार्थ्यत इत्यर्थः । प्रकृतानिति। पूर्वस्याम् ऋचि प्रकृतान् मायावाद्याख्यानित्यर्थः। सुपांसुलगिति सप्तम्याः आत् इत्यादेश इत्यभिप्रेत्याह। वनात् वनइति। उक्तसूत्रेणैव सप्तम्या आ इत्यादेश इत्यभिप्रेत्याह। कुण्डृणाच्चामिति। अन्धेतमसीति। अत्र सर्वत्र तमःशब्दः उल्बणवेदनापरः। रौरवादिदुःखादधो जायमानाया वेदनादित्यर्थः। अन्तर्णीतिति। पतलृपतने अस्मादन्तर्णीतण्यर्थात् लटि तस्य तिबादेशे यकारलोपे अडागमे यत् आतिपातीति रूपं द्रष्टव्यम्। अत इति। स्वस्मादवियोजकत्वादित्यर्थः। इत्युच्यत इति। तथाच वनइत्यस्य स्वस्मादवियोजके दृढतयाबन्धं च इत्यर्थो द्रष्टव्यः।

सनिमित्तमिति । प्रवृत्तिनिमित्तसहितमित्यर्थः । प्रवृत्तिनिमित्तकथनपूर्वकमिति यावत् । तत्तमएवेत्यनूद्य उल्बणा वेदनेति व्याख्यानम्। स्त्रीलिङ्गेति। कुण्डृणाचीति स्त्रीलिङ्गोपपत्यर्थं वेदनेति विशेष्यपदमुक्तमित्यर्थः। कुत इति कस्मान्निमित्ताद्धा वेदना कुण्डृणाचीति सम्प्रोक्तेत्यर्थः। कुत इत्यादि । कुतः प्रमाणात्तमसः मायावादिनां जायमानायाः वेदनायाः ततः कुण्डान्नीचत्वं प्रतिपत्तव्यमित्यर्थः। रौरवोथमहानित्यादि। रौरवोथ महांश्चैव वह्निर्वैतरणी तथा। कुम्भीपाक इति

(पदार्थप्रकाशिका)

प्रोक्तान्यनित्यनरकाणि तु । तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ । इति सप्तप्रधानानि बलीयो ह्युत्तरोत्तरमिति प्रमाणात् । मायावादितमसः कुम्भीपाकान्नीचत्वमवगम्यत इति भावः । गतिस्तम इति । तथाच मायावादिनां तमिस्रांधतामिस्रादौ जायमाना उपलक्षणा वेदना कुम्भीपाकवेदनापेक्षयापि नीचा अधिकेत्यर्थो द्रष्टव्यः ।

ननु कुण्डृणाचीत्यत्र ऋवर्ण एव श्रूयते नतु रकाररूपो रेफः । तथात्वे कुण्डृणाचीति श्रूयतामतो ऋवर्ण व्यत्यय इति वक्तव्ये रेफव्यत्यय इति कथमुक्तमित्यत आह । अत्र रेफशब्देनेति । ऋवर्णरेफयोरुच्चारणे सति तयोरेकप्रकारेणैव श्रूयमाणत्वादित्यर्थः । रेफव्यत्ययं दर्शयति । कुण्डशब्दे इति । कुण्डशब्देविद्यमानस्य डकारस्थस्याकारव्यत्ययेन ऋकारो जातः । तथाच कुण्डृ इति भवतीत्यर्थः । स्वरव्यत्ययं दर्शयति । नीचेत्यत्रेति । नीत्यत्रत्यस्य ईकारस्य चेकारोपरि व्यत्ययेन सम्बन्धे चकारस्थस्याकारस्य व्यत्ययेन नकारोपरि सम्बन्धे नाचीति भवति । तथाच तस्य णत्वात् कुण्डृणाचीत्यर्थः । एवं रेफस्वरव्यत्ययस्य किं प्रयोजनमित्यत उक्तं तदाधिक्यार्थमीरिताविति । तद्व्याचष्टे । तस्येति । तदित्येतत्तस्येति व्याख्याय तस्याप्यर्थमाह । कुम्भीपाकन्नीचत्वस्येति । आधिक्येति । कुम्भीपाकनरकपतितप्राणिवेदनापेक्षया तामिस्रादिपतितमायावादिनां वेदनाया नीचत्वं तदतीवाधिकमिति ज्ञापनार्थमित्यर्थः । अत एवेति । रेफस्वरव्यत्यययोस्तदाधिक्य ज्ञापनार्थं प्रयुक्तत्वादेवेत्यर्थः । प्रागिति । कुण्डान्नीचत्वतोधिकमिति भाष्य इत्यर्थः । कुण्डृणाची शब्दं व्याख्याय कुण्डान्नीचत्वत इत्येव वक्तव्ये अधिक मित्येतद्व्यर्थं तद्व्याख्येयाभावादत एव तदभिप्रायेणैव तत्राधिकमिति भावः ॥ ६ ॥

सर्वं परिक्रोशं जहि । ऋचि कृकदाश्वमिति लुप्तोपमेत्यभिप्रेत्य भाष्ये क्रकचेर्दशनं यथेत्युक्तम् । तद्विवृणोति । क्रकचेरिति । क्रकचं नाम दारुविपाटनाय निर्मितः अयोमयः आयुधविशेष इति द्रष्टव्यम् । दशनं छेदनम् ॥ ७,२७ ॥

## पदार्थदीपिका

यच्चिद्धि सोमपा ॥ अनाशास्ता इव ॥ शंसुस्तुतौ । निष्ठेति भावे क्तः । यस्य विभाषेतीट् प्रतिषेधः । स्मसि इदूतोमसि ॥ १ ॥

शिप्रिन् । अत इति । उनाविति मत्वर्थीय इति ॥ शचीव इति ॥ छन्दसीर इति मतुपो वत्वम् । मतुवसोरिति रुत्वे खरवसानयोरिति विसर्जनीयः ॥ २ ॥

(पदार्थदीपिका)

मिथूदृशा ॥ दृशेःकर्तरि क्विप् । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घः । सुपां सुलुगिति विभक्तेराकारः । सस्ताम् । षस स्वप्ने । लोटि तसस्ताम् । अदिप्रभृतिभ्यश्शप इति शपो लुक् ॥ निष्वापय । सुषामादित्वात् षत्वम् । अन्येषामपीति दीर्घः ॥ ३,४ ॥

मृणेति । मृण हिंसायां तौदादिकः शस्य ङित्वाद्गुणाभावः ॥ नुवन्तम् । णुस्तुतौ । शतरि अदिप्रभृतित्वाच्छपो लुक् । शतुर्ङित्वात् गुणाभावः । उवङादेशः ॥ ५ ॥

पताति लेड्वाडागमः । कृण्डृणाच्या । ऋवर्णान्नस्य णत्वं वाच्यमिति वचनात् णत्वम् ॥ ६ ॥

परिक्रोशम् । क्रुश आह्वाने । परितः क्रोशतीति परिक्रोशः । पचाद्यच् । जहि । हन हिंसागत्योः । हन्तेर्ज इति जादेशः । तस्य असिद्धवदत्राभादित्यसिद्धत्वात् अतो हेरिति हेर्लुक् न भवति ॥ दंशय ॥ पुरादित्वात् स्वार्थिको णिच् ॥ ७,२७ ॥

## टीकाविवृतिः

यच्चित्सप्तपाङ्क्तमित्यनुक्रान्तत्वादित्यर्थः । यच्चिद्धीति सूक्तं सप्तसंख्याकं पाङ्क्तं अष्टाक्षराःपञ्चपादाःयस्याःसा पङ्क्तिः । पङ्क्तेरिदमित्यर्थेऽण् । पङ्क्तिछन्दस्कमित्यनुक्रमणिकार्थः ॥ द्वाविंशत्यृचमिति ॥ आवोब्ध्यधिकास्माकं पादनिचृच्छश्वत्रिष्टुप्परौ तृचावाश्विनौषस्यावित्यनुक्रान्तत्वादित्याशयः । आव इन्द्रमिति सूक्तस्य द्वाभ्यामधिकाविंशतिःसंख्या । अस्माकं शिप्रिणीनामिति ऋक्पादानां त्रयाणामपि सप्ताक्षरयुक्तत्वात्पाद निचृद्गायत्रीछन्दस्का । शश्वदिन्द्र इति ऋक्त्रिष्टुप्छन्दस्का । परौ शश्वदिन्द्र इत्यतःपरौ तृचौ आश्विनावश्वावत्येत्येकस्तृचः आश्विनः दस्रदेवताकः । कस्त उष इति द्वितीयस्तृच उषोदेवताक इत्यनुक्रमणिकार्थः । अत्र देवतामाह ॥ आद्येनेति ॥ स इन्द्रन्तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभिरिति ब्राह्मणोक्तेरिति भावः ॥ सद्गुणेति ॥ सच्छब्द उत्तमं ब्रूयादानन्दन्तीति वै वदेत् । येतिज्ञानंसमुद्दिष्टमित्युक्तेः सन्तौ त्यौ आनन्दज्ञाने उपलक्षणत्वेन सर्वे गुणा यस्येति सत्यशब्दस्य सद्गुणेत्यर्थो ज्ञेयः । तुविमघेत्यत्र उरुतुवीति बहुनामसु पाठात्तुविशब्दो महत्त्वार्थकः । तृतीयोतिशये इति खकारस्थाने घकारादेश इति भावेनाह ॥ महामखेति ॥ तात्पर्यमाह ॥ सर्वेति ॥ सर्वेषु यज्ञेषु पूजनीयेत्यर्थः । श्रुतावाङ्पूर्वाच्छंसस्तुतावित्यतःक्त प्रत्यये अनिदितामिति नलोपे नञ्समासे चानाशस्ता इति रूपमिति भावेन भाष्ये अशस्ता इत्युक्तं तद्व्याचष्टे ॥ अस्तुत्या इति ॥ स्मसिस्म इति ॥ श्रुतौ अस्तेर्लटि मस इदन्तोमसिरित्यन्ते इकारागम इति भावः । इवशब्दस्वारस्यं दर्शयति ॥

(टीकाविवृतिः)

अत्यन्तेति ॥ सर्वथाऽस्तुत्यत्वे लौकिकैरा शंसयेति प्रार्थना न युज्यते । कुतः । ईश्वरोपि समर्थोपि । अत्यन्ताप्रशस्तान् तमोयोग्यान्कदापि न प्रशस्तान्करोति इति हेतोः । अतः सर्वथा अस्तुत्यत्वं नास्माकमिति द्योतयितुं इवेत्युक्तमिति भावः ॥ तद्विषये इति ॥ गवाश्वादिमत्त्वेन लोकाः अस्माकं यथा स्तुतिं कुर्युस्तथास्मान् कुरु अस्मभ्यं गवादिकं दत्वेति शेषः । शंसेर्णिजन्तत्वादिन्द्रस्य प्रयोजककर्तृत्वेन स्वतन्त्रकर्तारमध्याहरति ॥ लोकेनेतीति ॥ बाह्ये स्फुटमिति ॥ अतो भाष्ये नेयं योजना दर्शितेति भावः । गौर्वागिति वाङ्नामसु पाठादिति भावः ॥ अश्वाःमन आदीनीति ॥ इन्द्रियाणि हयानाहुरिति काठकोक्तेरिति भावः । बहुवाच्यज्ञेययुक्तान्कृत्वेति गवाश्वोक्त्युपयुक्ताध्याहाररूपे भाष्ये गवाश्वशब्दाभ्यां वागादिग्रहणपक्षे शु भ्रशब्दार्थानुक्तेराह ॥ वागादीनामिति ॥ तथा च स्पष्टत्वान्नोक्तमिति भावः ॥ तर्हि बहुशब्दः किमर्थ इत्यत आह ॥ सहस्रत्वसंपादनायेति ॥ वागादीनां के बहवो विषया इत्यत आह ॥ बहवश्चेति ॥ विषया इति शेषः । ततश्च बहुवो वाच्याः अस्माभिर्वक्तुं योग्याः । ज्ञेयाः ज्ञातुं योग्याः । परमात्मगुणकर्मरूपादयस्तैर्युक्तान् भगवद्गुणादिवक्तॄन्ज्ञातॄनस्मान्कृत्वा वागादिविषये लोके नास्मान्प्रशंसयेति ऋगाशयः ॥ १ ॥

शिप्रिन्वाजानाम् ॥ सुखनामसु पठितात् शिवशब्दान्मत्वर्थे इनिप्रत्यये पृषोदरादित्वाद्वकारस्य पकारादेशः । ततःपरं रेफागम इति भावेन व्याचष्टे ॥ हे शिप्रिन् सुखिन्निति ॥ विशेषणविशेष्यभावस्य कामचारित्वेन शिप्रिन्नित्यस्य विशेष्यत्वादामन्त्रितं पूर्वमविद्यमानवदिति प्राप्ताविद्यमानवद्भावस्य नामंत्रिते समानाधिकरणे सामान्यवचनमिति निषेधाद्वाजानां पते इत्यस्याष्टमिकामन्त्रितनिघातो ज्ञेयः ॥ शचीव इति ॥ शची वागिति वाङ्नामसु पठितात् शचीशब्दान्मतुपि छन्दसीर इति इकारान्तरेफान्तान्मतोर्वत्वविधानात् मस्य वत्त्वे मतुवसोरुरिति रुत्वमिति भावः ॥ दंसनेति ॥ चुरादौ पटपुटेत्यादिदण्डके भाषार्थके पठिताद्दसिधातोरिदित्वान्नुमागमे ण्यासश्रंथोयुजिति युच्प्रत्यये अनादेशे टाबिति भावः । अस्यैव धातोर्घञं तस्य अप्रःदंस इति कर्मनामसु पाठात्तत्पर्यायत्वाद्दंसनेत्यस्यापि कर्मार्थत्वमिति भावेनाह ॥ कर्माणीति ॥ स एवंविध इति ॥ पूर्वार्द्धोक्तप्रकारेण सुखित्वान्न पतित्वकर्मप्रेरकत्वविशिष्टस्त्वं नो गवादिषु आशंसयेत्येक एवान्वयः पूर्वार्धे क्रियाभावादिति भावः ॥ २ ॥

निष्वापय ॥ निपात इति ॥ पृषोदरादित्वान्मिथ्येत्यत्र याशब्दस्य ऊकारादेश इति भावः ॥ सामर्थ्यादिति ॥ दैत्यराक्षसयोरेव मुख्यमिथ्याज्ञानित्वादिति भावः । दैत्यरक्षसी च ते प्रजे च दैत्यरक्षःप्रजे इति विग्रहः ॥ षस स्वप्ने इति ॥ अस्माल्लोटि तसस्तामादेशे अदादित्वाच्छपो लुगिति

(टीकाविवृतिः)

शेषः। स्वापस्य सर्वेन्द्रियोपरमरूपत्वेन तदा ज्ञानाभावात्सस्तामित्यनेनाज्ञानं लक्ष्यते इत्याशयेनाह ॥ अज्ञानिन्यौ भवतामिति ॥ मिथ्यादृशोरिति ॥ दैत्यादेर्मिथुदृशेत्यनेन मिथ्याज्ञानोक्त्या यथावस्तुज्ञानाभावस्य प्राप्तत्वात्पुनःसस्तामित्यज्ञानप्रार्थनं व्यर्थमित्यर्थः ॥ कथमिति ॥ बह्व-ज्ञानिन्यौ केन प्रकारेणेत्यर्थः ॥ यथा नित्यं चेति ॥ येन प्रकारेण सदा तत्वज्ञानशून्ये भवतस्तथा त्वं ते प्रजे परतत्वविषये निष्वापय नितरां मोहयेत्यर्थः। दैत्यरक्षःप्रजे इति द्विवचनं जात्यभिप्रायेणेति ज्ञापयितुमाह ॥ तान्निष्वापयेति ॥ सस्तामित्यनेनैवाबोधसिद्धेः पुनरबुध्यमानग्रहणान्नित्यमिति लाभादबुध्यमाने इत्यादेःसस्तामित्येतद्विवरणरूपत्वान्न पुनरुक्तिरिति भावः ॥ किंचेति ॥ पूर्वार्धे पृथक्क्रियायाः सत्त्वादुत्तरार्धोक्तस्य समुच्चयेन योजनेति भावः। एवमुत्तरत्रापि ज्ञेयम् ॥ ३ ॥

ससंतुत्याः ॥ श्रुतौ अभिघातिपरारातिप्रत्यर्थिपरिपंथिन इत्यमरेणाराति शब्दस्य पुल्लिंग-साहचर्योक्तेःपुल्लिङ्गत्वात्तद्विशेषणस्यत्य शब्दस्यत्ये इति रूपेण भाव्यं कथं त्या इत्यत आह ॥ व्यत्ययेनेति ॥ स्त्रीलिङ्गत्वमिति शेषः। अत एव भाष्ये ते इति प्रतिपदं दत्तमिति भावः ॥ ससंत्विति ॥ षस स्वप्ने इत्यत अदादित्वाच्छपो लुगिति भावः। अस्य भाष्ये स्वपंत्विति पदार्थमुक्त्वा सर्वदेत्यादिना तात्पर्यार्थः कथ्यत इति भावेनाह ॥ इति यावदिति ॥ रातयस्तव मित्राणीति ॥ अत एव नञो विरुद्धार्थत्वादरातिशब्देन मित्रविरुद्धः शत्रुरुच्यत इति भावः ॥ स्वार्थमेव वेति ॥ अस्यामृचि त्या इति पदं प्रजारूपस्त्रीवाचकमेव न तु व्यत्ययाश्रयेण पुल्लिङ्गमिति ज्ञापयितुं पूर्वऋग्व्याख्यानभाष्ये दैत्यरक्षःप्रजे इति प्रजाग्रहणं कृतमिति भावः ॥ अन्यथेति ॥ त्याशब्देनप्रजाविवक्षाभावे भाष्यकारो मिथूदृशेत्येतद्विशेष्यत्वेनेति शेषः। तथा चाराति-रूपाःत्याःताः प्रसिद्धाः प्रजा इति विपरीतो विशेषणविशेष्यभावोस्मिन्पक्षे ज्ञेयः ॥ ४ ॥

समिन्द्र ॥ हिंसार्थोयमिति ॥ मृणहिंसायामित्यतस्तौदादिकाल्लोटिशे तस्य ङित्वाद्गुणाभावे अतो हेरिति हेर्लुकि मृणेति रूपमिति भावः। संशब्दार्थमाह ॥ तमस्येवेत्यादिना ॥ अमुयेति ॥ अदस्शब्दात् त्यदाद्यत्वे पररूपे टापि तृतीयैकवचने आङिचाप इत्येत्वे अयादेशे अदसोसेरिति मुभाव इति भावः ॥ माययेति शेष इति ॥ ऋचि भाष्यकारेणोच्यत इति भावः ॥ शाठ्येनेत्यर्थ इति ॥ गूढद्वेषो हि शाठ्यम्। बहिरंगन्तु स्तवनमिति भावः ॥ द्वितीयपक्षे मायया नुवन्तमित्यस्य तात्पर्यमाह ॥ मायामाश्रित्येत्यर्थ इति ॥ माययेतीत्थंभूतलक्षणे हेतौ वा तृतीया। ततश्च मायया लक्षणेन हेतुना वा गुणवत्वेन कीर्तयन्तमित्यक्षरार्थो ज्ञेयः ॥ इत्यादिस्तुतेरिति ॥ आदिशब्दान्महिम्नःपारन्ते इत्यादिग्राह्यम्। मायामयास्तव गुणा इत्यस्योदाहरणमाह ॥ निराकारमिति ॥ सर्वथाकारशून्यस्य परमार्थतो गुणाश्रयत्वासंभवादिति भावः। आदिशब्दा-दनृतजडविरोधिरूपमित्यादेःसङ्ग्रहः ॥ ५ ॥

(टीकाविवृतिः)

पताति ॥ दूरं चेति भाष्यस्थचशब्दः पूर्वक्रगुक्तसमुच्चयार्थ इति भावेनाह ॥ किंचेति ॥ लेडिति ॥ तिपो लेटोडाटावित्याडागम इति शेषः ॥ अतस्तत्तम इति ॥ तमसो नित्यत्वादिति भावः ॥ उल्बणा वेदनेति ॥ अतिदुःखात्मकमित्यर्थः । ननु तमोविशेषणत्वाद्वेदनोल्बणमिति वक्तव्ये कथं स्त्रीलिङ्गप्रयोग इत्यत आइ ॥ स्त्रीलिङ्गसंपादनायेति ॥ कुण्डृणाचीशब्दस्येति शेषः ॥ कुंभःकुंभीपाक इति ॥ नामैकदेशग्रहणेन लक्षणया नामग्रहणस्य भीमो भीमसेन इत्यादौ दर्शनादत्रापि कुण्डपर्यायकुंभशब्देन कुंभीपाकग्रहणादिति भावः ॥ ह्रीतिति ॥ आदिशब्दात् रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुंभीपाक इति प्रोक्तान्यनित्यनरकाणि तु । तामिस्रश्चांधतामिस्रौ द्वौ नित्यौ संप्रकीर्तितौ ॥ इति सप्तप्रधानानि बलीयस्तूत्तरोत्तरमिति भारतवाक्यं सर्वं गृह्यते ॥ श्रुतिसाम्यादिति ॥ उपलक्षणमेतत् । ऋकारेरेफभागस्यमहाभाष्ये ऋवर्णान्नस्य णत्वं वाच्यमिति वार्तिकदूषणावसरेऽङ्गीकारादवयववाचकरेफ शब्देनावयवी ऋकार उच्यते इत्यपि ग्राह्यम् ॥ अकारस्य ऋकार इति ॥ वर्णविकाररूपः । वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशाविति निरुक्तलक्षणोक्तेरिति भावः ॥ व्यत्ययश्चेति ॥ अंत्यचकारस्थ आकारो नकारानन्तरं जातः नकारस्थ ईकारःचकारानन्तरमिति वर्णविपर्यय इत्यर्थः ॥ तस्येति ॥ तमस इत्यर्थः ॥ आधिक्येति ॥ व्यत्ययोतिशयकुत्सनादाविति महाव्याकरणसूत्रादिति भावः ॥ ६ ॥

सर्वं परिक्रोशम् ॥ परितःक्रोशो दुष्टव्यवहारो यस्मादिति विग्रहं मनसि निधायाह ॥ परिक्रोशकरमिति ॥ निन्दकमिति तु तात्पर्यार्थः ॥ जहीति ॥ हन्तेर्लोटि सिपो हित्वे हंतेर्ज इति जादेश इति भावः । जभि नाशने इत्यतश्चौरादिकाल्लोटि निष्पन्नस्यजंभयेत्यस्य धातूनामनेकार्थ-त्वाश्रयेणार्थमाह ॥ दंशयेति ॥ कृकाःक्रकचा इति ॥ काष्ठछेदकः सदंतायुधविशेषः क्रकच इत्यर्थः । क्रकचशब्दस्य पृषोदरादित्वात्कृकादेश इति भावः ॥ दाश्वमिति ॥ दंश दशने इत्यतःबहुलग्रहणात् औणादिके क्वन्प्रत्यये वृद्धौ च अनिदितामिति नलोप इति भावः ॥ ७ ॥ २७ ॥ १० ॥

## ऋक्संहिता पदपाठसहिता (सू-३०, व-१)

**(३२९) आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् ॥ मंहिष्ठं सिञ्च इंदुभिः ॥ १ ॥**

**(प०) आ । वः । इन्द्रम् । क्रिविम् । यथा । वाजऽयन्तः । शतऽक्रतुम् ॥ मंहिष्ठम् । सिञ्चे । इंदुऽभिः ॥ १ ॥**

(ऋक्संहिता पदपाठसहिता)

(३३०) शतं वायः शुचीनां सहस्रं वा समाशिराम् ॥ एदु निम्नं न रीयते ॥ २ ॥

(प०) शतम् । वा । यः । शुचीनाम् । सहस्रम् । वा । सम्ऽआ-शिराम् ॥ आ । इत् । ऊँइति । निम्नम् । न । रीयते ॥ २ ॥

(३३१) सं यन्मदाय शुष्मिण एना ह्यस्योदरे ॥ समुद्रो न व्यचो दधे ॥ ३ ॥

(प०) सम् । यत् । मदाय । शुष्मिणे । एना । हि । अस्य । उदरे ॥ समुद्रः । न । व्यचः । दधे ॥ ३ ॥

(३३२) अयमु ते समतसि कपोत इव गर्भधिम् ॥ वचस्तच्चिन्न ओहसे ॥ ४ ॥

(प०) अयम् । ऊँइति । ते । सम् । अतसि । कपोतःऽइव । गर्भऽधिम् ॥ वचः । तत् । चित् । नः । ओहसे ॥ ४ ॥

(३३३) स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते ॥ विभूतिरस्तु सूनृता ॥ ५, २८ ॥

(प०) स्तोत्रम् । राधानाम् । पते । गिर्वाहः । वीर । यस्य । ते ॥ विऽभूतिः । अस्तु । सूनृता ॥ ५, २८ ॥

ऋग्भाष्यम्

हेवाजयंतो युध्यंतो देवा भोगिन एववा । सोमैर्व इन्द्रमासिंचे कृविं यद्वन्नृपं कृतेः । कर्तारमीशमिववा स्वदृष्टान्तो हरेर्भवेत् ॥ १ ॥ शतेन वा सहस्रेण सोमानामाशिरावताम् । पाताल इव नैवायं निलीनो भवति कचित् । विलापयति तानेव ॥ २ ॥ बलिनेऽस्मै मदाय च । सन्दधुर्नैव विश्वानि व्यक्तीरस्योदरेकचित् । समुद्रेकात्समुद्राख्या प्रकृतिश्च महत्त्वतः ॥ ३ ॥ तवैवायं प्रपञ्चश्च कपोतो गर्भधिं यथा । सम्यग्व्याप्नोषि विश्वं च तस्मान्नो वच ओहसे ॥ ४ ॥ गिरां वाहक ते स्तोत्रमखिलं वेदवैदिकम् । सूनृतावागियं मेच विभूतिरिति कल्प्यताम् । अस्त्वित्येतत्प्रसादेन फलदानादुदीर्यते ॥ ५, २८ ॥

## ऋग्भाष्यटीका

आवः। हे। हे वाजयन्तः। वाजं युद्धं तत्कुर्वन्तः। तत्करोतीति णिच्। युध्यन्तो योद्धारः। यद्वा। वाजमन्नम्। सर्वभोगोपलक्षणं चेदम्। वाजं सर्वभोगान्। भुञ्जत इति प्रातिपदिकाद्धात्वर्थे इति णिच् भोगिनो देवा इति यावत्। एव शब्देनान्नमिच्छन्नहमिति व्याख्यानमपाकरोति। अनेकव्यत्ययापत्तेः। वो युष्माकं स्वामिनम्। शतक्रतुं मंहिष्ठं पूज्यतममिन्द्रमिन्दुभिः सोमैरहमासिंचे। कमिव। क्रिविं नृपं यथा यद्वत्। सार्वभौममैन्द्रे महाभिषेके यथाभिषिञ्चति तथेत्यर्थः। नृपः कुतः क्रिविः। कृतेः पालनादेः करणात्। करोतेः किविः। यद्वा क्रिविं यथा जगतः कर्तारमीशं विष्णुमिव। नन्विन्द्रोपि यदा विष्णुस्तदा कथमेतदित्यत आह॥ स्वेति। हरेर्विवक्षायामयं स्वदृष्टान्तो भवेत्॥ १॥

शतं वा। शतेन वा। योऽयमिन्द्रः शुचीनां शुद्धानाम्। समाशिरां सङ्गताशिराणाम्। आशिरावतां दीर्घः छान्दसः। स्त्रीलिङ्गो वा शिराशब्दः। सोमानामिति शेषः। शतं वा शतेन वा। सहस्रं वा सहस्रेण वा। इत् क्वचित्। न उ नैव। आरीयते आलीयते। निलीनो भवति। युगपदनेकैर्दीयमानैरपि सोमैर्न तस्यालम्बुद्धिर्भवतीति बहुभोग शक्तिमानिति भावः। किमिव। निम्नं न पाताल इव। अत्र नेत्युभयत्र सम्बध्यत इत्युक्तं भवति। प्रकारान्तरेण व्याचष्टे। विलापयतीति। तान्सोमानेव। अनेनैवमुक्तं भवति। य इन्द्रः शुचीनां समाशिरां सोमानाम्। शतं वा सहस्रं वा रीयत एव। अन्तर्णीतण्यर्थोयं विलापयत्येव। स्वस्मिन्नंतर्भावयत्येव। किमिव। निम्नं न बह्वपि जलं पातालं यथा तथैवेति। तमाऽसिंच इति पूर्वेणान्वयः॥ २॥

संयत्। बलिने। यद्यस्मादेना एतानि विश्वानि च अस्येन्द्रस्योदरे प्रविष्टानि। शुष्मिणे बलिने। अस्मा इन्द्राय। षष्ठ्यर्थे चतुर्थी। मदाय तृप्तये। व्यचोन सन्दध इति वक्ष्यमाणमर्थवशात् बहुवचनान्तं सम्बध्यते। व्यचांसि व्यक्तीः। प्रभावान्कचिन्नैव सन्दधुः। हिरवधारणे। किञ्च। समुद्रः समुद्रे कात्कारणात्समुद्राख्या प्रकृतिश्च न व्यचो व्यक्तिम्। सन्दधे। कुतः। अस्य महत्त्वतः। तस्मादिति पूर्वेण सम्बन्धः। सप्रकृतिकानि विश्वान्युदरं प्रविश्य तृप्तिं जनयितुं नालम्। किमुत सोमा इति॥ ३॥

अयमुते। तवैव। हे इन्द्रायं प्रपञ्चः। चशब्दात्प्रकृतिश्चेति शेषः। त उ तवैव। त्वदधीन एव। किञ्च। गर्भधिं गर्भो धीयतेऽत्रेति गर्भाशयं कपोत इव कपोतो यथा व्याप्नोति तथा। समतसि अत सातत्यगमने। सम्यग्व्याप्नोषि। विश्वमिति शेषः। तत्तस्माच्चित् एव नोऽस्माकमृषीणां वचो वेदम्। ओहसे वहेः सम्प्रसारणं छान्दसं वहसि वेदप्रतिपाद्यो भवसि। नहि परिमित प्रभावो वेदप्रतिपाद्यो भवति॥ ४॥

स्तोत्रम्। गिराम्। हे राधानां सिद्धीनां पते। गिर्वाहो मे गिरां वेदानां वाहक। प्रवर्तक। वहतेरस् वृद्धिश्च। ह्रस्वः छान्दसः। वीर विक्रान्त। यस्य ते तव स्तोत्रमखिलं वेद वैदिकमिति शेषः। इयं च मे

(ऋग्भाष्यटीका)

सूनृतावाक्तस्य तव विभूतिर्विभूतेरैश्वर्यस्य प्रतिपादिकास्तु। त्वया विभूतिप्रतिपादिकेति कल्प्यताम्। ननु वेदानामर्थ सम्बन्धस्यौत्पत्तिकत्वात्कथमस्त्विति प्रार्थ्यत इत्यत आह ॥ अस्त्विति। ल्यब्लोपनिमित्ता पञ्चमी। प्रसादेन फलदानमपेक्ष्यास्त्वित्येतदुदीर्यते। मदीयया सूनृतया वाचा प्रसन्नो भूत्वा फलं देहीत्यभिप्रायेण सूनृता विभूतिरस्त्विति लक्षणयोच्यत इति ॥ ५,२८॥

## मन्त्रार्थमञ्जरी

अथ 'आ व' इति द्वाविंशत्यृचं वर्गचतुष्टयात्मकं त्रिंशं सूक्तम्। तत्र आदितः षोडशैन्द्र्यः, ततस्तृच आश्विनः, अन्त्यस्तृच उषस्यः। एकादशी पादनिचृद्गायत्रीविशेषः, षोडशी त्रिष्टुप्, शिष्टा गायत्र्यः। (हे) वाजयन्तः, वाजं युद्धम्, तत्कुर्वन्तः, 'तत्करोति तदाचष्टे' इति णिच्, यद्वा वाजमन्नम्, सर्वभोगोपलक्षणम् वाजान्सर्वभोगान् भुञ्जत इति 'प्रातिपदिकाद्धात्वर्थे' इति णिच्, भोगिनो देवा इति यावत्। वः, युष्माकम्। स्वामिनम् शतक्रतुम्। मंहिष्ठम्, पूज्यतमम्। इन्द्रम्। इंदुभिः, सोमैः अहम् आ सिञ्चे, सिञ्चामि। कमिव ? क्रिविम्, जगत्पालनादि-करणात्क्रिविशब्दवाच्यम्, कृञः किविः, नृपं विष्णुं विष्णुं वा। यथा, यद्वत्, सार्वभौममैन्द्रे महाभिषेके यथाभिषिञ्चति तथेत्यर्थः ॥ १॥

यः, अयमिन्द्रः। शुचीनाम्, शुद्धानाम्। समाशिराम्, षष्ठ्यर्थे द्वितीया दीर्घश्छान्दसः, स्त्रीलिङ्गो वा शिराशब्दः, आमि नुडभावो वा, सङ्गताशिराणाम्, दध्याख्याशिरावताम्। (सोमानाम्) इति शेषः। शतम् वा, शतेन वा। सहस्रम् वा, सहस्रेण वा। इत्, क्वचित्। (न) उ, नैव। आ रीयते, आलीयते, नैव निलीनो भवति, युगपदनेकैर्दीयमानैरपि सोमैर्न तस्यालम्बुद्धिर्भवति, बहुभोगशक्तिमानिति भावः। किमिव ?निम्नम् न, पातालमिव, 'न' इत्यस्योभयत्रान्वयः। यद्वा– यः, इन्द्रः। शुचीनाम् समाशिराम् (सोमानाम्) शतम् वा सहस्रम् वा। (आ रीयते इत् उ) आ रीयत एव, अन्तर्णीतण्यर्थोऽयम्, विलापयत्येव किमिव ? निम्नम् न, बह्वपि जलं पातालं यथा तथैवेति। (तम्) 'आ सिञ्चे' इति पूर्वेण अन्वयः ॥ २॥

यत्, यस्मात्। एना, एतानि विश्वानि। (च) अस्य, इन्द्रस्य। उदरे प्रविष्टानि। शुष्मिणे, बलिने। (अस्मै) इन्द्राय, षष्ठ्यर्थे चतुर्थी। मदाय, तृप्तये। 'सम् दधे' इति वक्ष्यमाण-मर्थवशाद्बहुवचनान्तं सम्बध्यते (व्यचः), व्यचांसि, व्यक्तीः, प्रभावान्। क्वचित् (न) हि सम् (दधे) नैव सन्दधुः, हिरवधारणे। किं च, समुद्रः, समुद्रेकहेतुना समुद्राख्यप्रकृतिः। (च) व्यचः, व्यक्तिम्। न (सम्) दधे। कुतः ? अस्य महत्त्वादिति भावः। (तस्मात्) इति पूर्वेण अन्वयः। सप्रकृतिकानि विश्वान्युदरं प्रविश्य तृप्तिं जनयितुं नालम्, किमुत सोमाः ? इति ॥ ३॥

(मन्त्रार्थमञ्जरी)

(हे इन्द्र) अयम्, प्रपञ्चः प्रकृतिश्च । ते उ, तवैव, त्वदधीन एव । किं च, गर्भधिम्, गर्भो धीयतेऽत्रेति गर्भाशयम् । कपोत इव, कपोतो यथा व्याप्नोति तथा । सम् अतसि, 'अत सातत्यगमने' सम्यग्व्याप्नोषि । (विश्वम्) इति शेषः । तत्, तस्मात् । चित्, एव । नः, अस्माकम्, ऋषीणाम् । वचः वेदम् । ओहसे, वहेः सम्प्रसारणं छान्दसम्, वहसि, वेदप्रतिपाद्यो भवसि, नहि परिमितप्रभावो वेदप्रतिपाद्यो भवति ॥ ४ ॥

(हे) राधानाम्, सिद्धीनाम् । पते । गिर्वाहः, गिरां वेदानां वाहो वाहक प्रवर्तक, वहतेः असुन्, वृद्धिश्च । वीर, विक्रान्त । यस्य । ते, तव । स्तोत्रम् । अखिलम् (वेद) (वैदिकम्) इति शेषः । इयं च मे– सूनृता, वाक् । (तस्य तव) विभूतिः, विभूतेः, ऐश्वर्यस्य । प्रतिपादिका– अस्तु, त्वया 'विभूतिप्रतिपादिका' इति कल्प्यताम् 'मदीयया सूनृतया वाचा प्रसन्नो भूत्वा फलं देहि' इति भावेन 'सूनृता, विभूतिः, अस्तु' इति लक्षणयोज्यत इति ज्ञेयम् ॥ ५ ॥ इत्यष्टाविंशो वर्गः ॥ २८ ॥

## रूपावतारः

आव इन्द्रम् । वाजयन्त इति रूपसिद्धिं स्मारयति । तत्करोतीति । वाजशब्दात् तत्करोतीति णिचि टिलोपे वाजि इति रूपम् । ततो लटि तस्य शत्रादेशे गुणे अयादेशे जसि वाजयन्त इति रूपम् । अनेकव्यत्ययापत्तेरिति । परव्याख्याने बहुवचनं अहमित्यस्य व इत्यादेशश्चेत्यनेकव्यत्ययः । अस्मद्व्याख्याने तु आमन्त्रिताद्युदात्तत्वाभाव एक एव छान्दस इति अस्मद्व्याख्यान-मेवादरणीयमिति भावः । करोतेः किविरिति । कृ इवि इति स्थिते यणादेशे द्वितीयैकवचने च क्रिविरिति रूपम् ॥ १ ॥

शतं वा ॥ पाताल इवेति । यथा पाताले न पूर्तिरेवमेवेत्यर्थः । नेत्युभयत्रेति । क्रियया संबन्धो निषेधार्थः । निम्नशब्दसंबन्धस्तु इवार्थ इति भावः ॥ २ ॥

संयन्मदाय ॥ संबन्धप्रकारमाह ॥ सप्रकृतिकानीति ॥ ३ ॥

अयमुते ॥ चशब्दादिति भाष्यकृता चशब्दात् प्रकृतिरिति शेषः सूचितः इत्यर्थः । संप्रसारणं छान्दसमिति । वहेःथासि तस्य से आदेशे संप्रसारणे 'पुगन्तलघूपधस्य च' इति गुणे ओहस इति रूपम् ॥ ४ ॥

स्तोत्रम् ॥ ह्रस्वश्छान्दस इति । गीर्शब्द इति शेषः । लक्षणयोच्यत इति । विभूतिशब्देन विभूतिप्रतिपादकत्वमादौ लक्ष्यते तत्राप्यनुपपत्तिदर्शनेन फलदानं लक्ष्यत इति लक्षित-लक्षणयेत्यर्थः ॥ ५ ॥ २८ ॥

## पदार्थप्रकाशिका

आव इन्द्रं क्रिविं यथा। ननु वाजयन्त इत्यस्य णिजन्तत्वात्तस्य च परव्यापारे विहितत्वाद्युद्धं कारयन्तमिति वक्तव्यं नतु युध्यन्त इति तत्राह। तत्करोतीति। तत्करोति तदाचष्ट इति वार्तिके तत्करोत्याद्यर्थे स्वार्थ एव णिचो विधानात्। पीडां करोतीति पीडयन् भृशमाचष्टे इति भृशयन्नित्यादि प्रयोगदर्शनात्प्रकृतेपि वाजं युद्धं करोतीत्यर्थे स्वार्थ एव णिच् अतो युध्यंत इति व्याख्यानं युक्तमित्यर्थः। भुञ्जत इतीति। इत्यर्थे इत्यर्थः। प्रातिपदिकाद्धात्वर्थ इतीति। प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चेति धातुसूत्रम्। तस्यार्थः यस्मात्कस्माच्चित् प्रातिपदिकात् यस्मिन् कस्मिंश्चित् धात्वर्थमात्रे विवक्षिते सति णिच्प्रत्ययो विकल्पेन भवति। सच प्रत्ययः इष्टवद्भवति। इष्ठन्प्रत्ययार्थभूतं यत् प्रातिपदिकं टिलोपादि तत्कारी भवतीति। एवं प्रकृते वाजप्रातिपदिकात् भुजपालनाभ्यवहारयोरिति भुजधात्वर्थभूताभ्यवहारविवक्षायां णिच्प्रत्ययेणकारयोर्लोपे वाजा इति स्थिते णिच इष्टन् कार्यकारित्वादिष्टन् प्रत्ययस्य च टिलोपकारकतायाः टेः परस्य जेर्लोपः स्यादिष्टेमेयस्सुपरत इत्युक्तत्वेन णिचि परे टीभूतस्य जकारस्थस्य अकारलोपे वाज्। इ इति जाते। अस्मात् लेटि शत्रादेशे शकारऋवर्णयोर्लोपे वाजि। अत्। इति जाते इकारस्य एकाररूपे गुणे तस्य चायादेश वाजयदिति प्रातिपदिकसिद्धिः। पश्चाज्जसिजकारलोपे नुमागमे मित्वादंत्याचः परजाते वाजयन् न् अस् इति जाते तस्य रुत्वे विसर्गे च सति वाजयन्त इति रूपसिद्धि भावः। अन्नमिछन्निति। तथाचैडकातमात्मने इच्छतीति एडकीयन् इतिवत् वाजयात्मने इच्छतीति वाजयन्निति वाक्यजन्तोयं शब्द इत्यङ्गीकृत्य व्याख्यातमित्यर्थः। अपाकरोतीति। हेवाजयन्तो विभ्यन्तः हेवाजयन्तो भोगिनो देवा वा इत्येव व्याख्यानं न परकीयमित्येवशब्दार्थो द्रष्टव्यः। कथंतदपाकरणमित्यत आह। अनेकेति। बहुवचनस्य एकवचनत्वेन व्यत्ययः कार्यः। तथाच वाजयन्त इत्यस्य क्यजन्तत्वक्य चिचेति क्यचि परे पूर्वअकारस्य इकारविधानादिकीतीति दर्शनात्। अत्रापि वाजीयन्त इति भाष्ये शिचेति विहितदीर्घस्य वैकल्पिकत्वमंगीकृत्यात्र तद्व्यत्ययः तदभावः कल्पनीय इत्यनेकव्यत्ययापत्तेरित्यर्थः। अनेकव्यत्यया पत्तेरित्येतस्य बहुवचनव्यत्ययापत्तेरित्यर्थ इति व्याख्याने तु बहुवचनव्यत्ययापत्तेरिति वक्तव्यतया अनेकपदास्यारस्यापत्तेः। असिंच इति। अभिषेचयामीत्यर्थः। ऐन्द्रे महाभिषेक इति। राजपदाभिषेक इत्यर्थः। नृपः कुतः क्रिविरिति। कुतो निमित्तान् नृपः क्रिविशब्दवाच्य इत्यर्थः। पालनादेरिति योग्यतया लाभः। करोतेः क्रिविरिति। क्रिञ्करणे अस्मात् क्रिविप्रत्यये ककारलोपे कृ इवीति स्थिते इको यणिचीति यणादेशे क्र.इ.वि. क्रिवीति प्रतिपदिकसिद्धिरित्यर्थः। कथमेतदिति दृष्टान्तदार्ष्टान्तिकयोर्लोके

(पदार्थप्रकाशिका)

भेदस्यैवा दर्शनादिति भावः। स्वदृष्टान्त इति। दृष्टान्तदार्ष्टान्तिकभावो भेदनियत इत्ययुक्तम्। स्वदृष्टान्तस्यापि सम्भवात्। नचैतदप्रामाणिकमिति वाच्यम्। 'गगनं गगनाकारं सागरः सागरोपमः रामरावणयोर्युद्धं रामरावणयोरिवे'त्यादि प्रयोगदर्शनादेवमत्रापीत्याशयः॥ १॥

शतं वायः शचीनां। सगाशिरामित्यस्य पदस्यार्थं स्वयमभिधाय पश्चाद्भाष्यं सङ्गमयति। सङ्गतेति। संशब्दः सङ्गतार्थः। तथाच मिश्रिताशिराणामित्यर्थः। अहोरात्रान्तरितं यद्दधि तदाशिरशब्देनोच्यते यथाहुर्मीमांसकाः 'जहोरात्रेणान्तरितम्। दध्याशिरमितीरितम्। तदाशिरं सोमरसे मिश्रीकृत्वैव शोधिते। जुहुयादग्नये नो चेन्महदेनो भविष्यति'। नन्वाशिर शब्दस्य नपुंसकत्वादाशिरवतामिति भाष्ये वक्तव्ये कथमाशिरावतामिति उक्तिरित्यतो भाष्यस्यापि छन्दस्तुज्यत्वान्न दोष इत्याशयेनाह। दीर्घ इति। अत एवापरितोषादाह। स्त्रीलिङ्गो वेति। निलीन इति। अलम्बुद्धिमान् न भवतीत्यर्थः। ऋगभिप्रायमाह। युगपदिति। पाताल इवेति। युगपदनेकैरधिष्ठितोपि पातालो यथा बह्वाकाशवानेव भवति न पूर्णस्तद्वत् इत्यर्थः। अत्र अस्यां योजनायाम्। उभयत्रेति। निम्नं नेति दृष्टान्ते नरीयत इति दार्ष्टान्तिके चेत्यर्थः। तत्र दृष्टान्ते इवार्थो दार्ष्टान्तिकेतु निषेधार्थ इत्यवगन्तव्यम्। प्रकारान्तरेणेति। निम्नं नेति दृष्टान्तेनैवेवार्थस्य नेत्यस्य सम्बन्धमभिप्रेत्य नीयत इत्यस्यार्थान्तरकथनात् प्रकारान्तरत्वं द्रष्टव्यम्। अनेनेति। विलापयति तानेवेति भाष्येणैव ऋक्तात्पर्यमुक्तं भवतीत्यर्थः। तदेव दर्शयति। य इन्द्र इति। जलमिति द्वितीया पातालमिति प्रथमा। पातालशब्दः पुन्नपुंसकलिङ्गः। अत उभयव्यवहारो युक्तः। यथा पातालं स्वस्मिन्निपतितं बह्वपि जलम् अन्तर्भावयति तद्वदित्यर्थः। व्याख्यानद्वयेपि यच्छब्दस्यान्वयं दर्शयति। तमाशिंचे इतीति। यो महाभोगशक्तिमान् यश्च स्वांतर्भावितं शतसहस्रसोमस्तमिन्द्रमहमिन्दुभिरासिंच इति पूर्णेणान्वयः॥ २॥

संयन्मदायशुष्मिण इति। विश्वानि महदादीनि। षष्ट्यर्थ इति। अहल्यायै जारेतिवदिति भावः। वक्ष्यमाणमिति। समुद्रो न व्यचोदध इत्युत्तरत्र वक्ष्यमाणमित्यर्थः। प्रभवानिति। इन्द्रस्यालम्बुद्धिकारणानि सामर्थ्यानि न सन्दधुः धृतवन्तः। महदादिविश्वान्यस्योदरं प्रविष्टान्यपि अस्यालम्बुद्धिजननसमर्थानि न भवन्तीत्यर्थः। व्यक्तिमिति। अलम्बुद्धिजननसामर्थ्यमित्यर्थः। पूर्वेणान्वय इति। तस्मादिन्द्रः सोमानां शतेन सहस्रेण वा न वरीयत इति पूर्वेण सम्बन्ध इत्यर्थः। हेतुहेतुमद्भावमेव व्यञ्जयन् ऋगभिप्रायमाह। सप्रकृतिकानिति॥ ३॥

(पदार्थप्रकाशिका)

अयमुतेसमतसि। त्वदधीन एवेति। तथाच त्वं तत्स्वामीति यावदित्यर्थः। गर्भाशयमिति। गर्भस्थानम् अण्डाख्यमित्यर्थः। पक्षिमात्रस्याण्डजत्वेन तत्रस्थत्वेपि कपोते इतरपक्ष्यपेक्षया साम्यमण्डव्याप्तित्वरूपवैलक्ष्यण्यसद्भावात्तद्दृष्टान्तोक्तिरिति भावः। गर्भाशयं जरायुमित्यर्थः। इति केचित्। तत्तुच्छम्। पक्षिणामण्डजत्वेन जरायुजत्वाभावात्। ननु वहसीति स्यात्। न ओहस इति तत्राह। वहेः सम्प्रसारणमिति। इस्थाने यणादेशो विहितोस्ति। इकोयणचीति वैपरीत्येन यण्स्थाने चेक् भवति तर्हि तत्सम्प्रसारणमित्युच्यते। यथाह इग्यणः सम्प्रसारणमिति। तथाच वहप्रापण इति धातोः लिटि तस्य मध्यमपुरुषे यास् इत्यादेशे वकारस्य छान्दसे उकाररूपे सम्प्रसारणे वहधातोरार्धधातुकत्वात् सार्वधातुकार्धधातुकयोरिति उकारस्यौकाररूपे गुणे ओहस इति रूपमिति भावः। वहसे प्रतिपाद्यत्वेन प्राप्नोषि। इदमुपलक्षणं वहधातोरात्मनेपदित्वमपि छान्दसमिति द्रष्टव्यम्। ननु प्रपञ्चस्वामित्वं विश्वव्यापित्वं वा कथं वेदप्रतिपाद्यत्वे हेतुरित्यत आह। नहीति। तथाच प्रकृत्यादिप्रपञ्चस्वामित्वं विश्वव्यापित्वं वा कथं वेदप्रतिपाद्यत्वे हेतुरित्यत आह। नहीति। तथाच प्रकृत्यादिप्रपञ्चस्वामित्व तद्व्याप्तत्वयोरुक्त्या अपरिमितप्रभावलाभात्तादृक् प्रभाववतः इन्द्रियस्य वेदप्रतिपाद्यत्वं युक्तमित्याशयः॥ ४॥

स्तोत्रं राधानां पते। इचेत्यतः पूर्वं तस्य तवेति योज्यम्। सूनृता अर्थाव्यभिचरिततया सत्यभूता। नन्वसन्तत्वेति वहस इति प्रातिपदिकं स्यान्नतु गिर्वाहस् इति। तत्राह। बुद्धिश्चेति। वकारस्थस्याकारस्य आकार रूपवृद्धिर्विधायकाभावात् छान्दसीत्यर्थः। ननु अत्वसन्तस्य चाधातोरिति सूत्रेणासन्तत्वादुपधाभूतस्य हकारस्थस्य अकारस्य दीर्घे गिर्वाहस् इति स्यादित्यत आह। ह्रस्व इति। नन्वथापि गीर्वाह इति स्यादित्यतश्चाह। ह्रस्व इति। गकारस्थस्य इकारस्य ह्रस्व इत्यर्थः। तथाच गीरशब्दोपपदात् वहधातोरस् प्रत्यये वृद्धौ उपधादीर्घे उपपदस्थ गकारस्थ ईकारस्य उपधाभूतहकारस्थस्य अकारस्य च छान्दसे ह्रस्वे गिर्वाहस् इति प्रातिपदिकसिद्धिः। पश्चात् सम्बुद्धौ लोपः। प्रातिपदिकान्तस्य सस्य रुत्वे विसर्गे च सति गिर्वाह इति सम्बुद्धिनिष्पत्तिरिति भावः। कल्प्यतामिति। भक्तस्येयं वाक् मम विभूतिप्रतिपादिकेत्येवं मनः संकलयतामित्यर्थः। अर्थसम्बन्धस्येति। प्रतिपाद्यप्रतिपादकभाव सम्बन्धस्येत्यर्थः। औत्पत्तिकत्वादिति। स्वाभाविकत्वादित्यर्थः। यथाह जैमिनिः। औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति। उक्तं चानुव्याख्याने। नित्ययोगोपि शब्दानाम् अर्थेनैव निषिध्यताम् इति। कथमिति। तथाच वेदान्तानां भगद्विभूतिप्रतिपादकत्वस्यौत्पत्ति कत्वादस्त्विति प्रार्थनमयुक्तमित्यर्थः। ल्यब् लोपेति। ल्यब् लोपे कर्मण्यधिकरणे च पञ्चमी वाच्येति वार्तिकं प्रासादात् प्रेक्षते आसनात्प्रेक्षते इत्युदाहरणम्।

(पदार्थप्रकाशिका)

प्रासादमारुह्य आसनमुपविश्य प्रेक्षत इति तदर्थो द्रष्टव्यः। लक्षणयेति। वाक् विभूतिरस्त्वित्यत्र शब्दार्थ सम्बन्धस्यौत्पत्तिकत्ववचनेन मुख्यार्थबाधो दर्शितः। वाचो प्रसन्नीभूत्वेत्यनेन च फलदाने लक्षणायां प्रसादद्वारको जन्यजनकभावसम्बन्धः प्रदर्शित इति द्रष्टव्यम्॥ ९,२८॥

## पदार्थदीपिका

आवः। तत्करोतीति णिजिति। णिजन्ताल्लोटः शतरि गुणायादेशयोः वाजयशब्दनिष्पत्तिरिति भावः। ॥ प्रातिपादिकाद्धात्वर्थ इति ॥ सर्वप्रातिपदिकेभ्यो धात्वर्थे णिच्। सचेष्टवदिति वार्तिकात्। तस्य चेष्टवद्भावे ष्टन् प्रत्यये परतः णिचि टिलोपे णिजन्तात् पूर्ववच्छब्दनिष्पत्तिरिति ज्ञेयम्॥ एवशब्देनेति॥ सुप आत्मनः क्यजिति इच्छार्थे वाजशब्दात् क्यचिप्रत्ययान्तात् लटः शतरि वाजयन् शब्दनिष्पत्तिरिति अपव्याख्यानमेवशब्देन निराकरोतीत्यर्थः॥ अनेकव्यत्ययापत्तेरिति॥ तथा व्याख्याने हि वाजयन्त इति बहुवचनस्यैकवचनत्वेन व्यत्ययः। तत्परिहाराय वाजमात्मन इच्छन्तो वयमिति व्याख्याने आसिंच इति एकवचनान्वयानुपपत्तिः। तस्यापि आसिञ्चामह इति बहुवचनान्ततया विपरिणामे पुनर्व्यत्यय एव। तथा क्यचि चेति क्यचि परतया वर्णान्तस्याङ्गस्येकारादेरित्विधानात्पुत्री- यन्तः सुदानवः इत्यादाविव वाजीयन्त इति ईत्वं स्यात्। तथाकृत्सार्वधातुकयोर्दीर्घ इति कृद्याकारे सार्वधातुकयकारे च परतो अजन्ताङ्गस्य दीर्घता विधानात् सुखायत इत्यादाविव दीर्घत्वप्रसङ्ग इत्यनेकव्यत्ययापत्तेरित्यर्थः। ननु च न छन्दस्यपुत्रस्येति पुत्र वर्जितस्यावर्णान्तस्याङ्गस्येव दीर्घत्वस्यापि निषे धात् नैषदोषः। न चेत्वस्यैवायं प्रतिषेधो न दीर्घत्वस्यापि। तज्ज्ञापकाभावात् इति वाच्यम्। अश्वाघस्यादिति अश्व अघ इत्येतयोः क्यचि परतः छन्दसि विषये आकारादेश विधानस्यैव तज्ज्ञापकत्वात्। अन्यथाकृत्सार्वधातुकयोर्दीर्घ इत्यनेनैवाश्ववन्त इत्यादौ दीर्घतासिध्या तत्र दीर्घताविधानवैयर्थ्यम्। न छन्दस्यपुत्रस्येत्यस्य भयनिबन्धत्वाभ्युपगमे तु अश्वायन्त इत्यादा वकृत्सार्वधातुकयोरिति प्राप्तदीर्घत्वस्य न छन्दस्यपुत्रस्येति निषेधप्राप्तौ प्रतिप्रसवार्थमश्वाघस्यादिति योगः सार्थकः। अत एवोक्तं काशिकायां तदेवात्ववचनं ज्ञापकं न छन्दसीति दीर्घप्रतिषेधोऽपि भवतीति। तथा च दीर्घत्वादेरापादनासम्भवात् नानेकव्यत्ययः परव्याख्यानेऽपीति चेत् न नछन्दस्यपुत्रस्येत्यस्य दीर्घत्वादि निषेधकत्वेऽपि नापुत्रस्यैव तन्निषेधकत्वमस्ति किन्नामापुत्रादीनामेव। तथा च वाजयन्त इत्यादौ दीर्घत्वादि प्रसङ्गो दुर्वार एव। न चायमपुत्रस्यैव निषेधः किन्न स्यादिति वाच्यम्। अल्पं चेदमुच्यते न छन्दस्यपुत्रस्येति। अपुत्रादीनामित्यादिना महाभाष्ये अपुत्रादीनां दीर्घत्वादि निषेध स्वीकारात्।

(पदार्थदीपिका)

न च यथा सूत्रं अपुत्रस्यैव निषेधो पपत्तौ महाभाष्ये अपुत्रादीनामित्युक्तेः किं नियामकमिति वाच्यम् । जनीयन्तान्व इव य इत्यादौ तत्सिध्यर्थत्वात् । यथाहि जनमिच्छन्त जनीयन्तः । इच्छार्थे सुप आत्मनः क्यजिति जनशब्दात् क्यच् । क्यचि चेतीत्वम् । क्यच् प्रत्ययान्तधातोर्लटः शत्रादेशः उगित्वात् उगिदचामिति नुमि हि जनीयन्त इत्यभिमतरूपसिद्धिः । न छन्दसीति सूत्रे अपुत्रस्यैव दीर्घत्वनिषेधोक्तौ न जनीयन्तरूपसिद्धिः सम्भवति । न छन्दसीति इत्व निषेधप्रसङ्गेन जनयन्त इत्यापातात् । अथ नापुत्रादीनामित्यादिपदेन प्रयोजनमस्ति । जनीनिच्छन्तो जनयन्त इति । जनीरिति वधूरुच्यते । ततश्चापुत्रादीनामित्यनुक्तावपि जनीयन्त इत्यभिमतरूपसिद्धेः । ततश्चापुत्रस्यैव निषेधः इति पदमञ्जर्यामुक्तत्वात् अपुत्रस्यैवायं निषेध इति कथं वाजयन्त इत्यादौ दीर्घत्वप्रसङ्ग इति चेन्न, तथाप्यध्वरीयतामित्यादावगतेः । अध्वरमात्मन इच्छन्तीत्यध्वर शब्दात् क्यचि क्यचि चेतीत्वे क्यजन्ताल्लटि तस्य शतरि हि तत् सिध्यति । न चापुत्रस्यैव निषेधाभ्युपगमे तत्रेत्वासम्भवः । न छन्दसीति निषेधस्य वज्रलेपत्वात् । अतस्तत्र निषेधाभावार्थतया भाष्येऽपुत्रादीनामित्यादिपदस्य सप्रयोजनत्वेन पदमञ्जरीकारोक्तेरेवायोगात् । न हि जनीयन्त इत्यादाविवात्रापि काचित् कुसुष्टिरवलम्बते । ततश्चापुत्रादीनां निषेध सिद्धौ वाजयन्त इत्यादावपि तत्प्रसङ्गो दुर्निवार इति युक्तमुक्तमनेकव्यत्ययापत्तेरिति दिक् । ॥ आसिश्वे ॥ शेमुचादीनामिति नुमागमः ॥ करोतेः किविरिति ॥ करोतेः धातोः क्विप् प्रत्यये कृ इत्यस्य क्रादेशे क्रिविरिति सिध्यतीत्यर्थः । करोतेः किरिति पाठेऽपि क्रयादेशो ज्ञातव्यः ॥ १,२ ॥

वक्ष्यमाण इति ॥ समुद्रो न व्यचो दधे इत्युत्तरार्ध इति शेषः ॥ ३ ॥

गर्भो धीयतेऽत्रेति ॥ कर्मण्यधिकरणे चेति कप्रत्ययः ॥ वहेः सम्प्रसारणमिति ॥ आत्मनेपदं छान्दसमित्येतदपि द्रष्टव्यम् ॥ ४ ॥

वहतेरस् वृद्धिश्चेति ॥ वहिहाधाञ्भ्यश्छन्दसीकारपूर्वकस्यापि वहतेरसुन् प्रत्ययः । ण्यदित्यनुवृत्तेः उपधावृद्धिश्चेत्यर्थः ॥ ह्रस्वश्छान्दस इति ॥ पूर्वपदस्य र्वोरुपधाया दीर्घक इति दीर्घाभावश्छान्दस इत्यर्थः ॥ ल्यब्लोप इति ॥ ल्यब्लोपे कर्मण्यधिकरणे पञ्चमी वक्तव्येति वार्त्तिकात् इति भावः ॥ ५, २८ ॥

## टीकाविवृतिः

आवः ॥ वाजं युद्धमिति ॥ वाजे खजे इति सङ्ग्रामनामसु पाठादिति भावः ॥ तत्करोतीति णिजिति ॥ वाजशब्दात्सुबन्तात्तत्करोति तदाचष्टे इत्यनेन णिचि एतद्वाक्यस्य प्रातिपदिकादि-

(टीकाविवृतिः)

त्येतद्विवरणरूपत्वाण्णिच इष्टवद्भावाट्टेरिति टिलोपे सनाद्यन्ता इति धातुत्वाल्लटि शत्रादेश इति भावः ॥ यद्वेति ॥ वाजः पय इत्यन्ननामस्वपि पाठादिति भावः ॥ प्रातिपदिकादिति ॥ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति धात्वर्थसामान्ये णिचो विधानादिति भावः ॥ अन्नमिच्छन्निति ॥ वाजयंत इति शब्दःक्यजन्त इति भावः ॥ अनेकव्यत्ययेति ॥ वाजशब्दे क्यचि चेतीत्वाभावः एकस्मिन्बहुवचनं चेत्यनेकव्यत्ययापत्तेरित्यर्थः । उपलक्षणं चैतत् । वइत्यस्य संबोध्यान्तरं च कल्प्यमित्यपि ज्ञेयम् । अस्मत्पक्षे त्वेक एवामन्त्रिताद्युदात्तत्वाभावोंगीकरणीयः । णिज्मध्ये अवग्रहस्तु पदे अवग्रह इति नियमाभावात्समाधेयः ॥ मंहिष्ठमिति ॥ नहि वृद्धावित्यतो भौवादिकादौणादिके कर्मण्यकारे इदित्वान्नुमि मंहशब्दो धातूनामनेकार्थत्वात्पूज्यार्थः । तस्मादतिशयार्थ इष्ठन्प्रत्यय इति भावः ॥ ऐन्द्रे महाभिषेके इति ॥ आश्वलायनब्राह्मणे अष्टमपञ्चिकायां अथात ऐन्द्रो महाभिषेक इति खण्डे प्रतिपादित इन्द्रसंबन्धी महाभिषेको ज्ञेयः ॥ करोतेःक्रिविरिति ॥ कृ इवि इति स्थिते कित्वाद्गुणाभावे यणादेशे क्रिविरिति रूपमिति भावः ॥ १ ॥

शतंवा ॥ समाशिरामित्यत्र शिरःप्रधाने सेनाग्रभागमस्तकयोरपीति विश्वोक्त-सकारान्तशिरःशब्दपर्यायाकारान्तशिरशब्दादाङ्पूर्वात्संशब्देन बहुव्रीहौ षष्ठीबहुवचने आमि छान्दसो नुडभावः । तथा च सङ्गतमाशिरं प्रधानं आज्यपुरोडाशादिमन्त्रादिकं वा येषां ते समाशिरास्तेषामिति विग्रह इति भावेनाह ॥ सङ्गताशिराणामिति ॥ तर्हि भाष्येऽस्मान्मतुपि वत्वे आशिरवतामिति वाच्ये दीर्घोक्तिः कथमित्यत आह ॥ दीर्घश्छान्दस इति ॥ नाडी तु धमनिःशिरेति अमरोक्तं आङ्पूर्वकशिराशब्दमाश्रित्याह ॥ स्त्रीलिङ्गो वेति ॥ टापः प्रकृतिभूत इति शेषः । रीयते इत्यत्र रलयोरभेदाश्रयेणाह ॥ आलीयत इति ॥ उभयत्रेति ॥ रीयते इत्यत्र निम्नमित्यत्र चेत्यर्थः । एकत्र निषेधार्थः । उत्तरत्रेवार्थ इति भावः । नशब्दस्यावृत्तिः । शतसहस्रशब्दयोर्विभक्तिव्यत्यय आश्रयणीय इत्यरुच्योक्तं भाष्यं सङ्गमयति ॥ प्रकारान्तरेणेति ॥ पूर्वेणेति ॥ पूर्वऋगुक्तेत्यर्थः ॥ २ ॥

संयत् ॥ एनेति ॥ द्वितीयाटौस्स्वेन इति सूत्रेण द्वितीयादौ पर इदमेतदोरन्वादेशे विहितोनुदात्त एनादेशोऽत्रान्वादेशाभावेपि छान्दसत्वाज्जातः । व्यत्ययेनान्तोदात्तश्च ज्ञेयः ॥ अस्येति ॥ इदमोन्वादेशेऽशनुदात्तस्तृतीयादावितीदं शब्दस्यानुदात्तेऽशादेशे सुप्त्वात्स्यस्यानुदात्तत्वात्सर्वानु-दात्तं पदमिति भावः । शुष्मं शुष्णमिति बलनामसु पठितान्मत्वर्थे इनिप्रत्यय इति भावेनाह ॥ शुष्मिणे बलिने इति ॥ वक्ष्यमाणमिति ॥ एतदुत्तरार्धे इति शेषः ॥ व्यच इति ॥ व्यच व्याजीकरणे

(टीकाविवृतिः)

इत्यतोऽसुन्प्रत्यय इत्याशयः । एतदृचोभिप्रायं वदन्पूर्व ऋचा सङ्गमयति ।। सप्रकृतिकानीति ।। यदा तदेति शेषः । अनेन पूर्वेण संबन्ध इत्युक्तं विवृतं ज्ञेयम् ।। ३ ।।

अयमुते ।। गर्भाशयमिति ।। अण्डमित्यर्थः ।। कपोत इति ।। अण्डस्थःकपोतो यथाण्डं व्याप्य तिष्ठतीत्यर्थः । ओहसे इत्यत्र शपःकित्वाभावात् वचि स्वपीति किति विहितसंप्रसारणं कथमित्यत आह ।। वहेरिति ।। संप्रसारणानन्तरं पुगंतलघूपधस्य चेति गुण इति शेषः । जगल्लक्ष्मीवशत्वस्य जगद्व्याप्तेश्च वेदप्रतिपाद्यत्वे यद्धेतुत्वमुक्तं तदुपपादयति ।। नहीति ।। ४ ।।

स्तोत्रं राधानामिति ।। राध साध संसिद्धावित्यतो घञि सुबामन्त्रित इति परांगवद्भावादाष्टमिको निघातः ।। वहतेरिति ।। कार्याद्विद्यादनूबन्धमित्युक्तेरौणादिकासुन्प्रत्ययस्य णित्वाद्वृद्धिरित्यर्थः । गॄ निगरणे इत्यतः कर्मणि किपि ऋत इद्धातोरितीत्वे समासे च र्वोरुपधाया दीर्घ इक इति दीर्घे गीर्वाह इति भाव्यं कथं गिर्वाह इत्यत आह ।। ह्रस्वश्छान्दस इति ।। सर्वे विधयश्छन्दसि विकल्प्यन्त इत्युक्तेर्न दीर्घ इति भावः । गिर्वाह इत्यस्य पादादित्वान्निघाताभावात्षाष्ठिकामन्त्रितस्वरेणाद्युदात्तत्वं वीरेत्यत्र तु आमन्त्रितं पूर्वमविद्यमानवदिति राधानां पते गिर्वाह इत्येतयोरविद्यमानत्वेपि स्तोत्रशब्दात्परत्वान्निघातो ज्ञेयः ।। वेदेति ।। अहमिति शेषः ।। वैदिकमिति शेष इति ।। भाष्ये शेषोक्तिरित्यर्थः । अखिलं वैदिकं पदं तवस्तोत्रमित्यहं वेदेत्यन्वयः ।। सूनृतेति ।। सूनृतं प्रिये इत्यमरोक्तेस्तव प्रीतिकरेत्यर्थः ।। कल्प्यतामिति ।। ज्ञायतामित्यर्थः ।। औत्पत्तिकत्वादिति ।। स्वाभाविकत्वादित्यर्थः । तथा च विष्ण्वैश्वर्यप्रतिपादकत्वस्य स्वतः सिद्धत्वात्प्रार्थना न युज्यते इति भावः ।। मदीययेति ।। विभूतिप्रतिपादिकयेति शेषः ।। लक्षणयेति ।। अस्त्विति पदं लक्षणावृत्त्या प्रसादेन फलदापनार्थमिति भावः ।। ५ ।। २८ ।।

**ऋक्संहिता पदपाठसहिता** (सू-३०, व-२)

**(३३४) ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो ।।**
**समन्येषु ब्रवावहै ।। ६ ।।**

**(प०) ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतोइतिशतऽक्रतो ।। सम् । अन्येषु । ब्रवावहै ।। ६ ।।**

**(३३५) योगेयोगे तवस्तरं वाजेवाजे हवामहे ।। सखाय इन्द्रमूतये ।।७।।**

(प०) योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे ॥ सखायः । इन्द्रम् । ऊतये ॥ ७ ॥

(३३६) आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः ॥ वाजेभिरुप नो हवम् ॥ ८ ॥

(प०) आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिभिः ॥ वाजेभिः । उप । नः । हवम् ॥ ८ ॥

(३३७) अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ॥ यं ते पूर्वं पिता हुवे ॥ ९ ॥

(प०) अनु । प्रत्नस्य । ओकसः । हुवे । तुविऽप्रतिम् । नरम् ॥ यम् । ते । पूर्वम् । पिता । हुवे ॥ ९ ॥

(३३८) तं त्वा वयं विश्ववारा शास्महे पुरुहूत ॥ सखे वसो जरितृभ्यः ॥ १०, २९ ॥

(प०) तम् । त्वा । वयम् । विश्वऽवार । आ । शास्महे । पुरुऽहूत ॥ सखे । वसोइति । जरितृऽभ्यः ॥ १०, २९ ॥

## ऋग्भाष्यम्

उत्तमः सन्नत्र युद्धे ज्ञानाज्ञानमये विभो । अभिप्रेतार्थसिद्ध्यर्थमस्माकं तिष्ठ सर्वदा । मत्स्थितस्त्वमहं चैव त्वामन्येषु ब्रवावहै ॥ ६ ॥ तेजस्वितममिन्द्रं तं योगे योगे हवामहे ॥ ७ ॥ उक्तं चेत्सभृणोत्येव श्रुतं चेदागमिष्यति । बह्वर्थयुक्ताभिप्रायैरन्नैरप्युप नो हवम् ॥ ८ ॥ पुरातनस्य विष्णोस्तदोकसोर्थे ह्वये हरिम् । महान्प्रतिप्रतिस्थश्च तुविप्रतिरितीरितः । यं त्वां पूर्वं पिता ज्ञातैवाह्वयामास विश्वकृत् । त्वद्भक्त इति वा ब्रह्मा ॥ ९ ॥ तं त्वामाशास्महे वयम् ॥ १०, २९ ॥

## ऋग्भाष्यटीका

ऊर्ध्वः । उत्तमः । हे शतक्रतो विभो । नोस्माकमूतये अभिप्रेतार्थस्य ज्ञानादेः सिद्ध्यर्थम् । अस्मिन्वाजे । अत्रानुभवसिद्धे । ज्ञानाज्ञानमये युद्धे । ज्ञानाज्ञानहेतूनां प्रमाणतदाभासादीनां सङ्घर्षे । ऊर्ध्व उत्तमोऽस्मत्प्रतिपक्षस्य जेता सन्सर्वदा तिष्ठ । तत एव मत्स्थितः त्वमहं च त्वामन्येषु शिष्येषु सम्ब्रवावहै सम्यगुपदिशाव ॥ ६ ॥

योगे । तेजस्वि । हे सखायो वयम् । तवस्तरं तव इति बलस्येव तेजसोपि नाम । अन्तर्णीतमतुबर्थं च । तेजस्वितमम् । तमिन्द्रमूतये योगेयोगे सर्वेषु ध्यानयोगेषु । वाजे वाजे सर्वेषु युद्धेषु । मननेषु च हवामहे ॥ ७ ॥

आघ । अत्र यदि श्रवदिति परमेश्वरस्य श्रवणं पाक्षिकं प्रतीयते । तत्परिहाराय सोपस्करं व्याख्याति । उक्तं चेदिति । यद्यस्माभिरागच्छेत्युक्तं स्यात् तदा स इन्द्रः शृणोत्येवेत्यध्याहारः । यदि श्रवच्छृणुयात् । भक्त्योक्तं श्रुतं चेत्तर्हि सहस्रिणीभिः सहस्रवतीभिः । ऊतिभिरभिप्रायैः बह्वर्थ युक्ताभिप्रायैः सह अन्नानां पृथगुक्तेस्तदन्यान्बहून् पुरुषार्थान्दातुमिति यावत् । वाजेभिरन्नैरपि सह अन्नानि च दातुम् । नोऽस्माकम् । हवमाह्वानम् । उपागमत् घ उपागच्छेदेव । आगमिष्यति ॥ ८ ॥

अनु । पुरातनस्य । अहं प्रत्नस्य पुरातनस्यानादेर्विष्णोः । ओकसस्तदोकसः प्रसिद्धस्थानस्य वैकुण्ठादेरर्थे । तुविप्रतिं नरमक्षयमिन्द्रं हरिं त्वाम् । हुवे ह्वये । आह्वयामि । तुविप्रतिः कुत इत्यत आह । महानिति । तुवीति बहुनाम । ततो महान् प्रतिप्रतिस्थः । सर्वान्वैरिणः प्रति तिष्ठतीति प्रतिः । प्रतिरयमुपसर्गः । उपसर्गाश्च सति क्रियावचने तत्सम्बन्धिनो भवन्ति । असतितु ससाधनां क्रियामाहुः । द्विर्वचनं त्वभिप्रायमात्रेण न तु ततः कर्मप्रवचनीयत्वम् । तुविर्महांश्चासौ प्रतिः प्रतिप्रतिस्थश्चेति तुविप्रतिरितीरितः । कथं भूतम् । यं ते त्वाम् । पूर्वं पूर्वस्मिन्काले । ते पिता ज्ञातैव न तु जनको विश्वकृत् ब्रह्मा । हुवे आह्वयामास । यद्वा ते त्वदीयस्त्वद्भक्तो विश्वस्य पिता ब्रह्मा । हुव इति व्याख्येयम् ॥ ९ ॥

तं त्वा । तं त्वाम् । हे विश्ववार सर्वैर्वरणीय । पुरुहूत बहुभिराहूत । सखे । सर्वत्र वसतीति वसुः । वसो । वयं तमुक्तरूपं त्वा त्वामाशास्महे इच्छामः । न केवलमस्मदर्थे किन्तु जरितृभ्यः अन्येभ्योपि स्तोतृभ्यः ॥ १०, २९ ॥

## मन्त्रार्थमञ्जरी

(हे) शतक्रतो, विभो । नः, अस्माकम् । ऊतये, अभिप्रेतार्थस्य ज्ञानादेः सिद्ध्यर्थम् । अस्मिन् वाजे, अत्रानुभवसिद्धे ज्ञाना ज्ञानमये युद्धे, ज्ञानाज्ञानहेतूनां प्रमाणतदाभासानां सङ्घर्षे । ऊर्ध्वः,

(मन्त्रार्थमञ्जरी)

उत्तमः, अस्मत्प्रतिपक्षस्य जेता सन्। सदा तिष्ठ। तत एव मत्स्थितस्त्वमहं च त्वाम् अन्येषु, शिष्येषु। सम् ब्रवावहै, सम्यगुपदिशाव ॥ ६ ॥

(हे) सखायः। वयम्– तवस्तरम्, 'तवस्' इति बलस्येव तेजसोऽपि नाम, अन्तर्णीतमतुबर्थं च, तेजस्वितमम्, अतिशयेन तेजस्वी तवस्तरम्। इन्द्रम्। ऊतये, रक्षायै। योगेयोगे, सर्वेषु ध्यानयोगेषु। वाजेवाजे, सर्वेषु युद्धेषु मननेषु च। हवामहे, आह्वयामः ॥ ७ ॥

(इन्द्रः) यदि। श्रवत्, शृणुयात्, भक्तोक्तं श्रुतं चेत्। (तर्हि) सहस्रिणीभिः, सहस्रवतीभिः। ऊतिभिः, अभिप्रायैः बह्वर्थयुक्ताभि(क्तै)रभिप्रायैः, सह, बहून्पुमर्थान्दातुमिति यावत्। वाजेभिः, अन्नैः। (अपि), अन्नानि च दातुमिति यावत्। नः, अस्माकम्। हवम्, आह्वानम्। उप आ गमत् घ, उपागमदेव, आगमिष्यत्येव इति ॥ ८ ॥

अहम् प्रत्नस्य, पुरातनस्य, अनादेर्विष्णोः। ओकसः, प्रसिद्धस्थानस्य, वैकुण्ठादेः। (अनु) अर्थे, वैकुण्ठप्राप्त्यै। तु विप्रतिम्, तुविश्वासौ प्रतिश्च सर्ववैरिप्रतिस्थश्च, तम्। नरम्, अक्षयम्, इन्द्रं त्वाम्। हुवे, आह्वयामि यम्। ते, त्वाम्। पूर्वम्, पूर्वकाले। (ते) पिता, ज्ञातृत्वाद्विश्वकृद्ब्रह्मा। हुवे, आह्वयामास, व्यत्ययात्। यद्वा– ते, त्वदीयः, त्वद्भक्तः। विश्वस्य पिता, ब्रह्मा। यम्। (ते) त्वाम्। हुवे, आह्वयत् इति ॥ ९ ॥

(हे) विश्ववार, सर्वैर्वरणीय, वृञः कर्मणि घञ्, वृद्धिः। पुरुहूत, बहुभिराहूत। सखे। वसो, सर्वत्र वसतीति वसेः उः, सर्वग। वयम्। तम्, उक्तरूपम्। त्वा, त्वाम्। आ शास्महे, इच्छामः। न केवलमस्मदर्थे, किं तु जरितृभ्यः (अपि), स्तोतृभ्योऽपि ॥ १० ॥ इति नवविंशो वर्गः ॥ २९ ॥

## रूपावतारः

ऊर्ध्वः ॥ ब्रवावहा इति। ब्रूञ्व्यक्तायां वाचीत्यतः लोटि तस्य वहीत्यादेशे टेरेत्वे तस्यैकारादेशे आडागमे गुणे अवादेशे ब्रवावहै इति रूपम् ॥ ६ ॥

योगे योगे ॥ अन्तर्णीतेति मतुबर्थस्यान्तर्णीतत्वाद्विनिप्रत्ययस्याश्रवणमिति भावः ॥ ७ ॥

आघ ॥ श्रवदिति। शृणोतेर्लिङर्थे लेटि तिपि तस्य 'इतश्च लोपः....' (३।४।९७) इति इकारलोपे 'लेटोऽडाटौ' (३।४।९४) इत्यडागमे गुणे अवादेशे श्रवदिति रूपम्। सहस्रीणीभिरिति सहस्रशब्दात् 'अत इनि ठनौ' (५।२।११५) इति इनिप्रत्यये नान्तत्वात् ङीपि तृतीयाबहुवचने सहस्रीणीभिरिति रूपम्। गमदिति गमेर्लटि तिपि इतो लोपे अडागमे गमदिति रूपम् ॥ ८ ॥

(रूपावतारः)

अनुप्रत्नस्य ।। ततो महानिति व्याख्यानमुपपन्नमिति शेषः । असतीति । क्रियावचनादावसति कर्तृकर्मादिसहितां क्रियामाहुः । अतः प्रतीत्युपसर्गोऽपि क्रियावचनादेरभावात् सर्वान्वैरिणः प्रतितिष्ठतीति ससाधनां क्रियामाहेति भावः । ननु भाष्ये प्रतिप्रतिस्थ इति वीप्सायांद्विर्वचनेन श्रौतप्रतिशब्दस्य कर्मप्रवचनीयसंज्ञाया अङ्गीकारात् कर्मप्रवचनसंज्ञाया उपसर्गसंज्ञयाबाधेन प्रतीत्यस्योपसर्गत्वाभावात् उपसर्गत्वमङ्गीकृत्य ससाधनक्रियावाचित्वं कथमुक्तमित्यत आह । द्विर्वचनं त्विति । भाष्यकारीयं प्रतिप्रतिस्थ इति द्विर्वचनं श्रौतप्रतिशब्दाभिप्रायमात्रेण न तु प्रतीत्यस्य वीप्सार्थकत्वाभिप्रायेण । ततः कर्मप्रवचनीयसंज्ञाभावेन प्रतीत्यस्योपसर्गत्वे बाधकाभावात् ससाधनक्रियावाचित्वं युक्तमेवेति भावः । हुव इति । ह्वेञः लिटि तदादेशतिशब्दस्य एशि संप्रसारणे द्वित्वाभावे उवङादेशे च हुवे इति रूपम् ।। ९ ।।

तं त्वा ।। विश्ववारेति । विश्वशब्दोपपदात् वृञो घञि वृद्धौ विश्ववारेति रूपम् ।। १० ।। २९ ।।

## पदार्थप्रकाशिका

ऊर्ध्वस्तिष्ठानऊतये । उत्तमत्वस्य प्रकृतानुपयोगात्तात्पर्यम् अस्मदिति । अस्मदीयज्ञान-प्रतिपक्षस्याज्ञानादेरित्यर्थः । तिष्ठमयीति शेषः । तत एवेति ज्ञानोद्दीपकतया तव मयि स्थितत्वादेवेत्यर्थः । उपदेशस्य वा न कार्यत्वादिति भावः । मत्स्थितस्त्वमिति । 'न ऋते त्वत्क्रियते' इति श्रुतेः शिष्येषु वचनेन मम सामर्थ्याभावान्मत्स्थितस्त्वमित्युक्तम् ।। ६ ।।

योगेयोगे तवस्तरम् । ननु तवःशब्दस्य बलनामसु पाठात् कथं तेजोनामत्वमित्यत आह । तव इतीति । ननु तवस्तरमित्यस्य तेजस्तममिति व्याख्यानं कर्तव्यम् । कथं तेजस्वितममिति व्याख्यानम् । मतुपो श्रवणादित्यत आह । अन्तर्णीतेति । तवःपदे मतुबर्थोप्यन्तर्णीतोऽस्तीत्यर्थः । मननेष्विति । मननाख्येष्वित्यर्थः । योगेयोगे वाजेवाजे ऊतये रक्षायै हवामह इति सम्बन्धः । त्वया मद्रक्षणे कृते सति निर्विघ्नेन मम योगादिसमाप्तिर्भवतीत्याशयः ।। ७ ।।

आघागमद्यदिश्रवत् । पाक्षिकमिति । तथाच कदाचित्तदभावोपि सम्भाव्यत इति प्राप्नोतीत्यर्थः । सोपस्करं साध्याहारम् । उतीनां सहस्रवत्वं नाम किमित्यत आह । बह्वर्थेति । पृथगुक्तेरिति । वाजेभिरुपनोहवमित्यत्रेत्यर्थः । दातुमिति । दास्यामीत्यभिप्रायैरिति यावदित्यर्थः । आह्वानमुपागमदिति । एतेन मामाह्वयन्ति अतो मया गन्तव्यमित्यभिप्रायेणोपागच्छेदेवेत्यर्थः । एवेति घशब्दाभिप्रायः ।। ८ ।।

(पदार्थप्रकाशिका)

अनुप्रत्नस्यौकसः । तदोकस इति भाष्यस्थतच्छब्दार्थमाह । प्रसिद्धे रीङ्क्षय इति धातोर्नरीयत इति नर इत्यर्थमभिप्रेत्याक्षयमित्युक्तम् । तुविप्रतिरिति । कुतो निमित्तादिन्द्रस्तुविप्रतिरित्युच्यत इत्यर्थः । ततोमहानिति । तुवीत्यस्य बहुनामत्वात् बहु पूर्णतायामित्युक्तत्वेन पूर्णत्वमहत्वयो-रित्युक्तत्वात् महानित्यर्थकथनं युक्तमित्यर्थः । ततो महानिति । ननु प्रतीत्येतावन्मात्रेण प्रतिस्थ इति कथं लभ्यते अत आह । प्रतिरयमित्यादिना । उपसर्ग इति । लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव इति विहितकर्मप्रवचनीयापवादोऽयमिति भावः । ततोपि किमायातं प्रकृत इत्यत आह । उपसर्गाश्चेति । तत्सम्बन्धिन इति । क्रियार्थे अतिशयद्योतका भवन्ति । यथा प्रजापती-त्यादावित्यर्थः । असतित्विति । क्रियावचन इति वर्तते । ससाधनामिति । कर्तृकारकसहि-तक्रियामित्यर्थः । यथा प्राचार्यः प्रान्तेवासीति । प्रगत आचार्यः इत्यादिस्तदर्थः । तथा प्रकृते क्रियावचनाभावात् प्रतीत्युपसर्ग एव तिष्ठतीति कर्तृकारक सहितस्थितिरूपक्रियां वक्तीत्यर्थः ।

ननु भाष्ये प्रतीतिः कर्मप्रवचनीय इति जायते । नतूपसर्गः । तथाच प्रतिस्थमिति स्यादित्यत आह । द्विर्वचनं त्विति । एकं वैरिणं प्रत्येव न स्थितः । किंतु सर्वान् वैरिजनान् कर्मप्रवचनीयत्वं मन्तव्यम् । येनोक्तदोषप्रसङ्ग इत्यर्थः । तुविश्वासौ प्रतिश्चेति । विग्रहे प्रदर्शितव्ये तदर्थकथनपूर्वकं विग्रहं दर्शयति । तुविर्महांश्चासाविति । सर्वं वाक्यं सावधारणमिति न्यायेन ज्ञातैवेत्युक्तम् । ज्ञातृत्वादेवेत्यर्थः । 'यस्तद्वेद स पितुः पितासत्' इति श्रुतेरिति भावः । जनक इति । जनकत्वादित्यर्थः । ते इत्येतत् त्वामिति व्यत्ययेन व्याख्याय यथास्थितां षष्ठीमङ्गीकृत्य षष्ट्याः सम्बन्धकधनपूर्वकं व्याख्याति । यद्वेति । अत्र यमित्यनन्तरं त्वामित्यध्याहारः ॥ ९ ॥

तंत्वा वयं विश्ववारा । इच्छाम इति । अस्माकमभीष्टप्रदानाय त्वदागमनमिच्छाम इत्यर्थः । स्तोतृभ्य इति । अस्मद्व्येधे अन्येपि त्वां स्तुवन्ति । तेभ्योप्यर्थे अभीष्टप्रदानाय त्वया आगन्तव्यमिति त्वदागमनं वयमाशास्महे इत्यर्थः ॥ १०,२९ ॥

## पदार्थदीपिका

हवमाह्वानमिति ॥ भावेऽनुपसर्गस्येति ह्वयतेरप् सम्प्रसारणं च इति भावः ॥ ८ ॥

हुवे ह्वय इति ॥ ह्वेञ् स्पर्धायां शब्दे च लिटि बहुलं छन्दसीति सम्प्रसारणं परपूर्वत्वं गुणे प्राप्ते क्ङितिचेति प्रतिषेधः । उवङादेशश्च । हुवे । ह्वेञो लिटि बहुलं छन्दसीति सम्प्रसारणं परपूर्वत्वम् । द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति द्विर्वचनाभाव इति ज्ञेयम् ॥ ९ ॥

आशास्महे ॥ सु इच्छायाः अदिप्रभृतिभ्यः शप इति शपो लुक् ॥ १०,२९ ॥

## टीकाविवृतिः

ऊर्ध्वस्तिष्ठ ॥ शतक्रतो इति ॥ अनन्तज्ञानेत्यर्थः । अवतेर्गत्याद्यर्थादूति- यूतीत्यादिना क्तिन्प्रत्यये निपातिते तादर्थ्येति भावेनाह ॥ ज्ञानादेः ॥ सिद्ध्यर्थमिति ॥ ब्रवावहै इति द्विवचनानुगुण्याय कर्तृद्वयमध्याहरति ॥ तत एवेति ॥ अस्मत्प्रतिपक्षजेतृत्वादेवेत्यर्थः ॥ ६ ॥

योगे योगे ॥ बलस्येव तेजसोपीति ॥ तरःतव इति बलनामसु पाठवत् तवसःतविषः महिष इतिमहन्नामसु पाठादिति भावः । तर्हि तेजस्वितममिति मत्वर्थनिर्देशःकथमित्यत आह ॥ अन्तर्णीतमत्त्वर्थमिति ॥ तवःशब्दान्मतुपो गुणवचनेभ्यो मतुपो लुगिष्ट इति वचनाल्लुप्तत्वादिति भावः ॥ युद्धेषु मननेषु चेति ॥ बाह्ययुद्धेषु प्रमाणतदाभाससंघर्षरूपमननेषु हवामहे आह्वयाम इत्यर्थः ॥ ७ ॥

आघ ॥ श्रवत् शृणुयादिति ॥ श्रुधातोर्लेटि तिपि इतश्च लोप इतीकारलोपे लेटोडाटावित्यडागमे छन्दस्युभयथेत्यार्धधातुकत्वाच्छ्नुप्रत्यया भावे सार्वधातुकार्धधातुकयोरिति गुणेऽवादेश इति भावः ॥ सहस्रिणीभिरिति ॥ सहस्रसंख्या आसामस्तीति विग्रहे सहस्रशब्दादत इनिठनावितीनिप्रत्यये नान्तत्वात् ङीबिति भावः ॥ उपागच्छेदेवेति ॥ तथा च गमेरपि लेटि गमदिति रूपमिति भावः ॥ ८ ॥

अनुप्रत्नस्य ॥ प्रत्नस्य पुरातनस्येति ॥ प्रत्नं प्रदिव इति पुराणनामसु पाठादिति भावः । तदोकस इति भाष्यस्थपदद्वयस्य कर्मधारयसमासमाश्रित्यार्थमाह ॥ प्रसिद्धस्थानस्येति ॥ ह्वेञो लटि आत्मनेपदे उत्तमपुरुषैकवचने इटि शपो बहुलं छन्दसीति लुकि टितआत्मनेपदानां टेरे इतीट एत्वे ह्वः संप्रसारणमित्यधिकारे बहुलं छन्दसीति संप्रसारणे उवङादेशे च हुवे इति रूपमिति भावेनाह ॥ ह्वये इति ॥ तुविप्रतिःकुत इति ॥ इन्द्रः कस्मात्प्रवृत्तिनिमित्तात्तुविप्रति- शब्देनोच्यते इत्यर्थः ॥ बहुनामेति ॥ उरुतुवीतिबहुनामसु पाठादित्याशयः ॥ ततो महानिति ॥ तुविशब्दस्य बहुनामत्वात् बहुत्वस्य च धर्मत्वेन बहुत्व विशिष्टगुणरूपादिमल्लक्षकत्वेन बहुगुणादिमतो महत्त्वादित्यर्थः ॥ प्रतिशब्दस्य प्रतिप्रतिस्थ इति भाष्योक्तार्थमुपपादयति ॥ प्रतिरयमिति ॥ तत्संबंधिनः क्रियाविशेषद्योतका इत्यर्थः ॥ ससाधनामिति ॥ कर्तृकर्मादिसहितामित्यर्थः । ननु प्रतिप्रतिस्थ इत्यत्र लक्षणेत्थंभूताख्यानेति सूत्रेण प्रतेर्वीप्सायां कर्मप्रवचनीयत्वेन नित्यवीप्सयोरिति

(टीकाविवृतिः)

द्वित्वप्रयोगात्कथमुपसर्गत्वं आकडारादेका संज्ञेत्यनेन कर्मप्रवचनीय संज्ञयोपसर्गसंज्ञाबाधादित्यत आह ।। द्विर्वचनं त्विति ।। पिता ज्ञातैवेति ।। पिगतौ इत्यतस्तौदादिकात्तृचि उणादिषु मातृपितृशब्दनिपातनाद्गुणाभाव इति भावः ।। हुवे आह्वयामासेति ।। ह्वेञः लिटि आत्मनेपदप्रथमपुरुषैकत्वे तशब्दस्य लिटस्तझयोरिति एशादेशे वचिस्वपीति यजादित्वात्संप्रसारणे उवङादेशे छान्दसे द्वित्वाभावे हुवे इति रूपमिति भावः । योगाद्रूढेर्बलीयस्त्वात्पितेत्यस्य जनकार्थत्वमाश्रित्य ते इत्यस्य पृथगन्वयमाह ।। यद्वेति ।। ९ ।।

तंत्वा ।। विश्ववारेत्यत्र वृञ् वरणे इत्यतः अकर्तरि च कारके संज्ञायामित्यत्र चकारादसंज्ञायामपीत्युक्तेः कर्मणि घञि अचो ञ्णितीति वृद्धिरिति भावेनाह ।। सर्वैर्वरणीयेति ।। पुरुशब्दस्य बहुनामसु पाठादाह ।। बहुभिराहुतेति ।। स्तोतृभ्य इति ।। जरिता कारुरिति स्तोतृनामसु पाठादिति भावः ।। १० ।। २९ ।।

**ऋक्संहिता पदपाठसहिता** (सू-३०, व-३)

(३३९) **अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नाम् ।। सखे वज्रिन्त्सखीनाम् ।। ११ ।।**

(प०) **अस्माकम् । शिप्रिणीनाम् । सोमऽपाः । सोमऽपाव्नाम् । सखे । वज्रिन् । सखीनाम् ।। ११ ।।**

(३४०) **तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु ।। यथा त उश्मसीष्टये ।। १२ ।।**

(प०) **तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु ।। यथा । ते । उश्मसि । इष्टये ।। १२ ।।**

(३४१) **रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।। क्षुमन्तो याभिर्मदेम ।। १३ ।।**

(प०) **रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः ।। क्षुऽमन्तः । याभिः । मदेम ।। १३ ।।**

(ऋक्संहिता पदपाठसहिता)

(३४२) आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः ॥ ऋणोरक्षं न चक्र्योः ॥ १४ ॥

(प०) आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णोइति । इयानः ॥ ऋणोः । अक्षम् । न । चक्र्योः ॥१४॥

(३४३) आ यद्दुवः शतक्रतवाकामं जरितृणाम् ॥ ऋणोरक्षं न शचीभिः ॥ १५, ३० ॥

(प०) आ । यत् । दुवः । शतक्रतोइतिशतऽक्रतो । आ । कामम् । जरितृणाम् ॥ ऋणोः । अक्षम् । न ।शचीभिः ॥ १५, ३० ॥

### ऋग्भाष्यम्

अस्माकं सुखिनां सोमपातॄणाम् ॥ ११ ॥ अस्तुतत्तथा । तेसकाशाद्यथेच्छामः प्राप्तुं देव तथाकृणु । वज्रो ज्ञानं वजगतावित्यस्मात् ॥ १२ ॥ वित्तसंयुताः । रेवतीः पशवः प्रोक्ताः सधमादे सुखस्थितौ । तुविवाजा महान्नानि क्षुमन्तः स्थिति संयुताः । ज्ञानयुक्तं सुखं वा स्यात्सतीशेस्माकमूर्जितम् ॥ १३ ॥ त्वद्वांस्त्वयैवचाप्तः स्यात्स्तोतॄणामासमंततः । इयानो गम्यमानस्तैरणतोश्चक्रयोर्यथा । अक्षमाश्रयभावेन ॥ १४ ॥ स्तोतॄणां काममादुहः । आसमंतात्स्थितं काममत्याधिक्ये पृथक्पदम् ॥ १५, ३० ॥

### ऋग्भाष्यटीका

अस्माकम् । अस्माकम् । हे सोमपाः सखे वज्रिन् । शिप्रिणीनां शिप्रं सुखम् । लिङ्गव्यत्ययेन सुखिनाम् । सोमपाव्नाम् आतो मनिन्निन्त्यादिना वनिप् । सोमपातॄणां तव सखीनामस्माकम् । भद्रं भवत्विति शेषः ॥ ११ ॥

तथा तत् । अस्तु तत् । हे सोमपाः सखे वज्रिन् देव । वयं ते सकाशादिति शेषः । यथा यच्चेष्टये गत्यर्थोयं प्राप्तुमुश्मसि । वश कान्तौ । इच्छामः । तत्तथास्तु । कथं त्वन्तथा कृणु कुरु । हरौ वज्रिशब्दं घटयितुं वज्रशब्दार्थमाह ॥ वज्र इति ॥ वज गतावित्यस्माद्भावे र प्रत्यये कृते गत्यर्थानां ज्ञानार्थत्वात् वज्रो ज्ञानमिति लभ्यते । तदस्यास्तीति वज्रीति ॥ १२ ॥

(ऋग्भाष्यटीका)

रेवतीः । वित्तसंयुताः । वित्तसंयुता इत्यादिना रेवत्यादिवत्याशब्दार्थांस्तावदाह ॥ रैपर्यायो रेशब्दः । ततो रेवतीरेवत्यो वित्तसंयुता इति भवति । यद्वा पशवो रेवत्यः प्रोक्ताः । पशवो वै रेवत्य इत्यादेः । सदेरकारप्रत्ययो दस्य च धः । सीदंत्यस्मिन्निति सध आश्रयः । मदी हर्षे भावे घञ् । मादः सुखं मादस्य सधः । उपसर्जनस्य पूर्वनिपातः । ततश्च सधमाद इत्यस्य सुखस्थितावित्यर्थो भवति । तिष्ठत्यस्मिन्निति स्थितिः । सधमादस्थयोः छन्दसीति तु नाश्रितम् । सहशब्दार्थानुपपत्तेः । तुविशब्दो बहुपर्यायः । वाजशब्दोन्नवाची । स्त्रीलिङ्गं वैदिकम् । अतः तुविवाजा महान्नानि । क्षि निवासगत्योरित्यतो डुप्रत्ययः । क्षुर्निवासः । क्षुमंतः स्थिति संयुताः । केचित्तु क्षुशब्द इत्यस्येदं रूपं मत्वा क्षुमंतः शब्दवन्तः कीर्तिमन्त इति व्याकुर्वते । तदसत् । धातोः शब्दविशेषार्थत्वेन कीर्तेरलाभात् । रेवतीस्तुविवाजा इत्यस्य ज्ञानयुक्तं सुखं वार्थः । ज्ञानस्यैव मुख्यवित्तत्वात् । सुखस्यैव मुख्यान्नत्वात् । इदानीं वाक्यार्थमाह ॥ स्यादिति । ऊर्जितमेतदन्नादिकं सधमाद इन्द्रेऽस्माकमीशे स्वामिनि सतीति शेषः । रेवतीर्वित्तसंयुतास्तुविवाजाः पशवस्तुविवाजाश्च वा सन्तु । कथं भूताः । वयं याभिः क्षुमन्तः सन्तो मदेम सुखिनो भवेम ॥ १३ ॥

आघ । त्वद्वान् हे । हे धृष्णो प्रगल्भ । त्वावान् त्वद्वांस्त्वत्स्वामिकः पुरुषः । त्मना मन्त्रेष्वाङ्यादेरात्मनः । आत्मना घ त्वयैवाप्तः स्यात् । न केवलमन्नादिमानिति चशब्दः । वक्ष्यमाणसमुच्चये वा । किञ्च । स्तोतृभ्यः षष्ठयर्थे चतुर्थी स्तोतॄणाम् । तृतीयार्थे वा तैस्तोतृभिः शिष्यैः । आ समंततः । इयानः गम्यमानस्तदाश्रयश्च स्यात् । इण्गतावित्यस्येदं रूपम् । किमिव । ऋणोः रणतोः रणतेः क्विपि सम्प्रसारणं शब्दं कुर्वतोः । चक्र्योः चक्रपर्यायश्चक्रि शब्दः । चक्रयोरक्षं न यथाक्षमाश्रयभावेन वर्तते तथा । दार्ष्टान्तिके स्तोतृभ्य इत्युक्तत्वादत्राप्यृणोरित्युक्तम् ॥ १४ ॥

आयत् । स्तोतॄणाम् । हे शतक्रतो यद्यस्मात्त्वम् । शचीभिर्वेदवाग्भिर्जरितॄणां स्तोतॄणाम् । कामं काम्यं सर्वमादुवः आदुहः । दुहेः छन्दसि लेटि रूपमेतत् । दुग्धवानसि । ऋणोरक्षन्नेति पूर्ववत् । आश्रयत्वमात्रेण दृष्टान्तः । तस्मान्ममापि कामं देहीति शेषः । द्वितीयस्य आशब्दस्य वैयर्थ्यमित्यत आह ॥ आसमन्तादिति । ऐहिकं पारत्रिकं चेत्यर्थः । पक्षान्तरमाह ॥ अत्याधिक्य इति । प्रागेक आशब्दो दुव इति क्रियासम्बन्धी । द्वितीयस्तु ससाधनक्रियावाची कामविशेषणमित्युक्तम् । इदानीं तु द्वावपि दुव इति क्रिया सम्बन्धिनौ । अत्याधिक्यार्थत्वेन न वैयर्थ्यं चेत्यर्थः । पृथक्पदं पुनराशब्दः ॥ १५, ३० ॥

## मन्त्रार्थमञ्जरी

(हे) सोमपाः सखे वज्रिन् । शिप्रिणीनाम्, शिप्रंसुखम्, लिङ्गव्यत्ययेन– सुखिनाम् । सोमपाव्नाम्, 'आतो मनिन्' इत्यादिना पातेः वनिप्, सोमपातॄणाम् । तव सखीनाम् अस्माकम् । (भद्रं भवतु) इति शेषः ॥ ११ ॥

(मन्त्रार्थमञ्जरी)

(हे) सोमपाः सखे वज्रिन्, देव। वयम्– ते (सकाशात्) इति शेषः। यथा (यच्च) इष्टये, 'इष गतौ' प्राप्तुम्। उश्मसि, 'वश कान्तौ' इच्छामः। तत् तथा अस्तु। कथम्? त्वम्– तथा। कृणु, कुरु। वज्रिन्पदं भगवति प्राक् निरूपितम्, यद्वा– 'वज गतौ' भावे रः (रन्) मतुबर्थ इनिप्रत्ययः, 'ज्ञानिन्' इति ध्येयम्॥ १२॥

सधमादे, 'मदी हर्षे' भावे घञ्, 'अत उपधायाः' इति वृद्धिः सीदत्यस्मिन्निति सदेः अकारो दस्य धः, पूर्वनिपातश्छान्दसः, मादसधे, सुखाश्रये (नः) इन्द्रे, अस्माकमीशे। (स्वामिनि सति) इति शेषः। रेवतीः, वित्तवत्यः। तुविवाजाः, स्त्रीलिङ्गं छान्दसम्, बह्वन्नानिरेवतीः, 'पशवो वै रेवत्यः' इति वचनाद्रेवत्यः पशवः। तुविवाजाः (च) वा। सन्तु। कथं भूताः? याभिः। क्षुमन्तः, 'क्षि निवासगत्योः' इत्यतो डुः, स्थितिमन्तः। मदेम, सुखिनो भवेम। इति॥ १३॥

(हे) धृष्णो, प्रगल्भ। त्वावान्, त्वद्वान्, त्वत्स्वामिकः पुरुषः। त्मना, 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः, आत्मना। घ, त्वयैव। आप्तः (स्यात्)। किं च, स्तोतृभ्यः, षष्ठ्यर्थे चतुर्थी, स्तोतॄणाम्, तृतीयार्थे वा, तैः स्तोतृभिः शिष्यैः। आ, समन्ततः। इयानः, तदाश्रयः। (च स्यात्) 'इण् गतौ' इत्यस्य चानश्, इयङादेशः। किमिव? ऋणोः, रणतोः, रणतेः किपि सम्प्रसारणम्, शब्दं कुर्वतोः। च क्रयोः, चक्रपर्यायश्चक्रिशब्दः, चक्रयोः। अक्षम् न, यथाक्षमाश्रयभावेन वर्तते तथा। दार्ष्टान्तिके 'स्तोतृभ्यः' इत्युक्तत्वाद्दृष्टान्तेऽपि 'ऋणोः' इत्युक्तम्॥ १४॥

(हे) शतक्रतो। यत्, यस्मात्। (त्वम्) शचीभिः, वेदवाग्भिः। जरितॄणाम्, स्तोतॄणाम्। आ कामम्, सर्वकाम्यम्। आ दुवः, आदुहः, दुहेः लङि हकारस्य वकारः, दुग्धवानसि। 'ऋणोरक्षं न' इति पूर्ववत्। आश्रयत्वमात्रेण दृष्टान्तः। तस्मान्मह्यमपि कामं देहि इति॥ १५॥ इति त्रिंशो वर्गः॥ ३०॥

## रूपावतारः

अस्माकम्॥ ननु शिप्रणीनामित्यस्य स्त्रीलिङ्गत्वात्सुखिनामिति व्याख्यानमनुपपन्नमित्यत आह॥ स्त्रीलिङ्गव्यत्ययेनेति श्रुतौ लिङ्गव्यत्ययस्याङ्गीकारेणेत्यर्थः॥ ११॥

तथा तत्॥ उश्मसीति वसेर्मसि शपो लुकि 'इदंतोमसि' (७-१-४६) इति मस इकारान्तत्वे 'ग्रहिज्यावयिव्यधिवष्टि' (६-१-१६) इति संप्रसारणे उश्मसीति रूपम्॥ १२॥

रेवतीः॥ कुतः पशवो रेवत्य इत्यत आह। प्रोक्ता इति। 'पशवो वै रेवत्य' इत्यादौ। रेवतीशब्दस्य मादशब्दे परे 'सधमादस्थयोश्छन्दसि (६।३।९६) इति सूत्रेण सधादेशविधानात्

(रूपावतारः)

मादेन सहित इति कुतो न व्याख्यातमित्यत आह। सधमादस्थयोरिति। गुणगुणिनोर्भेदाभावेन साहित्यानुपपत्तेः साधमादस्थयोश्छन्दसि' (६।३।९६) इति सूत्रप्राप्तं व्याख्यानं नाश्रितमित्यर्थः। विशेषबलेन साहित्यव्युत्पादनमगतिका गतिरिरिति भावः। 'क्षुमन्तो याभिर्मदेमे'त्यत्र याभिरिति श्रवणात् 'तुविवाजा' इत्येतत् स्त्रीलिङ्गमित्यवधार्याह। स्त्रीलिङ्गमिति। क्षुशब्द इत्यस्येति। क्षु शब्दे इति धातोः रूपं मत्वा व्याकुर्वन्त इति भावः। धातोरिति। क्षुधातोः क्षुदूपनासिकाजन्य शब्दार्थकत्वेन शब्दसामान्यार्थकत्वाभावादिति भावः॥ १३॥

आघ॥ मन्त्रेष्विति। आङिति टासंज्ञा। आङि परे मन्त्रेषु आत्मन आदेराकारस्य लोपः स्यादिति सूत्रार्थः। इणूगतावित्यस्येति। इणः लट् तस्य शानचि शपो लुकि इयङादेशे इयान इति रूपमिति भावः। दार्ष्टान्तिक इति। दृष्टान्तदार्ष्टान्तिकयोः शब्दवत्वेन साम्यव्युत्पादनाय ऋणोरिति विशेषणमिति भावः॥ १४॥

आयत्॥ दुहेश्छन्दसीति। दुहेर्लेटि सिपि इतो लोपे अडागमे हकारस्य व्यत्ययेन वकारे दुव इति रूपमिति भावः॥ १५॥ ३०॥

## पदार्थप्रकाशिका

अस्माकं शिप्रीणीनाम्। नन्वत्रास्माकमिति पुरुषाणां विवक्षितत्वात् शिप्रीणीनामिति स्त्रीलिङ्गप्रयोगो अनुपपन्न इत्यत आह। लिङ्गव्यत्ययेनेति। आतो मनिन्निति। आतो मनिन् क्वनिब्वनिपश्च अकारान्ताद्धातोरेते त्रयः प्रत्यया भवन्तीत्यर्थः। तथाच सोमशब्दोपपदात् पापाने अस्माद्धातोर्वनिप् प्रत्यये इप् इत्यस्य लोपे सोमपावन् नकारान्तप्रातिपदिकं निष्पन्नम्। तस्य षष्ठी बहुवचनं सोमपाव्नामिति। ऋचि क्रियावाचिपदाभावादपरिपूर्णं वाक्यमित्यतो अध्याहारेण वाक्यं निराकाङ्क्षं करोति। भद्रं भवत्विति। शेष इति। ऋचि शेष इत्यर्थः॥ ११॥

तथा तदस्तु सोमपाः। यथेति। सर्वकालावस्थायित्वादिना येन प्रकारेणेत्यर्थः। यच्चेति ऐश्वर्याद्यभीष्टमित्यर्थः। कान्तिरिच्छेत्यभिप्रेत्याह। इच्छाम इति। तत् अभीष्टम्। तथा तेन प्रकारेण। कथमिति। त्वत्प्रार्थनामात्रेण तदभीष्टं कथं भविष्यतीत्यर्थः। यत्प्रार्थनया प्रसन्नेन त्वया तथा कृतं चेत् भविष्यत्येवेत्याशयेनाह। त्वं तथेति। यथास्माकमभीष्टप्राप्तिः स्यात्तथा कृण्वित्यर्थः। केचित्तु वयं यत्प्राप्तुमिच्छामः तत् प्राप्तीच्छैवास्माकं कथं स्यादित्यभिप्रेत्याक्षिपति कथमिति। शुभप्राप्तीच्छास्माकं यथा भविष्यति तथा कुर्विति अभिप्रेत्योत्तरमाह। त्वं तथेतीति

(पदार्थप्रकाशिका)

व्याख्येयमित्याहुः । रप्रत्ययेति । वजगतावित्यत्र जकारस्थाकारो अनुबन्धार्थः । वज् इत्येव धातुः । तस्माद्रप्रत्यये सति वज्रेति रूपम् । तदस्यास्तीति । तथाच वज्रिन् इत्यस्य ज्ञानिन इत्यर्थो द्रष्टव्यः ॥ १२ ॥

रेवतीर्नः सधमादे । तावदाहेति । स्यात्सतीश इत्यादिना वाक्यार्थस्योत्तरत्रोच्यमानत्वादित्यर्थः । ननु रैशब्दस्यैव वित्तवाचित्वेन रेशब्दस्य तदभावात् रेवतीर्वित्तसंयुता इति कथं व्याख्यानमित्यत आह । रैपर्याय इति । रेशब्दपर्याय इत्यर्थः इति । भवतीति । इति व्याख्यानमनुपपन्नं भवतीत्यर्थः । इत्यादाविति । ब्रह्मण इति । तथाच न मतुबोऽयं रेशब्दः । किन्नाम पशुवाच्येन रेवतीशब्द इत्याशयः । सधमाद इत्यस्य सुखस्थित इत्यर्थमुपपादयितुमाह । सदेरिति । आश्रयार्थस्य सदेरकारप्रत्यये निर्वचनत्वादस्य च धकारे सधेति भवति इति व्युत्पत्तिं प्रदर्शयंस्तदर्थमाह । सीदतीति । तिष्ठतीत्यर्थः । मदि हर्ष इति । अत्र इकारो अनुबन्धार्थः । मद इत्येव धातुः । तस्माद्भावे घञ् प्रत्यये अकार मात्रंविहाय सर्वस्य लोपे अचो ञ्णितीति ञित्वादादिवृद्धौ मादेति भवति । सधमादेत्यत्र विग्रहं दर्शयति । मादस्य सध इति ।

ननु प्रथमानिर्दिष्टं समास उपसर्जनमिति सूत्रेण समासशास्त्रे षष्ठीति सूत्रे प्रथमानिर्दिष्टस्य उपसर्जन संज्ञायाः विधानात् । उपसर्जनं पूर्वमिति उपसर्जनस्य पूर्वप्रयोज्यत्वोक्तेः राजपुरुष इत्यादौ राजशब्दस्येवेहापि उपसर्जनभूतस्य मादशब्दस्य पूर्वप्रयोगः स्यात् । तथाच मादसध इति स्यात् न तु सधमाद इति मादशब्दस्य परनिपाते विधायकाभावादित्या शङ्कायां छन्दस्त्वान्न दोष इत्याशयेनाह उपसर्जनस्येति । एवमुपपत्तिं विधाय भाष्यं सङ्गमयति । ततश्चेति । ननु सुखस्थितावित्यस्य सुखावस्थाने इत्यर्थो न तु सुखाश्रय इति । तथाच सधमाद इत्येतदर्थतया सुखस्थिताविति कथमुक्तमित्यतः स्थितिशब्दः आश्रयपर इत्याह । तिष्ठतीति । स्थितिराश्रयः ।

ननु कथं सधशब्द आश्रयार्थः सधमादस्थयोः छन्दसि मादस्थयोः शब्दयोः परतः पूर्वस्थितस्य सहशब्दस्य सधेत्यादेशो भवति छन्दसि विषय इति सूत्रार्थः । सधमादः सदस्थः इत्युदाहरणम् । केनचित्सह सुखं सधमादः सहतिष्ठतीति सदस्थ इत्युदाहरणार्थः । एवं चानेन सूत्रेण सहशब्दस्यैव सधादेशविधानात् । सधशब्दस्यापि सहार्थकत्वमेव वाच्यम् । नत्वाश्रयत्वार्थत्वमित्यत आह । सधमादस्थयोरिति । कुतो नाश्रितमित्यत आह । सहशब्दानुपपत्तेरिति । सहसुखे इन्द्रे इत्यस्यार्थस्यासङ्गतत्वेन सधादेश स्थानभूतसहशब्दार्थानुपपत्तेरिति अर्थः । तुविवाजामहोन्नमिति व्याख्यानमुपपादयतीति तुविशब्दोयमिति । पूर्णत्वार्थकं बहुत्वं महत्वं चैकमेवेति भावः ।

(पदार्थप्रकाशिका)

ननु उत्तरत्र याभिः क्षुमन्तो मदेति वाजानां याभिरित्यनेन परामर्शात् रेवतीरिति विशेषणबलाच्च वाज इति स्त्रीलिङ्गमिति ज्ञायते। तत्कथम् अन्नवाचिनो वाजशब्दस्य नपुंसकत्वादित्यत आह। स्त्रीलिङ्गं वैदिकमिति।

एवमुपपत्तिं विधाय भाष्यं सङ्गमयति । अत इति । क्षुमन्त इत्यस्य स्थितिसंयुता इति व्याख्यानमुपपादयति। क्षिनिवास इति। तथाच निवासार्थात् क्षिधातोर्डप्रत्ययः डित्वाट्टीभूतस्य इकारस्य लोपे क्षु इति भवति। निवास इति। देहादिस्थितिरित्यर्थः तथाच क्षुर्देहस्थितिर्येषाम् अस्तीति क्षुमन्तस्तस्य तात्पर्यं स्थितिसंयुता इति। धातोः क्षुधातोः । शब्दविशेषार्थत्वेनेति । नासिकाजन्यक्षुत्ताख्यशब्दविशेषार्थत्वेनेत्यर्थः । ज्ञानवित्तवाचित्वेन कथं ज्ञानवाचकत्वमित्यत आह। ज्ञानस्यैवेति। ननु वाजशब्दस्यान्नवाचकत्वेन कथं सुखार्थत्वमित्यत आह। सुखस्यैवेति।

इदानीम् ऋगर्थमाह । ऊर्जितमेतदन्नादिकमित्यादिना । सधमादे सुखाश्रये । रेवतीर्वित्त-संयुतास्तुविवाजाः संत्वित्यन्वयः । प्रसिद्धवित्तसंयुतामाह । अन्नानीति । वा ज्ञानाख्यवित्त-संयुतास्तुविवाजा महासुखानि वा संत्विति तदर्थः । यद्वा पशवो रेवत्य इति व्याख्यानपक्षे रेवतीस्तुविवाजा इत्यनयोर्नपूर्वव्याख्यान इव विशेष्यभावोभिप्रेतः । किन्तु स्वतन्त्रप्रार्थ-नमेवेत्यभिप्रेत्याह । पशवस्तुविवाजाश्चैवेति । रेवतीरिति द्वितीयाबहुवचनं प्रथमाबहुवचनार्थे इत्यभिप्रेत्योक्तं पशव इति । अत्रतु तुविवाजा इत्यस्य महान्नानीत्येवार्थो द्रष्टव्यः । कथं भूता इति। रेवतीस्तुविवाजा इत्यर्थः। याभिःक्षुमन्त इति। धनपश्वन्नाद्याभिर्देहस्थितिमन्तः सन्तो मदेमेत्यर्थः ॥ १३ ॥

आघत्वावान् । प्रगल्भेति । प्रगल्भोष्ण्ययुक् पुमान् धाष्ट्यचयुक्तेत्यर्थः । त्वद्वत्वं स्वस्वामिभावसम्बन्धेनैवेत्याशयेन त्वत्स्वामिक इत्युक्तम् आत्मनेति वक्तव्ये त्मनेति कथमुक्तमित्यत आह। मन्त्रेष्विति। आङिति टासंज्ञा। तथाच मन्त्रेषु आत्मनः आदेः अकारस्य लोपः स्यात्। आङि तृतीयाविभक्तौ पर इति सूत्रार्थः। पुरुहूतं पुरुत्मनेत्याद्युदाहरणम्। तथाचानेनाकारलोपे सति त्मनेत्युपपन्नमिति भावः । आत्मनाघेत्यनूद्य त्वयैवेत्येवकारार्थकथनम् । आप्तःस्यादिति । तस्मिन्नत्यन्तं त्वत्सन्निहितस्तिष्ठतीति हेतोः त्वत्सन्निधानपात्रं स्यादिति यावत् । पूर्वस्याम् ऋचिरेवत्यादि शब्दोदितान्नादिमत्वसमुच्चयार्थो भाष्ये चशब्द इत्याह। नकेवलमिति। न केवलं त्वद्भक्तोन्नादिमान्। किन्नामत्वयाप्तश्चस्यादिति समुच्चयोर्थो द्रष्टव्यः। वक्ष्यमाणेति। द्वितीयपादे वक्ष्यमाणस्तोत्राश्रयत्वसमुच्चयेवा चशब्द इत्यर्थः। षष्ठचर्थ इति। अहल्यायै जारेतिवदित्यर्थः।

(पदार्थप्रकाशिका)

स्तोतॄणामियानः आश्रयश्च स्यादित्यन्वयः । गम्यमानः प्राप्यः । इयानो गम्यमान इत्यर्थमुपपादयति । ईणगतावित्यस्येदं रूपमिति । इणगतावित्यस्मात् शानचिवा कानचिवा प्रत्यये जाते शकारककारयोर्वा लोपे धात्वंतस्य णकारस्यच लोपे इ आनेति जाते युगागमे उक् इत्यस्यलोपे इय् आन इयन्निति रूपम् ।

ननु इणोयण् इति सूत्रेण इकारस्य यणादेशे णकारलोपे योन इत्येव स्यात् । नत्वियान इति चेत् । सत्यम् । अलाक्षणिककार्यस्य इणोयणाभावस्येहाश्रयणात् । एवमलाक्षणिकानां सूचयितुमेव इण्गतावित्यस्येदं रूपमिति सामान्येनावादीत् । एवमुत्तरत्रापि यत्राइत्यस्येदं रूपमिति सामान्येनोच्यते । तत्रालाक्षणिकं किंचिदस्तीति ज्ञातव्यमिति सम्प्रदायविदः । रणतेरिति । रण् शब्दे अस्मात् कर्तरि क्विपि तस्य सर्वस्य लोपे इग्यणः सम्प्रसारणमिति रकारस्य ऋवर्णरूपे सम्प्रसारणे ऋण् इति भवति । तस्य षष्टी द्विवचनम् ऋणतोरिति । आश्रयभावेन । आश्रयत्वेन । तथेति । त्वमपि स्तोतॄणामियानः आश्रयमित्यर्थः । सुखं महासुखमित्यर्थः । रेवतीरित्यस्य ज्ञानयुक्तत्वमर्थः । तुविवाजाइत्यस्य महासुखमर्थ इति विवेकः । ननु रैशब्दपर्यायस्य रेशब्दस्य ऋणोरिति विशेषणं दृष्टान्ते किमर्थमुक्तमित्यत आह । दार्ष्टान्तिक इति । अत्रापीति दृष्टान्तेऽपीत्यर्थः । शब्दवत्वेन साम्यं दर्शयितुमेवमुक्तमिति भावः ॥ १४ ॥

आ यद्दुवः शतक्रतो । आदुह इत्यत्र आ आदुह इति पदम् । ननु भाष्ये लुङि मध्यमपुरुषैकवचने आदुह इति कथमुक्तम् । किंतु दुहप्रपूरणेऽस्मात् तस्य मध्यमपुरुषे शबादेशे शिबादेशे इयुइत्यस्य लोपे लुङि अडागमे आदुहस् इति स्थिते चोःकुरिति सूत्रेण घोषवत्वादिगुणवतो वर्गचतुर्थो हस्यसमवर्ण इति हकारस्य घकारे अदघु सइति स्थिते एकाचोबशोभष् झषंतस्य स्ध्वोरिति सूत्रेण बश्प्रत्याहारान्तर्गतस्य दकारस्य भष् प्रत्याहारान्तर्गते धकारे जाते अधु धस् इति जाते च्लिलुङीति सूत्रेण लुङि च्लिप्रत्यये शलइगुपधादनिटः क्स इति सूत्रेण च्लेः प्रत्ययेककारे लोपे अधु धेसस् इति जाते खरिचेति सूत्रेण सकाररूपे खरिपरे झलो धकारस्य ककाररूपे चरि जाते अधुक्सस् इति जाते प्रथम सकारस्य षत्वे षकयोगे क्षेति जाते अधुक्षस् इति जाते सस्य रुत्वे विसर्गे च सति अधुक्षः इति वक्तव्यत्वादित्यत आह । दुहेः छंदसि लोटि रूपमेतदिति । विचार्यमेतत् ।

ननु दार्ष्टान्तिके परमात्मनः स्तोतृन् प्रति कामदोग्धृत्वमुच्यते । तत्र कथमक्षं दृष्टान्ततयोच्यते । नह्यक्षं कामदोग्धृ जडत्वादित्यत आह । आश्रयत्वमात्रेणेति । तथाच ऋणोरक्षंन । यथा

(पदार्थप्रकाशिका)

ऋणोश्चक्रयोरक्षम् आश्रयत्वेन वर्तते तथा जरितृणामाश्रयत्वं तेषां सर्वकाम्यमादुव इत्यर्थो द्रष्टव्यः। तस्मादिति। यस्मात्वं जरितृणां काममादुह तस्मात् शुनःशेफस्य ममापि जरितृत्वात्कामं देहीत्यर्थः। वैय्यर्थ्यमिति। एकस्य आकारस्य दुवक्रियासम्बन्धितया चरितार्थत्वात् द्वितीयस्य वैय्यर्थ्यमित्यर्थः। आहेति द्वितीयस्य आङ् क्रियासम्बन्धाभावेन ससाधनकामविशेषणत्व-मङ्गीकृत्य सार्थक्यमाहेत्यर्थः। आ इत्यनूद्य समन्तादिति भाष्ये व्याख्यातम्। तस्याप्यर्थमाह। ऐहिकं पारत्रिकंचेतीति। ससाधनक्रियावाचीति। कर्तृकारकसहितक्रियावाचीत्यर्थः। अत एव भाष्ये स्थितमिति सकारकस्थितिरूपा क्रिया दर्शिता इति ज्ञातव्यम्। ननु तर्हि आ अदुव इति सम्बन्धे एकस्य आशब्दस्य वैय्यर्थ्यमित्यत आह। अत्याधिक्यार्थत्वेनेति। पुनराशब्द इति। पुनः प्रत्युक्त आशब्दः द्वितीय आशब्द इति यावत्। अत्याधिक्यरूपेऽर्थे वर्तत इत्यर्थः। तथाच जरितृणां काम्यं सर्वम् आ आअतिसाम्यगारूढो ह इत्यर्थो द्रष्टव्यः॥ १५,३०॥

## पदार्थदीपिका

शिप्रिणीनामिति॥ ऋन्नेभ्यो ङीप्। ननु शिप्रिणीशब्दस्य स्त्रीलिङ्गत्वात् सुखिनीनामिति वक्तव्यम्। इत्यत उक्तम्॥ लिङ्गव्यत्ययेनेति॥ स्त्रीलिङ्ग व्यत्ययेनेत्यर्थः॥ वनिबिति॥ उपलक्षणं चैतत्॥ अल्लोपो नेत्यकारलोपश्च इत्यपि द्रष्टव्यम्॥ ११॥

वशकान्ताविति॥ इदन्तो मसि। उदादित्वात् शपो लुक्। ग्रहिज्येत्यादिना सम्प्रसारणम्॥ कृणु कुरु। कृवि हिंसाकरणोरिदित्वान्नुम्। धिन्विकृण्व्योरचेत्युप्रत्ययः। तत्सन्नियोगेन वकारस्यचाकारः। अतो लोप इति तस्य लोपः। तस्य स्थानिवद्भावाल्लघूपधगुणाभावः। उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुगिति भावः॥ १२॥

ननु मादस्य सध इति षष्ठीसमासे मादशब्दस्य षष्ठ्यन्ततया समासशास्त्रे प्रथमानिर्दिष्ट-त्वेनोपसर्जनत्वेन पूर्वनिपातस्स्यादित्यत आह॥ उपसर्जनस्येति॥ छन्दसि सर्वे विधयो विकल्पन्त इति वचनादिति भावः। ननु माद्दशस्थयोः परतः छन्दसि सहशब्दस्य सवादेशस्य सधमाधस्थयोश्छन्दसीति विधानात् अत्रापि सहशब्दादेशभूतसधशब्दमङ्गीकृत्यैव व्याख्यानसम्भवे किं सदेरप्रत्ययं दस्य च धं व्युत्पाद्य सधमाद शब्दव्याख्यानेनेत्यतः तथा सति सधमाद इत्यस्यास्माभिः सहहर्षयुक्ते त्वयीति व्याख्यातव्यम्। न च तत्सम्भवति। परमात्मसुखस्य परसापेक्षत्वाभावेन सहशब्दार्थभूतसाहित्यबाधितत्वात्। अतो युक्तं सह शब्दादेश भूतसधशब्दानङ्गीकारेण व्याख्यानमित्याह॥ सधमाधस्थयोः श्छन्दसीति तु नाश्रितमित्यादिना॥

(पदार्थदीपिका)

ननु वाजशब्दस्यान्नवाचित्वे वाजानीति स्यात् वाजा इति तु कथमित्यत आह ।। स्त्रीलिङ्गमिति ।। रेवतीरिति विशेषणबललब्धं स्त्रीलिङ्गं छान्दसमित्यर्थः ।। डुप्रत्यय इति ।। तथा च डित्वाट्टिलोप इति भावः ।। क्षु शब्द इत्यस्येति ।। अस्मात् क्विपि तुगभावः छान्दस ।। मदेमेति ।। मदी हर्षे । व्यत्ययेन शबिति ज्ञेयम् ।। १३ ।।

हे धृष्णो ।। ञि धृषा प्रागल्भ्ये । त्रसिगृधिधृषिक्षिप्रेः क्नुरिति क्नुः ।। त्वावान् ।। युष्मच्छब्दात् वतुप् । प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशः । आसर्वनाम्न इति दकारस्यात्वं चेति बोध्यम् । ।। वक्ष्यमाणेति ।। तदाश्रयश्चेति वक्ष्यमाणसमुच्चयार्थमित्यर्थः ।। इण गतावित्यस्येदं रूपमिति ।। १४ ।।

छन्दसि लेट् । तस्य लिटः कानज्वेति कानजादेशः । अचिश्नुधात्वित्यादिना इयङादेशः । द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति वचनात् अभ्यासो न क्रियत इति भावः ।। १५, ३० ।।

## टीकाविवृतिः

अस्माकं शिप्रिणीनाम् ।। अस्माकमिति पुरुषाणां विशेष्यत्वात् शिप्रमेषामस्तीति इन्प्रत्यये शिप्रिणामिति भाव्यं स्त्रीत्वाभावात्कथं ङीबित्यत आह ।। लिङ्गव्यत्ययेनेति ।। अस्यामृचि क्रियाकर्त्रोरभावात्तथा तदस्त्वित्युत्तरऋक्स्थस्य तदस्त्विति भाष्येऽनूदितस्यार्थं वदन्नेतद्वाक्यान्वितत्वेन योजयति ।। भद्रं भवत्विति शेष इति ।। एतद्वाक्यस्यापि शेषः अवयव इत्यर्थः । सखे इत्यत्र वज्रिन्नित्येतदपेक्षया विशेष्यत्वस्य विवक्षितत्वान्नामंत्रिते समानाधिकरणे इति अविद्यमानवद्भावनिषेधाद्वज्रिन्नित्यस्याष्टमिको निघातः ।। ११ ।।

तथातत् ।। तथा तदस्त्वित्यत्र तच्छब्दोक्तेर्यच्छब्दमध्याहरति ।। यच्चेति ।। (यथा यच्चेति ।। यद्वस्तु । द्वितीयार्थे व्यत्ययेन थाल्प्रत्यय इतिभावः) ।। गत्यर्थोयमिति ।। इषगतावित्यतःक्तिच्क्तौच संज्ञायामित्यनेन अनाशिष्यपि व्यत्ययेन क्तिचि आगमशासनस्यानित्यत्वादिडभाव इति भावः ।। वश कान्ताविति ।। अस्माल्लटि अदादित्वाच्छपो लुकि मसि ग्रहिज्यावयिव्यधिवष्टीति संप्रसारणे इदंतोमसिरिति मस इकारान्ततेति शेषः ।। कथमिति ।। मत्सकाशादभीष्टवस्तुप्राप्तिःकथं स्यादित्यर्थः । उत्तरमाह ।। त्वं तथेति ।। रप्रत्यये इति ।। ऋज्रेन्द्राग्रवज्रेति सूत्रे निपातनादिति शेषः ।। १२ ।।

रेवतीर्नः । शब्दार्थानिति । पदार्थानित्यर्थः । वाक्यार्थस्यापि स्यात्सतीशे इत्यनेन वक्ष्यमाणत्वात्तावच्छब्दः । रैपर्याय इति । ऐकारस्य एकारादेशो वर्णव्यत्ययेनेति भावः । पशवो वै

(टीकाविवृतिः)

रेवत्य इत्यादाविति। आपस्तंबशाखायां तु पशवो वै रेवतीरिति पठितम्। रेवत्य इति यणादेशपाठस्तु शाखांतरस्थो ज्ञेयः। उणादयो बहुलमित्याश्रयेणाह। सदेरिति। मादस्य सध इति विग्रहे षष्ठीसमासे षष्ठ्यंतस्य समासशास्त्रे षष्ठीति प्रथमानिर्दिष्टत्वात्प्रथमानिर्दिष्टं समास उपसर्जनमिति उपसर्जनसंज्ञिकत्वादुपसर्जनं पूर्वमिति पूर्वनिपातेन भाव्यमित्यत आह। उपसर्जनस्य परनिपात इति। राजदंतादेराकृतिगणत्वाद्राजदंतादिषु परमित्यनेनेति शेषः। पूर्वनिपात इति पाठेऽपि पूर्वशब्दस्य अग्रार्थकत्वात् मादशब्दस्य परनिपात इत्येव फलितोर्थः। इन्द्रविशेषणत्वा-त्सधमादशब्दस्य सुखस्थिताविति प्रतिपदे क्तिनोभावार्थत्वादपेक्षित सुखाश्रयत्वार्थाप्राप्तेराह। तिष्ठत्यस्मिन्निति। औणादिकत्वादस्य क्तिनोधिकरणार्थत्वमिति भावः। ननु सधमादस्थयो-श्छंदसीत्यनेन सहशब्दस्य मादशब्दस्थशब्दयोः परयोः सधादेशविधानादत्रापि मादेन सहितः सधमाद इत्यस्य सगुण इत्यादिवत्सुखरूपस्यापि सुखसाहित्यार्थोपपत्तेस्तत्कुतो नोक्तमित्यत आह। सधमादस्थयोरिति। अनाश्रयणे हेतुमाह। सहशब्दार्थानुपपत्तेरिति। सह अंचतीति सध्र्यङ्ङित्यत्रांचतिना सहशब्दस्यान्वयाभावे सत्येव तत्र यथासहस्य सध्रिरिति सध्र्यादेशस्तत्रान्येन सहांचतीत्यर्थो भवति तथान्येन सहमादयतीत्यर्थे विवक्षिते एव सहस्य सधादेशः। सहस्य सध्रिरित्यधिकारे सधमादस्थयोश्छन्दसीत्युक्तेः। वर्तिपदार्थसाहित्ये विवक्षिते तु तेन सहेतीति बहुव्रीहौ सहस्य सः संज्ञायामित्यधिकारोक्ते नवोपर्जनस्येत्यनेन सादेशः स्यान्न तु सधादेश अस्मिन्नधिकारे विधानाभावात्। तथा चात्र सहशब्दप्रति योगिनोन्यस्य तुविवाजाधिकरण विष्णुसदृशस्यासम्भवेनानुक्तेः कथं स्त्रीत्वमित्यत आह। स्त्रीलिङ्गमिति। तुविवाजा इति रूपस्य पुल्लिंग स्त्रीलिंगसाधारण्येपि रेवतीशब्दसामानाधिकरण्यादुत्तरत्र याभिर्मदेनेति वाजशब्दस्योक्तार्थ परामर्शाच्चस्त्रीलिङ्गत्व निश्चयादिति भावः। डु प्रत्यय इति। औणादिको भावे इति शेषः। शब्दविशेषार्थत्वेनेति। नासिक शब्दस्य क्षुदर्थकत्वात्। अत एव बोपदेवः टुक्षुक्षुते इति स्पष्टं शब्दविशेषं क्षुतमेव धात्वर्थमाह। वाक्यार्थमिति। ऋगर्थमित्यर्थः। स्वयमृचं योजयति। रेवतीरिति। रेशब्दस्य द्रव्यार्थत्वे रेवतीशब्दस्यान्न विशेषणत्वम्। यदा रेवतीशब्दः पशुवाची तदा समुच्चय इति भावेनाह। हे धृष्णो प्रगल्भेति। धैर्ययुक्तेत्यर्थः। त्वावानिति। युष्मच्छब्दात् मतुपि मदुपधाया इति वत्त्वे प्रत्ययोत्तरपदयोश्चेति त्वादेशे दकारस्य छांदस आकार इति भावः। मंत्रेष्वाङ्यादेरात्मन इत्यनेन सूत्रेण आङि तृतीयैकवचने परे आत्मन् शब्दस्यादेराकारस्य लोप विधानादत्राकारलोप इति शेषः। त्वयैवाप्तः त्वत्प्रसादेनैवाभीष्टप्राप्तिमानित्यर्थः। इयानः गम्यमान इति। ज्ञायमान इत्यर्थः। स्तोतृभिरित्यनेनास्यान्वयः। स्तोतॄणामिति षष्ठ्यर्थत्वे इयान इत्यस्यार्थमाह। तदाश्रयश्चेति।

(टीकाविवृतिः)

इण् गतावित्यस्येति । अस्मात्कर्मणि लटः शानजादेशे यकीति शेषः । संज्ञापूर्वकस्यानित्यत्वादकृत्सार्वधातुकेति न दीर्घः । आगमशासनस्यानित्यत्वादाने मुगिति न मुगागम इति भावः । सम्प्रसारणमिति । ह्वः सम्प्रसारणमित्यधिकारे बहुलं छन्दसीत्यनेनेति शेषः । चक्रपर्याय इति । चक्रशब्दस्य वर्णव्यत्ययेनेकारादेशे चक्रिशब्दस्य जातत्वादिति भावः । अक्षमिति । अक्षं चक्रनाभिनिष्ठकाष्ठमित्यर्थः । चक्रयोः किमर्थं ऋणोरिति विशेषणमित्यत आह । दार्ष्टान्तिके इति । शब्दवत्त्वेन दृष्टान्त दार्ष्टांतिकयोः साम्यप्रतिपादनायेति भावः ॥ १४ ॥

आयत् । शची वागिति वाङ्नामसु पाठादाह । शचीभिरिति । जरितॄणामिति ॥ रेभः जरितेति स्तोतृनामसु पाठादिति भावः । लेटि रूपमिति । सिप अडागमे इकारलोपे च ह्रस्व वर्णव्यत्ययेन वकार इति शेषः । ननु अक्षस्य कामदोग्धृत्वाभावात्कथमक्षं दृष्टांत इत्यत आह ॥ आश्रयत्वमात्रेणेति । विष्णोरपि स्तोतृकामदोग्धृत्वेनाश्रयत्वस्यैव विवक्षितत्वादिति भावः । यच्छब्दस्य तच्छब्दसापेक्षत्वात्तत्साहित्यमावश्यकमध्याहरति । तस्मान्ममापीति । ससाधन क्रियावाचीति । भाष्ये स्थितमिति कर्तृसहितस्थितिक्रियोक्तेरिति भावः ॥ १५ ॥ त्रिंशो वर्गः ॥ ३० ॥

**ऋक्संहिता पदपाठसहिता** (सू-३०, व-४)

(३४४) **शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ॥ स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥ १६ ॥**

(प०) **शश्वत् । इन्द्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि ॥ सः । नः । हिरण्यऽरथम् । दंसनाऽवान् । सः । नः । सनिता । सनये । सः । नः । अदात् ॥ १६ ॥**

(३४५) **आश्विनावश्वावत्येषा यातं शवीरया ॥ गोमद्दस्रा हिरण्यवत् ॥ १७ ॥**

(प०) **आ । अश्विनौ । अश्वऽवत्या । इषा । यातम् । शवीरया ॥ गोऽमत् । दस्रा । हिरण्यऽवत् ॥ १७ ॥**

(ऋक्संहिता पदपाठसहिता)

(३४६) समानयोजनो हिवां रथो दस्रावमर्त्यः ॥
समुद्रे अश्विनेयते ॥ १८ ॥
(प०) समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः ॥
समुद्रे । अश्विना । ईयते ॥ १८ ॥
(३४७) न्यं१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः॥ परिद्यामन्यदीयते ॥१९॥
(प०) नि । अघ्न्यस्य । मूर्धनि । चक्रम् । रथस्य । येमथुः ॥ परि ।
द्याम् । अन्यत् । ईयते ॥ १९ ॥
(३४८) कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये ॥
कं नक्षसे विभावरि ॥ २० ॥
(प०) कः । ते । उषः । कधऽप्रिये । भुजे । मर्तः । अमर्त्ये ॥ कम् ।
नक्षसे । विभाऽवरि ॥ २० ॥
(३४९) वयं हिते अमन्मह्यान्तादा पराकात् ॥
अश्वे न चित्रे अरुषि ॥ २१ ॥
(प०) वयम् । हि । ते । अमन्महि । आ । अन्तात् । आ । पराकात् ।
अश्वे । न । चित्रे । अरुषि ॥ २१ ॥
(३५०) त्वं त्येभिरागहि वाजेभिर्दुहितर्दिवः ॥
अस्मे रयिं नि धारय ॥ २२, ३१, ३०, ६ ॥
(प०) त्वम् । त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः ॥
अस्मेइति । रयिम् । नि । धारय ॥ २२, ३१, ३०, ६ ॥

ऋग्भाष्यम्

क्रोधाच्छ्वसद्भिः प्रथयद्भिरात्मवीर्यं सुरैः शश्वदिन्द्रो जिगाय । धनानिनः स्वर्णरथं च दाता लब्धा प्रादाल्लाभकृते च नोखिलम् ॥ १६ ॥ गोमद्धिरण्यवच्च स्याद्यथा यातं तथैव नः । सुखपुत्रयुजाचाश्ववत्येषा शं सुखं यतः । इडैश्वर्यं तथावीरं वीर्यं खान्यश्वनामतः ।

(ऋग्भाष्यम्)

गौर्वाग्घितं च रमणं परं ब्रह्मगुणोच्छ्रितम् ॥ १७ ॥ समानयोगयुक्तोयं रथो देहस्त्वदात्मनाम् । चित्सुखत्वादमर्त्यश्च ज्ञायते क्षीरसागरे । मोक्षस्य यावता प्राप्तिः समानो योग उच्यते ॥ १८ ॥ एकं चक्रं गिरेर्मूर्ध्नि नियतं दिवि चापरम् । पापं चक्रं हरिद्यस्य पुण्यं दिव्यस्य चोपरि ॥ १९ ॥ को मर्त्यस्तव भोगाय यतः सर्वप्रियो भवान् । किमपि प्रियमस्येति पूर्णानन्दात्कधप्रियः । आप्तकामत्वतः कं वा गच्छसि स्वार्थहेतुतः । विशेषाद्धावृतेर्विष्णुः कथितश्च विभावरी ॥ २० ॥ चिन्तयामस्तवैकस्य विश्वमांत-पराकयोः । पराकः सुसुखैवश्रीरंतः कलिरुदाहृतः । नरकस्वर्गयोरेव देव्युषा उदिता यदा । जात्यश्ववत्सदा भद्रे चारुणे ॥ २१ ॥ प्राणवाक्सुते । तद्व्यंग्यत्वाद्धरिश्चैव दिवस्पुत्र उदाहृतः ॥ २२, ३१, ११, ६ ॥

## ऋग्भाष्यटीका

शश्वदिन्द्रः । तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति । क्रोधात् । इन्द्रः पोप्रुथद्भिः प्रथ प्रख्यान इत्यस्येदं रूपम् । प्रथयद्भिरात्मवीर्यमिति शेषः । नानदद्भिः अतिशयेन पुनः पुनर्वा नादान्कुर्वद्भिः । शाश्वसद्भिः क्रोधात् भृशं भूयो भूयश्च श्वसद्भिः सुरैः शश्वत्सर्वदा । धनानि दैत्य सम्बन्धीनि । जिगाय जितवान् । दंसनावान्कर्मवान् । स इन्द्रो नोऽस्मभ्यं हिरण्यरथं स्वर्णमयं रथमिदानीम् अदात् प्रादात् । स एव च नोस्मभ्यं सनिता अखिलमैहिकं दाता । यद्वा । स नोस्मदीयमखिलं हविरादिकं सनिता लब्धा । किञ्च । स नोस्माकं सनये लब्धये । पारत्रिकलाभकृते च भवति ॥ १६ ॥

आश्विनौ । तृच आश्विनः । गोमत् । हे दस्रावश्विनौ । अश्ववत्याऽश्वयुक्तया । शवीरया सुखपुत्रयुजा च । इषान्नेन सह गोमद्धिरण्यवदिति क्रियाविशेषणे । यथा युवयोरागमनं गोमद्धिरण्यवच्च स्यात्तथैव । नोस्मान्प्रत्यायातम् । अश्वादिकं दातुमायातमिति यावत् । शवीरयेत्येतत्सुखपुत्रयुजेति व्याख्यातम् । तत्किञ्चिद्विशदयति । शमिति । यतः शं सुखं वीरश्च पुत्रः तद्वान्मत्वर्थे द्वन्द्वान्मत्वर्थे अर्श आदिभ्योच् । अतो युक्तमुक्तम् । इडादि शब्दानामध्यात्ममर्थानाह । इडिति । ऐश्वर्यं मनोजयः । ईश ऐश्वर्य इत्यस्येदं रूपम् । तथाशब्दः समुच्चये । वीर्यमविद्याजये पराक्रमः । नामतो नाम्नोच्यन्ते । हितं च रमणीयं चेति परं ब्रह्म हिरण्यम् । यथा लोहानां हिरण्यं श्रेष्ठं तथा सर्वतोपि गुणोच्छ्रितमिति वा हिरण्यम् ॥ १७ ॥

समान । समानयोग । हे दस्रावश्विनौ । वां युवयोर्भक्तानाम् । त्वदात्मनां त्वच्चित्तानाम् । भगवत एकत्वादेकवचनम् । समानं योजनं योगो यस्यासौ तथोक्तः । समानयोगयुक्तः । युक्तत्वं च कारणत्वेन

(ऋग्भाष्यटीका)

चित्सुखत्वादमर्त्यश्च हि अयं प्रसिद्धो रथो देहः। समुद्रे क्षीरसागरे। ईयते ज्ञायते। कोसौ समानो योग इत्यत आह। मोक्षस्येति। यावता योगेन तावान्। प्रसिद्धाश्विनोस्तु समानयोजनो योग्ययुग्यवान्। अमर्त्योऽलौकिकः। समुद्र ईयेत आसमुद्रगामीति॥ १८॥

न्या१ध्न्यस्य। एकं चक्रम्। हे अश्विनौ। सौरस्य रथस्यैकं चक्रम् अघ्न्यस्य पर्वतनामैतत्। मानसोत्तरस्य गिरेर्मूधनि मूर्ध्नि। युवां नियेमथुः नियमितवंतौ स्थः। युवाभ्यां नियमितं वर्तत इति यावत्। अन्यदपरं च चक्रं चक्रस्थानीयोक्षप्रदेशो द्यां परिदिवि मेरावीयते ज्ञायते भवन्नियमनेन। प्रकारान्तरेण व्याख्याति। पापमिति। हे अश्विनौ रथस्य जगदाख्यस्यैकं चक्रं प्रवृत्तिहेतुत्व साम्यात्पापम्। अघ्न्यस्य अः विष्णुस्तेन हन्यत इति हरिघ्न्यस्य दैत्यजनस्य मूर्धनि। नियेमथुः युवां स्थापितवन्तौ स्थः। अन्यच्च चक्रं पुण्यम्। द्यां परि लक्षणयादिव्यस्य जनस्योपरि। भवद्भ्यामेवेयते॥ १९॥

कस्ते। उषस्योयं तृचः॥ को मर्त्यः। हे कधप्रिये अमर्त्ये विभावरि उषः को मर्तो मर्त्यः। ते तव। भुजे भोगाय भवति। न कोपि। कधप्रिय इत्येतद्व्याचष्टे। यत इति। सर्वं प्रियमेव यस्य न किंचन दुःखकारणं स सर्वप्रियः। यतो भवान्सर्वप्रियोऽतः कधप्रियः। तस्य स्त्रीरूपस्य सम्बुद्धिः कधप्रिये। कथमेतल्लभ्यत इत्यत आह॥ किमपीति। कधशब्दः किमपीत्यस्यार्थे निपातः। सर्वमपीत्यर्थः। सर्वं प्रियमेव न त्वप्रियं किमपीत्येतत्कुत इत्यत आह॥ पूर्णानन्दा त्पूर्णानन्दत्वादिति। यतस्त्वममर्त्या पूर्णानन्दा च अतस्तव भोगः कथं मर्त्याधीन इति। कं नक्षसे णक्ष गतौ आप्तकामत्वतः कारणात्स्वार्थहेतुतः कमेव प्रतिगच्छसि। न कंचन प्रति। विभावरीति व्याचष्टे॥ विशेषादिति। विशेषाद्भा विशिष्टाभा। तया जगदावरणात्। विशिष्टा भा विभा। वृणोतेरकारः। स्त्रियामीकारः। विभयावरी विभावरी। विभावरी चेति सम्बन्धः॥२०॥

वयं हि। चिन्तयामः। हे अश्वे न जात्यश्ववच्चित्रे सदाभद्रे। ईश्वरापेक्षया पुल्लिङ्गम्। इवादि युक्तमुपमानमुपमेयवृत्तीति ततोपि सम्बुद्धिः। अरुषि अरुणे वर्णतः। चशब्दो गुणसमुच्चये। वयमांतात् आपराकात्। अन्तपराकयोरा। पञ्चम्यर्थे षष्ठी। आङभिविधौ। विश्वं ते तवैकस्य। इत्यमन्महि चिन्तितवन्तो हि सदा चिन्तयामः। पराकान्तौ व्याचष्टे॥ पराक इति॥ श्रीरेव पराकः। कथम्। सुसुखेति कृत्वा। परं आ सम्यक्कं यस्येति। पुल्लिङ्गं पुंसामर्थ्योपेतत्वात्। अन्तः कलिः। सकलजीवांत्यत्वात्। लक्ष्मीपूर्वं कलिपर्यन्तं विश्वं तवैव स्वमिति जानीम इत्यर्थः। प्रसिद्धायामुषस्येतदसम्भवादान्तादा पराकादिति प्रकारान्तरेण व्याख्याति। नरकेति। यदोषादेव्यत्रोदिता तदा नरकस्वर्गयोर्नरकस्वर्गाभ्यामित्येवं व्याख्येयम्। अन्तो विनाशः। दुःखं नरकः। परमसुखत्वात्पराकः स्वर्गः। नरकस्वर्गयोर्देवी स्वामिनीति स्वार्थ एव वा षष्ठी॥ २१॥

(ऋग्भाष्यटीका)

त्वं त्येभिः। अत्र दिवो दुहितरित्येतत्प्रसिद्धायामुषसि व्याख्याति। प्राणेति। यद्यपि वागेव द्यौस्तथापि केवलायाः स्त्रियोऽपत्यसम्बन्धाभावात्प्राण ग्रहणम्। परमेश्वरे दिवो दुहितृत्वं घटयति। तदिति॥ वाचा व्यंग्यत्वादेव हे दिवोदुहितरुषस्त्वम्। त्येभिः त्यैः प्रसिद्धैः। वाजेभिर्वाजैः। अन्नानि दातुमिति यावत्। अस्मान्प्रत्यागाहि आगच्छ। अस्मे अस्मासु। रयिं वित्तं च। निधारय निश्चितं स्थापय॥ २२, ३१, ११, ११, ६॥

## मन्त्रार्थमञ्जरी

इन्द्रः पोप्रुथद्भिः, 'प्रथ प्रख्याने' इत्यस्य यङ्लुगन्तस्य वा श्लुविकरणस्य वा शत्रन्तस्य रूपम्, प्रथयद्भिः, प्रख्यापयद्भिः। (आत्मवीर्यम्) इति शेषः। नानदद्भिः, अतिशयेन पुनः पुनर्वा नादान्कुर्वद्भिः। शाश्वसद्भिः, क्रोधाद्भृशं भूयोभूयश्च श्वसद्भिः। (सुरैः सह) शश्वत्, सर्वदा। धनानि, दैत्यसम्बन्धीनि। जिगाय, जितवान्। दंसनावान्, कर्मवान्। सः इन्द्रः। नः, अस्मभ्यम्। हिरण्यरथम्, स्वर्णमयं रथम्। इदानीम् अदात्, प्रादात्। सः (एव च)। नः अस्मभ्यम्। सनिता, अखिलमैहिकं दाता। यद्वा सः। नः, अस्मदीयम्। अखिलं हविरादिकम् सनिता, लब्धा। किं च, सः। नः अस्माकम्। सनये, लब्धये, पारत्रिकलाभकृते। (च भवति)॥ १६॥

(हे) दस्रा, दस्रौ। अश्विनौ। अश्ववत्या, अश्वयुक्तया। शवीरया, सुखपुत्राभ्यां युजा, द्वन्द्वादर्शआद्यच्। इषा, अन्नेन सह। 'गोमत्, हिरण्यवत्' इति क्रियाविशेषणे, यथा युवयोरागमनं गोमद्धिरण्यवच्च स्यात्तथा। अस्मान्प्रति– आ यातम्, अश्वादिकं दातुमायातमिति यावत्। अध्यात्मं तु (हे) दस्रा, दस्रौ। अश्विनौ। अश्ववत्या, इन्द्रियैरुपेतया। शवीरया, भावप्रधानम् शवीर्यया, सुखेनाविद्यादिजयविषये पराक्रमयुक्तया। इषा, 'ईश ऐश्वर्ये' इत्यतः क्विपि शस्य षत्वे ह्रस्वत्वे च रूपत्वेनैश्वर्येण मनोजयरूपेण सह। गोमत्। वेदवाक्ययुक्तम्। हिरण्यवत्, हितरूपरमणरूपपरब्रह्मयुक्तम्– यथा तथा। आ यातम्– इति, तात्पर्यं प्राग्वत्॥ १७॥

(हे) दस्रौ, अश्विना, अश्विनौ। वाम्, युवयोः भक्तानाम्, भवच्चित्तानाम्। समानयोजनः, समानं यावता मोक्षप्राप्तिस्तावता योजनं योगो यस्यासौ तथोक्तः समानयोगयुक्तः युक्तत्वं च– कारणत्वेन। चित्सुखत्वात्– अमर्त्यः (च) (अयम्) प्रसिद्धः। रथः, देहः (च) समुद्रे, क्षीराब्धौ। ईयते, ज्ञायते। हि। प्रसिद्धाश्विनोस्तु (हे) दस्रौ। अश्विना, अश्विनौ। वाम्, वां सम्बन्धी। समानयोजनः, योग्ययुग्यवान्। अमर्त्यः, अलौकिकः। रथः समुद्रे, सामीप्ये सप्तमी, समुद्रपर्यन्तम्। ईयते, गम्यते। हि॥ १८॥

(मन्त्रार्थमञ्जरी)

(हे अश्विनौ) सौरस्य रथस्य। एकम्– चक्रम्। अघ्न्यस्य, पर्वतनामैतत्, मानसोत्तरस्य गिरेः। मूर्धनि। युवाम्– नि येमथुः, नियमितवन्तौ स्थः, युवाभ्यां नियतं वर्तत इति यावत्। अन्यत्, अपरम्, चक्रस्थानीयाक्षप्रदेशः। द्याम् परि, दिवि, मेरौ। ईयते, ज्ञायते, भवन्नियमनेन इति। यद्वा (हे अश्विनौ) रथस्य जगदाख्यस्य एकम्– चक्रम्। प्रवृत्तिहेतुसाम्यात्पापम्। अघ्न्यस्य, ओ विष्णुः, तेन हन्यत इति हरिघ्न्यस्य, दैत्यजनस्य। मूर्धनि। नि येमथुः, युवां स्थापितवन्तौ स्थः। अन्यत्, चक्रम्, पुण्यम्। द्याम् परि, लक्षणया दिवि स्थितस्य जनस्योपरि। भवद्भ्यामेव ईयते ॥ १९ ॥

(हे) कधप्रिये, 'कधम्' इति निपातः 'किमपि' इत्यर्थे, सर्वमित्यर्थः, कधं सर्वं प्रियमेव न त्वप्रियं यस्याः पूर्णानन्दत्वान्न किंचिद्दुःखकारणं सा कधप्रिया, तत्संबुद्धिः कधप्रिये। अमर्त्ये। विभावरि, विशिष्टया प्रभया आवरि जगदावृण्वाने, वृणोतेः अकारे स्त्रियामीकारः। उषः, उषोदेवि। कः। मर्तः, मर्त्यः। ते, तव भुजे, भोगाय– भवति, न कोऽपि, यतस्त्वं पूर्णानन्ददोऽमर्त्यश्चातस्तव भोगो मर्त्याधीनः कथम्? इति। कम्। नक्षसे, 'णक्ष गतौ' आप्तकामत्वतः कारणात्स्वार्थनिमित्तं कमेव प्रति गच्छसि, न कंचन प्रति ॥ २० ॥

अश्वे न, जात्यश्ववत्। चित्रे, सदा भद्रे। अरुषि, वर्णतोऽरुणे। वयम्। आ अन्तात्, सर्वजीवान्त्यात्, कलिपर्यन्तम्। आ पराकात्, परमुत्तममा समन्तात्कं सुखं यस्य श्रीतत्त्वस्य तस्मादा, लक्ष्मीपर्यन्तम्। (च) आङभिविधौ, कलिलक्ष्मीसहितं विश्वम्। ते, तव, एकस्य। 'स्वम्' इति अमन्महि, सदा चिन्तयामः। हि। प्रसिद्धोषः पक्षे– अन्तपराकशब्दयोर्नरकस्वर्गार्थता ज्ञेया, तत्सहितविश्वस्य 'स्वामिनी' इति ॥ २१ ॥

(हे) दिवः दुहितः, वाण्याः पुत्रि, विष्णोः स्तुतिव्यङ्ग्यत्वात्पुत्रीत्वं ज्ञेयम्। त्वम्। त्येभिः, त्यैः, प्रसिद्धैः। वाजेभिः, वाजैः, अन्नानि दातुमिति यावत्। अस्मान्प्रति आ गहि, आगच्छ। अस्मे, अस्मासु, शे आदेशः। रयिम्, वित्तम्। (च) निधारय, निश्चितं यथा तथा स्थापय ॥ २२ ॥ इत्येकत्रिंशो वर्गः ॥ ३१ ॥ त्रिंशं सूक्तम् ॥ ३० ॥ षष्ठोऽनुवाकः ॥ ६ ॥

## रूपावतारः

शश्वदिन्द्र ॥ शुनःशेपस्येन्द्रप्रसादो जात इति ज्ञापयितुं ब्राह्मणवाक्यं पठति। तस्मा इन्द्र इति। शुनःशेपेन एवमुक्तप्रकारेण ऋग्भिःस्तूयमान इन्द्रस्तस्मै हिरण्यरथं मनसा स्वेच्छया परप्रेरणां विनैवेति यावत्। ददौ दत्तवान्। तदनन्तरं शुनःशेपः 'शश्वदिन्द्र' इत्येतया ऋचा तमिन्द्रं प्रतीयाय

(रूपावतारः)

तुष्टावेति ब्राह्मणवाक्यार्थः । इदं रूपमिति । प्रथेर्यङि लुकि उपधायाः व्यत्ययेन उकारे द्विर्वचने 'गुणो यङ्लुकोः' (७।४।८२) इति गुणे हलादिशेषे शतरि भिसि च पोप्रुथद्भिरिति रूपम् नानदद्भिरिति । नदेरतिशये पौनःपुन्ये वा यङि तस्य लुकि द्विर्वचने 'दीर्घोऽकितः' (७।४।८३) इति दीर्घे शतरि भिसि च नानदद्भिरिति रूपम् । शाश्वसद्भिरिति । श्वसेर्यङि तस्य लुकि द्विर्वचने अभ्यासदीर्घे शतरि भिसि च रूपम् ।। १६ ।।

आश्विना ।। इदंरूपमिति । ईशेः क्विपि षत्वे उपधाह्रस्वत्वे टाप्रत्यये इषेति रूपम् । भाष्ये वीर्यमिति । वीरेति प्रातिपदिकानुवादः । वीर्यमित्यर्थकथनमिति विवेकः । नाम्ना उच्यन्त इति खानि अश्वनाम्ना उच्यन्त इत्यर्थः ।। १७ ।।

समानयोजनः ।। स्वरूपदेहविवक्षयाह । चित्सुखत्वादिति ।। १८ ।।

न्या१घ्न्यस्य ।। अघ्न्यस्येति । 'अघ्न्यादयश्च' इति निपातनादघ्न्यशब्दसिद्धिः । अः विष्णुरिति विष्णुवाचकअशब्दोपपदात् हन्तेःकर्मणि यप्रत्यये अल्लोपे हकारस्य घत्वे षष्ठ्यैकवचने अघ्न्यस्येति रूपसिद्धिरिति भावः । येमथुरिति । यमेरथुसि द्विर्वचने 'अत एकहल्मध्येऽनादेशादेर्लिटि' (६।४।१२०) इति एत्वाभ्यासलोपयोर्येमथुरिति ।। १९ ।।

कस्ते ।। मर्त इति । मृङः दृसिमृग्रिणवामिलूपूधुर्विभ्यस्तन् इति तन् प्रत्यये गुणे मर्त इति रूपम् वृणोतेरकार इति । रप्रत्यय इत्यर्थः । ईकार इति । 'टिड्ढाणञ्...... (४।१।१५) इति ङीबित्यर्थः ।। २० ।।

वयं हि ते ।। जात्यश्ववदिति । जात्यश्ववत् विद्यमान इत्यर्थः । नन्वश्वशब्दे कथं संबुद्धिः तस्योपमानवाचकत्वादित्यत आह । इवादियुक्तमिति । इवादियुक्तोपमानवाचकः शब्द उपमेयवाचीति हेतोः अश्वेनेत्यस्याश्ववद्विद्यमाने इत्येवं रूपेण संबोध्यवाचकात् अश्व इति संबुद्धिर्युक्तेति भावः । पञ्चम्यर्थे षष्ठीति । 'पञ्चम्यपाङ्परिभिः' (२।३।१०) इत्युपपदविभक्तेः कर्मत्ववाचकत्वात् (अत्र ग्रन्थपातः) ।

पञ्चम्यर्थ इति । तथा च आङ योगेऽपि षष्ठी शेषे (२।३।५०) इत्युक्तेः 'पञ्चम्यपाङ्परिभिः' (२।३।१०) इति पञ्चम्यर्थे षष्ठीति भावः । (छलारी टिप्पणी १५१-१२) ।। २१ ।।

त्वंत्येभिः ।। ।। २२ ।। ३ ।। ३१ ।। ६ ।।

## पदार्थप्रकाशिका

शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय। ब्राह्मणवाक्येनैव ऋचमवतारयति। तस्माइन्द्र इति। स्तूयमानः स इन्द्रः तस्मै शुनःशेपाय आरोहणार्थं हिरण्यरथं सुवर्णमयं रथम्। मनसा ददौ। दास्यामीति सङ्कल्पितवान्। तत् शुनःशेपो ज्ञानदृष्ट्या विज्ञाय तमिन्द्रं शश्वदिन्द्र इत्येतयर्चा प्रतीयाय दृष्टवान्। अस्तुवदित्यर्थः। केचित्तु तं मनसा इन्द्रेण दत्तं रथं शश्वदित्येतयर्चा स्वयमपि मनस्यैव प्रतियाय प्रतिजग्राह। अनेन दत्तं चेदहमपि गृहीष्यामीति चिन्तितवानित्यर्थ इत्याहुः। प्रथ प्राख्यान इत्यस्येदं रूपमिति। पृथुधातोः यङि तस्य लुकि सन्यङोरिति द्वित्वे हलादिशेषे प्रप्रथेति जाते निर्वचनत्वात् अभ्यस्तरकारस्य ओकारे धातोः उकारागमे प्रोथेति जाते पश्चात् शत्रुप्रत्यये शकार ऋवर्णयोर्लोपे पोपृथदिति नकारान्तप्रतिपादिकसिद्धिः। तस्य तृतीया बहुवचनं पोप्रुथद्भिरिति। एवमलाक्षणिकस्य सर्वस्य सङ्ग्रहायेत्यस्येदं रूपमित्युक्तमिति ज्ञातव्यम्। आत्मवीर्यमिति। स्वपराक्रमं परमात्मपराक्रमं वेत्यर्थः। सन इति। त्रिवारमुक्तत्वत्वाद्वाक्यभेदेन योजयति। स इन्द्रो नो अस्माकमित्यादिना। नानद्भिः शाश्वत्यद्भिरित्यत्रत्यस्याभ्यासस्यार्थो अतिशयेन पुनःपुनर्वा। भृशं भूयोभूयश्चेति। कर्मवानिति। धनादिजयरूपकर्मवानित्यर्थः। अदादिति। सामीप्याद्व्यपदेश इति ज्ञेयम्। लाभकृते लाभार्थम्॥ १६॥

अश्विनावश्वावत्या। परौतृचावश्विनौ षस्यावित्यनुक्रमणिका। तस्यायमर्थः। परौ शश्वदिन्द्र इति ऋचः सकाशादुत्तरत्र विद्यमानौ अश्विनौ षस्यौ ततत्राश्विनेति ऋचः अश्विनः कस्त उष इति तृचः उषस्य इति विवेकः। तामनुक्रमणिकां हृदि निधायाह। तृच आश्विन इति। वक्षतिच। कस्त इति प्रतीकं गृहीत्वा उषस्योयं तृच इति। ऋचि स्राविितिपृथक् सत्वादश्विनावित्येतदाशुगमनवन्ता विति यौगिकतया व्याख्येयम्। सुखपुत्रयुजेति। सुखपुत्राभ्यां युजेत्यर्थः। क्रियेति। आयातमित्युक्तागमनरूपक्रिया विशेषमित्यर्थः। तदेव दर्शयति। यथेति। गोमद्धिरण्यवच्च स्यादिति। तत्संपादकं यथास्यादित्यर्थः। ऋक् तात्पर्यमाह। अश्वादिकमिति। आदिपदेन सुखगापुत्रान्नगोहिरण्यानां सङ्ग्रहः। किंचिदिति। शब्दमात्रस्यैवार्थकथनादिति भावः। विशदयति। सुखपुत्रयुजेति। पूर्वं सामान्येन व्याख्यानस्य कृतत्वादिति भावः। यतः कारणात् द्वन्द्वादित्यादि स्थत्वात्तद्धिताचुप्रत्यये चकारलोपे यस्येति चेति रकारस्थाकारलोपे प्रत्ययाकारेच मिलिते सति शवीरेति प्रातिपदिकसिद्धिः। पश्चादजाद्यतष्टाबिति टापि स्वादेश्चोत्पत्तौ शवीरयेति भवतीति द्रष्टव्यम्।

(पदार्थप्रकाशिका)

अतो युक्तमिति । अतः सुखपुत्रयुजेत्युक्तं व्याख्यानं युक्तपदताडितमित्यर्थः । प्रसिद्धस्य बाह्यैश्वर्यस्याध्यात्ममनुपयोगादाह । ऐशवर्यमनोजय इति । ईश्वऐश्वर्यमित्यस्येदं रूपमिति । ईश्धातोः क्विपि ईकारस्य इकारादेशे शकारस्य षत्वे इष इति रूपम् । तस्य तृतीया इषेति भवतीति ज्ञातव्यम् । समुच्चय इति । इडावीराश्वादीनां परस्परं समुच्चये तथाशब्द इत्यर्थः । शरीरपराक्रमस्याध्यात्ममनुपयोगादाह । अविद्येति । तसेः सार्वविभक्तिकत्वादाह । नामतोनाम्नेति । भाष्ये हिरण्यशब्दस्य हिरण्यमिव हिरण्यमित्यभिप्रेत्यार्थान्तरमुच्यते । गुणोच्छ्रितमिति । तद्विवृणोति । लोहादीनामिति । अयस्ताम्र कांस्यरजतसुवर्णाख्यानां पञ्चलोहानां मध्ये इत्यर्थः । तथाच इन्द्रियपाटवसुखविद्याजयपराक्रममनो जयवाक्पाटवानि दातुं नो अस्मान् प्रत्यायातमिति ऋकुतात्पर्यं द्रष्टव्यम् । हिरण्यवदित्ये तच्च युवयोरागमनं परब्रह्मवत् तत्सन्निधानवद्यथा स्यात्तथायातम् । युवयोरागमने परब्रह्मसन्निधानमस्मासु भविष्यतीति यावदिति । द्विरूपं भगवन्तं प्रति प्रार्थ्यत इति व्याख्येयम् ॥ १७ ॥

समानयोजनो हि वाम् । नन्वश्विनोर्द्विध्युत्वाद्युष्मदात्मनामिति वक्तव्यं त्वदात्मनामिति कथमुक्तमित्यत आह । भगवत इति । भगवत्पक्ष एवहीदं व्याख्यानं क्रियत इति भावः । एकवचनं त्वदित्येकवचनम् । तथोक्तः समानयोगः । एकम् ऋक्पदं स्वयं व्याख्याय तदर्थभाष्यं सङ्गमयति । समानयोगयुक्त इति । समानयोगो नाम स्वयोग्यं स्थानम् । तद्युक्तः कश्चिद्देह इत्यर्थः । ननु चिद्देहस्य कथं ध्यानादियुक्तत्वमित्यत आह । युक्तत्वं च कारणत्वेनेति । कारणत्वेत्यर्थः । स्वयोग्यध्यानयोगेन तुष्टिते सति अपरोक्षज्ञानद्वारा लिङ्गभङ्गानन्तरं चिद्देहस्याभिव्यज्यमानत्वाद्देहस्य योगं कारणत्वं मन्तव्यमिति भावः । क्षीरसागर इति । मुक्तः सन् क्षीरसागरे वसति । सच नास्मदादिभिर्ज्ञायत इत्यर्थः । महाज्ञानाय गच्छन्ति क्षीरसागरमिति वचनादित्यवगन्तव्यम् । यावतेति श्रवणात् त्वावामित्यध्याहारः कृतः । प्रसिद्धेति पक्ष इति शेषः । योग्ययुग्यवानिति । योग्येति समानशब्दार्थः । योजनशब्दार्थो युग्येति । युग्यशब्देन अश्वाः उच्यन्ते । तद्वानित्यर्थः । यौरथेनियोजिताश्वौ सममेवगच्छतो नत्वेकस्मादेकः पुरतः पृष्ठतोवा तादृगश्वद्वयोपेतो रथ इति यावत् । आसमुद्रेति । कुत्राप्यप्रतिबद्धगतिरिति यावत् ॥ १८ ॥

न्याघ्न्यस्यमूर्धनि । ननु अन्यच्चक्रमितयुक्तं सप्तयुञ्जन्ति । रथमेकचक्रमिति सूर्यरथस्य एकचक्रोपेतत्वेन चक्रद्वयाभावादित्यत आह । चक्रस्थानीयोऽक्षप्रदेश इति । द्यांपरीत्यस्य दिव उपरीत्यर्थः । तस्य तात्पर्यं दिवीति । तस्याप्यर्थो मेराविति । पृथिव्यां द्यौर्महामेरुरिति वचनादिति

(पदार्थप्रकाशिका)

भावः। प्रवृत्तीति। प्रसिद्धरथचक्रयोः रथप्रवृत्तिहेतुत्वात् पुण्यपापयोरपि जगत्प्रवृत्तिहेतुत्वात् गौण्या वृत्त्या चक्रसाम्यमित्यर्थः। पुण्यपापाभ्यां हि प्रेरितः पुमान् प्रवर्तत इति प्रसिद्धमित्यर्थः। हन्यत इतीति। व्युत्पत्त्येति शेषः। जडे स्वर्गलोके पुण्यस्थापनस्य बाधितत्वादाह। लक्षणयेति। दिव्यस्येति। दिविभवस्येत्यर्थः। ईयते स्थापिततया ज्ञायते॥ १९॥

कस्तउषः कधप्रिये। अश्विभार्यावाचिन उषस्शब्दस्य सकारान्तत्वात् तत्सम्बुद्धिरुपं इति ज्ञातव्यम्। सर्ववाक्यं सावधारणमिति न्यायेन प्रियमेवेत्युक्तम्। तद्व्यावृत्यं दर्शयति। न किंचिदिति। कथमेतल्लभ्यत इति। कधप्रियशब्दात् सर्वप्रिय इत्यर्थः। कथं लभ्यत इत्यर्थः। नत्विति। कमपि किञ्चिदपि अप्रियं दुःखकारणं नत्वस्तीत्येव कुत इत्यर्थः। को मर्त्यः तवभुजे भवति। नकोपीत्यत्रामर्त्ये कधप्रिये इत्येतद्धेतुगर्भविशेषणमिति भावेन ऋगभिप्रायमाह। यतस्त्वमिति। पूर्णानन्दतस्तवभोगः कथमन्याधीनः स्यात्। अमर्त्यायाश्च भोगः कथं मर्त्याधीन स्यादित्यर्थः। आप्तकामत्वत इति। इदं च कधप्रियशब्दाल्लब्धमिति ज्ञातव्यम्। स्वार्थहेतुत इति। स्वस्यानन्दादिरूपप्रयोजनसाधननिमित्तमित्यर्थः। भादीप्ताविति धातोर्भाकान्तिः। जगदावरणादिति। जगतिव्याप्तत्वादित्यर्थः। वृणोतेरकार इति। वृञ्वरणे अस्मात् अकारप्रत्यये गुणे रपरत्वे च स्त्रीत्वविवक्षायां निर्वचनत्वादिकारे सति वर इति जाते यस्येति चेति रकारस्थाकारलोपे वरीतीत्याहुः। वस्तुतस्तु वृञ्धातोः टच्प्रत्ययः। तत्र टकारचकारयोर्लोपे सति अकारमात्रमुर्वरितं भवति। तदभिप्रायेणोक्तं स्त्रियामीकार इति। रूपसाधनं तु पूर्ववदेव द्रष्टव्यम्। भाष्यानुसारेण ऋक्पदाभिप्रायमाह। विशिष्टाभेदेति। विभयेति। विशिष्टकांत्या वरी जगत् वृणेति आवृणोति। जगद्व्याप्त इत्यर्थः विभावरीचेतीति अत्र चशब्दः कधप्रियशब्दव्याख्यानेन सह समुच्चयार्थ इति ज्ञातव्यम्॥ २०॥

वयं हि ते अमन्महि। नन्वत्रोषसो वाच्यत्वात्तस्याश्च स्त्रीत्वादेकस्यास्तवेति वक्तव्यम्। एकस्येति कथं पुलिङ्गनिर्देश इत्यत आह। ईश्वरेति। ईश्वरस्यैव मुख्यतो वाच्यत्वादित्याहुः। वस्तुतस्तु ऋचि स्त्रीलिङ्गस्य अश्वाशब्दसम्बुद्धिरश्वे इति। तथाच तदनुसारेण जात्यश्वदिति भाष्ये वक्तव्यम्। जात्यश्ववदिति कथं पुलिङ्गनिर्देश इत्यत आह। ईश्वरापेक्षयेति। दार्ष्टान्तिकभूतईश्वरापेक्षयेत्यर्थः। नन्वश्वायाः उपमानत्वेन अश्वानित्येववक्तव्यम्। नत्वश्वनेति। नह्युपमानपदे सम्बुद्धिरुचिता। किन्तु उपमेयपदे तद्विशेषणपदे वा इत्यत आह। इवादियुक्तमुपमानमिति। आदिपदेन इवार्थकस्य नेत्यस्य ग्रहणम्। उपमानम्। उपमानपदम्। उपमेयवृत्ति उपमेये विशेषणसमर्पकम्। ततोपीति। उपमानपदादपीत्यर्थः। उपमानपदेपीति यावत्।

(पदार्थप्रकाशिका)

अयमर्थः। नञिवयुक्तमन्यसदृशाधिकरण इति परिभाषो सूत्रे नञायुक्त इव युक्तं चोपमानं तदन्यास्मिन् तत्सदृशे चाधिकरणे पदार्थेऽस्ति। तत्र विशेषणसमर्पकमिति यावत्। यथा अनश्व इत्युक्ते अश्वभिन्नो अश्वसदृशश्च रासभो लभ्यते। अथवा गोरिवेत्युक्ते गोभिन्नो गोसदृशो गवयो लभ्यत इत्युक्तत्वेनेहापि अश्वेनेत्यत्र नेत्यस्येवार्थकतया अश्वान्या अश्वसदृशी उषेत्यर्थः। एवं चेदम् अश्वेनेत्युपमानपदं चित्रेति पदवदुपमेयभूतायामुषसि अश्वान्यत्वाश्वसादृश्यरूप विशेषणसमर्पकत्वेनोपमेयविशेषणमेव जातम्। सतिचैवं यथा उपमेयविशेषणभूते चित्रापदे सम्बुद्धिस्तथोपमानपदेऽति सम्बुद्धियुक्तेति न दोष इति युक्तम्। तथाच जात्यश्वेनेति स्वतन्त्रविशेषणमेव। नतु जात्यश्ववत् चित्र इति अन्वय इति द्रष्टव्यम्। गुणसमुच्चय इति। भद्रत्वरूपधर्मस्यारण्यरूपगुणस्य च परस्परं समुच्चय इत्यर्थः। आतादापराकादिति ऋक्पदान्यनूद्य भाष्यं संयोजयति। अन्तपराकयो आइति। ननु पञ्चम्यपाङ्परिभिरिति सूत्रेण आङ्योगे पञ्चम्या विधानात् ऋगनुसारेण भाष्येऽपि अन्तपराकाभ्यामिति वक्तव्यम् अन्तपराकयोरिति कथं षष्टी प्रयोग इत्यत आह। पञ्चम्यर्थे षष्टीति।

ननु भाष्ये अन्तपराकयोरा इत्यत्राङो नतावन्मर्यादा परपर्यायपर्यन्तत्वमर्थः। तथात्वेच पराकपर्यन्तमित्येव प्राप्त्या एतदारभ्येत्यनुक्त्या किमारभ्येति शङ्का स्यात्। ऋचि वात्राङ्द्वयाभावात्। अतो भाष्यस्थस्याङोऽर्थमाह। अङभिविधाविति नाप्यारभ्येत्यर्थः। यथात्वे तं पराकावारभ्येत्येवार्थप्राप्त्या एतत्पर्यन्तमिति मर्यादानुक्त्या किंपर्यन्तमिति शङ्का स्यात्। आङ्मर्यादाभिविध्योरिति स्मरणात्। तथाचान्तपरोकयोः अन्तपराकावभिव्याप्य विद्यमानमित्यर्थः। लक्ष्मीपूर्वकलिपर्यन्तमिति यावत्। एकस्येति। अधीनमिति शेषः। अमन्महि चिन्तितवन्तोहीति अतीतकाल एव चिन्तनं प्रतीतः। कालव्यत्ययेन वर्तमानार्थकलडर्थतया व्याख्यातं भाष्ये चिन्तयाम इति। इदमप्युपलक्षणमित्याशयेनोक्तं सदा चिन्तयाम इति। पराकान्ताविति। पराकान्तशब्दावित्यर्थः। कं सुखम्।

ननु श्रियः कथं पुंल्लिंगपराकशब्दवाच्यत्वमित्यत आह। पुल्लिंगमिति। यथोक्तम्। कूटस्थोऽक्षर उच्यत इत्यत्र पुल्लिंगेनोच्यते श्रीश्च पुंवच्छक्तिमती यतः इति। अंत्यत्वात् नीचत्वात्। ऋचि एकस्याङः आरम्भेत्यर्थः। अपरस्युतु मर्यादापरपर्याय पर्यन्तत्वमर्थ इत्यभिप्रेत्यव्याचष्टे। लक्ष्मीपूर्वमिति। लक्ष्मीमारभ्येत्यर्थः। स्वं स्वीयं अधीनमिति यावत्। प्रसिद्धायामिति। अश्विभार्यायामित्यर्थः। एतदसम्भवादिति। आन्तादापराकादित्यस्य लक्ष्मीपूर्वं कलिपर्यन्तं जगत्तवैव स्वमिति

(पदार्थप्रकाशिका)

व्याख्यानासम्भवादित्यर्थः । नरकस्वर्गयोरित्यत्र आ इत्यनुवर्तते । तथाच आङ्योगे पञ्चमी विधानात् नरकस्वर्गयोरिति षष्ठी पञ्चम्यर्थ इत्याह । नरकस्वर्गाभ्यामिति । तथाच नरकस्वर्गाभ्याम् आस्वर्गमारभ्य नरकपर्यन्तं विश्वं तवैव स्वमित्यमन्महीत्यर्थो द्रष्टव्यः ।

कथं नरकस्वर्गौ अन्तपराकावित्यतस्तद्दर्शयन् पराकस्वर्गयोरिति षष्ठीमनुपमृद्यैव प्रकारान्तरेण व्याख्याति । अन्त इति । परमसुखत्वादिति । वैषयिकसुखापेक्षया परमसुखत्वादित्यर्थः । स्वार्थ एव वेति । षष्ठी विभक्तिरूपे स्वार्थे एवेयं षष्ठी न पञ्चम्यर्थ इत्यर्थः । तथाच षष्ठी नत्यज्यत इति भावः । अस्मिन् पक्षे हे अश्वे न चित्रे आरुषि उषः नेत्वा अन्तादापराकात् नरकस्वर्गयोः आ सम्यक् देवीति शेषः । स्वामिनीति वयं आ अमन्महि जानीम इति योज्यम् ॥ २१ ॥

त्वं त्येभिरागहि । वागेव द्यौरिति । वाक् भारत्येव द्युशब्दवाच्या । द्यौर्वावविद्युत् इति श्रुतेः । न प्राणोऽतो अपदार्थत्वात् प्राणग्रहणं व्यर्थमित्यर्थः । अपत्यसम्बन्धो अपत्यप्रसवितृत्वम् । यथोक्तम् । दृष्टाः पुंभ्य सदा सृष्टिः स्त्रीपुंभ्यां वा विशेषतः । केवलाभ्यो नहि स्त्रीभ्य इति । वाचा वेदवाक्येन । हे दिवो दुहितरिति । उषस्शब्देन भगवदश्विभार्ययोः उभययोरपि दिवोदुहितृत्वमुक्तरीत्याऽस्तीति द्रष्टव्यम् । न केवलमन्नादिदानमेव त्वदागमनप्रयोजनमपि । तर्हीत्यत आह । अस्मे अस्मास्विति ॥ २२,३१ ॥

## पदार्थदीपिका

प्रथप्रख्यान इत्यस्येदं रूपमिति ॥ अस्माद्यङ्लुकि धातोरुपधाया उत्वं छान्दसं प्रथमं विधेयम् । तस्मात् अभ्यास हलदिशेषौ । ह्रस्व सति ह्रस्वत्वे कृते गुणो यङ्लुकोरिति गुणः । तस्मात् यङ्लुगन्ताच्छतरि पोप्रुथच्छब्दनिष्पत्तिः ॥ नानदद्भिरिति ॥ णद अव्यक्ते शब्दे । पूर्ववद्यङ्लुकि दीर्घोऽकित इत्यभ्यासस्य दीर्घ इति ज्ञेयम् ॥ शाश्वसद्भिरिति ॥ शश्वङ्प्राणने । अन्यत्सर्वं पूर्ववत् ॥ जिगायेति ॥ जि जये । लिटो णलि वृद्धिः द्विर्वचनेऽचीति । स्थानिवद्भावात् जि इत्यस्य द्विर्वचनम् । सन् लिटोर्जेरिति अभ्यासादुत्तरस्य कुत्वं बोध्यम् ॥ दंसनावानिति ॥ दंसोवेष इति कर्मनामसु पाठात् दंसशब्दः कर्मवाची । दंस एव दंसना । तदस्यास्तीति मतुप् ॥ अदादिति ॥ गातिस्थेति सिचो लुक् ॥ १६ ॥

अश्ववत्याश्वयुक्तया ॥ मन्त्रे सोमश्वेन्द्रिय विश्वेदेव्यस्थमताविति दीर्घत्वम् ॥ यातम् । या प्रापणे । लोटि थस् । अदादित्वाच्छपो लुक् ॥ १७ ॥

(पदार्थदीपिका)

ननु त्वमावेकवचन इति एकार्थवाचिनो युष्मदस्मदोः त्वमादेशविधानात् प्रकृतेचाश्विनोरेकत्वाभावेन तद्वाचकयुष्मच्छब्दस्यैकार्थवाचकत्वाभावेन त्वादेशासम्भवात् कथं त्वदात्मनामिति भाष्यकारोक्तिरित्यतः तयोरेकत्वाभावेऽपि भगवद्रूपैकार्थत्वेन तद्वाचकयुष्मच्छब्दस्य त्वादेशसम्भवात् न दोष इत्याह ॥ भगवत एकत्वादिति ॥ १८ ॥

येमथुः । यम उपरम इत्यतः किति लिटि अत एक हल्मध्य इति एत्वाभ्यासलोपौ द्रष्टव्यौ ॥१९॥

भुजे ॥ भुज पालनाभ्यवहरणयोः । सम्पदादिलक्षणः क्विप् ॥ स्त्रियामीकार इति ॥ स्त्रीत्वविवक्षायां छान्दसो ङीप् प्रत्यय इत्यर्थः ॥ २० ॥

ननु श्रुत्यनुसारेण अश्ववत् चित्रे इति वक्तव्यम् । अश्ववदिति कथमित्यत उक्तम् ॥ ईश्वरापेक्षयेति ॥ पुल्लिङ्गं अश्ववदिति पुल्लिङ्गम् । ननूपमानात् कथं सम्बुद्धिरित्यतः इवादियुक्तस्योपमानस्योपमेयवाचकत्वात् युक्तोपमानादपि सम्बुद्धिरित्याह ॥ इवादीति ॥ नञा युक्तस्येवयुक्तस्य च प्रातिपदिकस्य तदन्यस्मिन् सदृशर्थे वृत्तेः अब्राह्मणादिपदे दर्शनात् प्रकृतेऽश्वेन इत्यस्याश्वन्याश्वसदृशी चेत्यर्थः । ततश्चोपमेयपरत्वमिति भावः । न च पञ्चम्यपाङ्परिभिरिति आङ्योगे पञ्चमीविधानात् कथमान्तपराकयोरिति भाष्ये षष्ठीत्यत आह ॥ पञ्चम्यर्थ इति ॥ पुल्लिङ्गं पराक इति पुल्लिङ्गम् ॥ स्वर्गनरकाभ्यामिति ॥ स्वर्गनरकपर्यन्तं विश्वं त्वय्येवेति जानीम इति योजना ॥ स्वार्थ एवेति । स्वर्गनरकयोरा इति सम्बन्धकरणात् युक्ता षष्ठी इत्यतस्तर्हि कथं सम्बन्ध इत्यत उक्तम् ॥ नरकस्वर्गयोर्देवीत्यादि ॥ २१ ॥ अस्मे अस्मासु । सुपां सुलुगिति सप्तम्याः शे आदेशः ॥ २१,२२, ३१ ॥

## टीकाविवृतिः

शश्वदिंद्रः । तस्मा इन्द्र इति । शुनःशेपेन एवमुक्तप्रकारेण ऋग्भिः स्तूयमान इन्द्रस्तस्मै शुनःशेपाय हिरण्यरथं मनसा ददौ संकल्पयामास । तदनंतरं शुनः शेपः शश्वदिंद्र इत्येतया ऋचा तमिन्द्रं प्रतीयाय तुष्टावेति ब्राह्मणवाक्यार्थः । इदं रूपमिति । प्रथेरुपधायाः व्यत्ययेनोकारादेशे भृशाद्यर्थे यङ्लुकि लटः शत्रादेशे इति शेषः । एवं नानदद्भिरिति शाश्वसद्भिरिति रूपद्वयं णद अव्यक्तेशब्दे श्वस प्राणने इत्येतयोर्यङ्लुगन्तयोर्बोध्यम् । जिगायेति । जि जये इत्यतो लिटि तिपि णालि द्वित्वे सँल्लिटोर्जेरित्यभ्यासात्परस्य कुत्वे अचो ञ्णितीति वृद्धिरिति भावः । दंसनावान्कर्मवानिति । अप्रः दंस इति कर्मनामसु घञंतदंसेः पाठेपि तत्पर्यायियुजंतस्यापि

(टीकाविवृतिः)

कर्मार्थत्वमिति भावः । दातेति । षणु दाने इत्यतस्तृचि सनितेति रूपमिति भावः । वन षण संभक्तावित्यस्यापि रूपमाश्रित्याह । सनिता लब्धेति । लाभकृत इति । लाभनिमित्तमित्यर्थः ॥१६॥

आश्विनौ । तृच इति । ऋक्त्रयसमूह इत्यर्थः । हे दस्राविति । दसु उपक्षये इति धातोः रकि निष्पन्नत्वाच्छत्रुक्षयकारिणावित्यर्थः कार्यः । अश्विनावित्युभयवाचकसामान्य शब्दस्य पृथक् सत्वात् दस्रशब्दस्य त्वेकाश्विवाचकत्वादन्यस्य नासत्यशब्दवाच्यत्वात् । अत एव नासत्यदस्राविति तात्पर्यनिर्णये सहप्रयोग इति ज्ञेयम् । अश्ववत्येति । अश्वशब्दस्य पदकाले ह्रस्वस्य मन्त्रे सोमाश्वेन्द्रिय विश्वदेव्यस्य मताविति संहिताकाले दैर्घ्यम् तत्किंचिद्विशदयतीति । भाष्ये शशब्दमात्र व्याख्यानादित्याशयः । वीरश्च पुत्र इति । वीरस्तु सुभटे श्रेष्ठे इति विश्वोक्तेः श्रेष्ठार्थकवीरशब्दोत्र पुत्रपरः । तस्याप्यपेक्षितेषु श्रेष्ठत्वात् । अथवा अवीरानिष्पति सुतेत्यमरोक्तिबलात्पति पुत्रवती वीरेत्यभिधानांतरबलाद्वा वीरशब्दः पुत्रवाचक इत्याशयः । शं सुखं यत इत्युक्त यच्छब्दान्वयार्थमपेक्षितं पूरयति । अतो युक्तमुक्तमिति । इदं रूपमिति । ईशेः क्विपि व्रश्चादिसूत्रेण षत्वे छांदसोपधाह्रस्वत्वे इति शेषः । नामतो नाम्नोच्यंते इति । इतराभ्योपि दृश्यंते इत्युक्तेस्तृतीयांतात्तसिः । तथा चाश्वनाम्ना खानि इन्द्रियाण्युच्यन्ते । तथाइट्शब्देनैश्वर्यमुच्यते इत्यादि भाष्ययोजना सूचिता । गुणोच्छ्रितमिति भाष्यं हिरण्यशब्दस्यार्थान्तरपरमिति भावेनाह । यथालोहानामिति । तथा च नायमवयवार्थः । किंतु तात्पर्यार्थ इति भावः ॥ १७ ॥

समानयोजनः । अध्यात्मार्थे वामित्येतत्संबन्धित्वेनापेक्षितमध्याहरति । भक्तानामिति । तर्हि अश्विनोर्द्वित्वात् भाष्ये युष्मदात्मनामिति वाच्ये त्वदात्मनामिति कथमित्यत आह । भगवत एकत्वादिति । रूपभेदस्याविवक्षितत्वादिति भावः । ध्यानादिरूपयोगस्यात्र योजनशब्देन ग्रहणान्मुक्तस्य तत्प्रयोजनाभावात्कथं तद्युक्तत्वमित्यत आह । कारणत्वेनेति । अमर्त्यदेह प्राप्तौ योगस्य साधनत्वात्तद्युक्तत्वमिति भावः । यद्यपि मोक्षे ध्यानादिकं मुक्ताः कुर्वंति तथापि तस्य फलरूपत्वेन स्वरूपत्वादमर्त्य देहग्रहणेनैव ग्रहणान्मुख्य तद्युक्तत्वासम्भवाद्बाह्यध्यानादि गृह्यत इति बोध्यम् । देहस्य कथममर्त्यत्वमित्यत आह । चित्सुखत्वादिति । ज्ञानानन्दात्मकत्वादित्यर्थः । रथोदेह इति । स एष देवरथः तद्रथो देह उच्यते इत्यादिना देहस्य रथत्वोक्तेरिति भावः । योगेन तावानिति । भाष्यस्य शेषोक्तिरियम् । योग्ययुग्वानिति । युग्यं रथांगविशेषस्तद्वानित्यर्थः ॥ आसमुद्रगामीतीति ॥ समुद्रमभिव्याप्य मर्यादीकृत्य वेत्यर्थः । एवं पृथग्विष्णुपक्षेपि समानयोजनः स्वयोग्यसंबन्धवान् रथो गरुड इत्यादि योज्यम् ॥ १८ ॥

(टीकाविवृतिः)

न्यघ्नयस्य ॥ पर्वतनामैतदिति ॥ नञ्पूर्वाद्धन्तेःकर्तरि अघ्न्यादयश्चेत्युणादिसूत्रेण यगुपधालोपनिपातनात् । नहंति न गच्छतीत्यघ्न्य इति । हन हिंसागत्योरिति धातोः । द्वितीयव्याख्याने तु विष्णुवाचकाकारोपपदाद्धन्तेःकर्मणि यगादिनिपातो ज्ञेयः । संहितायां निशब्दस्य यणादेशे उदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येत्यनेनाघ्न्येत्यत्रादिः स्वरितो बोध्यः ॥ नियेमथुरिति ॥ यमु उपरमे इत्यतो लिटि अत एकहल्मध्ये इति एत्वाभ्यासलोपाविति भावः । सूर्यरथस्यैकचक्रवत्त्वात्कथमन्यच्चक्रं द्यां परीत्युक्तमित्यत आह ॥ चक्रं चक्रस्थानीय इति ॥ दिवि मेराविति ॥ पृथिव्यां द्यौर्महामेरुरिति प्रमाणादिति भावः ॥ लक्षणयेति ॥ द्योशब्दस्येति शेषः ॥१९॥

कस्ते ॥ उषस्य इति ॥ अश्विभार्यावाचकसकारान्तोषस् शब्दाद्देवतार्थे वाय्वृतुपित्रुषसो यदिति यत्प्रत्यय इति भावः ॥ मर्तो मर्त्य इति ॥ मर्त्यःमर्त इति मनुष्यनामसु पाठादिति भावः ॥ कधशब्द इति ॥ पृषोदरादिष्विति शेषः ॥ स्त्रियामीकार इति ॥ औणादिकाकारप्रत्ययस्य टित्त्वाट्टिड्ढाणितिङीबिति भावः ॥ २० ॥

वयं हि ॥ नन्विवार्थकनशब्दयुक्ताश्वे इत्यस्य स्त्रीलिङ्गसंबुद्ध्यन्तस्य व्याख्यानरूपे भाष्ये श्रुत्यनुसारेणाश्वावदिति स्त्रीलिङ्गे प्रयोक्तव्ये कथं जात्यश्ववदिति पुल्लिङ्गप्रयोग इत्यत आह ॥ ईश्वरापेक्षयेति ॥ चित्रादिशब्दवाच्यदार्ष्टान्तिकेश्वरापेक्षयेत्यर्थः । ननु दृष्टान्तार्थस्याश्वे इत्यस्य प्रार्थनाद्यभावेन श्रुतौ अश्वे इति कथं संबुद्धिप्रयोगः । सप्तम्यन्तस्य प्रकृतेऽनन्वयात् । पदात्परत्वाभावेन चित्र इत्यादिवन्निघाताभावेपि षाष्ठिकामंत्रिताद्युदात्तत्वादश्वे इत्यस्य संबुद्धित्वनिश्चयादित्यत आह ॥ इवादियुक्तमिति ॥ तथा चाश्वेनेत्यस्याश्वसदृशे इत्यर्थपरत्वादुपमेयविशेषणवदुपमानपदस्यापि संबुद्ध्यन्तत्वमिति भावः ॥ अरुषि अरुणे इति ॥ ताम्रं अरुषमिति रूपसामान्यनामसु पाठेपि ताम्र शब्दसाहचर्याद्वर्णव्यत्ययेनारुण शब्दसाम्याद्वेति भावः ॥ पञ्चम्यर्थे इति ॥ तथा चाङ्योगेपि षष्ठी शेषे इत्युक्तेःपञ्चम्यपाङ्परिभिरिति विहितपञ्चम्यर्थे षष्ठीति भावः ॥ अभिविधाविति ॥ आङ्मर्यादाभिविध्योरित्युक्तेरिति शेषः । तेन लक्ष्म्यादिकल्यन्तसर्वसङ्ग्रहः ॥ अमन्महि चिन्तितवन्त इति ॥ मनु अवबोधने इति धातोरित्याशयः ॥ पुल्लिङ्गमिति ॥ पुंवच्छक्तिमती यस्मादिति वचनात्पराक इति श्रियां पुल्लिङ्गमुपपद्यते इति भावः । पूर्वार्धस्याशयमाह ॥ लक्ष्मीपूर्वमिति ॥ नरकस्वर्गयोरिति भाष्यमसङ्गतिपरिहाराय विभक्तिव्यत्ययाश्रयेण शेषेण च संयोजितमतोऽस्वरसात्प्रकारान्तरेण संयोजयति ॥ नरकस्वर्गयोर्देवी स्वामिनीति ॥ अस्मिन्पक्षे श्रुतौ आन्तादापराकादिति पदयोर्योजना पूर्ववदित्युक्तं भवति ॥ २१ ॥

(टीकाविवृतिः)

त्वं त्येभिः ॥ आगहीति ॥ गमेर्लोटि सिपि हित्वे बहुलं छन्दसीति शपो लुका लुप्तत्वादिषुगमियमां छ इति छत्वाभावादनुदात्तोपदेशेत्यनुनासिकलोपस्याभीयत्वेनासिद्धत्वात् अतो हेरिति हेर्लुङ्नेति भावः ॥ २२ ॥

## ऋक्संहिता पदपाठसहिता (सू-३१, व-१)

(३५१) त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवःशिवः सखा ॥ तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १ ॥

(प०) त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् । अभवः । शिवः । सखा ॥ तव । व्रते । कवयः । विद्मनाऽअपसः । अजायन्त । मरुतः । भ्राजत्ऽऋष्टयः ॥ १ ॥

(३५२) त्वमग्ने प्रथमो अङ्गिरस्तमःकविर्देवानां परि भूषसि व्रतम् ॥ विभुर्विश्वस्मै भुवनाय मेधिरो द्विमता शयुः कतिधा चिदायवे ॥ २ ॥

(प०) अङ्गिरःऽतमः । कविः । देवानाम् । परि । भूषसि । व्रतम् ॥ विऽभुः । विश्वस्मै । भुवनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् । आयवे ॥ २ ॥

(३५३) त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ॥ अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥ ३ ॥

(प०) मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते ॥ अरेजेताम् । रोदसीइति । होतृऽवूर्ये । असघ्नोः । भारम् । अयजः । महः । वसोइति ॥ ३ ॥

(३५४) त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ॥ श्वात्रेण यत्पित्रोर्मुच्यसे पर्यात्वा पूर्वमनयन्नापरं पुनः ॥ ४ ॥

(ऋक्संहिता पदपाठसहिता)

(प०) त्वम् । अग्ने । मनवे । द्याम् । अवाशयः । पुरूरवसे । सुऽकृते । सुकृत्ऽतरः ॥ श्वात्रेण । यत् । पित्रोः । मुच्यसे । परि । आ । त्वा । पूर्वम् । अनयन् । आ । अपरम् । पुनरिति ॥ ४ ॥

(३५५)त्वमग्ने वृषभःपुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ॥ य आहुतिं परि वेदा वषट्कृतिमेकायुरग्ने विश आविवाससि ॥ ५, ३२ ॥

(प०)· त्वम् । अग्ने । वृषभः । पुष्टिऽवर्धनः । उद्यतऽस्रुचे । भवसि । श्रवाय्यः ॥ यः । आऽहुतिम् । परि । वेद । वषट्ऽकृतिम् । एकऽआयुः । अग्ने । विशः । आऽविवाससि ॥ ५, ३२ ॥

ऋग्भाष्यम्

अग्नीन्द्रादिगतं पृथक्स्थितमपि स्तौत्यच्युतं भक्तितः स्वर्णस्तूप इति प्रसिद्धिमगमद्यः संस्तुवन्सूर्यगम् । विष्णुं स्वर्णसमानचारुवपुषं स्वर्णाभिधं शाश्वतं तं दृष्ट्वा परतो भवच्च महितः सुज्ञानमप्याप्तवान् । अङ्गे रसो ज्ञानत एव चर्षिः सखाप्रियत्वेन दिवौकसां हरिः । तव व्रतेनैव सविद्यकर्मिणो महाविज्ञानामरुतो बभूविरे ॥ १ ॥ व्यापीच विश्वस्य सुमेधयायुतो जडाजडे वेत्ति तथाब्धिशायी । कतिप्रकारोपि सहिप्रजायै स्वामीगुरुर्नित्यसखापिता च ॥ २ ॥ त्वं विष्णो प्रथमो मातरिश्वन- आविर्बभूवास्य सुबोधवत्त्वात् । वायुर्विवस्वान्विविधेषुवासादशोभेतां श्रीश्च भूः सर्वहोतुः । वरत्वतस्ते रदनाद्रोदसीते सैकाहिदीर्णाद्विविधा बभूव । सहंतेमुं नैव केचिद्धयसघ्रुर्वायुर्विरिंचोपि महांश्च तस्मै । विश्वस्य भारं प्रतिदिष्टवांस्त्वं वासाच्च सर्वत्र वसुर्भवानसि ॥ ३ ॥ विशिष्टबोधान्मनवे वायवे त्वं प्रादादिवं ज्ञानरूपां प्रियांच । यथातदीयेति तु वाशनं स्याल्लोकस्य सर्वस्य तथैव देव। पुरूरवा वायुरेवोरुशब्दादन्यस्मै वासुकृते सुकृत्तरः । श्वावै वायुः श्वसनात्त्राणतोस्य नित्यं मुक्तः प्रकृतेः पूरुषाच्च । नेनैव त्वामानयन्पूर्वसन्तो नीतं पुनश्चाप्य परे सुभक्त्या ॥ ४ ॥ श्रोतव्यस्त्वं यजमानेन नित्यं नित्यायुरग्ने जनता प्रविष्टः । ऐश्वर्याद्याः षड्गुणा यत्र वृत्ता वषट्कारस्यार्थ इत्याह वेदः ॥ ५, ३२ ॥

## ऋग्भाष्यटीका

शुनःशेपद्दष्टा ऋचो व्याख्यायोत्तरासामृषिं देवताश्चाह ॥ अग्नीति । यः सूर्यगं स्वर्णाभिधं हिरण्यनामानं विष्णुं संस्तुवन् स्वर्णस्तूप इति हिरण्यस्तूप इति प्रसिद्धिमगमत् । ष्टुञ् स्तुता वित्यस्मात् ङूपप्रत्ययः । हिरण्यस्य स्तूपो हिरण्यस्तूप इति विष्णुः कुतो हिरण्यनामा । स्वर्णसमानचारुवपुषम् । तर्हि रूपवत्त्वादनित्यः शाश्वतम् । यश्च तं विष्णुं दृष्ट्वा परतः परैर्महितः पूजितश्चाभवत् । सुज्ञानमप्याप्तवान् । स हिरण्यस्तूप आङ्गिरस उत्तराभिर्ऋग्भिरग्नीन्द्रादिगतं पृथक् स्थितमप्यग्न्यादि नामानमच्युतं भक्तितः स्तौति । अग्नीन्द्रादि देवतास्तत्र तत्र वक्ष्यामः । त्वमग्ने प्रथमो अङ्गिरा ऋषिः । अष्टादशर्चमिदमाग्नेयं सूक्तम् । अङ्गेरसः । हरिः अङ्गेरसः शरीरे सार इत्यङ्गिरा उच्यते । ज्ञानतो ज्ञानवत्त्वाद्दृष्टिश्चोच्यते । नत्वङ्गिरसर्षिणैक्यादित्येवशब्दः । दिवौकसां प्रियत्वेन देवानां सखा चोच्यते । योजना तु । हे अग्ने त्वं प्रथमः सर्वोत्तमोसि । तथाङ्गिरा ऋषिर्देवः । शिवः सुखात्मको देवानां सखाऽभवः सर्वदा भवसि । किञ्च भ्राजंत्यः ऋष्टय आयुधविशेषा येषान्ते भ्राजदृष्टयो मरुतोऽतीतवर्तमाना वायवस्तव व्रते व्रतेनैव त्वद्विषयव्रतवत्वेनैव । विद्मनाऽपसः विदेःक्मन् । विद्मना विद्यया सहितमपः कर्म येषाम् । स विद्यकर्मिणः सन्तः कवयो महाविज्ञाना अजायन्त । बभूविरे बभूवुः । ईश्वरार्थेन ज्ञानसहितकर्मणा पुनः कथं ज्ञानावाप्तिरित्यतो महच्छब्देन वीति च ज्ञानं विशिनष्टि ॥ १ ॥

त्वमग्ने प्रथमो अङ्गिरस्तमः । व्यापी च । हे अग्ने त्वं प्रथमः अङ्गिरस्तमोऽतिशयेनाङ्गानां रसः कविर्देवानां व्रतं त्वद्विषयं कर्म । परिभूषसि परिभूषयसि । सफलं करोषि । किञ्च । विश्वस्मै भुवनाय विश्वस्य भुवनस्य । विभुर्व्यापी च मेधिरः । इरो मतुबर्थे । भूमनिन्दाप्रशंसासु नित्य योगेऽतिशायने । संसर्गेस्ति विवक्षायां भवन्ति मतुबादयः । सुमेधया युतः । द्वे जडाजडे वेत्तीति द्विमाता । शयुः शेता पयोब्धिशायी । अग्नौ तु शेतिः स्थानार्थः । आमाशयो जलाशय इति यथा । स्थाता । स एवं भूतस्त्वमायवे मनुष्यनामैतत् । प्रजायै प्रजानाम् । कतिधाचित् कतिभिरपि प्रकारैर्युक्तः । कतिप्रकारोपि भवसि हि । कथमिति । स्वामी गुरुर्नित्यसखा पिता च ॥ २ ॥

त्वमग्ने प्रथमो मातरिश्वने । त्वं विष्णो । हे अग्ने विष्णो त्वम् । विवस्वते मातरिश्वने । प्रथममाविर्भव । भूते लोट् । आविर्बभूव । आविर्बभूविथ । युष्मद्युपपदेपि त्वं देवशक्त्यामित्यादौ प्रथमपुरुषो दृष्टः । प्रथम इति सामर्थ्यादाविर्भाव विशेषणम् । अतिशयेनाविर्बभूविथेति । कुतः । सुक्रतूया शोभनः क्रतुर्ज्ञानमस्येति सुक्रतुः । दैर्घ्यं छान्दसम् । भावप्रधानात्ततस्तृतीयाया यादेशः । सुक्रतुत्वेन । अस्य मातरिश्वनः सुबोधवत्त्वात् । यद्वा शोभनः क्रतुः सुक्रतुः तदिच्छा सुक्रतूया । इच्छया प्राप्तिर्लक्ष्यते । ततस्तृतीयाया आकारादेशः । वायुः कुतो विवस्वानित्यत आह ॥ वायुरिति । विविधेषु पदार्थेषु वसतेर्भावे विच् । ततो मतुप् । किञ्च । होतृवूर्ये रोदसी द्यावापृथिव्यौ श्रीश्च भूश्च त्वयैवारेजेताम् । रेजतिरत्र शोभार्थः ।

(ऋग्भाष्यटीका)

राजतेर्वैतद्रूपम् । अशोभेताम् । होतृवूर्ये कथमित्यत आह ॥ सर्वेति ॥ होतुः सर्वहोतुः परमेश्वरान्निमित्ताद्वरत्वतः सर्वोत्कृष्टत्वात्ते होतृवूर्ये इति शेषः । अनेन होत्रावूर्ये वर्ये होतृवूर्ये इत्युक्तं भवति । यद्वा सर्वहोतुरीश्वरस्यैकस्य ताभ्यां वरत्वतस्ते होतृवूर्ये इत्यर्थः । होतैव वूर्यो वर्यो याभ्यामिति । प्रगृह्यत्वाभावः छान्दसः । यद्वा निमित्तसप्तम्येषा । होतुर्वूर्यं वरत्वं पतित्वं तस्मादरेजेतामिति । तदिदमुक्तं सर्वहोतुस्ते तव वरत्वतः पतित्वादशोभेतामिति । रोदसी कथमित्यत आह ॥ रदनादिति ॥ विदारणात् । रद विलेखन इत्यतः कर्मण्यसुन् । उपधायाश्चौकारः । तद्विवृणोति । सेति । सैका मूलप्रकृतिः । द्विविधा श्रीर्भूरिति । किञ्च । हे वसो । हि यस्मादमुं केचित्केपि प्रतिभटानैव सहन्तेऽतो वायुर्विरिञ्चोप्यसघ्नुः । षह मर्षण इत्यस्मात्कर्मणि नुः । कुत्वं च । ततो नञ्समासः । महांश्चासौ वायुर्विरिंचोपि तस्यासघ्नो-र्महोमहतश्च । चतुर्थ्यर्थे षष्ठी । तस्मै त्वं भारं विश्वस्येति शेषः । अयजः प्रतिदिष्टवान्प्रत्येकं दत्तवानसीति वक्ष्यमाणेन सम्बन्धः । वसुः कस्मादित्यत आह ॥ वासाचेति ॥ वसत्यस्मिन्सर्वमिति चार्थः । भवानिति सम्बुद्धिव्याख्यानम् । असीत्यस्य पूर्वेणैव सम्बन्धान्न दोषः ॥ ३ ॥

त्वमग्ने मनवे । विशिष्ट । हे अग्ने सुकृत्तरः अतिशयेन सत्कर्मणां कर्ता त्वं मनवे वायवे । कथम् । विशिष्टबोधात् । मनु अवबोधन इत्यस्य हीदं रूपम् । अवबोधश्च सर्वप्राणिसाधारणस्तथापि वैशिष्ट्येन व्यपदेशा भवन्तीति । द्यान्दिवं स्वर्गम् उपलक्षणमेतत् । स्वर्गादि स्वाम्यमवाशयः प्रादाः । यद्वा ज्ञानरूपां ज्ञानाख्यां द्यां प्रादाः । अथवा द्यां द्युदेवतां भारतीं प्रियां भार्यां प्रादाः । अवाशय इत्येतत्कथं प्रादा इत्यस्य प्रतिपादकमित्यत आह ॥ यथेति ॥ वाशृ शब्द इति हि पठ्यते । तस्य णिजन्तस्येदं रूपम् । तत्र स्वतन्त्र कर्तुरपेक्षायां लोकेनेत्यध्याह्रियते । मनव इत्याद्या चतुर्थी षष्ठ्यर्थे । ततश्च द्यां मनोः सम्बन्धिनीं लोकेनावाशयोऽशब्दयः । हे देव द्यौः तदीया मनुसम्बन्धिनीति सर्वस्य लोकस्य वाशनं शब्दः यथा स्यात्तथैवाकार्षीरित्यर्थो भवति । तस्य प्राक् प्रादा इति तात्पर्यमुक्तम् । प्रदानाभावे तथावाशनासम्भवात् । अयथावाशनं तुशब्देन व्यवच्छिनत्ति । तत्रोपपत्तिः सर्वस्येति । पुरूरवस इत्येतत्प्रकृतस्य मनोरेव विशेषणतया व्याख्याति । पुरूरवा इति । रुशब्द इत्यस्मादसुन् । पुरुः रवो यस्येति पुरूरवाः । दीर्घःसांहितः । सुकृते सत्कर्मणां कर्त्रे इति तस्यैव विशेषणमिति सिद्धमेव । मनवे पुरूरवस इत्येतत्प्रकारान्तरेण व्याख्याति । अन्यस्मै वा सुकृत इति । अन्यस्मै प्रसिद्धाय । सुकृते मनवे । द्यामवाशयः । तथा प्रसिद्धाय सुकृते पुरूरवसे च । द्यामवाशय इति योज्यम् । किञ्च । यद्यस्मात्त्वं श्वात्रेण श्वात्रत्वेन हेतुना । श्वा वायुः । कथम् । प्रसिद्धं हि तस्य श्वरूपमिति वैशब्दः । श्वसनादिति योगं चाह । श्वस प्राणने । अतो डन् । अस्य त्राणत इत्यनेन श्वात्र शब्दस्य तृतीयायाश्चार्थमाचष्टे । श्वानं त्रायत इति श्वात्रः । आतोनुपसर्गे कः । श्वाकर्णादिवद्दीर्घः । तद्भावेन । अस्य श्वशब्दार्थस्य वायोः । त्राणतस्त्राणकर्तृत्वात् । पित्रोर्जगतो मातापितृभ्याम् । प्रकृतेः पुरुषाच्च परिमुच्यसे नित्यमुक्तो वर्तसे । न हि वायो रक्षकस्य

(ऋग्भाष्यटीका)

प्रकृत्यादिबन्धः सम्भवति। तेनैव कारणेन। त्वा त्वाम्। पूर्वं पूर्वे सन्तः। आसम्यक् सुभक्त्या। अनयन् उपदेशेन शिष्यान्प्रतिनीतवन्तः। पूर्वैर्नीतमुपदिष्टं पुनरप्यपरम् अपरे च स्वशिष्यान्प्रत्यानयन्। न हि बद्धं बन्धध्वंसायोपदिशन्तीति ॥ ४ ॥

त्वमग्ने वृषभः। श्रोतव्यः। हे अग्ने त्वं वृषभो वर्षणस्य कर्ता भक्तानां पुष्टिवर्धनः। एकं मुख्यं आयुरस्येत्येकायुर्नित्यायुः होमायोद्यतास्रुग्येनासावुद्यतस्रुक्। तस्मा उद्यतस्रुचे। तृतीयार्थे चतुर्थी। यजमानेन श्रवाय्यो नित्यं श्रोतव्यश्च भवसि। कथंभूतेन। यो यजमानः आहूयत इत्याहुतिः। आहुतिं वषट्कृतिं त्वां परिवेद सम्यग्वेद। किञ्च। अग्रेऽनादित एव। विशः प्रजाः। आविवाससि समन्ताद्विशेषेण वससि। उपान्वध्याङ्वस इत्यधिकरणस्य कर्म संज्ञा। जनता प्रविष्टो वर्तसे। यद्यप्ययमर्चतिकर्मसु पठितः तथाप्यसम्भवादन्यथा व्याख्यातः। कथमीश्वरो वषट् कृतिरित्यत आह॥ ऐश्वर्याद्या इति। ऐश्वर्यवीर्ययशः श्रीज्ञानवैराग्याणि यत्र स इत्यध्याहार्यम्। वर्तन्ते षट् यस्मिन्नसौ वषट्। वषडित्याक्रियत इति वषट्कृतिः। स एव वषट्कारः। वषट्कारस्य वषट्कारशब्दस्य। इत्याह वेद इत्युक्तार्थे वेदवाक्यान्तरसंमतिरुच्यते॥ ५, ३२॥

## मन्त्रार्थमञ्जरी

अथ सप्तमस्यानुवाकस्य ऋषिस्तु– सूर्यगतं हिरण्यवर्णं हिरण्यनामानं स्तुवन्हिरण्यस्तूपनामा प्रख्यातो मुनिः, हिरण्यं स्तौतीत्यर्थे 'ष्टुञ् स्तुतौ' इत्यतौडूपप्रत्ययः। तत्र 'त्वमंग्ने' इत्यष्टादशर्चं वर्गचतुष्टयात्मकमग्निदेवताकमेकत्रिंशं सूक्तम्। (तत्र अष्टमी षोडश्यष्टादशी च त्रिष्टुभः, शिष्टा जगत्यः। जगतीछन्दोदेवता वारुणी सर्वदेवस्त्रियश्च। (हे) अग्ने त्वम्। प्रथमः, सर्वोत्तमः। (असि) तथा, अङ्गिराः, निरुक्तमेतत्पदं हरावग्नौ च 'यदङ्गदाशुषे त्वमग्ने' इत्यत्र। ऋषिः, ज्ञानी। देवः, क्रीडादिगुणविशिष्टः। शिवः, सुखात्मकः। देवानाम् सखा (च) अभवः, सदा भवसि। किं च, भ्राजन्त्यो दीप्यमाना ऋष्टय आयुधविशेषा येषां ते– भ्राजदृष्टयः। मरुतः, अतीतवर्तमाना वायवः। तव। व्रते, व्रतेनैव, त्वद्विषयव्रतेनैव। विद्मनापसः, विदेः क्मनिन्, विद्मना विद्यया सहितमपः कर्म येषां ते, तृतीयाया अलुक्, सविद्यकर्मिणः सन्तः। कवयः, महाविज्ञानाः। अजायन्त, बभूवुः॥ १॥

(हे) अग्ने त्वम् प्रथमः। अङ्गिरस्तमः, अतिशयेनाङ्गानां रसः। कविः। देवानाम् व्रतम्, तद्विषयं कर्म। परिभूषसि, सफलं करोषि। किं च, विश्वस्मै भुवनाय, विश्वस्य भुवनस्य। विभुः, व्यापी। (च) मेधिरः, 'मेधारथाभ्यामिरन्निरचौ' इति मतुबर्थे इरन्, अतिशायने मतुप् (इरन्) अयम्,

(मन्त्रार्थमञ्जरी)

सुमेधाविन् । द्वे जडाजडे माति वेत्तीति द्विमाता । शयुः, शेता, पयोब्धिशायी, अग्नौ तु–स्थातेत्यर्थः । स एवं भूतस्त्वम् आयवे, मनुष्यनामैतत् (वै० नि० २।३) प्रजायै, प्रजानाम् । कतिधा चित्, कतिभिर्बहुभिः प्रकारैर्युक्तः, 'स्वामी गुरुर्नित्यसखा पिता च' (ऋ० भा०) इत्येवं कतिप्रकारोऽपि भवसि हीत्यर्थः ॥ २ ॥

(हे) अग्ने, विष्णो । त्वम् । विवस्वते, विविध वस्तुषु वासवते, वसतेः भावे विच्, ततो मतुप् । मातरिश्वने । प्रथमम् (मः) । आविः भव, भूते लोट्, आविर्बभूविथ, 'प्रथमम् (मः)' इति सामर्थ्यादाविर्भावविशेषणम्, 'अतिशयेन बभूविथ' इति । कुतः ? सुक्रतूया, शोभनं क्रतुर्ज्ञानमस्येति सुक्रतुः, संहितायाम्, दीर्घश्छान्दसः, भावप्रधानम्, तृतीयाया यादेशः, सुक्रतुत्वेन, अस्य मातरिश्वनः सुबोधवत्त्वात्, यद्वा– शोभनः क्रतुः सुक्रतुः, तदिच्छा सुक्रतूया, 'सुप आत्मनः क्यच्' (अ प्रत्ययात्' इत्यः) इच्छया प्राप्तिर्लक्ष्यते, ततस्तृतीयाया आकारादेशः, 'सुबोधवत्त्वात्' इत्येवार्थः । किं च, होतृवूर्ये, होत्रा परमेश्वरेण निमित्तेन वूर्ये वर्ये सर्वोत्तमे, यद्वा होतैव वूर्यो वर्यो याभ्यामिति होतृवूर्ये, प्रगृह्यत्वाभावश्छान्दसः, यद्वा– निमित्तसप्तम्येषा, होतुर्वूर्यं वरत्वं पतित्वम्, तस्माद्धोतुः पतित्वहेतोः । रोदसी, द्यावाभूमी, श्रीश्च भूश्च । अरेजेताम्, अशोभेताम् । किं च, (हे) वसो । (हि) यस्मात्– अमुं केऽपि प्रतिभटा नैव सहन्ते । (अतः) वायुर्विरिश्चोऽपि असघ्नुः, 'षहमर्षणे' इत्यस्मात्कर्मणि नुः कुत्वं च, ततो नञ्समासः, तस्य असघ्नोः । महः, महतः, चतुर्थ्यर्थे षष्ठी, तस्मै । (त्वम्) भारम् (विश्वाख्यम्) इति शेषः । अयजः, प्रतिदिष्टवान्, 'प्रत्येकं दत्तवानसि' इति भावः ॥ ३ ॥

(हे) अग्ने । सुकृत्तरः, अतिशयेन सत्कर्मणां कर्ता । त्वम् । सुकृते, सत्कर्मणां कर्त्रे । पुरूरवसे, पुरू रवोऽस्येति पुरूरवास्तस्मै, 'रु शब्दे' इत्यतोऽसुन्, पुरुस्पदे 'शम्भू राजते' (सिद्धान्तकौमुदी) इत्यादाविव दीर्घः सांहितः । मनवे, विशिष्टबोधाय, वायवे, मनुतेः उः । द्याम्, दिवम्, स्वर्गम्, उपलक्षणमेतत्– स्वर्गादिस्वाम्यम् । अवाशयः, प्रादाः, यद्वा– ज्ञानाख्यां द्यां प्रादाः, अथ वा– द्यां द्युदेवतां भारतीं भार्यां प्रादाः यद्यपि 'वाशृ शब्दे, अवाशयः, लोकेनाशब्दयः' इत्यर्थो भवति, तथापि 'द्यौर्मनुशब्दितवायुसम्बन्धिनी' इति सर्वलोकस्य वाशनं शब्दनं यथा स्यात्तथाकार्षीदित्यर्थसंपत्तेः 'प्रादात्' इति फलितोक्तिः, यद्वा– अन्यस्मै प्रसिद्धाय । सुकृते मनवे द्याम् अवाशयः, तथा– प्रसिद्धाय सुकृते मनवे पुरूरवसे (च) द्याम् अवाशयः । किं च, यत्, यस्मात् । (त्वम्) श्वात्रेण, श्वा वायुः, 'श्वस प्राणने' इत्यतो डनिन्, श्वानं त्रायत इति श्वात्रः,

(मन्त्रार्थमञ्जरी)

'आतोऽनुपसर्गे कः' श्वाकर्णादिवद्दीर्घः, तद्भावेन श्वात्रत्वेन हेतुना । पित्रोः, जगतो मातापितृभ्याम्, प्रकृतेः पुरुषाच्च । परि मुच्यसे, नित्यं मुक्तो वर्तसे, नहि वायो रक्षकस्य प्रकृत्यादिबन्धः सम्भवति। आ, तेनैव कारणेन। त्वा, त्वाम्। पूर्वम्, पूर्वे सन्तः। आ, सम्यक्, सुभक्त्या। अनयन्, उपदेशेन शिष्यान्प्रतिनीतवन्तः। पूर्वैर्नीतमुपदिष्टम्– पुनः (अपि) अपरम् (च)' अपरे च। स्वशिष्यान्प्रति (आ अनयन्) नहि बद्धं बन्धध्वंसायोपदिशन्ति। इति ॥ ४ ॥

(हे) अग्ने त्वम्। वृषभः, वर्षणस्य कर्ता। भक्तानाम्– पुष्टिवर्धनः। एकं मुख्यमायुर्यस्येति एकायुः। होमायोद्यता स्रुग्येनासावुद्यतस्रुक्तस्मै उद्यतस्रुचे, तृतीयार्थे चतुर्थी, यजमानेन। श्रवाय्यः, नित्यं श्रोतव्यः । (च) भवसि । कथंभूतेन ? यः, यजमानः । आहूयत इति आहुतिम्, आहूयमानम्। वषट्कृतिम्, वर्तन्ते षट् समग्रैश्वर्यादयो गुणा यस्मिन्नसौ वषट् 'वषट्' इति क्रियत आक्रियत इति वषट्कृतिस्तम्, वृतः डः कृञः कर्मणि क्तिन् (त्वाम्) परि वेद, सम्यग्वेद। किं च, अग्ने, अनादित एव। विशः, प्रजाः। आविवाससि, समन्ताद्विशेषेण वससि, 'उपान्वध्याङ्वसः', इत्यधिकरणस्य कर्मसंज्ञा, जनताप्रविष्टो वर्तसे, यद्यपि 'वस अर्चायाम्' इति धातुपाठस्तथाप्यनेकार्थत्वादिह प्रवेशार्थो ज्ञेयः ॥ ५ ॥ इति द्वात्रिंशो वर्गः ॥ ३२ ॥

## रूपावतारः

त्वमग्ने प्रथम। ष्टुस्तुतावित्यस्मात् ''उणादयो बहुलम् (३।३।१) इत्युक्तेः डूपप्रत्यये टिलोपे स्तूप इति रूपम्।

त्वमग्ने प्रथमो अङ्गिरा ऋषिः ॥ अङ्गिरा इति । अङ्गरसशब्दस्य अन्त्याकारलोपे अङ्गशब्दाकारस्य इकारे अङ्गिरा इति रूपम्। विद्मनापस इति। अलुक् समासोऽयम् ॥ १ ॥

त्वमग्ने प्रथमो अङ्गिरस्तमः। अङ्गिरस्तम इति॥ अङ्गिरस् शब्दः पूर्ववत्। ततस्तमप्। इरो मतुबर्थ इति। मेधाशब्दात् इरप्रत्यये आकारलोपे मेधिर इति रूपम्। मतुबर्थानाह। भूमेति। शयुरिति। शेतेः ''भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउः'' (उ.७) इति उप्रत्यये गुणे अयादेशे शयुरिति रूपम्। शयितेति। शेतेति पाठः प्रामादिकः। शेतेः सेट्कत्वेन इटोऽवश्यं भाव्यत्वात्। आत्मा(मा)शय इति। अत्र यथा शेतिः स्थानार्थः तथा शयुः इत्यत्रापि स्थानार्थ इत्यर्थः। अत्र स्थानेति वाडवाग्नेः समुद्रस्थानकत्वात् समुद्रस्थातेति अर्थ इति भावः ॥ २ ॥

(रूपावतारः)

त्वमग्ने प्रथमो मातरिश्वने ॥ ननु त्वमिति श्रवणात् मध्यमपुरुषेण भाव्यं कथं भाष्ये आविर्बभूवेति प्रथमपुरुषयोग इत्यत आह । युष्मद्युपपदेऽपीति । प्रथमपुरुषप्रयोगः छान्दस इति भावः । तदिच्छासुक्रतूयेति । सुक्रतुशब्दात् 'सुप आत्मनः क्यच्' (६।१।८) इति क्यचि 'अकृत्सार्वधातुकयोर्दीर्घः (७।४।३५) इति दीर्घे 'अ प्रत्ययात्' (३।३।१०२) इति अकारप्रत्यये टापि सुक्रतूयेति रूपम् । तृतीयाया इति । 'सुपां सुलुक्....' (७।१।३९) इति तृतीयाया आकारादेश इत्यर्थः । मतुबिति । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' (८।२।९) इति मकारस्य वकारादेश इति द्रष्टव्यम् अरेजेतामिति । रेजतेर्लङि आतामित्यादेशे शपि 'आतो ङितः' (७।२।८१) इति आकारस्य इय् आदेशे 'लोपो व्योर्वलि' (६।१।६६) इति यकारलोपे आद्गुणे अडागमे च अरेजेतामिति रूपम् । राजतेर्वेति । राजतेर्लङि व्यत्ययेन उपधायाः एत्वम् । अन्यत्समानम् । होतृवूर्ये इति । वृङः 'अवद्यपण्यवर्या...' (३।१।१०१) इति निपातनात् यप्रत्यये गुणे टापि होतृवर्या इति रूपम् । वर्णव्यत्येन वकारस्थाकारस्य ऊत्वे द्विवचने होतृवूर्ये इति रूपम् । ननु वूर्ये असघ्नोरित्यत्र 'ईदूदेद् द्विवचनं प्रगृह्यम्' (१।१।११) इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि...' (६।१।१२५) इत्यनेन प्रकृतिभावः स्यादित्यत आह । प्रगृह्यत्वाभाव इति । वक्ष्यमाणेन संबन्ध इति । 'वसुर्भवानसी'त्यत्रत्येनासीत्यनेन संबन्ध इत्यर्थः । भवानित्यस्य व्याख्येयं दर्शयति ॥ संबुद्धीति । ननु असीत्यस्य भवानित्यनेन संबन्धो नोचितः । शेषप्रथमपुरुषस्य भाव्यत्वादित्यत आह । असीत्यस्येति त्वमित्यनेनैव संबन्धो न भवानित्यनेनेति भावः ॥ ३ ॥

त्वमग्ने मनवे ॥ अवबोधन इति । मनेरुप्रत्यये मनव इति रूपम् । अवाशय इति । वाशतेर्णिचि लङि सिपि शपि गुणे अयादेशे अडागमे च अवाशय इति रूपम् । वाशनमिदं भ्रान्त्या न भवतीत्याह । अयथावाशनमिति । सांहित इति । अन्येषामपि दृश्यते इति संहितायां दीर्घ इति भावः । श्वाकर्णादिवदिति । 'शुनोदन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु इत्यत्र श्वात्रशब्दस्योपसंख्ये-यत्वादनेनात्रापि दीर्घ इति भावः ॥ ४ ॥

त्वमग्ने वृषभः ॥ श्रवाय्य इति । श्रुदक्षिस्पृहिग्रहिभ्य आय्य (उ.३.३) इति आय्यप्रत्यये गुणेऽवादेशे श्रवाय्य इति रूपम् । आहुतिमिति । आङ् पूर्वात् ह्वयतेः औणादिके कर्मणि क्तिनि 'वचिस्वपि...' (६।१।१५) इति संप्रसारणे आहुतिमिति रूपम् । ननु विशां वासाधिकरणत्वाद्विट्सु इति सप्तम्या भाव्यं कथं द्वितीयेत्यत आह उपान्वध्याङ्वस इति ॥५॥३२॥

## पदार्थप्रकाशिका

ष्टुञ् स्तुतावित्यस्माड्डूपप्रत्यय इति । अत्र ञोऽअनुबन्धार्थकः । तथाच ष्टुञ् धातोः कर्तरिड्डुपप्रत्यये डित्वात् टीभूतडकारस्य लोपे धात्वादेः षस्य सत्वे टकारस्य तकारे स्तूपेति रूपसिद्धिरिति भावः । हिरण्यस्य विष्णो स्तूपः स्तोतेत्यर्थः । स्वर्णेति । स्वर्णसमानं हिरण्यसमानं चारु मनोहरं वपुर्यस्यासौ तथोक्तस्तम् । रूपवत्वाद्देहवत्वादित्यर्थः । शाश्वतमिति । तद्रूपस्य । ज्ञानानन्दाद्यात्मकत्वेन शश्वदेकप्रकारत्वान्नानित्यत्वमित्याशयः । परैः स्वाधमैः त्वमग्नेध्युना हिरण्यस्तूप आङ्गिरस इत्यनुक्रमणिकां हृदि निधायोक्तम् । हिरण्यस्तूप आङ्गिरस इति । पृथक् स्थितमपि । अग्नीन्द्राद्यधिष्ठानं विनेत्यर्थः । तत्र तत्रेति । तत्तदृग्व्याख्यानावसर इत्यर्थः ।

त्वमग्ने प्रथमो अङ्गिरा ऋषिः । त्वमग्न आग्नेयमित्यनुक्रमणिकां मनसि निधायाह । अष्टादशर्चमिदमाग्नेयं सूक्तमिति । अनेन अग्न्यादिदेवताः तत्र तत्र वक्ष्याम इत्युक्तं प्रदर्शितं भवतीति मन्तव्यम् । शरीरे सार इति । शरीरे नियामकतया स्थितानां देवानां रसः सारः श्रेष्ठः । रसः सारो वरश्चेति शब्दाः पर्यायवाचका इत्यभिधानात् इत्यर्थः । केचित्तु शरीरे सारो अत्युपादेय इत्यर्थ इत्याहुः । देवशब्दार्थो भाष्यकारैः पूर्वमुक्त एव । शिवशब्दस्त्वत्र न व्याख्यातोऽतः शिवः सुखात्मकत्वेनेति प्रमाणानुसारेण शिवशब्दार्थं स्वयमाह । शिवः सुखात्मक इति । मरुत्छब्दवाच्यस्य वायोरेकत्वान्मारुत इति कथं बहुवचनमित्यत आह । अतीतवर्तमाना इति । अतीताः वर्तमानाश्चेत्यर्थः । व्रतशब्देन प्रधानकर्मकलापो ग्राह्यः । विद् ज्ञाने अस्मात् क्मन् प्रत्यये विद्मन् इति प्रातिपदिकनिष्पत्तिः । कित्वाद्गुणाभावः अन्यथा वेद्मन् इति स्यादिति भावः । ईश्वरार्थेनेति । निष्कामेनेत्यर्थः । कथमिति । नहि तदेव प्रतिपूर्वभावि पश्चाद्भावीवेति युक्तमात्माश्रयप्रसङ्गादिति भावः । महछब्देनेत्यादि । तथाच व्यक्तिभेदान्न दोष इति भावः । एवं च विद्मनाऽपसः ईश्वरार्थेन विज्ञानसहितेन कर्मणा निवृत्तकर्मणेति यावत् । कवयो महाविज्ञानाः अपरोक्षज्ञानिनोऽजायन्त इत्यर्थो द्रष्टव्यः ।। १ ।।

त्वमग्ने प्रथमो अङ्गिरस्तमः । पूर्वार्धस्य भाष्यकारैरव्याख्यातत्वात् स्वयं तदर्थमाह । हे अग्न इत्यादिना । देवानां व्रतं कर्तरि षष्टी देवकर्तृकव्रतमित्यर्थः । भूषधातोश्चुरादित्वेन णिजन्तत्वादाह । परिभूषयसीति । मेधिर इत्यस्य सुमेधया युत इत्यर्थमुपपादयितुमाह । इरो मतुबर्थे इति । इर इति प्रत्ययो मतुबर्थ इत्यर्थः । के ते मतुबर्था इत्यत आह । भूमेत्यादिना । अस्ति विवक्षायाम् अस्तित्व विवक्षायामित्यर्थः । भूमनिंदाप्रशंसासुनित्ययोगे अस्तिविवक्षायाम् अतिशायिनेष्वस्ति

(पदार्थप्रकाशिका)

विवक्षायां संसर्गे अस्तित्वविवक्षायां मतुबादयो भवन्तीति प्रत्येकं सम्बन्धः। आदिपदेनानिप्रत्ययस्य इरप्रत्ययादेश्च ग्रहणम्। एवं तर्हि भूमाद्यर्थषष्टकमध्ये को मतुबर्थः प्रकृते विवक्षित इत्यतस्तद्दर्शयति। सुमेधया युत इति। स्वित्युक्त्या अतिशयरूपार्थो दर्शितः। युत इत्यनेन नित्ययोगरूपो मतुबर्थो विवक्षित इत्युक्तं भवति। तथाच मेधाः अतिशयेन नित्यमस्मिन्नस्तीति मेधिरा इत्यर्थो द्रष्टव्यः। पयोब्धिशायित्वरूपार्थस्याग्रावसम्भवादाह। अग्नौत्विति। यद्यपि शीङ् स्वप्न इति धातोः शेतिर्हि स्वापार्थस्तथापि अनेकार्थत्वाद्धातूनां शेतिः प्रकृते स्थानार्थ इत्यर्थः। शेतेःस्थानार्थत्वे उदाहरणद्वयमाह। आमाशय इत्यादि। आमेति प्रसिद्धम्। आमाशकेत्यादि स्मरणात् लोकव्यवहारात् तस्याशायः। स्थानं तुन्दगतछीले विशेष इत्यर्थः। जलस्यायस्थानं सरोहृदादि। एवं धात्वर्थमुक्त्वा प्रत्ययसहितस्यार्थमाह। स्थानेति। आहिताग्नेर्यजमानस्य गेहादावित्यर्थः। कतिभिरपीति। अनेकैरपि प्रकारैरित्यर्थः। भाष्यं सङ्गमयति। कतिप्रकार इति। अनेकप्रकार इत्यर्थः। कथमिति। अनेकप्रकारत्वं कथमित्यर्थः॥ २॥

त्वमग्ने प्रथमो मातरिश्वनः। ननु मातरिश्वनो भगवदाविर्भावानन्तरम् एकोनशतब्रह्मकल्पानां जातत्वात् कथमाविर्भवति विधीयत इत्यत आह। भूते लोडिति। आविर्भावे लोट् भूतार्थ इत्यर्थः। भूतार्थकथनपरं भाष्यं सङ्गमयति। आविर्बभूवेति। अनेन मध्यमपुरुषव्यत्ययेन प्रथमपुरुष इत्युक्तं भवति। तदर्थमाह। आविर्बभूवेति ननु त्वमाविर्भभूविथेति। भाष्ये कथं प्रथमपुरुषप्रयोगः। युष्मद्युपपदे समानाधिकरणस्थानिन्यपि मध्यम इति सूत्रेण युष्मादि उपपदे मध्यमपुरुष विधानादित्यत आह। युष्मदीति त्वं देति। त्वं देवशक्त्या गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः इति भागवते युष्मद्युपपदेपि आदधे इति प्रथमपुरुषप्रयोगदर्शनादित्यर्थः। आदिपदेन नान्यस्य बर्हिषि बलिं ददतः स्वभागं धत्ते पदत्वमवितायदित्यस्य ग्रहणम्। सामर्थ्यादिति। अर्थाबाध-रूपयोग्यतालाभादित्यर्थः। आविर्भवेति। आविर्भावरूपक्रियेत्यर्थः।

क्रियाविशेषणत्वे सति लब्धमर्थमाह। अतिशयेनेति। प्रथम इत्यस्य तात्पर्यम् अतिशयेनेति। क्रियाविशेषणत्वेपि नपुंसकत्वाभावो छान्दसत्वादुपपद्यत इति ज्ञातव्यम्। कुत इति। कस्मा-न्निमित्तान्मातरिश्वानं प्रत्याविर्भभूवेत्यर्थः।

ननु तर्हि सुक्रतुयेति स्यात् नतु सुक्रतूयेति दीर्घ इत्यत आह। दैर्घ्यं इति। नन्वस्याविर्भावे हेतुकथनपरत्वात् सुक्रतुत्वेनेति स्यात् नतु सुक्रतुयेति तत्राह। भावप्रधानादित्यादि। सुक्रतुत्वार्थकात् सुक्रतुशब्दात् परतः स्थितायाः तृतीयाविभक्तेः टासंज्ञायाः सुपांसुलुक् पूर्वसवर्णात्

(पदार्थप्रकाशिका)

छेयाडाड्यायाजाल इति सूत्रेण यादेशो सुक्रतूयेति रूपमित्यर्थः । तस्य स्वयं प्रतिपदमाह । सुक्रतुत्वेनेति । कथमनेन मातरिश्वानं प्रति आविर्भावे हेतु प्रतिपादनमित्यतस्तत्प्रदर्शनपरं भाष्यं सङ्गमयति । अस्येति । सुखवत्वादिति । अत्रबोधशब्देन ध्यानपरिपाक उच्यते॰ः तथाच वायोर्ध्यानपरिपाकवत्वात्तं प्रति आविर्भभूवेति हेतुहेतुमद्भावो द्रष्टव्यम् । अस्मिन् व्याख्याने सुक्रतूयेति दीर्घस्य छान्दसत्वकल्पनम् अस्वरसबीजं मन्वानः पक्षान्तरमाह । तदिच्छा सूक्रतूयेति । तथाच सुक्रतुमात्मने इच्छतीति इच्छायां क्यचूप्रत्यये ककारचकारयोर्लोपे क्यचीति सूत्रेण क्यचि परे पूर्वदीर्घे टापि सुक्रतूयेति भवतीति द्रष्टव्यम् ।

ननु वायुं प्रत्याविर्भावध्यानापरपर्यायज्ञानेच्छा कथं कारणम् । तस्याः श्रवणमननावस्थायामपि सत्वादित्यत आह । इच्छयेति । ज्ञानेच्छा ज्ञानप्राप्त्योर्जन्यजनकताभावरूपो लक्षणा बीजसम्बन्धः स्पष्टः । अत्र सुक्रतुयाशब्दो भावप्रधानः । तथाच सुक्रतुया सुक्रतुयात्वेन वायोः शोभनापरपर्यायं ध्यानप्राप्तिमत्वेन तं प्रत्याविर्भावो युक्ता एवेत्याशयः । ननु तर्हि भावप्रधानात् सुक्रतुयाशब्दात् परस्थितायाः तृतीयाविभक्तेर्थादेशे सुक्रतुयथेति स्यादित्यत आह । तत इति तथाचाबन्तात् सुक्रतुयाशब्दात् परस्थिताया विभक्तेः सुपांसुलुगिति सूत्रेण आकारादेशे सुक्रतुया आ इति स्थिते सवर्णदीर्घे सुक्रतुयेति भवतीत्यर्थः । तथाच सुबोधवत्वादिति भाष्यस्य ज्ञानवत्वादिपूर्व-योजनायामर्थः । अस्यांतु योजनायां सुबोधप्राप्तिमत्वादित्यर्थः इत्यवधेयम् । योजनाद्वयेपि बोधशब्दो ध्यानपरिपाकार्थो द्रष्टव्यः ।

वसतेरिति । क्विपमकृत्वा विचूप्रत्ययकरणं स्वरार्थम् । एतदुपपादनं हृदयाविधेश्चिदित्यत्र कृतमित्यनुसन्धेयम् । तथाच विविधपदार्थार्थक विशब्दपूर्वकात् वस् निवासे अस्मात् भावे विचूप्रत्ययः । क्विब्वत् तस्य सर्वस्यापि लोपे विवस् इति भवति । ततो मतुबिति । तथाच विपूर्वात् वस् इत्यस्मात् धातोर्मतुप्प्रत्यये उप इत्यस्य लोपे मादुपधायाश्च मतर्वोयवादिभ्य इति सूत्रेण मतुपो मकारस्य वकारे विवस्वदिति प्रातिपदिकनिष्पत्तिः । पश्चात् स्वाद्युत्पत्तौ विवस्वत इति भवतीति द्रष्टव्यम् । एवं च वसतेर्वस् तदस्यास्तीति विवस्वानित्यर्थमभिप्रेत्य विविधेषु वासादित्युक्तम् । विविधेषु वासवत्वादित्यर्थः ।

ननु रेजृ कम्पनइति धातोः रेजतेः कम्पनार्थत्वादशोभतामिति कथं व्याख्यानमित्यत आह । रेजतिरत्रेति । धातूनामनेकार्थत्वात् रेजृधातोः शोभनार्थत्वमिति भावः । अत एवास्वरसादाह । राजतेर्वेति । अरेजेतामित्येतत् नरेजधातो रूपम् । किन्नाम राजृ दीप्ताविति धातोः छान्दसमेतद्रूपम् ।

(पदार्थप्रकाशिका)

दीप्तिः शोभनेत्येकोर्थः। तथाचाशोभेतामिति व्याख्यानं युक्तमेवेति भावः। होतृवूर्येकथमिति। श्रीभूम्याविति शेषः। तथाच श्रीभूम्योः होतृवूर्यशब्दवाच्यत्वं कथमित्यर्थः। सर्वहोतुर्वरत्वत इति भाष्यं त्रेधा व्याचष्टे ॥ होतुः सर्वहोतुरित्यादिना । सर्वेन्द्रियेषु विषयहोतुरित्यर्थः । परमेश्वरान्निमित्तादिति । तदनुग्रहरूपनिमित्तादित्यर्थः । ते श्रीभूम्यौ । ननु होतृ ऊर्ये इति ऋक्पदात्कथमेतदर्थलाभ इत्यतस्तद्दर्शयति । अनेनेति । होत्रा प्रसन्नेनेत्यर्थः । एकस्येत्येतत्सावधारणम्। एकस्यैत्येवेत्यर्थः। अयमप्यर्थो ऋकूपदाल्लब्ध इत्याह। होतैवेति। परमेश्वरे एवेत्यर्थः।

ननु होत्रऊर्य इत्येतत्प्रथमाद्विवचनमित्यभिप्रेत्य प्रकारद्वयेन व्याख्यातम्। तत्रच ईदूदेद्विवचनं प्रगृह्यम्। ईदन्तावुदन्तावेदन्तौ च द्विवचनान्तं प्रगृह्यं स्यादित्युक्तत्वेन ऊर्ये इत्यस्य एदन्तत्वात् द्विवचनान्तत्वाच्च प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि प्लुताः प्रगृह्याश्चाचि परे प्रकृत्या स्युः न सन्धीयन्ते इत्यर्थः इत्युक्तत्वेन प्रकृतिभावे होतृ ऊर्ये असन्ध्योरिति भाव्यम्। गङ्गे अमू इतिवत् होतृ ऊर्ये सन्ध्योरिति तु कथमित्यत आह। प्रगृह्यत्वाभाव इति। तथाच प्रगृह्य त्वाभावात् तत्प्रयुक्तः प्रकृतिभावोपि नास्तीत्यर्थः । अत एव अस्वरसात् ह्वोतृवुर्येति इत्येतत् नद्विवचनान्तं येन प्रगृह्यसंज्ञादिप्राप्तिः। किंनाम सप्तम्येकवचनमित्यभिप्रेत्य कथमरेजतामित्यत्र होत्रृवुर्यत्वनिमित्तत्वे ऋक्पदं तावत् व्याचष्टे। होतृवूर्यमिति। होतुः परमेश्वरस्य पतित्वं श्रीभूम्यौ प्रति यतः इति शेषः। तस्मादिति। यस्मात् श्रीभूम्योर्होता परमेश्वरो वूर्योर्वरः पतिस्तस्मान्निमित्ताद- रेजतामित्यर्थः। इममर्थं सर्वहोतुर्वरत्वतस्ते इति भाष्यारूढं करोति। तदिदमुक्तमिति। नास्मिन् व्यख्याने ते इति पदं पूर्वव्याख्यानद्वय इव तच्छब्दस्य द्विवचनान्तं येन प्रगृह्यत्वादिप्राप्तिः। किं नाम युष्मद्शब्दस्य इदं षष्ट्येकवचनमित्यभिप्रेत्योक्तां तव ते इति। वरत्वतः। श्रीभूम्यौ प्रतीतिशेषः। पतित्वाद्धेतोः। अनेन होतृवूर्ये इत्येतन्निमित्तसप्तमीति ज्ञापितं भवतीति ध्येयम् । उत्तमपत्या हि स्त्रीणां शोभेति लोकसिद्धमित्याशयः।

रोदसीति कथमिति । श्रीभूम्याविति शेषः । विलेखनं विदारणम् । नखमुखविलिखितदितितनयोरा इत्यादि प्रयोगात् । कर्मण्यसुन्निति । रद धातोः रद्येते इति कर्मार्थस्य विविक्षितत्वादसुन्प्रत्यये उन् इत्यस्य लोपे रद सू इति जाते उपाधायाश्च ओकारे रोदस इति जाते उगितश्चेति सूत्रेण उगित्यात् ङीपि रोदसी इति भवति। ननु तथापि कथमेतत्प्रथमाद्विवचनं रोदस्याविति भवितव्यम्। सत्यम्। रोदसी औ इत्यस्य 'सुपांसुलुक्पूर्वसवर्णेति' सूत्रेण पूर्व सवर्णाङ्गीकारात्। ओकारः पूर्वस्य इकारस्य सवर्ण एव जात इति यावत्। तथाच रोदसीत्येतत्

(पदार्थप्रकाशिका)

द्विवचनमेवेति ज्ञातव्यम् । तदिति । रदनादित्येतदित्यर्थः । भाष्ये दीर्णेत्यस्य लोकदृष्ट्या विभक्तेत्यर्थः । विदारणार्थो धातुश्च विभागगुण वाचक इति वचनात् । तथाच रद्येते दीर्येते विभज्येते इति रोदसीत्यर्थो द्रष्टव्यः ।

असघ्नुरिति । असह्य इत्यर्थः । षहमर्षण इति । षह अस्मात्कर्मणि नु प्रत्यये धात्वादेः षः स इति षस्य सत्वे घोषवत्वादि गुणतो वर्गचतुर्थो हस्य सवर्ण इति कादिवर्गे यः चतुर्थो घकारः सः हकारस्य सवर्ण इत्युक्तत्वेन हकारस्य घकाररूपे कुत्वे सघ्नुरिति भवति । न सघ्नुरसघ्नुरिति नञ्समास इत्यर्थः । असौ वायुर्विरिश्चोपि न केवलमसघ्नुः किन्तु महांश्चेत्यन्वयः । असघ्नोरिति पदानुसारेण मह इति पदस्यापि व्यत्ययेन षष्ट्यर्थत्वमेवेत्यभिप्रेत्य महो महत इत्युक्तम् । तत्रायज प्रति दत्तवानित्यर्थकत्वेन दानकर्मतया वायुविरिश्चयोरभिप्रेतत्वेन कर्मणा यमभिप्रैति स सम्प्रादानमिति सम्प्रदानसंज्ञायां तद्वाचकेऽसघ्नुपदे महःपदे सम्प्रदाने चतुर्थी इति चतुर्थ्या भवितव्यमित्याशयेन भाष्ये तस्मा इत्युक्तम् । तदुपपादयति । चतुर्थ्यर्थ इति । प्रत्येकमिति । वायोर्विरिंचस्य चेति प्रत्येकमित्यर्थः ।

दत्तवानिति । यज देववूजासङ्गतिकरणदानेष्विति धातोरित्यर्थः । वक्ष्यमाणेनेति । भवानसीत्यत्र वक्ष्यमाणेनेत्यर्थः । भवानसीति यथास्थितसम्बन्धस्य तत्रायुक्तत्वात्तत्र स्थितस्यासीत्यस्य प्रति दिष्टवानित्यनेन सम्बन्ध इति भावः । वसुः कस्मादिति । अग्निर्वसुः कस्मादित्यर्थः वासाच्चेत्यत्रस्थितचकारसमुच्चयां व्युत्पतिं दर्शयति । वसतीति । सर्वत्र वासकर्तृत्वं वसुशब्दार्थम् अभिधाय सर्वं जगदत्र स्थितमिति जगद्वासाधिकरणत्वरूपं वसुशब्दार्थं चशब्देन समुच्चिनोतीत्यर्थः । सम्बुद्धीति । वसुप्रातिपदिकार्थमभिधाय वसुपदगत सम्बुद्धिव्याख्यानं भवानित्यनेन कृतमित्यर्थः । ननु भवानसीत्युक्तम् । त्वमसीति वक्तव्यत्वादित्यत आह । असीत्यनेन तस्येति अत्रत्यस्यासीत्यस्य पूर्वेण प्रतिदिष्टवानित्यनेन सम्बन्धस्य उक्तत्वेन भवानित्यनेन सम्बन्धानाश्रयणाददोष इत्यर्थः ॥ ३ ॥

त्वमग्ने मनवे द्यामवाशयः । कथमिति । कथं वायुर्मनु शब्दवाच्य इत्यर्थः । भाष्यस्थविशिष्टपदाभिप्रायमाह । मन्विति । यद्यपीति शेषः । साधारण इति । तथाच न वायोरसाधारण इति भावः । वैशिष्ट्येनेति । असाधारण्येनेति । असाधारण्येनि व्यपदेशाभवन्तीति न्यायादित्यर्थः । अत एव बोधस्यासाधारण्यप्रदर्शनाय भाष्ये विशिष्टबोधादित्युक्तमित्यवगन्तव्यम् । उपलक्षणमेतदिति । द्युपदं समस्त लोकानामुपलक्षकमित्यर्थः । अत एवाह । स्वर्गादिति । कथमिति । वाशृधातोः शब्दार्थकत्वेन दानार्थकत्वाभावादिति भावः । तत्रावाशयशब्देन । स्वतन्त्रकर्तुरिति । साक्षाद्वाशनकर्तुरित्यर्थः । यो यैर्वाशनं कारयति सः प्रयोजकः

(पदार्थप्रकाशिका)

अकर्ता अन्ये स्वतन्त्रकर्तार इति हि लोके प्रसिद्धम्। अत्र अग्निशब्दोक्तो हरिः स्वतन्त्रकर्ता नतु लोक इति भावः।

षष्ठ्यर्थ इति। अहल्यायैजारेतिवदिति भावः। एवं सति मनवे द्यामवाशय इत्यस्यार्थमाह। ततश्चेति। द्यां स्वर्गादिकं भारतींच मनोः सम्बन्धिनीं वायुस्वामिकां वायुपत्नीं चेत्यर्थः। एवमुत्तरत्रापि। लोकेनेति। लोकानां मुखेन व्यवहारमकारय इत्यर्थः। एतदनुसारेण भाष्यार्थमाह। हेदेवेति। अग्निशब्दवाच्यप्रदर्शनं देवेति। ननु तर्हि भाष्यकारैरवाशय इत्यस्य लोकेनाशब्दय इत्येवार्थो वक्तव्यो नतु प्रादा इति तत्राह। तस्येति। अवाशय इत्यस्य इत्यर्थः। तदेवोपपपादयति। प्रदानेति। अग्निस्वर्गादेः भारत्याश्च वायुं प्रति अधीनतया पत्नीत्वेनच प्रदानभाव इत्यर्थः। तथावेति। स्वर्गादिकं वायोरधीनं भारतीच तत्पत्नीत्येवं रूपेणेत्यर्थः।

नन्वग्निना हरिणा मनवे वायवे दिवादिकं न दत्तमेवाथापि द्यौर्मनुसम्बन्धिनीत्येवं लोका अन्यथा व्यवहरन्तीत्यवाशनं किं न स्यादित्यत आह। तत्रेति। अन्यथावाशनं न भवतीत्यत्रेत्यर्थः। तथाच एकस्य पुंसो अन्यथाव्यवहारसम्भवेपि सर्वस्यापि लोकस्य अन्यथावाशनमनुपपन्नमेवातः सर्वपरीक्षकव्यवहारान्यथानुपपत्याऽयथावाशनं नास्त्येवेति गम्यत इति भावः। प्रकृतस्य मनोरेवेति। वायोरेवेत्यर्थः। रु शब्द इत्येतस्मादिति। पुरुशब्दोपपदात् रु शब्दे अस्मादसुन्प्रत्यये उन् इत्यस्य लोपे आर्धधातुकत्वात् सार्वधातुकार्धधातुकयोरिति गुणे पुरु रो अस् इति जाते एचोयवायावः इति तस्य अव् इत्यादेशे पुरुरवस् इति प्रातिपदिकनिष्पत्तिः। पश्चात्स्वाद्युत्पत्तौ पुरुरवा इति भवति। पुरुः रवो यस्येति। पुरुः रवो वेदो यस्य वायोः प्रतिपादकतया अस्तीत्यर्थः। नारायण लक्ष्म्योरनन्तरम् अस्य सर्ववेदवेद्यत्वात्। यद्वा पुरुरवो वेदा यस्य वायोः भगवत्स्तोत्रकरणे साधनतयाऽस्तीत्यर्थः।

ननु तर्हि पुरूरव इति स्यान्नतु पुरूरवा इति दीर्घ इत्यत आह। दीर्घः सांहित इति। संहितायां दीर्घसद्भावात्तदनुसारेण भाष्येऽपि दीर्घप्रयोग इत्यर्थः। ननु सुकृत इति पदं कस्माद्भाष्ये न व्याख्यातमित्यत आह। सुकृते इति। तस्यैवेति मनुशब्दोक्तवायोरेवेत्यर्थः। सिद्धमेवेति। अतः स्पष्टत्वाद्भाष्ये न व्याख्यातमित्यर्थः। मनवे पुरुरवसे इत्येतद्विशेषणविशेष्य भावेन व्याख्याय वैय्यधिकरण्येनापि प्रकारान्तरेणापि व्याचष्टे इत्यर्थः। अन्यस्या इत्यस्यार्थः प्रसिद्धाय मनव इति। स्वायम्भुवाय मनव इत्यर्थः। सुकृत इत्यस्य विशेषणम्। अर्थस्तु पूर्वोक्तः। अन्यस्मा इत्यस्यैवार्थः प्रसिद्धाय पुरुरवस इति। तन्नामकाय राज्ञा इत्यर्थः सुकृत इत्येतत्पूर्वोक्तरीत्यास्यैव विशेषणम्। अत्र उभयत्रापि द्यामित्यस्य दिवं ज्ञानरूपामित्युक्तरित्या स्वर्गज्ञानं चेत्येवार्थो न तु प्रियामिति बाधादिति द्रष्टव्यम्।

(पदार्थप्रकाशिका)

यद्यस्मात्त्वमित्यस्य पित्रोर्मुच्यसे स इत्यनेनान्वयः । तत्र हेतुप्रतिपादनाय श्वात्रेणेत्युक्तमित्याशयेनाह । श्वात्रेणेत्यादिना । कथमिति । वायोः श्वात्वं कथं रूढेर्योगस्यचा सम्भवादिति भावः । प्रसिद्धं हीति । छान्दोग्येप्यतः शौव उद्गीथ खण्डे तस्मै श्वो श्वेतः प्रादुर्बभूवेति वायो श्वरूपं प्रसिद्धमतो विद्वद्रूढिरस्तीत्यर्थः । अतोडन्निति । श्वस प्राणने इति धातोरित्यर्थः । तथाच श्वस अस्मात् डन्प्रत्यये डित्वाट्टिभूतस्य स् इत्यस्य लोपे श्वन् इति प्रातिपदिकनिष्पत्तिः । पश्चात्स्वाद्युत्पत्तौ श्वेति भवति । तथाच जगत्प्राणनकर्तृत्वात् वायुः श्वेत्युच्यते इत्युक्तं भवति । अस्य त्राणत इत्यनेनेति । श्वानत्राणकतृत्वोक्त्या श्वात्र शब्दार्थत्राणत इति तसिल्प्रत्ययेन श्वात्रेणेत्यत्र स्थितायास्तृतीयाया अर्थमाचष्टे । कथमनेन श्वात्र शब्दार्थ उक्त इत्यतस्तत्प्रकारं दर्शयति । श्वानमिति । श्वरूपं जगच्चेष्टकं च वायुमित्यर्थः । आतोनुपसर्गे क इति । आदन्ताद्धातोरनुपसर्गे कर्मण्युपपदे कप्रत्ययः स्यात् गोदः कम्बलदः इत्युदाहरणम् । तथाच प्रकृते श्वोपपदात् आतोलोप इति चेति धात्वाकारलोपे प्रत्ययस्थाकारे मिलिते सति श्वात्रेति रूपम् । ननु हि ऋचि श्वत्रेणेत्येवस्यान्नतु श्वात्रेणेति कुतः इति चेत् शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्य इति वार्तिकेण श्वन्शब्दस्य कर्णादिशब्द सप्तकेष्वेव परतो दीर्घस्य विहितत्वात् । श्वाकर्णो श्वादन्ता इत्यादि प्रयोगदर्शनात् । त्रैधातौ परे श्वन्शब्दस्य दीर्घविधानाभावात् श्वात्रेणेत्यनुपपन्नमित्यत आह । श्वाकर्णादिवद्दीर्घ इति । यथा प्रयोगवशात् कर्णादिशब्देषु परतः सत्सु शुनो दीर्घो वाच्य इत्युक्तवार्तिककृता एव वैदिक प्रयोगबलात् शुन स्त्रैधातौ परेऽपि दीर्घस्योपसंख्यानं कर्तव्यमतः श्रोत्रेणेति दीर्घो युक्त इति भावः । सद्भावेनेति । श्वात्रस्य भावः श्वात्रत्वं तेन श्वात्रत्वेनेत्यर्थः ।

प्रकृतिः सरस्वती । पुरुषो विरिञ्चः । यथोक्तं सूत्रं सवायुः पुरुषो विरिञ्चः प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे । प्रजज्ञतुर्यमले तत्र पूर्वा प्रधानसंज्ञा प्रकृतिर्जनित्री । श्रद्धाद्वितीयाथ तयोश्च योगो बभूव पुंसैव च सूत्रनाम्नेति । तथाच प्रकृतेः पुरुषाच्चेत्यस्य षोडशकलात्मकलिङ्गशरीरबन्धस्य मुख्यतस्तदुभयाधीनत्वेन तदुभयकृताब्दन्धादित्यर्थो द्रष्टव्यः । परिमुच्यसे इत्युक्त्या पूर्वं बन्धत्वप्राप्तिशङ्कापरिहाराय नित्यमित्युक्तम् । तथाच मुच्यस इत्येतत् मुचलृ मोक्षण इत्यस्य रूपम् । तत्र मोक्षणं नाम न बन्धध्वंसो विवक्षितः किन्नाम तदत्यन्ताभाव एवेत्युक्तं भवति । श्वात्रत्वं कथं प्रकृतिपुरुषकृत बन्धाभावे हेतुरित्यतस्तद्विवृणोति । नहीति । वायो रक्षक स्येत्येतद्धेतुगर्भम् । तस्माद्वायुरेव व्यष्टिः वायुः समष्टिः । जालाजालमातरिश्वानमेकम् । प्राणो निरभिमानित्वाच्छरीर्यप्यशरिरवान् । अशरीरो वायुरभ्रमित्यादिना विद्यमानस्यापि बन्धस्याकिंचित्करत्वावगमेन प्रकृतिपुरुष कृतबन्धातीतत्वरूपमहामहिमवतोर्वायोः रक्षकस्य हरेः

(पदार्थप्रकाशिका)

प्रकृत्यादिबन्धस्य दूरोत्सारितत्वात् श्वात्रत्वं पित्रोर्मुच्यस इत्यत्र हेतुर्भवतीत्येवेति भावः। आ इत्यनूद्य तेनैव कारणेनेति व्याख्यानम्। प्रकृतिपुरुष कृतबन्धान्नित्यमुक्तत्वरूप कारणेनैवेत्यर्थः। शिष्यान् प्रति नीतवन्त इति। बंधध्वंसरूपमोक्षायेति शेषः। तदर्थाय शिष्येषु व्याख्यातवन्तः इत्यर्थः। पूर्वैरिति। पूर्वतनैर्महात्मभिः शिष्येषु उपदिष्टं भगवन्तमेवेत्यर्थः। ननु भगवतो नित्यमुक्तत्वं बन्धध्वंसरूपमोक्षाय शिष्येषूपदेशकरणे। कथं हेतुरित्यत आह। न हीति। अतो हरेर्नित्यमुक्तत्वं बन्धध्वंसाय शिष्येषूपदेशे हेतुरिति ज्ञायते इति भावः॥ ४॥

त्वमग्ने वृषभः पुष्टिवर्धनः। आहूतिरित्यनन्तरं तमिति शेषः। आहुतिमिति। आ हूतिमिति वक्तव्ये आहुतिमिति ह्रस्वश्छान्दस इति द्रष्टव्यम्। य आहुतिं परिवेद तेनोद्यतस्रुचे नयजमानेन श्रवाय्य इत्यन्वयः। ननु विशः प्रजा आविवाससीति कथं द्वितीया विट्सु प्रजासु आविवाससीति वक्तव्यत्वादित्यत आह। उपान्वध्याङ्वस इतीति। उप आन् अधि आङ पूर्वकस्य वसतेराधारे कर्मसंज्ञः स्यादिति सूत्रार्थः। वनमुपवसति। गृहाननुवसति। सभामधिवसति अग्निरुदर-मावसतीत्याद्युदाहरणम्। तथाच आङपूर्वकात् वसधातोराधारभूतानां विशां कर्मत्वस्य विवक्षितत्वाद्विश आविससीति युक्तमिति भावः। जनतां जनसमूहम्। प्रविष्टो वर्तस इति। हृदये स्थित्वा नियामकतया वर्तस इत्यर्थः। अयमिति। आविपूर्वको वस् धातुरर्चेति कर्मसु अर्चेत्यर्थकधातुषु पठित इत्यर्थः। असंभवादिति भगवांस्त्वंविशः प्रजा आविवाससि अर्चयसि पूजयसीत्येवं भगवतः प्रजार्चनकर्तृत्वरूपार्थस्य बाधितत्वेनासम्भवाद्वसधातुरन्यथा प्रवेशार्थकतया व्याख्यात इत्यर्थः। वैराग्याणीति। अमन्दानन्दपूर्णत्वेन विषये अलंबुद्धिमत्वाद्विषयरागोपहत्यभाव एव भगवतो वैराग्यम्। यथाहुरार्याः। अमन्दमानन्दमनिन्दनीयं निरन्तरं यन्निजमेव भुङ्क्ते। स्त्रीराज्यकोशादिषु तस्य तेन न रागरोमोपहता मनीषेति। यत्र स इतीति। ऐश्वर्याद्याः षड्गुणाः यत्र वृत्ताः स वषट्कारस्यार्थ इत्यर्थः। ऋचि वषट्कृतिशब्दश्रवणाद्भाष्येपि वषटकृतिशब्दस्यार्थे इति वक्तव्यम्। वषट्कारस्यार्थे इति कथमुक्तमित्यत आह। वर्तत इति। षड्गुणः स एवेति वषट्कृतिरेवेत्यर्थः। तथाच वषट्कृतिवषट्कारशब्दयोरेकार्थत्वान्न ऋग्भाष्ययोर्विसंवाद इति भावः॥ ५॥

## पदार्थदीपिका

तत्र तत्सूक्तव्याख्यानावसरे इत्यर्थः॥ भ्राजन्त्य इति॥ भ्राजृदीप्तौ। व्यत्ययेन शतृप्रत्ययः। ऋष्टयः। ऋषि गतौ इत्यस्मात् क्तिच्क्तौ च सञ्ज्ञायामिति सूत्रेण क्तिजन्तः ऋष्टिशब्दः॥ विदेः

(पदार्थदीपिका)

क्मन्निति ॥ बहुल ग्रहणादौणादिको भावे क्मन् । कित्वात् गुणाभाव इति भावः । संहितायां विभक्तिलोपः छान्दसो बोध्यः ॥ अजायन्तेति ॥ जनी प्रादुर्भावे । तस्यज्ञाजनोर्जा इति जादेश इति बोध्यम् ॥ १ ॥

शयुरिति ॥ शीङ् स्वप्ने । भृमृशीत्यादिना उप्रत्यये गुणायादेशयोः शयुरिति सिध्यतीति ज्ञेयम् । स्वप्नार्थकस्य शीङः कथं स्थानार्थत्वेन व्याख्यानमित्यतः तथा दृष्टमस्तीत्याह आमाशय इति ॥ आयव इति ॥ छन्दसीर इत्यनेनैतेरुण् प्रत्यय इति भावः । कतिधा । डत्यन्त किम् शब्दस्य बहुगुणवतुडति संख्येति संख्यासंज्ञायां संख्याया विधार्थे धा इति धाप्रत्यय इति ज्ञेयम् ॥ २ ॥

ननु भाव प्रधानात् सुक्रतु शब्दात् परस्य तृतीयाया यादेशे सुक्रतुयेति स्यात् सुक्रतूयेति दीर्घस्तु कथमत आह ॥ दीर्घ इति ॥ अस्मिन् पक्षे दीर्घस्य छान्दसत्व कल्पनाभयादाह ॥ यद्वेति ॥ तदिच्छेति ॥ सुक्रतुमात्मन इच्छतीतीच्छार्थे सुप आत्मनः क्यच् । अकृत् सार्वधातुकयोरिति दीर्घः । क्यजन्तस्य धातुसंज्ञायां अः प्रत्ययादिति भावे अकारप्रत्ययः । ततष्टाप् । सुपां सुलुगिति तृतीयैकवचनस्य डादेश इति ज्ञातव्यम् । नन्वेवं ज्ञानेच्छामात्रस्य सुक्रतुशब्दार्थत्वात् सुबोधत्वादिति कथं व्याख्यानमित्यत आह ॥ इच्छयेति ॥ लाक्षणिकार्थप्रदर्शनपरं भाष्यमिति भावः ॥ भावे विजिति ॥ वसनं वस् इति भावे विजित्यर्थः ॥ ततो मतुबिति ॥ तदस्यास्तीति मतुप् । मादुपधाया इति मतो वत्वम् । तसौ मत्वर्थे इति भत्वेन पदत्वाभावात् रुत्वाभाव इति भावः ॥ राजतेर्वेति ॥ छान्दसं रूपमित्यर्थः । ननु होतृवूर्ये इत्यस्येदूदेद्द्विवचनं इति प्रगृह्यत्वात् प्लुतप्रगृह्या अचीति प्रकृतिभावेन भवितव्यम् तत्कथं होतृवूर्येऽसघ्नोरिति सिद्धिरित्यत आह ॥ प्रगृह्यत्वाभाव इति ॥ निमित्तसप्तम्यैवेति ॥ तथा च न इदूदेद्द्विवचनमिति प्रगृह्यत्वमिति भावः ॥ कर्मण्यसुन्निति ॥ रद्येते इति रोदसीति कर्मण्यसुन् उगितश्चेत्युगित्वात् ङीप् । वा छन्दसीति पूर्वसवर्णदीर्घत्वमिति भावः । नन्वेवं रदसीति भवितव्यम् । रोदसी इति तु कथमित्यतः छान्दस उपधाया ओकार इत्याह ॥ उपधायाश्चेति ॥ कुत्वमिति ॥ घोषवत्वादि गुणतो वर्गचतुर्थो ह्रस्व सवर्ण इति घ इत्यर्थः ॥ न दोष इति ॥ भवानसीति अन्वयाकरणादिति भावः ॥ तत्रोपपत्तिः सर्वस्येतीति ॥ कस्यचित् वाशनस्यायथात्वं सम्भवनायामपि सर्वस्य वाशनेनायथात्वसम्भवनामपित्येवं रूपोपपत्तिः सर्वस्येत्यनेनोक्तेत्यर्थः ॥ ३ ॥

असुनिति ॥ औणादिक इति शेषः । ननु तर्हि पुरुरवा इति भवितव्यम् । तत्कथं भाष्ये पुरूरवा इति दीर्घ इत्यतः पूरूरवस इति संहितादैर्घ्यानुसारेण दीर्घ इत्याह ॥ दीर्घ इति ॥ संहितायां तु पुरूरवा इति दीर्घः निपातनाद्युक्तः ।

(पदार्थदीपिका)

॥ सुकृत इति ॥ सुकर्मपापमन्त्रपुण्येषु ष्टञिति क्विप् । ततस्तुगिति भावः । ॥ डन्निति ॥ डित्वाट्टिलोपे श्वन्निति प्रातिपदिकसिद्धिः ॥ आतोनुपसर्गे क इति कः । आदेच उपदेशेऽशितीति आत्वम् । आतो लोप इटि चेत्याकारलोपः इति ज्ञेयम् । ननु चैवं श्वत्र इति भवेत् श्वात्र इति तु कथम् । अत्राह ॥ श्वाकर्णादिवदिति ॥ तद्भावेन श्वात्रत्वेन । अप्रयोजकत्वं परिहरति ॥ नहीति ॥ ४ ॥

पुष्टिवर्धन इति ॥ वृधु वृध्दौ । अस्मात् णिजन्तात् नन्यादित्वात् ल्युरिति ज्ञेयम् । ॥ उद्यता स्रुक् येनेति ॥ यमु उपरमे । अस्मात् उपूर्वान्निष्ठेति क्तप्रत्यये अनुदात्तोपदेशेत्यादिनानुनासिक लोपः । ननु विशामावासं प्रत्यधिकरणत्वात् सप्तम्या भवितव्यं विश इति द्वितीया तु कथमित्यतोऽधि-करणस्यापि कर्मसंज्ञया युक्ता द्वितीयेत्याह ॥ उपेति ॥ एतत् पूर्वस्य वसतेराधारः कर्मसंज्ञः स्यादिति सूत्रार्थः । अयं आविरित्युपसर्गद्वयपूर्वक इत्यर्थः । असम्भवात् प्रजाकर्मकार्चनं प्रति परमेश्वरस्य कर्तृत्वासम्भवादित्यर्थः ॥ अन्यथेति ॥ प्रवेशार्थत्वेनेत्यर्थः ॥ यत्र स इत्यध्याहार्यमिति ॥ अन्यथा परमेश्वरस्य वषडलाभादिति भावः ॥ ५,३२ ॥

## टीकाविवृतिः

त्वमग्ने प्रथमो अङ्गिरा ऋषिः ॥ ऋष्यादिप्रतिपादकभाष्ये पदानां व्यवहितत्वादन्वयमाह ॥ यःसूर्यगमिति ॥ डुपप्रत्यय इति ॥ उणादयो बहुलमित्युक्तेरिति भावः ॥ स्वर्णसमानेति ॥ हिरण्मयवपुर्धृतशंखचक्र इत्युक्तेरिति भावः ॥ पृथक्स्थितमपीति ॥ अग्न्याद्यन्तर्गतत्वं विनापि स्थितमित्यर्थः । अग्न्याद्यन्तर्गतस्य विष्णोर्यथाऽग्न्यादिनामवत्त्वं तथा वैकुण्ठादिस्थस्यापीति भावः ॥ अष्टादशर्चमिति ॥ त्वमग्ने द्यूनाहिरण्यस्तूप आङ्गिरसो गोत्रतः । नामतस्तु हिरण्यस्तूपः ऋषिः । अग्निदेवताकं सूक्तम् । अंत्या एतेनाग्ने इति ऋक् एकादशाक्षरपादचतुष्कत्वात्त्रिष्टुप्छन्दस्का । तथा अष्टमी षोडशी च त्रिष्टुप्छन्दस्का । शेषाः पञ्चदश जगतीछन्दस्काः । त्रिष्टुबंत्यस्य शिष्टा जगत्य इति ॥ तत्र दशैकादशद्वादशाक्षरपादयुक्तानामृचां वैराजत्रैष्टुभजागता इति संज्ञा इति च परिभाषितत्वादित्यनुक्रमणिकाभिप्रायः । अङ्गङ्गात्रान्तिकोपायप्रतीकेष्वप्रधानके इति विश्वकोशं मनसि निधायांगेरस इति भाष्यं व्याचष्टे ॥ शरीरे सार इति ॥ श्रुतौ तु अङ्गान्यवयवा अस्य सन्तीति प्रशंसाद्यर्थे इनिप्रत्यये अङ्गि शरीरं तत्र रसः । तत्रत्यप्रवर्तकदेवोत्तम इत्यर्थः ॥ ज्ञानवत्त्वादिति ॥ ऋषगताविति धातोः ऋषतिजानातीति ऋषिरित्युच्यते इत्याशयः ॥ नत्वंगिरसर्षिणैक्यादिति ॥ श्रुतौ त्वमङ्गिरा ऋषिरिति सामानाधिकरण्येन भ्रान्तिप्राप्तादिति शेषः ॥ शिवःसुखात्मक इति ॥

(टीकाविवृतिः)

शेवं शिवमिति सुखनामसु पाठादिति भावः ॥ आयुधविशेषा इति ॥ खड्गेतु निस्त्रिंशचन्द्रहासासिरिष्टय इत्यमरोक्तेरिष्टिशब्दे खड्गार्थके संप्रसारणं छान्दसं ज्ञेयमिति भावः ॥ मरुच्छब्देन मुख्यार्थत्वाद्वायुग्रहणे बहुवचनानुपपत्तिं परिहरति ॥ अतीतवर्तमाना इति ॥ विदेःक्मन्निति ॥ भावे बहुलग्रहणादिति शेषः ॥ अपःकर्मेति ॥ अपः अग्नः इति कर्मनामसु पाठादिति भावः । कवय इत्यस्य कथं महाविज्ञाना इति व्याख्यानं धीरो मनीषी ज्ञःप्राज्ञःसंख्यावान्पण्डितःकविरित्यमरकोशे ज्ञानिसामान्यपर्यायत्वोक्तेरित्यत आह ॥ ईश्वरार्थेनेति ॥ तव व्रते विद्मना पस इत्यनेनोक्तेनेति शेषः । ज्ञानस्य पूर्वमेव सिद्धत्वात्तेन तत्प्राप्तेरयोगादिति भावः ॥ विशिनष्टीति ॥ मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायादिति भावः ॥ १ ॥

त्वमग्ने प्रथमो अङ्गिरस्तमः ॥ देवानां व्रतमिति ॥ कर्तरि षष्ठी ॥ इरो मतुबर्थे इति ॥ अस्मायामेधास्रजोविनिरित्यधिकारे बहुलं छन्दसीत्यनेन बहुलग्रहणादिति भावः । तर्हि भाष्ये मेधायुत इति वाच्ये कथं सुमेधया युत इत्युक्तमित्यतः शाब्दिकश्लोकं प्रमाणयति ॥ भूमेति ॥ मतुबादय इत्यतःपरमित्युक्तेरिति शेषः । अस्तिविवक्षायामिति सर्वत्र संबध्यते । भूमाद्यर्थेषूदाहरणानि । विद्यावान् । किंवान् । गुणवान् । भास्वान् । यशस्वान् । लक्ष्मीवानिति । प्रकृते च प्रशंसार्थे इरप्रत्यय इति भावः ॥ द्विमातेति ॥ माङ्माने इत्यतस्ताच्छीलिके तृनिसमासान्तोदात्तत्वमिति भावः ॥ शयुरिति ॥ भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उरित्युप्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे अयादेश इति भावः । अग्निशब्दस्य प्रसिद्धाग्न्यर्थत्वे कथमब्धिशायित्वमित्यत आह ॥ अग्नौ त्विति ॥ वाडवाग्नेः समुद्रस्थानकत्वादिति भावः । उदाहरति ॥ आमाशय इति ॥ आमस्याश्रय इत्यर्थः । जलाशयो जलाधार इत्यमरोक्तेरिति भावः ॥ मनुष्यनामैतदिति ॥ आयवः यदव इति तन्नामसु पाठादिति भावः । कतिप्रकार इति भाष्यविवरणात्म कंस्वामीत्यादिभाष्यं लापयितुं शङ्कते ॥ कथमिति ॥ २ ॥

त्वमग्ने प्रथमो मातरिश्वने ॥ आविर्भवेति विध्यादिलोटःप्रकृतेऽनन्वया- दाह ॥ भूते लोडिति ॥ कालहलच्स्वरकर्तृयङाश्चेत्युक्तेःकालव्यत्ययेन भूते लोडित्यर्थः । तर्हि भाष्ये त्वमिति प्रयोगादाविर्बभूविथेति मध्यमपुरुषे प्रयोक्तव्ये कथमाविर्बभूवेति प्रथमपुरुषप्रयोग इत्यत आह ॥ युष्मद्युपपदेपीति ॥ त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेज इत्यादिशिष्ट- प्रयोगबलात्संज्ञापूर्वको विधिरनित्य इत्युक्तेश्च युष्मद्युपपदे समानाधिकरणे इत्यस्यानि- त्यत्वान्मध्यमपुरुषाभावे प्रथमपुरुष इति भावः । प्रथम इत्यस्य क्रियाविशेषणत्वेन लब्धमर्थमाह ॥

(टीकाविवृतिः)

अतिशयेनेति ।। सुक्रतूयेत्यस्य भाष्ये यत्सुबोधवक्त्वादिति व्याख्यानं तद्घटयति ।। शोभनः क्रतुर्ज्ञानमस्येतीति ।। तर्हि सुक्रतुशब्दात्तृतीया याःसुपां सुलुगिति यादेशे व्यत्ययेनोदात्तत्वे च सुक्रतुयेति भाव्यं तत्कथमुकारस्य दीर्घ इत्यत आह ।। दैर्घ्यमिति ।। अस्यां अरुचेराह ।। यद्वेति ।। तथा च इच्छार्थे क्यचि क्यचि चेति दीर्घे अःप्रत्ययादिति भावे अकारप्रत्यये टाबिति भावः ।। इच्छयेति ।। ज्ञानेच्छया ज्ञानप्राप्तिर्लक्ष्यते । इच्छामात्रस्य अज्ञानिसाधारण्यादिति भावः । सुक्रतूयेति पदस्य प्रथमांतत्वेऽन्वयासंभवादाह ।। ततस्तृतीयाया इति ।। भावे विजिति ।। अन्येभ्योपि दृश्यन्ते इत्यनेनेति भावः । रीयते रेजतीति गतिकर्मसु पाठात्कथमरेजेतामित्येतदशोभेतामिति व्याख्यातमित्यत आह ।। रेजतिरत्रेति ।। एजृरेजृभ्रेजृभ्राजृदीप्ताविति धातुव्याख्यानादिति भावः । प्रकारान्तरमाह ।। राजतेर्वेति ।। क्षयति राजतीत्यैश्वर्यकर्मसु पठितस्य राजृदीप्ताविति धातुव्याख्यानाच्छोभार्थस्योभयपदित्वादात्मनेपदे वर्णव्यत्ययेन धात्वादेरेत्वमिति भावः ।। होतृवूर्ये कथमिति ।। श्रीभुवौ केननिमित्तेन होतृवूर्यशब्दवाच्ये इत्यर्थः ।। वूर्ये वर्ये इति ।। वृङ्संभक्तावित्यतो ऋहलोर्ण्यदिति ण्यति उदोष्ठ्यपूर्वस्य बहुलं छन्दसीत्युकारादेशे हलि चेति दीर्घे वूर्य शब्दसिद्धिरिति भावः ।। होत्रावूर्ये इति ।। हेतौ तृतीया । होत्रा विष्णुना तत्प्रसादेनेति यावत् । वूर्ये वर्ये श्रेष्ठे इत्यर्थः । ननु होतृवूर्ये इत्यस्येदूदेद्द्विवचनं प्रगृह्यमिति प्रगृह्य संज्ञायां संहिताकाले असघ्नोरित्येतस्मिन्परे प्लुतप्रगृह्या अचीति प्रकृतिभावः स्यात्कथमेङःपदांतादतीति संधिरित्यत आह ।। प्रगृह्यत्वाभाव इति ।। सर्वे विधयश्छन्दसि विकल्पयन्ते इत्युक्तेरिति भावः । अनया अरुच्या पक्षान्तरमाह ।। यद्वा निमित्तसप्तम्येषेति ।। होतुर्वूर्यं होतृवूर्यमिति षष्ठीतत्पुरुष इति भावः ।। पतित्वादशोभेतामिति ।। परमेश्वराख्यभर्तृयुतत्वाच्छोभा । नत्वप्रयोजकभर्तृयुक्तत्वे इति भावः ।। उपधायाश्चौकार इति ।। उणादयो बहुलमिति बहुलग्रहणादिति भावः ।। कर्मणि नुरिति ।। दाभाभ्यां नुरित्युक्तो नुप्रत्ययो बहुलग्रहणात्कर्मणि अस्मादपि हस्य कुत्वं चेति भावः । तथा च सह्यते इति सघ्नुः न सघ्नुरिति विग्रहो ज्ञेयः ।। महो महतश्चेति ।। विजंतत्वेन हकारान्तत्वान्मह इति षष्ठ्यं तं ज्ञेयम् ।। चतुर्थ्यर्थे इति ।। चतुर्थ्यर्थे बहुलं छन्दसीति असघ्नोर्मह इत्यत्रापि षष्ठीति भावः ।। भारं विश्वस्येति शेष इति ।। विश्वस्यसर्जनरक्षणपोषणादिकार्यमित्यर्थः ।। असीतिवक्ष्यमाणेनेति ।। वसुर्भवानसीत्यत्रत्येनेतिशेषः ।। इति चार्थ इति ।। वासाच्चेत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वात्सर्वत्र वसतीति वा सर्वमस्मिन्वसतीति वेत्यर्थे कर्तर्यधिकरणे वा उकारप्रत्यय इति भावः । भाष्ये कथं भवानसीति भवच्छब्दयोगे मध्यमपुरुषप्रयोगः । भवच्छब्दस्य युष्मदर्थत्वाभावेन युष्मद्युपपद इत्युक्तमध्यमपुरुषासंभवादित्यत आह ।। भवानिति संबुद्धिव्याख्यानमिति ।। वसो इत्यत्रेति शेषः । तर्हि असीत्यनेनकथमन्वय इत्यत आह ।। असीत्यस्येति ।। पूर्वेणैव प्रतिदिष्टवांस्त्वमित्यनेनैवेत्यर्थः ।। ३ ।।

(टीकाविवृतिः)

त्वमग्ने मनवे ।। अतिशयेनेति ।। अनेन शोभनानिसत् कर्माणि करोतीति सुकृत् अतिशयेन सुकृत्सुकृत्तर इति विग्रहः सूचितो भवति ।। कथमिति ।। वायोःकेन निमित्तेन मनुशब्दवाच्यत्वमित्यर्थः ।। इदंरूपमिति ।। शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबधिमनिभ्यश्चेत्युप्रत्यये इति शेषः । अवबोधमात्रे पठितस्य मनतेःकथं विशिष्टबोधादिति व्याख्यानमित्यत आह ।। अवबोधश्चेति ।। यद्यपीति शेषः । अवबोधमात्रेपठितस्यमनतेःकथं विशिष्टबोधादितिव्याख्यानमित्यतआह ।। अवबोधश्चेति ।। यद्यपीतिशेषः ।। वैशिष्ट्येनेति ।। मुख्यामुख्यन्यायादिति भावः ।। स्वर्गादिस्वाम्यस्यानित्यत्वादरुच्या पक्षान्तरमाह ।। यद्वेति ।। द्युतेरौणादिकडोप्रत्ययान्तस्य प्रकाशार्थत्वाज्ज्ञानरूपप्रकाशार्थत्वमत्रेति भावः । संसारमोक्षयोर्नियतपत्नीपरत्वेनापि व्याचष्टे ।। अथवा द्यां द्युदेवतामिति ।। स्वर्गाभिमानिनीमित्यर्थः ।। कथं प्रादा इत्यस्येति ।। वाशृधातोःशब्दार्थत्वादिति शेषः ।। तस्य णिजन्तस्येति ।। हेतुमण्णिजन्तस्य लङि सिपीति शेषः ।। तत्र स्वतन्त्रकर्तुरिति ।। तत्र वाशने अग्नेःप्रयोजककर्तृत्वादिति शेषः । एवमध्याहारादिकरणेन श्रौताद्यपादस्य लब्धमर्थमाह ।। ततश्चेति ।। हे अग्ने त्वमिति शेषः ।। एतदर्थपरत्वेन यथेत्यादिभाष्यं योजयति ।। हे देवेति ।। तर्ह्यवाशय इत्यस्य कथं प्रादा इत्यर्थ उक्त इत्यत आह ।। तस्य प्रागिति ।। तथा वाशनस्य द्योस्तदीयत्वव्यवहारस्यासंभवात् । सर्वस्य विष्णुसंबन्धित्वाद्वायोर्दानाभावे वायुसंबन्धित्वायोगादिति भावः । भ्रान्त्या लौकिकस्तदीयत्वव्यवहारःकिं न स्यादित्यत आह ।। अयथावाशनमिति ।। तत्रोपत्तिरिति ।। भ्रांत्या मिथ्याव्यवहारस्तु कस्यचिदेव स्यान्न तु सर्वस्येति भावः ।। प्रकृतस्येति ।। वायोरित्यर्थः ।। दीर्घःसांहित इति ।। पुरुशब्दस्य ह्रस्वांतस्य समासेपि ह्रस्वान्तत्वस्यावश्यकत्वेपि संहिताया अन्येषामपि दृश्यते इति दीर्घ इति भावः ।। प्रसिद्धायेति ।। स्वायंभुवादिमनवे इत्यर्थः । एवं पुरूवाःप्रसिद्धो बुधपुत्रो ज्ञेयः ।। प्रसिद्धं हीति ।। छान्दोग्ये अथातःशौव उद्गीथ इत्येतत्खण्डभाष्ये इति शेषः ।। श्वसप्राणने इति ।। श्वसनाच्चेष्टकत्वाच्छ्वेति विग्रहः । श्वसेर्डनिप्रत्यये डित्वाट्टिलोपे नान्तं प्रातिपदिकमिति भावः ।। श्वात्रशब्दस्य तृतीयायाश्चेति ।। श्रौतश्वात्रेणेत्यत्रेति शेषः । अस्य त्राणमित्यनेन श्वात्रशब्दार्थतसिल्प्रत्ययेन तृतीयाया अर्थ उक्त इत्याशयः । श्वन्शब्दस्य त्रशब्देन समासे नलोपःप्रातिपदिकांतस्येति नलोपे निष्पन्नश्वत्रशब्दे पूर्वपददीर्घःकथमित्यत आह ।। श्वाकर्णादिवदिति ।। शुनो दंतदंष्ट्राकर्णकुंदवराहपुच्छपदेषुदीर्घो वाच्य इत्यत्रलौकिकश्वाकर्णादिप्रयोगानुसारेण यथा शुनो दंतेत्याद्युपसङ्ख्यानं तथा श्वात्रेणेति वैदिकप्रयोगदर्शनात्तत्र शब्दे परतः शुनो दीर्घ उपसङ्ख्येय इति भावः ।। तद्भावेनेति ।। एवं श्रौतं पदं व्याख्याय इदानीमस्मिन्नर्थे भाष्यं योजयति ।। अस्य श्वशब्दार्थस्येति ।। श्वात्रेणेति भावप्रधानो

(टीकाविवृतिः)

निर्देशः । श्वात्रभावेन श्वात्रत्वेनेत्यर्थः ॥ पुरुषाच्चेति ॥ चतुर्मुखाच्चेत्यर्थः । श्वात्रेणेत्यस्य नित्यमुक्तत्वे हेतुत्वमुपपादयति ॥ न हि वायोरिति ॥ वायुस्तु तदनुज्ञयेति वायोर्मोक्षदातृत्वोक्तेस्तद्रक्षकस्य कथं प्रकृत्यादिबंध इति भावः ॥ तेनैवेति ॥ नित्यमुक्तत्वेनैवेत्यर्थः ॥ पूर्वं पूर्वे इति ॥ लिङ्गवचनव्यत्ययेनेति शेषः । नित्यमुक्तत्वस्योपदेशं प्रतिकारणत्वमुपपादयति ॥ न हि बद्धमिति ॥ ४ ॥

त्वमग्ने वृषभः ॥ वर्षणस्य कर्तेति ॥ वृष सेचने इत्यतो ऋषिवृषिभ्यां किदित्यनेनाभच्प्रत्यये निष्पन्नत्वाद्भक्ताभीष्टसेचनकर्तेत्यर्थ इति भावः ॥ श्रवाय्य इति ॥ श्रुदक्षिस्पृहिगृहिभ्य आय्य इत्यनेन शृणोतेःकर्मण्याय्य प्रत्यय इति भावः ॥ आहूयत इतीति ॥ आङ्पूर्वात्ह्वयतेःकर्मणि औणादिके क्तिति वचि स्वपीति संप्रसारणे समासस्वरापवादेन तादौ च नितिकृत्यताविति अनन्तरगतेःप्रकृतिस्वरेणाङः उदात्तत्वमिति भावः । सम्यक्वेदेत्येतदनन्तरमेताद्दशेनेति शेषो ज्ञेयः । विशां वासाधिकरणत्वेन सप्तम्या भाव्यमित्यत आह ॥ उपान्वध्याङ्वस इतीति ॥ तथा च कर्मणि द्वितीयेति भावः ॥ असंभवादिति ॥ विष्णोः प्रजापूजाकर्तृत्वायोगादिति भावः । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तषड्गुणानाह ॥ ऐश्वर्येति ॥ वषडित्यत्र वृतु वर्तने अस्मात् डप्रत्यये व इति रूपम् । तस्यार्थःनित्यवृत्ता इति षडित्यस्य षड्गुणा इति भाष्ये उक्तः । विष्णौ तद्घटकबहुव्रीहिप्रदर्शनायाह ॥ यत्र स इत्यध्याहार्यमिति ॥ भाष्ये श्रुत्यनुसारेण वषट्कृतेरिति वक्तव्ये वषट्कारस्येति कथमुक्तमित्यत आह ॥ स एवेति ॥ उभयोःपर्यायत्वादिति भावः । तर्हि वषडित्याक्रियमाणत्वात् वषट्कारो विष्णुस्तथा च तस्यैवार्थरूपत्वाद्वषट्कारस्यार्थ इति कथमुक्तमित्यत आह ॥ वषट्कारस्येति ॥ परिवेदवषट्कृतिमिति वेदे षड्गुणत्वाद्यर्थानुक्तेःकथ मित्याह वेद इत्युच्यते इत्यत आह ॥ इत्याह वेद इतीति ॥ ५ ॥ ३२ ॥

**ऋक्संहिता पदपाठसहिता** (सू-३१, व-२)

**(३५६) त्वमंग्ने वृजिनवर्तनिं नरं सक्मंन्पिपर्षि विदथें विचर्षणे ॥ यः शूरंसाता परिंतक्म्ये धनें दभ्रेभिश्चित्समृंता हंसि भूयंसः ॥ ६ ॥**

**(प०) त्वम् । अग्ने । वृजिनऽवर्तनिम् । नरंम् । सक्मंन् । पिपर्षि । विदथें । विऽचर्षणे ॥ यः । शूरंऽसाता । परिंऽतक्म्ये । धनें । दभ्रेभिंः । चित् । सम्ऽऋंता । हंसि । भूयंसः ॥ ६ ॥**

(ऋक्संहिता पदपाठसहित)

(३५७) त्वं तमंग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे ॥
यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च
सूरये ॥ ७ ॥

(प०) त्वम् । तम् । अग्ने । अमृतऽत्वे । उत्ऽतमे । मर्तम् । दधासि ।
श्रवसे । दिवेऽदिवे ॥ यः । ततृषाणः । उभयाय । जन्मने ।
मयः । कृणोषि । प्रयः । आ । च । सूरये ॥ ७ ॥

(३५८) त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः ॥
ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ ८ ॥

(प०) त्वम् । नः । अग्ने । सनये । धनानाम् । यशसम् । कारुम् ।
कृणुहि । स्तवानः ॥ ऋध्याम । कर्म । अपसा । नवेन । देवैः ।
द्यावापृथिवीइति । प्र । अवतम् ॥ नः ॥ ८ ॥

(३५९) त्वं नो अग्ने पित्रोरुपस्थ आदेवो देवेष्वनवद्य जागृविः ॥
तनूकृद्बोधि प्रमतिश्चकारवे त्वं कल्याण वसुविश्वमोपिषे ॥ ९ ॥

(प०) त्वम् । नः । अग्ने । पित्रोः । उपऽस्थे । आ । देवः । देवेषु ।
अनवद्य । जागृविः ॥ तनूऽकृत् । बोधिऽप्रमतिः । च । कारवे ।
त्वम् । कल्याण । वसु । विश्वम् । आ । ऊपिषे ॥ ९ ॥

(३६०) त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयम् ॥
सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं यन्ति
व्रतपामदाभ्य ॥ १०, ३३ ॥

(प०) त्वम् । अग्ने । प्रऽमतिः । त्वम् । पिता । असि । नः । त्वम् ।
वयःऽकृत् । तव । जामयः । वयम् ॥ सम् । त्वा । रायः ।
शतिनः । सम् । सहस्रिणः । सुऽवीरम् । यन्ति । व्रतऽपाम् ।
अदाभ्य ॥ १०, ३३ ॥

## ऋग्भाष्यम्

सद्विद्याख्येविदथे सम्प्रजाते पापाचारं पुरुषंवापि पर्पि । सक्मन् गृहे स्वे विविधप्रजेशो विचर्षणिः शूरसातौ च युद्धे । सातिर्लाभे यत्परितक्म्येऽधिगम्ये दभ्रा अपि त्वां शरणं यदि स्म । ऋतागतास्तत्र हि भूयसोपि तैर्हंसिशक्त्या संख्यया वा प्रयत्नात् ॥६॥ दिनेदिने तत्स्तुतिं श्रोतुकामस्तवस्तोतारममृतत्वे दधासि । प्रीत्याधिक्यात्ततृषाणोम नुष्यदेवोभयेषां सुखमातनोषि । आसमंताज्ज्ञानिने तत्र नित्यं प्रियं मोक्षाख्यं ततृषाणो विशेषात् ॥ ७ ॥ प्रज्ञाधनानां लब्धयेनः कृधित्वं यशस्विनं कारिणं ज्ञानदं च । कर्तापरोक्ष्यं यावदुपासनादीन्कारुस्तेन प्रोच्यते तत्त्वदर्शी । संस्तूयमानः कर्मणा नूतनेन समृद्धिं च प्राप्नुमः प्राक्तनस्य ॥ ८ ॥ त्वं नः पित्रोः प्रकृतेः पूरुषस्य समीपस्थस्तन्नियन्ता सदैव । देवेषु त्वं जागृविर्नित्यवेत्तातनूकृन्नो बोधय प्राज्ञवर्यः । विश्वं वसुप्रार्पयसे च कारवे ॥ ९ ॥ आयुष्करोभ्रातरस्ते वयं च । देहे त्वेकस्मिन् गर्भवद्वासतश्च भ्रातास्य जीवः परमस्य नित्यम् ॥ १०, ३३ ॥

## ऋग्भाष्यटीका

त्वमग्ने वृजिन । स द्विद्या । विविधप्रजेशो विचर्षणिः । विविधाः नानाप्रकाराः देवाद्याश्चर्षणयः प्रजा अस्येति तस्य सम्बुद्धिः । हे विचर्षणेऽग्ने ! त्वं वृजिनवर्तनिं वृजिनं पापं वर्तनिर्वर्तनं मार्गो वा यस्य तम् । पापाचारम् । चित् वा । पापाचारमपि नरं पुरुषम् । सक्मन् दकारस्य ककारः । सद्मन् सद्मनि स्वे गृहे तदीये गृहे त्वदीये वा स्वर्गे वैकुण्ठादौ । पिपर्षि पॄपालनपूरणयोः पालयसि पूरयसि च । कथम् । विदथे विदथ इति यज्ञनाम । सद्विद्याख्ये विदथे यज्ञे सम्प्रजाते तेनानुष्ठिते सतीति शेषः । अथवा वेत्तेर्भावेऽथक् प्रत्यये कृते सद्विद्यैव विदथशब्दा इत्यनेनाचष्टे । कथंभूतोग्निः । यस्त्वं शूरसाता शूरसातौ युद्धे । कथम् । तन्नामसु पाठात् । निरुक्तिं च सूचयति । यद्यस्मात्सातिः सातिशब्दो लाभे वर्तते । अतः शूरसातिर्युद्धम् । तद्धि शूराणां लाभः । चशब्दो धर्मान्तरसमुच्चये । धने परितक्म्येऽधिगम्ये । गतिकर्मसु पाठात् । निमित्तसप्तम्येषा । अधिगन्तव्यधननिमित्ते सङ्ग्राम इति यावत् । सं सम्यक् । ऋताः गताः यदि दभ्राः अल्पा अपि योद्धारस्त्वां शरणं गताः । तत्र तर्हिं तैः शक्त्या संख्यया वा । दभ्रेभिश्चित् अल्पैरपि । शक्त्या संख्यया भूयसोपि प्रतिभटान् । अप्रयत्नादनायासेन । हंसि । हि स्मेति सुप्रसिद्धमेतदिति । सपिपर्षीति सम्बन्धः ॥ ६ ॥

(ऋग्भाष्यटीका)

त्वन्तम् । दिने दिने । हे अग्ने त्वं तम् । श्रवस इति वक्ष्यमाणत्वाद्योग्यतया तव स्तोतारम् । मर्तं मर्त्यम् । उत्तमे मुख्येऽमृतत्वे दधासि मुक्तं करोषि । किमर्थम् । दिवे दिवे दिने दिने सदा । श्रवसे श्रवणाय । तत्कृतस्तुतेरिति शेषः । तत्स्तुतिं श्रोतुकाम इति यावत् । मुक्तौ हि सदा समीपस्थं स्तौति । कथं भूतः । यस्त्वं प्रीत्याधिक्यात्ततृषाणस्ततृषाणस्तृष्णातिशयवान् । उभयाय जन्मने द्विविधाय जन्मवते । मनुष्या देवाश्चेत्युभयेषाम् । न तु दैत्यानामिति यावत् । मयः सुखं स्वर्गाख्यं कृणोषि करोषि आतनोषि । तत्र तेष्वपि मानुषादिषु सूरये च ज्ञानिने तु । आ समन्तात् नित्यमिति यावत् । प्रयः प्रियं मोक्षाख्यं सुखं कृणोषि । आ इत्येतत् प्रय इत्यनेन सम्बध्यत इत्युक्तम् । यद्वा ततृषाण इत्येतदनुवर्त्य तेन सम्बन्धनीयमित्याह ॥ ततृषाण इति । सूरये तु आविशेषात्ततृषाणोमयः कृणोषि सन्दधासीति सम्बन्धः ॥ ७ ॥

त्वन्नो अग्ने सनये ॥ प्रज्ञा । हे अग्ने स्तवानोऽस्माभिः संस्तूयमानस्त्वम् । नोऽस्मान्धनानां प्रज्ञाख्यानां धनानाम् । सनये लब्धये समर्थानिति शेषः । कुणुहि कृधि कुरु । किंचास्मान् यशसं यशस्विनं यशस्विनः । कारुं कारिणं च कारिणश्च । ज्ञानदं ज्ञानदानिति यावत् । कृणुहि । ननु च करोतेरुणि कृते कारुरिति भवति ततश्च कारुं कारिणमिति स्यात् । ज्ञानदमिति तु कथं लभ्यत इत्यत आह ॥ कर्तेति ॥ यावदापरोक्ष्यं ब्रह्मणस्तावदुपासनादीन्कर्ता यतस्तेन कारणेन । तत्वदर्शी कारुः प्रोच्यते । एतदुक्तं भवति । उणादयो हि संज्ञायां विधीयन्ते अतो विद्वद्रूढिपर्यालोचनया प्रकर्षगतिविज्ञानाद्वा कारुरिति तत्वदर्शी ग्राह्यः । अत एव वृत्तिकारः करोतीति कारुर्विश्वकर्मेन्द्रो वेति । तथा च पुनरुक्तिप्रसङ्गाज्ज्ञानिकार्यं ज्ञानदानं लक्ष्यत इति । यदा तु धनानि प्रज्ञातिरिक्तानि तदा यथाश्रुतव्याख्यानेपि न दोषः । किञ्च । वयं नवेन नूतनेन । अपसा कर्मणा । कर्म ऋध्याम समृद्धं सफलं करवाम । प्राक्तनस्य कर्मणः समृद्धिं साफल्यं प्राप्नुमः । प्राक्तनानां पुण्यानां त्वत्सेवैव फलं भवत्विति यावत् । किञ्च । हे द्यावापृथिव्यौ देवैः सहिते युवाम् । नोस्मांस्तथैव प्रावतं यथा वयमग्नेः सेवकाः स्याम ॥ ८ ॥

त्वन्नो अग्ने पित्रोः । त्वं नः । हे अग्ने त्वं नोस्माकं सर्वेषां प्राणिनाम् । पित्रोः मातापित्रोः । प्रकृतेः पूरुषस्य चोपस्थे उपतिष्ठन्तेत्रेत्युपस्थं समीपं तत्र वर्तसे । सदैव तयोर्नियन्तेति यावत् । हे अनवद्य देवस्त्वम् । देवेषु निर्धारणे सप्तमी । आजागृविः नित्यवेत्ताऽसि । त्वं तनूकृत् सर्वशरीराणां कर्ता । प्रमतिश्च । प्रकृष्टा मतिरस्येति प्राज्ञवर्यश्चासि । एवं भूतो नोस्मान्बोधि बोधय । ज्ञानिनः कुरु । कुतः । हे कल्याण भद्र । त्वं कारवे ज्ञानिने । विश्वं समस्तम् । वसु मोक्षादिकमोपिषे आपयसि । प्रार्पयसे चस्तस्मादित्यर्थे ॥ ९ ॥

त्वमग्ने । आयुः । हे अग्ने त्वम् । प्रमतिः प्रकृष्टज्ञानोसि । त्वं नोस्माकं पितासि शरीरकर्तृत्वात् । त्वं वयस्कृत् । कालकृता शरीरावस्था वयः । तयाऽऽयुरुपलक्ष्यते । आयुष्करः । न केवलं त्वं नःपिता । किन्तु

(ऋग्भाष्यटीका)

**ऽयं तव तेजामयो भ्रातरश्च। अङ्गिरसो ज्येष्ठः पुत्रोग्निः। अतोहि रण्यस्तूपस्य भ्राता ज्येष्ठत्वात्पिता चेति युज्यते। परमेश्वरे तु कथं जीवो भ्रातेत्यत आह॥ देहे त्विति। गर्भवदेकगर्भस्थितप्राणिद्वयवत्। वासतो द्वयोरपि। चशब्द एवार्थे। परमस्य त्विति सम्बन्धः। किञ्च हे अदाभ्य अहिंस्य। सुवीरमतिविक्रान्तम्। व्रतपां व्रतानां कर्मणां रक्षकं त्वाम्। शतिनः शतसंख्यावत्योरायः संयंति प्राप्नुवन्ति। सन्ति। न केवलं शतिनः सहस्रिणः सहस्रसंख्यावत्यश्च संयंति। वयं त्वत्सम्बन्धिनस्त्वं च धनिकोऽतोऽस्मान् धनवतः कुर्विति॥ १०, ३३॥**

## मन्त्रार्थमञ्जरी

(हे) विश्वचर्षणे, विविधा नानाप्रकारा देवाद्याश्चर्षणयः प्रजा यस्येति तस्य सम्बुद्धिः। (हे) अग्ने त्वम्। वृजिनवर्तनिम्, वृजिनं पापं वर्तनिर्वर्तनं मार्गो यस्य तं पापाचारम्। (अपि) नरम्, पुरुषम्। सक्मन्, दकारस्य ककारः, सद्मन्, सद्मनि, तदीये, गृहे, त्वदीये गृहे वा, स्वर्गे वैकुण्ठादौ। पिपर्षि, 'पृ (पॄ) पालनपूरणयोः, पालयसि पूरयसि च। कथम् ? विदथे, 'वि॒दथः' इति यज्ञनाम (वै० नि० ३।१७) सद्विद्याख्ये यज्ञे। (तेनानुष्ठिते सति) इति शेषः, यद्वा– वेत्तेः भावेऽथङ्। यः, त्वम्। शूरसाता, शूरसातौ, शूराणां लाभरूपे युद्धे। परितक्म्ये, 'तक गतौ' म्यप्रत्ययः, अधि गन्तव्ये। धने, धननिमित्तम्। यदि (दभ्राः) अल्पा अपि योद्धारः। त्वाम् (समृता, समृताः) तं सम्यगृताः शरणं गताः। तर्हि तैः शक्त्या संख्यया (वा दभ्रेभिः चित्, अल्पैरपि। शक्त्या संख्यया) च भूयसः (अपि प्रतिभटान्। अप्रयत्नतः) अनायासेन। हंसि इति। (सः) 'पिपर्षि' इति सम्बन्धः॥ ६॥

(हे) अग्ने त्वम्। तम्, स्तोतारम्। मर्तम्, मर्त्यम्। उत्तमे, मुख्ये। अमृतत्वे दधासि, मुक्तं करोषि। किमर्थम् ? दिवेदिवे, दिनेदिने, सदा। श्रवसे। श्रवणाय। (तत्कृतस्तुतेः) इति शेषः, तत्स्तुतिं श्रोतुकाम इति यावत्, मुक्तो हि सदा त्वत्समीपस्थः स्तौति। कथंभूतः ? यः, त्वम् प्रीत्याधिक्यात्– ततृषाणः, तृष्णातिशयवान्। उभयाय जन्मने, द्विविधजन्मवते, 'मनुष्या देवाश्च' इत्युभयेषाम्। मयः, सुखम्, स्वर्गाख्यम्। कृणोषि, आतनोषि (यः) च, त्वम्। विशेषात् (ततृषाणः), तृष्णातिशयवान्। आ, समन्तात्। सूरये, ज्ञानिने, प्रयः, प्रियम्, मोक्षाख्यम्। (कृणोषि)। (सः) दधासि इति सम्बन्धः॥ ७॥

(हे) अग्ने। स्तवानः, अस्माभिः स्तूयमानः। त्वम्। नः, अस्मान्। धनानाम्, प्रज्ञाख्यानां धनानाम्, प्रसिद्धधनानां वा। सनये, लब्धये। (समर्थान्) इति शेषः। कृणुहि, कुरु। किं च,

(मन्त्रार्थमञ्जरी)

(नः) अस्मान्। यशसम्, यशस्विनम्, यशस्विनः। कारुम्, कारिणम्, कृञः उणू, कारिणश्च, ज्ञानदानिति यावत्। (कृणुहि) यावद्ब्रह्मापरोक्षमुपासनादिकरणात्कारुपदेन लक्षणया ज्ञानदातृग्रहः, अन्यथा 'ज्ञानिनः' इत्युक्तौ पुनरुक्तिप्रसङ्गात् (धनानाम् इत्यस्य प्रसिद्धधनार्थत्वे तु) ज्ञानिनः इत्येवार्थो ग्राह्यः। किं च, (वयम्) नवेन, नूतनेन। अपसा, त्वत्सेवाकर्मणा। कर्म, प्राचीनं कर्म। ऋध्याम, समृद्धं सफलं करवाम, प्राक्तनस्य कर्मणः समृद्धिं साफल्यं प्राप्नुमः, प्राक्तनानां पुण्यानां त्वत्सेवैव फलं भवत्विति यावत्। किं च, (हे) (द्यावापृथिवी) द्यावापृथिव्यौ श्रीभूमी। देवैः (सहिते) युवाम्– नः, अस्मान्। तथैव– प्र अवतम्, रक्षतम्। यथा वयमग्नेः सेवकाः स्याम ॥ ८ ॥

(हे) अग्ने त्वम्। नः, अस्माकम्, सर्वेषां प्राणिनाम्। पित्रोः, मातापित्रोः, प्रकृतेर्विरिंचाख्यपुरुषस्य च। उपस्थे, उपतिष्ठन्ते स्तुवन्त्यत्रेत्युपस्थं समीपम्, तत्र वर्तसे, सदैतयोर्नियन्तेति यावत्। (हे) अनवद्य, निर्दोष। देवः (त्वम्) देवेषु, निर्धारणे सप्तमी, आ जागृविः, नित्यवेदितासि। (त्वम्) तनूकृत्, सर्वशरीराणां कर्ता। प्रमतिः च, प्रकृष्टा मतिरस्य, प्राज्ञवर्यश्च। (असि) एवं भूतः (नः) अस्मान् बोधि, बोधय, ज्ञानिनः कुरु। कुतः ? (हे) कल्याण, भद्र। त्वम्। कारवे, ज्ञानिने। विश्वम्, समस्तम्। वसु, मोक्षादिकम्। आ ऊपिषे, प्रार्पयसि। च स्तस्मादित्यर्थे ॥ ९ ॥

(हे) अग्ने त्वम्। प्रमतिः, प्रकृष्टज्ञानः (असि) त्वम्। नः, अस्माकम्। पिता असि, शरीरकर्तृत्वात्। त्वम्। वयस्कृत्, कालकृतशरीरावस्था वयः, तया– आयुरुपलक्ष्यते, आयुष्कृत्॥ न केवलं त्वं नः पिता, किं तु– वयम्। तव, ते। जामयः, भ्रातरः। (च), अङ्गिरसो ज्येष्ठपुत्रोऽग्निः, अतो हिरण्यस्तूपस्य भ्राता ज्येष्ठत्वात्पिता चेति युज्यते, हरेस्तु– एकगर्भे तेन सह वासाद्भ्रातृत्वं ज्ञेयम्। किं च, (हे) अदाभ्य, अहिंस्य। सुवीरम्, अतिविक्रान्तम्। व्रतपाम्, व्रतानां कर्मणां रक्षकम्। त्वा, त्वाम्। शतिनः, शतसंख्यावत्यः। रायः। सम् (यन्ति) प्राप्नुवन्ति। संयन्ति न केवलं शतिनः, (किं तु) सहस्रिणः, सहस्रसंख्यावत्यः। (रायः) सम् यन्ति, प्राप्नुवन्ति। वयं त्वत्सम्बन्धिनस्त्वं च धनिकोऽतोऽस्मान्धनवतः कुर्विति (भावः) ॥ १० ॥

इति त्रयस्त्रिंशो वर्गः ॥ ३३ ॥

## रूपावतारः

त्वमग्ने वृजिन । पिपर्षीति । पॄ पालनपूरणयोः इत्यतः लटि सिपि शपः श्लौ द्वित्वे 'अर्तिपिपर्त्योश्च' (७।४।७७) इत्यभ्यासस्येत्वे गुणे पिपर्षीति रूपम् । यज्ञसामान्यवाचकेन विदथशब्देन ज्ञानयज्ञो ग्राह्य इति भावेनाह । सद्विद्याख्य इति । परितक्म्ये इति । परिपूर्वात् तकेर्यप्रत्यये प्रत्ययस्य मुडागमे परितक्म्ये इति रूपम् ॥ ६ ॥

त्वं तमग्ने ॥ मर्तमिति । मृङः 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् इति तन् प्रत्यये मर्तमिति रूपम् । तातृषाण इति । तृषेर्लिटः कानचि द्वित्वे अभ्यासस्य छान्दसे संहितायां दीर्घे तातृषाण इति संहितायां रूपम् । प्रथ इति । तृतीयोऽतिशय इति इकारस्याकारे प्रय इति भवति । सूरये तु आविशेषात्ततृषाण इति । इतः परं प्रयः कृणोषीत्येव पाठः । नतु मयः कृणोषीति । अन्यथास्मिन्व्याख्याने प्रय इति व्यर्थं स्यात् ॥ ७ ॥

त्वंनो अग्ने ॥ अत एवेति । ज्ञानिनि विद्वद्रूढेः सद्भावादेव विश्वकर्मा इन्द्रो वेत्याह । अन्यथा कारुः कुलाल इत्यवक्ष्यत् इत्यर्थः । पुनरुक्तिप्रसङ्गादिति । कारु शब्दस्य ज्ञान्यर्थकत्वे 'सनये धनानामि'त्यनेन ज्ञानस्योक्तत्वात् पौनरुक्त्यं स्यादित्यर्थः ॥ ८ ॥

त्वंनो अग्ने पित्रोः ॥ ओपिष इति । आङ् पूर्वात् वपः (वप धातोः) लिटः थासि इडागमे थासः सभावे 'वचिस्वपिः...' (६।१।१५) इति संप्रसारणे द्वित्वे सवर्णदीर्घे आङः आद्गुणे षत्वे च ओपिष इति रूपम् ॥ ९ ॥

त्वमग्ने प्रमतिः ॥ शतिन इति । इतःपरं टीकायां शतसंख्यावत्य इति प्रक्षिप्तम् । तथा सहस्रिण इत्यतःपरं सहस्रसङ्ख्यावत्य इत्यपि प्रक्षिप्तम् । श्रुतौ स्त्रीलिङ्गस्य विशेष्यस्याभावेन पदद्वयस्य लिङ्गव्यत्ययनिरूपणप्रयोजनाभावात् । ततश्चैवं टीकावाक्यपाठः । शतिनः शतसङ्ख्यावन्तः रायः संयन्ति सहस्रिणः सहस्रसङ्ख्यावन्तश्च रायः संयन्तीति ॥ १० ॥ ३३ ॥

## पदार्थप्रकाशिका

त्वमग्ने वृजिन वर्तनिं नरम् । विचर्षणिशब्दाद्विविधप्रजेश इत्यर्थः कथं लभ्यत इत्यतस्तदुपपादयति । विविधा इत्यादिना । देवाद्या इति । आद्यशब्देन नरद्वीशग्रहणं प्रजा अस्येति । नियम्यतया सन्तीत्यर्थः । वर्तनम् आचरणम् । तथाच पापं पापकरं वर्तनी वर्तनम् आचरणम् आचारो यस्येत्यर्थः । वर्तनिशब्दस्यार्थान्तरमाह । मार्गो वेति । नरकप्राप्तौ मार्गो

(पदार्थप्रकाशिका)

यस्येत्यर्थः । मार्गो नाम पापानुकूलप्रयत्नो विवक्षित इत्यन्ये । एवं पदार्थमुक्त्वा तत्र भाष्यं सङ्गमयति । पापाचारं वेति । वाशब्दोऽप्यर्थ इत्यभिप्रेत्याह । पापाचारमपीति । दुःसंगत्या पापाचारवन्तमपि सज्जनमित्यर्थः । सद्मन् इत्यत्र निर्वचनत्वाद्धकारस्य ककार इत्यभिप्रेत्याह । दकारस्येति । पापाचारपुरुषपरमात्मनोरुभयोरपि प्रकृतत्वेन स्वे गृहे इति भाष्यस्य स्वशब्दस्य समभिव्याहृतपरत्वात् द्वेधार्थमाह । तदीये गृह इति । पापाचारपुरुषगृहे इत्यर्थः । दुःसंगात् पापाचारवन्तमपि पुरुषं सज्जनं स्वगृह एव सन्तमपि पिपर्षि पालयसि । सर्वकामैः पूरयसिचेति सम्बन्ध इति भावः ।

प्रसिद्धाग्निमपेक्ष्याह स्वर्ग इति । अग्निशब्देन भगवन्तमपेक्ष्याह । वैकुण्ठादाविति । पूरयसि चेति । समस्तकामैरिति शेषः । कथमिति । पापाचारवन्तं पुरुषं कथं वैकुण्ठादौ स्वर्गे वा पिपर्षि इत्यर्थः । तेन प्राप्तिसाधनस्याननुष्ठानादिति भावः । यज्ञ इति । पापापादकदुःसङ्गतिपरित्यागेन सत्संगतिं सम्पाद्य तेभ्यः श्रवणादिकं कृत्वा व्याख्यानादिरूपे ज्ञानयज्ञेऽनुष्ठिते सतीत्यर्थः । सम्प्रजात इत्यस्यार्थः । अनुष्ठित इति । भाष्ये सतीति शेषः । ऋचि विदथ इत्येवोक्तत्वात् सप्रजाते सतीति शेषो द्रष्टव्यः । पूर्वं विदथशब्दस्य यज्ञ नामसु पाठाद्यज्ञ सामान्यवाचित्वमभिप्रेत्य व्युत्पादयति । अथवेति । वेत्तेरिति । विदज्ञान इति धातोरित्यर्थः । तथाच विदु धातोः स्थक् प्रत्यये ककारस्य लोपे विदथेति रूपम् । कित्वाद्गुणाभावः । अन्यथा वेदथेति स्यादिति द्रष्टव्यम् । विदथेति शब्दो वाचको यस्याः सा तथोक्तेत्यर्थः । अनेनेति । सद्विद्याख्ये विदथ इति भाष्येणेत्यर्थः । कथमिति । युद्धं कथं शूरसाति शब्दवाच्यमित्यर्थः । तन्नामस्विति । शूरसातिशब्दस्य युद्धनामसु पाठादित्यर्थः । अनेन रूढिरूक्ता भवति । सूचयतीति । सातिशब्दार्थमात्रकथनादिति भावः । तद्धीति । युद्धमित्यर्थः । धर्मान्तरसमुच्चय इति । वृजिनवर्तनिं नरं सक्मन् पिपर्षि इत्यग्रेः पूर्वार्धेन वृजिनवर्तनिपालकत्व रूपो धर्म उक्तः । उत्तरार्धेन दारणागतैः प्रतिभठान् हंसीति वक्ष्यमाणधर्मांतरसमुच्चायको भाष्यस्थश्चशब्द इत्यर्थः । गतिकर्मस्विति । परितक्मशब्दस्य गत्यर्थकधातुषु पाठात् गत्यर्थात् परितक्मशब्दात् कर्मणि यत्प्रत्यये परितक्म्यमधिगम्यमिति भवति । धननिमित्ते । धनप्राप्ति निमित्ते । शक्त्या संख्ययावेति भाष्यं दभ्रेभिर्भूयस इत्युभयत्रापि सम्बन्ध्यत इत्यभिप्रेत्य व्याचष्टे । तैः शक्त्येत्यादिना । हंसीति । णिजन्तम् । हननं कारयसीत्यर्थः । स पिपर्षीति सम्बन्ध इति । यस्त्वमल्पैरपि भूयसोपि भठान् हंसि स त्वं पापाचारमपि नरं पिपर्षीति पूर्वेण सम्बन्ध इत्यर्थः ।। ६ ।।

त्वं तमग्ने अमृतत्व उत्तमे । योग्यतयेति । तत्सामर्थ्यात् स्तोतारमिति योग्यतया लभ्यत इत्यर्थः । तत्कृतस्तुतेरिति शेषः । इत्युक्तं भाष्यं तात्पर्यतो योजयति । तत्स्तुतिमिति । स्तोतुर्मुक्तत्वकरणे कथं

(पदार्थप्रकाशिका)

तत्कृतस्तुतिश्रवणं तस्येत्यत आह। मुक्तौहीति। ततृषाण इत्यप्रतीतेराह तृष्णातिशयवानिति। तथाच ज्ञानाख्य एनं स्तोतारं सुखिनं करिष्यामीत्यपेक्षातिशयवानित्यर्थः। स्वर्गाख्यमिति। अज्ञानत्वावस्थायां कृतेन काम्यकर्मणेत्यर्थः। चतुर्थी षष्ट्यर्थो एकवचनं च बहुवचनार्थ इत्यभिप्रेत्याह। मनुष्यादेवाश्चेत्यादि। आप्रयोमयः कृणोषीत्यन्वयभिप्रेत्यार्थमाह। आसमन्तादित्यादिना। ततृषाणस्तृष्णातिशयवान्। मय इति। अत्र आइत्यस्य ततृषाण इत्यनेनैत्र सम्बद्धत्वेन प्रय इत्यनेन सम्भन्धाभावात्। प्रय इत्येतदस्मिन्पक्षोऽप्रियमित्येतावन्मात्रार्थकमेव नतु नित्यं प्रियमित्यर्थकं तथाच सूरये आविशेषात्ततृषाणः प्रयः प्रियं मयः सुखं कृणोषीत्यर्थो द्रष्टव्यः। सन्दधासीति पूर्वेण सम्बन्ध इत्यर्थः॥ ७॥

त्वंनो अग्ने सनये धनानाम्। स्तवान इत्यग्नेः स्तोत्रकर्तृत्वप्रतीतेराह। स्तूयमान इति। समर्थानिनि। तथाच ज्ञानाख्यधनलब्धये समर्थानस्मान् कुर्वित्यर्थः। यशस्विन इति बहुवचनस्य सत्वाद्यशस्कारुमित्येकवचनं बहुवचनार्थ इत्याहम्।

यशस्विनः कारिणश्चेति। करोतेरुणि कृत इति। कृञ् करणे अस्पात् कर्तरि ऊण् प्रत्यये गुणे तस्य रपरत्वे णित्वादादिवृद्धौ च सत्यां निष्पन्नः कारुशब्दः करोतीति कारुरिति कारित्वमात्रवाचीत्यर्थः। ब्रह्मण आपरोक्ष्यं यावत् तावदित्यन्वयः। तत्वदर्शी। परोक्षज्ञानी। ननु करोतीति कारुरिति कारुशब्दः कर्मोपासनादिकर्तृसाधारण एवातः कथमपरोक्षज्ञानपर्यन्तमुपासनादिकर्तैव कारुरुच्यते। यज्ञादिकर्ता कारुः किं न स्यात्। कथमनेन शङ्कापरिहार इत्यत आह। एतदुक्तं भवतीति। उणादय इति। उण्प्रत्ययप्रभृतयः प्रत्यया इत्यर्थः। संज्ञायाम्। रूढार्थविवक्षायाम्। अतो विद्वद्रूढीति। उणादीनां प्रत्ययानां रूडार्थविवक्षायां विधीयमानत्वेनाज्ञरूढार्थविद्वद्रूढार्थस्यैव ग्राह्यत्वात्। विद्वद्भिश्च यत्किंचिद्यज्ञादिकर्मकर्तरि कारुशब्दस्याप्रयुज्यमानत्वात् उपासनादिकर्तर्येव तस्य प्रयुज्यमानत्वादुपासनादिकर्ता तत्वदर्श्येव उण्प्रत्ययान्तेन कारुरिति शब्देन ग्राह्य इत्यर्थः। (कारु शब्देन ग्राह्य इत्यर्थः) कारुशब्देन तत्वदर्शी ग्राह्य इत्यत्र नियामकान्तरमप्याह। प्रकर्षगति-विज्ञानाद्वेति। प्रकृष्टगतिर्विज्ञायते शब्दानामिति न्यायादित्यर्थः। प्रकृष्टा-मुख्या। गतिर्गमनिका व्याख्या विज्ञायते। उपादेयत्वेनेति शेषः। तथाच शब्दानां मुख्यमेव व्याख्यानमुपादेयमिति तदर्थः। मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायादिति। एवं च कारुशब्दस्य कारित्वमात्रार्थकत्वेऽपि कर्मोपासनादीनां मध्ये कर्मणः सकाशादुपासनादेर्मुख्यत्वात् कर्मकारिणः सकाशादुपा-सनादिकारिणोऽपि मुख्यत्वात्स एवोपासनादिकारी तत्त्वदर्शी कारुशब्देन ग्राह्य इत्यर्थ इति

(पदार्थप्रकाशिका)

सम्प्रदायः। प्रकर्षेण असाधारण्येन शब्दानां गतेः वृत्तेः व्यवहारस्थितेर्विज्ञानात् असाधारण्येन व्यपदेशा भवन्तीति, न्यायादित्यर्थः।

प्रकृते च कर्मकर्तुः सकाशादुपासनादिकर्तुस्तत्वदर्शिनो असाधारण्यसद्भावात्स एव कारुशब्देन ग्राह्य इत्यर्थ इत्यप्याहुः। अपरे तु। यत्र प्रवृत्तिनिमित्तस्य प्रकर्षः तत्र शब्दस्य गतिर्विज्ञायत इत्यर्थः। तत्त्वदर्शिनि च कारुत्वमुक्तमतः स एव कारुरित्यर्थ इत्याहुः। मुख्यामुख्ययोः मुख्ये सम्प्रत्यय इति न्यायेन मुख्यत्वात् कारुशब्देन तत्वदर्श्येव ग्राह्य इत्युक्तम्। तत्र शब्दस्य मुख्यार्थ (सम्प्रत्यय सति न्यायेन मुख्य) एव ग्राह्यो नामुख्यार्थ इत्येतावन्मात्र एवोपष्टम्भकमाह। अत एवेति। प्रकर्षगतिविज्ञानादेव। वृत्तिकारो निरुक्तिकारो यास्कः यथा कारुशब्दस्य सर्वसाधारण्येऽपि मुख्यत्वाद्विश्वकर्मादिरेव कारुशब्देन गृहीतः एवं प्रकृतेऽपीत्यर्थ इत्याहुः। वस्तुतस्तु। उणादयो हि संज्ञायां विधीयन्त इति विद्वद्रूढिपर्यालोचनया तत्वदर्शी कारुशब्देन ग्राह्य इत्युक्तम्। तत्र उणादयः संज्ञायां विधीयन्त इत्यत्र सम्मतिं आह। अत एवेति। उणादीनां प्रत्ययानां संज्ञायां विधीयमान-त्वादेवोण्प्रत्ययान्तेन कारुशब्देन रूढ्या विश्वकर्मादिरेव ग्राह्य इत्यवादीदुणादिवृत्तिकारः पाणिनिरेवमिहापीत्यर्थ इति सम्प्रदायः।

ननु तथापि कारुमित्यस्य ज्ञानिनमित्यर्थो भवेत्। ज्ञानदं चेत्यर्थस्तु कथम्। ज्ञानिनमित्यर्थकत्वेऽपि प्रज्ञाधनानां लब्धये समर्थान् कुर्वित्यनेनैव ज्ञानिनं कुर्वित्यर्थस्य लब्धत्वात् कारुमित्यस्यापि ज्ञानिनमित्यर्थकत्वे पुनरुक्तिः स्यादिति चेत्सत्यम्। अत एव पुनरुक्तिप्रसङ्गभयात् ज्ञानित्वार्थकेन कारुशब्देन ज्ञानिनां कार्यं ज्ञानदानं लक्ष्यते। अतो युक्तं ज्ञानदमिति भाष्यकारीयं व्याख्यानमित्याह। तथा चेति। प्रज्ञातिरिक्तानीति। प्रसिद्धानि धनानि विवक्षितानीति शेषः। यथा श्रुतेति। कारुं कारिणम्। उक्तरीत्या तत्त्वदर्शिनमिति व्याख्यानेऽपि न पुनरुक्तिदोष इत्यर्थः। अस्मिन् पक्षे ज्ञानदमित्येतन्न कारुशब्दार्थकथनपरम्। किन्तु ऋचि ज्ञानदं च कृणुहीति शेषपूरणमिति ज्ञातव्यम्। कर्मणेति। भगवत्सेवारूपेणेत्यर्थः। प्राकृतानामिति। अयमर्थः। पूर्वजन्मकृतानेकपुण्यनिचयेनेदानीं भगवत्सेवादिरूपं कर्म सम्पद्यते। तथा चेदानीं भगवत्सेवारूपकर्माख्यफलसम्पत्या पूर्वकृतं कर्म समृद्धं सफलं भवतीत्यभिप्रायेण नूतनेन भगवत्सेवारूपकर्मणा पूर्वकृतं कर्म ऋध्याम इत्युक्तमिति।

ननु हे द्यावापृथिव्यौ युवां नः प्रावतमिति द्यावापृथिवीकर्तृकरक्षणप्रार्थनेन तयोरेवात्र देवतात्वं प्रतीयते तदयुक्तम्। अस्य सूक्तस्याग्नेयत्वेन तस्यैव देवतात्वावश्यंभावेन यथाग्नेरेव प्राधान्यं तथा

(पदार्थप्रकाशिका)

पादस्याभिप्रायमाह । यथावयवमिति । यथा प्रावतमिति सम्बन्धः । अस्माभिः कर्तव्यायामग्निसेवायां युवां विघ्नान् परिहरतमिति भावः । तथा सेव्यतयोग्नेरेव प्राधान्यप्राप्त्या देवतात्वोपपत्तिरित्यवधेयम् ।। ८ ।।

त्वं नो अग्ने पित्रोरुपस्थे । कथमुपस्थशब्देन समीपमुच्यत इत्यत आह । उपतिष्टन्त इति । अत्रेति । प्रदेश इत्यर्थः । समीपं-समीपप्रदेशमित्यर्थः । तयोः - प्रकृतिपुरुषयोः । कुत इति । कुतो ज्ञानिनः कर्तव्या इत्यर्थः । ज्ञानिन इत्येतत् ज्ञानिनो नैवेति सावधारणं व्याख्येयम् । यद्यपि ओ पिष इत्येतत् वप् बीज तन्तु सन्तान इत्यस्य रूपम् । तथापि धातूनामनेकार्थत्वात्प्रापणार्थत्वं युक्तमिति द्रष्टव्यम् । कुत इति पूर्वमेवावतारितत्वादाह । चस्तस्मादिति । यस्मात् ज्ञानिन एव विश्वं वसु ओपिषे तस्मादस्मानपि ज्ञानिनः कुरु तेनास्माकमपि मोक्षादिकं भविष्यतीति भावः ।। ९ ।।

त्वमग्ने प्रमतिस्त्वं पितासि नः । तयेति । अवस्थयेत्यर्थः । मुख्यार्थबाधे तद्योगे रूढितोऽथप्रयोजनात् । अन्यार्थो लक्ष्यते यत्सालक्षणारोपिता क्रियेति वचनात् । लक्षणार्थगतैवशब्दैस्तत्वध्यस्थो व्यापार इति मतानुसारेणावस्थाया आयुरुपलक्ष्यत इत्युक्तमिति ज्ञातव्यम् । शब्दगतेति पक्षे तु तयेत्यस्यातथेत्यस्यावस्थावाचकवयः पदेनेत्यर्थः इति व्यारंव्येयम् । हिरण्यस्तूपस्य कथमग्निभ्रातृत्वम् । अग्नेर्हिरण्यस्तूपं प्रति पितृत्वं च कथमुपपन्नमि-त्येतस्तदुपपादयन्नाह । अङ्गिरस इति । हिरण्यस्तूपस्य इति । अग्नेः कनिष्ठपुत्रस्येत्यर्थः । ज्येष्ठत्वादिति । ज्येष्ठो भ्राता पितुः सम इति वचनादिति भावः । परमेश्वरस्येत्यतः पूर्वम् अध्यात्ममिति शेषः । वासत इति । समानं वृक्षं परिषस्वजात इति श्रुतेरिति भावः । राया धनानि । ननु समुद्रत्वे तव किम् । ममापि तद्देहीति चेत् न । मम तव च सम्बन्धाभावादित्यतो ऋगभिप्रायमाह । वयं त्वत्सम्बन्धिन इत्यादिना ।।१०,३३।।

## पदार्थदीपिका

सद्मन् सद्मनीति ।। सुपां सुलुगिति सप्तम्या लुक् ।। पिपर्षीति ।। सिपि पिप्रतौ द्विर्भावे ह्रस्वोरदत्वहलादिशेषाः । आर्तिपिपर्त्योश्चेति अभ्यासस्येत्वमिति भावः ।। भावे थगिति ।। वेदनं विदथं इति भावे थक् । कित्वात् लघूपधगुणाभावः इति बोध्यम् ।। शूरसाताविति ।। वनषण सम्भक्तावित्यस्मात् क्तिनन्तः सातिशब्दः । जनसनखनांचसनूझलोरिति आत्वम् । सुपां सुलुगिति सप्तम्या डादेशः । हंसि । हन्तेः सिपि नश्चापदान्तस्य झलीति अनुस्वार इत्यर्थः ।। ६ ।।

(पदार्थदीपिका)

ततृषाण इति ॥ लिट् कानच् । संहितायां दीर्घः छान्दसः । कृणोषि । कृविहिंसाकरणयोः । धिन्विकृण्व्योरचेत्युप्रत्ययः ॥ ७ ॥

स्तंवान इति ॥ सम्यनच् स्तुव इति बहुवचने केवलस्यापि स्तौतेरानच् प्रत्यय इति ज्ञेयम् । कृणुहि । उतश्चप्रत्ययात् छन्दो वा वचनमिति हेर्लुगभाव इति भावः ॥ उणि कृत इति ॥ णित्वादादिवृद्धिरिति भावः ॥ पुनरुक्तीति ॥ प्रज्ञाधनानामिति व्याख्यानुसारेण धनानां सनय इत्यनेनैव ज्ञानित्वोक्तेरित्यर्थः ॥ न दोष इति ॥ ज्ञानित्वस्य धनानां सनय इत्यनेनालाभेन पौनरुक्त्याभावादिति भावः ॥ ८ ॥

उपस्थ इति ॥ सुपि स्थ इति तिष्ठतेः कः । आतो लोप इटि चेत्याकारलोपः ॥ जागृविरिति ॥ जभृसृजागृविभ्यः क्विन्निति किन् । कित्वाद्गुणाभावः ॥ बोधीति । बुध अवगमने । बहुलं छन्दसीति शपो लुक् । वा छन्दसीति हेरपित्वस्य विकल्पितत्वेन पित्वादङित्वे सति अङितश्चेति हेर्धिरादेशः । लघूपधगुणः । धातोस्त्यलोपश्चेति द्रष्टव्यम् । उपिष इति ॥ डुवप् बीजसन्ताने । छान्दसो लिट् । थासः से । वचिस्वपीत्यादिना सम्प्रसारणम् । परपूर्वत्वं, द्विर्भावहलादिशेषौ । क्रादिनियमादिट् इति ध्येयम् ॥ ९,१०, ३३ ॥

## टीकाविवृतिः

त्वमग्ने वृजिति ॥ विशब्दस्य विविधार्थत्वे चर्षणिशब्दस्य मनुष्यनामसु पाठात् प्रजार्थत्वेपि विविधप्रजेश इति भाष्योक्तेशत्वं कस्यार्थ इत्याशङ्कायां तस्य बहुव्रीह्यर्थत्वं दर्शयति ॥ विविधा इति ॥ षष्ठ्यर्थस्तु स्वस्वामिभाव इति भावः । कलुषं वृजिनैनोघमित्यमरोक्तेर्वृजिनं पापमित्यर्थमङ्गीकृत्य वर्तनिशब्दस्यार्थद्वयमाह ॥ वर्तनिर्वर्तनं मार्गो वेति ॥ वर्तनं प्रवृत्तिः प्रयत्न इति यावत् । पापरूपःप्रयत्नो यस्य स वृजिनवर्तनिरित्यर्थः । वर्तनीमलिने पृथीति विश्वोक्तेर्वृजिनं वर्तनी मार्गो नरकादेः साधनं यस्येत्यर्थे बहुव्रीहौ गोस्त्रियोरुपसर्जनस्येति ह्रस्वः । प्रथमपक्षे वर्तनशब्दाकारस्य तृतीयोतिशय इतीकार इति भावः । वाव्ययं स्यात्समुच्चय इत्येकाक्षररत्नमालोक्त्याश्रयेणाह ॥ पापाचारमपीति ॥ सद्मन्निति ॥ सप्तम्याःसुपां सुलुगिति लुकि नङि संबुध्योरिति नलोपनिषेध इति भावः । स्वे गृहे इति भाष्यं द्वेधा व्याचष्टे ॥ तदीये गृहे त्वदीये वेति ॥ उभयोः प्रकृतत्वादिति भावः ॥ पृपालनेति ॥ अस्माल्लटि सिपि शपः श्लौ द्वित्वे । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वे द्वितीयस्योदोष्ठ्यपूर्वस्येत्यतः परत्वाद्गुणे पिपर्षीति रूपमिति भावः ॥ कथमिति ॥ विष्णुःपापाचारं

(टीकाविवृतिः)

कथं पालयेत् वैषम्यनैर्घृण्यप्राप्तेरित्याशयः ॥ यज्ञनामेति ॥ अध्वरः विदथ इति यज्ञनामसु पाठादिति भावः । विदथे संप्रजाते इत्यधिकरणे सप्तम्याःप्रकृते असङ्गतेराह ॥ तेनानुष्ठिते सतीति शेष इति ॥ पापाचारेणापि विष्णुप्रीतये यज्ञे अनुष्ठिते इत्यर्थः । सतीत्येव शेषोक्तिःश्रुतौ बोध्या । विद्यायाः यज्ञसादृश्याद्गौण्या वृत्त्याविदथशब्दप्रतिपाद्यत्वमंगीकृत्येदानीं योगवृत्त्या तद्वक्तुमाह ॥ अथवेति ॥ रुदिविदिभ्यां ङिदित्यथ प्रत्यये तस्य ङित्वाद्गुणाभाव इत्याशयेन कित्वङित्वयोर्गुणनिषेध-कत्वसाम्यादथक्प्रत्यये इत्युक्तं वृत्तिविशेषे किदिपाठं दृष्ट्वा वा ॥ सद्विद्यैवेति ॥ अनेन सद्विद्याख्ये इत्यनेन भाष्येण । सद्विद्यैव विदथशब्दा विदथ इति शब्दो वाचको यस्याः सा विदथशब्दवाच्येति भाष्यकार आचष्टे इत्यर्थः ॥ तन्नामसु पाठादिति ॥ प्रधने शूरसाताविति सङ्ग्रामनामसु पाठादित्यर्थः ॥ लाभे वर्तत इति ॥ षै क्षये इत्यस्माद्धातूनामनेकार्थत्वेन लाभार्थात् क्तिनि आदेच उपदेशेशितीत्यात्वेसातिशब्दनिष्पत्तेरिति भावः ॥ धर्मान्तरसमुच्चये इति ॥ परिपूर्वात्तकते-रौणादिकक्यपो मुडागम इति भावः ॥ दभ्रा अल्पा इति ॥ स्तोकाल्पक्षुल्लकाःसूक्ष्मं श्लक्ष्णं दभ्रं कृशं तन्वित्यमरोक्तेरिति भावः । शक्त्या संख्यया वेति भाष्यं दभ्रेभिर्भूयस इत्युभयत्र सङ्गमयति ॥ शक्त्येति ॥ य इत्यनेनाक्षिप्ततच्छब्दस्यान्वयमाह ॥ सपिपर्षीति संबन्ध इति ॥ ६ ॥

त्वंतम् ॥ तव स्तोतारमिति भाष्यस्य ऋक्स्थपद व्याख्यानरूपत्वाभावात्तद्बीजं दर्शयति ॥ श्रवस इति वक्ष्यमाणत्वादिति ॥ ऋचि श्रवस इत्येतत्संबन्धिनोनुक्तेराह ॥ तत्कृतस्तुतेरिति शेष इति ॥ भक्तकृतस्तुतेरित्यर्थः ॥ ञितृषपिपासायामित्यतो लिटश्छान्दसे कानजादेशे द्वित्वादौ च संहितायामभ्यासस्य छान्दसं दैर्घ्यमिति भावेनाह ॥ तातृषाणस्ततृषाण इति ॥ व्यत्ययेनात्मनेपदस्याभ्यासदैर्घ्यस्य चार्थः प्रीत्याधिक्यादिति भाष्योक्त इति भावः ॥ मयःसुखमिति ॥ शेवृधं मयः इति सुखनामसु पाठादिति भावः । तृतीयोतिशय इत्यनेन प्रियशब्दे इकारस्याकारे प्रय इति रूपे जातेऽतिशयितसुखार्थत्वमात्रलाभेपि नित्यत्वालाभादाह ॥ आ इत्येतत्प्रत्यय इत्यनेनेति ॥ ननु प्रय इत्यत्रविद्यमानत्ययेनैव नित्यत्वरूपातिशयलाभादा इत्येतत्संबोधो व्यर्थः । अस्यां योजनायां ज्ञानिनःस्वर्गसुखाभावश्च प्रतीयत इत्यत आह ॥ यद्वेति ॥ आ इत्येतत्ते नततृषाणशब्देन संयोज्यमित्यर्थः । अस्मिन्पक्षे योजनां दर्शयति ॥ सूरये त्विति ॥ आचेति चशब्दस्तुशब्दार्थ इति भावः । मयः प्रयश्चेति शेषः । एतौ अकारान्तौ विभक्तिव्यत्ययेन द्वितीयान्तौ । ज्ञानी त्वात्मैव मे मतमित्युक्तेर्ज्ञानिने फलं दातुमतितृष्णायुक्तत्वात्संसारावस्थायांमयः स्वर्गसुखम् । तदनन्तरं प्रयो मोक्षसुखं च । कृणोषीति ॥ ७ ॥

(टीकाविवृतिः)

त्वं नो अग्ने सनये ।। स्तौतेःकर्मणि लटःशानजादेशे छान्दसे यगभावे बहुलं छन्दसीति शपो लुगभावे च सार्वधातुकेतिगुणे च स्तवान इति रूपमिति भावेनाह ।। स्तवानोऽस्माभिःसंस्तूयमान इति ।। यशसमित्यत्र गुणवचनेभ्यो मतुपो लुगिष्ट इत्यनेन मतुपो लुग्वचनव्यत्ययश्चेत्याशयेनाह ।। यशसं यशस्विनं यशस्विन इति ।। ननु तर्हि ब्रह्मापरोक्षपर्यन्तमुपासनादि- कर्तृत्वमेव कारुशब्दार्थः स्यान्न तु तत्वदर्शित्वं अक्षरानुगुण्याभावादित्यत आह ।। एतदुक्तं भवतीति ।। संज्ञासु धातुरूपाणीत्युक्तेरुणादीनां संज्ञायां विधानमिति भावः ।। विद्वद्रूढीति ।। तत्वज्ञानिन्यपि विदुषां कारुशब्दप्रयोगाद्विद्वद्रूढिरिति भावः । यौगिकत्वपक्षेप्याह ।। प्रकर्षगतिविज्ञानादिति ।। कारुमिति विशेषणोपादानसामर्थ्यात्सर्वसाधारणकर्तृत्वरूपार्थं विहायकारुशब्दस्य प्रकर्षार्थे ज्ञानार्थमुपा-सनादिकरणरूपोत्कर्षार्थे गतिःप्रवृत्तिस्तस्याः विज्ञानात्तत्वदर्शी तात्पर्यार्थत्वेन ग्राह्य इत्यर्थः ।। तर्हि कारुशब्दस्य ज्ञानिनमित्यर्थे वक्तव्ये कथं ज्ञानदमित्यर्थ उक्त इत्यत आह ।। तथा चेति ।। प्रज्ञाधनानां लब्धये समर्थानित्युक्त्या ज्ञानित्वप्राप्तेः पुनरुक्तिरूपमुख्यार्थबाधाल्लक्षणया ज्ञानदानं गृह्यत इत्यर्थः । ज्ञानिकार्यमित्यनेन लक्षणाबीजसंबन्धकथनं बोध्यम् । प्रकारान्तरेण पुनरुक्तिं परिहरति ।। यदा त्विति ।। यदा धनानामित्यस्य हिरण्याद्यर्थत्वं तदा कारुमित्यस्य तत्वदर्शिनमिति व्याख्यानेपि न पुनरुक्तिदोष इत्यर्थः ।। अपसा कर्मणेति ।। अपः अप्न इति कर्मनामसु पाठादिति भावः । श्रुतितात्पर्यपरं समृद्धिं च प्राप्नुम इति भाष्यं योजयित्वा तत्तात्पर्यमाह ।। प्राक्तनानामिति ।। प्रावतमिति ।। अवतेर्लोटि मध्यमपुरुषद्विवचनमेतत् ।। अस्याग्निसूक्तत्वात् द्यावापृथिवीप्रार्थना युक्तेस्तदानुगुण्येन योजयति ।। यथा वयमिति ।। ८ ।।

त्वं नो अग्ने पित्रोः ।। उपतिष्ठन्तेऽत्रेति ।। उपपूर्वात्तिष्ठतेरधिकरणे औणादिकःकप्रत्यय इति भावः । यद्यप्युपसमीपे तिष्ठतीत्युपस्थ इति कर्तरि आतश्चोपसर्ग इति कप्रत्यये समीपस्थ इति भाष्यानुगुण्यं भवति तथापि श्रुतौ पदकाराणां सप्तम्यंतपाठानुरोधेन समीपमात्रार्थपरतया व्याख्यातमिति ज्ञेयम् । समीपस्थत्वस्य माहात्म्यानुपयोगात्तात्पर्यमाह ।। सदैव तयोर्नियन्तेति ।। तयोःप्रकृतिपुरुषयोः ।। निर्धारणे सप्तमीति ।। यतश्च निर्धारणमिति सूत्रेण जातिगुणक्रियादिभिः समुदायादेकदेशस्य पृथक्करणे षष्ठीसप्तम्योर्विधानाद्देवशब्दान्नित्यनेतृत्वगुणेन पृथक्करणविवक्षायां सप्तमीति भावः ।। बोधि बोधयेति ।। णिजन्ताद्बुधेर्लोटि सिपि हित्वे अतो हेरिति शपि हिलोपे बहुलं छन्दसीति शब्लोपे अकृतव्यूहाःपाणिनीया इतिन्यायेन णिचो गुणाभाव इति भावः ।। ओपिष इति ।। वपतेश्छन्दसि लुङ्लृङ्लिट इति कालसामान्यार्थे लिटि थासःसेभावे इडागमे वचिस्वपीति संप्रसारणे द्वित्वे सवर्णदीर्घे ऊपिषे इति सिद्धे आङा सन्धिः संहितायामिति भावः ।।

(टीकाविवृतिः)

चस्तस्मादित्यर्थ इति ।। तेन यस्मादिति ग्राह्यम् । यस्माज्ज्ञानिने मोक्षादिकं ददासि तस्मान्नःज्ञानिनः कुर्वित्यन्वयः ।। ९ ।।

त्वमग्ने प्रमतिः ।। ज्येष्ठत्वात्पिता चेति ।। पितृसमो ज्येष्ठ इत्युक्तेरिति भावः ।। वासतोद्वयोरपीति ।। परमेश्वरहिरण्यस्तूपयोरेकस्मिन्देहे वासादित्यर्थः ।। परमस्य त्वितीति ।। जीवःपरमस्य तु विष्णोर्नित्यं भ्राता एकस्मिन्देहे वासत एव नत्वेकपितृजन्यत्वादिति संबन्ध इति भावः ।। अदाभ्य अहिंस्येति ।। दभेर्दभ्नोति श्रथतीति वधकर्मसु पाठादिति भावः ।। शतसंख्यावत्य इति ।। प्रजा इति शेषः ।। वयमिति ।। शतसंख्यावत्यःसहस्रसंख्यावत्यश्च प्रजा अस्मदादयःरायो धनानि च त्वां प्राप्नुवन्ति यतः अतो वयं त्वत्संबन्धिनस्त्वं च धनिक इत्याशयः ।। १० ।।

ऋक्संहिता पदपाठसहिता (सू-३१, व-३)

(३६१) त्वामंग्ने प्रथममायुमायवें देवा अंकृण्वन्नहुंषस्य विश्पतिम् ।।
इळांमकृण्वन्मनुंषस्य शासंनीं पितुर्यत्पुत्रो ममंकस्य जायंते॥११॥

(प०) त्वाम् । अग्ने । प्रथमम् । आयुम् । आयवें । देवाः । अकृण्वन् । नहुंषस्य । विश्पतिम् ॥ इळाम् । अकृण्वन् । मनुंषस्य । शासंनीम् । पितुः । यत् । पुत्रः । ममंकस्य । जायंते ॥ ११ ॥

(३६२) त्वं नों अग्ने तवं देव पायुभिर्मघोनों रक्षतन्वंश्च वन्द्य ॥ त्राता तोकस्य तनंये गवांमस्यनिमेषं रक्षंमाणस्तवं व्रते ॥ १२ ॥

(प०) त्वम् । नः । अग्ने तवं । देव । पायुऽभिः । मघोनंः । रक्षः । तन्वंः । च । वन्द्य ॥ त्राता । तो कस्यं । तनंये । गवांम् । असि । अनिंऽमेषम् । रक्षंमाणः । तवं । व्रते ॥ १२ ॥

(२६३) त्वमंग्ने यज्यंवे पायुरन्तंरोऽनिषङ्गायं चतुरक्ष इंध्यसे ॥ यो रातहंव्योऽवृकाय धायंसे कीरेश्चिन्मन्त्रं मनंसा वनोषि तम् ॥ १३ ॥

(प०) त्वम् । अग्ने । यज्यंवे । पायुः । अन्तंरः । अनिषङ्गायं । चतुःऽअक्षः । इध्यसे ॥ यः । रातऽहंव्यः । अवृकायं । धायंसे । कीरेः । चित् । मन्त्रंम् । मनंसा । वनोषिं । तम् ॥ १३ ॥

(ऋक्संहिता पदपाठसहिता)

(३६४) त्वम॑ग्न उरु॒शंसा॑य वा॒घते॑ स्पा॒र्हं यद्रेक्णः॑ पर॒मं व॒नोषि॒ तत् ॥
आ॒ध्रस्य॑ चि॒त्प्रम॑तिरुच्यसे पि॒ता प्र पाकं॒ शास्सि॒ प्रदिशो॑
वि॒दुष्ट॑रः ॥ १४ ॥

(प०) त्वम् । अ॒ग्ने॒ । उ॒रु॒ऽशंसा॑य । वा॒घते॑ । स्पा॒र्हम् । यत् । रेक्णः॑ ।
पर॒मम् । व॒नोषि॑ । तत् । आ॒ध्रस्य॑ । चि॒त् । प्रऽम॑तिः । उ॒च्य॒से॒ ।
पि॒ता । प्र । पाक॑म् । शास्सि॑ । प्र । दिशः॑ । वि॒दुःऽत॑रः ॥१४॥

(३६५) त्वम॑ग्ने॒ प्रय॑तदक्षिणं॒ नरं॒ वर्मे॑व स्यू॒तं परि॑पासि वि॒श्वतः॑ ॥
स्वा॒दु॒क्षद्मा॒ यो व॑स॒तौ स्यो॑न॒कृज्जी॑वया॒जं यज॑ते
सोप॒मा दि॒वः ॥ १५, ३४ ॥

(प०) त्वम् । अ॒ग्ने॒ । प्रय॑तऽदक्षिणम् । नर॑म् । वर्म॑ऽइव । स्यू॒तम् ।
परि॑ । पा॒सि॒ । वि॒श्वतः॑ ॥ स्वा॒दु॒ऽक्षद्मा॑ । यः । व॒स॒तौ ।
स्यो॒न॒ऽकृत् । जी॒व॒ऽया॒जम् । यज॑ते । सः । उ॒प॒ऽमा ।
दि॒वः ॥ १५, ३४ ॥

ऋग्भाष्यम्

आयो राज्ञो हृदये प्रेरकत्वादायोरायुर्न हुषस्याधिपश्च । चक्रुर्देवादेहसृष्ट्यैव तस्य यन्नामांतर्यामिणो जीवगश्च । नामार्थभाग्वासुदेवो हि शक्त्या तेन ह्यायुः प्रथमो सा विहोक्तः । मनुर्नाम्ना मनुषस्तस्यचेलापुत्रीनामास्या अपि विष्णोः सदैव । इळेड्यत्वादुपजीव्यत्वतश्च स एवायुरयनाज्ज्ञानतश्च । तच्छास्यत्वाच्छासनीमानवीळा तच्छासकत्वाच्छासनी वासुदेवः । ममत्वकर्तुर्हि पितुः स पुत्रः स्वातंत्र्यं च ममता नान्यदस्ति ॥ ११ ॥ त्वं नो मघोनोयजमानस्य तन्वस्तवैव रक्षाशक्तिभी रक्ष देव । च शब्देन ज्ञानभक्त्यादिकंच सदास्माकं यजमानस्य चाद्धा । त्राता तोकस्य पुत्रस्य चत्वं सन्ततित्वात्तनयस्यास्य सूनोः । गवां च त्वं रक्षिता ज्ञानसौख्यवाचां वाद्धैवानिमेषान् सुरांश्च । संरक्षमाणस्त्वद्व्रते तैः प्रवृत्ते ॥ १२ ॥ यज्योश्चत्वं पालकोह्यन्तरश्च । नितरां यः सङ्गहीनोऽनिषङ्गस्तस्मै भक्त्या दीप्यसे ज्ञानदृष्ट्या । द्विशीर्षत्वाच्चतुरक्षोधियज्ञो द्वेशीर्षे इति

(ऋग्भाष्यम्)

वागुत्तरत्र । योदत्तहव्यस्तेऽति सौम्यायपीत्यै कर्तुर्मन्त्रं सम्भजसे हितस्य ॥ १३ ॥ महास्तोत्राय वदते स्पार्हमिष्टं रेक्णः सुखं परमं तद्ददासि । आसमन्ताद्धारकस्यापि वायोः प्रज्ञानदः प्रोच्यसेत्वं पिता च । प्रशास्सि त्वं परिपकाधिकारं प्रदेशकत्वादखिलं त्वं सुवेत्ता ॥ १४ ॥ धृतं वर्मेव परिपासि नित्यं प्रयत्नाद्योदक्षिणादो मखेषु । स्वादुक्षद्मा सुखगेहो गृहेच स्योनं सुखं यः परेषां करोति । यावज्जीवं यजने सुप्रतिज्ञो भूत्वाच यो यजते तस्य सैव । द्युप्राप्तिभावे ह्युपमा देह एव क्षमेति वा वसतिर्ज्ञानमार्गे ॥ १५, ३४ ॥

## ऋग्भाष्यटीका

त्वामग्ने । अत्रायव इति चतुर्थी षष्ठ्यर्थे । नहुषस्येत्यादि प्रकरणात् । न च षष्ठ्यर्थः सम्बन्धोत्रास्ति । क्रियाहेतुकत्वात्तस्य । न चात्र क्रिया श्रूयते । तथा च घटस्य पट इति वदायोरायुरित्यसम्बद्धमित्यत आह ॥ आयोरिति । राज्ञो राजविशेषस्येत्यायोरित्यस्य व्याख्यानम् । हृदये स्थित्वा प्रेरकत्वादित्यध्याहृतक्रियागर्भसम्बन्धार्था षष्ठीत्युक्तं भवति । आयोरायुरित्यनेनापि षष्ठ्याः साधुत्वमेवोच्यते । न त्वायुत्वम् । तत्समाधानस्याद्याप्यनुक्तत्वात् । वक्ष्यमाणत्वाच्च । नहुषस्य विश्पतिमित्ययुक्तं राजा हि विश्पतिः न चाग्निर्नहुषस्य राजेत्यत आह ॥ नहुषस्येति । विश्पतिशब्दोऽधिपतिमात्रार्थ इति भावः । अधिपत्वं च हृदये प्रेरकत्वेन विवक्षितम् । तथापि देवा अकृण्वन्निति कथं न हीश्वरं वा तदीयं प्रेरकत्वं वा देवाः कृतवन्त इत्यत आह ॥ चक्रुरिति ॥ आय्वादीनां देह सृष्ट्यैव देवाश्चक्रुरित्युच्यते । न त्वीश्वरस्य तदीयप्रेरणाशक्तेर्वा सृष्ट्येत्यर्थः । एतदुक्तं भवति । आय्वादि शरीरप्रेरकत्वमत्र षष्ठ्योक्तम् । अत एव हि हृदय इत्यभिहितम् । शरीर प्रेरणं चासति शरीरे न सम्भवति । अतः शरीरं सृष्टवन्तो देवाः प्रेरकं सृष्टवन्त इत्युपचारेणोच्यत इति । तथाप्यायुमिति कथमित्यत आह ॥ तस्येति । जीवगं यन्नाम तदन्तर्यामिणस्तस्येश्वरस्य च भवतीत्यायोः प्रेरकोप्यायुर्भवति । प्रथमत्वं कस्य विशेषणं कथं चेत्यत आह ॥ नामार्थेति ॥ यस्माद्वासुदेवः शक्त्या स्वातन्त्र्येण नामार्थभागायुशब्दप्रवृत्तिनिमित्तवांस्तेनासाविह प्रथम आयुरुक्तः । द्वितीयो हिशब्दः प्रसिद्धौ । ननु द्वितीयान्त आयुशब्दे क्रियावचने व्याख्याते सर्वं सुस्थम् । किमनेनाध्याहारादिना । मैवम् । एवं व्याख्याने माहात्म्याधिक्यलाभात् । मनुषस्येळामित्युच्यते तत्र को मनुषः का चेळेत्यत आह ॥ मनुरिति । अत्र तस्य पुत्रीळेति निर्देशार्थं स्वरूपकथनं न तु सम्बन्धकथनम् । शासनीशब्देनैव सम्बन्धस्योक्तत्वात् । नन्वत्र त्वामिति सम्बध्यते न वा नेति चेदाग्नेयत्वानुपपत्तिः । द्वितीये कथमीश्वरस्येळात्वमित्यत आह ॥ नामेति ॥ अस्याः मनुपुत्र्याः यदिळेति नाम तत्सदा विष्णोरेवातस्त्वामिळामिति युक्तम् । कथमिळाशब्दो विष्णोर्नामेत्यत आह ॥ इळेति । विष्णुरिति सम्बन्धः । ईड्यत्वादित्यनेनेडस्तुतौ अस्मात् घञर्थे कविधानमिति कर्मणि को ह्रस्वता चेत्युक्तं भवति ।

(ऋग्भाष्यटीका)

डस्य लत्वं स्त्रीरूपत्वात्स्त्रीलिङ्गं च प्रसिद्धमेव । इळा पृथिवी सा यथा सर्वेषामुपजीव्या तथोपजीव्यत्वतश्चेळा । प्रागायुशब्दो विष्णोर्नामेत्युक्तं प्रसङ्गात्तमिदानीं निर्वक्ति । स एवेति । अयनात् गमनात् । गत्यर्थानां ज्ञानार्थत्वात् । ज्ञानतो ज्ञानवत्त्वतश्च । इणः छन्दसीत्युण् । मनुषस्य शासनीत्येतद्व्याचष्टे । तदिति । यदेळा मानवी मनोः पुत्री विवक्षिता तदा तच्छास्यत्वात्तेन मनुना शास्यत्वान्मनुषस्य शासनीति व्याख्येयम् । यदा तु वासुदेवः तदा तच्छासकत्वात्तस्य मनोः शासकत्वान्मनुषस्य शासनीति व्याख्यातव्यम् । एतदुक्तं भवति । कर्तृकर्मणोः कृतीति कृद्योगे कर्तरि कर्मणि च षष्ठी स्मर्यते । तथा कृत्यल्युटो बहुल मिति कर्तरि कर्मणि च ल्युट् । तत्राद्ये कर्तरि षष्ठी । कर्मणि ल्युट् । द्वितीये तु विपर्यय इति । चतुर्थपादतात्पर्यमाह ।। ममत्वेति ।। अनेन ममत्ववाचिन्यव्यये मम शब्द उपपदे करोतेर्ड इत्युक्तं भवति । पितुः मनोः । स वासुदेवः । हीत्यस्यार्थस्य पुराणप्रसिद्धतामाह । परमेश्वरं प्रति मनोः कथं पितृत्वमित्यत आह ।। स्वातन्त्र्यं चेति । मनोरीश्वरं प्रति स्वातंत्र्यं पितृत्वमिति यावत् । ममतैव । नान्यज्जनकत्वमस्ति । गौण्यैव वृत्त्या पितेत्यर्थः । अनेन ममकस्येत्येतदुक्तप्रयोजनं भवति । ततश्चायमृगर्थः । हे अग्ने देवाः भूताद्यभिमानिनः । प्रथममायुं मुख्यया वृत्त्यायुशब्दवाच्यं त्वामायोरौर्वशे यस्य राज्ञः । प्रेरकमकृण्वन् । आयुदेहं सृष्ट्याऽकुर्वन्निव । किञ्च न हुषस्य राज्ञो विश्पतिं प्रेरकं च त्वामुक्तविधयाऽकुर्वन् । अपि च । मनुषस्य शासनीं मनुना या शिक्षणीया या तत्पुत्रीळा तदन्तर्यामिणं च मनोः शिक्षकं त्वामकृण्वन् । कथं भूतामिळाम् । यत् या इळा ममकस्य ममापत्यमिति भावं कुर्वाणस्य पितुः पुत्रो जायते । त्वत्प्रेरणयैवैषां राज्ञां प्रभाव इति भावः ।। ११ ।।

त्वंनः । हे वंद्योऽग्ने देव त्वं नोऽस्मदीयस्य । मघोनो धनवतो यजमानस्येति यावत् । तन्वः द्वितीयार्थे षष्ठ्येषा । तनुम् । तनूशब्दस्य तदवयववृत्तिताभ्युपगमेन द्वितीयाबहुवचनं वा । तव पायुभिः पातेरुण् । तवैव रक्षाशक्तिभी रक्षाकरणीभिः शक्तिभी रक्ष । तन्वश्चेति चशब्देन यजमानस्य ज्ञानभक्त्यादिकं च समुच्चिनोति । यद्वा । नोस्माकं तन्वो मघोनो यजमानस्य च तन्व इति व्याख्येयम् । यावदायुः अवस्थानं स्वतः सिद्धं किं प्रार्थनेनेत्यत उक्तम् । सदा अपमृत्युपरिहारेणेति यावत् । अद्धाऽऽमयादिपरिहारेणेति । किञ्च । त्वन्तोकस्यास्मात्पुत्रस्य च त्रातासि भवेति यावत् । न केवलं पुत्रस्य किन्तु तनसये तनयस्य । अस्य पुत्रस्य सूनोरपि त्राता भव । ननु तनयशब्दः पुत्रनाम । स कथं पौत्रार्थतया व्याख्यायत इत्यत आह ।। सन्ततित्वादिति ।। न तनयशब्दः पुत्रस्यैव नाम किन्तु तनुविस्तार इत्येतद्रूपत्वात् सन्ततेर्वाचकः पौत्रस्यापि सन्ततित्वाद्युक्तं तदर्थतया व्याख्यानम् । ननु पुत्रोपि तनयो भवति तथापि तोकशब्देन तस्योक्तत्वान्न तदर्थो व्याख्यातः । ननु तोकशब्दोप्यपत्यसामान्यनाम । सत्यं पुनरुक्तिपरिहाराय विभिन्नविषयत्वे वक्तव्ये प्रथमप्राप्तः पुत्रार्थो द्वितीयः पौत्रार्थो व्याख्यात इति । किञ्च । गवां चा स्मदादिसम्बन्धिनीनां धेनूनां च त्वं त्राता रक्षिता भव । एवं तोकस्य तनयस्य गवामिति पदत्रयं बाह्ये

(ऋग्भाष्यटीका)

व्याख्यातम् । अध्यात्मं व्याख्याति । ज्ञानेति । तोकस्य तनयस्य गवामिति पदत्रयं यथासंख्यं ज्ञानसौख्यवाचामिति व्याख्यातव्यम् । अद्धैवेत्ययं मुख्यार्थ इत्युक्तम् । पुत्रो हि तोकशब्दः ज्ञानं चात्मनो जायत इति पुत्रः । ज्योतिर्हि पुत्रः परमे व्योमन् इति च श्रुतिः । ज्ञानजन्यत्वात्सौख्यं पौत्र शब्दं गावो वाच इति तु प्रसिद्धम् । कथंभूतः । यस्त्वमनिमेषमनिमेषान्सुरांश्च । रक्षमाणः संरक्षमाणो रक्षसि । कुतः । तव व्रते त्वद्व्रते त्वद्विषये कर्मणि । तैर्देवैः प्रवृत्तेऽनुष्ठिते सतीति शेषः ॥ १२ ॥

त्वमग्ने यज्यवे । यज्योश्च । हे अग्ने त्वं यज्यवे यज्योर्यष्टुः । पायुः पालकश्चान्तरोंऽतर्यामी चासि । अन्तः क्रियाः प्रवर्तयसि बहिः फलं ददासीति प्रसिद्धमित्यर्थः । किञ्च । यो यज्युरनिषङ्गो नितरां सङ्गहीनः । सामर्थ्यान्निर्नञा सम्बन्धः । तस्मा अनिषङ्गाय यजनफलतया स्वर्गादिक मकामयमानाय । तादर्थ्ये चतुर्थी । चतुरक्षस्त्वं भक्त्याराधितो ज्ञानदृष्ट्या ज्ञानदृष्टिं दत्वेति यावत् । इध्यसे । इन्धी दीप्तौ । दीप्यसे प्रतीयसे । चतुरक्षत्वमग्नेः कथमित्यत आह । द्विशीर्षत्वादिति । प्रतिशिर्षं द्व्यक्षत्वाच्चेति शेषः । अधियज्ञोग्निः । स हि यज्ञमधिकरोति । द्विशीर्षत्वं कुत इत्यत आह ॥ द्वे इति । च॒त्वारि॒ शृंगा॒ त्रयो॑ अस्य॒ पादा॒ द्वे शी॒र्षे स॒प्त हस्ता॑सो अस्येत्युत्तरत्र वागस्ति । कथं भूतो यष्टा । योऽवृकाय वृक इति क्रूरस्य प्राणिविशेषस्य नाम । क्रूरे तदुपचर्यते । तस्य नञा समासः । अतिसौम्याय ते तुभ्यं धायसे धेट् पाने भावेऽसुन् । पीत्यै पानाय । रातहव्यः रा दाने । दत्तहव्यः । हव्यं च सोमाज्यक्षीरादिकम् । न केवलं तदीयेन ह विषा प्रीयसे । किन्तु कीरेः त्वत्सेवायाः कर्तुः । ऋत्विक् नामत्वेपि कर्तृत्वमेव निमित्तम् । तस्य अनिषङ्गस्य । तं भक्त्योच्चारितं मन्त्रं चिन्मन्त्रमपि । मनसा तुष्ट्या । वनोषि सम्भजसे हि ॥ १३ ॥

त्वमग्न उरु । महास्तोत्राय । हे अग्ने त्वमुरुः शंसो यस्यासावुरुशंसस्तस्मै महास्तोत्राय । वाघते वदते । स्तोत्रे ऋत्विङ्नामत्वेप्येतदेव निमित्तं यत्स्पार्हं स्पृहणीयमिष्टं परमं रेक्णः धननामैतत् । सुखमेव च परमं धनमिति सुखं तद्वनोषि । दानार्थोयमत्रेति ददासि । कथं भूतः यस्त्वमाध्रस्य चित् आसमन्ताद्धारकस्यापि । महीध्र इति यथा । वायोः स हि सप्तस्कन्धगतो लोकान् यो बिभर्तिमहाबल इत्यादिना समन्ताद्धारकः प्रसिद्धः । प्रमतिः प्रकृष्टा मतिर्यस्मादिति प्रज्ञानदः पिता चोच्यसे सद्भिःप्रोच्यसे । यश्चत्वं प्रपाकं प्रकृष्टपाकवन्तं परिपक्वाधिकारम् । आविर्भूतज्ञानयोग्यत्वं पुरुषं प्रशास्सि । प्रकर्षेण शिक्षयसि । प्रदिशः प्रदेशकः । इगुपधलक्षणः कः । इदं च प्रपाकं शास्सीत्यनेन पुनरुक्तमित्यतो हेतुत्वेन व्याख्याति । प्रदेशकत्वादिति । सामान्यं विशेषे हेतुः । अत एवाखिलम् अखिलस्येत्युक्तम् । यश्चत्वं विदुष्टरो विद्वत्तरः । अखिलं सुवेत्ता तृन्नंतत्वाद्द्वितीया ॥ १४ ॥

त्वमग्ने प्रयत । धृतम् । हे अग्ने त्वम् । प्रयतदक्षिणं प्रयतो दक्षिणायाम् । प्रयतदक्षिणः । यो मखेषु प्रयत्नाद्दक्षिणादस्तं नरं मनुष्यम् । विश्वतो विश्वस्मिन्काले नित्यम् । परिपासि परितो रक्षसि । किमिव ।

(ऋग्भाष्यटीका)

स्यूतमनुस्यूतम्। धृतं वर्मेव कवचमिव। पुनः कथंभूतं नरं यः स्वादुक्षद्मा स्वाद्विति सुखहेतुत्वमुच्यते। ककारागमेन क्षद्मेति सद्म। सुखगेहः सुखसाधनानि गेहानि यस्मात्परेषां भवन्तीति। सुग्रहाणां दातेति यावत्। यश्च वसतौ गृहे स्वीये। स्योनकृत्। स्योनं सुखं परेषाम् अतिथीनामन्नदानादिना करोति। अत एव पुनरुक्तिभिया स्वादुक्षद्मा स्वा द्वन्नदातेति न व्याख्यातम्। यश्च जीवयाजं यजते जीवस्य जीवतो याजो यज्ञो जीवयाजः जीवनेन व्याप्तो यज्ञः। तं यजते अनुतिष्ठतीत्यर्थः। यावन्मरणं यो यज्ञं करोति तमग्निः कदा रक्षिष्यतीत्यत स्तात्पर्यमाह॥ यावदिति। यश्च यावज्जीवं यजने सुप्रतिज्ञो दृढदीक्षो भूत्वा यजत इति। यथोक्तसकल विशेषणस्य नरस्य किमैहिकी रक्षैव प्रयोजनम्। नेत्युच्यते किं तु स्वर्गादिकं पारत्रिकमपि फलं भवति। कुतः। आगमात्। तत्रैव कुतो विश्वास इत्यत उक्तं सोपमादिवः। तस्योक्तविशेषणस्य नरस्य दिवः प्राप्ताविति शेषः। द्युप्राप्तिभावे सैवोपमा हि। सेतिका देहे सत्येव या क्षमेति वा। या ज्ञानमार्गे वसतिर्निष्ठेति वा स्त्रीलिङ्गेनाकाङ्क्षापूरणीयेति। एतदुक्तं भवति। आगमोक्तेन साधनेनैहैव क्षमादिकं फलमुपलभ्यते तदुपमानेन पारत्रिकमप्यनुमीयत इति॥ १५, ३४॥

## मन्त्रार्थमञ्जरी

(हे) अग्ने। भूताद्यभिमानिनः देवाः। प्रथमम्। आयुम्, मुख्यया वृत्त्यायुशब्दवाच्यम्, अयतेः उणन्ततया (एतेः उणन्ततया) ज्ञानित्वार्थकत्वात्) त्वाम्। आयवे, षष्ठ्यर्थे चतुर्थी, आयोः, और्वशेयस्य राज्ञः। विश्पतिम्, प्रेरकम्। अकृण्वन्, आयुदेहसृष्ट्याकुर्वन्निव। किं च, नहुषस्य, राज्ञः। (विश्पतिम्) प्रेरकम्। (च) (त्वाम्)। तद्देहनिर्माणेन (अकृण्वन्) अकुर्वन्निव। अपि च, मनुषस्य, मनोः। शासनीशिक्षणीया येळा तदन्तर्यामितया मनोः शासकतया च शासनीम् इळाम् अकृण्वन्। कथं भूतामिळाम्? यत्, येळा। ममकस्य, ममत्वार्थे 'मम' इत्यव्यय उपपदे करोतेः डः, 'ममापत्यम्' इत्यभिमानं कुर्वतः। पितुः पुत्रः जायते। 'मम पुत्रः' इत्यभिमानमात्रम्, न वस्तुतः पुत्र इति॥ ११॥

(हे) वन्द्य अग्ने देव त्वम्। नः, अस्मदीयस्य। मघोनः, धनवतः, यजमानस्येति यावत्। तन्वः, तन्वाः, द्वितीयार्थे षष्ठी, तनूशब्दस्य तदवयववृत्तिताभ्युपगमेन द्वितीयाबहुवचनान्तं वा तव पायुभिः, पातेः उणू, तवैव रक्षाशक्तिभिः। रक्ष, अपमृत्युनिरासेन पालय। 'तन्वश्च' इति चशब्देन यजमानस्य ज्ञानभक्त्यादिकं समुच्चिनोति। यद्वा नः, अस्माकम्,। मघोनः, यजमानस्य। च तन्वः इति व्याख्येयम्। किं च, (त्वम्) तोकस्य, अस्मत्पुत्रस्य। (च) त्राता। (असि), भवेति यावत्। न केवलं पुत्रस्य, किं तु तनये, तनयस्य, अस्य पुत्रस्य) सूनोरपि, पौत्रस्यापि। (त्राता) (असि),

(मन्त्रार्थमञ्जरी)

भव। अन्यथा– तोकपदेन पौनरुक्त्यात्। किं च, गवाम्, (च) अस्मदादिसम्बन्धिनां गवां धेनूनां च। (त्राता) रक्षिता। (असि) भव। यस्त्वम् अनिमेषम् अनिमेषान्, सुरान्। (च) रक्षमाणः असि। कुतः ? तव व्रते, त्वद्विषयकर्मणि। (तैर्दैवैरनुष्ठिते सति) इति शेषः। अध्यात्मं तु– तोकस्य, (तनये) तनयस्य, गवाम्' इति पदत्रयं क्रमाज्ज्ञानसौख्यवाग्वाचकम्, ज्ञानस्यात्मतोकत्वात्, सुखस्य च ज्ञानजत्वात् (वाचां गोपदवाच्यत्वेन प्रसिद्धत्वाच्च) अन्यत्समानम्॥ १२॥

(हे) अग्ने त्वम्। यज्यवे, यज्योः, यष्टुः। पायुः, पालकः। (च)। अन्तरः, अन्तर्यामी। (चासि), अन्तः क्रियाः प्रवर्तयसि, बहिः फलं ददासि। किं च, (यः) यज्युः। अनिषङ्गो नितरां सङ्गहीनः, सामर्थ्यान्नेर्नञा सम्बन्धः, तस्मै अनिषङ्गाय, यजनफलतया स्वर्गादिकमकामयमानाय, तादर्थ्ये चतुर्थी। 'चत्वारि शृङ्गा' (ऋ० म० ४।५८।३) इत्यादेर्द्विशीर्षत्वात् चतुरक्षः (त्वम्)। भक्त्या (आराधितः) (ज्ञानदृष्ट्या) ज्ञानदृष्टिं दत्त्वेति यावत्। इध्यसे, 'ञिइन्धी दीप्तौ', दीप्यसे, प्रतीयसे। कथं भूतो यष्टा ? यः, वृकाय, 'वृकः' इति क्रूरस्य प्राणिविशेषस्य (ईहा मृगस्य) नाम, क्रूरे तदुपचर्यते, तस्य नञा समासः, अतिसौम्याय। (ते), तुभ्यम्। धायसे, 'धेट् पाने' भावेऽसुन्, पानाय। रातहव्यः, दत्तहव्यः, हव्यं च– सोमाज्यक्षीरादिकम्। (तस्मै) 'यज्यवे इध्यसे' इति पूर्वेणान्वयः। न केवलं तदीयेन हविषा प्रीयसे, किं तु कीरेः, त्वत्सेवायाः कर्तुः। (तस्य) अनिषङ्गस्य। तम्, भक्त्योच्चारितम्। मन्त्रम् चित्, मन्त्रमपि। मनसा, तुष्ट्या। वनोषि, सम्भजसे। (हि)॥ १३॥

(हे) अग्ने त्वम् (उरुशंसाय) उरुः शंसो यस्यासावुरुशंसस्तस्मै महास्तोत्राय। वाघते, वदते, स्तोत्रं कुर्वते, (वै० नि० ३।१८) ऋत्विङ्नामत्वेऽप्येतदेव निमित्तम्। यत्। स्पार्हम्, स्पृहणीयम्, इष्टम्। परमम्। रेक्णः, धननामैतत् (वै० नि० २।१०) सुखमेव च 'परमं धनम्' इति सुखम्। तत्। वनोषि, ददासि, दानार्थोऽत्र वनतिः, उविकरणम्। कथं भूतः ? (यः) त्वम्। आध्रस्य चित्, आ समन्ताद्धारकस्यापि, 'महीध्रे' (अम० २।३।२) इत्यत्रेव दधातेः ड्रप्रत्ययः, वायोः, स हि 'सप्तस्कन्धगतो लोकान्यो बिभर्ति महाबलः' इत्यादिना धारकः प्रसिद्धः। प्रमतिः, प्रकृष्टा मतिर्यस्मादिति प्रज्ञानदः। पिता (च) उच्यसे। (यश्च) त्वम्। प्र पाकम्, प्रकृष्टपाकवन्तम्, परिपक्वाधिकारम्, आविर्भूतज्ञानयोग्यताकं पुरुषम्। (प्र) शास्सि, प्रकर्षेण शिक्षयसि। कुतः ? प्र दिशः, प्रदेशकः, 'इगुपधज्ञाप्रीकिरः कः' हेतुगर्भम्, उपदेष्टृत्वादित्यर्थः। (यश्च), त्वम्। विदुष्टरः, विद्वत्तरः, अखिलज्ञ इत्यर्थः। (सः) 'वनोषि' इति पूर्वेणान्वयः॥ १४॥

(मन्त्रार्थमञ्जरी)

(हे) अग्ने त्वम् । प्रयतदक्षिणम्, प्रयतो दक्षिणायां प्रयतदक्षिणः, यो मखेषु प्रयत्नाद्दक्षिणादस्तम् । नरम्, मनुष्यम् । विश्वतः, विश्वस्मिन्काले, नित्यम् । परिपासि, परितो रक्षसि । किमिव? स्यूतम्, 'षिवु बन्धने', अनुस्यूतम्, धृतम् । वर्मेव, कवचमिव । पुनः कथं भूतं नरम् ? यः । स्वादुक्षद्मा, 'स्वादु' इति सुखहेतुत्वमुच्यते, ककारागमेन 'क्षद्म' इति सद्मोच्यते, स्वादूनि सुखसाधनानि क्षद्मानि सद्मानि यस्मात्परेषां भवन्तीति, सुगृहाणां दातेति यावत् । (यः) (च) वसतौ, स्वगृहे । स्योनकृत्, स्योनं सुखं परेषामतिथीनामन्नदानादिना करोति । (यः) (च) जीवयाजम् यजते, जीवस्य जीवतो याजो यज्ञो जीवयाजः, जीवनव्याप्तो यज्ञः, तं यजतेऽनुतिष्ठति, यावज्जीवं यो यज्ञं करोति । (तम्) इति पूर्वेणान्वयः । एवंभूतस्य किमैहिकरक्षैव प्रयोजनम् ? न इत्युच्यते, किं तु स्वर्गादिकं पारत्रिकं च भवति, कथम् ? दिवः, स्वर्गादेः प्राप्तौ । सः, भगवज्ज्ञानमार्गेऽभिनिवेशः । (एव) उपमा, दृष्टान्तः, शास्त्रोक्तसाधनानुष्ठानेनेष्टादिफलोपलम्भोऽधुनोपलभ्यमानः 'पारत्रिकसुखमस्ति' इत्यत्रानुमानं भविष्यतीत्यर्थः ॥ १५ ॥ इति चतुस्त्रिंशो वर्गः ॥ ३४ ॥

## रूपावतारः

त्वामग्ने ॥ राज्ञ इति भाष्यस्थं पदमनूद्य राजविशेषपरत्वेन स्वयं व्याख्याय भाष्यपदस्य आयोरित्येतत् व्याख्येयमिति दर्शयति । राज्ञ इति । आयोरायुरित्यनेन षष्ठ्याः साधुत्वमायुः शब्दवाच्यत्वं चेति द्वयं प्रतिज्ञायत इति भ्रमं वारयति । आयोरायुरित्यनेनापीति । कुत इत्यत आह तत्समाधानस्येति । आयुशब्दवाच्यत्वं कथमित्याशङ्कासमाधान- स्याद्याप्यनुक्तत्वादित्यर्थः । वक्ष्यमाणत्वाच्चेति । तस्य 'यं नामान्तर्यामिणो जीवगं च' इत्यनेन वक्ष्यमाणत्वाच्चेत्यर्थः । संबन्धस्योक्तत्वादिति । षष्ठ्या सामान्येनोक्तस्य संबन्धस्य विवृतत्वादित्यर्थः । आग्नेयत्वानुपपत्तिरिति । इतःपरं द्वितीय इति 'प्रक्षिप्तम् । आद्य इत्युच्छिन्नम् । ततश्चैवं टीकावाक्यपाठः । 'आद्ये कथमीश्वरस्यैळात्वमिति' । अवश्यं चैतदेवं विज्ञेयम् । नेति चेदाग्नेयत्वानुपपत्तिरित्यनेनैव द्वितीयपक्षस्य दूषितत्वेनाद्यपक्षस्यैव दूषणीयत्वात् । 'छन्दसीण' (उ.२) इति सूत्रमर्थतोऽनुवदति । इणःश्छन्दसीति । इणः उणि वृद्धौ आयादेशे आयुरिति रूपम् ॥ ११ ॥

त्वं नो अग्ने ॥ अस्य पुत्रस्य सूनोरिति । पौत्रस्येत्यर्थः ॥ १२ ॥

(रूपावतारः)

त्वमग्ने यज्यवे ॥ यज्यव इति । यजेः 'यजिमनिशुधिदसिजनिभ्यो युच्' इति युच्प्रत्यये उणादेशे बाहुलिकत्वात् 'युवोरनाकौ' (७।१।१) इत्यनादेशाप्रवृत्तौ चतुर्थ्यैकवचने यज्यव इति रूपम् । यष्टुरिति । यजेस्तृचि "व्रश्च...." (८-२-३६) इति षत्वे षष्ठ्यैकवचने यष्टुरिति रूपम् । पायुरिति । पातेरुणि 'आतो युक्' (७।३।३३) इति युकि पायुरिति रूपम् । इध्यस इति । इन्धी दीप्तावित्यतः कर्मणि लटि थासः सेभावे यकि "अनिदिताम्..." (६-४-२४) इति नकारलोपे इध्यस इति रूपम् । प्राणिविशेषस्येति । श्वापदस्येत्यर्थः । तस्येति । गौणस्य वृकशब्दस्येत्यर्थः । भावे असुनिति । 'आदेच उपदेशिति' (६।१।४५) इत्यात्वे छान्दसे युगागमे चतुर्थ्येकवचने धायस इति रूपम् । कीरेरिति । कृञः 'अचइः' (उ.५८८) इति इकारप्रत्यये धातुऋकारस्य ईकारे रपरत्वे षष्ठ्यैकवचने कीरेरिति रूपम् ॥ १३ ॥

त्वमग्न उरु शंसाय ॥ महास्तोत्रायेति । शिष्यकृतमहास्तोत्र- विषयायेत्यर्थः । वाघत इति । वदेः शत्रन्तस्य छान्दस उपधादीर्घे दकारस्य घकारे चतुर्थ्येकवचने वाघते इति रूपम् । आध्रस्येति । आङ्पूर्वात् धृ इत्येतस्मादौणादिके कप्रत्यये यणादेशे षष्ठ्येकवचने आध्रस्येति रूपम् । सामान्यमिति । अखिलोपदेशकत्वात्सामान्यपरिपकाधिकारोपदेशकत्वे विशेषे हेतुरित्यर्थः । अखिलमित्येतदुभयत्र संबध्यत इति भावेनाह । अत एवाखिलमिति । अखिलमिति प्रतीकधारणम् । प्रदिश इति कृद्योगात् षष्ठ्या भाव्यमिति द्योतनाय अखिलस्येति प्रतिपदग्रहणमिति विवेकः । तृन्नन्तत्वादिति 'न लोकाव्यय निष्ठ...' (६।३।६९) इति द्वितीयापवादकषष्ठीनिषेधेन 'कर्मणि द्वितीया' (२।३।२) इत्यनेन द्वितीयेति भावः ॥ १४ ॥

त्वमग्ने प्रयत ॥ ककारागमेनेति । सदेर्मनिन् प्रत्यये धातोः कुडागमे 'आदेशप्रत्यययोः' इति धात्वादेः सस्य षत्वे क्षद्मेति रूपम् इति भावः । देहे सत्येवेति अस्मिन्नेव देहे क्षमालाभार्थं ज्ञानमार्गवसत्यर्थं वेदोक्ते कर्मणि कृते अस्मिन्नेव देहे या क्षमा या च ज्ञानमार्गे वसतिर्लभ्यते तदुभयं वेदोक्तकर्मणा दिवः प्राप्तिर्भवतीति । निश्चयायोपमा भवतीति भावः । स्त्रीलिङ्गेनेति । पदकाले स इति पुल्लिङ्गतया श्रूयमाणं पदं सेति स्त्रीलिङ्गतया विपरिणम्य उपमाशब्देनान्वेतव्यमिति भावः ॥ १५ ॥ ३४ ॥

## पदार्थप्रकाशिका

त्वामग्ने प्रथममायुमायवे । चतुर्थी षष्ठ्यर्थ इति । अहल्यायै जारेतिवदिति भावः । कुत इत्यत आह नहुषस्येत्यादीति । आदिपदेन मनुष्यममकस्येत्यनयोर्ग्रहणम् । न चात्रेति । तथा चायव इति

(पदार्थप्रकाशिका)

चतुर्थ्याः षष्ठ्यर्थत्वेनायोरिति षष्ठ्यर्थः सम्बन्धो तव नास्ति इत्यर्थः । कुतो नास्तीत्यत आह । क्रियेति । तस्य षष्ठ्यर्थसम्बन्धस्य राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसम्बन्धस्य नियामकत्वस्य नियमनरूपक्रियानिमित्तकत्वदर्शनादित्यर्थः । अस्तु तर्हि तद्वदेवायोरिति षष्ठ्यसम्बन्धस्यापि क्रियाहेतुकत्वमित्यत आह । न चात्रेति । राज्ञः पुरुष इत्यत्र तु पुरुषशब्दसन्निधानान्नियमन रूपक्रिया श्रुतप्रायैवेति सम्भवति । तत्र नियामकत्वरूपषष्ठ्यर्थसम्बन्धस्य तद्धेतुकत्वम् । न चात्र तथास्ति इत्यर्थः । नन्वायोरायुमिति सम्बन्धकत्वाद्द्वितीयान्तायुशब्दैवायनादिप्रदमित्येवं ज्ञानदानरूपक्रियावाचितया व्याख्याने तद्धेतुकः षष्ठ्यर्थः सम्बन्धः सम्भवतीति चेत् । स्यादेवं यदि द्वितीयान्तायुशब्द उक्तरीत्या क्रियावाची स्यात् । न चैवम् । किन्तु षष्ठ्यन्तायुशब्दवत् प्रसिद्धायुराजार्थक एव । तथाच पटस्य पट इतिवददायोरायुमित्ये- तदसम्बद्धार्थकमेवापन्नमित्याह । तथा चेति । आयो राज्ञ इत्युक्त्या आयुशब्दो राजशब्द पर्याय इति प्रतीयते । अतो राज्ञ इत्यस्यार्थमाह । राज्ञो राजविशेषस्येति । ओर्वशेयस्येत्यर्थः । अध्याहृतेत्यादि । अध्याहृता या क्रिया हृदये अवस्थानरूपो तद्गर्भो यः सम्बन्धः प्रेरकत्वरूपस्तदर्थका आयोरिति षष्ठीत्यर्थः ।

नन्वायोरित्यस्यैवायोराज्ञहृदये स्थित्वा प्रेरक इत्यर्थकत्वे भाष्ये आयोराज्ञो हृदये प्रेरकत्वादित्ये तावतापूर्णत्वेनायोरायुरित्येतद्व्यर्थं स्यात् । तेन ज्ञायते आयोरायुम् आयुराज्ञो नियामकमित्यायुत्वं विधीयत इति तत्राह । आयोरायुरित्यनेनापीति । हृदये प्रेरकत्वादित्यस्य क्रियाध्याहारेण यथा आयोरिति षष्ठ्याः साधुत्वकथने तात्पर्यम् । तथा आयोरायुरित्यस्यापि अनुपपत्तिदर्शनद्वारा षष्ठ्याः साधुत्वकथन एव तात्पर्यम् । नत्वायोरायुत्वं विधेयम् । तथाच भाष्यमध्याहारेणेत्थं योज्यं तथाहि । ऋचि आयोरायुरित्यायुत्वं विधेयमित्युच्यते । तदयुक्तम् । उक्तरीत्या पटस्य पट इतिवदसम्बद्धार्थकत्वादित्याशंकायामुच्यते । आयो राज्ञ इति । प्रतीकग्रहणसमय एव व्याख्यातमिदम् । आयो राज्ञ इत्युपपद्यते । क्रियाऽश्रवणात् कथं षष्ठी उपपद्यत इत्यत उक्तम् । हृदये स्थित्वा प्रेरकत्वादिति । ऋच्यध्याहारकरणादिति योज्यम् । अत एवायोरायुरित्येतत्पूर्वं आयोराय इत्यस्यावतारिकासमये व्याख्यातम् । तथाच पटस्य पट इति वदायोरायुरित्यसम्बद्धमिति । तथाचायोरायुरित्यनन्तरं पटस्य पट इतिवदसम्बद्धमिति शेषः पूरित इति ज्ञातव्यम् ।

नन्वेवं कुतो योजनीयम् । आयोरायुरिति भाष्येणायुत्वं विधेयमेव किं न स्यादिति चेत्तत्राह । तत्समाधानस्येति । ययोरायुत्वं विधेयं स्यात्तदा आयोरायुरित्युभयोरेकायुराजार्थकत्वेन पटस्य पट इतिवदसम्बद्धार्थकत्वं स्यादिति शंकायाः द्वितीयायुशब्दस्यार्थान्तरमुक्त्वा समाधानं वाच्यं स्यात् । न

(पदार्थप्रकाशिका)

च तत्समाधानमुक्तम् । अर्थान्तरस्यानुक्तेः । अत उक्तरीत्यानुपपत्तिप्रदर्शनद्वारा षष्ठ्याः साधुत्वकथन एव तात्पर्यमिति ज्ञायत इति भावः । किं चैतच्छंकासमाधानाय द्वितीयायुशब्दस्य यन्नामन्तरित्यादिनार्थान्तरस्य वक्ष्यमाणत्वाच्चात्रायुत्वं नैव विधेयमित्याशयेनाह । वक्ष्यमाणत्वाच्चेति । राजाहीति । विश्पतिशब्दो राजपर्याय इत्यर्थः । न चाग्निरिति । नहुषस्य राजा तत्पिता आयुराज एव । नत्वग्निरित्यर्थः । हृदय इति । हृदये स्थित्वा प्रेरकत्वरूपाधिपतित्वमेव विश्पतिशब्दार्थतया विवक्षितम् । इदं चाग्नेर्युक्तमेवेति भावः । नहीत्यादि देवाविश्पतिमकृण्वन्निती-श्वरकरणोक्तेर्देवाः आयोरकृण्वन्नित्यायोयोराज्ञे हृदये प्रेरकमकृण्वन्निति प्रेरकत्वकरणस्य चोक्तरीत्यार्थः । प्रेरकत्वं प्रेरणाशक्तिम् ।

कथमननोक्तशंकापरिहार इत्यत आह । एतदुक्तं भवतीति । नन्वायोरिति षष्ठ्या शरीरप्रेरकत्वमुक्तमिति कथं ज्ञायत इत्यत आह । अत एवेति । शरीरप्रेरकत्वकथनार्थत्वादेवेत्यर्थः । हृदय इतीति । तस्य देहैकदेशित्वादिति भावः । अभिहितं भाष्ये । तथाच देहैकदेशवाचिना हृदयशब्देन समग्रदेहो लक्षणया ग्राह्य इत्याशयः । आयुमिति कथमिति । द्वितीयान्तायुशब्दस्य षष्ठ्यन्तायुशब्दापेक्षयाभिन्नार्थत्वं कथमित्यर्थः । आयोः प्रेरकोपीति । आयोरित्यनेनायोः प्रेरकत्वेनोक्तोपि द्वितीयान्तायुशब्दवाच्यो भवतीत्यर्थः । कथं चेति । केन प्रवृत्तिनिमित्तेनेत्यर्थः । शक्यैत्यनेन द्वितीयशंकापरिहारः । असावित्यादिना प्रथमत्वं द्वितीयान्तायुशब्दवाच्यस्य वासुदेवस्य विशेषणमित्युक्त्या प्रथमशङ्कापरिहारः । इह अस्याम् ऋचि । तथा चानेन द्वितीयांतायुशब्दस्य षष्ठ्यन्तायुशब्दापेक्षयार्थान्तरकथनेन पटस्य पट इतिवदसम्बद्धार्थत्वशङ्का परिहृतेति ज्ञातव्यम् । प्रसिद्धाविति । स्वातन्त्र्यस्य मुख्यतः शब्दप्रवृत्तौ निमित्तत्वं राजाजयीत्यादौ प्रसिद्धमित्यर्थः । यथोक्तम् । स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तौ हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात्कुतो राज्ञि जयोऽन्यथेति । क्रियावचन इति । आयुरादिदातृत्वरूपक्रियावचन इत्यर्थः ।

सर्वं सुस्थमिति । षष्ठ्यर्थसम्बन्धस्य क्रियाहेतुकत्वात्प्रकृते च क्रियाया अश्रवणादसम्बद्धार्थत्वमित्याशङ्कापरिहारो भविष्यतीत्यर्थः । किमनेनेति । द्वितीयान्तायुशब्दस्य क्रियावचनत्वे आश्रिते सति आयोरिति षष्ठ्यर्थसम्बन्धस्यापि लाभेन हृदये स्थित्वा प्रेरणादिरूपाध्याहृतक्रियागर्भसम्बन्धार्थं षष्ठीति कल्पनमनुचितमित्यर्थः । एवं व्याख्यान इति । उक्तरीत्याध्याहारादिनायोरिति षष्ठ्यर्थसम्बन्धमभिधाय द्वितीयान्ता युशब्दस्य क्रियावचनत्वमनङ्गीकृत्यायुराजान्तर्यामितया आयुमित्युक्तरीत्या व्याख्याने कृते सति आयुराजान्तर्यामित्वरूपमाहात्म्याधिक्यलाभादित्यर्थः । मनुर्नाम्नेति भाष्यम् । विवस्वतः पुत्रो वैवस्वताख्यः श्राद्धदेवोत्र

(पदार्थप्रकाशिका)

मनुशब्देनोच्यते। तत्पुत्री इलेत्येतत् ततो मनुः श्राद्धदेवः संज्ञायामास भारत। अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल। मित्रावरुणयोरिष्टिं प्रजार्थमकरोत्प्रभुः। तत्र श्रद्धा मनोः पत्नी होतारं समयाचत। दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता। होतुस्तद्व्यभिचारेण कन्येलानाम सा भवदिति नवमस्कन्धे प्रसिद्धमित्यवगन्तव्यम्।

ननु भाष्ये पुत्रीति किमर्थमुक्तम्। न च मनुष्यस्येलामिति षष्ठ्यर्थसम्बन्धस्य मनुनाशास्यत्वरूपस्य श्रुत्या स्वयमेवोक्तत्वादित्यत आह। अत्रेति। अत्र भाष्ये। इला तस्य मनोः पुत्रीति स्वरूपकथनमात्रम्। न तु मनुष्यस्येति षष्ठ्यर्थसम्बन्धकथनपरमित्यर्थः। स्वरूपमपि किमर्थं कथनीयमित्यत उक्तं निर्देशार्थमिति। व्यवहारार्थमित्यर्थः। यद्यप्यत्र मनुनाशास्यत्वात् मनुष्यस्येलेत्युपपद्यते। तथाच पुत्रीति भाष्ये व्यर्थम्। तथापि मनुस्त्रियोपि मनुनाशास्यत्वादेषामनुनाशास्येला किं मनुस्त्रीति व्यवहर्तव्या। पुत्रीति वेति जिज्ञासायाम् एषा पुत्रीत्येव व्यवहर्तव्येति सूचनार्थं भाष्ये पुत्रीत्युक्तमिति भावः। अत्र इलामित्यत्र। हे अग्ने इलां त्वामकृण्वन्निति सम्बध्यते नवेत्यर्थः। नेति चेदिति इलां त्वामित्यनुक्तौ यस्यकस्यचिदिलात्वप्राप्त्याऽग्निदेवताकत्वानुपपत्तिरित्यर्थः। द्वितीय इति। परस्परद्वितीयत्वमभिप्रेत्याद्यस्यापि द्वितीयत्वमित्यवगन्तव्यम्। मनुपुत्र्याः वैवस्वतमनुपुत्र्याः। विष्णुरिति सम्बन्ध इति विष्णोरित्यत्रत्यायाः षष्ठीविभक्तेर्व्यत्ययमभिप्रेत्यैवमुक्तमिति द्रष्टव्यम्।

कर्मार्थे कप्रत्ययस्याविहितत्वात् घञर्थेकविधानमितीत्युक्तम्। इति वार्तिकादित्यर्थः। घञर्थस्तु कर्मापि भवतीति भावः। तथाच ईडस्तुतावित्यस्माद्धातोः कर्मणि कप्रत्यये ककारलोपे इकारस्य ह्रस्वे डकारस्य लत्वे च सति इलेति प्रातिपदिकनिष्पत्तौ सत्यां पश्चात् अजाद्यतष्टाबिति टापि इला इति रूपमिति ध्येयम्। ननु इलेति भगवति स्त्रीलिङ्गप्रयोगः कथमित्यत आह। स्त्रीरूपत्वादिति। प्रसिद्धमेवेति। स्त्रियः सतीस्ता उमे पुंस आहुरिति श्रुतेरिति भावः। इला पृथिवीति। अस्मिन्पक्षे इलाशब्दः परमात्मनि गौण इति द्रष्टव्यम्। गौणीवृत्तिरमुख्येति चेत्। सत्यम्। इलायाः अभेदस्य मुख्यार्थसम्भवादाश्रीयते। नन्वथापि रूढियोगौ विना कश्चिन्नैवार्थो वेदगोभवेदिति वदन् भाष्यकारः कथं गौणीवृत्येलाशब्दं व्याख्याति। कश्चिदिति। योगरूढ्यति रिक्तवृत्तेर्निवारणादिति चेन्मैवं तत्र रूढियोगौ समुदितौ विहाय केवलरूढेः केवलयोगस्य च निषिद्धत्वेन रूढियोगपूर्वकगौणिवृत्तेरनिवारणात्। अस्तिचात्रेलाशब्दस्य भगवत्परत्वेपि नामानिसर्वाणीत्याद्याः विद्वद्रूढिलेत्वादिसति योगस्तु प्रदर्शित एव। योगमादौ प्रदर्श्य पश्चाद्गौणीवृत्तिः प्रदर्शितेत्यवधेयमिति सम्प्रदायविदः।

(पदार्थप्रकाशिका)

उपजीव्येति । आधारत्वादिनेति शेषः । प्रसङ्गादिति । इलाशब्द निर्वचनप्रसङ्गेनायु-शब्दनिर्वचनस्यापि स्मारितत्वेनोपेक्षानर्हत्वादिति भावः । इणःछन्दसीत्युण् इति । यद्यपि छन्दसीण् इत्येवोणादि सूत्रे पाठस्तथापि अर्थानुवादोऽयमित्यदोषः । छन्दसि इण् गताविति धातोरुण् प्रत्ययो भवतीत्युणादिसूत्रार्थः । तथाच इण्गतौ अस्मादुण् प्रत्यये अचोञ्णितीति इकारस्य एकाररूपवृद्धौ एचोयवायव इत्येकारस्यायादेशे आयुरिति रूपमिति भावः । ननु शासु अनुशिष्टौ अस्मात् ल्युट्प्रत्यये युवोरनाकाविति यकारस्यानादेशे स्त्रीत्वविवक्षायां ङिपि शासनीति रुल्युडंतः शब्दः । तथाच यदा मनुपुत्री इला विवक्षिता तदा तच्छास्यत्वाच्छासनीति कर्मणि ल्युटं व्यत्पाद्यार्थः कथितः । यदातु इलात्वेन विवक्षितातदातच्छासकत्वाच्छासनीति कर्तरि ल्युटं व्युत्पाद्यार्थ उक्तः । तदेतदयुक्तम् । ल्युड्भावेकरणाधिकरणयोश्चेति सूत्रेण भावे करणाधिकरणेष्वर्थेषु ल्युटो विहितत्वेन कर्मणि कर्तरिच ल्युटोऽविधानादित्यत आह । एतदुक्तम् भवतीति । कर्तृकर्मणोरिति । कृद्योगेकर्तरि कर्मणिच षष्ठी स्यादिति सूत्रार्थः । भारतस्य श्रवणम् । व्यासस्य कृतिरित्युदाहरणम् । ल्युट इति । कृत्या ल्युटश्च भवतीति सूत्रार्थः । आद्ये तच्छस्यत्वादिति व्याख्यानपक्षे द्वितीये तच्छासकत्वादिति व्याख्यानपक्षे विपर्यय इति । कर्मणिषष्ठी कर्तरिचल्युडित्यर्थः ।

अयमभिसंधिः । कर्तृकर्मणोरिति सूत्रेण कृद्योगे कर्तरिषष्ट्याः विहितत्वात् । कृदतिङीति तिङ्वर्जितप्रत्ययस्य कृत्याल्युटश्च कृत्वेन शासनीशब्दस्य कृदन्तत्वात्तद्योगे मानुषस्येति यदा कर्तरि षष्ठी यदा मनुं शासनकर्तेति यावत् । तदा शासनीति कर्मणि ल्युट् । तथाच मनुशास्या इत्यर्थः सम्पाद्यते । यदातूक्तसूत्रेण मानुषस्येति कर्मणि षष्ठी यदा मनुः शासनकर्मा शास्यतया विवक्षित इति यावत् । तदा शासनीति कर्तरिल्युट् । तथाच मनोः शासनी शासनकर्तृ इलेत्यर्थः सम्पद्यते इति । ननु बाहुलकत्वमाश्रित्यापि कथं कर्तरिल्युट् व्युत्पाद्यते । कर्तरि प्रमाणशब्दस्याननुशासनादित्युक्तत्वेन ल्युटः कर्तरि निराकृतत्वादिति चेन्न । प्रमाणशब्दस्यैव ल्युडन्तस्य कर्तर्यननुशासनमभिप्रेतम् । न तु ल्युडन्तमात्रं कर्तरीत्यभिप्रायात् । यत्तु प्रमाणहेतुमर्यादा शस्त्रेयत्ता प्रमातृष्विति प्रमाकर्तरि प्रमातर्यपि ल्युडन्तप्रमाणशब्दस्यानुशासनं कृतं तदज्ञानमूलकमुपेक्ष्यमित्याहुः ।

अत्र ममकस्येत्येतन्नास्मच्छब्दरूपम् । तथात्वे मस्येति वक्तव्यत्वात् इत्यभिप्रेत्य तत्साधन-प्रकारमाह । अनेनेत्यादिना । ममशब्द इति । विभक्तिप्रतिरूपकाव्यये मम शब्दे उपपदे कृञ्करणे अस्माद्धातोर्डप्रत्यये डित्वाट्टिभूतस्य ऋकारस्य लोपे प्रत्यायाकारसम्बन्धेच सति ममत्वं करोतीति ममक इति सिध्यतीत्यर्थः । पितुर्मनोरिति । अत्र मनुः स्वायम्भुवो विवक्षितः । वासुदेवो यज्ञरूपी ।

(पदार्थप्रकाशिका)

पुराणेति। स्वायम्भुवोमनुः पुत्रिकापुत्रन्यायेन आकूतिसूनुं यज्ञनामकं भगवन्तं स्वगृहमानीय मदीयः पुत्र इति अभिमानं कृतवानित्येतत् आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम्। स्वायम्भुवो मुदायुक्तो रुचिर्जग्राह दक्षिण। तथा स्वायम्भुवः स्वदौहित्रं विष्णुं यज्ञाभिदं मनुमिति भागवतादिपुराणप्रसिद्धमाहेत्यर्थः। कथं पितृत्वमिति। जनकत्वाभावादिति भावः। गौण्यावृत्येति। जनके तद्भिन्ने पालकादौ पितापि ममताकर्तृत्वरूपगुणयोगादिति भावः। अनेनेति। स्वातन्त्र्यं च ममता नान्यदस्ति इत्यनेनेत्यर्थः। उक्तप्रयोजनमिति। पितुर्मतोंतोर्विष्णुः पुत्रोऽजायत इत्युक्ते भगवन्तं प्रति मनोः साक्षाज्जनकत्वेनैव पितृत्वशङ्का स्यात्तां वारयितुं ममकस्येत्युक्तम्। तथाचायं मदीय इति ममताकर्तृत्वमेव पितृत्वं नतु जनकत्वमित्यर्थः। विशेषसूचनायोक्तशङ्कानिरासरूपं प्रयोजनं ममकस्येति विशेषणस्योक्तम् भवतीत्यर्थः।

भूताद्यभिमानिन इति। अत्राबादीनां देहसृष्टेर्विवक्षितत्वेन भूताद्यभिमानिनामेवदेह सृष्टित्वादेवमुक्तमिति भावः। और्वस्येति। उर्वशीपुत्रस्येत्यर्थः। ऐलस्यचोर्वशीगर्भात् षडासन्नात्मजाः नृप। आयुः श्रुतायुः सत्यायुरिति वचनादिति भावः। उक्तविधयेति। तदीयदेहसृष्टिद्वारेत्यर्थः। या मनुना शिक्षणीया तत्पुत्रीला। तदंतर्यामिणं त्वाम कृण्वन्नित्यन्वयः। भगवत्पक्षे मनुषस्य शासनीयमित्यस्यार्थमाह। मनोः शिक्षकस्येति। इलाशब्दवाच्यं त्वां मनोः शिक्षणकर्मकुर्वन्नित्यन्वयः। अस्मिन्नपक्षे इलेड्यत्वतश्चेति इलाशब्दार्थो द्रष्टव्यः कथं भूतामिलां कीदृशं वासुदेवमित्यर्थः। या इलेति। यो यज्ञनामा वासुदेव इत्यर्थः। भावं भवानां पितुः स्वायंभुवमनोः। जायते भवति। समग्रऋगभिप्रायमाह। त्वत्प्रेरणयैवेति। वाय्वादीनां हृदयान्तर्यामितया प्रेरकत्वेन स्थितत्वादेव तेषां राज्ञां पुराणादि प्रसिद्धौ जगत्पालकत्वादिरूपो जगत्प्रभावोऽस्ति। अन्यथा स न स्यात्। तथाच सर्वेषां वाय्वादीनां सामर्थ्यादिप्रेरकमाह। महिमोपेतस्त्वमिति ऋक् तात्पर्यमिति भावः॥ ११॥

त्वन्नो अग्ने तव देव पायुभिः। तनूः तन्वौ तन्वः इति तनुशब्दस्य षष्ट्यैकवचनं तन्व इति। साच षष्ठीद्वितीयार्थ इत्याह। द्वितीयार्थ इति। अथवा तन्व इत्येतत् तनुशब्दस्य प्रथमाबहुवचनमेव। तच्च द्वितीयाबहुवचनार्थ इत्याह। तनुशब्दस्य द्वितीया बहुबहुवनमेवेति। व्यत्ययेनेति शेषः। ननु यजमानदेहस्येकत्वाद्बहुवचनानुपपत्तिरित्यत उक्तम्। तनुशब्दस्य तदवयववृत्तिताभ्युपगमेनेति। शरीरावयवानां हस्तपादादीनां बहूनां सत्वात्तदभिप्रायेण बहुवचनं युक्तमिति भावः। तथाच तन्वः तनूः शरीरावयवान् हस्तपाददीन् रक्षेत्युक्तम् भवति। ननु तन्व इति द्वितीयार्थे षष्ठीत्ययुक्तम्। तनूः

(पदार्थप्रकाशिका)

तन्वौ तन्वः इत्यूकारांतस्त्रिलिङ्गतनूशब्दस्यापि षष्ट्येकवचनं तन्व इत्येवभवति। तथाच तनुः तनू तनव इति उकारान्तस्त्रीलिङ्गस्य तनुशब्दस्यापि षष्ट्येकवचनं तनोरित्येव भवति। अतः कथं तन्वा इति षष्ठी। येनासाद्वितीयार्थे व्याख्यायते इति चेदुच्यते। दीर्घान्तात् ह्रस्वान्ताद्वा तनुप्रातिपदिकात् ङस्प्रत्यये ङकरलोपे यणादेशे तस्य रुत्वे विसर्गेच सति तन्व इति षष्ठ्येकवचनं युक्तमेव। अत एव ह्रस्वप्रक्रियायां ममाग्नेवर्चो विहवेष्वस्तु वयं तेधानास्तन्वंपुषेमेत्यृग्वेदे तथातनुवं पुषेमेतियजुर्वेदे तन्वम् तनुवमित्यादि प्रयोगसिध्यर्थं छन्दसि तन्वादीनां विकल्पेन यणुवङादिति वार्तिके पाक्षिकयणादेशस्य विहितत्वेन षष्ठ्येकवचनत्वसम्भवादुक्तम् युक्तमित्यवगन्तव्यम्। अत एवास्वरसात् द्वितीयाबहुवचनत्वेन व्याख्यातमिति द्रष्टव्यम्।

पातेरुण्णिति। पारक्षणे अस्मात् करणे उण्प्रत्यये णकारलोपे आतोयुक्चिणिकृतेरिति सूत्रेण कृति उण्प्रत्यये परे आकारान्तस्य धातोर्युगागमे उक् इत्यस्य लोपे पायुरिति रूपम्। सदास्माकम् यजमानस्यचाद्धाति भाष्यार्थमाह। यद्वेति। पूर्वतो मघोन इति सामानाधिकरण्येन व्याख्यातम्। इदानीं वैयाधिकरण्येनेति भेदः। यजमानस्यचेति। अस्मद्भिन्नस्य कस्यचिद्यजमानस्येति हिरण्यस्तु योवक्तीति द्रष्टव्यम्। स्वत इति। रक्षेति प्रार्थनाभावेपीत्यर्थः। सिद्धा इति शेषः। आमयो रोगः। आदिपदेन बुभुक्षादि पिडाग्रहणम्। पुत्रस्य सूनोरिति पौत्रस्येत्यर्थः। तर्हि तनयस्य सन्ततेरिति वक्तव्यम्। अस्य सूनोरिति कथमुक्तमित्यत आह पौत्रस्यापीति। तदर्थतया पौत्रार्थतया।

ननु तथापि तनयस्येत्यतदस्य सूनोरिति कुतोव्याख्येयम्। साक्षात्पुत्रस्यापि सन्ततित्वे तनयशब्दवाच्यत्वात् पुत्रस्येति कस्मान्नव्याख्यातमित्याशङ्क्य पुत्रवाचकतोकशब्द पृथक्पृथक् सत्वेन तनयशब्देपि तत्तद्वाच्यतया व्याख्याने पुनरुक्तिः स्यात्। अतः पौत्रार्थतयैव साव्याख्यातव्येत्याह। ननु पुत्रोपीत्यादिना। तस्य पुत्रस्य। तदर्थः पुत्रार्थः। नन्वथोप्येतदयुक्तम्। तनयशब्दवत्तोक शब्दस्यापि अपत्यसामान्यनामवत्वेन सन्ततिवाचकत्वात्पुनरुक्तिः स्यादतो भिन्नविषयकत्वे वाच्ये तनयशब्द एव पुत्रवाचकोस्तु। तोकशब्दस्तु पौत्रार्थको भवत्वित्याशंक्य सत्यं पुनरुक्तिपरिहाराय तावदवश्यंतोकतनयशब्दयोः भिन्नविषयता वाच्या। तत्रास्मदुक्तरित्या तोकशब्द एव पुत्रार्थो वाच्यः तोकस्य तनय इत्यत्र तोकशब्दे प्रथमप्राप्तत्वात् पुत्रपौत्रयोर्मध्ये पुत्रस्यापि प्रथमप्राप्तत्वात् द्वितीयस्तनयशब्दो द्वितीयप्राप्तपौत्रार्थ एव व्याख्येय इत्याह। नन्वित्यादिना। वाचां वाचकमिति शेषः। अयं मुख्यार्थ इति तोकादिशब्दानां ज्ञानादिवाचकत्वमेव मुख्यार्थतया श्रुत्यभिप्रेतमित्यर्थः।

(पदार्थप्रकाशिका)

ज्ञानादीनां तोकादिशब्दवाच्यत्वमुपपादयति। पुत्रोहीति। तोकशब्दः तोकशब्दवाच्यः। ननु पुत्रस्य तोकशब्दवाच्यत्वेपि ज्ञानस्य कथं पुत्रत्वम्। येन तोकशब्दवाच्यत्वं स्यादित्यत उक्तम्। ज्ञानंचेति। ज्ञानस्य पुत्रत्वं श्रौतमित्याह। ज्योतिर्हीति। परमे व्योमन् परमेव्योम्नि व्याप्ते ब्रह्मणि विद्यमानं तद्विषयकमितियावत्। एतादृशं यत् ज्ञानं तत्पुत्र इत्युच्यते इति प्रसिद्धमिति श्रुत्यर्थः। पौत्रशब्दं पौत्रार्थकतनयशब्दवाच्यमित्यर्थः। पौत्रः पुत्रजन्यः प्रसिद्धः मौक्तसौख्यस्यापि पुत्रभूतज्ञानजन्यत्वादिति भावः। इति तु प्रसिद्धमिति। अभिधानादिनेति शेषः। न तत्र पूर्ववदुपपादनापेक्षेति तुशब्दः। यस्त्वमिति। यच्छब्दस्य यस्त्वमनिमेषं रक्षमाणः सत्वं नस्तन्वो रक्षेत्यन्वयो द्रष्टव्यः॥ १२॥

त्वमग्ने यज्यवे पायुरन्तरः। पालक इति। त्वमेव बहिः स्वर्गादिफलं दत्वा पालक इत्यर्थः। कुत इत्यतो हेतुरन्तर इति। तद्व्याख्यानमन्तर्यामीति। तदेव विवृणोति। अन्तरिति। अन्तस्थि त्वेत्यर्थः। तथाच यतोऽन्तस्थित्वा प्रेरणेन त्वमेव यज्ञादिरूपाः क्रियाः यजमानेन प्रवर्तयसि। अतस्त्वमेव बहिः फलदानेन पालक इति भावः। अनेन कामनया यष्टुः तत्फलं स्वर्गादिकं ददातीत्युक्तं भवति। सामर्थ्यादिति। अर्थाबाधरूपयोग्यतयेत्यर्थः। नेरिति। निषङ्गायेत्यत्र स्थितस्य नितरामित्यर्थकस्य नीत्यस्येत्यर्थः। नञेति। निषेधार्थकेनाकारेणेत्यर्थः। अत्र नञः सङ्गशब्देनान्वये सर्वथा सङ्गापरपर्यायकामनिषेधस्य बाधितत्वात् सङ्गे नितरामित्येतदेव विशेषणं निषिध्यते। अबाधादिति भावः। केचित्तु सामर्थ्यादित्यस्य संगशब्दसम्बन्धिनो निशब्दस्य नञासम्बन्ध-सामर्थ्यादित्यर्थ इत्याहुः।

नन्वसङ्गतमेतत्। अग्नेश्चतुरक्षत्वं कथमिति शङ्कायां द्विशीर्षत्वोक्तेरसङ्गतत्वात्। न च हेतुतया तदुक्तिरिति वाच्यम्। तेनापि तदुपपादनालाभादित्यत आह। प्रतिशीर्षमिति। अग्नेरधियज्ञत्वमुपपादयति। सहीति। तथाच यज्ञमधिकृत्य वर्तमानत्वेनाधि यज्ञोग्निः द्विशीर्षत्वाच्चतुरक्ष इत्यर्थः। अत्र चतुरक्षोऽग्निरित्येव वक्तव्ये अधियज्ञमिति स्वरूपकथनमिति ज्ञातव्यम्। उत्तरत्रेति। तृतीयाष्टके अष्टमाध्याय इत्यर्थः। कथंभूत इति। यस्मै यज्यवे यष्टवे इध्यस इत्युक्तं स यष्टा कथंभूत इत्यर्थः। क्रूरस्येति। क्रौर्ययुक्तस्येत्यर्थः। प्राणिविषेषस्येति। मनुष्यादिहिंसकप्राणिविशेषस्येत्यर्थः। क्रूरं तदुपचर्यत इति क्रौर्यवति पुरुषे तद्वृक इति नामोपचर्यते। क्रौर्यगुणयोगात्। माणवके अग्निवत् गौण्या वृत्त्या वर्तत इत्यर्थः। तस्येति। वृकशब्दस्य इत्यर्थः। नञेति। न वृकः अवृक इति नञ्समास इत्यर्थः। एवं चावृकायाक्रूरायातिसोम्यायेति भाष्योक्तार्थो

(पदार्थप्रकाशिका)

युक्त इत्याशयेनाह अतिसौम्यायेति । भावे असुन्निति । धेट् पाने अस्मादसुन् प्रत्यये आदेच उपदेशेऽशितीति एकारस्यात्वे असुन्प्रत्ययस्य कृत्वेन तस्मिन् परतः आतोयुक्चिण् कृतोरित्यनेन युगागमे धाय अस् धायस् इति रूपम् । तस्य चतुर्थी धायस इति । पानाय रातहव्य इत्युक्तत्वात् पानयोग्यमेकं हविर्दर्शयति । हव्यं चेति । पुरोडाशादीनां पेयत्वाभावादिति भावः ।

तथाच यो यष्टाऽवृकाय धायसे रातहव्यः रातं दत्तं हविर्येनासौ रातहव्यो हविर्दत्तवानिति यावत् । तस्य यज्वने प्रसन्नः समिध्यसे इति पूर्वेणान्वयः । न केवलमिति । तेन हविषि दत्ते सति प्रीयस इत्येतावन्मात्रमेव न भवतीत्यर्थः । ननु कीरिशब्दस्य ऋत्विङ्नामत्वात् कर्तुरिति कथं व्याख्यातमित्यत आह । ऋत्विङ्नामत्वेपीति । कीरिशब्दस्य ऋत्विङ्नामत्वेपीति कर्तृत्वमेव निमित्तमित्यर्थः । तथाच यजमानस्य कार्यकर्तृत्वात् योगेनैव ऋत्विजां कीरिशब्दवाच्यत्वं न रूढ्येत्यर्थः । अतः कीरेः कर्तुरिति व्याख्यानमुपपन्नमिति भावः । तस्येति भाष्यस्थपदमनूद्य अनिषंगस्येति व्याख्यातम् । निष्कामनया त्वत्सेवायाः कर्तुरित्यर्थः । कर्तरि षष्ठी कीरिणेत्यर्थः । तन्निमित्तमिति ऋक्पदग्रहणम् । तथाच न केवलं तदीयेन हविषा प्रीयसे किन्तु कीरेः कीरिणा त्वत्सेवाकर्त्रा उच्चारितमन्त्रमपि मनसा सम्यगिति वनोषि वनषणसम्भक्ताविति धातोः सम्भजसि स्वीकरोषीति यावदित्यभिप्रायः ॥ १३ ॥

त्वमग्ने उरुशंसाय वाघते । शंसः शंसनं स्तोत्रमिति यावत् । ननु वाघशब्दस्य ऋत्विङ्नामत्वाद्ददत इति व्याख्यानं कथमित्यत आह । ऋत्विङ्नामत्वेपीति । एतदेवेति । कर्तृत्वमेवेत्यर्थः । ऋत्विगपि यजमानमुद्दिश्य इन्द्र आगच्छ इत्यादिमन्त्रजातं वक्तीत्येवं योगेनैव ऋत्विजां वाघच्छब्दवाच्यत्वं न रूढ्येत्याशयः । ननु सुखस्य कथं धनशब्दवाच्यत्वमित्यत आह । सुखमेव चेति । इति हेतोः सुखं रेक्णःशब्दवाच्यत्वमित्यर्थः । वनधातोः सम्भजनार्थस्य प्रकृते असङ्गतत्वादाह । दानार्थोऽयमत्रेतीति । अन्यत्र सम्भजनार्थत्वेपि अत्र प्रकृते अयं वनधातुर्दानार्थ इति हेतोः ददासीति व्याख्यानं युक्तमित्यर्थः । ननु आध्रस्येति कथम् । आङ् पूर्वकात् धृ धातोः कर्तरि रच् प्रत्यये गुणे तस्य चरपरत्वे आधारस्येति स्यात् । महीधरः भूधरः इत्यादिवदिति चेत् सत्यम् । तथापि प्रकृते आङ्पूर्वाद्धृधातोः कर्तरि कप्रत्यये कित्वाद्गुणाभावे यणादेशे च सति आध्रस्येत्युपपत्तेः । न चैवं प्रयोगो अदृष्ट इति वाच्यम् । इममेव साधनप्रकारमभिप्रेत्य महीध्रपक्षव्यपरोपणं कृतमिति रघुवंशे प्रयोगदर्शनात् । इत्यभिप्रेत्याह । महीध्र इति । यथेति । आध्रस्येत्यस्य विशेष्यमाह । वायोरिति ।

(पदार्थप्रकाशिका)

ननु वायोः धारकत्वमेव कुत इत्यत आह । सहीति । सप्तस्कन्धेति । चतुर्दशभुवनात्मकजगद्वृक्षस्य सप्तलोकाख्या ये स्कन्धाः शाखाः तद्गतः सनयो वायुस्तत्रत्यान् जनान् बिभर्तीत्यर्थः । सप्तस्कन्धगतः सप्तमपञ्चगत इत्यर्थः । इत्यन्ये । ज्ञानयोग्यत्वमिति । ज्ञानयोग्यत्वोपेतमित्यर्थः । ननु प्रोपपदात् दिश् आदेशे इत्यस्मात् कर्तरि कप्रत्यये अकारं विहायक् इत्यस्य लोपे प्रदिशेति प्रातिपादिकं भवति । तस्य प्रथमा प्रदिश इति तत्र कप्रत्ययप्रापकं किमित्यत आह । इगुपधलक्षण इति । 'इगुपधज्ञाप्रीतिरः क' इति सूत्रेण इगुपधलक्षणः इगुपधत्वे निमित्तकः कप्रत्यय इत्यर्थः । एवं च प्रकृते दकारस्थस्य इकारस्य इकृत्वेन प्रोपपदात् दिश धातोः इगुपधत्वात् कप्रत्यय इति भावः । कित्वाद्गुणाभावः । अन्यथा प्रदेशेति स्यादिति द्रष्टव्यम् ।

पुनरुक्तमिति । प्रापकं शास्त्रीत्यनेनापि ज्ञानिशिक्षकत्वमुच्यते प्रदिश इत्यनेनापि तदेवेति पुनरुक्तिरित्यर्थः । प्रदेशकत्वादिति शिक्षकत्वादित्यर्थः । कथमनेन पुनरुक्तिपरिहार इत्यत आह । सामान्यमिति । सामान्यभूतं शिक्षकत्वं विशेषे परिपक्वज्ञानाधिकारिशिक्षकत्वे हेतुरित्यर्थः । तत्र सर्वशिक्षकत्वसामान्यं हेतुत्वेनाभिप्रेतमित्यत्र भाष्यकारीयमखिलपदं ज्ञापकमिति दर्शयन् विभक्तिव्यत्ययमभिप्रेत्य तस्यार्थमप्याह । अखिलमिति । अनेनास्य प्रदेशकत्वादित्यनेनापि सम्बन्ध उक्तो भवति । ननु वेत्तेत्यस्य तृजन्तत्वेन तृचश्च कृत्वात्तद्योगे कर्तृकर्मणोः कृतीति षष्ठीप्राप्तौ कर्तरि चेति तस्याः समासप्रतिषेधादखिलवेत्तेति स्यात् । अखिलमिति द्वितीया कथम् । इति चेत् न । वेत्तेत्यस्य तृन्नन्तत्वेन तृजंतत्वाभावात् तद्योगे च न लोकेत्यनेन षष्ठ्याः प्रतिषेधेन तत्प्रसक्तेरेव अभावात् । तत्समासप्रतिषेधशंकायाः दूरोत्सारितत्वात् । तथाच कर्मणि द्वितीयेति सूत्रेण द्वितीयैव कर्मप्राप्तद्वितीयायाश्च 'द्वितीयाश्रितेति' सूत्रेण समासोपपत्तेः । श्रितादिषु गमिगम्यादीनामुपसङ्ख्यानोक्तेः गम्यदीनां च आकृतिगणत्वात् तथा च अखिलं सुवेत्तेति युक्तमित्याशयेनाह ॥ तृन्नन्तत्वाद्वितीयेति ॥ १४ ॥

त्वमग्ने प्रयत दक्षिणं नरम् । प्रयतो दक्षिणायामित्यनन्तरं यः स सति शेषः । प्रयत्नादिति ल्यब्लोपनिमित्ता पञ्चमी । ब्राह्मणाह्वानरूपं प्रयत्नं विधाय दक्षिणादः दानकर्तेत्यर्थः । ककार इति । सद्मेत्यत्र सकारात्पुरतः ककारागमे सस्य षत्वे कषयोर्योगे क्ष इति जाते क्षद्मेति भवतीत्यर्थः । परेषां यस्मात् पुरुषात् सुखसाधनानि गेहानि भवन्तीत्येतत्तात्पर्यमाह । सुग्रहाणमिति । सुखं करोतीत्यन्वयः । ननु क्षद्मशब्दस्यान्ननामसुपाठात् तेन तद्दानमुपलक्ष्य स्वादु क्षद्मा स्वाद्वन्नदातरिति परैर्व्याख्यातत्वात्तथैव भवद्भिरपि कुतो न व्याख्यातमित्याशंक्य स्योनकृदित्यस्यापि अन्नदानादिना

(पदार्थप्रकाशिका)

सुखकर्तेति व्याख्यातत्वादन्नदातृत्वस्य लब्धत्वादेव पुनरुक्तिः स्यादतः स्वादु क्षद्मेत्येतत् सुखगेह इत्येव व्याख्येयम्। क्षद्मशब्दस्य गेहनामस्वपि पाटादिति भावेनाह। अत एवेति। अनुतिष्ठतीति। यज् देवपूजा सङ्गतिदानकरणेष्विति धातोः करोतीत्यर्थः।

तमग्निः कदेति। यजमानेन यज्ञरूपसाधने अनुतिष्ठिते सति तत्समाप्त्यनन्तरं तेन यज्ञेन प्रसन्नः सन् उर्वरिते कालेऽग्निस्तं रक्षतीति वक्तव्यम्। नह्यत्रैवं सम्भवति। यावज्जीवं यज्ञस्यानेन क्रियमाणत्वात् यज्ञसमाप्तौ च स्वस्यैव समाप्तत्वात्कदा तं रक्षिष्यतीत्यर्थः। सुप्रतिज्ञ इति। अयं भावः। अत्राग्नेर्यजमानरक्षणे तत्कृतयज्ञः साधनत्वेन न विवक्षितः। किन्तु यावज्जीवमहं यज्ञं करिष्य इति सप्रतिज्ञदृढदीक्षो भूत्वा (प्रतिज्ञैवाग्निकर्तृकरक्षासाधनमित्युच्यते।) तं रक्षतीत्युच्यते। न यज्ञः येन तत्ससाप्तौ यजमानस्यापि समाप्तत्वात् कदा तं रक्षतीति शंका स्यात्। एवं चामरणं यज्ञकरणप्रतिज्ञामात्रेणैव सन्तुष्टः सन्नग्निर्यावज्जीवं यज्ञादिकरणदशायामपि प्रसक्तविघ्नपरिहारेण रक्षतीति न कोऽपि दोष इति। सोपमा दिव इत्येतत्सङ्गमयति। यथोक्तेति। सम्यक् प्रयतदक्षिणत्वादिविशेषेण विशिष्टस्य नरस्येत्यर्थः। कुत इति। स्वर्गादिफलं भवतीत्येतत्कुतः प्रमाणात्प्रतिपत्तव्यमित्यर्थः। तत्रैव आगमप्रामाण्य एव।

ननु देहे एव शमः ज्ञानमार्गे वा सो वेति पुल्लिङ्गप्रयोगं विहाय क्षमेति वसतिरिति स्त्रीलिङ्गप्रयोगः कथमित्यत उक्तम्। स्त्रीलिङ्गेनेति। तदन्तशब्देनेत्यर्थः। सोपमेत्युक्ते तदनुसारेण सा केत्याकाङ्क्षायाः कृतत्वात्तदनुसारेण ऋचि देहे सत्येव या क्षमेत्यादि स्त्रीलिङ्गान्त शब्दाध्याहारेणैवाकांक्षा पूरणीयेत्याशयेन भाष्ये स्त्रीलिङ्गप्रयोगः कृत इत्यर्थः। ननु कथमनेनागमप्रामाण्ये विश्वासो लब्धः कथं च तेन पारत्रिकस्वर्गादिफलं भवतीति ज्ञायत इत्यत आह। एतदुक्तं भवतीति। आगमोक्तेनेति। तद्विज्ञानार्थं सगुरुमेवाभिगच्छेदित्याद्यागमोक्तेन (सद्) गुरुसेवादिरूप-साधनेनेत्यर्थः। इहैव- अस्मिन् जन्मन्येव। क्षमादिकम्। क्षमा - शमः। आदिपदेन ज्ञानमार्गे निष्ठा ग्राह्या। तदुपमानेन एतद्देह एव प्राप्तशमदमादिदृष्टान्तेन पारत्रिकं स्वर्गादिरूपं फलम्। ततश्चायमर्थः। आगमोक्तसाधनानुष्ठानेन क्षमादिफलं तावदुपलभ्यते। तथाच फलसंवादित्वा-त्तस्यागमस्य प्रामाण्ये सिद्धे तत्र विश्वासः सम्भवति। तथा तद्दृष्टान्तेनायं यजमानः पारत्रिकस्वर्गादिफलं लब्ध्वा प्रमाणभूतागमोक्तसाधनानुष्ठातृत्वात् यः प्रमाणभूतआगमोक्त-साधनानुष्ठाता स फलं लब्ध्वा यथैहिकफलं लब्ध्वा पुरुष इति सामान्यव्याप्तिमूलकानुमानेन पारत्रिकमपि फलमनुमेयमिति। यथोक्तम्। दर्शनाच्च तप आदिफलस्येति॥ १५, ३४॥

## पदार्थदीपिका

प्रकरणादिति ॥ नहुषस्येति षष्ठी प्रायपाठादित्यर्थः । क्रियाहेतुत्वात् क्रियाद्वारकत्वादित्यर्थः ॥ तत्समाधानस्येति ॥ जीवनं नाम तदन्तर्यामिणोऽपि भवतीति आयोः प्रेरकोऽपि आयुर्भवतीति समाधानस्येत्यर्थः ॥ वक्ष्यमाणत्वाच्चेति ॥ तस्यैवान्तर्यामिण इत्यादिनेति शेषः ॥ द्वितीयो हिशब्द इति ॥ प्रथमस्तु हेताविति ज्ञातव्यम् । अत एव यस्मादित्युक्तम् । अध्याहारादिनेत्यादिपदेन चतुर्थी व्यत्यय परिग्रहः । ह्रस्वता चेति ॥ उपधाया इति शेषः ॥ इणश्छन्दसीत्युणीति ॥ एतेरुणि वृध्यया देशयोरायुरिति सिध्यतीत्यर्थः । ननु एकस्यैव शासनीशब्दस्य शास्यत्वशासकत्वरूपविरुद्धोभयार्थत्वं कथं व्याख्यायत इत्यत आह ॥ एतदुक्तं भवतीति ॥ द्वितीये विपर्यय इति ॥ कर्मणि षष्ठी कर्तरि ल्युडित्यर्थः । तथा च कर्मणि ल्युडन्तस्य शास्यत्वार्थकत्वं बाहुलकात् कर्तरि ल्युडन्तस्य शासनीशब्दस्य शासनीयत्वार्थकत्वं अविरुद्धमिति भावः ॥ करोतेर्ड इति ॥ ममत्वं करोतीति ममक इत्यर्थः । तथा च करोतेर्डप्रत्यये डित्वाट्टिलोपे विवक्षित रूपनिष्पत्तिरिति भावः ॥ अनेनेति ॥ पितुरित्येवोक्ते भगवन्तं प्रति जनकत्वरूपं पितृत्वमिति शंकां निवारयितुं ममकस्येत्युक्तम् । ममकत्वरूपमेव पितृत्वं जनकत्वमिति प्रयोजनमुक्तं भवतीति अर्थः ॥ उक्तविधयेति ॥ तद्देहसृष्टयेत्युक्तविधयेत्यर्थः । शासनीम् । कृत्यल्युटो बहुलमिति कर्मणि कर्तरि च ल्युट् । टिड्ढाणञ् इत्यादिना ङीप् ॥ ११ ॥

मघोन इति ॥ ङसि श्वयुवमघोनामतद्धित इति सम्प्रसारणम् । सम्प्रसारणाच्चेति पूर्वरूपत्वम् । आद्गुण इति गुण इति ज्ञेयम् । तन्वः । द्वितीयार्थे षष्ठी । यद्यप्यत्र दीर्घस्य ह्रस्ववत्तनूशब्दस्य तन्वाक्षानोरित्येव षष्ठ्येकवचनं भवति । न तु तन्व इति । तथा च द्वितीयार्थे षष्ठीति न युक्तम् । तथापि तन्वं पुषेम तनुवं पुषेमेत्यादिरूपसिध्यर्थं इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानमिति वार्तिककृता पाक्षिकयणादेशस्यापि अभ्यनुज्ञातत्वेन तन्व इति षष्ठ्येकवचनं च भवतीत्याभिप्रायेणैतदुक्तम् । अनेनैव प्रकारेण तन्व इति द्वितीया बहुवचनं चेति द्वितीया पक्षो व्युत्पाद्यः । अन्यथा पूर्वसवर्णदीर्घे सति तनूरिति द्वितीया बहुवचननिष्पत्तेस्तन्व इति द्वितीया बहुवचनमित्यस्यासंभवदुक्तिकत्वात् इति ध्येयम् । केचित्तु सुपां सुपो भवतीति शसो नस्यादेशः । पूर्वसवर्णदीर्घस्य दीर्घाज्जसि चेति प्रतिषेधः । तथा च तन्व इति द्वितीया बहुवचनमुपपन्नमित्याहुः । ननु यजमान शरीरस्यैकत्वात् कथं बहुवचनान्वयः इत्यतस्तनू शब्दस्य शरीरावयववृत्तित्वात्तेषां चानेकत्वात् । तन्व इति बहुवचनान्वये नानुपपत्तिरित्याह ॥ तदवयववृत्तितेति ॥ पातेरुणिति ॥ कृपावाजीत्यादिना करणे उणि आतो युक् चिण् कृतोरिति युगागम इति भावः ॥ १२ ॥

(पदार्थदीपिका)

यज्यव इत्यादि। यजिमनि शुन्धीत्यादिना यजतेर्युप्रत्ययः। यज्योरिति षष्ठ्यर्थे चतुर्थीति भावः॥ सामर्थ्यादिति॥ योग्यत्वादित्यर्थः। नेत्यस्य नितरां संग इति सम्बन्धो हि अत्यन्त-सङ्गाभावप्राप्तावपि किञ्चित् संगोऽस्तीति प्रतीयते। स एव बाधितत्वादयोग्य इति भावः॥ चतुरक्ष इति॥ चत्वार्यक्षीणि यस्यासौ चतुरक्षः। बहुव्रीहौ सक्थ्यक्ष्णोः स्वांगात् षच् इति समासान्तः षच् प्रत्ययो बोध्यः॥ भावेऽसुन्निति॥ तथा चादेश उपदेशेऽशितीत्यात्वम्। अतो युक् चिण्कृतेरिति युगागमः इति भावः। ननु ऋत्विङ् नामतया परेण व्याख्यातत्वात् कथं कीरेरित्यस्य सेवायाः कर्तुरिति व्याख्यानमित्यतः ऋत्विङ्नामत्वेऽपि कर्तृत्वमेव निमित्तं नत्वल्पनिरवकाशं प्रमाणं अस्ति। तच्च वार्तक्याविशिष्टमिति युक्तं तथा व्याख्यानमित्यर्थः। एतदेवेति॥ स्तोत्रकतृत्वमेवेत्यर्थः नत्वन्यत् ऋत्विक्भिन्नेऽपि स्तोतर्यविशिष्टमिति तत्परत्वेन व्याख्यानमुपपन्नमिति भावः॥ १३॥

रेक्णः॥ धननामैतदिति॥ रिच रचि रेचने। रचेर्धने चिच्चेति असुन्। चकारान्नुडागमः। चजोः कुघिण्यतोः इति कुत्वमिति भावः॥ दानार्थोऽयमिति॥ अनेकार्थत्वात् धातूनामिति भावः। आध्रस्य ध्रैतृवित्यस्येदम्। अनेकार्थत्वाद्धातूनां कारणेऽपि वर्तते। आदेच उपदेशेऽशितीत्यात्वे आतश्चोपसर्गे क इति कप्रत्यय इति बोध्यम्। दृष्टं चास्पधारणार्थत्वमित्याह॥ महीध्र इति यथेति॥ प्रशास्सीति॥ शासु अनुशिष्टौ॥ अदादित्वात् शपो लुगिति भावः॥ इगुपधलक्षण इति॥ प्रदिशतीति प्रदिशः। तथा च कित्वात् प्रदिश इत्यत्र गुणाभावो युक्त इति भावः॥ अत एवेति॥ सामान्यविशेषे हेतुत्वस्याभिप्रेतत्वादेवेत्यर्थः। अनेनाखिलमित्यस्य प्रदेशकत्वादित्यनेनापि सम्बन्ध उक्तो भवति। तत्र च प्रदेशकत्वादित्यस्य ण्वुलन्तत्वेन कृद्योगषष्ठ्या विधानात् अखिलमित्येतत् अखिलस्येति व्याख्यातम् इति द्रष्टव्यम्। अखिलोपदेशकत्वस्य सामान्यत्वात् पक्काधिकारोपदेशकत्वस्य विशेषत्वात् उक्तस्तयोर्हेतु हेतुमद्भाव इति भावः। विदुष्टर इति॥ विद्वच्छब्दात्तरपि अयस्मयादीनि छन्दसीति भसंज्ञायां वसोः सम्प्रसारणम्। परपूर्वत्वम्। शासिवसीति षत्वम् इति द्रष्टव्यम्॥ तृन्नन्तत्वादिति॥ न लोकेति तृन्नन्तत्वे षष्ठ्या निषेधादिति भावः॥ १४॥

ककारागमेनेति॥ सदेः पूर्वं ककारागमे सस्य षत्वे कषयोगे क्ष इति क्षत्वे क्षद्मेति सिध्यतीत्यर्थः। ॥ स्त्रीलिङ्गेनेति॥ देहे शमो ज्ञानमार्गे सत्येवेत्युक्ते सेतिकेत्याकांक्षानुपरमात्। क्षमेति निवसतिरिति स्त्रीलिङ्गप्रयोग इति भावः। परभाष्ये तु सोमपा सोचिलोपे चेत्पादपूरणमिति संहितायां सोर्लोप इत्युक्तम्। तत्तु स इति पदविभागमभिप्रेत्येति द्रष्टव्यम्। आगमोक्तसाधनेन आगमोक्तमार्गानुष्ठानेनेत्यर्थः॥ १९,३४॥

## टीकाविवृतिः

त्वामग्ने ।। नन्वायव इति श्रौतचतुर्थ्यन्तपदं भाष्य आयोराज्ञ इत्यनेन निर्निमित्तं षष्ठ्यंतत्वेन व्याख्याय हृदयप्रेरकत्वादित्यनेन तस्योपपादनं च व्यर्थमेव क्रियत इत्याशङ्कां परिहरन्भाष्यमवतारयति ।। अत्रायव इतीति ।। क्रियाहेतुकत्वात्तस्येति ।। संबन्धस्य षष्ठ्यर्थभूतस्य राज्ञःपुरुषःचैत्रस्य पुत्र इत्यादौ रक्षणपोषणक्रियानिमित्तत्वदर्शनादिति भावः ।। राज्ञो राजविशेषस्येति ।। पुरुरवःपुत्रस्यायुनामकस्येत्यर्थः । नन्वायोरायुरित्यत्रायु शब्दप्रवृत्तिनिमित्तानुक्तेर्व्यर्थमेतद्भाष्यमित्यत आह ।। आयोरायुरित्यनेनापीति ।। ननु तर्हि विष्णोरायुनामकत्वं कथमित्याशंकायाः समाधानं किमित्यत आह ।। तत्समाधानस्येति ।। वक्ष्यमाणत्वादिति ।। तस्य यन्नामान्तर्यामिणो जीवगंच । स एवायुरयनाज्ज्ञानतश्चेत्यत्रेति शेषः ।। राजाहिविश्पतिरिति ।। विशूशब्दस्य मनुष्यनामसुपाठात्तत्पतिर्नृपतिः स च राजैव । न चाग्नेर्नहुषं प्रत्येतादृशराजत्वं प्रसिद्धमिति भावः । ननु नहुषं प्रत्यग्नेरधिपतिमात्रत्वस्याप्य प्रसिद्धेर्विश्पतिशब्दः कथमधिपतिमात्रार्थ इत्यत आह ।। अधिपत्वं चेति ।। नन्वाय्वादिदेहसर्जनोत्त्यापि देवाः कथमीश्वरमीश्वराय प्रेरणशक्तिं वा चक्रुरित्युक्तिःसंभवति असंबन्धादित्यत आह ।। एतदुक्तमिति ।। अत्र षष्ठ्योक्तमिति ।। आयोरिति षष्ठ्येत्यर्थः । अत एव षष्ठ्याः शरीरप्रेरकत्वार्थकत्वाभिप्रायादेव भाष्यशरीरस्थहृदयग्रहणं कृतमित्यर्थः ।। तथाप्यायुमितीति ।। विष्णोरायुशब्दवाच्यत्वं कथमित्यर्थः ।। जीवगमिति ।। यन्नाम यदाय्वादिनाम । जीवगं जीवेषु प्रसिद्धम् । तन्नामतदन्तर्यामित्वादीश्वरस्यापि भवतीत्यर्थः ।। प्रथमत्वमिति ।। प्रथममित्यस्य मुख्यार्थकस्य द्वितीयान्तत्वात् । कस्य आयुमित्यस्य वा विश्पतिमित्यस्य वा विशेषणम् । कथं च विष्णौ तत्प्रवृत्तिनिमित्तस्य मुख्यत्वं कीदृशमित्यर्थः ।। द्वितीयो हिशब्द इति ।। प्रथमस्य हिशब्दस्य स्मादित्यर्थकत्वस्योक्तत्वादस्य श्रुत्यादिप्रसिद्ध्यर्थकत्वमिति भावः ।। आयुशब्दे क्रियावचन इति ।। आययति गमयति प्रवर्तयतीत्यायुः अयतेर्ण्यन्तादुणि णेरनिटीति णिलोपे निष्पन्नायुशब्दस्य प्रेरकत्वार्थकत्वेन यौगिकत्वात्क्रियावचनत्वमिति भावः ।। माहात्म्याधिक्येति ।। मुख्यत आय्वादिसर्वशब्दप्रवृत्तिनिमित्तवत्त्वात्त त्तन्निष्ठप्रवृत्तिनिमित्तस्वातन्त्र्यात्सर्वनामवत्त्वरूपमाहात्म्याधिक्य लाभादित्यर्थः ।। तत्र को मनुष इति ।। पुरः कुषन्नित्युक्तः कुषन्प्रत्ययो बहुलोक्तेरस्मान्मन ज्ञाने इत्यतोपि जातः । तेन मनुषशब्दस्य ज्ञानित्वार्थकत्वात्कोत्र ज्ञानी विवक्षित इति भावः ।। का चेळेति ।। इळा कलत्रे सौम्यस्य धरित्र्यां गवि वाचि चेति विश्वकोशे अनेकार्थत्वोक्तेरत्र विवक्षितेळा केत्यर्थः । ननु मनुषस्येत्यत्र षष्ठ्यर्थभूतसंबन्धस्य श्रौतशासनीपदेन शास्य

(टीकाविवृतिः)

शासकभावलक्षणस्योक्तत्वात्तस्य पुत्रीति भाष्योक्तिर्व्यर्थेत्यत आह ।। अत्र तस्येति ।। अनेकार्थेळाशब्दस्य विवक्षितार्थं वक्तु मनुपुत्रीळेति स्वरूपसंकीर्तनमित्यर्थः । श्रौतपदव्याख्यानाभावान्नामास्या अपीति भाष्यमसंगतमित्यतस्तत्संगमयति ।। नन्वत्रेति ।। नेति चेदिति ।। द्वितीयार्धे त्वामित्यस्य संबन्धाभावे अग्निविशेष्यत्वाभावेनाग्निप्रति- पादकत्वं न स्यात्तथा चाग्निसूक्तान्तर्भावोस्यार्धर्चस्य न स्यादिति भावः ।। कथमीश्वरस्येळात्वमिति ।। इळाशब्दस्य विष्णौ रूढेरभावाद्योगार्थस्याप्यप्रतीतेस्त्रीलिङ्गत्वाच्च कथं पुंसो विष्णोर्वाचकत्वमित्याशयः ।। तत्सदेति ।। विद्वद्रूढेरिति भावः । योगमप्याशङ्कते ।। कथमिति ।। घञर्थे क इति ।। भावे कर्तृभिन्नकारके घञो विधानात्कर्मणो घञर्थत्वमिति भावः ।। प्रसिद्धमेवेति ।। अज्मध्यस्थडकारस्य लकारं बह्वृचा जगुरित्यत्र तथास्त्रियंःसतीस्ताँ उमे पुंस आहुरित्यादाविति शेषः । उपजीव्यत्वतश्चेति भाष्येणेळाशब्दस्य गौणी वृत्तिराश्रितेत्याशयेनाह ।। इळा पृथिवीति ।। प्रसङ्गादिति ।। इळाशब्दस्य निर्वचनकथनप्रसङ्गादित्यर्थः ।। इत्युणिति ।। तत अचो ञ्णितीति वृद्धौ आयादेशे एति जानातीत्यायुरित्युक्तं भवति ।। तेन मनुना शास्यत्वादिति ।। मनोः पितृत्वात्पुत्र्या इळायास्तच्छास्यत्वमिति भावः । ननु शासनीत्यस्य शास्यत्वार्थकत्वे मनोः कर्तृत्वान्मनुषेणेति तृतीयया भाव्यं शासकत्वार्थकत्वेपिमनोः- कर्मत्वाद्द्वितीयया भाव्यं मनुषस्येति षष्ठी कथं कथं च भावे करणाधिकरणयोर्विहितो ल्युट् कर्मणि कर्तरि वा स्यात् अनुशासनाभावादित्यत आह ।। एतदुक्तं भवतीति ।। तत्राद्ये इति ।। शासनीशब्दस्य शास्यत्वार्थत्व इत्यर्थः ।। द्वितीये त्विति ।। शासकत्वार्थकत्वे तु कर्मणि षष्ठी कर्तरि ल्युडित्यर्थः । ननु यदि बहुलग्रहणात्कर्मणि कर्तरि ल्युट् स्यात् तर्हि कथं प्रमाणपद्धतौ कर्तरि प्रमाण शब्दस्याननुशासनादित्युक्तमिति चेन्न । ल्युडन्तप्रमाणशब्दस्यैव कर्तरिलो कवेदयोरप्रयोगादननुशासनमुक्तं न तु ल्युडन्तमात्रस्याभिप्रेतम् । तथात्वे कर्तरि ल्युडन्तस्याननुशासनादित्यवक्ष्यत् । प्रमाणं नित्यमर्यादा सत्यवादि-प्रमातृष्वित्याद्यभिधानोक्तिस्तु कुत्रापि प्रयोगाभावात्परास्ता । अस्मिन्नर्थे विप्राःप्रमाण-मित्यादिप्रयोगस्तु विप्रशब्देन विप्रज्ञानप्रतीत्यातल्लक्षणानन्यथासिद्धत्वान्न प्रमाणशब्दस्य प्रमातृत्वार्थकत्वसाधक इति भावः । ननु षष्ठ्यन्तास्मच्छब्दादेशभूतममशब्दात्कप्रत्यये करोतिरूपकशब्देन वा समासे सुपो धातुप्रातिपदिकयोरिति षष्ठीलोपे अकृतव्यूहपरिभाषया ममादेशाभावे प्रत्ययोत्तरपदयोश्चेति मादेशेमत्कस्येति भाव्यं कथं ममकस्येत्यत आह ।। अनेनेति ।। पुराणप्रसिद्धतामिति ।। भागवतादिपुराणेषु स्वायंभुवादिमनोःपरंपरा पुत्रत्वेन कपिलादीनामुक्तेरिति भावः ।। कथं मनोःपितृत्वमिति ।। विष्णोरजत्वेन तज्जन्यत्वाभावादिति भावः । मनोरीश्वरं

(टीकाविवृतिः)

प्रतिस्वातन्त्र्यस्य बाधितत्वादाह ।। पितृत्वमिति यावदिति ।। लोके पुत्रं प्रति पितुःस्वातन्त्र्यदर्शनात्स्वातन्त्र्यशब्देन भाष्ये तत्सहचरितपितृत्वस्य लक्षणया ग्रहणादिति भावः ।। गौण्यैवेति ।। मनोर्जनकत्वाभावान्ममतालक्षणगुणयोगात्पितृसादृश्यात्पितेत्युच्यत इत्याशयः ।। उक्तप्रयोजनमिति ।। मनोर्ममत्वगुणयोगेनैव पितृत्वं नान्यथेति वक्तुं ममकस्येत्युक्तम्। अन्यथास्य वैयर्थ्यं स्यादिति भावः। स्वर्गस्थदेवानामायुदेहसर्जकत्वं कथमित्यत आह ।। भूताद्यभिमानिन इति ।। आदिशब्देनेन्द्रियाणि गृह्यन्ते ।। और्वशेयस्येति ।। पुरूरवसो राज्ञ उर्वश्यां जातस्येत्यर्थः ।। उक्तविधयेति ।। नहुषदेहसृष्टचेत्यर्थः। श्रुतौ यच्छब्द इळाविशेषणं सुपां सुलुगित्यनेन सोर्लुका लुप्तत्वात् त्यदाद्यत्वाभावे टाबभावादिति भावेनाह ।। यद्येति ।। संपूर्णऋगभिप्रायमाह ।। त्वत्प्रेरणयैवेति ।। ११ ।।

त्वं नो अग्ने तव ।। मघोनो धनवत इति ।। मघं रेक्ण इति धननामसु पाठादिति भावः। यजमानदेहस्यैकत्वात्तदनुसारेणाश्रितविभक्तिव्यत्ययास्वारस्यादाह ।। तनूशब्दस्येति ।। लक्षणयेति शेषः। मार्गाश्चलंतीत्यादिवदयं तनूशब्दःशरीरस्थावयवलक्षकः। तनूशब्दाच्छसि सर्वेविधयश्छन्दसि विकल्प्यन्त इत्यनेन पूर्वसवर्णदीर्घाभावे यणादेशे तन्व इति रूपमितिभावः ।। पातेरुणिति ।। कृवापाजिमीत्यनेनोण्प्रत्यये आतो युगिति युगागम इति भावः। चशब्दस्यानुक्तसमुच्चयास्वारस्यात्पक्षान्तरमाह ।। यद्वेति ।। अस्मिन्पक्षे शरीराणां बहुत्वोपपत्तेस्तन्व इत्यस्य नावयवलक्षणेति भावः। ननु सदेति व्यर्थं श्रौतरक्षेत्यनेन रक्षणप्रार्थनायाःसिद्धेः। विरुद्धार्थं च। यजमानादिदेहस्य नाशवत्त्वेन सदा रक्षणासंभवादित्यतस्तन्निवर्तनीयामाशङ्कां दर्शयंस्तात्पर्यार्थमाह ।। यान्नदायुरिति ।। रक्षेति प्रार्थनालोट् साहचर्यादाह ।। असि भवेतीति ।। तनयशब्दःपुत्रस्यैव नामेति ।। आत्मजस्तनयःसूनुःसुतःपुत्र इत्यमरोक्तेरिति शेषः ।। इत्येतद्रूपत्वादिति ।। उपलक्षणमेतत्। अपत्यसामान्यनामसु पाठादित्यपि ग्राह्यम् ।। ननु पुत्रोपि तनय इति ।। योगवृत्त्या संततिवाचकतनय शब्दवाच्यःपुत्रोपि भवतीति कृत्वा तनय शब्देन पौत्र एव कुतो गृह्यत इत्याशङ्काशयः। उत्तरमाह ।। तथापीति ।। तोकशब्दोपीति ।। तोकं तनय इत्यपत्यमात्रनामसु पठितयोस्तोकतनय शब्दयोर्मध्येतोकशब्दस्यैव पुत्रार्थकत्वे नियामकाभावादिति भावः ।। प्रथमप्राप्तःपुत्रार्थ इति ।। प्रथमातिक्रमे कारणाभावादिति भावः। तोकस्य तनयस्येत्यन्वयेन पौत्रार्थकत्वे लब्धेपि तनयशब्दे संततित्वादिति यौगिकत्वाश्रयणं प्रपौत्रादीनामपि सङ्ग्रहार्थमिति ज्ञातव्यम् ।। यथासंख्यमिति ।। यथाक्रमेणेत्यर्थः ।। अयं मुख्यार्थ इति ।। ज्ञानस्यैव पुन्नाम्नो नरकात्र त्राता पुत्र इत्यभिधीयत इत्युक्तमुख्यपुत्रत्वम्। अपरोक्षज्ञाने सति नरकाभावात्। तथा मोक्षसुखस्यैव मुख्यतनयत्वम्।

(टीकाविवृतिः)

तनयशब्दवाच्यसंततेरविच्छेदात्। तथा वेदवाचां मुख्यज्ञानसाधनत्वान्मुख्यगोत्वम्। गमेर्डो इति निष्पन्नगोशब्दस्य ज्ञानसाधनत्वार्थकत्वादिति भावः। ज्ञानादीनां तोकादिसाम्यं व्युत्पादयति ॥ पुत्रो हीति ॥ तोक इति शब्दो वाचको यस्य स तोकशब्द इत्यर्थः। ज्ञानस्य पुत्रशब्दवाच्यत्वे श्रुतिमाह ॥ ज्योतिर्हीति ॥ परमे व्योमन् व्योम्नि आकाशवद्व्याप्ते विष्णौ तद्विषयं ज्योतिःप्रकाशकं ज्ञानमेव पुत्रो हि प्रसिद्धमिति श्रुत्यर्थः ॥ प्रसिद्धमिति ॥ गोशब्दस्य वाङ्नामसु पाठादिति भावः ॥ कुत इति ॥ कस्मात्कारणाद्रक्षसीत्यर्थः ॥ १२ ॥

त्वमग्ने यज्यवे ॥ यज्योर्यष्टुरिति ॥ यजे र्यजिमनिशुंद्धिदसिजनिभ्यो युजिति युच्प्रत्ययस्य चित्त्वेपि छान्दसमाद्युदात्तत्वमिति भावः। यज्योश्चेति भाष्य एकस्य चशब्दस्य पायुरन्तर इति विशेषणसमुच्चयार्थत्वाद्द्वितीयस्यानुक्तसमुच्चायकत्वमाश्रित्याह ॥ बहिः फलमिति ॥ प्रसिद्धमिति तुहिशब्दार्थः। अनिषङ्गायेत्यत्र नितरां सङ्गःस्वर्गादिफलेत्यन्तस्नेहस्तद्रहितस्तस्मा इत्यर्थप्रतीत्या स्वल्पकामनाप्रतीतेराह ॥ सामर्थ्यान्नेरिति ॥ सर्वथा कामनाया निषिद्धत्वात्सविशेषण इति न्यायेन निशब्दस्य नञ्संबन्धात्संगस्यैवात्यन्तं निषेधात्सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणा इत्यादिभगवद्गीतादिविरोधेनेति भावः ॥ इन्धी दीप्ताविति ॥ अस्मात्कर्मणि लटि यकि अनिदितामिति नलोपे इध्यस इति रूपमिति भावः ॥ प्रतिशीर्षं द्व्यक्षत्वाच्चेति ॥ न च चतुश्श्रोत्रं द्विनासं च षडक्षं पिंगलप्रभमित्यग्निध्यानवाक्यविरोधः। शीर्षद्वयेपि तृतीयाक्षस्य प्रवृत्त्याद्यंगत्वाभावाभिप्रायेण चतुरक्षत्वोक्तेरिति भावः ॥ स हि यज्ञमधिकरोतीति ॥ अग्निरेव यज्ञमधिकं करोति आश्रयति वेत्यर्थः ॥ चत्वारि शृङ्गेति ॥ निरुक्तानुसारेणास्य मन्त्रस्यार्थः। अस्याग्नेर्वृषभरूपस्य तदंतर्यामिविष्णोर्वा चत्वारि शृङ्गा शृंगापि। चत्वारो वेदा वा ज्ञापकत्वाच्छृंगतुल्याः। त्रयः पादास्त्रीणि सवनानि वा गतिसाधनत्वात्पादतुल्यानि। द्वे शीर्षे शिरसी प्रायणीयोदयनीयेष्टी वा शिरःस्थानीये। सप्तहस्तासः कराः गायत्र्यादिसप्त छन्दांसि वा करस्थानीयानि। अयमग्निरूपो वृषभः त्रिधा बद्धः मन्त्रब्राह्मणकल्पसूत्रैःसंबद्धस्सन् रोरवीति प्रातःसवनादिक्रमेण शब्दं करोति। एतादृशो महोदेवः श्रेष्ठो देवः। यज्ञनामको मर्त्यान् आविवेश यजमानाय प्रविष्ट इति ॥ वृक इतीति ॥ वृकःश्वापदकाकयोरित्य- भिधानादारण्यकस्य प्राणिहिंसकचतुष्पात्प्राणि विशेषस्य नामेत्यर्थः। अवृकायेत्यत्रैतच्छ्वापदभिन्नत्वकथनस्य व्यर्थत्वात्सिंहो देवदत्त इतिवद्गौणार्थत्वं गृह्यत इत्याशयेनाह ॥ क्रूरे तदुपचर्यत इति ॥ भावे असुनिति ॥ बाहुलकणित्वेन वृद्धावायादेशे धायस इति रूपमिति भावः। धायसेरातहव्य इत्युक्तेःपानोपयोगिद्रव्यमाह ॥ सोमाज्येति ॥ आदिशब्दाद्दधिमध्वादि गृह्यते ॥ कीरेरिति ॥

(टीकाविवृतिः)

कृञोऽच इरित्यनेनेप्रत्यये बहुलोक्तेर्धातो ऋकारस्येकारादेशो रपरत्वं चेति भावः । भरताद्यष्ट ऋत्विङ्नामसु क्वाचित्कं कीरिशब्दपाठमाश्रित्याह ।। ऋत्विङ्नामत्वेपीति ।। भाष्येऽव्याख्यातं तमिति पदं व्याचष्टे ।। तं भक्त्योच्चारितमिति ।। मनसेत्यस्यांतःकरणार्थ स्यमन्त्रभजनेन श्रोत्रसाध्येन संबन्धाभावाद्व्याचष्टे ।। तुष्टयेति ।। मनःशब्देन तद्वृत्तित्वात्सुखं लक्ष्यत इति भावः ।। संभजसे हीति ।। स्वीकरोषिमन्त्रं श्रुत्वा सन्तुष्टो भवसीति यावत् ।। १३ ।।

त्वमग्न उरुशंसाय ।। उरुशब्दस्य बहुनामसु पाठाच्छंसस्तुतावित्यतो भावे घञि स्तोत्रार्थः शंसशब्द इति भावेनाह ।। उरुःशंस इति ।। तथा चोरुशंसायेत्यस्य महास्तुत्यायेत्यर्थः ।। वाघत इत्यत्र वदेःशत्रंतस्योप- धादीर्घो दस्य घादेशःपृषोदरादित्वादिति भावेनाह ।। स्तोत्र इति ।। विष्णोरिति शेषः । वाघच्छब्दस्य वक्ता वाच्योर्थः स्तोता तु तात्पर्यार्थ इति भावः । गुरवः वाघत इति ऋत्विङ्नामसु पाठात्कथं वक्तुत्वार्थकत्वमित्यत आह ।। ऋत्विङ्नामत्वेपीति ।। एतदेव वक्तृत्वमेव ।। धननामेति ।। मघं रेक्ण इति धननामसु पाठादिति भावः ।। दानार्थोयमत्रेति ।। वन षण संभक्ताविति पाठेऽपि धातूनामनेकार्थत्वादिति भावः ।। आङ्पूर्वाद्धृधारण इत्यत्र औणादिके कप्रत्यये यणादेशे आध्रइति रूपमिति भावेन दृष्टान्तमाह ।। महीध्र इति यथेति ।। सप्तस्कंधेति ।। जगद्वृक्षस्य सप्तलोकात्मकसप्तस्कंधेषु विद्यमानो यो वायुर्लोकाञ्जनान्बिभर्ति महाबलत्वादिति प्रमाणार्थः । प्रपाकमित्यत्र प्रशब्दस्यार्श आद्यजन्तपाकशब्देन शास्सीत्यनेनाप्यन्वयमभिप्रेत्याह ।। प्रकृष्टपाकवंतमिति ।। आविर्भूतज्ञाने अपरोक्षज्ञाने योग्यं देवादिकमित्यर्थः ।। इगुपधलक्षण इति ।। इगुपधत्वनिमित्तः इगुपधज्ञाप्रीकिरःक इति सूत्रेणेत्यर्थः ।। इदं चेति ।। प्रदिश इत्यनेनोपदेशकत्वोक्तेः प्रपाकं शास्सीत्यत्रापि उपदेशकत्वस्यैव विवक्षितत्वादिति शेषः ।। सामान्यं विशेषे हेतुरिति ।। सर्वोपदेशकत्वं सामान्य माविर्भूतापरोक्षज्ञानशिक्षकत्वे विशेषे हेतुरित्यर्थः । सामान्यस्य हेतुत्वविवक्षायां भाष्यस्थं ज्ञापकमाह ।। अत एवेति ।। विदुष्टर इत्यस्य सुवेत्तेत्येव व्याख्याने कर्तव्ये अखिलग्रहणादखिलसुज्ञानित्वेनाखिलोपदेशकत्वं सामान्येन हेतुत्वेन विवक्षितमिति ज्ञायत इति भावः ।। विदुष्टर इति ।। अतिशयेन विद्वानिति विवक्षिते विद्वश्शब्दात्तरपि अयस्मयादीनि छन्दसीति भसंज्ञायां वसोस्संप्रसारणमिति संप्रसारणे ष्टुत्वमिति भावः ।। तृन्नन्तत्वाद्द्वितीयेति भावः ।। १४ ।।

त्वमग्ने प्रयतदक्षिणम् ।। प्रयतो दक्षिणायामिति ।। प्रपूर्वाद्यतीप्रयत्न इत्यतः पचाद्यचि सप्तमीशौण्डैरिति समासे सप्तम्यंतदक्षिणाशब्दस्योपसर्जनत्वेपि राजदंतादेराकृतिगणत्वा-त्परनिपातो लक्षणया तद्दानप्रतिपादकत्वं व्यत्ययेनाद्युदात्तत्वं चेति भावः ।। सुखहेतुत्वमिति ।।

(टीकाविवृतिः)

सुखहेत्वन्नादौ स्वादुशब्दप्रयोगादिति भावः ॥ ककारागमेनेति ॥ सद्मेत्यत्र सकारात्पूर्वमिति शेषः । तथा चादेशप्रत्यययोरिति षत्वमिति भावः ॥ वसतौ गृह इति ॥ वसतिः स्यादवस्थाने यामिन्यां च निकेतन इति विश्वोक्तेः । वेश्मसद्मनिकेतनमित्यमरोक्तेश्चेति भावः । स्योनं शेवमिति सुखनामसु पाठादाह ॥ स्योनं सुखमिति ॥ ननु क्षद्मनेम इत्यन्ननामसु पाठात्स्वाद्वन्नदातेति कुतो न व्याख्यातमित्यत आह ॥ अत एवेति ॥ स्वगृहे स्योनकृत्त्वस्यातिथिभ्योऽन्नदानातिरिक्तस्याभावात्स्वादुक्षद्मेत्यत्रापि तदर्थकत्वे पुनरुक्तिः स्यादिति भावः । जीवयाजमित्यत्र जीवप्राणधारण इत्यतःपचाद्यच् । यजेर्भावे घञिति भावेनाह ॥ जीवस्य जीवतो याजो यज्ञ इति ॥ तात्पर्यार्थमाह ॥ जीवनेन व्याप्तो यज्ञ इति ॥ ननु याजं यजत इति पुनरुक्तिरित्यत आह ॥ यजतेऽनुतिष्ठतीत्यर्थ इति ॥ सर्वधातुषु धात्वर्थसामान्यभूतकृञर्थस्य सत्त्वाद्यागरूपविशेषार्थस्य याजशब्देनोक्तत्वाद्यजत इत्यस्य पोषं पुष्णातीत्यादिवत्सामान्यरूपकरोत्यर्थपर्यवसानादिति भावः ॥ यश्च यावज्जीवमिति ॥ यजत इत्यनन्तरं यदा तदा रक्षतीत्यध्याहार्यम् । न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्युक्तेः सुप्रतिज्ञ इत्यस्यार्थमाह ॥ दृढदीक्ष इति ॥ प्रारंभमात्रमिच्छा वा विष्णुधर्मे न निष्फलेति वचनाद्भक्तिपूर्वकदीक्षामारभ्य रक्षतीत्यर्थः । सोपमादिव इत्यस्य सङ्गत्यर्थं मध्येऽपेक्षितमध्याहर्तुं पृच्छति ॥ यथोक्तेति ॥ स्वर्गादिकं पारत्रिकमपि भवति आगमादित्यध्याहारांश इति ज्ञातव्यम् । भाष्ये क्षमेति वसतिरिति स्त्रीलिङ्गनिर्देशः कुतःकृत इत्यत आह ॥ स्त्रीलिङ्गेनेति ॥ श्रौतोपमाशब्दस्य स्त्रीलिङ्गत्वात्तत्र याऽऽकांक्षा सा स्त्रीलिङ्गेनैव पूरणीयेति भावेन क्षमेत्याद्युक्तमिति भावः । आगमोक्तं यज्ञादिफलं स्वर्गादिकं भविष्यतीत्यत्र कुतःप्रमाणाद्विश्वासःकार्य इति शंकायाः सोपमादिव इत्यनेन कथमुत्तरं जातमित्यतोभिप्रायमाह ॥ एतदुक्तं भवतीति ॥ सहस्रनामपठनरूपेण इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः । युज्येतात्मा सुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिरित्यादावुक्तेनेति शेषः । विमतं यज्ञादिफलं स्वर्गाद्यवश्यंभविष्यत्यागमोक्तत्वात्क्षमावदित्यनुमीयत इत्यर्थः ॥ १५ ॥

**ऋक्संहिता पदपाठसहिता** (सू-३१, व-४)

**(३६६) इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ॥ आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ॥ १६ ॥**

**(प०) इमाम् । अग्ने । शरणिम् । मीमृषः । नः । इमम् । अध्वानम् । यम् । अगाम । दूरात् ॥ आपिः । पिता । प्रऽमतिः । सोम्यानाम् । भृमिः । असि । ऋषिऽकृत् । मर्त्यानाम् ॥ १६ ॥**

(ऋक्संहिता पदपाठसहिता)

(३६७) मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे ॥ अच्छयाह्यावहा दैव्यं जनमासादय बर्हिषि यक्षिच प्रियम् ॥१७॥

(प०) मनुष्वत् । अग्ने । अङ्गिरस्वत् । अङ्गिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे ॥ अच्छ । याहि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥ १७ ॥

(३६८) एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ॥ उत प्रणेष्यभिवस्यो अस्मान्त्संनः सृज सुमत्या वाजवत्या ॥ १८, ३५, ३१ ॥

(प०) एतेन । अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा ॥ उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजऽवत्या ॥ १८, ३५, ३१ ॥

## ऋग्भाष्यम्

यामे भवच्छरणप्राप्तिरेषामर्षस्व तामल्प इति क्रुधो मा । त्वत्प्राप्त्यर्थं दूरमगांच यत्तत्प्राप्यः पिता ज्ञानदो देवतानाम् । त्वं भ्रामको मानुषाणामृषीणां कर्ता तथा ज्ञानदानेन देव ॥ १६ ॥ यथामनुश्चाङ्गिरावा ययातिर्गृहे प्राप्तस्त्वां तथा मद्गृहं च । अभ्यायाह्यावह देव संघमासादय बर्हिषि यक्षि चप्रियम् । यष्टात्वमेवाखिलजीव-गोयत् ॥ १७ ॥ स्पष्टत्वं च प्राप्नुहि वेदवाचा । शक्त्या यत्ते चकृमज्ञानतो वा वस्यो भद्रं प्रणयास्मान्सुमत्या । भोगेतया संसृज नित्यमेव यस्माच्छक्त्या चकृमत्व-त्सुकर्म ॥ १८, ३५, १२ ॥

## ऋग्भाष्यटीका

इमाम् । यामे । हे अग्ने यैषा त्वमग्न इत्यादिनोक्ता । मे भवच्छरणप्राप्तिरिमां ताम् । नो मे । शरणिं शरणं भवच्छरणप्राप्तिम् । मीमृषः अमीमृषः । व्यत्ययेन मर्षस्व सहस्व । प्रार्थनस्याभिप्रायमाह ॥ अल्प इति । अल्पोयमतिमहान्तं मां कथं शरणं यातीति धिया मा क्रुधः । क्रोधं मा कार्षीः । कुतः । इममध्वानमवधारय

(ऋग्भाष्यटीका)

दूराद्यं यस्मिन्नगामेत्यस्यतात्पर्यमाह। यद्यस्मात्त्वत्प्राप्त्यर्थं दूरमेवाऽगां तत्तस्मात्। अनादौ भवाध्वनि परिखिन्नः कथंचिदिदानीं त्वां प्राप्तोस्मि यतस्तस्मान्मीमृष इति भावः। कथंभूतः। यस्त्वं सोम्यानां सोममर्हति यः। सोमार्हाणां देवतानाम्। आपिः प्राप्यः। पिता जनकः। प्रमतिः प्रकृष्टा मतिर्यस्माज्ज्ञानदोसि। मर्त्यानां मानुषाणां भृमिः संसारे भ्रामकोसि। हे देव तथा ऋषिकृत् ऋषीणां कर्तासि। ज्ञानदानेन भक्तानृषीन्करोषीति यावत्॥ १६॥

मनुष्वत्। हे शुचे अङ्गिरोऽग्ने। मनुष्वन्मनोर्यथा। अङ्गिरस्वत् अङ्गिरसो यथा। ययातिवद्ययातेर्यथा। पूर्ववत् अन्येषामपि पूर्वपुरुषाणां यथा। तथा सदने मदीयं सदनमच्छयाहीत्येतत्तात्पर्यतो व्याख्याति। यथेति। वाशब्दः समुच्चये। गृहे स्वीये। तथा मद्गृहं मम त्वत्प्राप्त्यर्थमिति शेषः। अच्छेत्यभेरर्थे निपातः। अत्र अच्छगत्यर्थवदेष्विति गतिः। यद्वा। प्रथमांतेभ्य एव वतिमभिप्रेत्य व्याख्यानमेवेदं कृतम्। आगत्य च दैव्यं देवतात्मकं जनं देव संघमावह आनय। आगतं च बर्हिषि आसादय उपवेशय। उपविष्टं च तं तव प्रियं देवसङ्घम्। यक्षि यज च। ऋत्विजां कार्यमेतत्कथं मया क्रियतामित्यतोऽभिप्रायमाह॥ यष्टेति॥ यद्यस्मात्त्वमेवाखिलजीव- गोऽखिलजीवानां प्रेरकः तस्माद्दत्विक्षु स्थित्वा यष्टा त्व मेवेति॥ १७॥

एतेन। स्पष्टत्वं च। हे अग्ने एतेन ब्रह्मणा एतया वेदवाचा। वावृधस्व अतिशयेन वर्धस्व। स्पष्टत्वं च व्यक्तत्वमेव न तु वृद्धिं प्राप्नुहि। कथं भूतेन ब्रह्मणा। शक्तीवा शक्त्या वा। विदा वा ज्ञानतो वा। यत् ते त्वद्विषये चकृम यथाशक्ति यथाज्ञानं च कृतया वैदिक्याऽनया स्तुत्याऽस्माकं प्रत्यक्षो भवेत्यर्थः। भाष्ये ब्रह्मापेक्षं यदिति नपुंसकम्। व्यत्ययेन यामिति वा। यस्माच्छक्त्याद्यनतिक्रमेण चकृम तस्मादिति वा। उत किञ्च। अस्मान्वस्यो भद्रम्। अभिप्रणेषि प्रापयसि। प्रणय प्रापय। तस्यैव विवरणं नोऽस्मान्वाजवत्या अन्नवत्या उपलक्षणमेतत्। भोगेतया सर्वभोगोपेतया। सुमत्या संसृज संयोजय। समोर्थमाह॥ नित्यमेवेति॥ प्राक् शक्तीवेत्यादि ब्रह्मविषयं व्याख्यातम्। इदानीं प्रकारान्तरेण व्याख्याति। यस्मादिति। यद्यस्माच्छक्त्या च विदा च। ते त्वदीयं कर्मेति शेषः। त्वत्सुकर्म चकृम तस्मादुत-प्रणेषीत्यादि॥ १८, ३५, १२॥

## मन्त्रार्थमञ्जरी

(हे) अग्ने। (या) एषा, 'त्वमग्ने' इत्यादिनोक्ता मे भवच्छरणप्राप्तिः। इमाम्, ताम्। (नः, मे। शरणिम्, शरणम्, भवतु) शरणप्राप्तिम्। मीमृषः, व्यत्ययेन मर्षस्व, सहस्व, 'मृष सहने', 'अल्पोऽयं महान्तं मां कथं शरणं याति?' इति धिया मा क्रुध इति भावः। कुतः ? यम् इमम् अध्वानम्। अवधार्य यस्मात्त्वत्प्राप्त्यर्थम्– दूरात्, दूरम्। (एव) अगाम। तस्मादनादौ भवाध्वनि परिखिन्नाः कथंचिदिदानीं त्वां प्राप्ताः स्मो यतस्तस्मात् 'मीमृषः' इति भावः। कथं भूतः ? (यः)

(मन्त्रार्थमञ्जरी)

त्वम्। सोम्यानाम्, सोमार्हाणाम्, देवानाम्। आपिः, प्राप्यः, आप्नोतेः कर्मणीकारः। पिता, जनकः। प्रमतिः, प्रकृष्टा मतिर्यस्माज्ज्ञानदः। (असि) मर्त्यानाम्, मनुष्याणाम्। भृमिः, भ्रामकः। असि। (हे देव) तथा ऋषिकृत्, ऋषीणां कर्ता। (असि) ज्ञानदानेन भक्तानृषीन्करोषीति यावत्॥ १६॥

(हे) शुचे अङ्गिरः अग्ने। मनुष्वत्, मनोर्यथा। अङ्गिरस्वत्, अङ्गिरसो यथा। ययातिवत्, ययातेर्यथा। पूर्ववत्, अन्येषामपि पूर्वपुरुषाणां यथा। (तथा) सदने, मदीयं सदनम्। अच्छ याहि, 'अच्छ' इत्यभेरर्थे निपातोऽयम्, 'अच्छ गत्यर्थवदेषु' इति गतिसंज्ञः, अभियाहि, आयाहि। आगत्य च– दैव्यम्, देवतात्मकम्। जनम्, देवसंघम्। आ वह, आनय। आगतं च– बर्हिषि। आ सादय, उपवेशय। उपविष्टं च तम् (तव) प्रियम्, देवसंघम्। यक्षि यज। च, लुग्विकरणं छान्दसम्, व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम्, अखिलजीवप्रेरकत्वाद्दत्विक्ष्वपि स्थितत्वात्तान्प्रेर्य यजेति भावः, 'न ऋते त्वत्क्रियते' (ऋ० म० १०।११२।९) ॐ व्यतिरेकानवस्थितेश्च' (२।२।४) इत्यादि श्रुतिसूत्रसिद्धोऽयमर्थः इति भावः॥ १७॥

(हे) अग्ने। एतेन ब्रह्मणा, एतया वेदवाचा। ववृधस्व, अतिशयेन वर्धस्व, त्वदीयां वृद्धिं व्यक्तीकुरु। कथं भूतेन ब्रह्मणा? शक्ती वा, शक्त्या वा, पूर्वसवर्णदीर्घः। विदा वा, ज्ञानतो वा, वेत्तेः भावे क्विप्। यत्। ते, त्वद्विषये। चकृम। यथाशक्ति यथाज्ञानं च कृतया वैदिक्या स्तुत्यास्माकं प्रत्यक्षो भवेत्यर्थः॥ उत, किं च। अस्मान्। वस्यः, भद्रम्। अभि प्र णे (ने) षि, प्रणयसि, विकरणं लुक्, प्रापयेति यावत्। तदेव विव्रियते– नः, अस्मान्। वाजवत्या, अन्नवत्या, सर्वभोगोपलक्षणम्– सर्वभोगोपेतया। सुमत्या। सम् सृज, नित्यं संयोजय। यद्वा– 'यत्, यस्मात्। शक्ती वा विदा वा। ते, त्वदीयम्। (कर्म) चकृम (तत्) उत अभि प्र णे (ने) षि' इत्यर्थः॥ १८॥ इति पञ्चत्रिंशो वर्गः॥ ३५॥ एकत्रिंशं सूक्तम्॥ ३१॥

## रूपावतारः

इमामग्ने॥ शरणिमिति। तृतीयोऽतिशय इत्युक्तेरकारस्य इकारः। मीमृष इति। चुरादिण्यन्तात् मृषेर्लुङि सिपि च्लेश्चङादेशे चङीति द्विर्वचने 'उरत्' (७।४।६६) इति अभ्यासऋवर्णस्य अकारादेशे 'सन्वल्लघुनि....' (७।४।९३) इति सन्वद्भावे 'सन्यतः' (७।४।७९) इति इत्वे ''दीर्घो लघोः'' (७।४।९४) इति दीर्घे णिल्लोपादौ 'बहुलं छन्दस्यमाङ् योगेऽपि' (६-४-७५)

इति अडभावे मीमृष इति रूपम् । व्यत्ययेनेति । लोडर्थे लुङो जातत्वात् मर्षस्वेति व्याख्यानमुपपन्नमिति भावः । सूत्रोच्चारणेन सोम्यशब्दसिद्धिं स्मारयति । सोममर्हति यः (४।४।१३७) इति । सोमशब्दात् द्वितीयासमर्थात् अर्हतीत्यर्थे यप्रत्ययो भवतीति सूत्रार्थः । भृमिरिति । 'भ्रमेः संप्रसारणं च' इति सूत्रेण भ्रमेरिन् प्रत्यये संप्रसारणे भृमिरिति रूपम् ।। १६ ।।

मनुष्वत् ।। मनुष्वदिति । मनुशब्दपर्यायान्मनुश्शब्दाद्वतिप्रत्यये सस्य षत्वे मनुष्वदिति रूपम् । ननु मनुष्वदित्यादि व्याख्यानाय भाष्ये मनोरङ्गिरसो ययातेरिति षष्ठी प्रयोक्तव्या । 'तत्र तस्येव' (५।१।११६) इति सूत्रेण षष्ठीसप्तम्यन्ताभ्यामेव वतेर्विधानात् कथं प्रथमान्तशब्दप्रयोग इत्यत आह । तात्पर्यत इति । अच्छेत्यभेरर्थ इति । इतःपरं टीकायां श्रूयमाणं अत्र अच्छगत्यथवदेष्विति गतिरिति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् गतिसंज्ञाप्रदर्शनप्रयोजनाभावात् । यक्षीति यजेः सिपि तस्य हीत्यादेशाभावे शपो लकि 'व्रश्च....' (८।२।३६) इति षत्वे 'षढोः कः सि' (८।२।४१) इति कत्वे 'आदेशप्रत्यययोः' (८।३।५९) इति सिपः सकारस्य षत्वे यक्षीति रूपम् ।। १७ ।।

एतेनाग्ने ।। वावृधस्वेति । वृधेर्लोटि थासः सेभावे 'सवाभ्यां....' (३।४।९१) इत्येकारस्य वत्वे व्यत्ययेन शविकरणे छान्दसे द्विर्वचने उरदत्वे छान्दसे अभ्यासस्य दीर्घे वावृधस्वेति रूपम् । यदिति नपुंसकमिति । यत्ते चकृमेत्यत्र यदिति नपुंसकमित्यर्थः । यामिति वेति । यां वेदवाचं चकृम इत्यर्थ इति भावः । प्रणेषीति । प्रपूर्वान्नयतेः लटः सिपि शब्लुकि गुणे षत्वे प्रणेषीति रूपम् ।। १८ ।। ३५ ।। १२ ।।

## पदार्थप्रकाशिका

इमामग्ने शरणिं मीमृषो नः । नन्विदानीं प्रार्थनायाः क्रियमाणत्वात् मर्षस्वेति वक्तव्यम् । मीमृष इति भूतार्थे लङ्प्रयोगः कथमित्यत आह । व्यत्ययेनेति । लुङो व्यत्ययेन लोडित्यर्थः । सहस्वेति । मृष तितिक्षायामिति धातोरिति भावः । कुत इति । अल्पेन मया शरणप्राप्तौ कृतायां कुतो मया क्रोधो न कर्तव्य इत्यर्थः । अवधारयेति शेषं पूरयित्वा ऋचं स्वयं व्याचष्टे । इममिति । यस्मिन्नध्वनि तस्मादिति । महाश्रमेण मया त्वां प्राप्तत्वादित्यर्थः । सोम्यानां सोमर्हाणमित्यर्थमुपपादयितुमाह । सोममर्हति य इति । सोमशब्दात् द्वितीया समर्थात् अर्हतीत्यर्थे यप्रत्ययो भवतीति सूत्रार्थः । सो मर्हंति सोम्याः ब्राह्मणाः इत्युदाहरणम् । तथाच सोमशब्दात् तद्धिते यप्रत्यये यस्येति चेति मकारस्थाकारलोपे सोम्येति रूपम् । सोमर्हाणां देवतानामिति । अपरे ब्रह्माख्यचतुर्मुखादिकानां शतस्थानां देवतानामित्यर्थः । यद्यपि नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु । सोमाधिकारो

(पदार्थप्रकाशिका)

वेदोक्तो ब्रह्मणी द्वे शताधिके इत्युक्तम्। तथाप्यत्रापि पितेति परब्रह्मणः प्राप्यत्वादिना उच्यमानत्वात् परब्रह्मव्यतिरिक्ता चतुर्मुखाख्या परब्रह्मा(सहिता)दिका एव शतदेवताः सोमार्हाः ग्राह्याः। ताश्च प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः। बृहस्पतिर्ऋभूद्यावापृथिव्यावश्विनौ तथा। विश्वेदेवाश्च पितरः। मताः इति प्रमाणानुसारेण ज्ञातव्याः। तत्र प्रधानवायुना सह मरुतः पञ्चाशत्। वसवोऽष्टौ। रुद्रा एकादशाः। आदित्याः उरुक्रमव्यतिरिक्तद्वादशाः बृहस्पतिः ऋभुः द्यावापृथिव्यौ अश्विनौ चेति षट् विश्वेदेवाः दश पितरस्त्रय इति शतसंख्या द्रष्टव्याः। इति यावदिति। तथाच ऋषिकृदित्यस्य ऋषिस्त्वं कर्तासीत्यर्थो द्रष्टव्यः॥ १६॥

मनुष्वदग्ने अङ्गिरः स्वदङ्गिरः। अङ्गिर इति। अग्नेरङ्गिरसः पुत्रत्वादङ्गिरशब्देनोच्यत इत्यर्थः। तात्पर्यत इति। मनुष्वदित्यादौ वतिः षष्ठचन्तादेव। तत्र तस्यैवेति षष्ठचन्ताद्वतेर्विधानात्। तथाच मनुष्वत् मनोर्यथा सदनं गेहमाप्तस्तथा मदीयं सदनमायाहि इत्येवमादिरूपेणास्मदुक्तरीत्या व्याख्येयम्। मनुश्चाङ्गिरा वा ययातिरिति प्रथमान्ततया प्रवृत्तं भाष्यं तु न व्याख्यानरूपम्। प्रथमान्ताद्वतेरविधानात्। अतस्तात्पर्यकथनमात्रपरमेवेत्यर्थः।

ननु मन्वङ्गिरोभ्याम् उभाभ्यामपि स्वगृहे भगवन्तं प्राप्तत्वात् वाशब्दो व्यर्थ इत्यत आह। वाशब्द इति। ननु ऋचि अच्छ याहीत्युक्तत्वात् अभ्ययाहीति भाष्ये कथमुक्तमित्यत आह। अच्छेति। निपात अभेरर्थ इति। ननु कुगतिप्रादय इत्युक्त्वा ते प्राग्धातोः इति गतिसंज्ञकउपसर्गाणामेव धातोः प्राक् प्रयोगस्योक्तत्वादच्छ इत्यस्य तु गतिसंज्ञकत्वाभावात् कथं धातोः प्राक् प्रयोग इत्यतः अच्छेत्युपसर्गोऽपि गतिसंज्ञक एवेत्याह। अच्छेति। गत्यर्थवत्सु धातुषु परतः सत्सु तत्पूर्वं विद्यमान अच्छेत्युपसर्गो गतिसंज्ञकः स्यादिति सूत्रार्थः। इति गतिरिति। इति सूत्रेण गतिसंज्ञक इत्यर्थः। तथाच आयाहीत्यस्यापि धातोर्गत्यर्थकत्वेन तस्मिन् परतः अछेत्यस्यापि गतिसंज्ञकत्वाद्धातोः प्राक् प्रयोगो युक्त इत्यर्थः। पूर्वं षष्ठचन्तादेव वतिमङ्गीकृत्य भाष्यतात्पर्यकथनमात्रपरमिति व्याख्यातम्। इदानीं तु मनुश्चेत्यादिभाष्यं व्याख्यानपरमेवेत्याह। यद्वेति। प्रथमान्तेभ्य एवेति। मन्वङ्गिरोययातिपूर्वशब्देभ्य इत्यर्थः। तत्र त्वस्यैवेत्यस्य प्रायिकत्वादिति भावः। एतदिति। आह्वानादिकमित्यर्थः। तमेवेतीति। इति हेतोस्त्वमेव यक्षीति पूर्वेण सम्बन्धः॥ १७॥

एतेनाग्ने ब्रह्मणा वावृधस्व। वर्धस्वेत्यनन्तरं वर्धनं च स्पष्टत्वमेवेति शेषः। नत्विति। वृद्धिं प्राप्नुहीत्येवमर्थो न तु इत्यर्थः। शक्तीत्येतत् तृतीयान्तम्। शक्तिशब्दात्परतः स्थितायाः यारूपायाः तृतीयाविभक्तेः सुपां सुलुगिति पूर्वसवर्णे पश्चाद्दीर्घे च सति शक्तीत्येव भवतीत्यभिप्रेत्योक्तं शक्त्या

(पदार्थप्रकाशिका)

वेति । योग्यतानुसारेणेत्यर्थः । यदिति । वेदापरपर्यायब्रह्मरूपं स्तोत्रमित्यर्थः । तथाच शक्त्याद्यनुसारेण कृतेन ब्रह्मणेत्यर्थलाभात् । कथं भूतेन ब्रह्मणेति शङ्कापरिहार इति ध्येयम् । पूर्वार्धस्य फलितमर्थमाह । यथाशक्तीति । ननु भाष्ये प्राप्नुहि वेदवाचेति पूर्वं वैदिक्याः स्तुतेर्वेदवाक्शब्देन प्रकृतत्वात् यां ते चकृमेति वक्तव्यम् । यदिति नपुंसकलिङ्गः प्रयोग कुतः इत्यत आह । भाष्य इति । ऋचि ब्रह्मणेत्युक्तत्वात्तदपेक्षया नपुंसकमित्यर्थः । व्यत्ययेनेति । नपुंसकलिङ्गव्यत्ययेनेत्यर्थः । यद्वा यच्छब्दो यस्मादित्यर्थ इत्यभिप्रेत्य आह । यस्मादिति । अस्यां योजनायां वैदिकीं स्तुतिमिति भाष्ये अध्याहारो द्रष्टव्यः । ननु पूर्वपादेनैव भद्रं प्रणेषि प्रापयेति प्रार्थितत्वात् सनः सृजेति पुनरुक्तम् । अस्यापि भद्रान्तर्गतत्वात् इत्यत आह । तस्यैव विवरणमिति । सममिति । संसृजेत्यत्रत्यस्य समित्युपसर्गस्येत्यर्थः । ब्रह्मविषयमिति । ब्रह्मणा वावृधस्वेत्युक्ते कथं भूतेन ब्रह्मणेति शङ्कायां शक्तीवेत्यादिकं प्रवृत्तम् । तथाच यथाशक्तिकृतया अनया वैदिक्याऽनयास्तुत्यास्माकं प्रीतः सन् प्रत्यक्षो भवेत्येवं ब्रह्मशब्दोक्तवेदसम्बन्धिस्तुति विशेषणत्वेन व्याख्यातमित्यर्थः ॥ १८, ३५, ३१ ॥

## पदार्थदीपिका

मीमृष इति ॥ मृष तितिक्षायाम् । अस्मात् णौ चङि गुणे प्राप्ते नित्यं छन्दसी उपधाया ऋकारस्य ऋकारादेशः । णिलोपद्विर्भावहलादिशेषोरददित्यसन्वद्भावेत्वदीर्घत्वानि ज्ञातव्यानि । ॥ अगाम ॥ इण् गतौ । इणो गा लुङि इति गादेशे गातिस्थेति सिचो लुक् । अडागम इति भावः ॥ भृमिरिति ॥ भ्रमु अनवस्थाने । भ्रमेः सम्प्रसारणं चेति इण्प्रत्ययसम्प्रसारणे । परपूर्वत्वम् । इगुपधात् किदित्यनुवृत्तेः कित्वाद्गुणप्रतिषेध इति भावः ॥ १६ ॥

तात्पर्यत इति ॥ तत्र तस्यैवेति षष्ठी सप्तमी समर्थादिवेवार्थे वतिप्रत्ययविधानेन मनुर्यथेत्यादेः व्याख्यानत्वासंभवात् तात्पर्यत इत्युक्तम् ॥ अभेरर्थ इति ॥ तथा चाच्छयाहीत्यस्याभियाहीति व्याख्यानमुपपन्नमिति भावः । ननु ते प्राग्धातोरित्युपसर्गाणां एव धातोः प्राग् प्रयोगाभिधानात् अनुभवरूपस्याच्छेत्यस्य कथं प्राक् प्रयोग इत्यत आह ॥ अत्रेति ॥ अच्छेत्यव्ययं गत्यर्थेषु धातुषु वदतो गतिसंज्ञं भवतीति सूत्रार्थः । तथा च गत्यर्थकयाहीत्येतद्योगात् अच्छेत्यस्य गतित्वेन धातोः प्राग् प्रयोगो युक्त एवेति भावः ॥ यद्वेति ॥ तत्र तस्येवेति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वादिति भावः । मनुष्वदित्यादि अयस्मयादित्वेन भत्वाद्रुत्वाद्यभावः ॥ यक्षीति ॥ लोटि बहुलं छन्दसीति शपो लुक् । सेर्ह्यपिच्चेति हेरभावः छान्दसः । षत्वकुत्वयोः रूपनिष्पत्तिः इति ज्ञेयम् ॥ १७ ॥

(पदार्थदीपिका)

वावृधस्वेति । वृधुवृद्धौ क्रियासमभिहारे यङ् लुकि द्विर्भावहलादिशेषोरदत्वादि द्रष्टव्यम् । अभ्यासस्य संहितायां दीर्घः छान्दस इति भावः । शक्ती । सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वमिति भावः ॥ प्रणेषि । णीञ् प्रापणे । बहुलं छन्दसीति शपो लुक् । उपसर्गादसमास इति णत्वमिति भावः ॥ १८, ३५ ॥

## टीकाविवृतिः

इमामग्ने ॥ अपराधक्षमाप्रार्थनेयमृक् ॥ त्वमग्न इत्यादिनेति ॥ त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयमित्यादिना पितृत्वादेः कथनरूपेत्याशयः । श्रुतौ गुरावात्मनि बहुवचनमित्युक्तेर्न इत्युक्तं वस्तुतो हिरण्यस्तूपस्य स्तोतुरैक्याद्भाष्ये म इति तस्य प्रतिपदमुक्तमिति भावेनाह ॥ नोम इति ॥ शरणिं शरणमिति ॥ तृतीयोतिशय इत्युक्तेरकारस्येकार इति भावः ॥ मीमृष इति ॥ मृष तितिक्षायामित्यत श्चुरादिण्यन्तालुङि सिपि च्लेश्चङि द्विर्वचने चीत्युक्तेरपधागुणात्पूर्वं द्वित्वोरदत्वयोर्हलादिःशेषे सन्वल्लघुनीति सन्वद्भावे सन्यत इतीत्वे दीर्घो लघोरिति दीर्घे णिलोपादौ बहुलं छन्दस्यमाङ्योगेपीत्यडभाव इति भावः । प्रार्थनायां लोडादिना भाव्यं कथं लुङित्यत आह ॥ व्यत्ययेनेति ॥ प्रार्थनस्येति ॥ शरणप्राप्तेरपराधत्वाभावात्प्रार्थनाया अयोग इति शंकायामिति शेषः ॥ कथं शरणं यातीति ॥ स्वात्मानं प्रतिममपितृत्वादेरयोग्यत्वादित्याशयः ॥ कुत इति ॥ अल्पकस्य तवापराधो मया महता केनमित्यतोभिप्रायमाह ॥ अनादौ भवाध्वनीति ॥ इदानीं त्वां प्राप्त इति ॥ ज्ञानेनेतिशेषः । विष्णोर्हृत्स्थत्वाद्व्याप्तत्वाद्वा सामीप्यस्य सदा सत्त्वेप्यनादिकाले संसारक्लेशमग्नस्य विष्णवज्ञानमेव दूरगमनं तज्ज्ञानमेव समीपप्राप्तिस्तस्माद्यथादूरादागतत्वादल्पकेप्यपराधं दयालवःसहंते तथात्वमपि मयीति भावः ॥ सोममर्हति यइति ॥ इति सूत्रेण सोमशब्दाद्द्वितीयांतादर्हार्थे य प्रत्यय इति शेषः ॥ आपिःप्राप्य इति ॥ आप्नोतेरौणादिकःकर्मणि इप्रत्यय इति भावः ॥ भृमिरिति ॥ भ्रमेःसंप्रसारणं चेत्यनेन सूत्रेण भ्रमु चलन इत्यत इनिप्रत्ययो धातोःसंप्रसारणं चेति भावः । संसारे स्वर्गभूमिनिरयात्मके । भ्रामकः पर्यावर्तक इत्यर्थः ॥ १६ ॥

मनुष्वत् ॥ शुचे अङ्गिर इति ॥ हे शुचे शुद्ध । हे अङ्गिरः अङ्गिनां शरीरिणां रस श्रेष्ठेत्यर्थस्य प्रागुक्तत्वादत्र नोक्तमिति ज्ञेयम् । मनुष्वदादिपदचतुष्टये तत्र तस्येवेति सूत्रेण षष्ठ्यन्ताद्वतिप्रत्यय इति भावेनाह ॥ मनोर्यथेत्यादिना ॥ तेषां सदनं यथा प्राप्नोसीत्यर्थः । एवमक्षरार्थमुक्त्वा भाष्यं संगमयति ॥ एतत्तात्पर्यत इति ॥ वाशब्द इति ॥ वाव्ययं स्यात्समुच्चय इत्येकाक्षररत्नमालोक्तेरिति भावः ॥

(टीकाविवृतिः)

अच्छेत्यभेरर्थ इति ।। आभिमुख्येऽच्छमव्ययमिति विश्वोक्तेरिति भावः । नन्वच्छेत्यस्य वहेत्याद्यन्वयसंभवाद्याहीत्यस्याभ्यायाहीति व्याख्यानं कथमित्यत आह ।। अत्रेति ।। इति सूत्रेण अच्छेत्यव्ययस्य गत्यर्थादिधातुषु गतिसंज्ञा विधानाद्यातेर्विशेषार्थपर्यवसानादभ्यायाहीत्युक्तम् । अत एव ततःपूर्वनिपात इति भावः ।। प्रथमान्तेभ्य एवेति ।। मनेरौणादिक उसिप्रत्यये सकारान्तोप्ययं मनुवाचकः । तस्मात्तेन तुल्यं क्रिया चेद्वतिरित्यनेन तृतीयांताद्वतिप्रत्यये मनुषामनुना तुल्यं वर्तत इति मनुष्वदित्यादौ मन्वादयो यथास्मद्गृहमायांतीत्यर्थ प्रतीतेः प्रथमांतेभ्य इत्युक्तं न तु प्रथमान्तेभ्यो विधानादिति भावः ।। दैव्यं देवतात्मकमिति ।। देवशब्दाद्भावे ब्राह्मणादित्वात्ष्यञि भावभवित्रोरभेदादिति भावः । वहेःप्राप्त्यर्थत्वादाह ।। आवह आनयेति ।। यक्षीति ।। यजेर्लोटि सिपि बहुलं छन्दसीति शपो लुकि सेर्ह्यपिच्च वा छन्दसीति सेर्हिरादेशाभावे व्रश्चादिसूत्रेण जस्य षत्वे षढोःकस्सीति कत्वे आदेशप्रत्यययोरिति सस्य षत्वमिति भावः ।। ऋत्विजां कार्यमिति ।। एतद्देवावहनादिकमित्यर्थः ।। १७ ।।

एतेनाग्ने ।। ब्रह्मणेति ।। ब्रह्मप्रोक्तं तपोध्यात्मवेदज्ञानेषु सूरिभिरिति विश्वोक्तेरिति भावः । वावृधस्वेत्यत्र वृधुवृद्धावित्यतो लोटि थासि बहुलं छन्दसीति शपःश्लौ द्वित्वोरदत्वयोबहुलमित्युक्तेः शविकरणे च थासः से इति सेभावे सवाभ्यामिति वादेशे च ववृधस्वेति सिद्धौ संहितायामन्येषामपीतिदीर्घ इति भावेन व्याचष्टे ।। अतिशयेन वर्धस्वेति ।। स्पष्टत्वं चेति भाष्यं व्याचष्टे ।। व्यक्तत्वमेवेति ।। चान्वाचये समाहारेप्यन्योन्यार्थे समुच्चये । पदांतरे तथा पादपूरणेप्यवधारण इति विश्वोक्तेश्च शब्दोवधारणार्थ इति भावः ।। शक्ती वा शक्त्या वेति ।। शक्तिशब्दात्तृतीयायाःसुपां सुलुक्पूर्वसवर्णेत्यनेन पूर्वसवर्णे इकारादेशे पूर्वोत्तरयोः पुनःसवर्णदीर्घ इति भावः ।। विदा वा ज्ञानतो वेति ।। वेत्तेर्भावे औणादिकःक्विबिति भावः ।। यत्त इति ।। यत् ब्रह्म । त्वद्विषये चकृम । एतेनेत्यन्वय इति भावः । पूर्वार्धस्यान्वयपूर्वकं तात्पर्यार्थमाह ।। यथाशक्तीति ।। भाष्ये वेदवाचेति प्रकृतवाचोविशेषणं यदिति नपुंसकं कथमित्यत आह ।। ब्रह्मापेक्षमिति ।। श्रौतब्रह्मविशेषणभूतश्रौत्रयदित्यस्यानुवादरूपमित्यर्थः ।। यस्मादिति ।। अनेन श्रुतावपि यच्छब्दो हेत्वर्थ इत्युक्तं भवति ।। वस्यो भद्रमिति ।। वस आच्छादन इत्यतः कर्मण्यौणादिके यत्प्रत्यये निष्पन्नवस्य शब्दो मङ्गलार्थः । स्वमङ्गलस्य गोप्यत्वादिति भावः । तस्माद्द्वितीयैकवचनस्यामःसुपां सुलुगिति स्वादेशे संहितायां तस्य रुत्वोत्वगुणेषु कृतेषु वस्यो इति शब्दादस्मानिति शब्दे परे एङःपदांतादतीति प्राप्तपूर्वरूपं प्रकृत्यान्तःपादमव्यपर इत्यनेन ऋक्पादमध्यस्थ एङोति परे संध्यभावविधायकेन बाध्यत इति बोध्यम् ।। प्रणेषीति ।। नयतेर्व्यत्ययेन

(टीकाविवृतिः)

लोडर्थे लटि सिपि बहुलं छन्दसीति शब्लुकि उपसर्गादसमासेपीति णत्वमिति भावः ॥ तस्यैव विवरणमिति ॥ वस्यः प्रणेषीत्युक्तस्यैवेत्यर्थः । तथा चान्नसुमत्यादेर्भद्रत्वात्पुनस्तत्प्रार्थने- पुनरुक्तिरिति चोदनानवकाशः । श्रौतान्नप्रार्थनस्याल्पत्वाद्भाष्ये भोगेतयेत्युक्तमिति भावेनाह ॥ उपलक्षणमेतदिति ॥ सकलविषयभोगोपेतयेत्यर्थः ॥ समोर्थमिति ॥ संसृजेत्यत्रत्यसंशब्दस्येत्यर्थः ॥ ब्रह्मविषयमिति ॥ यथाशक्ति यत् ब्रह्मस्तुत्यादिकं चकृमेति ब्रह्मविशेषणत्वेन व्याख्यातमित्यर्थः । प्रकारान्तरेण कर्मविषयकत्वेनेत्यर्थः ॥ तस्मादुतेति ॥ सुकर्मकर्तृत्वाद्भद्रं प्रणेषीत्यन्वय इति भावः ॥ १८ ॥

ऋक्संहिता पदपाठसहिता (सू-३२, व-१)

(३६९) इन्द्रस्य नुवीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ॥
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ १ ॥

(प०) इन्द्रस्य । नु । वीर्याणि । प्र । वोचम् । यानि । चकार । प्रथमानि । वज्री ॥ अहन् । अहिम् । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानाम् ॥ १ ॥

(३७०) अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ॥ वाश्रा इवधेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः ॥ २ ॥

(प०) अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष ॥ वाश्राःऽइव । धेनवः । स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥ २ ॥

(३७१) वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ॥ आसायकं मघवादत्तवज्रमहन्नेनं प्रथमजामहीनाम् ॥ ३ ॥

(प०) वृषऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ॥ आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ ३ ॥

(ऋक्संहिता पदपाठसहिता)

(३७२) यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोतमायाः ॥
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥४॥
(प०) यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत । मायाः ॥ आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥ ४ ॥
(३७३) अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ॥ स्कन्धांसीव कुलिशेनाविवृक्णाहिः शयत उपपृक्पृथिव्याः ॥ ५, ३६ ॥
(प०) अहन् । वृत्रम् । वृत्रऽतरम् । विऽअंसम् । इन्द्रः । वज्रेण । महता । वधेन ॥ स्कन्धांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ॥ ५, ३६ ॥

## ऋग्भाष्यम्

इन्द्रस्यवा वासुदेवस्य वीर्याण्याचक्षेऽहं यानिमुख्यानि चक्रे । अहिर्दैत्यं संशयं वा जघान जलानुसारेण चखान मार्गम् । ततर्द विघ्नान्कर्मणां वानुसाराद्वहनात्पक्षावक्षणा दुर्वचांसि । जीवानां चेद्वक्षणा जन्मपर्ववतां बिभेदैव सुयुक्तिभिस्ता ॥ १ ॥ त्वष्टा त्वेतज्ज्ञानवज्रं विरिंचस्ततक्षै तद्विषयं त्विडात्मा । स्वर्यं वज्रं निशितं शब्दजं वा शिशुवत्सागाव इवैतदीरिताः । अंजः समुद्रं जग्मुरापः क्रियावा समुद्रिक्तं देवमेनं व्रजन्ति ॥ २ ॥ वव्रे सोमं तृषितो यद्वदेव वृषापिबत्सवनेषु त्रिषुस्म । सवनानां कद्रुकत्वं द्रुतं यत्कमत्रसोमो ध्यानयोगे मनोवा । सायंकरं लयकृज्ज्ञानमेव समाददे संशय-मीशवद्वा ॥ ३ ॥ अहन्नेनं प्रथमं मायिनां च व्यनाशयो व्याजरूपाश्च मायाः । ततः सूर्यद्युदिनादेश्च कर्ता त्वमेव तावद् बलतो न शत्रुम् । लभसे मायावादिनां वाथ माया व्यनाशयस्तैः स्वजनैस्तज्जयेन ॥ ४ ॥ अहन्वृत्रं व्यंसमतोधिकं च तमो मिथ्या प्रत्ययौ व्यंसनाद्वा । स्कन्धास्तरोर्यद्वदथो विवृक्णा अहिश्च वज्रेण कुलस्य शङ्कृतेः । विद्यानाम्ना कुलिशो बुद्धिरेव पृथिव्याख्या संशयस्तद्वतो यत् । अतः पृथिव्या उपपृक् ॥ ५, ३६ ॥

## ऋग्भाष्यटीका

इन्द्रस्य। पञ्चदशर्चमेतदैन्द्रं सूक्तम्। इन्द्रस्य वा। नु इति क्षिप्रनाम। इदानीमेवाह मिन्द्रस्य प्रसिद्धस्य वासुदेवस्य वा। वीर्याणि कर्माणि। प्रवोचं प्रावोचम्। लडर्थे लुङ्। आचक्षे। कथं भूतानि वज्री अयमिन्द्रो यानि प्रथमानि मुख्यानि। चकार चक्रे। अनन्तत्वेपि तच्चरित्राणां प्रधानानि ब्रवीमीति यावत्। तान्युच्यन्ते। इन्द्रो वज्रीत्युक्तत्वाद्वज्रेणाहिन्दैत्यं दैत्यविशेषम् अहन् जघान। वासुदेवस्त्वहिं हीति निश्चयवाची स्यादिति वचनान्निश्चयविरोधिनं भक्तानां संशयं ज्ञानेनाहन् जघान। विनाशितवानिति व्यवस्थितो विकल्पः। एवमुत्तरत्रापि। किञ्च। अन्वपः लक्षणेत्थंभूताख्यानेति लक्षणे कर्मप्रवचनीयः। जलानुसारेण ततर्द। तर्द हिंसायाम्। हिंसितवान्। किं मार्गमिति शेषः। मार्गस्य हिंसानाम खननमेवेति चखान। अहिर्नामदैत्यो लोकोपद्रवाय पर्वतेषु नदीद्वाराणि रुध्वा मेघपतितं चोदकमन्तरिक्षे प्रतिबध्य स्थितः। तं हत्वेन्द्रो नदीद्वाराणि विवृत्य तत्प्रवाहायोदकमार्गं खनितवान्। वासुदेवस्त्वन्वपः अनुर्लक्षण इति हेतौ कर्मप्रवचनीयः। अप् शब्दः कर्मवाची। कर्मणामनुसारात्। भक्तैः कृतानि कर्माणि निमित्तानि कृत्वा ततर्द हिंसितवान्। तदीयान् ज्ञानस्य विघ्नानिति शेषः। अपि च। इन्द्रः पर्वतानां वक्षणाः प्राभिनत्। वक्षणाशब्दार्थमाह ॥ वहनादिति। वह प्रापणे। अस्मात्करणे सनः स्त्रीलिङ्गता शब्दस्वाभाव्यात्। परमेश्वरे वाक्यं व्याख्याति। दुर्वचांसीति॥ जन्मपर्ववतां जीवानां विवक्षा चेत्तदा दुर्वचांसिवक्षणा उच्यते। ता वक्षणाः सुयुक्तिभिरेव बिभेदेश्वरः। एतदुक्तं भवति। जन्माख्यपर्ववत्त्वाज्जीवाः पर्वताः। तेषां पर्वतानां कुवादिनां वक्षणाः वच परिभाषण इत्यतः सनप्रत्ययः। प्रसङ्गात् दुष्टानि वचांसि प्राभिनत्। भक्तेभ्यः सुयुक्तीर्दत्वा ताभिर्निराकृतवानिति॥ १॥

अहन्। इन्द्रः पर्वते पर्वतेषु। शिश्रियाणं कानजन्तमेतत्। श्रितवन्तमहिंदैत्यमहन् हतवान्। ईश्वरोपि पर्वते भक्तजीवजाते। शिश्रियाणम् अहिंसं शयमहन्निति प्रथमपादार्थः स्पष्ट एव। द्वितीयपादं विष्णौ व्याख्याति॥ त्वष्टेति। यद्यस्मात्त्विडात्मा। तस्मात् त्वष्टा विरिंचोस्मै परमेश्वरायैतद्विषय इति यावत्। वज्रं ज्ञानवज्रम्। ज्ञानाख्यं वज्रं भक्तानां ततक्ष निर्मितवान्। एतत्त्विति प्रकृतेन सम्बन्धार्थं येन वज्रेणाहिमहन्नेतत्विति। एतेन प्रसिद्धेंद्रेपि योजना सूचिता। त्वष्टा देववर्धकिः। अस्मा इन्द्राय इन्द्रस्यार्थे वज्रं ततक्षेति। स्वर्यमिति वज्रविशेषणम्। तत्प्रसिद्धे ज्ञाने च व्याख्याति। स्वर्यमिति। स्वृशब्दोपतापयोरित्यस्येदं रूपम्। तत्प्रसिद्धं वज्रं स्वर्यमुपतप्तम्। शस्त्राणि तापपूर्वकं निशितानि भवन्तीति निशितत्वस्योपलक्षणमेतत्। निशितम्। ज्ञानाख्यन्तु स्वर्यं शब्दसम्बन्धि। शब्दजं वेदजम्। उत्तरार्धमिन्द्रे विष्णौ च क्रमेण व्याख्याति॥ शिशुवत्सा इति। अत्रैतदीरिता इत्यैन्द्रत्वसिद्धयेध्याहृतम्। अहौ दैत्ये हते सत्येतेनेन्द्रेणेरिता आपो नद्य इति यावत्। स्यन्दमाना वाश्राः शिशुवत्सा धेनवः गाव इव। शिशूनं जः आर्जवेन। समुद्रमवजग्मुः अवाजग्मुः। यद्वा। एतेनेश्वरेणेरिता आपः क्रियाः स्यन्दमानाः

(ऋग्भाष्यटीका)

अप्रतिहतवृत्तयः समुद्रं समुद्रिक्तम् एनं देवं प्रति व्रजन्ति । संशये नष्टे भक्ता भगवन्तमेव यजन्त इति ॥ २ ॥

वृषा ॥ वव्रे । इन्द्रो वृषायमाणो वृषेवाचरन् । तृषितो वृषा यद्वदुदकं तथैव सोममवृणीत वव्रे स्वीकृतवान् । स्वीकृत्य च त्रिकद्रुकेषु त्रिषु सवनेषु । सुतस्य सुतं सोममपिबत् । स्मेति कद्रुकशब्द स्त्रिकद्रुकेषु महिषोयवाशिरमित्यादौ सवनेषु प्रसिद्ध इति सूचयति । कद्रुकशब्दं सवनेषु निर्वक्ति ॥ सवनानामिति ॥ यद्यस्मादत्र सवनेषु कं सुखं द्रुतं प्राप्तं तस्मात्सवनानां कद्रुकत्वं कद्रुक शब्दवाच्यत्वम् । कं द्रुकं द्रुतमत्रेति । अध्यात्मं व्याख्यानं सूचयति ॥ सोम इति । मनो वा सोमः व्यवस्थितविकल्पोयमिति स्वयमेवाह ॥ ध्यानयोग इति ॥ अध्यात्ममाधारत्रयं त्रिकद्रुकशब्दमिति ज्ञेयम् । एव शब्देन पुनरुक्तिभयेन व्यधिकरणं व्याख्येयमित्याचष्टे । साय इति । षोन्तकर्मणीत्यस्य रूपम् । सायमन्तं करोतीति डः । सायंकरम् । प्रसिद्धवज्रं दैत्यादीनां लयकृत् । ज्ञानं त्वविद्यादीनाम् । आदत्तेत्यस्यार्थः समादद इति । एनमित्यस्य विष्णुपक्षेऽर्थमाह ॥ संशयमिति । इन्द्रपक्षे त्वहिमिति स्पष्टम् । वृषा यमाण इत्यस्यार्थान्तरमाह ॥ ईशवद्वेति । वृषावर्षिता ईशः स इवाचरन् अवृणीत सोममिति । ततश्चायमर्थः । मघवा धनादिमानिन्द्रः सायकं सायंकरं वज्रमादत्त समाददे । तेन चाहीनाम् अहिनामकानां दैत्यानां मध्ये प्रथमजां जनसनेति विट् । प्रथमजं मुख्यमेनमहिमहन् । तथा परमेश्वरः सायकं वज्रं ज्ञानमादत्त । भक्तानां मनस्युत्पादितवान् । तेन चाहीनाम् । हि गतौ । ततः किः । नञ्समासः । अहयो ज्ञानविरोधिनः पापादयस्तेषां मध्ये प्रथमजां मुख्यमेनं संशयमहन्निति ॥ ३ ॥

यदिन्द्र । अहन्नेनम् । अत्राद्यश्चशब्दो यस्मादित्यर्थे । हे इन्द्र त्वं यद्यस्मादहीनां प्रथमजां प्रथममेनमहिमहन् हतवानसि । आत् ततःकरणान्मायिनां मायाविनामन्येषां दैत्यानां माया उत व्याजरूपाः छद्मरूपा मायाश्च प्रामिणाः मीञ् हिंसायाम् । व्यनाशयः । किं च । आत् तत एव त्वं सूर्यं द्यामुषसं च जनयन् उत्पादकः सूर्यद्युदिनादेश्च कर्ता जातोसि । पुरा सूर्यादिव्यापारा अहिना दैत्येन निरुद्धाः । तद्वधेन पुनस्तद्व्यापाराणां कारयिताभूरित्यर्थः । तथापि तद्वधेनेतरमायानाशः कथम् । तस्य मुख्यत्वेनेतरदैत्याश्रयत्वात् । मुख्यत्वं कुतः । तादीत्ना तावता । बलेनेति शेषः । तावद्बलतस्ता-वद्बलेनोपेतमिति शेषः । अहिना समानबलमन्यं शत्रुं न विवित्से किल न लभसे खलु । विद्लृलाभे । परमेश्वरेलेशेन व्याख्याति । मायेति । अथवेति सम्बन्धः । यतो ज्ञानविरोधिनां प्रथमं भक्तानां संशयं त्वं विनाशितवान् तस्मान्मायिनां मायावादिनां विरुद्धवादिनां मायाः कुटिलोक्तीः तैर्नष्टसंशयैः स्वजनैः तज्जयेन व्यनाशयः । ततश्च सूर्यं ज्ञानहेतुमाचार्यं तत्सङ्गतिम् । द्यां मोक्षमुषसं ज्ञानं च भक्तानां कृतवानसीति । शेषं समानम् ॥ ४ ॥

(ऋग्भाष्यटीका)

अहन्वृत्रम्। इन्द्रो महता वधेन वधसाधनेन वज्रेण वृत्रं नाम दैत्यं वृत्रतरमतो वृत्रादधिकं वृत्रतरनामकं च दैत्यं व्यंसं विगतांससन्धिं शिरश्छित्वेति यावत् । अहन् वृत्रशब्दोवृणोतेरूपम् । तस्य यौगिकमर्थमादायातोधिकमिति वृत्रतरशब्दो निरुक्तः । अध्यात्ममाह ॥ तम इति ॥ व्यंसनाद्वि-संवादनाद्व्यंसशब्दौ तमोमिथ्याप्रत्ययौ वा वृत्रवृत्रतरौ । तावीश्वरो ज्ञानेनाहन्। एवं वृत्रं वृत्रतरमहिं च त्रीनिंद्रो हतवान्। अथो विवृक्णा विवृक्णानि स्कन्धांसीव विवृक्णविशेषेण छिन्नास्तरोः स्कन्धा यद्वत्तथा कुलिशेन वज्रेण छिन्ना अहिः उपलक्षणमेतत् । वृत्रवृत्रतरावहिश्च पृथिव्या उपपृक् पृची संपर्के पूर्ववदेकवचनम्। पृथिवीसम्पर्कवन्तः शयते अशेरत। पृथिव्यां पतिता इति यावत्। अध्यात्मं कुलिशः क इत्यत आह ॥ कुलस्येति। यस्मिन्पुरुषे जाताविद्यातत्कुलस्यापि सुखकरणात्। कुलमस्यास्तीति कुली तस्य सन्ततेः शं यस्मात्स कुलिश इत्यर्थः । पृथिवीमाह ॥ बुद्धिरेवेति ॥ एव शब्देन निर्वचनं स्फुटमिति सूचयति । अहेः संशयस्य पृथिव्या उपपृक्त्वं कथमित्यत आह ॥ तद्वत इति । यद्यस्मात्संशयो बुद्धिगतोऽतः पृथिव्या उपपृगच्यते। अज्ञानमिथ्याज्ञानयोरप्येवम्। अत्र पक्षे पृथिव्या उपपृगित्यनुवादः। शयत इत्येतदेव विधेयम्॥ ५, ३६ ॥

## मन्त्रार्थमञ्जरी

अथ 'इन्द्रस्य नु' इति पञ्चदशर्चं वर्गत्रयात्मकमैन्द्रं त्रैष्टुभं द्वात्रिंशं सूक्तम्। 'नु' इति क्षिप्रनाम (वै० नि० २।१५) इदानीमेव । (अहम्) इन्द्रस्य, प्रसिद्धस्य, वासुदेवस्य वा । वीर्याणि, कर्माणि । प्र वोचम्, लडर्थे लुङ्, आचक्षे । कथंभूतानि ? वज्री, अयमिन्द्रः । यानि प्रथमानि, मुख्यानि । चकार, चक्रे । अनन्तत्वेऽपि तव चरित्राणां प्रथमानि ब्रवीमीति यावत्। तान्युच्यन्ते 'इन्द्रो वज्री' इत्युक्तत्वाद्वज्रेण अहिम्, दैत्यविशेषम्। अहन्, जघान, वासुदेवे तु 'ॐ शास्त्रदृष्ट्या' (१।१।३०) इति न्यायेनाहेर्हननं ज्ञेयम् । यद्वा– 'हीति निश्चयवाचि स्यात्' इति वचनान्निश्चयविरोधिनम् अहिम्, भक्तानां संशयम् । ज्ञानेन – अहन्, विनाशितवान् इति व्याख्येयम् । किं च, अनु अपः, 'लक्षणेत्थं भूताख्यान' इति लक्षणेऽनुः कर्मप्रवचनीयः, जलानुसारेण । ततर्द, 'तर्द हिंसायाम्', हिंसितवान् । (मार्गम्) इति शेषः, मार्गस्य हिंसा तु खननमेवेति (भाष्ये) 'चखान' इत्यर्थः, अहिनामा दैत्यो लोकोपद्रवाय पर्वतेषु नदीद्वाराणि रुद्ध्वा मेघपतितं चोदकमन्तरिक्षे प्रतिबध्य स्थितः, तं हत्वेन्द्रो नदीद्वाराणि विवृत्य प्रवाहायोदकमार्गं खनितवान्। वासुदेवस्तु– अनु अपः, 'अनुर्लक्षणे' इति हेतौ कर्मप्रवचनीयः, अप्शब्दः कर्मवाची, कर्मणामनुसारात्, भक्तकृतकर्माणि निमित्तीकृत्य। ततर्द, हिंसितवान्। (तदीयज्ञानविघ्नान्) इति शेषः । अपि चेन्द्रः पर्वतानाम् । वक्षणाः, पक्षान् । प्र अभिनत् । 'वह प्रापणे' इत्यतः करणे

सनप्रत्यये 'हो ढः' इति ढत्वे 'षढोः' इति कत्वे षत्वे च वक्षणाः, इति रूपम्, स्त्रीलिङ्गं तु शब्दस्वाभाव्यात्। वासुदेवस्तु पर्वतानाम्, जन्माख्यपर्ववताम्, जीवानाम्। वक्षणाः, दुर्वचांसि। प्र अभिनत्, भक्तेभ्यः सुयुक्तीर्दत्त्वा ताभिर्निराकृतवान् इति ॥ १ ॥

(इन्द्रः) पर्वते, पर्वतेषु । शिश्रियाणम्, श्रयतेः लिटि 'लिटः कानज्वा' इति लिडादेशकानजन्तमेतत्, श्रितवन्तम् । अहिम्, दैत्यम् । अहन्, हतवान् । ईश्वरस्तु पर्वते, जन्माख्यपर्वोपेते, भक्तजीवजाते। शिश्रियाणम्। अहिम्, संशयम्। अहन्। त्वष्टा, देववर्धकिः। अस्मै, इन्द्राय, इन्द्रस्यार्थम्। स्वर्यम्, 'स्वृ शब्दोपतापयोः' इत्यतो यत्, उपतप्तम्, निशितमिति यावत्। वज्रम्। ततक्ष, निर्मितवान्। ईश्वरपक्षे तु– त्वष्टा, 'त्विष दीप्तौ' प्रकाशात्मा, विरिञ्चिः। अस्मै, परमेश्वराय, तद्विषय इति यावत्। स्वर्यम्, शब्दजम्। वज्रम्, ज्ञानाख्यवज्रम्। भक्तानाम् ततक्ष। अहौ दैत्ये हते सति किं जातम् ? इत्यत उच्यते– आपः, नद्य इति यावत्। (इन्द्रेणेरिताः) इति शेषः। स्यन्दमानाः। (वाश्रा इव धेनवः) वाश्राः शिशुवत्सा धेनवो गाव इव शिशून्। अञ्जः, जवेन। समुद्रम्। अव जग्मुः, प्राप्तवत्यः। यद्वा (एतेनेश्वरेणेरिताः) आपः, क्रियाः। स्यन्दमानाः, अप्रतिहतवृत्तयः। (वाश्राइव धेनव) समुद्रम्, समुद्रिक्तम्, एनं देवं प्रति। अव जग्मुः, व्रजन्ति, संशये नष्टे भक्ता भगवन्तमेव यजन्ते– इति भावः ॥ २ ॥

(इन्द्रः) वृषायमाणः, वृषेवाचरन्, तृषितो वृषा यद्वदुदकम्। (तथैव) सोमम्। अवृणीत, वव्रे, स्वीकृतवान्। स्वीकृत्य च – त्रिकद्रुकेषु, त्रिषु कं सुखं द्रुतं प्राप्तमत्रेति त्रिकद्रुकाख्यसवनेषु। सुतस्य, सुतम्, सोमम् । अपिबत् । अध्यात्मं तु– 'उच्छिष्टं चम्वोर्भर' इत्यत्रोक्तदिशा– त्रिकद्रुकेषु, बुद्ध्यादिस्थानेषु स्थितम् । (सुतस्य, सुतम्) सोमं मनः । अपिबत्, बुद्ध्यादिस्थानत्रयस्थ-भगवद्विषयकं मनोऽपिबत्, तद्विषयकध्यानेन प्रीतोऽभवदिति यावत्। मघवा, धनादिमान्, इन्द्रः। सायकम्, 'षो अन्तकर्मणि' यत्, 'आदेच उपदेशे' इति धातोरात्त्वम्, करोतेः डः, सायकं दैत्यानां लयकृत्, ज्ञानं चेत्– अविद्यादीनां लयकृत्। वज्रम्, आयुधम्, ज्ञानं वा। आ अदत्त, समाददे। तेन च– अहीनाम्, अहिनामकानां दैत्यानां मध्ये। प्रथमजाम्, 'जनसनखनक्रमगमो विट्' इति विट्, 'विड्वनोरनु नासिकस्य' इत्यात्त्वम्, प्रथमम्, मुख्यम्। एनम्, अहिम्। अहन्। तथा परमेश्वरः सायकम्, अज्ञानादिनाशकम्। वज्रम्, ज्ञानम्। आ अदत्त, भक्तानां मनस्युत्पादितवान्। तेन च अहीनाम्, 'हि गतौ' ततो डिः, नञ्समासः, ज्ञानविरोधिनाम्, पापादीनां मध्ये। प्रथमजाम्, मुख्यम्। एनम्, (अहिम्) संशयम्। अहन् इति ॥ ३ ॥

(मन्त्रार्थमञ्जरी)

(हे) इन्द्र (त्वम्) यत्, यस्मात् । अहीनाम् । प्रथमजाम्, प्रथमम्, एनमहिम् । अहन्, हतवानसि । आत्, ततः कारणात् । मायिनाम्, मायाविनाम्, अन्येषां दैत्यानाम् । मायाः उत, व्यात्तरूपाश्छद्मरूपा मायाश्च । प्र अमिनाः, 'मीञ् हिंसायाम्' व्यनाशयः । किं च, आत्, तत एव । (त्वम्) सूर्यम् । द्याम् उषसम् । (च) जनयन्, उत्पादकः, सूर्यद्युदिनादेश्च कर्ता जातोऽसि, पुरा सूर्यादिव्यापारा अहिना दैत्येन निरुद्धास्तद्वधेन पुनस्तद्व्यापाराणां कारयिताभूदित्यर्थः । तथापि तद्वधेनैव मायाविनाशः कथम् ? तस्य मुख्यत्वेनेतरदैत्याश्रयत्वात्, मुख्यत्वं कुत उच्यते ? तादीत्ना तावता । (बलेन) इति शेषः । अहिना समानबलमन्यम्– शत्रुम्, न विवित्से किल न लभसे खलु, 'विद्लृ लाभे' श्लुविकरणम् । ईश्वरे तु (हे) इन्द्र, परमेश्वर । यत्, यस्मात्) अहीनाम्, ज्ञानविरोधिनाम् । (प्रथमजाम्) प्रथमम्, (एनमहिम्) भक्तानां संशयम् । (त्वम्) (अहन्) नाशितवान् । (आत्) तस्मात् । मायिनाम्, मायावादिनाम् । मायाः (उत), कुटिलोक्तीश्च । तैर्नष्टसंशयैः स्वजनैस्तज्जयेन (प्र अमिनाः) व्यनाशयः । (आत्) ततश्च । सूर्यम्, ज्ञानहेतुमाचार्यम् । तत्संगतम् द्याम्, मोक्षम् । उषसम्, ज्ञानम् । (च) (जनयन्) भक्तानां कृतवानसि । शेषं समानम् ॥ ४ ॥

इन्द्रः महता । वधेन, वधसाधनेन । वज्रेण । वृत्रम्, वृत्रं नाम दैत्यम्, अज्ञानं वा । वृत्रतरम्, अतो वृत्रादप्यधिकं वृत्रतरनामकं च दैत्यम्, मिथ्याज्ञानं वा । व्यंसम्, विगतां ससंधिम्, शिरश्छित्त्वेति यावत् । अहन् । (व्यंसनात्) विसंवादनाद्व्यंसाख्यं वृत्रादिशब्दितमज्ञानादिकमीश्वरो ज्ञानेनाहन्, एवं वृत्रं वृत्रतरमहिं च त्रीनिन्द्रो हतवान् । अतः विवृक्णा, विवृक्णानि, विशेषेण च्छिन्नाः । स्कन्धांसीव, तरोः स्कन्धा यद्वत् । (तथा) कुलिशेन, वज्रेण (छिन्नाः) 'अहिः' इत्युपलक्षणम्– अहिवृत्रवृत्रतराः । पृथिव्याः । उपपृक्, 'पृची सम्पर्के', पूर्ववदेकवचनम्, पृथिवीसम्पर्कवन्तः । शयते, अशेरत, पृथिव्यां पतिता इति यावत् । अध्यात्मं तु कुलिशेन, कुलमस्यास्तीति कुलीब्रह्मज्ञानी, स्वकुलस्य सुखहेतुतया 'कुली' इत्युच्यते, तस्य कुलिनः शं सुखं यस्माद्भवति तेन कुलिशेन ज्ञानेन । अहिः, अहिप्रभृतयः, ज्ञानविरोधिपापाज्ञानसंशयमिथ्याप्रत्ययाः । पृथिव्याः, बुद्धेः । उपपृक्, बुद्धिसम्पृक्ताः, बुद्धिगता एते । (विवृक्णा), आविवृक्णाः । (स्कन्धांसीव) शयते । इति ॥ ५ ॥ इति षट्त्रिंशो वर्गः ॥ ३६ ॥

## रूपावतारः

इन्द्रस्यनु ॥ लडर्थे लुङिति । वच परिभाषण इत्यतः परिभाषणवाचिनः वचेःलडर्थे लुङि तदादेशमिपोऽमादेशे च्लिप्रत्यये 'अस्यति वक्ति ख्यातिभ्योऽङ्' (३।१।५२) इति अङादेशे 'वच उम्' (७।४।२०) इति उमागमे 'आद्गुणः' (६।१।८७) इति गुणे छान्दसे अडभावे अवोचमिति रूपम् इति भावः । अडागमे अहन्निति । हन्तेर्लङि तिपि इतोलोपे शपो लुकि तकारलोपे अहन्निति रूपम् । नन्वपामन्विति भवितव्यम् । खननकर्मत्वाभावेन द्वितीयाप्राप्त्यभावादित्यत आह । लक्षणेति । 'कर्मप्रवचनीययुक्ते द्वितीया' (२।३।८) इति सूत्रेण द्वितीयेति भावः । नन्वस्मिन्पक्षे अन्वप इत्यत्र अन्वित्यस्य हेत्वर्थकत्वेन लक्षणार्थकत्वाभावात् कथं द्वितीयेत्यत आह । अनुर्लक्षण (१।४।८४) इतीति । अस्मिन्सूत्रे लक्षणशब्दस्य हेतुवाचकत्वादिति भावः । उक्तं च काशिकायाम् । 'किमर्थमुच्यते यावता लक्षणेत्थंभूताख्यान....' (१।४।९०) इत्यनेन सिद्धौ वाऽनोः कर्मप्रवचनीयसंज्ञा हेत्वर्थं तु वचनम् । हेतौ तृतीयां बाधित्वा द्वितीया यथा स्यादिति । अस्मात् करण इति । वहेः(हः)सन्प्रत्यये 'होढः' (८।२।३१) इति ढत्वे 'षढोः कः सि' (८।२।४१) इति कत्वे 'आदेशप्रत्यययोः' (८।३।५९) इति षत्वे टापि वक्षणेति रूपम् । वचपरिभाषण इत्यत इति । इति व्याख्यातत्वात् वचेः सन्प्रत्यय इत्यर्थः ॥ १ ॥

अहन्नहिम् ॥ कानजन्तमिति । श्रयते र्लिटः कानजादेशे द्वित्वे इयङादेशे शिश्रियाणमिति रूपमिति भावः त्वष्टेति । 'त्विषेर्देवयामकारश्चोपधाया अनिट्त्वं च' इत्यनेन वार्तिकेन तृन् प्रत्यये उपधेकारस्याकारे इडभावे त्वष्टेति रूपम् । स्वृ शब्दोपतापयोरिति । अस्मात् 'उणादयो बहुलम्' (३।३।१) इति बहुलग्रहणादौणादिके यत्प्रत्यये गुणे स्वर्यमिति रूपमिति भावः । ऐन्द्रत्वसिद्ध्य इति । उत्तरार्धस्यैन्द्रत्वसिद्ध्य इत्यर्थः ॥ २ ॥

वृषायमाणः ॥ अवृणीतेति । वृञः लिङि श्नाप्रत्यये 'ईहल्यघोः' (६।४।११३) इति ईत्वे अडागमे लङः तादेशे अवृणीतेति रूपम् । कद्रुकत्वमिति । कशब्दोपपदात् द्रुधातोः क्तप्रत्यये तकारस्य ककारे कद्रुकमिति रूपम् । षोन्तकर्मणीति । अस्मात् घञ्प्रत्यये धातुषकारस्य सत्वे 'आदेच उपदेशेऽशिति (६।१।४५) इत्यात्वे 'आतो युक् चिणकृतोः' (७।३।३३) इति युगागमे सायशब्दो भवति । तस्मिन्नुपपदे करोतेर्डप्रत्यये सायकमिति रूपसिद्धिर्भवतीति द्रष्टव्यम् । प्रथमजामिति रूपसिद्धिं स्मारयति । जनसनेति विडिति । जनेर्विटि 'विड्वनोरनुनामिकः स्यात्' (६।४।४१) इति आत्वे अमि च प्रथमजामिति रूपम् । हि गताविति । इतःपरं टीकायां श्रूयमाणं

(रूपावतारः)

ततः किरिति वाक्यं प्रक्षिप्तम्। ततो डिरिति वाक्यमुच्छिन्नम्। अवश्यं चैतदेवं विज्ञेयम्। हि गतावित्यस्मात्किप्रत्ययाङ्गीकारे ककारलोपे सवर्णदीर्घे आहीति दीर्घान्तरूपप्रसङ्गात्॥ ३॥

यदिन्द्राहन्॥ प्रामिणा इति। मी धातोः श्नाप्रत्यये सिपि सत्वे विसर्गे च 'मीनातेर्निगम' (७।३।७१) इति धातोर्ह्रस्वत्वे "हिनुमीना" (८।४।१५) इति णत्वे अडागमे प्रामिणा इति रूपम्। तादीत्नेति। तावच्छब्दस्य वतुपः पृषोदरादित्वाद्दीत्नादेशे तादीत्नेति रूपम्। विद्लृलाभे इति। अस्मात् लडादेशस्य थासः से भावे छान्दसे शपः श्लौ द्वित्वे विवत्स इति रूपम्॥ ४॥

अहन्॥ ननु वृत्रशब्दस्य रूढत्वात् कथं तस्मात् तरबुत्पत्तिरित्यत आह। वृत्रशब्द इति। वृञः बाहुलिके ष्ट्रन् प्रत्यये वृत्रेति रूपम्। अतो वृत्रशब्द आवरकत्ववाचीति भावः। व्यंसशब्दाविति। विपूर्वात् संवादवाचकादमेर्बाहुलिके सप्रत्यये कृते विसंवादवाची व्यंसशब्दो निष्पन्नो भवतीति भावः। विवृक्णेति। विपूर्वात् वृश्चतेः क्तप्रत्यये ऊदित्वेन वेट्त्वात् "यस्य विभाषा" (७।२।१५) इति इडभावे 'चोः कुः' (८।२।३०) इति कुत्वे "ओदितश्च" (८।२।४५) इति निष्ठातकारस्य नत्वे 'ग्रहिज्या....' (६।१।१९) इति संप्रसारणे 'स्कोः संयोगाद्योरन्ते च' (८।२।२९) इति सलोपे नकारस्य णत्वे जसः "सुपां सुलुक्...." (७।१।३९) इति आकारादेशे विवृक्णेति रूपम्। पूर्ववदेकवचनमिति। उपपृगित्यस्य अहिशब्दविशेषणत्वात् तस्य एकवचनान्तत्वात् एतस्यापि एकवचनान्तत्वम्। अहिशब्देनोपलक्षणया अहिवृत्रवृत्रतराणां ग्रहणेन अहिशब्द-गतैकवचनस्य बहुवचनार्थकत्ववत् अस्यापि बहुवचनार्थकत्वमिति भावः। शयत इति। शीङो व्यत्ययेन लङर्थे लटि शपः छन्दसे लुगभावे गुणे अयादेशे टेरेत्वे शयत इति रूपम्। अशेरतेति। शीङो लङ् तस्य झादेशे 'आत्मनेपदेष्वनतः' (७।१।५) इति तस्यात् इत्यादेशे 'शीङः सार्वधातुके गुणः' (७।४।२१) इति धातोर्गुणे 'शीङो रुट्' (७।१।६) इति रुडागमे धातोरडागमे अशेरतेति रूपम्। निर्वचनं स्फुटमिति। पृथुत्वाद्बुद्धिः पृथिवीति निर्वचनं स्फुटमित्यर्थः॥ ५॥ ३६॥

## पदार्थप्रकाशिका

इन्द्रस्य नु वीर्याणि प्रवोचम्। अन्त्योद्रस्येत्यनुक्रमणिकां हृधि निधायाह। पञ्चदशर्चमिति। ननु लुङ्-लृङ्-लङ्क्षु अट् - अनुदात्त इति लुङि अडागमविधानात्। प्रवोचमित्यत्र अडभावः छान्दस इत्यभिप्रेत्य स्वयं तत्प्रतिपदमाह। प्रावोचमिति। ननु तथापीन्द्रवीर्याणामिदानी- मुच्यमानत्वात् प्रावोचमिति भूतार्थकलुङ् प्रयोगः कथमित्यत आह। लडर्थे लुङिति। वर्तमाने लडित्युक्तत्वात् वर्तमानार्थे लुङित्यर्थः। तथाच चक्ष इति व्याख्येयमिति भावः। मुख्यानि प्रधानानि। ननु वीर्याणां

(पदार्थप्रकाशिका)

प्रथमानीति विशेषणं किमर्थमित्यतः तस्य वीर्यबिशेषणस्य कृत्यमाह। अनन्तत्वेपीति। अहं न हिमित्युत्तरार्धमवतारयति। तानीति। प्रधानानि वीर्याणीत्यर्थः। ननु ऋग्भाष्ययोर्वज्रेणेत्यनुक्तत्वात् वज्रेणाहन्निति कथं भवद्भिर्व्याख्यायत इत्यतः स्वव्याख्याने ज्ञापकं दर्शयति। इन्द्रो वज्रीत्युक्तत्वादिति। वज्रीत्यनेनेन्द्रस्य वज्रधरत्वमुच्यते। नहीन्द्रो वज्रं व्यसनितया धत्ते। किंतु दैत्यहननार्थमेवेति तेन सूचितत्वात् वज्रेणाहन्निति लब्धमेवेति भावः।

अहिशब्दो दैत्यपर्याय इति भ्रान्तिं वारयति। दैत्यविशेषणमिति। तथाचाहिनामकदैत्यमित्यर्थः। व्यवस्थित विकल्प इति। एकस्मिन् बाह्य एवार्थेऽहिमित्यस्य दैत्यं संशये वेति नार्थः। किन्तु यदेन्द्रशब्देन बाह्यइन्द्ररूपार्थो विवक्षितस्तदाऽहिमित्यस्य दैत्यमित्यर्थः। अध्यात्मम् इन्द्रशब्देन वासुदेवविवक्षायां तु अहिमित्यस्य संशयमित्यर्थो द्रष्टव्य इत्येवं व्यवस्थितो विकल्प इत्यर्थः। एवमुत्तरत्रापीति। कर्मणां वाशब्दजं वेत्यादावुत्तरत्रापि वा शब्दो बाह्याध्यात्मविषयतया व्यवस्थितविकल्पपरो द्रष्टव्य इत्यर्थः। लक्षणेत्थम्भूताख्यानेतीति। 'लक्षणेत्थम्भूताख्यान-भागवीप्सासु प्रतिपर्यनव' इति सूत्रेणान्वित्ययमुपसर्गो लक्षणे द्योत्येकर्मप्रवचनीय इत्यर्थः। तथाच 'कर्मप्रवचनीययुक्ते द्वितीये'ति सूत्रेण तद्युक्ते अन्वय इति द्वितीया युक्तेत्याशयः। लक्षणार्थमेव दर्शयति। जलानुसारेणेति। यथाऽनुगङ्गं काशीत्यत्र गङ्गादैर्ध्येण काशीदैर्ध्यं लक्ष्यते। काशीदैर्ध्यस्य गङ्गादैर्ध्यं लक्षणज्ञापकं गङ्गादैर्ध्यानुसारेण काशीदैर्ध्यमस्तीति यावत्। एवं प्रकृतेऽपि मार्गतर्दने अपूशब्दोक्तं जलं लक्षणं ज्ञापकं ततश्च जलानुसारेण यथा तज्जलं गच्छेत्तथा मार्गं तर्देत्यर्थः। इति चखानेति। मार्गस्य प्रसिद्धहिंसाया असम्भवात्स्वननमेव हिंसेति हेतोश्चखानेति व्याख्यानमु-पपन्नमित्यर्थः। अहन्नहिमित्यादेराख्यायिका ज्ञानाभावे दुर्ज्ञानत्वात्तमाह। अहिर्नामेति।

ननु द्वारनिरोधेऽपि मेघद्वारेण भूमा उदके पतिते सति नदीप्रवाहः स्यादेवेत्यत उक्तम् मेघपतितमिति। मेघद्वारेण पतितमित्यर्थः। विवृत्य। अनुर्लक्षण इति। 'लक्षणेत्थम्भूते'त्यादिसूत्रे लक्षणशब्दो ज्ञापकपरः। अत्र तु हेतुपरः अन्यथा तेनेदं गतार्थं स्यात्। तथाच लक्षणे हेतौ द्योत्ये अनुकर्म प्रवचनीयः स्यादित्यर्थः। तथाच तद्युक्ते द्वितीया युक्तेतिभावः। हेतुशब्दो निमित्तपरः। हेत्वर्थमेव दर्शयितुं कर्मणामनुसारादिति पञ्चमीप्रयोगः। हेतौ पञ्चम्या विधानादिति द्रष्टव्यम्। हेतौ द्योत्येऽनुः कर्म प्रवचनीय इत्युक्तं तत्र अपूशब्दोक्तकर्मणां निमित्तत्वं दर्शयति। भक्तैः कृतानीति। प्रापणं गमनम्। करणे सन् इति। तथाच प्रोपपदात् वह् प्रापणेऽस्मात्करणे सनूप्रत्यये होढ इति हकारस्य ढकारे षढोः कसीति सकारेपरे ढकारस्य ककारे 'आदेश प्रत्यययोरिति' ककारात्परस्य

(पदार्थप्रकाशिका)

षत्वे 'रषाभ्यां नोण' इति षकारात्परस्य नस्य णत्वे कषयोर्योगे क्षेति जाते प्रवक्षेति गमनसाधनमुच्यत इति द्रष्टव्यम्।

पुल्लिङ्गपक्षशब्दवाच्यानां पक्षाणां वाचकस्य वक्षणाशब्दस्य कथं स्त्रीलिङ्गत्वं वक्षणामिति वक्तव्यत्वादित्यत आह । स्त्रीलिङ्गतेति । पक्षवाचकस्यापि वक्षणाशब्दस्य स्त्रीलिङ्गता वक्षणाशब्दस्वाभाव्याद्युक्तेत्यर्थः। यथाहि स्त्रीवाचकस्यापि दारशब्दस्य कलत्रशब्दस्य वा पुल्लिङ्गत्वं नपुंसकत्वं वा यथावेन्द्रादिदेववाचकस्य देवताशब्दस्य स्त्रीलिङ्गत्वं शब्दस्वाभाव्यादेव तद्वदिति द्रष्टव्यम् । जन्मपर्ववतां जीवानामित्यनुवादेन लब्धमर्थं दर्शयितुमाह । एतदुक्तं भवतीति । पर्ववत्वादिति। जीवायुरूपदण्डस्य जन्माद्याः पर्वस्थानीया इति भावः। जीवाः पर्वता इति। तथाच पर्वाण्येषां सन्तीति मत्वर्थे तत्प्रत्यय इति भावः । वक्षणाशब्दः कथं वचनवाचीत्यत आह । वचपरिभाषण इत्यत इति। तथाच प्रोपपदात् वचपरिभाषण इत्यस्माद्धातोर्भावे 'सन्प्रत्यये चोः कुरिति' कुत्वे सस्य षत्वे नस्य णत्वे कषयोर्योगे क्षेति जाते प्रवक्षणाचब्दो वचनवाचीत्यर्थः। नन्वेवं वक्षणशब्दस्य वचनमात्रवाचितया वचांसीत्येव वक्तव्यं दुर्वचांसीति कथमुक्तमित्यत आह । प्रसङ्गादिति। अत्र पर्वतशब्दवाच्यत्वेन कुवादिनां प्रसक्तत्वात्तदीयानि छेद्यभूतवक्षणास्थानीयानि वचांसि तानि दुष्टान्येवेति लभ्यन्त इति भावः ॥ १ ॥

अहन्नहिं पर्वते शिश्रियाणम् । कानजन्तमेतदिति । लिटः कानज्वेति सूत्रेण कानज्वे लिडादेशत्वविधानात्तद्बलात् शिश्रय इत्यभ्यास इति भावः। तथाच श्रिञ् श्रयण अस्माल्लिटि लिटः कानज्वेति लिटः कानच् इत्यादेशे ककारचकारयोर्लोपे लिटि धातोरभ्यासे श्रिश्रि इति आनेति जाते हलादिशेषः। अभ्यासस्यादिहल् शिष्यते इतरे हलो लुप्यन्त इत्युक्तत्वेन अभ्यस्ते श्रि इत्यस्मिन् रकारलोपे शि इत्यस्यैव हल्मात्रस्यैवावशेषे सति शिश्रि आनेति जाते श्रिधातौ विद्यमानस्य इकारस्य अचि श्नुधातु भ्रुवां 'य्वोरियङुवङाविति' सूत्रेण इयङादेशे निर्वचनत्वान्नस्य णत्वे च सति शिश्रियाणेतिरूपं द्रष्टव्यम्। स्पष्ट एवेति। अतो भाष्यकारैः बाह्येऽध्यात्मं च तदर्थो न कथित इति भावः। प्रकाशात्मेति। विट्प्रकाश इति धातोरित्यर्थः। एतद्विषय इति। परमेश्वरविषय इत्यर्थः। प्रकृतेन सम्बन्धप्रकारमेव दर्शयति। येनेति। येन वज्रेणाहिं संशयमहन्परमेश्वरः। एतत्तु ज्ञानरूपं वज्रमिति भाष्यं योज्यम्। इति प्रकृतेन सम्बन्धार्थमित्यन्वयो द्रष्टव्यः।

एतेनेति। प्रकृतसम्बन्धदर्शनपरेणैतत्विति भाष्येणेत्यर्थः। सूचितामेव योजनां दर्शयति। त्वष्टेति। देववर्धकिः। विश्वकर्मा। वज्रं ततक्षेति। येन वज्रेणाहिमहन् तदेतद्वज्रमित्यर्थः। प्रसिद्धे। इन्द्रायुधे।

(पदार्थप्रकाशिका)

स्वृ शब्दोपतापयोरित्यस्येदं रूपमिति। तथाच स्वृ इति ऋवर्णान्ताद्धातोः ऋहलोर्ण्यदिति कर्मणि ण्यप्रत्यये णित्वेऽपि छान्दसत्वाद्वृध्यभावे ऋकारस्य अकाररूपे गुणे तस्य च रपरत्वे स्वर्येति रूपं द्रष्टव्यम्। ननु तर्हि उपतप्तमित्येव भाषितव्यम्। निशितमिति कथं व्याख्यातम्। अपदार्थत्वादिति चेत्सत्यम्। लक्षणयेति वदामः। लक्षणा बीजसम्बन्धस्तत्पूर्वापरीभाव एवेत्याशयेनाह। शास्त्राणि हीति। भवन्तीति हेतोरित्यर्थः। शब्दसम्बन्धीति। अत्र शब्दार्थास्वृधातोः सम्बन्धार्थे ण्यत्प्रत्ययो द्रष्टव्यः। ऐन्द्रत्वसिद्धय इति। वाश्रा इवेत्युत्तरार्धस्य इन्द्रदेवताकत्वसिद्धय इत्यर्थः। अन्यथा आपः समुद्रमवजग्मुरिति नदीनामेव प्राधान्याप्राप्त्या देवतात्वाप्राप्तेरिति भावः। आर्जवेनेति। ऋजुत्वेन अप्रतिबन्ध त्वेनेत्यर्थः। तत्प्रतिबन्धकस्याहेः नष्टत्वादिति भावः। आङभावश्छान्दस इत्यभिप्रेत्याह। अवाजग्मुरिति। अध्यात्मं योजयति। यद्वेति आपः क्रिया इति। तस्मिन्नपो मातरिश्वा दधातीत्यस्य तस्मिन् कर्माण्यधान्मरुदिति प्रमाणोदाहरणेन व्याख्याततत्वादप्शब्दस्य कर्मवाचितावगमादिति ध्येयम्। अप्रतिहतवृत्तय इति। अप्रतिहतस्वरूपा इत्यर्थः। संशयरूपप्रतिबन्धकस्य नष्टत्वादिति भावः। अध्यात्ममुत्तरार्धतात्पर्यमाह। संशय इति। भगवानिज्योऽन्योवेत्येवमादिरूपे संशये वेदजन्यज्ञानाख्यवज्रेण नष्टे सतीत्यर्थः॥ २॥

वृषायमाणोऽवृणीत सोमम्। वृषा वृषभः। त्रिकद्रुकेष्विति। त्रीणि च तानि कद्रुकानि च त्रिकद्रुकानि तेष्वित्यर्थः। प्राप्तमिति। इन्द्रेणेति शेषः। कद्रुमित्यस्य व्याख्यानं द्रुतमिति। प्राप्तमित्यर्थः। कद्रुतमिति भाव्ये निर्वचनत्वात् तकारस्य ककार इति भावः। आधारत्रयमिति। निधेहि गोत्वचीत्यत्र शिरारोभे तु चमसौ द्रोणं चोदरमीरितमित्युक्तत्वाच्छिरःप्रभेदद्वयमुदरं चेत्याधारत्रयमित्यर्थः। तत्र हि मनसः प्राचुर्येण वृत्तिरित्युक्तत्वादिति भावः। केचित्तु अयमावसथोऽयमावसथ इति श्रुतेरक्षिकण्ठहृदयरूपमाधारत्रयमित्यर्थः इत्याहुः। तथा चेन्द्रो भगवान् त्रिकद्रुकेषु हृदयं मुखं शिरश्चेत्याधारत्रयेषु विद्यमानं ज्ञानभक्त्यादिना सुतं सोमं मनः अपिबत्। स्वविषयं चकारेति यावदिति योजना सूचितेति द्रष्टव्यम्।

वज्रनामेति। तन्नामसुपाठादिति भावः। तदेव दर्शयति। प्रसिद्धेति। ननु सायकमित्येतद्वज्र विशेषणमित्यङ्गीकृत्य सामानाधिकरण्येन कस्माद्व्याख्येयम्। पुनरुक्तिभयादिति चेत् न। सायकशब्दस्य वज्रवाचित्ववद्बाणवाचित्वस्यापि सत्वेन सायकं बाणं वज्रं चादत्तेति वैय्यधिकरण्येन व्याख्यानोपपत्तेः पुनरुक्त्यभावात् इत्यत आह। एव शब्देनेति।

(पदार्थप्रकाशिका)

तथाचारुढ्या वज्रशब्दवाच्यं च यत् ज्ञानं तद्विशेषणतया सामानाधिकरण्येन सायंकरं लयकृत्ज्ञानमित्येव सायकपदं व्याख्येयम् । पुनरुक्तिपरिहारसम्भवान्न तु तदर्थवैयधिकरण्येन व्याख्येयं तथात्वे चशब्दापत्तेरित्यर्थः । अन्ये तु ननु पुनरुक्तिपरिहाराय षीञबन्धन इति धातोः सायकं बन्धकं यद्वज्रं तदादत्तेत्येवं प्रकारेण सामानाधिकरण्यमङ्गीकृत्य कस्मान्न व्याख्यायत इत्यत आह । एव शब्देनेति । व्यधिकरणमिति । अयुक्तमित्यर्थः । बन्धकत्वस्य पाशधर्मत्वेन वज्रधर्मत्वाभावादिति भावः । त्वयेदमयुक्तमुक्तमिति वक्तव्ये त्वयेदं व्यधिकरणमुक्तमिति लोके व्यवहारादिति द्रष्टव्यम् । तथाच सामानाधिकरण्यमङ्गीकृत्यापि सायंकरलयकृद्ज्ञानमित्येव व्याख्यानं युक्तम् । वज्रशब्दोक्तज्ञानप्रसिद्धवज्रयोर्वक्ष्यमाणरीत्या लयकृत्वस्य प्रसिद्धत्वात् । न तु सायंकरं बन्धकमिति व्याख्यानम् । वज्रशब्दोक्तज्ञानस्य प्रसिद्धवज्रस्य वा बन्धकत्वस्याप्रसिद्धत्वे नायुक्तत्वादिति भावः इत्याहुः ।

सायमित्यस्य लयार्थत्वमुपपादयति । षोऽन्तकर्मणीत्यस्येति । ष इत्ययं धातुः अन्तकर्मणि नाशरूपेऽर्थे वाचकतया वर्तत इत्यर्थः । तथाच षधातोर्यत्प्रत्यये तकारलोपे धात्वादेः षस्य सत्वे निर्वचनत्वादाकारे च सति सायेति रूपमिति भावः । केत्यस्य कृदित्युक्तकरणार्थत्वमुपपादयति । करोतीति ड इति । कृञ् करणे अस्मात् डप्रत्यये डित्वादादिभूतस्य रकारस्य लोपे प्रत्ययाकारे च मिलिते सति केति रूपम् । तथाच सायकमित्यस्य लयकृदिति व्याख्यानं युक्तमिति भावः । रूढियोगाभ्यां वज्रशब्दोक्तप्रसिद्धवज्रज्ञानयोः सायकशब्दोक्त लयकारित्वमुपपादयति । प्रसिद्धवज्रमित्यादिना । नन्विन्द्रपक्षे एनमित्यस्यार्थः कुतो नोक्तमिति चेत् न । एनमित्यस्य अहिनामकं दैत्यमित्यर्थस्येन्द्रपक्षे स्पष्टत्वादित्याह । इन्द्रपक्षे त्विति । ईशः । कस्समर्थः । स इवाचरन्निति । तद्वत्कर्म कुर्वन्नित्यर्थः । आसायकं मघवेत्युत्तरार्धस्य बाह्येऽध्यात्मे च क्रमेणार्थं दर्शयति । ततश्चायमर्थ इत्यादिना । मघवन् धनवन् यशस्विन् मखपते इति भगवत्पादीयं व्याख्यानं हृदि निधायाह । मघवा धनादिमानिति । जनसनेति विडिति । 'जनसनखनगमां विडिति' सूत्रेण प्रथमोपपदात् जनधातोः विट्प्रत्यये क्विब्वत्सर्वस्यापि तस्य लोपे विड्वनोरनुनासिकस्येति जनधातोरन्तस्य नकारस्य आकारादेशे च सति सोमपाशब्दवत् प्रथमजेत्याकारान्त-प्रातिपदिकसिद्धिः पश्चात्स्वाद्युत्पत्तौ प्रथमजामिति भवतीति भावः ।

अन्ये तु विट्प्रत्ययबलादन्तस्य नकारस्य लोपः आकारागमश्चेत्याहुः । ततः किरित्यादि । हि गतौ अस्मात् कित्प्रत्यये ककार लोपे निर्वचनत्वाद्धोत्विकारलोपे हिरिति भवति । अत्र

(पदार्थप्रकाशिका)

कित्वाद्गुणाभावः। अन्यथा ह इति स्यात्। तथाच हयनं हिरिति व्युत्पत्या हिरिति ज्ञानमुच्यते। ततो नञ्समासेन नञश्च विरोध्यर्थत्वे च सति नहिरहिरिति ज्ञानविरोधिपापादिकमहिशब्दार्थः इत्यर्थः। अन्ये तु गताविति धातोः किप्रत्यये तस्य डित्कार्यकारिताया विवक्षितत्वात्तद्बलाद्धात्विकार लोप इत्याहुः ॥ ३ ॥

यदिन्द्राहन् प्रथमजा महीनाम्। किं चेति। अहिवधानन्तरभावीन्द्रमहिमान्तरमुच्यत इत्यर्थः। पूर्वार्धगत उतशब्द एवार्थो द्वितीयार्धस्थेन आत् इत्यनेन सम्बध्यत इत्यभिप्रेत्याह। आत् उत एवेति। अहिवधादेवेत्यर्थः। ततश्चेति पाठे उतशब्दश्चशब्दार्थ इति ध्येयम्। द्यां द्युलोकाभिमानिदेवता। उषसं दिनाभिमानिदेवता। सूर्यद्युदिनादेरिति। तद्व्यापाराणामित्यर्थः। कर्ता कारयिता। जातोऽसीति ऋचि भाष्ये च शेषपूरणम्। नन्वहिनामकदैत्यहननं कथं सूर्यादिव्यापारकरणे हेतुरित्यत आह। पुरेति। अहिवधात्पूर्वमित्यर्थः। तद्वधेनेति। अहिवधेनेत्यर्थः। तादीत्वेति चतुर्थपादमवतारयति। तथापीति। तृतीयपादोक्ते इन्द्रस्य अहिवधेन तन्निरुद्धसूर्यादिव्यापारकारयितृत्वं यद्यपि सम्भवति तथापीत्यर्थः। तद्वधेन अहिवधेन। इतरमायानाश इति। इतरेषां मायाविनां मायानाशो यः पूर्वार्धेन प्रतिपादितः स कथमित्यर्थः। उत्तरमाह। तस्येति। अहिनामकदैत्यस्येतरदैत्यापेक्षया मुख्यत्वेन सर्वदैत्याश्रयतया तद्वधे सति तदाश्रितनीचवधः कर्तुं शक्यत इति भावः।

असङ्गतिपरिहारायैव विशेषमाह। बलेनेति। अस्मिन्नर्थे भाष्यं सङ्गमयति। तावद्बलत इति। तृतीयान्तात्तसिरित्याशयेन तावद्बलेनेत्युक्तम्। तथापि ऋग्भाष्ययोरसङ्गतिरत उक्तम्। उपेतमिति शेषः इति। अहिनेत्यादि। तथाच तस्य मुख्यत्वं युक्तमतस्तद्वधेनेतरदैत्यमायानाशो युक्त इति भावः। वा अथेतिव्यत्यासेन स्थितत्वादाह। अथवेति सम्बन्ध इति। अहीनामित्यस्यार्थो ज्ञानविरोधिनामिति। तस्मादिति। संशयस्य जितत्वादित्यर्थः। विरुद्धेति। वेदविरुद्धेत्यर्थः। कुटिलोक्तीरिति। विश्वं मिथ्याह रिरगुणवानात्मनां नास्ति भेद इत्याद्युक्तिरित्यर्थः। स्वजनैरिति। भक्तजनैः करणैरित्यर्थः। स्वजनैः कथं मायिनां कुटिलोक्तीर्व्यनाशय इत्यत उक्तम्। तज्जयेनेति। मायिजयेनेत्यर्थः। प्रमाणबाधादिदानेन तान् जित्वेति यावदिति भावः। आदित्यस्यार्थः ततश्चेति। संशयनाशादित्यर्थः। सूर्यमित्यस्य अर्थो ज्ञानहेतुमिति। ज्ञानोपदेष्टारमित्यर्थः। आचार्यं कृतवानसीत्यसङ्गतमत उक्तम्। तत्सङ्गतिमिति। नष्टसंशयानां भक्तानामाचार्यसङ्गतिमित्यर्थः। तत्सङ्गतिमितिपाठे द्युशब्दोक्तमोक्षविशेषणमेतदित्यवगन्तव्यम्। आचार्यसङ्गतिमाचार्यायत्तमोक्ष-मित्यर्थो द्रष्टव्यः। अस्मिन् पाटे आचार्यमित्येतदाचार्यसङ्गतिमिति व्याख्येयम्। तथाच भक्तानां

(पदार्थप्रकाशिका)

तत्वविषयकसंशयवधात्पूर्वं ज्ञानापादकाचार्यसङ्गत्यादिव्यापारः संशयेन निरुद्धास्तद्वधेन पुनर्भक्तानां तद्व्यापाराणां कारयिताऽभूरीति भावः।

शेषं समानमिति। यतो भक्तानां तत्वविषयकसंशयं त्वं विनाशितवान् अतो मायावादिनां कुटिलोक्तीस्तैर्व्यनाशय इत्युक्तम्। तत्रेयमाशङ्का। यद्यपि परमेश्वरस्य संशयनाशनेन भक्तानामाचार्यसङ्गत्यादि व्यापारकरणं तृतीयपादोक्तमस्ति। तथापि पूर्वार्धोक्तः संशयनाशनेन मायावादिकुटिलोक्तिनाशः कथमिति। तत्रोत्तरं संशयस्य मुख्यत्वादिति। मुख्यत्वमेव कुत इति चेदत्राह। तादीत्नेति। संशयसमानबलेनोपेतमन्यं शत्रुं न विवित्से किल। संशयात्मा विनश्यति। नायं लोकोऽस्ति न परो न सुखं संशयात्मन इति वचनादतस्तस्य मुख्यत्वेनोक्तमुपपन्नमित्येव शेषं शिष्टं चतुर्थपादयोजनं प्रसिद्धेन्द्रे योजनान्यायेन समानमित्यर्थः॥ ४॥

अहन् वृत्रं वृत्रतरं व्यंस। महतेति। इतरायुधापेक्षया श्रेष्ठेनेत्यर्थः। आयुधानामहं वज्रमिति वचनादिति भावः। तरबर्थमाह। अतो वृत्रादित्यादि। अस्मात् पूर्वोक्तात् वृत्रादप्यधिकमित्यर्थः। अंससन्धिमिति। अंसयोः सन्धिर्मध्यप्रदेशगलमिति यावदित्यर्थः। शिर इति गलमारभ्य सर्वस्यापि शिरोभागत्वेन विवक्षितत्वादिति भावः। अहन्निति। प्राणाद्वियोजितवान् इत्यर्थः। ननु लोकेऽयं ज्ञानी अयं ज्ञानितर इति प्रयुज्यते। तत्र पूर्वप्रयुक्तज्ञानिशब्द ज्ञानिवत्वार्थकवत्वेन यौगिकत्वादतो ज्ञानिनः सकाशादविज्ञानवान् ज्ञानितर इत्युपपद्यते। न तु पूर्वप्रयुक्तशब्दस्य रूढत्वे न हि अयं घटोऽतो घटादप्यधिको घटतर इति प्रयुज्यते अतोऽत्रापि पूर्वप्रयुक्तवृत्रशब्दोऽपि त्वष्टृपुत्रे असुरे रूढत्वेनातोऽधिकं वृत्रतरमिति व्याख्यानानुपपत्तिरित्यतः पूर्वप्रयुक्तो वृत्रशब्दोऽपि त्वष्टृपुत्रे यौगिक एवेत्याशयेनाह। वृत्रशब्द इति। वृणोते रूपमिति। वृञ् वरणे अस्मात् कप्रत्यये ककारलोपे वृत्रेति रूपम्। कित्वाद्गुणाभावः। अन्यथा वरत्रेति स्यादिति ध्येयम्। तस्य। प्रथमप्रयुक्तवृत्र शब्दस्य। यौगिकमर्थम्। वरणरूपम्। तथाच स्वदेहेन जगद्वृणोति आवृणोतीति वृत्रः अतो वृत्रादप्यधिकतया जगदावरको वृत्रतर इत्युक्तं भवति इति द्रष्टव्यम्।

विसंवादनादिति। वेदविसंवाद्यर्थावगाहित्वादित्यर्थः। अज्ञानमिथ्याज्ञानाभ्यां हि वेदविसंवादिनमर्थमवगच्छतीति प्रसिद्धमिति भावः। व्यंसशब्दौ व्यंसशब्दवाच्यौ। तमोऽज्ञानम्। वज्रेणेत्यस्यार्थो ज्ञानेनेति। बाह्ये आह। एवमिति। विवृक्णेत्यत्र सुपां सुलुगित्यादिना जसकारादेशो ज्ञातव्यः। भाष्ये अहिश्चेत्युक्तं तत्र चशब्दसूचितमर्थं दर्शयितुम् ऋचि विद्यमानाहि पदमुपलक्षणमित्याह। उपलक्षणमेतदिति। वृत्रवृत्रतरयोरिति शेषः। वृत्रेत्यतः पूर्वं तथाचेति शेषः।

(पदार्थप्रकाशिका)

सम्पर्कः सम्बन्धः । पूर्ववदेकवचनमिति । यथाहिरित्येतदुपलक्षणतया व्याख्यातमेवम् अहेः पृथिवीसम्पर्कप्रतिपादके पृथिव्या उपपृगिति विशेषणे यदेकवचनं तद्बह्वस्योपलक्षकमित्यर्थः । तथाचैकवचनं व्यत्ययेन बहुवचनार्थे व्याख्यातमिति भावः । कुलिशपदेन कथमयमर्थो लब्ध इत्यतस्तं दर्शयति । कुलमिति । सन्ततिरित्यर्थः । तस्य सन्ततेरिति । तस्य कुलिनः पुरुषस्य सा सन्ततिस्तस्या इत्यर्थः । यत्सस्मार कुलिशब्दापेक्षया पुल्लिङ्गव्यवहारो न तु तच्छब्दवाच्यविद्यापेक्षयेत्यवगन्तव्यम् । नाम्ना विद्या कुलिश इत्युच्यत इति भाष्यार्थो द्रष्टव्यः ।

पृथिवीमाहेति । पृथिवीशब्दार्थमाहेत्यर्थः । स्फुटमिति । पृथुत्वप्रथितत्वादिरूपं तु निमित्तं स्फुटमित्यर्थः । अहेः संशयस्येति । अहिशब्दवाच्यस्य संशयस्येत्यर्थः । अहिशब्दवाच्यस्य संशयस्य पृथिव्या उपपृक्त्वा मुक्तद्वत्रवृत्रतरशब्दवाच्ययोः अज्ञानमिथ्याज्ञानयोरपि योज्यं तयोरपि संशयवद् बुद्धिरूपेन्द्रियगतत्वादित्याशयेन आह । अज्ञानेति । बाह्ये अह्यादयो दैत्याः पृथिवीसम्बद्धतया पतिता इति पृथिवीसम्बद्धत्वविशिष्टं पतनं विधेयमित्युक्तम् । कुतः अह्यादीनां भूलोकसञ्चरणवल्लोकान्तरसञ्चरणस्यापि सत्वेनान्तरिक्षादिसम्बद्धतया पतनस्यापि सम्भाविततया पृथिवीसम्बद्धतयैव पतनस्यानिश्चिततयाऽसिद्धत्वेन विधानसम्भवात् । अध्यात्मपक्षे चाह्यादिशब्द-वाच्यानां संशयाज्ञानमिथ्याज्ञानानां पृथिवीस्थानीयबुद्धित्वरूपस्य पृथिव्या उपपृक्त्वस्य श्रुतिसिद्धत्वेन विधेयत्वायोगात् अनुवादत्वमेव । असिद्धिं पतनमेव च विधेयम् । तथाच पृथिव्या उपपृक् । पृथुत्वादिना निमित्तेन पृथिव्याख्याया बुद्धिस्थितत्वेन तत्सम्पर्कवन्तो ये संशयाद्यास्ते विद्यानाम्ना कुलिशेन शयते अज्ञानपतिताः नष्टा इति यावदिति योज्यम् ॥ ५, ३६ ॥

## पदार्थदीपिका

प्रवोचमिति ॥ अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभाव इति भावः ॥ अहन्निति ॥ ङितश्चेतीकारलोपे हल्ङ्याभ्यो इति तकारलोप इति ज्ञेयम् ॥ लक्षणे कर्मप्रवचनीय इति ॥ तथा च कर्मप्रवचनीय युक्ते द्वितीयेत्युक्तेरन्वय इति द्वितीयोपपत्तिरिति भावः ॥ हेताविति ॥ लक्षणेत्थंभूताख्यानेति पूर्वयोगेन पुनरुक्तिभिया तु लक्षणेति सूत्रे लक्षणशब्दस्य हेतुपरत्वेन व्याख्यातत्वादिति भावः ॥ स्त्रीलिङ्गेति ॥ लक्षणशब्दस्येति शेषः ॥ १ ॥

कानजन्तमेतदिति ॥ श्रिञ् सेवायां लिटः कानच् द्विर्भावहलादिशेषयङादेशाः ॥ स्वृशब्दोपतापयोरिति ॥ अस्मात् ऋहलोर्ण्यदिति ण्यति संज्ञापूर्वकस्य विधेः अनित्यत्वात् वृध्यभाव इति ज्ञेयम् ॥ २ ॥

(पदार्थदीपिका)

वृषायमाणो वृषेवाचरन्निति ।। कर्तुः क्यङ् सलोपश्चेति क्यङ् अकृत्सार्वधातुकयोरिति दीर्घः । आधारत्रयमिति ।। अक्षिकण्ठहृदयरूपमाधारत्रयमित्यर्थः । ड इति ।। डित्वात् टिलोप इति भावः । जनसनेतीति ।। ततश्च विड्वनोरनुनासिकः स्यादिति अनुनासिकस्यात्वे प्रथमजामिति सिध्यतीति भावः ।। किरिति ।। हयनं हिः ततः किप्रत्यये निर्वचनत्वात् इकारलोपे हीति सिध्यतीति भावः ।। ३ ।।

मायिनमिति ।। मायाशब्दस्य यिह्यादिषु पाठात् व्रीह्यादिभ्यश्चेति मत्वर्थीय इति ज्ञेयः ।। मीञ् हिंसायामिति ।। क्रैयादिकः । मीनातेर्निगम इति ह्रस्वत्वमिति भावः । विद्लृलाभ इति । ततो न विवित्स इत्यस्य लभस इति व्याख्यानं युक्तमिति भावः । अत्र क्रचदिनियमात् प्राप्तइट्व्यत्ययेन न भवतीति द्रष्टव्यम् ।। शेषं समानमिति ।। ४ ।।

त्वादीनां शत्रुमिति ।। चतुर्थपादव्याख्यानं पूर्वव्याख्यानवत् द्रष्टव्यमित्यर्थः । विवृक्णा विवृक्णानीति ।। ओवृश्चू च्छेदने । कर्मणि निष्ठा यस्य विभाषेति इट् प्रतिषेधः । उदितश्चेति परत्वात् निष्ठान्तत्वात् नत्वं ततो व्रश्चभ्रस्ज इति षत्वे प्राप्ते निष्ठादेशः । षत्वस्य रप्रत्यविधिषु असिद्धो वक्तव्य इति नत्वस्य असिद्धत्वेन झल्परत्वाभावात् षत्वं न भवति । कुत्वे कर्तव्ये तदसिद्धमेवेति चोः कुरिति कुत्वम् । शे छन्दसि बहुलमिति शेर्लोप इति द्रष्टव्यम् । पूर्ववदेकवचनमिति । यथाहि पदं वृत्रादेः उपलक्षणं, तथा उपपृक् इत्येकवचनं बहुत्वोपलक्षणमित्यर्थः । एकवचनं व्यत्ययेन बहुवचनार्थे व्याख्येयमिति भावः । शयतेति ।। बहुलं छन्दसीति शपो लुगिति भावः । अनुवाद इति ।। अह्यादीनां भूलोकवत् लोकान्तरसंचारस्यपि विद्यमानत्वात् पृथिवीमात्रगतत्वात् तत्पतनस्य पृथिवीमात्रसंपृक्तत्वेन असिध्यतनविशिष्टविधेरावश्यकत्वेनापि अत्र पक्षे संशयादीनां बुद्धिमात्र-निष्ठत्वेन तत्पतनस्य तन्मात्रसंपृक्तत्वसिध्या तदंशविधानानुपपत्तेः पृथिव्या उपपृगित्यनुवादः । शयत इत्येतदेव विधेयमिति भावः ।। ५,३६ ।।

## टीकाविवृतिः

इन्द्रस्य नु ।। पञ्चदशर्चमिति ।। इन्द्रस्य पञ्चोनेत्यनुक्रमणिका । इन्द्रस्य नु इति सूक्ते पञ्चोना विंशतिःसंख्या । अनादेशेत्विंद्रो देवता त्रिष्टुप्छन्दः हिरण्यस्तूपोत्र ऋषिरित्युक्तत्वादिति भावः ।। क्षिप्रनामेति ।। नु मक्षु इति क्षिप्रनामसु पाठादिति भावः ।। प्रसिद्धस्येति ।। अज्ञानिप्रसिद्धस्य शचीपतेरित्यर्थः ।। लडर्थे लुङिति ।। छन्दसि लुङ्लङ्लिट इति कालसामान्ये विधानादिति भावः । वचेर्लुङि च्लेरस्यतिवक्तिख्यातिभ्यो ङित्यङादेशे वच उमित्युमागमे गुणादौ वोचमिति रूपं बोध्यम् ।

(टीकाविवृतिः)

प्रथमानीति विशेषणस्य कृत्यमाह ।। अनन्तत्वेपीति ।। द्वितीयार्धमवतारयति ।। तान्युच्यंत इति ।। तानि चरित्राणि । अहिं दैत्यमित्यहिनामकमित्याशयेनाह ।। दैत्यविशेषमिति ।। अहन् जघानेति । हन्तेर्लङि तिप्यदादित्वाच्छपो लुकि तिपो हल्ङ्यादिलोप इति भावः ।। हीति निश्चेयवाचीति ।। एकाक्षररत्नमालायां हिः कृतौ निश्चये ख्याताविन्युक्ते र्निश्चयार्थकहिशब्दस्यानव्ययत्वाद्विरुद्धार्थकनञा समासे संशयार्थक हि शब्दस्याप्य व्ययत्वं नेति भावः ।। इति व्यवस्थित इति ।। भाष्यस्थवाशब्दवाच्यो विकल्पः अधिदैवपरमात्मविवक्षाभेदेनान्वयविशेषेण व्यवस्थितो न तु एकैकत्र पुरंदरादौ । अहिशब्देन दैत्यःसंशयश्च गृह्यत इत्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति ।। एतमुत्तरत्रेति ।। अन्वपस्ततर्देत्यादौ ।। कर्मप्रवचनीय इति ।। अत एवापां मार्गमिति वक्तव्ये कर्मप्रवचनीययुक्ते द्वितीयेत्यन्वप इति द्वितीया । अपां हिंसासंभवात्ततर्देत्यत्र न कर्मत्वमिति भावः । लक्षणार्थत्वं दर्शयति ।। जलानुसारेणेति ।। मार्गखननस्य जलं लक्षणम् । यत्र जलं तत्र मार्गं खनितवानित्यर्थः । निरपराध्यहि हननं कथं घटते तस्य जलमार्गखननस्य च कः संबन्ध इत्यतस्तदुपयुक्तां पौराणिकीं कथां वदंस्तृतीयपादतात्पर्यमाह ।। अहिर्नामेति ।। हेतौ कर्म प्रवचनीय इति ।। अत्र सूत्रे लक्षणशब्दस्य निमित्तार्थत्वादिति भावः ।। करणे सन इति ।। उणादयो बहुलमिति वचनात्सनप्रत्यये हो ढ इति ढत्वे षढोःकस्सीति कत्वे सस्य षत्वमिति भावः । ननु प्राभिनदित्येतत्कर्मणो वक्षणा इत्यस्य पक्षवाचकस्य पुल्लिंगत्वात्प्रवक्षणानितिस्यात्तत्कथं प्रवक्षणा इत्यत आह ।। स्त्रीलिङ्गतेति ।। यद्यपि सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनाच्छसो नत्वाभावे रुत्वविसर्गयोः पुंस्त्वेपि वक्षणा इति रूपसिद्धिस्तथापि लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति महाभाष्योक्तेः प्रकारान्तरमेवोक्तमिति बोध्यम् ।। जन्मपर्ववतामिति ।। पर्वस्यादुत्सवे ग्रन्थाविति विश्वोक्तेर्ग्रन्थ्यर्थकपर्वशब्दात्तप्पर्वमरुद्भ्यामिति वार्तिकेन मत्वर्थे तप्प्रत्यय इति भावः । ननु परमेश्वरपक्षे वक्षणाशब्दस्य वचधातुरूपाङ्गीकाराद्वचांसीत्येवार्थः स्यात्तथा च भाष्ये दुर्वचांसीत्युक्तिःकथम् । तथा कुवादिभिरीश्वरस्य साक्षात्कथाभावात्प्राभिनदिति कथमित्यतोभिप्रायमाह ।। एतदुक्तं भवतीति ।। जन्माख्यपर्ववत्त्वाज्जन्मनांमोक्षप्रतिबन्धकत्वाद्ग्रन्थिरूपपर्वसाम्यात्पर्वत्वमित्याशयः । प्रसङ्गात्प्राभिनदिति निराकरणोत्त्यन्यथानुपपत्तेःकुवादिनामिति जीवविशेषणं तथा दुरितिवचोविशेषणं च लभ्यत इति भावः ।। १ ।।

अहन्नहिं ।। पर्वत इति जात्येकवचनमिति भावेनाह ।। पर्वतेष्विति ।। कानजन्तमिति ।। श्रिञ उभयपदित्वाल्लिटःकानज्वेति लिटःकानजादेशो द्वित्वादीति भावः । भाष्ये प्रथमपादाव्याख्याने बीजमाह ।। स्पष्ट एवेति ।। त्विडात्मेति ।। त्विष दीप्तावित्यतो नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोत्रि-

(टीकाविवृतिः)

त्याद्युणादिसूत्रेण तृन्प्रत्यय उपधाया अकारादेशश्च निपातित इति भावः। त्वष्टा त्वेतदिति भाष्ये एतदिति पदस्य यत्प्रयोजनं प्रकृते न संबन्धार्थमित्युक्तं तद्विवृणोति ॥ येन वज्रेणेति ॥ एतेनेति ॥ एतत्पदग्रहणेनेत्यर्थः ॥ तत्प्रसिद्ध इति ॥ इन्द्रायुध इत्यर्थः ॥ इदं रूपमिति ॥ अचो यदिति वा औणादिके वा अर्हार्थके यत्प्रत्यय इति शेषः । तत्र तयोर्धात्वर्थयोर्मध्ये प्रसिद्धवज्र उपतापार्थःकथमुपयुक्त इत्यत आह ॥ शस्त्राणीति ॥ अग्नितापानन्तरं शाणसंबन्धे सम्यङ्निशितानि भवन्तीत्यर्थः ॥ ज्ञानाख्यं त्विति ॥ वज्रमिति शेषः । अस्मिन्पक्षे स्वृधातोःशब्दार्थ ग्रहणात्स्वर्यंशब्दयोग्यमित्यक्षरार्थः । तात्पर्यार्थस्तु शब्दसंबन्धीत्यादीति ज्ञेयम् । एतदीरिता इति कस्य श्रौतपदस्य व्याख्यानं किं च तस्य प्रयोजनमित्यत आह ॥ अत्रैतदीरिता इतीति ॥ उत्तरार्धस्येन्द्रदेवताकत्वज्ञापनायेत्यर्थः ॥ वाश्राःशिशुवत्सा इति ॥ वाश्रास्रुतस्तनाधेनु-र्वास्त्रोरासभपक्षिणोरिति मेदिन्युक्तेःवाश्रशब्दस्य स्रुतस्तनार्थकत्वेपि शिशुवत्सानामेव शिशुस्नेहेन स्रुतदुग्धस्तनत्वाच्छिशुवत्सा इत्युक्तमिति भावः ॥ अंजःआर्जवेनेति ॥ प्रतिबन्धकराहित्येनेत्यर्थः । अवजग्मुरित्यस्य आगमनार्थविवक्षयाऽऽङ्मध्याहृत्याह ॥ अवाजग्मुरिति ॥ अध्यात्मार्थमाह ॥ यद्वेति ॥ अभिप्रायमाह ॥ संशये नष्ट इति ॥ २ ॥

वृषायमाणः ॥ वृषशब्दात्कर्तुःक्यङ्सलोपश्चेत्याचारार्थे क्यङि अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घे सनाद्यन्ता इति धातुत्वाल्लटि क्यङो ङित्वाल्लटः शानजादेशे आने मुगिति मुगागम इति भावेनाह ॥ वृषायमाणो वृषेवाचरन्निति ॥ कद्रुकशब्द इति ॥ त्रिकद्रुकेषु महिषो यवाशिरंतुवि-शुष्मास्तृपत्सोममपिबद्विष्णुना सुतं यथावशत् । स ईंममादमहिकर्मकर्तवे महामुरुंसैनंसश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुरित्यस्यामृचि आदिशब्दात् उग्रेष्विन्नुशूरमन्दसानस्त्रिकद्रुकेषु पाहि सोममिन्द्रेति गृहीतायां च कद्रुकशब्दः सवनार्थकः । ब्राह्मणाच्छंस्यावपेतःप्रातस्सवने तीव्रस्याभिवयसो अस्य पाहीति माध्यंदिने त्रिकद्रुकेषु महिषोयवाशिरमितिस्तोत्रिय इत्यारण्यक अस्या ऋचःद्वितीयसवने विनियोगात्तथा सर्वत्र त्रिकद्रुक ग्रहणस्थले सोमपानोक्तेश्चेति भावः । अस्या अर्थः । महिषःपूज्यः तुविशुष्मो बहुबलः स इन्दुः त्रिकद्रुकेषु त्रिषु सवनेषु सुतं सोमं विष्णुना पातुं अवशत् ऐच्छत् । तथा अपिबच्च तेन पानेन तृपत् अतृपत् तृप्तिं प्राप । तत्र दृष्टान्तः । यथा यवाशिरं यवान्नाशनं व्रती पुरुषः प्राप्येति शेषः । अत एव सश्चित् समीचीन ज्ञानी देवःसत्यःसदुपकारी सतृप्त ईं महां उरुं अतिमहान्तं एनं देवमिन्द्रं विष्णुं प्रतिमहिश्रेष्ठं कर्म कर्तवे कर्तुं ममादईं तुतोषैवेति । उग्रेष्वित्यर्धस्यायमर्थः । हे शूर इन्द्र । श्रीकण्ठे चोत्कटेप्युग्र इति विश्वोक्तेः उग्रेषूत्कटेषु त्रिकद्रुकेषु सोमं पाहि पिब । तेन मन्दसानःसुखलाभवान्भवेति ॥ द्रुतं प्राप्तमिति ॥ द्रुगतावित्यतःप्राप्त्यर्थान्निष्ठार्थे औणादिकः

(टीकाविवृतिः)

कप्रत्यय इति भावः । कद्रुकशब्दे विग्रहमाह ।। कंद्रु कं द्रुतमत्रेतीति ।। आधारत्रयमिति ।। शरीरमेनसःस्थितेः । तथेन्द्रियेषु ज्ञानजननकालेऽवस्थानाद्गोलकरूपे हृदये स्थितेःशरीरेन्द्रिय-हृदयरूपमाधारत्रयं सोमनामकमनस इत्यर्थः ।। वज्रनामेति ।। स्वधितिःसायकमिति वज्रनामसु पाठादिति भावः । सायकः प्रदूरःकाण्ड इत्यमरोक्तेःसायकं बाणं वज्रन्तन्नामकायुधं चादत्तेति व्याख्यानेपि पुनरुक्तिपरिहारात्कुतो विशेषणत्वेन व्याख्यानमित्यत आह ।। एवशब्देनेति ।। सति सामानाधिकरण्ये वैयधिकरण्यायोगादिति भावः ।। इत्यस्य रूपमिति ।। आदेच उपदेश इत्यात्वे कर्मण्यण्प्रत्यये आतो युगिति युगागम इति शेषः ।। इति ड इति ।। कृञ इति शेषः । भाष्ये सायकपदस्य सायंकरमिति विग्रहप्रदर्शनं लयकृदिति व्याख्यानमिति भावेनाह ।। सायंकरमिति ।। अविद्यादीनामिति ।। लयकृदित्यनुवर्तते ।। जनसनेति विडिति ।। जने र्जनसनखनक्रमगमो विडित्यनेन विट्प्रत्यये जनसनखनां सञ्झलोरित्यात्वे वेरपृक्तस्येति विटो लोप इति भावः ।। ततःकिरिति ।। गत्यर्थानां ज्ञानार्थत्वाद्भावे किप्रत्यये बाहुलकडित्वेन टिलोप इति भावः ।। नञ्समास इति ।। ततश्च समासस्वरापवादेन तत्पुरुषे तुल्यार्थेत्यनेनाव्ययपूर्वपदप्रकृतिस्वरेणा-द्युदात्तत्वमिति भावः ।। मुख्यमेनं संशयमिति ।। संशयात्मा विनश्यतीत्युक्तेरिति भावः ।। ३ ।।

यदिन्द्र ।। आत् अतःकारणादित्ति ।। चरणे कारणे रणे । अकारःकथितो धीरैरित्येका-क्षररत्नमालोक्तेः कारणार्थकाकारात्पञ्चमीति भावः ।। मीञ् हिंसायामिति ।। अस्माल्लङि सिपि क्र्यादित्वात् श्नाप्रत्यये धातोश्छान्दसं ह्रस्वत्वमिति शेषः । तृतीयपादाक्षरार्थमुक्त्वाऽभिप्रायमाह ।। पुरेति ।। चतुर्थपादस्यासंगतिपरिहाराय पूर्वोक्तं यदहिवधस्येतरदैत्यमायाविनाशं प्रतिकारणत्वं तदाक्षिपति ।। तथापीति ।। प्रथमजामिति विशेषणं हेतुगर्भमिति मनसि निधायसमाधत्ते ।। तस्य मुख्यत्वेनेति ।। मुख्यनाशे अमुख्यानामकार्यकरत्वान्नाशितप्रायत्वादिति भावः ।। लेशेनेति ।। द्वितीयपादमात्रमित्यर्थः । भाष्ये वाथेति विपरीतोक्तयोरन्वयमाह ।। अथवेति संबन्ध इति ।। तज्जयेनेति ।। मायिजयेनेत्यर्थः । सूर्यस्य प्रकाशहेतुत्वात्सूर्यशब्देनाचार्यग्रहणे तत्साम्यमाह ।। ज्ञानहेतुमिति ।। ज्ञानस्यापि प्रकाशसाम्यादितिभावः ।। तत्संगतिमिति ।। तेनाचार्येण सङ्गतिःसंबन्धो यस्यास्तामित्यर्थः । इदं च दिव उषसश्च उपयोगित्वेन ज्ञेयम् । आचार्योपदेशेनैव ज्ञानमोक्षयोर्जायमानत्वादिति भावः । एवं द्वितीयपादस्य भाष्ये व्याख्याततत्वादाद्य तृतीयपादौ स्वयं व्याख्याय चतुर्थविषये पूर्वोक्तमतिदिशति ।। शेषं समानमिति ।। कथं संशयनाशेन मायावादिनां कुटिलोक्तिनाश इति चेन्न । तस्य संशयस्य मुख्यत्वेन दुष्टानां कुटिलोक्तीनां तदाश्रयत्वात् । संशयस्य मुख्यत्वमेव कुत इत्यत्रेदमुत्तरं तादीत्नाशत्रुमिति । संशयसदृशशत्रुं त्वं न लभसे किलेति समानमित्यर्थः ।। ४ ।।

(टीकाविवृतिः)

अहन्वृत्रम् ।। व्यंसमित्यत्र पूर्वमेवांसरहितमित्यन्यथाप्रतीति निरासायांसशब्दस्तत्संधिलक्षक इति भावेनाह ।। विगतांससंधिमिति ।। अत्राप्यन्यथाप्रतीतिनिरासाय तात्पर्यमाह ।। शिरश्छित्त्वेति ।। वृत्रतरशब्दस्य दैत्यविशेषनाम्नो भाष्येऽतोधिकमिति कथं व्याख्यानमित्यत आह ।। वृत्रशब्द इति ।। अमिचिमिदिशसिभ्यः क्त्र इत्युक्तक्त्रप्रत्यये बहुलोक्तेर्वृञोपि जाते वृत्रशब्दो लोक प्रवृत्त्यादेःप्रतिबंधकत्वरूपयौगिकार्थक इति भावः ।। ततःकिंप्रकृत इत्यत आह ।। तस्येति ।। अध्यात्ममाहेति ।। अर्थमितिशेषः । अमगत्यादावित्यतो विपूर्वात् वृतॄवदितनिकमिकषिभ्यःस इत्युक्तसप्रत्यये बहुलोक्तेर्जातिव्यंसशब्दो विरुद्ध ज्ञानार्थक इति भावेनाह ।। व्यंसनाद्विसंवादनादिति ।। व्यंस इति शब्दो ययोर्वृत्रवृत्रतरयोःप्रतिपादकस्तौ व्यंसशब्दावित्यर्थः । तमोऽज्ञानं वृत्रशब्दवाच्यं मिथ्यादानं वृत्रतरशब्दवाच्यमित्यर्थः । उत्तरार्धं सङ्गमयितुं पूर्वोक्तमनुवदति ।। एवमिति ।। इति त्रीन्दैत्यानित्यर्थः ।। विवृक्णेति ।। विपूर्वादो व्रश्चू छेदने इत्यस्मात् क्तप्रत्यये ऊदित्वेन वेट्त्वाद्यस्य विभाषेतीड भावे चोःकुरिति कुत्वे ओदितश्चेति निष्ठानत्वे ग्रहिज्येति संप्रसारणे स्कोः संयोगाद्योरिति सलोप अट्कुप्वाङिति णत्वे जसः सुपां सुलुगित्याकारादेश इति भावः । स्कंदिर् गतिशोषणयोरित्यतः स्कंदेश्च स्वांग इत्युणादिसूत्रेणासुप्रत्यये दकारस्य धकारादेशे च जाते स्कंधांसीति रूपमिति भावेन तस्य प्रतिपदमाह ।। तरोःस्कंधा यद्वदिति ।। स्कंधः प्रकाण्डे काये चेत्यकारान्तस्यापि विश्वोक्तेरिति भावः । अहिश्चेति भाष्योक्त चशब्दस्वारस्यायाह ।। उपलक्षणमिति ।। एतदृक्स्थमहिपदमित्यर्थः ।। पृची संपर्क इति ।। अस्मात्कर्तरि क्विबिति शेषः ।। पूर्ववदेकवचनमिति ।। श्रुतावुपपृगिति पदात्पूर्वं पदं शयत इति तत्र वृत्रादीनां त्रयाणामपि कर्तृत्वाद्यथैकवचनं व्यत्ययेन बहुत्वार्थकं तथोपपृगित्यपि पदं वृत्रादीनां विशेषणत्वादिति भावः । शयत इत्यत्र व्यत्ययेन लङर्थे लट्यदादित्वेपि बहुलं छन्दसीति शपो लुगभाव इति भावेनाह ।। अशेरत इति ।। शीङो लङि शपोऽदादित्वाल्लुकि झस्यात्मनेपदेष्वनत इत्यदादेशे तस्य शीङो रुडिति रुडागमे शीङःसार्वधातुक इति गुण इति भावः ।। यस्मिन्पुरुष इति ।। तत्कुलस्य विद्यावत्कुलस्य सुखकारित्वाद्विद्याकुलिशशब्दवाच्येत्यर्थः । विग्रहं दर्शयति ।। कुलमस्येति ।। कुली विद्यावान् । विद्यायाविद्यावत्सुखकरणत्वोक्तेरतिमाहात्म्योप पादकत्वाभावात्सविशेषण इति न्यायेन शंकरणस्य कुले पर्यवसानादिति भावेनाह ।। तस्य संततेरिति ।। विद्यावतो वंशस्येत्यर्थः ।। पृथिवीमाहेति ।। अध्यात्मं पृथिवीशब्दवाच्यमाहेत्यर्थः ।। निर्वचनं स्फुटमिति ।। पृथुत्वात्संशयविपर्ययादि-सामान्यरूपेण श्रेष्ठत्वाद्बुद्धिः पृथिवीत्युच्यत इति शेषः ।। संशयो बुद्धिगत इति ।। यद्यपि संशयस्यापि बुद्धित्वाद्बुद्धिगतत्वासंभवस्तथापि संशयशब्देन तद्गतं दोलायमानत्वं गृहीत्वा

(टीकाविवृतिः)

बुद्धिगतत्वं व्युत्पादनीयमिति भावः ॥ अज्ञानेति ॥ अत्राप्यज्ञानशब्देन तत्वविषयकत्वाभावो बुद्धिगतस्तथा विपरीतविषयकत्वं बुद्धिगतं मिथ्याज्ञानशब्देन गृह्यत इत्यर्थः ॥ अत्र पक्ष इति ॥ अध्यात्मपक्षे संशयादीनां बुद्धिनिष्ठत्वस्य सिद्धत्वाद्ये संशयादयो बुद्धिगतास्ते शयते अशेरत नष्टा इति व्याख्येयमिति भावः ॥ ५ ॥

### ऋक्संहिता पदपाठसहिता (सू-३२, व-२)

(३७४) अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ॥
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६ ॥

(प०) अयोद्धाऽइव । दुःऽमदः । आ । हि जुह्वे । महाऽवीरम् ।
तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । सम्ऽऋतिम् ।
वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥ ६ ॥

(३७५) अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ॥ वृष्णो
वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥

(प०) अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् ।
अधि । सानौ । जघान ॥ वृष्णः । वध्रिः । प्रतिऽमानम् ।
बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥

(३७६) नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ॥
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥

(प०) नदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः ।
अति । यन्ति । आपः ॥ याः । चित् । वृत्रः । महिना ।
परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥ ८ ॥

(३७७) नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ॥ उत्तरा सूरधरः
पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥

(ऋक्संहिता पदपाठसहिता)

(प०) नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इन्द्रः । अस्याः । अव ।
वधः । जभार । उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् ।
दानुः । शये । सहऽवत्सा । न धेनुः ॥ ९ ॥

(३७८) अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ॥
वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः॥१०,३७॥

(प०) अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये ।
निऽहितम् । शरीरम् ॥ वृत्रस्य । निण्यम् । वि । चरन्ति ।
आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रऽशत्रुः ॥१०,३७॥

## ऋग्भाष्यम्

यस्य योद्धा नायोद्धासौ तद्वदेवेन्द्रशत्रुः । दर्पोद्रिक्तो ह्याह्वयामास शक्रं विष्णुं वाऽज्ञानं वीरतमं रिपूणाम् । महोच्चानां बाधकं दार्ढ्यहेतोर्ऋजीषाख्यं नास्य विष्णोर्वधानाम् । सम्प्राप्तिमज्ञानमथापि वृत्रः शक्रस्यातारीत्संपिपिषे प्रजाश्च । रुजायुक्ता मानुषीर्वा सृतिस्था इन्द्रः शत्रुर्यस्य सहीद्रशत्रुः । पुंसोः पूर्वस्मिन्स्वरितान्ते समासो बहुव्रीहिर्हीति सूत्रं पुराणम् ॥ ६ ॥ संछिन्नपाद्वाहुरपीद्रमेव युयोधवज्रं व्यसृजत्सतस्य । गिरेः सानुप्रतिमे कण्ठदेशे तर्कागमाभ्यां रहितं तमो वा । संयुध्यमानं मानवज्रेण विष्णुर्जघान वध्रिर्वधयोग्योथ नीचः । ईशस्य शत्रुर्भवितु स इच्छन्व्यस्तोशयद् बहुधेशेन तेन ॥ ७ ॥ अपां रोद्धारममुया स्वमात्रा सहैव शक्रेण हतं शयानम् । भिन्नं नदं यद्वदतीत्यचापो मनः पूर्वं चारुहाणाः प्रयांति । वृत्रो याः पूर्वं स्वमहिम्ना परीत्य पुरा तिष्ठत्तत्सुतोहिश्च तासाम् । पत्सुतश्शीः पादतो नन्तरन्तु शेता भवत्तद्वदेवाभिरुंधन् । तमः पुत्रः संशयो वाभिरुंधन् शुभान्यास्ते निहतः सोपि तेन ॥ ८ ॥ नीचस्थाने बन्धनं यापि चापां करोति दानुर्वृत्रमाता दनुः सा । वृत्रो ह्यभूद्दनुजः कश्यपाच्च पापात्मासौ वैष्णवस्त्वष्टृजातः । वृत्रः पुत्रोस्या इति सा वृत्रपुत्रा वधं तस्या अहरत्पूर्वमिन्द्रः । प्रकृतिर्वा वृत्रमाता तमोहि तस्या अभूत्तां जघाने शितावा । प्रातिस्विकी प्रकृतिर्यत्तमश्च दोषाश्चान्ये पुंस्वतो युक्तमेतत् । सुतावनार्थमुपरिस्था बभूव सुतस्य माता तां निहत्यामुमेव । जघानेन्द्रः

(ऋग्भाष्यम्)

कारणस्यापि नाशात्कार्योत्थानं वारयामास विष्णुः । स्यादेव पूर्वं कार्यनाशो ह्यथापि निःशेषनाशः कारणस्यैव नाशात् । एवं भक्ताननुजग्राह देवो नारायणः पारयन् संसृतेश्च । उत्तरत्वं प्रकृतेः शक्तितः स्यात् ॥ ९ ॥ अनन्तत्वान्नैवतिष्ठन्ति काष्ठाः । अतस्तासां नगृहं किञ्चिदस्ति निण्यं सुखेनैव चरन्ति चापः । दीर्घं तमो वृत्रसंज्ञं तमोवा दीर्घमन्धं प्राप वृत्रः स एव ॥ १०, ३७ ॥

## ऋग्भाष्यटीका

अयोद्धेव । यस्य । अहन्वृत्रमित्युक्तमेव प्रपञ्च्यते । इन्द्रशत्रुर्वृत्रोऽयोद्धेव न विद्यते योद्धा प्रतिभटो यस्यासावयोद्धा तद्वदेव । दुर्मदो दर्पोद्रिक्तो महावीरं वीरतमं तुविबाधं महोच्चानां रिपूणां बाधकमृजीषं सोमस्य सुतस्य योंशोवशिष्यते स ऋजीष इति वल्क इति चोच्यते । अत्र तु गौणीवृत्तिः स यथादृढो भवति तथा दार्ढ्यहेतोः ऋजीषाख्यं शक्रमाजुह्वे हि । आह्वयामास हि । युद्धायेति शेषः । हिशब्दः किलार्थे । उक्तरूपमज्ञानमुक्तलक्षणं विष्णुमाह्वयामासेवेति वा । कृताह्वानश्च वृत्रोऽस्य शक्रस्य वधानां प्रहाराणां समृतिं सम्प्राप्तिम् । नातारीन्न तीर्णवान् । शक्रकृतप्रहारवचनक्षमो नाभूत् । अथापि अथवाऽज्ञानमस्य विष्णोर्वधानां सम्प्राप्तिं नातारीत् । किं तु प्रहारपीडितः पतन्निंद्रशत्रुः वृत्रो रुजानाः रुजायुक्ता दुर्बलाः मानुषीः प्रजाः संपिपिषे चूर्णितवान् । यद्वेश्वरेण भक्तेभ्यो निराकृतमज्ञानम् । रुजानाः संसाररोगयुक्ताः सृतिस्थाः प्रजाः संपिपिषे बबाधे । ईद्रशत्रुशब्दस्य बहुव्रीहि तत्पुरषत्व संशयं विग्रहप्रदर्शनेन निराकरोति । इन्द्र इति । नहींद्रस्य वृत्रः शत्रुः शातयिता किं त्विंद्र एव वृत्रस्येति बहुव्रीहिपरिग्रहे युक्तिं हिशब्देन सूचयति । किंचेन्द्रशत्रुप्रातिपदिके इन्द्रेति पूर्वपदं स्वरितांतम् । अतोपीदं बहुव्रीहिरूपम् । तथात्वेपि कुतो बहुव्रीहित्वमित्यत आह ॥ पुंसोरिति । पुंसोः पुंलिङ्गयोः समस्यमानयोर्मध्ये पूर्वस्मिन्पदे स्वरितांते सति स समासो बहुव्रीहिर्ज्ञातव्य इत्यस्यार्थस्य प्रतिपादकं पुराणं चिरंतनव्याकरणस्थं सूत्रमस्ति हीत्यर्थः । तथाच शिक्षाकारः । यथेन्द्रशत्रुः स्वरतोपराधादिति । पूर्वपदप्रकृतिस्वरत्वस्येदमुपलक्षणमिति न कश्चिद्दोषः । यथाह पाणिनिः । बहुव्रीहौ प्रकृत्या पूर्वपदमिति । अन्यथा समासांतोदात्तत्वं स्यादिति ॥ ६ ॥

अपात् । संछिन्न । अपात् पादरहितोऽहस्तो हस्तरहितः संछिन्नपाद्बाहुरपि वृत्रः केवलेन देहेनेन्द्रमपृतन्यत् युयोधैव । युध्यतिकर्मसु पाठात् । तदा स इन्द्रोऽस्य तस्य वृत्रस्य सानौ गौण्या वृत्त्या गिरेः सानुप्रतिमेऽत्यंतस्थूले कण्ठदेशे वज्रमध्याजघान प्रहृतवान् । व्यसृजत् । अध्यात्मं त्वपादहस्तो वृत्रः प्रवृत्तिसाधनत्वात्तर्कागमाभ्यां रहितं तमोऽज्ञानमिन्द्रमीश्वरमपृतन्यत् परमेश्वरश्चास्याज्ञानस्य सानौ सानुवदुरुतरे स्वरूपे वज्रमध्याजघान । विष्णुः संयुध्यमानमज्ञानं मानवज्रेण जघान प्रहृतवानिति । स एवं

(ऋग्भाष्यटीका)

वृष्णोर्वर्षितुरीश्वरस्य विष्णोरिन्द्रस्य वा प्रतिमानं प्रतिरूपं शत्रुरिति यावत्। बुभूषन् भवितुमिच्छन् वध्रिः कर्मणि रिप्रत्यये कृते वधयोग्यः। अथवा रूढ्या नीचो वृत्रो सुरोऽज्ञानाख्यश्च तेनेशेन पुरुत्रा बहुधा बहुषुस्थानेषु व्यस्तो निरस्तोऽशयत् अशेत। अपतत्॥ ७॥

नदम्। अपाम्। अत्रापां रोद्धारमित्यादिकं कथासङ्घटनार्थमुक्तम्। अपां नादेयानामुदकानां रोद्धारं निरोधकत्वेन स्थितम्। अमुयोत्तरस्यामृचि वक्ष्यमाणया स्वमात्रा सहैव शक्रेण हतं शयानं पतितं वृत्रं भिन्नं नदं न भिन्नं नदं यद्वत् नद शब्देनात्र तत्तीरमुपलक्ष्यते। भिन्नं नदस्य तीरमिवाति अतीत्य च। अतीत्यैवापो मनोरुहाणाः मनसोपि पूर्वं वेगेनेति यावत्। आरुहाणाः स्थलान्यारोहंत्यो यन्ति प्रयान्ति। कास्ता आपः वृत्रः पुरा पूर्वस्मिन्काले याश्चित् यास्त्वपो महिना स्वमहिम्ना पूर्वं पुत्रापेक्षया पूर्वस्मिन्स्थाने पर्यतिष्ठत्। परीत्य निरुध्यातिष्ठत्। किञ्च तत्सुतो वृत्रस्य सुतोऽहिश्च यासां ता सामपाङ्गतिं तद्वदेव वृत्रवदेव। अभिरंधन्निति शेषः। पत्सुतः शीर्बभूव पितुः पादतोनंतरमेव शेताभवत्। पादशब्दात्पञ्चम्यर्थे सप्तमीबहुवचनम्। पादशब्दस्य च पद्दन्नित्यादिना पदादेशः। ततस्तसिः। सप्तम्यलोपः छान्दसः। तदुपपदाच्छेतेः क्विप्। अनन्तरमिति सामर्थ्यसम्भवार्थमुक्तम्। वृत्रो नदीद्वारेषु शिरो निधायापां मार्गे पतितो गतिं निरुणद्धि। अहस्तितमप्यतिक्रम्यापो यास्यंतीति तत्पादतोनन्तरं शयित्वा निरुणद्धीति। अध्यात्मं तात्पर्यमाह। तम इति। आस्ते स्थितः। तेन भक्तशरीरे स्थितेनेश्वरेण। पदयोजना तु पूर्वैव। पत्सुतः शीरित्यानन्तर्यमात्रपरम्॥ ८॥

नीचावयाः। नीचस्थाने। उत्तरवाक्येनैकवाक्यतासिद्धये या सेत्यध्याहरति। यापि च सा वृत्रपुत्रा वृत्रमाता दानुर्दनु रित्युत्तरार्धस्य व्याख्यानम्। नीचावया अभवत्। वयबन्धने। नीचे वयति बध्नातीति नीचावयाः साभवत्। नीचस्थानेऽहेरप्यनंतरेऽपांबन्धनं करोति। अकार्षीदिति यावत्। सम्बन्धस्तूत्तरत्र। ननु दनुः कश्यपस्य भार्या न च वृत्रः कश्यपपुत्रः किन्तु त्वष्टुः तत्कथं दनुर्वृत्रमातेत्यत आह॥ वृत्रो हीति॥ द्वौ वृत्रौ तत्रैकः कश्यपाद्दनुजोभूत्। दैत्यत्वं च तामसत्वात्। अपरश्च त्वष्टृजात इति न विरोधः। कुतो द्वयोः कल्पना। असौ दनुजः पापात्मा श्रूयते दीर्घं तम आशयदिन्द्र शत्रुरिति। त्वष्टृजातस्तु वैष्णवः। पुण्यात्मा प्रसिद्धः। अतो द्वौ कल्प्यौ। अथापि वृत्रपुत्रेत्यस्य वृत्रमातेति व्याख्यानं कथमित्यत आह॥ वृत्र इति॥ अस्यास्तस्यादनो वधो वधमिन्द्रोऽवाधस्तने काले वृत्रवधात्पूर्वमेव जभार जहार अहरन्। कृतवान्। अध्यात्मं वृत्रमातरमाह॥ प्रकृतिर्वेति। मूलप्रकृतिः। कथमित्यत आह॥ तमो हीति। इन्द्रो अस्या इत्येतदध्यात्मं व्याचष्टे॥ तामिति। भिन्नवाक्यत्वाद्वा द्वयम्। ननु यदि प्रकृतिरज्ञानं संशयादयोन्ये दोषाश्चेश्वरेण नाशितास्तर्हीदानीं पुरुषेषु संसारदर्शनमयुक्तं स्यात् न ततो वेदवाक्यमिदं युक्तमित्यत आह॥ प्रातिस्विकीति॥ यद्यस्मात्। न केवलमनुस्यूता किंतु प्रातिस्विकी चास्तीत्यर्थः। प्रथमं दनोर्वधे किं कारणम्। सूत इति सूर्माता दनुः। सुतावनार्थमुत्तरा सुतस्योपरिस्थासीद्बभूव। पुत्रस्त्वधर आसीत्।

(ऋग्भाष्यटीका)

तस्मादिन्द्र उपरिस्थान्तां दनुं निहत्यैवाधस्थममुं वृत्रं जघानेति शेषः । ततो दानुः दनुः सहवत्सा धेनुर्न धेनुरिव सपुत्रा शये । अशेत । पतिता । अध्यात्मं प्रथमं प्रकृतिं जघानेत्येतत्किं निमित्तमित्यत आह ॥ कारणस्येति । तत्किं प्रथमं कार्यनाशो न भवति । भवत्येवेत्याह ॥ स्यादेवेति ॥ तर्हि किं प्रकृतेः पूर्वनाशेनेत्यत आह ॥ अथापीति । परमेश्वरस्याज्ञानादिभिर्युद्ध प्रतिपादनेनाज्ञानादिकं तत्सम्बन्धीति प्रतीतिः स्यात् तद्वारणायोक्तवक्ष्यमाणतात्पर्यमाह ॥ एवमिति । प्रकृतेरज्ञानापेक्षयोत्तरत्वं कथमित्यत अह ॥ उत्तरत्वमिति । शक्तितोऽधिकत्वमिति शेषः । न तु कालापेक्षयानन्तरत्वमित्यर्थः । दो अवखण्डन इत्यतः प्रकृतिर्दानुः ॥ ९ ॥

अतिष्ठन्तीनाम् । अत्र काष्ठानां विशेषणद्वयमुक्तं तत्प्रकृतोपयोगितया व्याचष्टे ॥ अनन्तत्वादिति ॥ दिशामनंतत्वेन देवदत्तस्य तदभाव निमित्तागति निवृत्तिर्न भवतीत्यतस्तानैव तिष्ठन्तीत्युच्यन्ते । अतोऽनन्तत्वादेव तासां निविशन्तेस्मिन्निति निवेशनं गृहमन्तर्भावकं किंचिन्नास्तीत्यनिवेशना अप्यभिधीयन्ते । मृतस्य वृत्रस्य शरीरमतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितम् एवं नामस्थूलं यदनं ता दिशो व्याप्य स्थितमित्यद्भुतोक्तिः । तथा च प्रतिबन्धके निवृत्ते सत्यापो निण्यं नीत्यतिशयार्थे । णः सुखमेव ण्यम् । क्रियाविशेषणमेतत् । सुखेनैवानायासेनैव विचरन्ति व्यचरन् । दीर्घन्तम आशयदिन्द्र शत्रुरिति वाक्यं त्रेधा व्याचष्टे ॥ दीर्घमिति । स वृत्र एव दीर्घन्तम इत्येतावता दीर्घन्तमो महातामस इन्द्रशत्रुरेवमाशयदशेत पतित इत्येकोर्थः । वृत्रसंज्ञं तमो वेत्यनेनाध्यात्ममिन्द्र शत्रुरीश्वर शत्रुभूतं दीर्घं महद्वृत्रसंज्ञं तमोऽज्ञानमेवमाशयदिति द्वितीयः । दीर्घमंधमित्यादिना मृतोसाविन्द्र शत्रुर्वृत्रो दीर्घं पुनरावृत्तिरहितं तमोंधमाशयत् । अशूव्याप्तावित्यस्य स्वार्थेण्यन्त स्य रूपमेतत् । प्रापेति तृतीयः ॥ १०, ३७॥

## मन्त्रार्थमञ्जरी

अहन्नहिम् इत्युक्तमेव प्रपञ्च्यते (इन्द्रशत्रुः) वृत्रः । अयोद्धेव, न विद्यते योद्धा प्रतिभटो यस्यासावयोद्धा, तद्वदेव । दुर्मदः, दर्पोद्रिक्तः । महावीरम्, वीरतमम् । तुविबाधम्, तुवीनां महोच्चानां रिपूणां बाधकम् । ऋजीषम्, सोमस्य सुतस्य योंऽशोऽवशिष्यते सः 'ऋजीषः' 'वल्कः' इति चोच्यते, अत्र तु गौणी वृत्तिः स यथा दृढो भवति यथा दार्ढ्याद्धेतोर्ऋजीषाख्यं शत्रुम् । आ जुह्वे हि, आह्वयामास हि । (युद्धाय) इति शेषः । हिशब्दः किलार्थे, उक्तरूपमज्ञानमुक्तलक्षणं विष्णुमाह्वयामास हि– इति वा । कृताह्वानश्च वृत्रः अस्य, शक्रस्य । वधानाम्, प्रहाराणाम् । समृतिम्, सम्प्राप्तिम् । न अतारीत्, न तीर्णवान्, शक्रकृतप्रहारवञ्चनक्षमो नाभूत् । अथ वा अज्ञानम्– अस्य, विष्णोः । वधानाम् । (समृतिम्) सम्प्राप्तिम् । न अतारीत् । प्रहारपीडितः पतन्–

(मन्त्रार्थमञ्जरी)

इन्द्रशत्रुः, इन्द्र एव शत्रुः शातयिता यस्येतीन्द्रवध्यो वृत्रः। रुजानाः, रुजा युक्ताः, दुर्बला मानुषीः प्रजाः। सम् पिपिषे, चूर्णितवान्। यद्वा– (इन्द्रशत्रुः, ईश्वरशत्रुकम्, अत एव) ईश्वरेण भक्तेभ्यो निराकृतमज्ञानम्। रुजानाः, संसाररोगयुक्ताः, सृतिस्थाः प्रजाः। सम् पिपिषे, बबाधे॥ ६॥

अपात्, पादरहितः। अहस्तः, हस्तरहितः, संछिन्नपादबाहुररपि। वृत्रः। केवलेन देहेन– इन्द्रम्। अपृतन्यत्, युयोधैव। तदा स इन्द्रः अस्य। सानौ, गौण्या वृत्त्या– गिरेः सानुसदृशेऽत्यन्तस्थूले कण्ठदेशे। वज्रम्। अधि आ जघान, प्रहृतवान्, व्यसृजत्। अध्यात्मं तु– अपात् अहस्तः, प्रवृत्तिहेतुत्वसाम्येन पादहस्तशब्दिततर्कागमरहितः। वृत्रः, अज्ञानम् इन्द्रम्, ईश्वरम्। अपृतन्यत्, युयोध। परमेश्वरश्च– अस्य, अज्ञानस्य। सानौ, सानुवद्गुरुतरे स्वरूपे। वज्रम्, ज्ञानम्। अधि आ जघान, विष्णुः संयुध्यमानमज्ञानं ज्ञानवज्रेण प्रहृतवान् इति। स एवम् वृष्णः, वर्षितुः, इन्द्रस्य, विष्णोर्वा। प्रतिमानम्, प्रतिरूपम्, शत्रुमिति यावत्। बुभूषन्, भवितुमिच्छन्। वध्रिः कर्मणि (क्रिन्) रिप्रत्ययः, वधयोग्यः, यद्वा रूढ्या नीचो वृत्रासुरः, अज्ञानाख्यश्च। तेनेशेन पुरुत्रा, बहुधा, बहुषु स्थानेषु। व्यस्तः, निरस्तः। अशयत्, अशेत, अपतत्॥ ७॥

(अपाम्) नादेयानामुदकानाम् (रोद्धारम्) निरोधकत्वेन स्थितम्। अमुया, उत्तरस्यामृचि वक्ष्यमाणया स्वमात्रा सहैव शक्रेण हतम् शयानम्, पतितम्। (वृत्रम्) भिन्नम् नदम् न, नदशब्देन नदस्य तीरमुपलक्ष्यते भिन्नं नदस्य तीरमिव। अति, अतीत्यैव। आपः। मनः, मनसोऽपि पूर्वम्, वेगेनेति यावत्। रुहाणाः, आरुहाणाः, स्थलान्यारुहन्त्यः। यन्ति, प्रयान्ति। कास्ता आपः? वृत्रः। (पुरा), पूर्वस्मिन्काले याः चित्, यास्तु, अपः। महिना, स्वमहिम्ना। पूर्वपुत्रापेक्षया पूर्वस्मिन्स्थाने पर्यतिष्ठत्, परीत्य निरुध्यातिष्ठत्। किं च, (तत्सुतः) वृत्रस्य सुतः। अहिः (च) यासाम्– तासाम्, अपाम्। (गतिं तद्वदेवाभिरुन्धन्) इति शेषः। पत्सुतः शीः बभूव, पितुः पादतोऽनन्तरमेव शेता बभूव, 'पत्सुतः शीः' इति पादशब्दात्पञ्चम्यर्थे सप्तमी बहुवचनम्, पादशब्दस्य 'पद्दन्' इति पदादेशः, ततस्तसिः, सप्तम्यलोपश्च च्छान्दसः, तदुपपदाच्छेतेः क्विप्, 'पत्सुतःशीः' इति रूपम्, वृत्रो नदीद्वारेषु शिरोनिधायापां मार्गे पतितो गतिं न्यरुणत् अहिस्तु तमप्यतिक्रम्यापो यास्यन्तीति तत्पादतोऽनन्तरं शयित्वा न्यरुणत्' इति भावः। अध्यात्मं तु वृत्रोऽज्ञानम्, तत्पुत्रोऽत्र संशयः, 'पत्सुतःशीः' इत्यानन्तर्यमात्रमत्राभिप्रेतम्, अप्शब्देन च क्रियाः, योजना तु पूर्ववदेव॥ ८॥

**(मन्त्रार्थमञ्जरी)**

(यापि) वृत्रपुत्रा, बहुव्रीहिः वृत्रमाता। (दानुः) दनुः। नीचावयाः अभवत्, 'वयबन्धने', नीचे नीचस्थाने वयति बध्नातीति नीचावयाः, साभवत्, नीचस्थानेऽहेरप्यनन्तरमियं बन्धनमकार्षीदिति यावत्। अस्याः, दनोः। वधः, वधम्। इन्द्रः। अवः, अधस्तने काले, वृत्रवधात्पूर्वमेव। जभार, आहरत्, कृतवान्। प्रथमं दनोर्वधे को हेतुः ? उच्यते– सूः, सूत इति सूर्माता दनुः। सुतावनार्थम्– उत्तरा, सुतस्योपरिस्था। (आसीत्) बभूव। पुत्रः (तु) अधरः आसीत्। तस्मात् (इन्द्रः) (उपरि स्थितां तां दनुं निहत्यैवाधस्तनममुं वृत्रं जघान) इति शेषः। ततः दानुः, (दनुः) सहवत्सा धेनुः न, धेनुरिव सपुत्रा। शये, अशेत, पतिता। अध्यात्मं तु (या) वृत्रपुत्रा, अज्ञानादिदोषजननी। (दानुः) दनुः, 'दो अवखण्डने' खण्डयत्वहेतुना दनुनाम्नी प्रातिस्विकी प्रकृतिः। नीचावयाः, अज्ञजनबन्धिका। (अभवत्) आसीत्। तद्वधं पूर्वं कृत्वा पश्चादज्ञानादितत्कार्यं नाशितवान् (ईश्वरः), कारणीभूतप्रकृतेः सामर्थ्यातिशयेनोत्तर- त्वात्तादृशशक्तिवैधुर्याद- ज्ञानादेरुत्तराधरत्वं चास्तीति पूर्वं तन्नाशकारणं ज्ञेयम्, योजना तु प्रागिव॥ ९॥

मृतस्य वृत्रस्य शरीरम्। अतिष्ठन्तीनाम्, अपर्यवसितानाम्। अनिवेशनानाम्, निवेशनमन्तर्भावकम्, अनन्तत्वाद्धेतोस्तद्रहितानाम्। काष्ठानाम्, दिशाम्। मध्ये निहितम्। एवं नाम स्थूलम्, यत् 'अनन्ता दिशो व्याप्य स्थितम्' इत्यद्भुतोक्तिः। तदा च प्रतिबन्धके निवृत्ते सति आपः। निण्यम्, 'नि' इत्यतिशयार्थे, णं सुखमेव ण्यम्, क्रियाविशेषणमेतत्– सुखेनैव, अनायासेनैव। वि चरन्ति, व्यचरन्। दीर्घम् तमः, महातामसः। इन्द्रशत्रुः, (वृत्रः) आ अशयत् अशेत॥ १॥

इन्द्रशत्रुः, ईश्वरशत्रुः। दीर्घम्, महत्। तमः, अज्ञानम्। एवम्– आ अशयत् (अशेत)॥ २॥

मृतोऽसौ इन्द्रशत्रुः, वृत्रः। दीर्घम्, पुनरावृत्तिहीनम्। तमः, अन्धम्। आ अशयत्, 'अशू व्याप्तौ' इत्यस्य स्वार्थे ण्यन्तस्य रूपमेतत्, प्राप॥ ३॥ इत्यस्यान्त्यपादस्य त्रेधार्थो ध्येयः॥ १०॥ इति सप्तत्रिंशो वर्गः॥ ३७॥

## रूपावतारः

अयोध्येव। आजुह्व इति। ह्वेञो लिटि तदादेशतशब्दस्य 'लिटस्तझयोः....' (३।४।८१) इति एत्वे द्वित्वात् पूर्वं संप्रसारणे पश्चात् द्वित्वे उवङादेशबाधेन छान्दसे यणादेशे जुह्वे इति रूपम्। रुजाना इति। रोगवाचकरुक्शब्दात् युक्ता इत्यर्थे 'तद्धिताः' (४।१।७६) इति बहुवचनज्ञापिते

(रूपावतारः)

आनप्रत्यये कृते रुजाना इति रूपम्। भाष्ये चिरन्तनं सूत्रमर्थत उदाहृतमिति भावेनाह। पुंसोः पुल्लिङ्गयोरिति। नवनीतमित्यत्र णु स्तुतावित्यस्मात् 'ऋदोरप्' (३।३।५७) इत्यप्प्रत्यये गुणे अवादेशे 'णोनः' (६।१।६५) इति नत्वे नवशब्दो निष्पन्नो भवति। तत्र धातुस्वरेण धातुरन्तोदात्तः। ''अनुदात्तौ सुप्पितौ'' (३।१।४) इति प्रत्ययोऽनुदात्तः ततश्चोदात्तादनुदात्तस्य स्वरित इति नवशब्दः स्वरितान्तः। तस्य क्तान्तेन नीतशब्देन कर्मधारयः। ततश्च 'कर्मधारयेऽनिष्ठा' (६।२।४६) इति सूत्रेण अनिष्ठान्तस्य पूर्वपदस्य प्रकृतिस्वरत्वविधानेन नवनीतमिति कर्मधारयप्रातिपदिके पूर्वपदान्तस्य स्वरितत्वे विद्यमानेऽपि बहुव्रीहित्वाभावात् व्यभिचार इति शङ्कावारणाय पुंसोरिति समस्यमानपदयोर्विशेषणम्। ननु यवपालशब्दे पूर्वपदं स्वरितान्तम्। यवशब्दस्य युधातोः ''ऋदोरप्'' (३।३।५७) इति अपि निष्पन्नत्वात् अप्प्रत्ययस्य चानुदात्तत्वेन धातोरुदात्तत्वेन 'उदात्तानुदात्तस्य स्वरितः' (८।४।६६) इति स्वरितत्वस्य सूत्रप्राप्तत्वात्। न च यवानां पाल इति विगृह्य समासे समासान्तोदात्तत्वं भविष्यतीति वाच्यम्। 'गोतन्ति यवं पाले... ....' (६।२।७८) इति सूत्रेण यवशब्दस्य पालशब्दे परे आद्युदात्तत्वविधानेन यकारस्याकारस्योदात्तत्वात् वकारस्थाकारस्यानुदात्तत्वेन ''उदात्तानुदात्तस्य स्वरित (८।४।६६) इति स्वरितत्वविधानेन पूर्वपदान्तस्वरितत्वस्यावश्यं वक्तव्यत्वात्। एवं चात्र पूर्वपदान्तस्वरितत्वे विद्यमानेऽपि बहुव्रीहित्वाभावाद्व्यभिचार इति चेन्न। यत्र पूर्वपदान्तस्वरितत्वं तत्र बहुव्रीहित्वमिति व्याप्तेरौत्सर्गिकत्वात्। इन्द्रशत्रुशब्दस्य पूर्वपदान्तस्वरितत्वेन बहुव्रीहित्वं सेत्स्यतीत्यत्र ज्ञापकमाह। तथाचेति। लौकिकव्याकरणाभिज्ञानां बुध्यारोहाय सूत्रस्यार्थान्तरमाह। पूर्वपदेति। पूर्वान्तस्वरितपदं पूर्वपदप्रकृतिस्वरस्योपलक्षणम्। ततश्च पूर्वपदस्य प्रकृतिस्वरत्वं यत्र तत्र बहुव्रीहित्वं ज्ञातव्यमिति चिरन्तनसूत्रार्थः॥ ६॥

अपात्॥ पुरुत्रेति। पुरुशब्दात् 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (५।४।५६) इति त्राप्रत्यये पुरुत्रेति रूपम्॥ ७॥

नदंन॥ महिनेति॥ छान्दसे मकारलोपे महिनेति रूपम्। तसिरिति प्रत्यय एव नतु सप्तम्यादेश इति भावेनाह। सप्तम्यलोप इति॥ ८॥

नीचावया:॥ उत्तरवाक्येनेति। या वृत्रपुत्रा दानुः नीचावया अभवत् सा दानुः शय इति उत्तरार्धेन एकवाक्यतासिद्धय इत्यर्थः। उत्तरार्धस्य व्याख्यानमिति। उत्तरार्धस्थपदव्याख्यानमित्यर्थः। संबन्धस्तूत्तरत्रेति। नीचस्थान इत्यादिपूर्वभाष्यस्य 'वधं तस्या आहरदि'त्युत्तरभाष्येण संबन्ध

(रूपावतारः)

इत्यर्थः । वृत्रमातेति व्याख्यानं कथमिति । पुत्रशब्दस्य सुतार्थकत्वात् मातृवाचकतया कथं व्याख्यानमित्यर्थः । भाष्ये 'वृत्रः पुत्रोऽस्या' इति । नास्माभिर्वृत्रमातेत्यनेन पुत्रशब्दार्थ उक्तः । किं तु बहुव्रीहिलभ्यस्यान्यपदार्थस्य स्वरूपमुक्तमिति भावः । जभारेति । हृञः लिटि तिपि तस्य णलादेशो द्वित्वे वृद्धौ 'हृग्रहोर्भच्छन्दसि' (वा.सू. ३।१।८४) इति भत्वे जभारेति रूपम् । ऋच अध्यात्मार्थसूचनाय एकेन वाशब्देन भाव्यं तत् कथं प्रकृतिर्वा ईशिता वेति वाशब्दद्वयमित्यत आह । भिन्नवाक्यत्वादिति । प्रकृतिर्वा वृत्रमातेत्यस्य ईशिता वेत्यस्य भिन्नवाक्यत्वात् वाशब्दद्वयमित्यर्थः । न केवलं वृत्रमाता दनुः किन्तु प्रकृतिरध्यात्मवृत्रमातेति बाह्याध्यात्मयोजनयोरभेदं सूचयितुमेको वाशब्दः । न केवलमिन्द्रो वधं जभार किं तु ईशितेति बाह्याध्यात्मयोजनयोरर्थभेदं सूचयितुं द्वितीयवाशब्द इति भावः । दो अवखण्डन इत्यत इति । 'आदेच उपदेश' (६।१।४५) इति धातोरात्वे 'दाभाभ्यां नुः' इति नुप्रत्यये दानुरिति रूपम् ॥ ९ ॥

अतिष्ठन्तीनाम् ॥ अशू व्याप्तावित्यस्येति । ण्यन्तादेशो लङि तस्य तिपि शपि गुणे अयादेशे अशयदिति रूपम् ॥ १० ॥ ३७ ॥

## पदार्थप्रकाशिका

अयोद्धेवदुर्मद आहि जुह्वे । प्रपश्चत इति । वृत्रसामर्थ्यप्रकटनेन इत्यर्थः । तुविशब्दार्थो महोच्चानामिति । रिपूणामिति योग्यतया सम्बन्धः । सुतस्य । कण्डितस्य । ननु तर्हीदं कथं वृषम् । गुणजीवशब्दप्रवृत्तिरित्यत आह । अत्र त्विति । इन्द्रे ऋजीषशब्दस्य गौणीवृत्तिरित्यर्थः । गौणिवृत्तौ निमित्तभूतं मुख्यार्थनिष्ठगुणयोगमुपपादयति । स यथेत्यादिना । ऋजीषो यथेत्यर्थः । अध्यात्मपक्षं योजयति । उक्तरूपमिति । अयोद्धेवेत्यादिनोक्तातिदर्प(गुण)कमित्यर्थः । अज्ञानं कर्तृ । उक्तलक्षणमिति । महावीरत्वादिलक्षणमित्यर्थः । वधानाम् । वधसाधनानाम् । आध्यात्मं योजयति । अथापीति । नातारीदिति । विष्णुकृतप्रहारवञ्चनक्षमो नाभूदित्यर्थः । किंत्विति । नातारीदित्येव न किं त्वित्यर्थः । रुजा युक्ता इत्यादि । पूर्वं वृत्रकृतपीडाप्राप्तया रुजा रोगेण युक्ता अत एव दुर्बलाः । मानुषीः प्रजाः पतन्नपि संपिपेषे । यदा तदीतो तेहः प्रजजोपरि पतितस्तदातद्देहेनापि प्रजाश्च चूर्णिता इत्यर्थः । भक्तेभ्यो निराकृतमिति । स्वापरोक्षं दत्वा भक्तेभ्यो निष्कासितमित्यर्थः । अज्ञानम् । तदादिपापफलम् । इन्द्रः शत्रुर्यस्येति बहुव्रीहिः । इन्द्रस्यशत्रुरिति षष्ठीतत्पुरुषः । शातयिता । खण्डतायिता ।

(पदार्थप्रकाशिका)

बहुव्रीहिपरिग्रहे युक्तमिति । बहुव्रीहिपरिग्रहे साधिका षष्ठीतत्पुरुषग्रहणे बाधिका चेति युक्तिमित्यर्थः । इन्द्रेति प्रातिपदिकं स्वरितान्तमिति । इन्द्रशब्दस्य हन्प्रत्ययान्तस्य निपातितत्वेन नञित्यादिर्नित्यमिति सूत्रेण ञितिनिति च प्रत्यये परे प्रकृतेराद्युदात्ततया विहितत्वेन प्रकृते च रन् प्रत्ययस्य नित्यत्वात्तस्मिन्परे इदिधातोरादेरिकारस्योदात्तत्वे परस्य रन् प्रत्ययस्य अनुदात्तं पदमेकवर्ज्यं यत्रान्यः स्वरः उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वाऽवशिष्टः सर्वोच् अनुदात्तो भवतीत्युक्तत्वेनानुदात्तत्वे उदात्तानुदात्तस्य स्वरितः । उदात्तान्तरस्यानुदात्तस्य स्थाने स्वरितस्वरो भवतीत्युक्तत्वेन रन् प्रत्ययस्य स्वरितत्वादिन्द्रेति प्रातिपदिकं स्वरितांतमित्यर्थः । अतोपीति । स्वरितपूर्वपदान्तत्वादपीत्यर्थः । हिशब्दसूचितपूर्वोक्तयुक्तिसमुच्चायकोऽपिशब्दः । तथात्वेपीति । स्वरितपूर्वपदांतत्वेऽपीत्यर्थः । पुंसोः पुल्लिङ्गयोरिति । इदं च विशेषणं कन्यायाः प्रियः कन्याप्रियो मृदङ्गः धान्यस्य पतिर्धान्यपतिरित्यादितत्पुरुषे पूर्वपदान्तस्वरितत्वसत्वेऽपि बहुव्रीहिताया अभावेन व्यभिचारवारणाय । तथाहि । कन्याप्रिय इत्यत्र प्रीतौ चेति सूत्रेणातिशायितप्रीतौ गम्यमानायां प्रियशब्दे परतस्तत्पुरुषसमासे पूर्वपदप्रकृतिस्वरत्वं विहितम् । तथा धान्यपतिरित्यत्र पत्यावैश्वर्य इति सूत्रेणैश्वर्यवाचिपतिशब्दे परतस्तत्पुरुषसमासे पूर्वपदप्रकृतिस्वरत्वं विहितम् । कान्याधान्यशब्दौ च तिलपशक्यमर्त्यकाश्मर्येधान्यकन्याराजन्य-मनुष्याणामन्तरिति फिट् सूत्रेण स्वरितान्तौ । तथाच तत्रोक्तनियमस्य व्यभिचारे प्राप्ते पुंसोरित्युक्तम् । उक्तोदाहरणयोस्तु कन्याधान्यशब्दयोरपुंसत्वेन समस्यमानयोरुभयोरपि पुंस्त्वस्य विवक्षितस्याभावान्न व्यभिचार इत्यवधेयम् । चिरन्तनव्याकारणस्थमिति । महाव्याकरणसूत्रमिति स्वरविनिर्णय इत्यनुव्याख्यानोक्तिर्महाव्याकरणस्थमित्यर्थः । तथाच प्रकृते इन्द्रशत्रुशब्दयोरुभयोरपि पुल्लिङ्गत्वेन समस्यमानयोस्तयोर्मध्ये पूर्वपदस्य इन्द्रपदस्योक्तरीत्या स्वरितान्तत्वादयं समासो बहुव्रीहिरेवेति भावः । इन्द्रशत्रुरिति समासः स्वरितपूर्वपदान्तत्वाद्बहुव्रीहिरेवेत्यत्र शिक्षाकारीयं ज्ञापकमाह । तथाचेति । शिक्षाकल्पादिषडङ्गान्तर्गतशिक्षारूपग्रन्थकार इत्यर्थः । यथेन्द्रशत्रुरिति । एको मन्त्रः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हि नस्तीति पूर्वमुक्ता स्वरवर्णहीनः प्रयुक्तो मन्त्रो वज्रवद्धिंसको यजमानं हिनस्तीत्यत्र पुराकल्पसिद्धमु-दाहरणमुच्यते । यथेन्द्रशत्रुः स्वरतोपराधादिति । इन्द्रशत्रुरिति मन्त्रो यथा स्वरतोजातादपराधित्यर्थः । तथाहि । त्वष्टुः पुत्रो विश्वरूपः शक्रेण हतः स हतपुत्रस्त्वष्टा इन्द्रस्य हन्तारं पुत्रं लिप्सुः तदर्थं सोमयागमनुतिष्ठन् भागलिप्सुमपीन्द्रं नाजुहाव । अथेन्द्रः स्वयमेवागत्य सोमरसं पपौ । त्वष्टा सोमपात्रेऽवशिष्टं सोमरसम् इन्द्रशातयिता पुत्रो भूयादित्याशंसमानः

(पदार्थप्रकाशिका)

स्वाहेन्द्रशत्रुर्वर्धस्वेति मन्त्रेण जुहाव तत्रेन्द्रशत्रुरिति शब्दो वस्तुगत्या बहुव्रीहित्वेन स्वरितस्वरोपेते स्वाभिप्रेतफलाय त्वष्ट्रा षष्ठीतत्पुरुषस्वरस्योदात्ताख्यस्य ऊहः कर्तव्यस्तं विहाय यथास्थितो बहुव्रीहौ यः स्वरितस्वरः स एव प्रयुक्तः । तेन स्वरतो जातापराधेन तत्रोत्पन्नस्य वृत्रासुरस्य शक्र एव शातयिताऽभूदिति त्वष्टा हतपुत्र इत्यादि तैत्तरीयश्रुतिसिद्धमेतदिति द्रष्टव्यम् ।

अत्र हि यः स्वरितपूर्वपदान्तः स बहुव्रीहिरिति व्याप्तिवत् यो बहुव्रीहिः स स्वरितपूर्वपदान्त इत्यपि व्याप्तिरेतत्सूत्रार्थतयाभिप्रेता । प्रकृते समासनिर्णयार्थम् उदाहृतत्वादाद्याव्याप्तिरभिप्रेतेति गम्यते । तथास्य सूत्रस्य स्वरविनिर्णयार्थतायाः इति स्वरविनिर्णयव्याख्यानोक्तत्वात् द्वितीयापि । एवं च यद्यपि प्रकृतसङ्गतत्वादाद्यैव व्याप्तिः विचार्या तथापि द्वितीयाया अप्येतत्सूत्रार्थतयाभिप्रेतत्वस्योक्तत्वेन साऽपि विचार्यते । तथाहि । यो बहुव्रीहिः सस्वरितपूर्वपदान्त इति द्वितीयाव्याप्तिर्न सम्भवति । ब्रह्मचारिपरिस्पन्दो यस्येति ब्रह्मचारिपरिस्यन्द इति बहुव्रीहि स्वरितपूर्वपदान्तताभावेन व्यभिचारात् । पूर्वपदभूतब्रह्मचारिपदस्य कृदुत्तरपदप्रकृतिस्वराणामन्तोदात्तत्वात् । तथा वृत्रपुत्रेत्यत्रापि व्यभिचारः । तथाहि । नीचावया इति ऋचि वृत्रः पुत्रो यस्याः सा वृत्रपुत्रेति बहुव्रीहेः स्वरितपूर्वपदान्तत्वाभावात् । वृणीतेः त्रप्रत्यये सति निष्पन्नो वृत्रशब्दः तथाच त्रप्रत्ययान्तस्य पूर्वस्य वृत्रपदस्यान्तोदात्तत्वात् तथाहि वैदिकत्रकारे उदात्तस्वरमेव अतो व्यभिचार इत्यत आह । पूर्वपदप्रकृतिस्वरत्वस्येदमुपलक्षणमितीति । इन्द्रशब्दस्य स्यारितान्तत्वेन प्रकृतत्वात्तदनुसारेणैव स्वरितान्त इत्युक्तम् । वस्तुतस्तु स्वरितान्त इत्येतत्तु पूर्वपादप्रकृतिस्वरत्वस्योपलक्षकमभिप्रेतमतो न कश्चिदुक्तस्थले व्यभिचाराख्यो दोष इत्यर्थः । तथाच यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपद इत्येव सामान्यतो व्याप्तिरभिप्रेता न तु स्वरित पूर्वपदान्त इति । तथाच ब्रह्मचारिपरिस्पन्द इत्यत्र वृत्रपुत्रेत्यत्र चान्तोदान्तत्वरूपप्रकृतिस्वरस्य सत्वान्न व्यभिचारः । प्रकृते चेन्द्रशब्दसमासकालेऽपि स्वरितान्तत्वात्प्रकृतिस्वरत्वमविकलमेवेति भावः । उक्तरीत्या सामान्यव्याप्तिरेवाभिप्रेतेत्यत्रार्थे पाणिनिसंमतिमाह । यथा आह पाणिनिरिति । सूत्रार्थस्त्वित्थम् । समासस्येति सूत्रेण सामान्यतः समासमात्रस्यान्त उदात्तो भवति । तस्य चोदात्तत्वेऽनुदात्तं पदमेकवर्ज्यमितीतरस्य सर्वस्यानुदात्तत्वं यद्विहितं तस्यायमपवादः कथ्यते । बहुव्रीहौ प्रकृत्या पूर्वपदमिति । अत्र पूर्वपदग्रहणं पूर्वपदस्वरे उदात्ते स्वरितेवा वर्तते तथाच समासविशेषे बहुव्रीहौ पूर्वपदं पूर्वपदस्य यः स्वरः स प्रकृत्या भवति । स्वभावेनैवावतिष्ठते न विकारमनुदात्तत्वमापद्यते । समासेति सूत्रविहिते सामान्यतः समासस्यान्ते उदात्ते हि सति अनुदात्तं पदमेकवर्ज्यमिति सूत्रेण यत्रान्यः स्वरः उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा परिशिष्टः सर्वो अच् अनुदात्तो

(पदार्थप्रकाशिका)

भवतीत्युक्तत्वेन अनुदात्तस्वरापत्तेरतस्तस्यायमपवादो न बहुव्रीहौ समासस्यान्त उदात्तो भवति। किं प्रकृत्यैवेति तथाच द्वितीयाव्याप्तिरुपपन्नेति भावः। नन्वथाऽपि यः स्वरितपूर्वपदान्तः स बहुव्रीहिरित्याद्यव्याप्तौ अस्तु स्वरितपूर्वपदान्तत्वबहुव्रीहिता मास्तु किंतु षष्ठीतत्पुरुष एवोस्त्वित्यप्रयोजकता विपक्षे बाधकाभावादित्याशङ्कायां हेतूच्छित्तिरूपविवक्षे बाधकं तर्कमाह। अन्यथेति। यदिन्द्रशत्रुरित्ययं बहुव्रीहिर्न स्यात् तदा स्वरितपूर्वपदान्तता न स्यात्। पूर्वपदान्तस्वरस्य स्वरितता न स्यादिति यावत्। किंतु समासस्येति सूत्रेण समासस्यान्त उदात्तो भवतीति सामान्यतः समासमात्रस्यान्तोदात्तायाः विहितत्वेन शत्रुरित्यत्रत्यस्वरस्योदात्तत्वे अनुदात्तं पदमेकवर्ज्यमिति सूत्रेण इन्द्रशब्देऽप्यनुदात्तस्वरापत्तेः। इन्द्रशब्दे स्वरितस्वरस्य शत्रुशब्दे च प्रचयस्वरस्य वैदिकैः पठ्यमानत्वेन तत्प्रसिद्धिविरोधापत्तेरतो हेतूच्छित्तिरूप बाधकसद्भावान्नाप्रयोजकताशङ्केति प्रकृताऽपि व्याप्तिः समीचीनेति भावः इत्येव साम्प्रदायिकं एतत्प्रघट्टिकार्थः।

नन्वथापि नेयं व्याप्तिर्युक्ता आर्यब्राह्मण इति कर्मधारयसमासे व्यभिचारापत्तेः। ऋगताविति धातोः ऋहलोर्ण्यदिति ण्यत्प्रत्यये वृद्धौ च सत्यामार्य इति निष्पन्नत्वेन आर्य शब्दस्य ण्यदन्तत्वेन तित्स्वरितमिति सूत्रेण सूत्रस्वरितान्ततया प्रकृतिस्वरोपेतवूर्वपदत्वेऽपि बहुव्रीहित्वाभावादिति चेत्। न। अत्र व्याप्तौ सन्दिग्धसमासत्वे सतीति विशेषणस्याभिप्रेतत्वात्। तथा सन्दिग्धसमासत्वे यः प्रकृतिस्वरोपेतपूर्वपदः स बहुव्रीहिरिति व्याप्तेर्न व्यभिचारः। आर्यब्राह्मण इत्यादौ कर्मधारयत्वस्य निर्णीतत्वाद्विशेषणभावेन तद्विशिष्टव्याप्यस्यैवाभावान्न तत्र व्यभिचारोद्भावनं सङ्गतं प्रकृतेचेन्द्रशत्रु-रित्यत्र समाससंदेहसद्भावान्न विशेषणासिद्धिरिति सुधोक्तरीत्या द्रष्टव्यम्। यथोक्तं सुधायाम्। अपि च सन्देहे सति स्वरेण समासनिर्णयार्थमिदमुच्यत इत्याद्युक्त्वा तथाचासन्दिग्धे व्यभिचारचोदनमसङ्गतमितीति॥ ६॥

अपादहस्तो अपृतन्यदिन्द्रम्। अपृतन्यदित्यस्य योधेत्यर्थमुपपादयति। युध्यतिकर्मस्विति। युध्यर्थकेषु धातुष्वित्यर्थः। पृतन्यतेरिति शेषः। अत्यन्तस्थूल इति वृत्तिनिमित्तगुणोक्तिः। अपादहस्तो वृत्र इति पदद्वयमनूद्य तर्कागमाभ्यां रहितं तम इति क्रमेण व्याख्यानम्। तर्कागमाभ्याम् अनुकूलाभ्यां समीचीनतर्कागमानुकूल्यरहितमिति यावदित्यर्थः। तर्कागमयोः पादहस्तशब्द-प्रतिपाद्यत्वं गौण्यावृत्येत्यभिप्रेत्य उक्तम् प्रवृत्तिसाधनत्वादिति। पादहस्तयोर्गमनादा-नरूपप्रवृत्तिसाधनत्वात्। सत्तर्कागमयोरपि ईश्वरे मनः प्रवृत्तिसाधनत्वादित्यर्थः। उरुतरे उत्कृष्टे। अत्रापि गौणीवृत्तिः। तदेव विवृणोति। विष्णुरिति। मानवज्रेणेति। प्रमाणाख्यवज्रेणेत्यर्थः। स

(पदार्थप्रकाशिका)

वृत्रः । एवम् । अपादहस्तोऽपीत्यर्थः । कर्मणीति । वधधातोः कर्मणि रिप्रत्यये वध्रीति रूपम् । रूढ्येति । वध्रिशब्दस्य नीचनामसु पाठादिति भावः । ईशेन व्यस्तो निरस्तः सन् बहुषु स्थानेष्वशयदित्यन्वयः । वृत्रदेहो बहुस्थानानि व्याप्य पतित इत्यर्थः । अज्ञानाख्यश्च वृत्रभक्तेभ्यो व्यस्तः सन् बहुस्थानेषु तमोयोग्येषु अशयत् । द्विषन्तः पापकृत्यामिति श्रुतेरित्यर्थो द्रष्टव्यः ॥ ७ ॥

नदं न भिन्नममुया शयानम् । शयानमेनमतीत्यापोऽतिवेगेन गता इत्युच्यते । तदयुक्तम् । अपां वेगेन समस्तातिक्रमेण गमनस्वभावानां विशिष्यैतदिति क्रमेणोक्तेरसङ्गतत्वादि तु अपां रोद्धारमित्येतद्व्याख्येयस्य पदस्य ऋच्यदर्शनाच्चात आह । अत्रेत्यादि । सङ्घटनार्थं सङ्गत्यर्थम् । तस्य नदीद्वारनिरोधकतया स्थितत्वात्सर्वातिक्रमेण मनः स्वभावानामपि तमतिक्रम्य गमनशक्तिर्नाभूत् । तद्धनेन च साऽभूदिति नासङ्गतमित्याहुः । वस्तुतस्तु याश्चिद्वृत्रो महिनापर्यतिष्ठदित्यादिकथासङ्गत्यर्थमित्यर्थः । एतच्चोत्तरत्र स्पष्टीकरिष्यति । नादधानां नदीसम्बन्धिनाम् । रोद्धारं द्वारनिरोद्धारम् । वक्ष्यमाणयेति । वृत्रपुत्रदानुरिति वक्ष्यमाणयेत्यर्थः । वृत्रम् अतीत्येति सम्बन्धः । तत्र दृष्टान्तो भिन्नमित्यादि । तत्तीरं तत्सम्बन्धितीरम् । भिन्नं विदारितम् । स्थलान्यारोहन्त्य इति । उत्तरोत्तरस्थलेषु प्रवाहवत्य इत्यर्थः । किं चेति । कास्ता आप इति शङ्कायां यास्तत्पुत्रेणापि निरुद्धा इत्युच्यत इत्यर्थः । पादतोनन्तरं शेतेत्यर्थः । पत्सुतः शीरित्यनेन कथं लब्ध इत्यतस्तदुपपादयति । पादशब्दादिति । पत्स्विति सप्तमीबहुवचनं पादादिति पञ्चम्यर्थ इत्यर्थः । तर्हि पादेष्विति स्यात् पत्स्विति कथमित्यत आह । पादशब्दस्य चेति । पद्दन्नित्यादिनेति । पदन्नोमासुहृन्निशसन्यूषन्दोषन् यकन्शकन्उदन्नासंछस्पतिभूषु पाददन्तनासिकामासहृदयनिशा असृज यूष दोष यकृत् शकृत् उदक आस्य इत्येतेषां पदादय आदेशाः क्रमात्स्युरिति सूत्रार्थः । तथाच पत्स्वित्युपपन्नमिति भावः । ततस्तसिरिति । सप्तमीबहुवचनान्तात्पदिति प्रादिपदिकात्तसिप्रत्यये इकारलोपे सस्य रुत्वे विसर्गे च सति पत्स्विति युक्तमिति भावः ।

ननु समासप्रत्यययोरिति सूत्रेण समासे प्रत्यये च परे पूर्वं विभक्तिलोपस्य विहितत्वेन तसिप्रत्यये परे पत्स्विति सप्तमी विभक्तिलोपः स्यात् तथाच पत् पत्तः इति स्यादित्यत आह । सप्तम्यलोप इति । सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनात् इति भावः । तदुपपदादिति । पत्सुत इत्युपपदात् शीङ् स्वप्न इत्यस्माद्धातोः क्विप्प्रत्यये तस्य लोपे पत्सुतःशीरिति भवतीत्यर्थः । कित्वाद्गुणाभावः । अन्यथा पत्सुतःशे इति स्यादिति ज्ञातव्यम् । ननु तर्हि भाष्ये अनन्तरमिति कस्य व्याख्यानमित्यत आह ।

(पदार्थप्रकाशिका)

अनन्तरमितीति । सामर्थ्यं योग्यता तत्सम्भवार्थमित्यर्थः । अनन्तरमित्यनुक्तौ पादतः शेतेत्यर्थासम्भवः प्राप्नोति अतोऽनन्तरमित्यद्ध्याहृतेन पादत इत्यस्य सम्बन्धो दर्शितः । ततश्च पादतोऽनन्तरं शेते इति योग्यतासम्पत्त्या पदानां सम्यगर्थप्रतीतिजनकत्वं प्राप्तमिति भावः ।

अत्रापां रोद्धरित्यिदिकं कथासङ्घटनार्थमित्युक्तं तद्दर्शयति । वृत्र इत्यादिना । अपां गमनमार्गे पतितोऽपां गतिं निरुणद्धीत्यन्वयः । तमप्यतिक्रम्येति । स्वपितरं वृत्रमप्यतिक्रम्य तत् कृतं प्रतिबन्धमवगणय्य तद्देहोपर्येवेति यावदित्यर्थः । इतीति । इति विश्वासेनेत्यर्थः । शायित्वा शयनं कृत्वा । निरुणद्धि अपां गतिमिति वर्तते । तथाच पूर्वं वृत्रस्यापां रोद्धारमिति अब्मार्गनिरोधकत्वाकथने पितुः पादतोऽनन्तरं शेताहिरपां मार्गं निरुणद्धीति न सङ्गतं स्यादतः एतत्कथासङ्घटनार्थं पूर्वमपां रोद्धारमित्यादिकमुक्तमिति कथासङ्घटनं द्रष्टव्यम् । तात्पर्यमाहेति । ऋक्तापर्यमात्रमाहेत्यर्थः । तम इतीति । वृत्रशब्दवाच्यस्य तमसोऽज्ञानस्य पुत्रः संशयो अहिरित्युच्यत इत्यर्थः । पदयोजनात्विति । अध्यात्मविषये पदानां योजनाबाह्यवदेव तात्पर्यं तूक्तरीत्येत्यर्थः । ननु पदयोजनापि नोपपद्यते वृत्रस्याज्ञानस्यपादतोऽनन्तरम् अहिः संशयः शेता बभूवेत्यर्थस्याज्ञाने पादाभावेन संशये शयनाभावेनासम्भवात् अत आह । पत्सुतः शीरित्यानन्तर्यमात्रपरमिति । तत्वविषयकाज्ञाने सति पश्चात्संशयो भवतीति संशयस्याज्ञानानन्तर्य एव तात्पर्यं न तु पादतोऽनन्तरं शयनरूपेऽर्थ इत्यर्थः ॥ ८ ॥

नीचावया अभवद् वृत्रपुत्र । उत्तरवाक्येनेति । नीचावया अभवदिति पूर्ववाक्यस्य इन्द्रो अस्या इत्युत्तरवाक्येनैकवाक्यतासिद्धय इत्यर्थः । तथाच या सा प्रसिद्धा वृत्रपुत्रा नीचावया अभवत् । इन्द्रो अस्या वधं जभारेत्येकवाक्यता द्रष्टव्या । उत्तरार्धस्थस्येति । उत्तरा सूरित्युत्तरार्धे दानुः शय इति दानुशब्दस्य सत्वात् इत्यर्थः । सम्बन्धस्तूत्रत्रेति । नीचस्थाने बन्धनं यापि च या करोतिं दानुर्वृत्रमाता दनुः सेत्यस्य वृत्रः पुत्रोऽस्या इत्युत्तरत्र सम्बन्धो द्रष्टव्यः । वृत्रो ह्यभूदनुज इत्यर्थे व्यवहितत्वात्सम्बन्धप्रदर्शनमिति ज्ञातव्यम् । दनुजो दनुनाम्न्यां स्त्रियां जातः । नन्वस्य दनुजत्वे दैत्यत्वप्रसिद्धिविरोधः ।

दितिपुत्रत्वं हि दैत्यत्वमित्यत आह । दैत्यत्वं चेति । तामसत्वात् तमोयोग्यत्वादेव न तु दितिपुत्रत्वादित्यर्थः । दीर्घमिति । तमोयोग्यानां च पापात्मत्वस्य सुप्रसिद्धत्वादिति भावः । वैष्णवः पुण्यात्मा प्रसिद्ध इति । अहं हरे तवपादैकमूलदासानुदासो भवितास्मि भूयः । मनः स्मरेतात्मपतेर्गुणांस्तु गृणीतवाक्कर्म करोतु कायः । अजातपक्षा इव मातरं खगास्तन्यं यथा वत्सतराः

(पदार्थप्रकाशिका)

क्षुधार्ताः । प्रियं प्रियेवाध्युषितं प्रि त्वां मनोरविन्दाक्ष दिदृक्षते मे इति भागवते वृत्रवचनाद्विष्णुभक्तः पुण्यात्मा सज्जीवः प्रसिद्धः । तथाहि । चित्रकेतुनामको राजा सङ्कर्षणानुग्रहेण विद्याधरत्वं प्राप्य गगने चरन् पार्वतीशापात् त्वष्टुर्दक्षिणाग्नौ वृत्रनामकः सन् जज्ञ इति षष्ठस्कन्धे स्पष्टम् । अधस्तने काल इति । एष्यत्कालस्योपरितनकालत्वप्रसिद्धेस्तदपेक्षया अर्वाक्तनः पृष्टतो विद्यमानः अतीतः पूर्वतन इति यावत् । यः काल स अधस्तनकाल इत्युच्यत इत्यर्थः । तदभिप्रायमाह । वृत्रवधादिति । वृत्रवधकालापेक्षया पूर्वकाल इति अर्थः । वधो वधमिति । विभक्तिव्यत्यय इति भावः । तमो हीतीति । तमःशब्दवाच्यमज्ञानं तमोगुणात्मकायाः प्रकृतेः सकाशादभूदित्येतत्तु हि प्रसिद्धं प्रमादमोहौ तमसो भवतोऽज्ञानमेव चेति गीतावचनादिति भाष्यार्थः ।

अध्यात्मपक्षे योजनासूचनार्थमेकेनैव वाशब्देनालं वाशब्दद्वयं तु व्यर्थमत आह । भिन्नवाक्यत्वादिति । तथाचाध्यात्मं प्रकृतिर्वृत्रमाता तमोहि तस्या अभूदिति पदार्थकथनपरमेकं वाक्यं तां जघानोशितेति वाक्यार्थकथनपरमपरं वाक्यमित्येवं भिन्नवाक्यत्वाद्वाशब्दद्वयं युक्तमित्यर्थः । तर्हीति । प्रकृत्यज्ञानादीनां प्रातिस्विकत्वाभावाभिप्रायेणेयं शङ्का । तथाचाज्ञानादीनां सर्वत्र स्तितानामेकत्वेनैकस्मिन्पुरुषे तेष्वीश्वरेण नाशितेषु सत्सु तस्य मुक्तौ सर्वमुक्त्यापत्या इदानीं पुरुषेषु संसारोपलम्भो न स्यात् । न चेदं युक्तम् । इदानीमपि पुरुषेषु संसारस्योपलभ्यमानत्वात् अतः प्रकृत्यज्ञानादिकं न नाशितमेवेतीन्द्रो अस्या अववधर्जभारेतीत्येतद्वाक्यं न युक्तमित्यर्थः । तमश्चेत्यत्रत्यश्चशब्दः प्रातिस्विकीत्यनेन सम्बध्यत इत्यभिप्रेत्य तदर्थमाह । न केवलमनुस्यूतेति । सर्वत्रानुगता एकैवेत्यर्थः । न भवतीत्यनन्तरम् इति शङ्कायामिति शेषः । तर्हीति । यदि कारणनाशात्पूर्वमपि कार्यनाशो अङ्गीक्रियत इत्यर्थः । अथापीतीति । यदादौ कार्यनाशो भवति । तदा कार्यस्य न निःशेष नाशः किन्तु कार्याकारस्यैव । कार्याकारनाशेपि कारणात्मनावस्थान सद्भावात् । यदाचादौ कारणनाशस्तदा कार्यस्य निःशेषनाश एव भवत्यतः प्रकृतेऽज्ञानादेर्निःशेषनाशं सूचयितुं पूर्वप्रकृतेर्नाशवचनमिति भावः ।

एवं भक्तानिति भाष्यं प्रकृतासङ्गतरव्याख्यानरूपत्वाभावादतोऽवतारयति । परमेश्वरस्येत्यादिना । तत्सम्बन्धीति । परमेश्वरसम्बन्धीत्यर्थः । अन्यथा परकीयैरज्ञानादिभिः परमेश्वरस्य युद्धोक्त्यसम्भवादिति भावः । एवमितीति । भक्ताननुजग्राहेत्युक्त्या अज्ञानादिकं भक्तसम्बन्धि तच्च तेषां मनसि ज्ञानादिकमुत्पाद्य नाशयामासेत्युक्तं भवति । उत्तरत्वं कथमिति । अज्ञानस्य

(पदार्थप्रकाशिका)

तमोगुणात्मक प्रकृतिकारणकत्वेनाज्ञानापेक्षया प्रकृतेः पूर्वकालीनत्वरूपमुत्तरत्वं कथमित्यर्थः । शक्तित इति । मूलकारणत्वादिति भावः । ननु प्रकृतेः कथं दानुशब्दवाच्यत्वमित्यत आह । दो अवखण्डनमित्यत इति । अवखण्डनं नाशनम् । दोऽवखण्डनेऽस्मात् दाभाभ्यांनुरित्युणादिसूत्रेण नुप्रत्यये निर्वचनस्य दोकारस्याकारे सति दानुरिति रूपम् । दोऽवखण्डने भादीप्तावित्याभ्यां धातुभ्यां नु प्रत्ययो भवतीत्युणादिसूत्रार्थः । दानुर्भानुरित्युदाहरणं तथाच तमोगुणात्मिका प्रकृतिः समीचीनज्ञानादिखण्डनकर्तृत्वाद्दानुरित्युच्यत इत्यर्थः ॥ ९ ॥

अतिष्ठन्तीनामनिवेशनानाम् । प्रकृतेति । काष्ठानां मध्ये निहितशरीरमित्येतदुपयोगितयेत्यर्थः । तिष्ठन्तीनामित्यस्य ष्ठागति निवृत्ताविति धातुनिष्पन्नत्वेन तदर्थं दर्शयन्नेवातिष्ठन्तीनामित्येतदपि व्याख्याति । देवदत्तस्येत्यादिना । यथा देवदत्तस्य कुड्यादिप्रतिबन्धके सति मार्गाभावनिमित्ता गतिनिवृत्तिर्भवति । तथा दिगभावनिमित्ता गतिनिवृत्तिः न भवतीत्यर्थः । कुत इत्यत उक्तं दिशामनन्तत्वेनेति । तासाम् दिशाम् । नास्तीति । किंतु दिश एव सर्वान्तर्भावका इत्यर्थः । अतिष्ठन्तीनामनिवेशनानामिति विशेषणद्वयं प्रकृतोपयोगितया व्याचष्ट इत्युक्तम् । तदुपयोगिप्रकारं दर्शयति । एवं नामेति । अद्भुतोक्तिः आश्चर्योक्तिः । तथाचेति । वृत्रशरीरस्य दिक्षुपतनानन्तरमित्यर्थः । सुखमेवेति । णशब्दात्स्वार्थे तद्धितयत्प्रत्यये तकारलोपे यस्येति चेति भसंज्ञकस्य णकारस्थस्याकारस्य लोपे ण्यमिति भवति । तथचातिशयेन ण्यं निण्यमित्यर्थः । स एव दीर्घतम इत्यन्वयमङ्गीकृत्येदमेकं वाक्यमित्याह । स वृत्र एवेति । अज्ञानमेवमशयदिति । अशयत् पतितम् । नष्टमित्यर्थः । अशयदित्यस्य प्रापेति व्याख्यानमुपपादयति । अशूव्यापारस्येति ण्यन्तस्येति णिजन्तस्येत्यर्थः । अत्र उकार अनुबन्धार्थः । अशु इत्येव धातुः । अस्मात् लङि तस्य तिङि सति इपो लोपे अश् इति स्थिते कर्तरि शपि अकारं विहाय ण्यंतस्य लोपे अश् अत् इति जाते पश्चात्स्वार्थे णिच् प्रत्यये इकारं विहाय णकारचकारयोर्लोपे अश् इ अत् इति जाते णित्वादिवृद्धौ आश् इ आशि अत् इति जाते गुणे अयादेशे च सति आशय् अत् आशयदिति रूपमिति भावः ॥ १०-३७ ॥

## पदार्थदीपिका

महावीरमिति ॥ महांश्चासौ वीरश्च इति महावीरः । आन्महत इत्यात्वम् इति भावः । तुविबाधमिति ॥ बाधृ विलोडने तुवान् बाधत इति तुविबाधः । पचाद्यच् । आजुह्वेहीति ॥ ह्वेञ स्पर्धायां शब्दे च । अभ्यासस्य चेति संप्रसारणम् । उवङ् आदेशाभावः छान्दसः । यद्वा छन्दस्युभयथा इति सार्वधातुकसंज्ञायां ''हुश्नुवोः सार्वधातुके'' इति यणादेशः । अत्र च लक्षण प्रतिपदोक्त

(पदार्थदीपिका)

परिभाषा लक्ष्यानुरोधात् नाश्रीयते। इतरथा हि आजुह्वान इत्यादिषु यणादेशो न स्यात्। नचैवं सति सातयं हुवेवामित्यादावपि तथा स्यादिति वाच्यं, अनेकाचृत्वाभावात्। अनेकाच इति हि तत्र वर्तते इति ध्येयम्। रुजानाः इति ॥ रुजेः व्यत्ययेन श्नानच् तुदादिभ्यः शः। नुमभावः छान्दस इति भावः। पिपिष इति ॥ पिष्लृ संचूर्णने व्यत्ययेन लडिति ज्ञेयम्। चिरन्तनव्याकरणस्थमिति। ननु आर्यश्चासौ ब्राह्मणश्च आर्यब्राह्मणः इति कर्मधारये आर्यशब्दस्य ऋहलोर्ण्यत् इति लक्षणप्राप्त ण्यप्रत्ययान्तत्वेन निस्वरितमिति स्वरितान्तत्वात् तत्र सत्यपि पूर्वपदान्तस्वरितत्वे बहुव्रीहित्वाभावात् तत्र व्यभिचारित्वाभावात् नेदं लक्षणं निर्णायकमिति चेन्न, चिरन्तनव्याकरणस्यास्य सूत्रस्य सामान्यलक्षणतया तस्थविशेषलक्षणविषये व्यभिचारचोदनस्य सांप्रदायिकत्वात् कर्मण्यणित्यादेरपि आतोनुपसर्गे कः इत्यादि विशेष विषयो गोदः कबलदा इत्यादौ व्यभिचारेण लक्षणत्वप्रसंगादिति भावः ॥

व्यभिचारशंकाशून्यं प्रसिद्धव्याकरणानुसारि सूत्रस्य अर्थान्तरमाह। पूर्वपदप्रकृतिस्वरत्वस्येति ॥ अत्र बहुव्रीहाविति शेषः। तथा च बहुव्रीहौ पूर्वपदप्रकृतिस्वरो भवतीति अस्य सूत्रस्य अर्थः। अयं चार्थः न शक्यः, किन्तु लक्ष्य इत्यभिप्रेत्य उपलक्षणमित्युक्तम्। ततश्च अस्य सूत्रस्य शक्त्या तदप्रतिपादकत्वेपि लक्षणया एतदर्थप्रतिपादकत्वं उक्तं भवति। न च सूत्रस्य यथास्थितार्थकत्वे स्वरेण समासनिश्चायकतया अस्य प्रकृतोपयोगेपि द्वितीयापक्ष समासेन स्वरनिश्चायकत्वापत्या न अस्य प्रकृतोपयोग इति वाच्यं, बहुव्रीहिनिमित्तक पूर्वपदप्रकृतिस्वरत्वं विदधताप्यनेन पूर्वपदप्रकृतिस्वरेण कार्येण बहुव्रीहित्वरूपनिमित्तनिश्चयाभ्यनुज्ञानेन प्रकृतोपयोगसम्भवात् व्यभिचार इति भावः। नत्वैवमपि आर्यब्राह्मणमित्यादाविव सत्यपि पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वाभावात् व्यभिचार इति वाच्यम्, तथा सति बहुव्रिहौ प्रकृत्या पूर्वपदमिति प्रसिद्धव्याकरणेप्येवं निमित्तनैमित्तिक भावाश्रयणात् तत्रपि व्यभिचारस्य समानत्वेन विशेषतोऽस्मान् प्रत्येव पर्यनुयोगस्य अयुक्तत्वात्। तत्र यदि सामान्यविशेषभावादिना व्यभिचारशङ्का समाधानमिति मनुषे, तर्हि प्रकृतेपि नैव समाधानसम्भवात्, न व्यभिचारः तदेतदाह यथा पाणिनिरिति। उपलक्षणमेतत्। यदि पूर्वपदप्रकृतिस्वरत्वं तर्हि बहुव्रीहित्वमिति वदता भाष्यकृतापि पूर्वपदप्रकृति स्वरत्वेन बहुव्रीहित्व निश्चयस्य अभ्युपेतत्वात् तस्यापि इदं दूषणं समानमिति द्रष्टव्यम्।

अङ्गीकृत्य च व्यभिचारं एतत्समाधानमुक्तम् वस्तुतस्तु विशेषनिर्णायकाभावेन संदेहप्रसक्तिस्थले एव निर्णयार्थं प्रवृत्तसूत्राणां प्रकारान्तरेण असन्दिग्धव्यभिचारोद्भावनमेव

(पदार्थदीपिका)

असांप्रदायिकत्वमेव तत्वमिति न किंचिदेतत्। अन्यथेति ॥ इन्द्रस्य शत्रुरिति षष्ठीतत्पुरुषाभ्युपगम इत्यर्थः। समासान्तेति ॥ समासान्तेति तत्पुरुषे समासान्तोदात्तता विधानादिति भावः ॥ ६ ॥

अपात् ॥ बहुव्रीहौ पादशब्दस्य अत्यन्तलोपश्छान्दस इति भावः। बुभूषन्निति ॥ सनिग्रहगुहोश्च इति इट्प्रतिषेधः। पुरुत्रेति ॥ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीया सप्तम्योर्बहुळमिति सप्तम्यर्थे त्राप्रत्ययः। अशयदिति ॥ व्यत्ययेन परस्मैपदं बहुळं छन्दसीति शपोर्लुगिति भावः इति द्रष्टव्यम्। व्यस्त इति ॥ असुक्षेपण इत्यस्मात् कर्मणि क्तः। यस्य विभाषेति इट्प्रतिषेधः इति भावः ॥ ७ ॥

शयानमिति ॥ शिङः सार्वधातुक इति गुणो बोध्यः। भिन्नमिति ॥ रदाभ्यां निष्ठातो न इति नत्वं इति ज्ञेयम्। रुहाणः। रुहबीजजन्मनि प्रादुर्भावे च इत्यतो व्यत्ययेन शानच्। कर्तरि शपि प्राप्ते व्यत्ययेन शः। अनित्यमागमशासनमिति वचनान्मुगभावः। महिना महिम्नेति ॥ महशब्दस्य पृथ्वादिषु पाठात् तस्य भाव इत्येतस्मिन्नर्थे पृथ्वादिभ्य इमनिज्वेति इमनिच् चुटेरिति टिलोप इति भावः ॥ ८ ॥

वयबन्धन इत्यस्मात् असुन्। सम्बन्धस्तूत्तरत्रेति ॥ धातुः शय इत्युत्तरत्रेत्यर्थः। जभारेति ॥ हृग्रहोर्भश्छन्दसीति भत्वम्। सूरिति ॥ षूङ्प्राणिगर्भविमोचने सूते गर्भं विमुञ्चतीति सूः। क्विप् चेति क्विप्। शये। लिटि लोपस्त आत्मनेपदेष्विति टिलोपः। शीङः सार्वधातुक इति गुणायादेशः। दो अवखण्डने द्यतीति दानुः। दाभाभ्यां नुरिति नुः ॥ ९ ॥

निवेशनं गृहमिति करणाधिकरणयोश्च इत्यधिकरणे ल्युट्॥ १०,३७ ॥

## टीकाविवृतिः

अयोद्धेव ॥ ननु वृत्रवधस्य पूर्वमुक्तत्वान्नातारीदस्येत्यनेन पुनर्वृत्रवधकथने पुनरुक्तिरित्यत आह ॥ अहन्वृत्रमित्युक्तमेवेति ॥ पूर्वमनुक्तवृत्रसामर्थ्योक्तेस्तत्प्रपञ्चनमेतदिति भावः ॥ महोच्चानामिति ॥ तुविपुरु इति। तुविशब्दस्य बहुनामसु पाठेपि शाकपार्थिवादित्वादुत्तरपदलोपिसमासाश्रयणात्तद्विशेष्यत्वेन रिपुग्रहणमिन्द्रस्य माहात्म्याधिक्य- लाभाय महोच्चग्रहणं तथा च तुविबाधमित्यस्य बहुमहोच्चरिपुबाधकमित्यर्थ उक्तो भवति ॥ योंश इति ॥ सोमलतायाः कण्डनेन रसनिष्कासनानन्तरं नीरसस्त्वगन्तर्गर्भकाष्ठरूप इत्यर्थः ॥ अत्र तु गौणी वृत्तिरिति ॥ अत्र इन्द्रे। ऋजीषशब्दस्तेति शेषः। ऋजीषस्य रसाभावेन काष्ठरूपत्वेन दृढत्वादिति भावः ॥ आजुह्वेहीति ॥ ह्वेञ् स्पर्धायां शब्दे चेत्यतो लिटि तप्रत्ययस्य लिटस्तझयोरित्येत्वेऽभ्यस्तस्य चेत्यनेनाभ्यस्त भाविनो ह्वेञः

(टीकाविवृतिः)

संप्रसारणोक्तेर्द्वित्वात्पूर्वं संप्रसारणे पश्चाद्द्वित्वे छान्दसत्वादुवङादेशाभावे यणादेशः। तत्र तिङ्ङतिङ इति प्राप्तनिघातस्य हि चेति निषेधादंभावे प्रत्ययस्वरेणान्तोदात्तं पदमिति भावः ॥ उक्तरूपमिति ॥ इन्द्रो विष्णुःशत्रुर्यस्य स इन्द्रशत्रुः अयोद्धेव दुर्मदः प्रबलो वृत्रोऽज्ञानमित्युक्तरूपम्। एवं महावीरत्वाद्युक्तलक्षणं विष्णुमित्यर्थः ॥ कृताह्वान इति ॥ कृतमाह्वानं येन सत थोक्तः ॥ समृतिं संप्राप्तिमिति ॥ ऋगतावित्यतःक्तिन्नित्यर्थः ॥ रुजाना इति ॥ रुजो भङ्ग इत्यतो व्यत्ययेन लट आनादेशे शपो लुगित्यर्थः ॥ स्वरितांतमिति ॥ ऋज्रेन्द्राग्रेतीन्द्रशब्दो रन्प्रत्ययान्तो निपातितः तस्य ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वे अनुदात्तं पदमेकवर्जमित्युत्तरस्यानुदात्तत्व उदात्तादनुदात्तस्य स्वरित इति स्वरित इति भावः। तस्मान्नवनीतेनाभ्यङ्क्ष इत्यत्र नव चतन्नीतं चेति कर्मधारयसमासेणु स्तुतावित्यतो ऋदोरबित्यप्प्रत्यये निष्पन्ननवशब्दस्य धातुस्वरेणाद्युदात्तन्वेनांतस्वरितत्वेपि बहुव्रीहित्वाभावात्तद्व्यावृत्तये पुंसोरिति विशेषणं ज्ञेयम्। अत्र कर्मधारयेऽनिष्ठेति सूत्रेण क्तांते पदे परेऽनिष्ठांतपूर्वपदस्य कर्मधारयसमासे प्रकृतिस्वरोक्तेः। ननु प्रकृते स्वरव्यत्यय संभवात्कथं स्वरितांतपूर्वपदत्वं बहुव्रीहित्वनिश्चायकमित्यत आह ॥ तथा च शिक्षाकार इति ॥ मन्त्रो हीनःस्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तदर्थमाह। सवाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति शिक्षावाक्ये मंत्रस्थ पदानां स्वरवर्णानुसारेणैवार्थप्रतिपादकत्वे दृष्टान्तत्वेनोक्तस्वाहेन्द्रशत्रुर्वर्धस्वेत्यत्रस्थ इन्द्रशब्दो यथा स्वरतःस्वरसंबन्धिनोपराधात् त्वष्टुःस्वविवक्षिततत्पुरुषत्वसाधकांतोदात्तत्वं विहाय पूर्वपदांतस्वरितोच्चारणलक्षणादोषाद्बहुव्रीह्यर्थप्राप्त्येन्द्र एव वृत्रस्य शत्रुरित्यर्थको जात इत्युक्तेरिति भावः। ननु यवपाल इत्यत्र षष्ठीतत्पुरुषे गोतंतियवंपाल इत्यनेन पालशब्दे परे गवादिशब्दानामाद्युदात्तविधानाद्यवपदस्याद्युदात्तत्वेनोदात्तादनुदात्तस्येति स्वरितांतत्वेप्यबहुव्रीहित्वाद्व्यभिचारः। तथा शन्न इन्द्रापूषणेत्यत्र नोत्तरपदेनुदात्तादावपृथिवीरुद्रपूषमंथिष्वित्यनेन दवताद्वंद्व अनुदात्तावुत्तरपदे परत उभे पदे प्रकृतिस्वरे न भवत इत्युक्त्वा पृथिव्यादौ परेपर्युदासात्पुनर्देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरेणेन्द्रशब्दस्य स्वरितांतत्वेप्य बहुव्रीहित्वाद्व्यभिचार इत्यत आह ॥ पूर्वपदप्रकृतिस्वरत्वस्येति ॥ प्रकृतिस्वरत्वोक्त्या यवपाल इत्यत्र पूर्वपदग्रहणादिन्द्रापूषणेत्यत्र न व्यभिचार इति भावः। तुल्यश्वेत इत्यादौ तुल्यशब्दस्य नौवयोधर्मेत्यादिना विहितयत्प्रत्ययान्तस्य यतो नाव इति कृताद्युदात्तस्य श्वेतशब्देन तत्पुरुषसमासे तत्पुरुषे तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरत्वेपि न व्यभिचारः। विशेषलक्षणविधिशून्यस्येति विवक्षितत्वात्। अत्र च विशेषलक्षणेन पूर्वपदप्रकृतिस्वरविधानात्। एतेन पुंसोःपूर्वस्मिन्निति सूत्रे पूर्वपदप्रकृतिस्वरत्वस्य

(टीकाविवृतिः)

बहुव्रीहित्वावच्छिन्नं प्रति ज्ञापकत्वोक्तेर्विश्वरूप अजरासः अरुषं सुपिप्पला इत्यादौ पूर्वपदप्रकृतिस्वराभावात्कथं बहुव्रीहित्वनिश्चय इति परास्तम् । एतेषूदाहरणेषु विश्वरूप इत्यत्र बहुव्रीहौ विश्वं संज्ञायामिति विश्वमिति पूर्वपदस्यांतोदात्तत्वविधानात् । अजरास इत्यत्र नञोजरमरमित्रमृता इत्यनेन नञः परेषां जरादिपदानामाद्युदात्तत्वोक्तेः । अरुषं सुपिप्पला इत्यत्र नञ्सुभ्यामित्यनेन नञ्सु इत्येताभ्यां परस्य पदस्यांतोदात्तविधानाद्विशेषसूत्रेण स्वरविधान-शून्यत्वाभावात् । यत्र बहुव्रीहौ विशेषसूत्रेण स्वरविशेष उक्तस्तद्व्यतिरिक्तस्थल एवानेन बहुव्रीहित्वज्ञापनात् । तदेतदभिप्रेत्योक्तम् ॥ न कश्चिद्दोष इति ॥ श्रीमन्न्यायसुधायां तु अत्रकेचिद्व्यभिचारमुद्भावयंतीत्यादिनैतमेवव्यभिचारमाशंक्यैतेषां सूत्राणामुत्सर्गापवादभावमङ्गी-कृत्य व्यभिचार्यपवादेन मानमेव भविष्यतीत्युक्तप्रकारेण व्यभिचारस्यादोषत्वमुक्त्वा किञ्चेत्यनेन द्वितीयं समाधानमिदमेवोक्तम् । अपि चेत्यनेन तु संदिग्धसमासविशेषत्वे सतीति विशेषणं पूर्वान्तस्वरितत्वस्य वा पूर्वपदप्रकृतिस्वरत्वस्य वा विवक्षयित्वा व्यभिचारः परिहृतः । तुल्यश्वेतः विश्वरूप इत्यादौ तत्पुरुषत्वबहुव्रीहित्वनिश्चयेन संदिग्धसमासविशेषत्वाभावात् । प्रकृते च विशेषलक्षणविधिशून्यपूर्वपदप्रकृतिस्वरत्वेन वा संदिग्धसमासविशेषत्वेसति पूर्वपदप्रकृतिस्वरत्वाद्वा बहुव्रीहित्वानुमानादिति बोध्यम् । उक्तार्थे प्रमाणमाह ॥ यथाह पाणिनिरिति ॥ पदविशेषाग्रहणादस्य सूत्रस्योत्सर्गत्वमिति भावः ॥ अन्यथेति ॥ इन्द्रशत्रुरित्यत्र बहुव्रीह्यनङ्गीकारे विशेषविधायकाभावात्समासस्येत्यंतोदात्तत्वं स्यादिति भावः ॥ ६ ॥

अपादहस्तः ॥ अपादहस्त इत्यत्र सर्वथा पादराहित्यार्थस्य प्रमाणबाधितत्वाद्भाष्ये संछिन्नपाद्बाहुरिति तात्पर्यकथनमिति भावेनाक्षरार्थमाह ॥ पादरहित इति ॥ पृतना रण इति संग्रामनामसु पठितपृतनाशब्दस्य प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमिति परिभाषया प्रातिपदिकत्वात्तस्मात्प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चेत्यनेन तत्करोतीत्यर्थे णिचि तस्येष्टवद्भावात् टिलोपेन पृतनाशब्दाकारलोपे लङि शपि छान्दसे यणादेश अडागमे च रूपमेतदिति भावेनाह ॥ अपृतन्यद्युयोधेति ॥ निघंटोः क्वाचित्कपाठमाश्रित्याप्याह ॥ युध्यतिकर्मसु पाठादिति ॥ सानुप्रतिमे इति ॥ सानुः शृङ्गे बुधे मार्ग इति विश्वोक्तेः शृङ्गसदृश इत्यर्थः ॥ प्रवृत्तिसाधनत्वादिति ॥ तर्कागमयोर्ज्ञान मार्ग प्रवृत्तिसाधनत्वात्पादहस्तसाम्यमिति भावः ॥ वृष्ण इति ॥ वृषेःकनिन्युवृषितक्षीत्यादिना कनिन्प्रत्यये निष्पन्नवृषन् शब्दात् ङसि अल्लोपोन इत्यल्लोप इति भावः ॥ ७ ॥

(टीकाविवृतिः)

नदंन ॥ कथासंघटनार्थमिति ॥ मनोरुहाणा अतियंत्यापः इत्यादिना वृत्रवधानंतरमपामतिवेगेनाधःपतितवृत्रातिक्रमेण गमनोक्तेस्तद्घटनार्थमित्यर्थः । वृत्रस्यापांनिरोधकत्वोक्तौ तन्नाशे यथेष्टगमनोक्तिसंभव इति भावः ॥ नादेयानामिति ॥ नदीस्थानाम् । नद्यादिभ्यो ढगिति शैषिको ढक् ॥ वक्ष्यमाणयेति ॥ वृत्रपुत्रेत्यत्र दनुनामिकयेति शेषः । नदस्योदकात्मकत्वात्तदतिक्रमेणोदकगमने भेदस्योपयोगाभावादाह ॥ तत्तीरमुपलक्ष्यत इति ॥ अति अतीत्येति ॥ उपसर्गाणां क्रियासन्निधाने तद्विशेषद्योतकत्वात्तदसन्निधाने ससाधनक्रियावाचकत्वादेवमुक्तम् । अस्य शयानं पतितं वृत्रमित्यनेनाप्यन्वयो ज्ञेयः । महिम्नेत्यत्र पृषोदरादित्वान्मकारलोपे महिनेति रूपमिति भावेनाह ॥ महिना स्वमहिम्नेति ॥ पत्सुतःशीरिति पदं व्युत्पादयति ॥ पादशब्दादिति ॥ सुपां सुपो भवन्तीति वार्तिकेनेति शेषः ॥ सप्तम्यलोप इति ॥ बहुवचनं चेति शेषः ॥ सामर्थ्यसंभवार्थमुक्तमिति ॥ अन्वयघटनार्थमित्यर्थः । अनन्तरमित्यनुक्तौ पत्सुतःशीरित्यत्र पद्भ्यामित्यर्थकस्य पत्सुतःशब्दस्य शेतेत्यर्थकस्य शीरिति शब्दस्यान्वयाभावेनासङ्गतं समासपदं स्यादिति भावः । उत्तरार्धाभिप्रायमाह ॥ वृत्रो नदीद्वारेष्विति ॥ पदयोजनेति ॥ अपां शुभानां ज्ञानादीनां निरोधकं वृत्रं तमोऽज्ञानं अमुया मूलप्रकृत्या सहेश्वरेण नाशितं शयानं कार्याजनकम् । अति अतीत्यापो ज्ञानादिशुभानि मनो रुहाणाःयंति प्रवर्तन्ते । कास्ताः या अपः शुभानि पुरा अज्ञानसत्त्वकाले वृत्रोऽज्ञानं पर्यतिष्ठत् प्रतिरोधितवान् । तथा अहिःसंशयः । तासां ज्ञानाद्यपां रोधनार्थं पत्सुतःशीर्बभूवेत्यनेन प्रकारेणेत्यर्थः । ननु वृत्रशब्दवाच्याज्ञानस्य पादाभावादहिशब्दवाच्यसंशयस्य पत्सुतःशीरित्यनेन पादाधःशयनोक्तिःकथमुपपद्यत इत्यत आह ॥ पत्सुतःशीरित्यानन्तर्यमात्रपरमिति ॥ संशयस्याज्ञानानन्तर्यसंभवादिति भावः ॥ ८ ॥

नीचावयाः ॥ उत्तरवाक्येनेति ॥ इन्द्रो अस्या इत्युत्तरवाक्येन वृत्रपुत्रा अभवदिति पूर्ववाक्यस्य सङ्गतिसिद्ध्य इत्यर्थः । तत्रास्या इत्युक्तेर्यच्छब्दसापेक्षत्वात्सा किंनाम्नीत्याकांक्षायां दनुनामत्वसिद्ध्यर्थं सेत्यस्याप्यपेक्षितत्वात् । तथा दानुःशय इत्युत्तरवाक्येनान्वयसिद्ध्यर्थं च यासेत्यध्याहारः । या वृत्रपुत्रा दनुर्नीचावया अभवत्सादनुःशय इत्यन्वयादिति भावः ॥ उत्तरार्धस्येति ॥ दानुःशय इत्यत्रत्यदानुशब्दस्य दीर्घव्यत्ययेन दनुरिति वचनमेव व्याख्यानमित्यर्थः ॥ संबन्धस्तूत्तरत्रेति ॥ नीचस्थान इत्यादिभाष्यस्य वधं तस्या अहरत्पूर्वमिन्द्र इत्युत्तरवाक्येऽन्वयो ज्ञेय इत्यर्थः । ननु वृत्रस्य दनुजत्वे दानवत्वं स्यान्न तु दैत्यत्वं दितिजत्वाभावादित्यत आह ॥ दैत्यत्वं चेति ॥ दैत्यदानवयोस्तमःप्रकृतिकत्वसाम्याद्दैत्येषु दानव व्यवहारो दानवेषु दैत्यव्यवहारः पुराणेष्विति भावः ॥ पुण्यात्मा प्रसिद्ध इति ॥ भागवत इति शेषः ॥ वृत्रमातेति व्याख्यानं कथमिति ॥

ङीबभावस्य छान्दसत्वाश्रयेण वृत्रस्य पुत्रीत्यपि व्याख्यातुं शक्यत्वादिति भावः ।। जभार जहारेति ।। हृग्रहोर्भश्छन्दसीति हकारस्य भकारादेशः । ऋच अध्यात्मार्थसूचनायैकेन वाशब्देन भाव्यं तत्कथं प्रकृतिर्वेति ईशिता वेति वाशब्द द्वयमित्यत आह ।। भिन्नवाक्यत्वादिति ।। ऋचो व्याख्यानान्तरद्योतनार्थं नायं वाशब्दःकिन्तु नीचावया अभवद्वृत्रपुत्रेत्यस्य पृथग्वाक्यत्वात्तस्या-ध्यात्मपरत्वद्योतनाय प्रथमो वाशब्दः । द्वितीयो वाशब्दस्तु इन्द्रो अस्येति द्वितीयवाक्य-स्यार्थान्तरसूचनायेति भावः ।। प्रातिस्विकी चेति ।। अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते । स्वगुणाच्छादिका त्वेका परमाच्छादिका परा । स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः । व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम इति भागवततात्पर्योक्तेरिति भावः । उत्तरासूरिति तृतीयपादावतारिकायाःप्रथमं दनोर्वधे किंकारणमित्यस्या अनन्तरमित्यत आहेति शेषो ज्ञेयः ।। सूत इति सूरिति ।। षूङ् प्राणिप्रसव इत्यतःक्विप्चेति कर्तरि क्विबिति भावः ।। तत्संबन्धीति प्रतीतिरिति ।। लोके स्वापकारकेण युद्धदर्शनात् विष्णोर्दुःखदातृत्वेन संबन्ध्यज्ञानादिकं विष्णुना नाशितमिति प्रतीतिःस्यादित्यर्थः ।। न तु कालापेक्षयेति ।। अज्ञानापेक्षया पूर्वमेव नाशान्नोत्तरकालस्थत्वं प्रकृतेरिति भावः ।। दो अवखण्डन इत्यत इति ।। दाभाभ्यां नुरिति कर्मणि नुप्रत्यय इति शेषः ।। ९ ।।

अतिष्ठन्तीनाम् ।। नन्वतिष्ठन्तीनामनिवेशनानामित्येतद्विशेषण द्वयस्य काष्ठाशब्दवाच्य-दिक्षूपयोगः कथं दिशांव्याप्तत्वेन सर्वत्र स्थितत्वादतिष्ठंतीनामित्यस्यायुक्तेर्जडत्वेन गृहापेक्षाभावे-नानिवेशनानामित्यस्य वैयर्थ्यादित्याशंकायां प्रवृत्तमनंतत्वादित्यादिभाष्यं सङ्गमयति ।। अत्रेति ।। विशेषणयोरुपयोगप्रकारं दर्शयति ।। दिशामनन्तत्वेनेति ।। तदभावनिमित्ता दिगभावनिमित्तेत्यर्थः । तथा च दिक्स्थदेवदत्ते दिगभावप्रयुक्तं यदवस्थानन्तदभावो दिक्षु लक्षणयोच्यत इति भावः ।। गृहमन्तर्भावकमिति ।। अत्र निवेशनशब्देन गृहनिष्ठान्तर्भावकत्वस्य ग्रहणात्तदभावो दिक्षु प्रतिपाद्यत इति भावः । ननु तर्हि व्यर्थमेतद्विशेषणद्वयमित्यत आह ।। एवं नामस्थूलमिति ।। वृत्रशरीरस्यातिस्थूलत्वकथनार्थत्वान्न वैयर्थ्यमिति भावः ।। नीत्यतिशयार्थ इति ।। निनिवेशभृशार्थाधोभागविन्यासराशिष्विति विश्वोक्तेरिति भावः ।। णःसुखमिति ।। णश्च निर्वृतिवाचक इत्यभिधानादिति शेषः । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञि यस्येति लोपे ण्यमिति सिद्धे पश्चान्निशब्देन समास इति भावः ।। त्रेधा व्याचष्ट इति ।। अध्यात्मार्थ इन्द्रशत्रुरिति विशेषणं दीर्घंतम इति विशेष्यं प्रथमान्तमित्येकः । बाह्यार्थो द्वेधा । दीर्घन्तम इत्यस्य लक्षणया तामसार्थत्वमङ्गीकृत्य इन्द्रशत्रुविशेषणत्वमेकः । तमःशब्दस्यांधंतमोरूपमुख्यार्थमाश्रित्य कर्मत्वमित्यपर इति त्रेधेत्यर्थः ।। १० ।।

ऋक्संहिता पदपाठसहिता (सू-३२, व-३)

(३७९) दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ॥ अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥ ११ ॥

(प०) दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः ॥ अपाम् । बिलम् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥ ११ ॥

(३८०) अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः ॥ अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून्॥१२॥

(प०) अश्व्यः । वारः । अभवः । तत् । इन्द्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः ॥ अजयः । गाः । अजयः । शूर । सोमम् । अव । असृजः । सर्तवे । सप्त । सिन्धून् ॥ १२ ॥

(३८१) नास्मै विद्युन्न तन्यतुः सिषेध न यामिहमकिरद्ध्रादुनिं च ॥ इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥ १३ ॥

(प०) न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । याम् । मिहम् । अकिरत् । ह्रादुनिम् । च ॥ इन्द्रः । च । यत् । युयुधातेइति । अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥ १३ ॥

(३८२) अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् ॥ नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥१४॥

(प०) अहेः । यातारम् । कम् । अपश्यः । इन्द्र । हृदि । यत् । ते । जघ्नुषः । भीः । अगच्छत् ॥ नव । च । यत् । नवतिम् । च । स्रवन्तीः । श्येनः । न । भीतः । अतरः । रजांसि ॥ १४ ॥

(ऋक्संहिता पदपाठसहिता)

(३८३) इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्यच शृ॒ङ्गिणो॒ वज्र॑बाहुः । सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥ १५, ३८, २, ३२ ॥

(प०) इन्द्रः॑ । या॒तः । अव॑ऽसितस्य । राजा॑ । शम॑स्य । च॒ । शृ॒ङ्गिणः॑ । वज्र॑ऽबाहुः । सः । इत् । ऊँइति॑ । राजा॑ । क्षय॒ति । च॒र्ष॒णी॒नाम् । अ॒रान् । न । ने॒मिः । परि॑ । ता । ब॒भू॒व ॥ १५, ३८, २, ३२ ॥

ऋग्भाष्यम्

दासस्य विष्णोर्वरुणस्य पत्न्यो निरुद्धा आसन्नहिना यद्वदेव । गावो बलेनेन्द्र यज्ञे सुक्लृप्ता वृत्रं हत्वा तमहिं चाशु शक्रः । उद्घाटयामास बिलं तदापां शुभद्वारं भगवान्वातमोघ्नन् ॥ ११ ॥ सृके युद्धे प्रत्यहंस्त्वां यदिस्म देवः प्रधानोपि तदश्ववारः । वालीवत्वं ननु देवस्तदानीं प्रतिहंता तेनैव कश्चिद्धि तस्मात् । अजयो बलाद्वा अजयो हिरण्यं सोमं गन्तुममुचः सप्तसिंधून् ॥ १२ ॥ अशनिं यां विद्युतं यां मिहं च नाम्ना हेतिं वैद्युपमां सुतीक्ष्णाम् । अशनिभेदं ह्रादुनिनामधेयं त्वामुद्दिश्यैवाकिरत्सोहि रुग्रः । त्वां प्रत्येतन्नैव सिद्धिं चकार पश्चात्काले त्वजयस्त्वं तमेव ॥ १३ ॥ अहेर्योद्धारं कमपश्य इन्द्र यज्जघ्नुषस्तेपि भयं जगाम । ज्ञानानि मिथ्या बोधतोस्मन्मनश्च शब्दादिकादमुचः सप्तसिंधून् । महत्तत्त्वादीन्विपरीता मतिस्तु विद्युच्छब्दाः स्तन्यतुर्वक्तृशक्तिः । मिहेत्युक्ता ह्रादुनिर्हुंकृतिश्च प्रतिवक्तॄणामनुकूले रमेशे । नसाधयंतिस्म तमस्समुत्था जयत्येनं संशयं वासुदेवः । स्वभक्तार्थे तद्धृदिस्थः क एव त्वदन्यो हेरभिगन्ता भवेत । तवैव यस्मात्संशयं जघ्नुषस्तु त्वदीयानां भयमंजो व्यपैति । शतमेकोनमतरस्त्वं नदीनामहिं दैत्यं घ्नन्यथाकाशदेशात् । भीतःश्येनोह्यति गच्छेत्तथैव नानानदीवारकत्वात्तु तस्य । ईशो देवानां तावतां तावतीश्च सृत्यापगास्तारयामास यद्वत् । भीतः श्येनस्तरतीत्थं तथैषां कृत्वोपमां तारयामास देवः । स्वातंत्र्ये भेदकरणे चोक्त एव व्यत्यास इत्यनवद्यं तदेतत् । वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः । ब्रह्मा ब्रह्माण ऋभवश्चैव रुद्रा ऊनं शतं देवतासंहितोक्तम् ॥ १४ ॥ स एवेन्द्रो भगवांस्तत्प्रसादात्प्राप्तो भक्तैः

(ऋग्भाष्यम्)

पर्यवसानगन्तुः। मुक्तस्य राजापि शमस्य मुक्तर्ज्ञानं शृङ्गं तद्व्रतश्चैव नित्यम्। स एव राजा क्षयति प्रजानां भूतान्यराणीव च पर्यभूत्सः ॥ १५, ३८, १३ ॥

इति श्रीमदानन्दतीर्थ भगवत्पादाचार्यविरचिते श्रीमदृग्भाष्ये द्वितीयोऽध्यायः ॥

## ऋग्भाष्यटीका

दासपत्नीः। दासस्य। इन्द्रयज्ञे सुक्लृप्ता गावः पणिनेव पणिविशेषेणबलेन यद्वद्यथा तथैव दासपत्नीर्विष्णोर्दासस्य वरुणस्य पत्न्यः आपो नद्योऽहि गोपाः अहिर्गोपो गोप्ता यासान्ताः अहिना गुप्ता इति शेषः। न केवलमहिगोपाः किन्तु निरुद्धाः वृत्रेणापीति शेषः। अतिष्ठन् आसन्। अन्यथा पूर्वोत्तरार्धयोरसंङ्गतिः स्यात्। अत एव तमहिं चेति वक्ष्यति। तदा शक्रो वृत्रं जघन्वान् हत्वेति यावत्। अहिं च हत्वा। अनुक्तोऽहिः कस्माद्गृह्यत इत्यतस्तं पूर्वार्धोक्तमित्युक्तम्। स्वयमेव कस्मान्नोक्त इत्यत उक्तमाश्विति। अनायासेन। यदपां बिलं ताभ्यामपिहितमाच्छादित मासीत्तदपववार अपावृतवान्। उद्धाटयामास। अध्यात्मं व्याचष्टे॥ शुभेति॥ शुभकर्मणां द्वार मास्तिक्यादिकं तमः शब्देन संशयोपि लक्ष्यते। अत्र दासो यः कोपि। पत्न्य इव पत्न्यः॥ ११ ॥

अश्व्यः। सृके। हे इन्द्र यद्यदि। सृके आयुधनामैतत्। तत्सम्बन्धाद्युद्धं लक्ष्यते। युद्धनामैव वा। युद्धे एकः प्रधानोपि देवस्त्वां प्रत्यहन् तत्तदानीं त्वमश्व्योऽश्वसम्बन्धी वारो वारकः। तदश्ववारः। तस्य प्रतिभटस्याश्वानां निवारकोऽभवः। प्रत्यायनाय भाष्यकृद्दृष्टान्तमाचष्टे॥ वाली वेति। यथा वाली स्वदृष्टिपातमात्रेण परबलापहारं करोति तथा त्वं दृष्टिपातमात्रेण रिपुरथे योजितानामश्वानां बलमपहृत्य तानपवाहयसीति। यद्वा। अश्ववार इत्यश्ववाहकः प्रसिद्धः। तदा पराङ्मुखतयेत्युपस्कर्तव्यम्। यदि देवोपि त्वां प्रत्यहंस्तदा तदश्वनिवारको भव इत्युक्त्या प्रथमं तावत्प्रहारविषयो भवतीति प्राप्नोति अतोभिप्रायमाह॥ तस्मात् दृष्टिमात्रेण बलापहारित्वात्ते प्रतिहन्ता कश्चिद्देवोपि नैवास्तीति। ततश्च प्रत्यहन्निति प्रतिहन्तुमैच्छदित्यर्थः। अत एव किलार्थः स्मशब्दोऽत्रापि हिशब्दः। किञ्च। हे शूर विक्रान्त त्वं रिपूणां गाः अजयः। शूरेत्यस्य तात्पर्यं बलादिति। पुनरजयो हिरण्यमिति शेषः। सोमस्यापरकीयत्वान्न कर्मत्वम्। त्वं सप्तसिंधून् प्रधाननदीः सोमं सर्तवे गन्तुम्। तुमर्थ इत्यादिना तवे। अवासृजः अमुचः। नदीजलैः सोमं संयोजयितुं नदीः प्रवर्तितवानसीति॥ १२ ॥

नास्मै। अशनिम्। यद्यदेंद्रश्चाहिश्च युयुधाते हे इन्द्र यदा तवाहिना युद्धं प्रवृत्तं तदा विद्युन्नामायुधमस्मा अहये न सिषेध। अस्य प्रयोजनसिद्धिं न चकार। तन्यतुश्चायुधं न सिषेध। यां मिहं ह्रादुनिं चायुधे अहिरकिरत् त्वां प्रतिक्षिप्तवान् ते च न सिद्धिं चक्रतुः। सर्वस्य तात्पर्यमाह॥ यांतन्यतुशब्दोक्तामशनिं वज्रं

(ऋग्भाष्यटीका)

यां च विद्युतं यां च नाम्ना मिहं हेतिं यज्ञवेद्युपमां सुतीक्ष्णां यं च ह्रादुनिनामधेयमशनिभेदं वज्रप्रभेदं सोहिरुग्रः त्वामुद्दिश्यैवाकिरत् । एतत्सर्वमायुधजातं त्वां प्रति । त्वत्सम्बन्धिनीं त्वदुपहतिरूपाम् अस्य सिद्धिं नैव चकार । किं त्वपरीभ्यो पराभ्यो परस्यां वेलायां पश्चात्काले तु मघवोत मघवैव विजिग्ये त्वमेव तमहिमजयः ॥ १३ ॥

अहेः । पूर्वार्धान्तावद्व्याख्याति । अहेरिति ॥ हे इन्द्र अहेरसुरस्य यातारं तं प्रतिगन्तारं तस्य प्रतियोद्धारं त्वां विनाकमपश्यः न कमपि । सकललोकवृत्तान्त विदापि त्वया तस्य प्रतिभटो न दृष्टः । कुतः । यद्यस्मात्तं जघ्नुषोपि ते हृदि भीरगच्छत् भयं जगाम । त्वन्मनस्यपि पुरा भयमुत्पन्नम् ॥ एवं भूतमपि त्वं हतवानसीति । सिंहावलोकन्यायेनाजयो गा इत्यादींश्चतुरोर्धर्चानध्यामं व्याख्याति । ज्ञानानीति ॥ गमेर्डो इत्यतो गोशब्दो गमेरूपम् । गत्यर्थाश्च ज्ञानार्थाः । अतो गाः ज्ञानानि भक्तानामिति शेषः । मिथ्याबोधतोऽजयः । मिथ्याज्ञानेनाभिभूतानि तदपाकृत्य स्थिराण्यकार्षीः । सोममस्मन्मनश्चास्माकं भक्तानां मनश्च शब्दादिविषयजातादजयः । विषयैरपहृतं विरक्तमकार्षीः । सप्तसिन्धून् समुद्रानिवदु-स्तरान्महत्तत्वादीन् महत्तत्वांशं चित्तं महत्तत्वांशमहंकारं पञ्चानां महाभूतानामंशांश्च देहस्थान् सर्तवे न्यायमार्गे गन्तु मवासृजोऽमुचः । प्रेरितवानसीति । नास्मै विद्युदित्यत्र विद्युदादि शब्दार्थांस्तावदाह ॥ विपरीतेति ॥ प्रतिवक्तॄणां प्रतिवादिनां विपरीता मतिस्तुविद्युत् । द्युत दीप्तावित्यतो द्युत्समीचीना मतिः तद्विरुद्धत्वाद्विपरीता मतिर्विद्युत् । प्रतिवक्तॄणामिति सर्वत्र सम्बध्यते । शब्दाः प्रमाणदूषणाभास प्रयोगास्तन्यतुः । स्तनतेः शब्दार्थस्य हीदं रूपम् । वक्तृशक्तिः वक्तृत्वशक्तिर्मिहेत्युक्ता अकार उच्चारणार्थः । मिह सेचने । शक्त्या हि सिक्तोपोद्बलिता वाक्प्रवर्तते । न त्वभ्यासमात्रेण । जन्मान्तरवासनाशक्तिः । हुंकृतिः ह्रादुनिः । ह्रादतेरव्यक्त शब्दार्थत्वात् इदानीं नास्मा इत्यस्य तात्पर्यमाह ॥ अनुकूल इति ॥ परेशेऽनुकूलेऽनुग्राहके सत्येते विद्युदादयः स्वकार्यं भगवद्भक्तपराभवं न साधयन्ति स्म । अहिरकिरदित्यस्यार्थस्तमः समुत्था इति । उतापरीभ्य इत्यस्यार्थो जयतीति । वासुदेवस्य संशयकृतोपद्रवा-भावात्कथमेतदित्यतोभिप्रायमाह । स्वभक्तेति ॥ अहेरित्यर्धस्यार्थः एकवेति । अहेः संशयस्य । कुतोन्यो नास्ति । यद्यस्मात्ते तवैव संशयं जघ्नुषः सतस्त्वदीयानां हृदि स्थितं भयं सम्यग्व्यपैति न त्वन्येषु संशयनाशाय प्रवृत्तेष्वित्यर्थः । नव चेत्यर्धर्चं प्रसिद्धेन्द्रे व्याख्याति ॥ शतमिति । यद्यस्मात्त्वं रजांसि भीतः श्येनो न रज इत्यंतरिक्षनाम । बहुवचनं च प्रदेशाभिप्रायम् । यथा ह्याकाशदेशान् भीतः श्येनोतिगच्छेत् । श्येन एव वेगी भीतस्तु सुतरामिति तदुपपादनम् । तथा नव च नवतिं च स्रवन्तीर्नदीः नदीनामेकोनशतम् अतरस्तीर्णवानसि । तस्मात्त्वदन्योऽहेरभि गन्तानास्ति । असङ्गतिपरिहारायाहिं घ्नन्नित्युक्तम् । हेतौ शतृप्रत्ययः । दैत्यमिति बाह्यविषयत्वसूचनार्थम् । नदीतरणस्याहिवधे कथमुपयोग इत्यत उक्तम् । नानेति । तस्याहेः नह्यन्यस्यैतत्कर्म सम्भवतीति भावः । ईश्वरे व्याख्याति । ईश इति । ईशो विष्णुस्तावतां

(ऋग्भाष्यटीका)

नवतेर्नवानां च देवानां तावतीर्नवर्ति नव च स्रवन्तीः नदीः सृत्यापगास्तानेव देवांस्तारयामासेति तात्पर्यम्। योजना तु यद्यस्मात्त्वं नव च नवतिं च स्रवतीः संसारनदीरतरस्तानेव देवानतारयोऽतस्त्वमेव संशयस्य हन्तेति। दृष्टान्तं व्याख्याति। यद्वदिति। ननु प्रयोजककर्तारमभिधाय स्वतंत्रकर्तोदाह्रियते कथमित्यत आह॥ तथेति॥ एषां देवानाम्। तथा ताम्। एतदुक्तं भवति। यथा भीतः श्येनो रजांसि तरति तथा तरतो देवांस्तारयामासेति व्याख्यानान्न दोष इति। नन्वतर इत्येव श्रूयते नत्वतारय इति तत्कथमेतद्व्याख्यानमित्यत आह॥ स्वातंत्र्य इति। अत्र तु स्वातंत्र्ये। के ते नव नवतिश्च देवा इत्यत आह। वस्विति। वसवोष्टौ आदित्याविष्णुव्यतिरिक्ता एकादश मरुतः प्रधानेन सहिताः पञ्चाशत् ब्रह्माणो नव प्रजापतयः ऋभवस्त्रयः। रुद्रा एकादश। ऊनमेकोन। देवता संहितानामग्रन्थ विशेषः॥ १४॥ इन्द्रः। स एव। अत्रैवशब्देनेयमृगीश्वर विषयैवेति सूचयति। स इत्यत्रोक्त गुणवत्तया प्रसिद्धः इन्द्रो भगवान्यातोऽभक्तैस्तत्प्रसादात् प्राप्तो ज्ञातो भवति। न तु परोक्तरीत्या सर्वथाऽविदितः। अज्ञेयत्वोक्तिस्त्वभक्तैस्त्वत्प्रसादेन विना न ज्ञायत इत्येवमर्थेति भावः। अवसितस्य पर्यवसानं गन्तुः संसारपारङ्गतस्य मुक्तस्य राजा स्वामी। न केवलं प्राप्तमोक्षाणामधिपतिः किन्तु शमस्य च मुक्तेरपि। किञ्च। वज्रबाहुः वज्रं ज्ञानं तदात्मक बाह्वादिमान्। स इत्। स एव। उशब्दोप्येवार्थः। तस्य नित्यमित्यध्याहृतेन सम्बन्धः। नित्यमेव। शृङ्गिणः शृङ्गशब्दः प्रकाशवाचकः। तथा चाह। शृङ्गं प्रकाशस्तद्वतो नक्षत्रादेरिति। अतो ज्ञानं शृङ्गम्। तद्वतश्च ज्ञानिसमूहस्य राजा चर्षणीनां मुक्तातिरिक्तानां प्रजानां क्षयति ऐश्वर्यकर्मायम्। ईश्वरो भवति। सर्वं दृष्टान्तेनाह नेमिररान्न अराणीव। स च स एव। ता तानि सर्वाणि भूतानि परिबभूव। पर्यभूत्। परिभूतवान्। वशीकृतवान्। यातो जङ्गमस्यावसितस्य स्थावरस्य शमस्य शान्तेः शृङ्गिणो नक्षत्रादेरिति प्रसिद्धेन्द्रेपि योज्यम्। वज्रमिव दृढौ बाहू यस्यासौ वज्रबाहुः। वज्रहस्त इति वेति॥ १५, ३८, १३॥ इति श्रीमदानन्दतीर्थ भगवत्पादाचार्य विरचितस्य ऋग्भाष्यस्य टीकायां जयतीर्थमुनिविरचितायां द्वितीयोध्यायः॥

## मन्त्रार्थमञ्जरी

इन्द्रयज्ञे क्लृप्ताः गावः। पणिनेव, पणिविशेषेण बलेन यथा। (तथैव) दासपत्नीः, विष्णोर्दासस्य वरुणस्य पत्न्यः। आपः, नद्यः। अहिगोपाः, अहिर्गोपा गोप्ता यासां ताः। न केवलमहिगोपाः, किं तु निरुद्धाः। (वृत्रेण) इति शेषः। अतिष्ठन्, आसन्। तदा शक्रः। वृत्रम् (अहिं च) जघन्वान्, हन्तेः लिटः क्वसुः, हो हन्तेर्घः। यत् अपाम् बिलम्। ताभ्याम्– अपिहितम्, आच्छादितम्। आसीत् तत्। अप ववार, अपावृतवान्, उद्घाटयामास। अध्यात्मं तु दासपत्नीः, दासो यः कश्चिद्भक्तस्तत्पत्न्य इव पत्न्योऽधीनाः। आपः, क्रियाः। वृत्रम्, अज्ञानम्। (अहिम्) संशयम्।

**(मन्त्रार्थमञ्जरी)**

(च) जघन्वान्। अपाम्, शुभकर्मणाम्। बिलम्, द्वारम्, आस्तिक्यादिकम्। ताभ्याम् अपिहितम् अप तत् ववार। इति। (यथायोग्यमन्यत्प्रागिव योज्यम्॥ ११ ॥)

(हे) इन्द्र। यत्, यदि। सृके, आयुधनामैतत् (वै० नि० २।२०) तत्सम्बन्धाद्युद्धं लक्ष्यते, युद्धनामैव। वा, युद्धे। एकः, प्रधानः। (अपि) देवः, त्वा, त्वाम्। प्रत्याहन्, लक्षणया प्रतिहन्तुमैच्छत्। तत्, तदानीम् (त्वम्)। अश्व्यः, अश्वसम्बन्धी। वारः वारकोऽश्ववारः, प्रतिभटस्याश्वानां निवारकः। अभवः। किं च (हे) शूर, विक्रान्त (त्वम्) रिपूणाम् गाः अजयः। पुनः 'अजयः' इत्यस्य (हिरण्यम्) इति शेषः। (त्वम्) सप्त सिन्धून्, प्रधाननदीः। सोमम्। सर्तवे गन्तुम्, 'तुमर्थे सेसेनसे' इत्यादिना तवेन्प्रत्ययः। अव असृजः, अमुचः, नदीजलैः सोमं संयोजयितुं नदीः प्रवर्तितवानसि। अध्यात्मं तु– गमेः डोप्रत्ययान्तरूपत्वात् गाः, ज्ञानानि (भक्तानाम्) इति शेषः। मिथ्याबोधतः– अजयः, मिथ्याज्ञानेनाभिभूतानि तदपाकृत्य स्थिराण्यकार्षीः। सोमम्, अस्मन्मनः। (च) शब्दादिकाद्विषयजातात् अजयः, विषयैरपहृतं विरक्तमकार्षीः। सप्त। सिन्धून्, समुद्रानिव दुस्तरान्महत्तत्त्वादीन्, महत्तत्त्वांशं चित्तमहंकारांशमहंकारं पञ्चभूतांशाँश्च देहस्थान्। सर्तवे, न्यायमार्गे गन्तुम्। अव असृजः, अमुचः, प्रेरितवानसि इति। (शिष्टं स्पष्टम्)॥ १२ ॥

यत्, यदा। इन्द्रः च अहिः च युयुधाते, हे इन्द्र ! यदा तवाहिता युद्धं प्रवृत्तम्। (तदा) (विद्युत्) विद्युन्नामायुधम्। अस्मै, अहये। न (सिसेध), अस्य प्रयोजनसिद्धिं न चकार। तन्यतुः (च), आयुधम्। न सिसेध। याम्। मिहम्, (हेतिम्) ह्रादुनिम् च, (अशनिम्) युद्धे– (अहिः) अकिरत्, त्वां प्रति क्षिप्तवान्। (ते च) न (सिद्धिं च क्रतुः) किं तु अपरीभ्यः (अ) परस्यां वेलायाम्, पश्चात्काले। (तु) मघवा उत, मघवैव, त्वमेव। तमहिम्– विजिग्ये, अजयः। अध्यात्मं तु– विद्युत्, विपरीता द्युत्, 'द्युत दीप्तौ', भावे क्विप्, दीप्तिः, 'मतिः' इति (भाष्ये) प्रतिवादिनां प्रमाणदूषणाभासप्रयोगरूपशब्दः। (इष्टं तन्यतेऽनया वक्तृशक्त्येति तनोतेः यतुच्, तन्यतुः, वक्तृशक्तिः) मिहम्, जन्मान्तरवासनारूपशक्तिम्। ह्रादुनिम् च, हुंकृतिं च, 'ह्राद अव्यक्ते शब्दे' उनिः। (याम्, ये) (अहिः) अज्ञानम्। अकिरत्, उत्थापितवान्। अनादिवासनारूपवासनाशक्त्याज्ञानेन च प्रवर्तितम् (सा) हुंकृत्यादिकम्, यत्प्रतिवादिनस्तत्सर्वम्। परेशानुग्रहे सति– अस्मै, भक्ताय। न (न न) सिसेध, न सिद्धिकरं भवति, व्यर्थं भवति – इत्यर्थः। इन्द्रः च। अहिः च, संशयश्च। यत्, यदा। युयुधाते (तदा) मघवा उत अपरीभ्यः। भक्तहृदिस्थः सँस्तदीयाहिं (तदीय) संशयम् वि जिग्ये, जितवान्, भक्तानां संशयं पर्यहार्षीत् इत्यर्थः॥ १३ ॥

(मन्त्रार्थमञ्जरी)

(हे) इन्द्र। अहेः, असुरस्य। यातारम्, प्रतिगन्तारम्, तस्य प्रतियोद्धारम्। त्वां विना– कम् अपश्यः, न कमपि सकललोकवृत्तान्तविदापि त्वया तस्य प्रतिभटो न दृष्टः। कुतः? यत्, यस्मात्। तम् जघ्नुषः (अपि) ते हृदि। भीः अगच्छत्, भयं जगाम, त्वन्मनस्यपि पूर्वं भयमुत्पन्नम्, एवं भूतमपि त्वं हतवानसि। यत्, यस्मात्। (त्वम्) रजांसि, 'रजः' इत्यन्तरिक्षनाम, बहुवचनं च प्रदेशाभिप्रायम्, आकाशप्रदेशान्। भीतः, श्येनः न, यथा भीतः श्येनस्तरत्यतिगच्छेत्, 'श्येन एव स्वभावतो वेगी, भीतस्तु सुतराम्' इति तदुपपादनम्। (तथा) नव च नवतिम् च। स्रवन्तीः, नदीः, नदीनामेकोनशतम्। अतरः, तीर्णवानसि। तस्मात्त्वदन्योऽहेरभिगन्तानास्ति, नानानदीवारकत्वादहेः, तद्वधार्थं शीघ्रं तास्तीर्त्वा तमहन्– इति भावः। अध्यात्मं तु– अहेः, संशयस्य। यातारम्, प्रतिगन्तारम्। कम् अपश्यः। (हे) इन्द्र, हरे। त्वदन्यः कोऽप्यभिगन्ता न इत्यर्थः। कुतः? यत्, यस्मात्। ते, तव। (एव) संशयम् जघ्नुषः (सतः) त्वदीयानाम् (हृदि भीः अगच्छत्) हृदि स्थितं भयं सम्यग्व्यपैति, न त्वन्येषु संशयनाशाय प्रवृत्तेषु इत्यर्थः। किं च, यत्, यस्मात्। (त्वम्) नव च नवतिम् च, एकोनशतम् (देवान्) (भीतः श्येनः न), यथा भीतः श्येनः। रजांसि। तरति (तथा) संसृतीस्तरतस्तान्। (नव च नवतिम् च) स्रवन्तीः, एकोनशतं संसारनदीः। अतरः, अन्तर्णीतणिच्, अतारयः। अतस्त्वमेवाहेः संशयस्य हन्ता इति। एकोनशतं देवास्तु– 'अष्टौ वसवः, ८। विष्णुवर्ज्या एकादशादित्याः ॥ ११ ॥ प्रधानेन सह पञ्चाशन्मरुतः ॥ ५० ॥ द्वावश्विनौ २। बृहस्पतिः, १। शेषः, १ विपः, १। अनिरुद्धः १। ब्रह्मा, १। नव प्रजापतयः, ९। ऋभवस्त्रयः, ३। एकादश रुद्राः, ११। इत्येवं ९९ ज्ञेयाः, (अत्र वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः। ब्रह्माब्राह्मण ऋभवश्चैव रुद्रा ऊनं शतं देवताः संहितोक्तम्' इति भाष्यं मानम्॥ १४ ॥

(सः) इत्यादिना उक्तगुणवत्तया प्रसिद्धः। इन्द्रः, भगवान्। यातः, भक्तैस्तत्प्रसादात्प्राप्तो ज्ञातो भवति। अवसितस्य, पर्यवसानं गन्तुः, संसारपारं गतस्य मुक्तस्य। राजा, स्वामी। न केवलं प्राप्तमोक्षाणां स्वामी, किं तु– शमस्य च, मुक्तेरपि। किं च वज्रबाहुः, वज्रं ज्ञानम्, ज्ञानात्मकबाह्वादिमान्। सः इत्, स एव। उशब्दोऽप्येवार्थः, तस्य (नित्यम्) इत्यध्याहृतेनान्वयः नित्यमेव। शृङ्गिणः, शृङ्गशब्दः प्रकाशवाचकः, शृङ्गिणो ज्ञानिसमूहस्य। (च) राजा। चर्षणीनाम्, उक्तातिरिक्तानां (प्रजानाम्) क्षयति, ऐश्वर्यकर्मायम् (वै० नि० २।२१) ईश्वरो भवति। सर्वं दृष्टान्तेनाह– नेमिः अरान् न, चक्रमराणीव। (सः च) स एव। ता, तानि, सर्वाणि भूतानि। परि बभूव, पर्यभूत्, परिभूतवान्, वशीकृतवान्। प्रसिद्धेन्द्रे तु यातः, जङ्गमस्य।

(मन्त्रार्थमञ्जरी)

अवसितस्य, स्थावरस्य । शमस्य, शान्तेः । शृङ्गिणः, प्रकाशवतः, नक्षत्रादेः । च राजा । वज्रबाहुः, वज्रवद्दृढबाहुः (वज्रं बाहौ हस्तो यस्य स इति) 'वज्रहस्तः' इति वार्थो ध्येयः, (शिष्टं स्पष्टम्) ॥ १५ ॥ इत्यष्टात्रिंशो वर्गः ॥ ३८ ॥

द्वितीयाध्यायमन्त्रार्थान्भाष्यटीकानिरूपितान् । समग्रहीष्म बालानां बोधाय प्रीतये हरेः ॥ ५ ॥ इति प्रथमाष्टके द्वितीयोऽध्यायः ॥ २ ॥ द्वात्रिंशं सूक्तम् ॥ ३२ ॥

## रूपावतारः

दासपत्नीः ॥ अन्यथेति । पूर्वार्धे वृत्रग्रहणाभाव इत्यर्थः । अन्यस्यापराधमुक्त्वा अन्यवधाभिधानस्यायुक्तत्वादिति भावः । अत एवेति । असंगतिवारणार्थं शेषपूरणस्य कर्तव्यत्वादेवेत्यर्थः । अनायासेनेति । अनायासेनाहिवधस्य कृतत्वेन महिमातिशयलाभादहिवधः कण्ठतो नोक्त इति भावः । पत्न्य इवेति । शुभानि पत्नीस्थाने विवक्षितानीति ॥ ११ ॥

अश्व्यः । तदा पराङ्मुखतयेति । अनेन अश्व्योवारोभव' इत्यस्य पराश्वानां पराङ्मुखतया वाहकोऽभव इत्यर्थः सूचितः । अत एवेति । 'प्रत्यहंस्वांयदिस्मे'त्यत्र किलार्थः स्मशब्दः' ''नैव कश्चिद्धि तस्मात्'' इत्यत्र हिशब्द इत्यर्थः ॥ १२ ॥

नास्मै ॥ अकिरदिति । विक्षेपार्थकात् किरतेर्लङि तस्य तिपि इकारलोपे शप्रत्यये अडागमे 'ऋत इद्धातोः' (७।१।१००) इति इत्वे रपरत्वे चाकिरदिति रूपम् ॥ १३ ॥

अहेर्यातारम् ॥ स्तनतेरिति । अस्मात् यतुच्प्रत्यये आदिसकारलोपे तन्यतुरिति रूपम् । ननु मि (ह्) शब्दस्य हकारान्तत्वात् मिहित्युक्तेति भाव्यं कथमिहेत्युक्तेति भाष्ये प्रयोग इत्यत आह । अकार उच्चारणार्थ इति । ननु मिहेः सेचनार्थत्वात् वक्तृत्वशक्तिः कथं मिह्शब्दार्थतया व्याख्यातेत्यत आह । शक्त्या हीति । मिह्यते सिच्यते वागनयेति मिह् शक्तिरिति भावः । तामेव शक्तिं दर्शयति । जन्मान्तरवासनेति । ह्रादुनिरिति । ह्रादतेरुनिप्रत्यये ह्रादुनिरिति रूपम् । असंगतीति । उत्तरार्धस्य पूर्वार्धेनासङ्गतिपरिहारायेत्यर्थः । हेतौ शतृप्रत्यय इति । अर्जयन्वसतीत्यत्रेव फले शतृप्रत्यय इत्यर्थः ॥ १४ ॥

इन्द्र ॥ अत्रैवशब्देनेति । अस्मत्कृतव्याख्यानपर्यालोचनायां इयं ऋक् ईश्वरविषयैव । बहिर्विषयतया व्याख्यानं शिष्यैरेवोह्यतामिति सूचयतीत्यर्थः ॥ १५ ॥ ३८ ॥

(रूपावतारः)

इति श्रीमत्सत्यनिधितीर्थश्रीचरणचरणाराधकश्रीमत्सत्यनाथयतिविरचिते ऋग्भाष्यटीकाविवरणे रूपावतारे प्रथमाष्टके द्वितीयोऽध्यायः ॥

## पदार्थप्रकाशिका

दासपत्नीरहिगोपा अतिष्ठन् । पणयो नाम दैत्यजातिविशेषाः तन्मध्ये बलनामक एव पणिर्विवक्षित इत्याशयेन पणिं विशेषेण बलेन इत्युक्तम् । गुप्ता इति । रक्षिता इत्यर्थः । वृत्रः स्वयं निरुध्य रक्षणार्थम् अहिं स्थापितवानिति भावः । ननु विरुद्धा असन्नहिनेति भाष्येऽहिना निरुद्धा इत्येवान्वयसम्भवादहिनेत्यत्र गुप्ता इति शेषपूरणं निरुद्धा इत्यत्र वृत्रेणेतिशेषपूरणं च किमर्थमित्यत आह । अन्यथेति । उक्तरीत्या शेषपूरणेन व्याख्यानाकरण इत्यर्थः । असङ्गतिः स्यादिति । पूर्वार्धे अहिगोपा इत्यहिनामकदैत्यनिरुद्धत्वमपां प्रतिपादितम् । उत्तरार्धे च वृत्रं जघन्वानिति वृत्रस्य हन्यमानत्वं प्रतिपाद्यते । न ह्येतत्सम्भवति । अन्योऽपां निरोद्धाऽन्यस्तु हन्यमान इत्यस्यासङ्गतत्वात् । अतः पूर्वार्धेऽपि वृत्रनिरुद्धत्वं प्रतिपादनीयमेवात उक्तरीत्या शेषपूरणेन व्याख्यानं कर्तव्यमित्यर्थः ।

पूर्वार्धे अहिवृत्रयोरुभयोरपि निरोद्धत्वमभिप्रेतमित्यत्र भाष्यकारीयं ज्ञापकमाह । अत एवेति । पूर्वार्धयोरसङ्गतिपरिहारार्थमेवेत्यर्थः । उभयोरपि निरुद्धत्वे सति एकस्य वृत्रस्यैव हन्यमानत्वोक्तेरसङ्गतत्वादत स्तत्परिहारायैव तमहिं चेत्युक्तमिति भावः । तदेति । यदा निरुद्धा आसन्स्तदेत्यर्थः । अनुक्त इति । उत्तरार्धे हन्यमानत्वेनानुक्त इत्यर्थः । स्वयमेवेति । वृत्रं जघन्वानितिवत् अहिं जघन्वानिति हन्यमानत्वेन अहिः स्वयमेव श्रुत्या कण्टरवेण कस्मान्नोक्त इत्यर्थः । अनायासेनेति । शक्रेणानायासेन वृत्रस्य हतत्वात् श्रुत्या कण्ठरवेण वृत्रं जघन्वानिति वत् अहिं जघन्वानिति हन्यमानत्वेन वृत्र उक्तः अहेस्त्वनायेसेनैव हतत्वाच्छृत्या कण्ठरवेण हन्यमानतया नोक्त इत्यर्थः । द्वारम् । साधनभूतम् । यः कोऽपीति । हरिभक्त इत्यर्थः ।

आस्तिक्यादिबुद्धिवृत्तिविशेषेषु पत्नीशब्दः जीवेन सहावस्थितत्वाभिप्रायेण औपचारिक इत्याह । पत्न्य इवेति । तथाच दासस्य विष्णोर्भक्तस्य कस्यचित् पत्न्य इव पत्न्यः आस्तिक्यबुद्ध्यादिरूपाः वृत्राहिशब्दवाच्या ज्ञानसंशयाभ्यां निरुद्धा अतिष्ठन् । तदा भगवान् भक्तेषु सन्निहितः सन् वृत्रमहिं च तच्छब्दवाच्यमज्ञानादिकं जघन्वान् सन् यत् अपां शुभकर्मणां बिलं द्वारं साधनभूतं आस्तिक्यबुद्ध्यादिकं ताभ्यामपिहितमासीत् तदा ववार तत उद्घाटयामास भक्तानां बुद्धावास्तिक्यादिकमुत्पाद्य तत्पूर्वं शुभकर्माणि कारयित्वा ज्ञानादिकमुत्पादित वानित्येवमध्यात्मम् ऋक्तात्पर्यं द्रष्टव्यम् ॥ ११ ॥

(पदार्थप्रकाशिका)

अश्वो वारो अभवस्तदिन्द्र । अश्वसम्बन्धीति । अश्वकर्मकनिवारणक्रियाकर्त्तेत्यर्थः । निवारकोऽभव इति । तदश्वनिवारणादिना तत्पराभवं सम्पादितवानसीति भावः । ऋच्यनुपात्तो वाली वेति दृष्टान्तः किमर्थमुक्त इत्यत आह । प्रत्यायनायेति । शिष्यबोधनायेत्यर्थः । विशिष्य वालिन एव दृष्टान्ततयोपादानेन सूचितप्रमेयं दर्शयति । यथा वालीति । तानपवाहयसीति । रथिकमूह्य यथा परावृत्य गच्छेयुस्तथा करोषीत्यर्थः । पूर्वं वारो वारक इति व्याख्यातमिदानीं वारो वाहकः सारथिः प्रेरणादिकर्तृत्वादित्येव वारशब्दार्थभेदमात्रमङ्गीकृत्याह । यद्वेति । पराङ्मुखतयेति । तथाच त्वं अश्ववारः पराङ्मुखतयाऽश्ववाहकः सारथिरभवः तद्वत् अश्वप्रेरणकर्ताऽभव इति यावत् । यथाश्वाः स्वयमेव पराङ्मुखाः सन्तो रथिकमेवोह्य गच्छेयुस्तथाऽश्वानां वाहकः प्रेरको अभव इत्यर्थः । वाशब्दार्थभेद एव तात्पर्यम् अर्थस्त्वेक एवेति ज्ञातव्यम् ।

ननु तर्हि प्रत्यहन्निति प्रकारविषयत्वप्रतीतेः कथमेतदित्यत आह ।। ततश्चेति । अत एवेति । भगवतस्तद्धननाविषयत्वे हेतुमैच्छदित्येवार्थो विवक्षितो यतोत एवेत्यर्थः । पूर्ववदेव पूर्ववाक्ये किलार्थः स्मशब्दः अत्रापि प्रतिहर्ता नैव कश्चिद्धीति वाक्ये भगवत्प्रतिहन्ता कश्चिन्नैवास्तीत्येतत्प्रसिद्धमिति । प्रसिध्यर्थको हिशब्द उपात्त इत्यर्थः । तात्पर्यमिति । शूर एव हि बलित्वाज्जयतीति भावः । पुनः श्रुतायामजय इति क्रियायां कर्मतया हिरण्यमिति शेषः कस्मात्कर्तव्यः सोममजय इत्येवान्वयः कस्मान्न स्यादित्यत आह ।। सोमस्य परकीयत्वादिति । लोके परकीयस्यैव जयः प्रसिद्धो न स्वकीयस्यैव सोमस्तु न परकीयः किंतु भगवदर्थमेव यजमानेन निर्मिततया स्वीय एवातो जये न सोमस्य कर्मता किंतु परकीयस्य हिरण्यस्यैवेत्यर्थः ।

ननु नव च यन्नवति च स्रवन्तीरित्युत्तरत्रैकोनशतनदीनां वक्ष्यमाणत्वात्सप्तसिंधूनिति कथमुक्तमित्यत आह ।। प्रधाननदीरिति । गोदा गंगा यमुना नर्मदा तथा । कावेरी कृष्णा वेणा च नदीनां प्रवराः स्मृता इत्यरण्यपर्वभारतोक्ताः सप्तप्रधाननदीत्यर्थः ।। गन्तुमिति । मिश्रीकर्तुमित्यर्थः ।। तुमर्थ इत्यादिनेति । तुमर्थे सेसेन् असे असेन् कसे कसेन् अध्यै अध्यैन् शध्ये शध्येन् तवेत्तवेन् तवेन इति सूत्रेण तुमर्थे तवे प्रत्यये सर्त्तवे इति भवतीत्यर्थः ।। अमुच इति । प्रतिबन्धात् अमोचयः प्रवर्तितवानसीत्यर्थः । अभिप्रायमाह ।। नदीजलैरिति । संयोजयितुं मिश्रीकर्तुम् ।। १२ ।।

नास्मै विद्युन्न तन्यतुः सिषेध ।। अस्य प्रयोजनसिद्धिमिति ।। अहिनामकदैत्यस्य त्वदुपहतिरूपप्रयोजनस्य सिद्धिमित्यर्थः । स्वयं सम्यक्पदार्थकथनपूर्वकऋगर्थमभिधाय भाष्यतात्पर्यमात्रकथनमित्याह ।। सर्वस्य तात्पर्यमाहेति । यज्ञवेद्युपमां यज्ञवेदिसदृशीम् । पश्चात्काल इति । अहिप्रयुक्तायुधजातस्य वैय्यर्थ्यानन्तरमित्यर्थः ।। १३ ।।

(पदार्थप्रकाशिका)

अहेर्यातारं कमपश्य इन्द्र ।। अन्यो न पश्यतीत्युक्त्वा त्वमेव नापश्य इत्युक्तौ प्रयोजनं दर्शयति । सकललोकवृत्तान्तेत्याहुः । वस्तुतस्तु मम प्रतियोद्धा मयाऽदृष्टोऽप्यन्येन दृष्टः किं न स्यादित्यतः कैमुत्येन तत्प्रतिषेधति । सकललोकवृत्तान्तविदापित्वयेति । किम्वन्येनेत्यभिप्रायः ।। एवंभूतमपीति । त्वद्व्यतिरिक्तप्रतियोद्धृरहिततया त्वन्मनस्यपि भयापादकतयातिप्रबलमपीत्यर्थः ।। गमेर्डो इति । गम्लृ गतौ अस्माद्भावे डोप्रत्यये डित्वाट्टिभूतस्याम् इत्यस्य लोपे ग् ओ गो इति भवतीत्यर्थः । गमनार्थत्वप्रतीतिनिरासायाह ।। गत्यर्थाश्चेति । मिथ्याबोधत इति । ज्ञानाभिभावकादित्यर्थः । तात्पर्यमाह । मिथ्याज्ञानेन इति । अभिभूतानि । समीचीनज्ञानानि । तत् मिथ्याज्ञानम् । शब्दादिविषयजातात्मनोऽजय इत्यस्याभिप्रायमाह । विषयैरिति । अध्यात्मं न्याये मार्गे गन्तुं बहिष्टमहत्तत्वादिप्रेरणाकथनमसंगतमत आह । महत्तत्वांशमित्यादि । अहंकारं मनः प्रसादरूपम् । भूतानामंशाः घ्राणाद्याः देहस्थानिति । महत्तत्वादीन् सप्तेत्यर्थः । सर्वत्रेति । प्रतिवक्तॄणां विपरीतामतिर्विद्युत् प्रतिवक्तॄणां वक्तृशक्तिर्मिहेत्युक्ता प्रतिवक्तॄणां ह्रादुनिर्हुंकृतिरिति सर्वत्र सम्बध्यत इत्यर्थः ।।

प्रमाणेति । प्रमाणानां दूषणाभासरूपाः प्रयोगा इत्यर्थः । वस्तुतः प्रमाणानि दूषणाभावादाभासेत्युक्तम् ।। शब्दार्थस्येति । शब्दार्थकस्येत्यर्थः । तथाच स्तन् शब्देऽस्माद्भावे औणादिके यतुप्रत्यये स्तन्यतुरिति रूपमित्यर्थः । ऋचि तन्यतुरित्यस्य स्तन्यतुरित्यर्थो द्रष्टव्यः । सकारलोपश्छान्दसः । ननु ऋचि मिहमित्यस्य मिह मिहौ मिह इति हलन्तमिहशब्दद्वितीयैकवचनत्वात् भाष्ये च मिहप्रातिपदिकार्थमात्रस्यैवोच्यमानत्वेन वक्तृशक्तिर्मिह इत्युक्तेति वक्तव्यं मिहेत्युक्तेति तु कथं नह्ययमाकारान्तो मिहशब्दस्तथाच ऋग्भाष्ययोः विसंवाद इत्यत आह ।। अकार उच्चारणार्थ इति । भाष्ये हकारस्योपरि विद्यमानो यो अकारः सः सुखोच्चारणार्थमेव प्रयुक्तम् । न तु मिहशब्द इत्यभिप्रायेण येन विसंवादः स्यात् । तथाच मिहेत्युक्तेत्येव भाष्येऽभिप्रेतमिति भावः ।

ननु मिहित्यस्य सेचनमात्रार्थकत्वात् वक्तृत्वशक्तेः कथं मिहशब्दार्थत्वमित्यतस्तदुपपादयति ।। शक्त्या हीति । वक्तृतायाः शक्तिर्नाम केत्यतः सैव वक्तृतायाः शक्तिरित्यर्थः । अयं भावः । जन्मान्तरवासन एवोपद्बलिता वाक्प्रवर्तते नत्विहजन्मन्यभ्यासमात्रेण । जन्मान्तरवासनावतां इह जन्मन्यभ्यासाकरणेऽपि वक्तृतायाः उपलम्भात् । जन्मान्तरवासनाशून्यानां इहजन्मन्यभ्या-सकरणेऽपि वक्तृताया अनुपलम्भाच्च इत्यन्वयव्यतिरेकसिद्धमिति । कथं हुंकृते ह्रादुनि

**(पदार्थप्रकाशिका)**

शब्दार्थत्वमित्यत आह। ह्रादतेरिति। अव्यक्तशब्दो नाम वर्णाव्यञ्जकः शब्दः केवलं ध्वनिरिति यावत्। तदर्थत्वात् तदर्थकत्वादित्यर्थः। तथाच हुंकृतेरपि तथात्वाद्ध्रादुनि शब्दार्थत्वं युक्तमिति भावः। विद्युदादयो विपरीतमतिप्रभृतयः। ननु बाह्यविद्युदाद्यायुधानामहि- नामकदैत्यनिसृष्टत्व- मुक्तमध्यात्मं विद्युदादिशब्दवाच्यानां विपरीतमत्यादीनां कथमहिनिसृष्टत्वमित्यतस्तत्तात्पर्यकथनाय तमःसमुत्था इति भाष्यं प्रवृत्तमित्याशयेनाह॥ अहिरकिरदित्यस्यार्थ इति।

ननु अहिशब्दस्याध्यात्मं संशयमुत्था इति वक्तव्यं समुत्था इति कथमुक्तिमिति चेत्। उच्यते। अज्ञानवाचिनो भाष्यस्थतमःशब्दस्य तत्कार्यसंशयोपलक्षकत्वात्। तथाच तमःसमुत्था इत्यस्य संशयसमुत्था इत्यर्थो द्रष्टव्यः। तम इत्युक्तिस्तु विपरीतमित्यादौ तमःशब्दवाच्याज्ञानस्यैव मूलकारणत्वाभिप्रायेणेति ज्ञातव्यम्। अन्ये तु अध्यात्मविपरीतमत्यादीनामहिशब्दोदितसंश- यसमुत्थत्वाभावेन ऋक्संस्थो हिशब्द एव वृत्रशब्दोदिताज्ञानापरपर्यायतमःशब्दोपलक्षक इत्यभिप्रेत्य तमःसमुत्था इत्युक्तमिति ज्ञातव्यमित्याहुः। तन्न। जयत्येनं संशयं अहेरभिगतासंशयं जघ्नुष इति भाष्यस्थसंशयाहिपदयोरस्वारस्यात्। संशयकृतोपद्रवेति। अहिशब्दवाच्यसंशयं समुत्थवि- परीतमत्यादि- रूपोपद्रवेत्यर्थः॥ कथमेतदिति। जयत्येनं संशयं वासुदेव इति भाष्यं कथमित्यर्थः॥ अहेरित्यर्धस्यार्थ इति। अहेर्यातारं कमपश्य इन्द्रेत्यस्यार्थ इत्यर्थः। तवैवेत्यादिभक्तहृदिस्थे त्वय्येव तदीयसंशयनाशाय प्रवृत्ते सतीत्यर्थः। अन्येषु त्वदन्येषु। तथाच कार्यमेवात्र मानमित्याशयः।

नन्वन्तरिक्षस्यैकत्वाद्रजांसीति बहुवचनं कथमित्यत आह॥ बहुवचनं चेति। प्रदेशा अंशाः। तेषां च बहूनां सत्वात्तदभिप्रायं रजांसीति बहुवचनमिति भावः। सुतरां वेगीतिवर्तते॥ तदुपपादनमिति। भयमतिवेगोपपादकमित्यर्थः॥ तथेति। तद्वदित्यर्थः। अत्र नदीतरणं नाम नानानदीः प्रति गमनमेव विवक्षितमिति ज्ञातव्यम्॥ असङ्गतीति। त्वदन्योऽहेरभिगन्ता नास्तीत्यत्र एकोनशतनदीतरणस्योपयोगाभावेन तदुक्तेरसङ्गतत्वात् इत्यर्थः॥ हेतौ शतृप्रत्यय इति। अयमर्थः। घ्नन् इत्ययं शब्दस्तावत् शतृप्रत्ययान्तः शतृप्रत्ययश्च लक्षणाहेत्वोः क्रियाया इति सूत्रेण हेतौ द्योत्ये विहितः हेतुर्निमित्तम्। अर्जयन् वसतीत्युदाहृतम् अर्जनार्थं वसतीति तदर्थः। तद्वत्प्रकृतेऽपि दैत्यघ्नन् दैत्यहननिमित्तं तद्धननार्थमिति यावत्। त्वं नवनवतीर्नदी अतर इति भाष्ये दैत्यं तामसमित्यर्थो द्रष्टव्यः। दैत्यत्वं च तामसत्वादित्युक्तत्वात्। बाह्येति। अध्यात्मेतरविषयत्वेत्यर्थः।

नन्वनेन नदीतरणस्याहिवधे कथमुपयोग उक्त इत्यत आह। न ह्यन्यस्येति। अन्यस्य नदीतरणमकुर्वत इत्यर्थः। तथाच नानानदीद्वारनिरोधकाहि- हननरूपं कर्म नानानदीतरणमकुर्वतो

न संभवति नानानदीतरणमहिवधे उपयुक्तं भवत्येवेति भावः । अन्ये तु अहिदैत्यहननार्थं यदनेकनदीतरणाख्यं कर्म तत् त्वदन्यस्य न संभवति यस्मात्तस्मात् अहेर्यातारं त्वामन्तरा कमपश्य इति भाव इत्याहुः । तत्तुच्छम् । नदीतरणस्याहिवधे कथमुपयोग इत्यवतारिकाविरोधात् । अन्यस्येत्यस्य त्वदन्यस्येति व्याख्याने नदीतरणस्याहिवधे उपयोगाभावादिति ध्येयम् । देवानामिति । स्रवन्तीरित्यर्थः । तावतीरिति । त्वं देवानां नवनवतित्वात्तदीयसृत्यापगानामपि तावत्त्वमित्यर्थः ॥ अहेर्यातारं कमपश्य इत्यस्य तात्पर्यम् अतस्त्वमेवेति । यदि त्वं देवानाहृदि ज्ञानादिकमुत्पाद्य तदीयं संशयं न हन्यास्तर्हि तेषां सृत्यपगाभ्यस्तरणं नकुर्याः मुक्तान्नकुर्या इति यावत् । अतस्तेषां देवानां सृत्यपगातारणेन कार्येण तद्धृदि ज्ञानादिकमुत्पाद्य त्वमेव संशयस्य हन्तेति ज्ञायते अन्यस्यैतादृशकर्मासम्भवादिति भावः ॥ प्रयोजककर्तारमिति । त्वं नवनवतिं देवान् संसारादेतत्तारय इत्यत्र देवा एव तरणे स्वतन्त्रकर्तारः ईश्वरस्तु प्रयोजककर्तृत्वेनैवाभिहित इत्यर्थः ॥ स्वतन्त्रेति । अन्तरिक्षं प्रति तरणे इयं न तस्यैव स्वतन्त्रकर्तृत्वादित्यर्थः । कथमुदाह्रियत इत्यन्वयः । तथाच दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः ।

तथा तामिति । तथेत्यस्य तामित्यर्थ इत्यर्थः । कथमनेनोक्तशङ्कापरिहार इत्याशङ्कायां देवानां तरणकर्तृत्वांशे अतो न दृष्टान्तदार्ष्टान्तिकयोः वैषम्यमित्याह । एतदुक्तं भवतीति । तथातरत् इति । भीतश्येनवद्वेगेन संसृत्यपगातरणं कुर्वतो देवानित्यर्थः ॥ तारयामासेति । ज्ञानादिसंपादनेन संशयहननादिना देवानां ईश्वरः सहकारी जात इत्यर्थः ॥ दोषदृष्टान्तदार्ष्टान्तिकयोर्वैषम्यरूपः श्रूयते । ऋचीति शेषः ॥ एतद्व्याख्यानमिति । तारयामास देव इति व्याख्यानमित्यर्थः ॥ भाष्ये उक्त एव ब्यत्यास इति । व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरित इति प्रथमाध्याय उक्त इत्यर्थः । प्रकृते कस्मिन्नर्थेऽयं व्यत्यासो व्याख्येय इत्यत आह ॥ अत्र त्विति । भीतश्येनवत्तरतो देवानतारय इत्यत्र तरणे देवानामेव स्वातन्त्र्यं प्रतीयते तदयुक्तम् । न ऋते त्वत्क्रियत इतीश्वरव्यतिरेकेण कस्यापि कर्मणोऽभावात् अतो देवकर्तृकतरणरूपक्रियायामपि भगवानेव स्वातन्त्र्येण कर्त्तेत्येवं दर्शयितुम् अतर इत्येतत् व्यत्यासेन तारयामासेति व्याख्यातमित्यर्थः ॥ विष्णुव्यतिरिक्तामिति । तस्य तारकत्वेन तार्यकोटिनिविष्टत्वाभावादिति भावः । प्रधानेन मुख्यप्राणेन । नवप्रजापतयो दक्षाद्याः ॥ ऋभवस्त्रय इति । ऋभुर्विश्वा वाज इति त्रय इत्यर्थः ॥ विश्वा जयो ऋभुशब्दश्छत्रिन्यायेनेति प्रागुक्तमनुसन्धेयम् ॥ १४ ॥

(पदार्थप्रकाशिका)

इन्द्रो यातोऽसितस्य राजा ।। ईश्वरविषयैवेति ।। नाध्यात्मविषयेत्येवार्थो न त्विन्द्रविषयाऽपि नेति। अवसितस्य शमस्येत्यादिपदानां मुक्तवर्गमुक्त्यादिलक्षणार्थविवक्षायामस्या ऋचः केवलेश्वरविषयत्वं एव। यदा तु यातो जङ्गमस्येत्यादिपद्यर्थान्तरस्य विवक्षा तदा प्रसिद्धेन्द्रपरत्वेऽपि न दोषः ।। अत एव यातोजङ्गमस्येत्यादिना प्रसिद्धेन्द्रेऽपि योजना प्रदर्शयिष्यत इति द्रष्टव्यम् ।। अत्रोक्तेति। एतदध्यायोक्तेत्यर्थः। उपसंहाररूपत्वादस्या ऋच इति भावः। एतदुगुक्तेत्यर्थ इत्यन्ये ।। ज्ञातो भवतीति। या प्रापणे प्रापणं गतिः गतिश्च ज्ञानमतः प्रापणार्थाद्यातेः कर्मणि क्तप्रत्यये यात इत्यस्य ज्ञात इत्यर्थः संपद्यते। तथाच यत्तदद्रेश्यमित्यादिश्रुत्यनुसारेण परोक्तं यत्सर्वथा अविदितत्वं तत् निराकर्तं ज्ञेयत्वमत्र विधीयतामित्युक्तं भवति। तर्ह्यज्ञेयत्वश्रुतेः का गतिरित्यत आह ।। अज्ञेयत्वोक्तिस्त्विति। त्वत्प्रसादेन विनेति। भक्तैरपीति शेषः। शृङ्गशब्दस्य प्रकाशवाचित्वे निरुक्तं प्रमाणमाह। तथा चाहेति। शृङ्गप्रकाश इत्येतन्मात्रस्यैवात्र उपयोगस्तद्वतो नक्षत्रादेरिति तु इन्द्रपक्षे व्याख्याने उपयुक्तं भविष्यति। चर्षणिपदस्य प्रजासामान्यवाचित्वेऽपि मुक्तप्रजानामवसितपदेन गृहीतत्वात्तदतिरिक्तप्रजाविषयमेव। अन्यथा पुनरुक्तिप्रसङ्ग इत्यभिप्रेत्याह ।। मुक्तातिरिक्तानामिति। ऐश्वर्यकर्मायमिति। अयं क्षयधातुरैश्वर्यार्थक इत्यर्थः ।। ईश्वरो भवतीति। तासां मुक्तातिरिक्तप्रजानामीश्वरो भवतीत्यर्थः। सव युक्तायुक्तप्रजास्वामित्वम्। नेमितरान्नेति। चक्रान्तिमभागीयं परितो विद्यमानं लोहमयं बन्धकं नेमिरित्युच्यते। रथचक्रस्य धाराः अराणीत्युच्यन्ते एवंच नेमिर्यथा अराणि परिभवति वशीकरोति स्वान्तर्गमयति तदाधारतया वर्तत इति यावत् तद्वदित्यर्थः। सर्वाणि भूतानि। युक्तायुक्तसर्वभूतानि। परिभवार्थप्रतीतिनिवारणा- याह वशीकृतवानिति। अवशितादिपदस्योक्तार्थविवक्षायां केवलभगवत्परत्वमुक्तम् तदन्यार्थविवक्षायां तु प्रसिद्धेन्द्रपरत्वेऽप्यविरोध इत्यभिप्रेत्येमां ऋचं प्रसिद्धेन्द्रेऽपि योजयति।। यातो जङ्गमस्येत्यादिना ।। ईश्वरपक्षयोजनायां यात इत्येतत् ज्ञात इति प्रथमान्तत्वेन व्याख्यातम्। इदानीं यान् यान्तौ यान्त इति यात्शब्दस्य षष्ठ्यैकवचनमेतदित्यभिप्रेत्य यातो जङ्गमस्येत्युक्तम् तथाच या प्रापण इति धातोः प्रापणादिप्रवृत्तिं कुर्वन् जङ्गमो यात इत्युच्यते। तस्य यातो जङ्गमस्य चेतनस्येत्यर्थः। शान्तेरिति। सुखस्येत्यर्थः। पूर्वोक्तं निरुक्तवचनं मनसि निधायाह ।। शृङ्गिणोनोनक्षत्रादेरिति। शृङ्गप्रकाशस्तद्वतो नक्षत्रादेः राजेत्यर्थः। प्रसिद्धेन्द्रे वज्रबाहुरित्यस्य ज्ञानात्मकबाह्वादिमानिति पूर्वोक्तार्थासम्भवादर्थद्वयमाह ।। वज्रमिवेति ।। वज्रहस्त इति वेति। वज्रबाहुरित्यर्थः। तथाच वज्रयुक्तो बाहुर्हस्तो यस्यासौ वज्रबाहुः। स इत् स एवेन्द्रः। उनित्यमेव चर्षणीनां स्वावरप्रजानां

क्षयति ईश्वरो भवति तत्र दृष्टान्तः नेमिरराह्न अराणीवता । तानि स्थावरभूतानि परिबभूव वशीकृतवानित्येवमिन्द्रपक्षेऽवशिष्ट- ऋग्योजना द्रष्टव्येत्यशेषमतिमङ्गलम् ॥ १५ ॥ ३८ ॥

श्रीमदृग्भाष्यटीकायां श्रीनिवासेन दुर्गमः ।
विवृतो द्वितीयाध्यायो गुरूणां सत्कृपाबलात् ॥

॥ इति श्रीमदृग्भाष्यटीकाविवृतौ पदार्थप्रकाशिकाख्यायां द्वितीयोऽध्यायः ॥

## पदार्थदीपिका

दासपत्नीः । सुपां सुलुगिति जसः शसादेशः पूर्वसवर्णदीर्घ इत्यर्थः । अहिगोपाः ॥ गुपू रक्षणे आयादय आर्धधातुके वा इत्यायप्रत्ययः । क्विप् आतोलोपः । वेरपृक्तलोपात् यलोपो बलीयान् इति पूर्वं यकारलोपः । नचाचः परस्मिन् इत्यतो लोपस्य स्थानिवत्वं न पदान्तद्विर्वचनेति प्रतिषेधात् । निरुद्धा आसन्नहिनेति भाष्यं शेषं संपूर्य व्याचष्टे । गुप्ता इति शेषः । वृत्रेणेति शेष इति च ॥ ननु यथाभाष्यमेव अन्वयोक्तिः किं शेषपूरणेन इत्यत आह । अहिना अनिरुद्धा इत्यङ्गीकारे निरोधकतया पूर्वार्ध उक्तस्य अहेरेव उत्तरार्धेहन्तव्यतया वक्तव्यत्वात् तदनुक्तवृत्रहननकथनस्य असङ्गतत्वप्रसङ्गात् इत्यर्थः । अत एवेति पूर्वार्धसंगतिपरिहारार्थमेवेत्यर्थः । अन्यथा पूर्वार्धे अहे रोधकत्वेन प्रकृतत्वात् उत्तरार्द्धे तद्धननोक्त्यभावसङ्गतिः स्यादिति भावः । जघन्वान् इति ॥ हन्तेर्लिटः क्वसुः अभ्यासादुत्तरस्यहकारस्य कुत्वं क्रादिनियमप्राप्तस्येटो विभाषा गमहनेत्यादिना विकल्प्य विधानादिति भावः । संहितायां नकारस्य रुत्वानुनासिकावुक्तौ ॥ अनायासेनेति ॥ अनायासेन हतत्वात् न ऋचि स्वयमेवोक्त इति भावः ॥ ११ ॥

न कर्मत्वमिति ॥ न जयकर्मत्वमित्यर्थः । परकीयस्यैव वस्तुनो जयकर्मत्वात् अतादृग्रूपस्य सोमजयकर्मत्वमनुपपन्नमिति हिरण्यमिति शेषपूरणमावश्यकमिति भावः ॥ १२ ॥

अकिरदिति ॥ कृ विक्षेपे तुदादिभ्यः शः । ऋत ईद्धातोरितीत्वम् । जिग्ये । संलिटोर्जेरित्यभ्यासादुत्तरस्य जकारस्य कुत्वम् ॥ १३ ॥

जघ्नुष इति ॥ हन्तेर्लिटः क्वसुः । षष्ठ्येकवचनम् । वसोः सम्प्रसारणमिति सम्प्रसारणम् । परपूर्वत्वम् । शासिवसिघसीनां चेति षत्वम् । कारसिद्धं इत्येकादेशस्य असिद्धत्वात् षत्वं तं प्राप्नुयादिति वाच्यं, संप्रसारणंङि त्सु प्रतिषेधो वाच्य इति असिद्धवद्भावस्य प्रतिषिद्धत्वात् गमहनेत्यादिना उपधालोपः । न च असिद्धवदत्राभात् इति संप्रसारणस्य असिद्धवद्भावः

(पदार्थदीपिका)

भिन्नाश्रयत्वात्। संप्रसारणं हि षष्ठ्येकवचने उपधालोपस्तु क्सावितिभिन्नाश्रयत्वादित्याहुः। स्रवन्तीः शप् शनोर्नित्यमिति मुमागमः ॥ १४ ॥

सः सोचिलोपेचेदिति संहितायां सोर्लोपः। शेश्छन्दसि बहुळमिति शेर्लोपः। बभूव भवतेर्लिटो णलि भवते र इत्यभ्यासस्य अत्वम्। भादिति तस्य असिद्धत्वात् उवङादेशः शंकनीयः उक् युङावुव ङि यङोः सिद्धौ वक्तव्यौ तत्प्रति तस्यासिद्धत्वात्॥ १५,३८॥

व्यासं चिन्तयते तमेव श्रुणुते कर्तेति तं चेहते।
तेनेवैधत इङ्क्ते स्पृहयते तस्मै वरं याचते।
तन्नो दर्शयते तमेव श्रुणुते तस्य द्विषं स्पर्धते तं गच्छे शरणं गुरुं मम परं व्यासैकवृत्तिं सदा॥
इति द्वितीयाध्यायः।

## टीकाविवृतिः

दासपत्नीः ॥ श्रौतं पणिनेवेति पदं बलेनेति भाष्येण योजयति ॥ पणिविशेषेणेति ॥ पणीतिदैत्यगणनाम क्रोधवशादिशब्दवत्। अतो बलनामकेन पणिगणांतर्भूतेनेत्यर्थः ॥ गोपो गोप्तेति ॥ आच्छादकः निरोधक इति यावत्। गुपगोपनकुत्सनयोरिति धातोः ॥ अन्यथेति ॥ श्रुतौ वृत्रेणापीति शेषोक्त्यभावे अहिनैव निरुद्धा इत्यङ्गीकार इत्यर्थः। पूर्वार्धे अपामहिनिरुद्धत्वस्योक्तत्वात्तद्वध एवोत्तरार्धे वक्तव्यः तद्विहाय वृत्रहननोक्तावसंगतिःस्यादित्यर्थः। ननु वृत्रवधोक्तिसामार्थ्यादपां वृत्रनिरुद्धत्वोक्तिश्चेत्तर्ह्यहेर्वधानुक्तेरहिगोपा इति व्यर्थमित्यत आह ॥ अत एवेति ॥ असङ्गतिप्रसंगादेव जघन्वानित्यत्राहिं चेत्यध्याहरिष्यतीत्यर्थः। हंतेर्लिटःक्स्वादेशे द्वित्वादावभ्यासाच्चेति द्वितीयहस्य कुत्वे जघन्वानिति रूपम्। वृत्रमहिं च जघन्वान् जघान ततः अपां बिलमपववारेति श्रुतावन्वयमभिप्रेत्य भाष्ये हत्वोद्घाटयामासेति तात्पर्योक्तिरिति भावेनाह ॥ जघन्वान्हत्वेति यावदिति ॥ स्वयमेवेति ॥ श्रुतौ कण्ठत एवाहिमिति कुतो नोक्तमित्यर्थः ॥ अनायासेनेति ॥ वृत्रवधादहिवधे स्वल्पःप्रयत्न इति भावेन कण्ठतोनुक्तिरित्यर्थः। नन्वध्यात्मार्थे वरुणवद्दासःकः शुभकर्मणां पत्नीत्वं च कथमित्यत आह ॥ अत्र दासो यः कोपि पत्न्य इव पत्न्य इति ॥ अत्र दासशब्देन विष्णुभक्तमात्रग्रहणम्। पत्नीशब्द उपचारेण स्त्रीष्विव कर्मसूपकारकत्वार्थ इति भावः ॥ ११ ॥

अश्वयोवारः ॥ आयुधनामैतदिति। पविःसृक इति वज्रनामसु पाठादित्याशयः। संग्रामनामस्वस्य क्वाचित्कपाठाश्रयेणाह ॥ युद्धनामैव वेति ॥ अश्व्योऽश्वसंबन्धीति ॥ तत्र भव इत्यर्थे

(टीकाविवृतिः)

दिगादिभ्यो यदिति यत्प्रत्यय इति भावः ॥ वारो वारक इति ॥ वृञो भावे घञि वारो निवारणमस्यास्तीत्यर्श आद्यचि वारशब्दस्य वारकार्थकत्वादिति भावः ॥ प्रत्यायनायेति ॥ बुद्ध्यारोहायेत्यर्थः । न तु वाली वेत्येतच्छ्रौतपदव्याख्यानमिति भावः ॥ अपवाहयसीति ॥ पराङ्मुखं वाहयसीत्यर्थः ॥ यद्वेति ॥ वृङ्संभक्तावित्यतो भावे घञ् । तथा चाश्व्योऽश्वनिष्ठो वारः संभजनं स्वस्वामिवाहकत्वमस्यास्तीत्यर्श आद्यचि वारो वाहकःप्रसिद्ध इत्याशयः । ननु तर्हि प्रतिभटाश्वानां वाहकत्वप्रार्थनमसंगतं स्यादित्यत आह ॥ तदा पराङ्मुखतयेति ॥ पराङ्मुखतया वाहकोश्वःपलायते यथा तथा कुर्विति भावः ॥ ततश्चेति ॥ प्रतिहंत्रभावादेवेत्यर्थः ॥ अत एवेति ॥ प्रत्यहन्नित्यस्य प्रतिहन्तु- मिच्छन्नित्यर्थकत्वादेव पूर्वं प्रत्यहन्स्मेत्युक्तम् । तस्य स्मशब्दस्य किलार्थत्वात्प्रति-हंतास्तीति यदि श्रूयेतेत्यर्थलाभादस्यार्थस्य सिद्धिः । अत्रापि नैव कश्चिद्धीति हिशब्दबलाद्धंतुरभावस्य सिद्धत्वात्तदिच्छामात्रलाभादिति भावः । शूरेत्यस्य तात्पर्यं बलादिति । शौर्ययुतस्यैव बलात्कारकरणसंभवादिति भावः । श्रौतसोमकर्म त्यक्त्वाऽश्रुतहिरण्याध्याहारे हेतुमाह ॥ सोमस्यापरकीयत्वादिति ॥ हविष्ट्वेनेन्द्रस्वामिकत्वस्य सिद्धत्वात्परकीयवस्तुजयोक्तेरे-वोचितत्वादिति भावः । ननु सिंधवः कुल्या इति नदीनामसु पाठात्सिंधुशब्दवाच्यनदीनां पंचमस्कंधे भागवते असंख्यातत्वोक्तेःकथं सप्तत्वोक्तिरित्यत आह ॥ प्रधाननदीरिति ॥ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधु कावेरि जलेस्मिन्सन्निधिं कुर्वित्यत्रोक्ताः । नव च यन्नवतिं चेत्यत्र वक्ष्यमाणैकोनशतप्रधाननद्यन्तर्गताः मुख्यनदीः कावेरी कृष्णवेणी च तुंगभद्रा सरस्वती । गोदा च यमुना गंगा महानद्यः प्रकीर्तिता इत्युक्ता वेति भावः ॥ तुमर्थ इत्यादिनेति ॥ तुमर्थे सेसेनसे असेन्कसेकसेनध्यै अध्यैन्कध्यैकध्यैशध्यैन्शध्यैनूतवैङ्तवेन इत्यनेन तुमर्थे विहितेषु प्रत्ययेषु मध्ये तवेन्प्रत्यय इति भावः ॥ अमुच इति ॥ वृत्रादिप्रतिबन्धादिति शेषः ॥ सोमं संयोजयितुमिति ॥ अभिषवकाले सोमरसाभिवृद्धय इति शेषः ॥ १२ ॥

नास्मै विद्युत् ॥ अन्वयक्रमेण ऋचं योजयति ॥ यद्यदेति ॥ अस्य प्रयोजनसिद्धिमिति ॥ अस्याहेःप्रयोजनस्येन्द्रवधरूपस्य सिद्धिमित्यर्थः । अकिरत् त्वां प्रतिक्षिप्तवानिति ॥ कॄ विक्षेप इत्यतो लङि तुदादित्वाच्छप्रत्यय इति भावः । इदानीं भाष्यं योजयति ॥ सर्वस्य तात्पर्यमाहेति ॥ भाष्यकार इति शेषः ॥ अपरीभ्यः अपराभ्य इति ॥ अःस्यादभावे स्वल्पार्थे इत्येकाक्षररत्नमा-लोक्तेःस्वल्पार्थकेनाशब्देन दूरानात्मोत्तमाःपरा इत्यमरोक्तेर्दूरार्थकपरशब्दस्य समासे वेलाविशेषणत्वात्स्त्रीत्वे गौरादित्वाश्रयणेन ङीषि कालक्षणविवक्षया बहुवचनम् । सुपां सुपो भवन्तीत्युक्तेरधिकरणार्थे पञ्चमीति भावः । तथा चापराभ्यः स्वल्पदूरायां वेलायामित्यक्षरार्थे स्थिते पश्चात्काल इति भाष्यन्तात्पर्यार्थकथनपरमिति भावः ॥ १३ ॥

(टीकाविवृतिः)

अहेर्यातारम् ।। तं प्रतिगन्तरमिति ।। अहेरिति कर्मणःशेषत्वविवक्षायां षष्ठीति भावः । ममासर्वज्ञत्वादहिप्रतिभटादर्शनं किं च स्यादित्यत आह ।। सकललोकेति ।। गमेर्डो इतीति ।। सूत्रेण बहुलोक्तेर्भावे डोप्रत्यय इति शेषः ।। सिंधून्समुद्रानि वेति ।। उदन्वानुदधिःसिंधुरित्यमरोक्तेरिति भावः । महत्तत्वादीनां देहस्थत्वमुपपादयति ।। महत्तत्वांशं चित्तमिति ।। द्युतदीप्तावित्यत इति ।। भावे क्विपि अर्थप्रकाशकत्वसाम्यादिति शेषः ।। सर्वत्र संबन्ध्यत इति ।। विपरीता मतिः शब्दाः वक्तृशक्तिः हुंकृतिरित्येतेष्वित्यर्थः ।। स्तनतेरिति ।। स्तनशब्द इत्यतःस्तनेर्यतुजिति भावे यतुच्प्रत्यये निष्पन्नतन्यतु शब्दस्य शब्दमात्रार्थकत्वोक्त्या अर्थासाधकत्वपरपक्षादूषकत्वसूचनात्प्रमाणाभास-दूषणाभासप्रयोगार्थत्वसिद्धिरिति भावः । ननु मिह सेचन इत्यतः करणे औणादिके क्विपि मिह्यतेऽनयेति मिट्शक्तिःतां मिहमिति श्रौतपदानुवादरूपभाष्ये मिहित्युक्तेति वक्तव्ये मिहेत्युक्तेति कथमुक्तमित्यत आह ।। अकार इति ।। हकारान्तमिहशब्दात्पर अकारःसुखमुखोच्चारणार्थ इत्यर्थः । नन्वध्यात्मपक्षे मिहमित्युक्ता शक्तिर्व्यर्थेत्यत आह ।। शक्त्या हीति ।। अनेन सिक्तेति यौगिकप्रयोगप्रयोजनकथनपरेण वक्तृशक्तेर्भक्तपराभवे साक्षादुपयोगाभावेपि तन्यतुशब्दोक्त-वाक्प्रवर्तकत्वेनोपयोग इति सूचितम् । ननु दुरभ्यासेनापि विपरीतप्रयोगदर्शनात्कथं शक्तेरावश्यकतेत्यत आह ।। नत्विति ।। अभ्यासमात्रस्य नियमेन दुष्टवाक्प्रवर्तकत्वाभावादत्र च तादृशस्यैव भक्तपराभावकत्वादिति भावः । तां शक्तिं दर्शयति ।। जन्मान्तरवासनेति ।। अनादियोग्यतानुसारी जन्मान्तरेष्वनुवर्तमानः संस्कारः शक्तिः । तदुपोद्बलितैव वाक्प्रवर्तत इत्यर्थः ।। हुंकृतिर्ह्रादुनिरिति ।। ह्राद अव्यक्ते शब्द इत्यत उणादयो बहुलमित्युक्तेर्भावे उनिप्रत्यये निष्पन्नह्रादुनिशब्दस्य भक्तभयंकरहुंकारार्थकत्वमिति भावः । अहिरकिरदित्यस्यार्थस्तमःसमुत्था इतीति । यद्यपि पूर्वं वृत्राहिशब्दयोःसत्त्वेन वृत्र शब्देनाज्ञानं गृहीत्वाऽहिशब्देन संशयो गृहीतस्तथाप्यत्र वृत्रग्रहणाभावात्संशयस्य विद्युदादिकारणत्वासंभवादहिशब्देनैवाज्ञानं भाष्ये गृहीतम् । गत्यर्थकहिधातोःक्विप्रत्यये नञ्समासे चाज्ञानार्थकत्वादिति भावः ।। कथमेतदिति ।। एतत्संशयजयवचनं कथम् । विष्णोस्संशयसंबन्धस्यैवाभावेन तत्कृतदुःखाद्यभावात् । न ह्यप्राप्तवैरिजयोक्तिःसंभवतीति भावः । अत्र संशयशब्दोऽज्ञानोपलक्षकः स्वभक्तार्थेति भाष्यस्यायमर्थः । स्वभक्तहृदिस्थो विष्णुः स्वभक्तार्थे स्वभक्तानां मोक्षाख्यप्रयोजनायाहिं संशयं जयति नाशयतीति ।। अहेःसंशयस्येति ।। भाष्ये नाशायेति शेषः अभिगंता प्रवर्तमान इत्यर्थः । हृदि यत्ते इति पादं योजयति ।। यद्यस्मादिति ।। सततस्त्वदीयानामिति शेषोक्तिः । ते जघ्नुष इत्युक्तेर्व्यावर्त्यमाह ।। नत्वन्येष्विति ।। आकाशदेशान्भीत इति ।। भीतःश्येन

(टीकाविवृतिः)

आकाशदेशानतिगच्छेदतितीव्रं गच्छेदित्यन्वयः। श्येनदृष्टांतेनेन्द्रस्य वेगित्वसिद्धेः श्रुतौ भीतग्रहणं किमर्थमित्यत आह ॥ भीतस्तु सुतरामितीति ॥ वेगीति द्योतनायेति शेषः। तदुपादानं भीतशब्दोपादानमित्यर्थः। तदुपपादनमिति पाठे तु भीतग्रहणेन सुतरां वेगीति वेगित्वोपपादनं क्रियत इत्यर्थः ॥ तस्मात्त्वदन्य इति ॥ यस्मादतिवेगेनैकोनशतप्रधाननदीस्तीर्णवानतो बाहुशालित्वादित्यर्थः ॥ असंगतिपरिहारायेति ॥ अहेर्यातारमिति पूर्वार्धेनास्यार्धस्येति शेषः। अहिं घ्नन्नित्यनुक्तौ तु पूर्वार्धे अहेरभिगंत्रभाव उक्तः। द्वितीयार्धे तु नदीतरणं माहात्म्यांतरमुच्यत इति पूर्वोत्तरार्धयोरसंगतिःस्यादिति भावः। एतदुक्तौ कथं सङ्गतिरित्यत आह ॥ हेताविति ॥ लक्षणहेत्वोःक्रियाया इति सूत्रेण क्रियायाश्चिह्ने हेतौ च वर्तमानाद्धातोःपरस्य लटःशतृशानजादेशविधानाद्धेतुशब्दस्य वृत्तिकारैःसाधनफलार्थकत्वस्य व्याख्यानादत्र फलार्थे शतृप्रत्ययः। तथा चाहिं घ्नन्नदीरतर इत्यस्याहिवधार्थं नदीस्तीर्णवानित्यर्थःसंपद्यते। तरणक्रियायाःफलभूता या हननक्रिया तत्प्रतिपादकाद्धन्तेःशतृप्रत्यये गमहनेत्युपधालोपे होहंतेरिति कुत्वे घ्नन्निति रूपमिति भावः ॥ तस्याहेरिति ॥ अहेर्दैत्यनानानदीप्रवृत्तिनिवारकत्वेनानेकनदीषु विद्यमानत्वेन सर्वनदीतरणाभावे तत्र तत्रस्थाहेर्वधासंभवादिति भावः ॥ नह्यन्यस्येति ॥ अहिवधार्थं तं प्रत्यनभिगन्तुर्न हि नानानदीतरणाख्यं कर्म संभवति अहिवधार्थेन नानानानदीतरणेन त्वदन्योऽहिं प्रत्यभिगन्तानास्तीति ज्ञायत इति भावः। नन्वीश्वरपक्षे कथं संसारनदीनामेकोनशतत्वम्। संसारत्वेन रूपेण संसारस्यैक्यात्। संसारिविवक्षायां तु संसारिणामानंत्यादित्यतः प्रधानसंसारिविवक्षयैकोन शतत्वमित्याशयेनाध्याहारेण योजितं भाष्यं व्याचष्टे ॥ तावतां नवतेर्नवानां चेति ॥ इति तात्पर्यमिति ॥ विष्णोः संसाराभावात्तत्तरणस्य बाधितत्वादतर इत्यस्याणिजर्थे तात्पर्यमित्यर्थः। एवैतदर्थं योजयन्पूर्वार्धेन सङ्गमयति ॥ योजनात्त्विति ॥ अतस्त्वमेवेति ॥ संशये सति संसारतरणासंभवादिति भावः ॥ प्रयोजककर्तारमिति ॥ स्वतन्त्रकर्तृप्रेरकस्य प्रयोजककर्तृत्वात्तमीश्वरं दार्ष्टान्तिकमुक्त्वा श्येनःस्वतंत्रकर्ता दृष्टान्तीक्रियते अतो विषमोयमुपन्यास इत्यर्थः ॥ तथा तामिति ॥ तामिति शेषोक्तिः। स्वतन्त्रकर्तृरूपामित्यर्थः। यथा देवानां तरणक्रिया कर्तृत्व उपमेयत्वं स्यात् तथा स्वतन्त्रकर्तृरूपं श्येनं दृष्टान्तं कृत्वा विष्णुस्तारयामासेत्युक्तम्। नतु विष्णोःश्येनो दृष्टान्त इति भावः। एतदेव दर्शयति ॥ एतदुक्तं भवतीति ॥ अत्र तु स्वातन्त्र्य इति ॥ विष्णोः प्रयोजककर्तृत्वेपि तद्द्योतकणिज्व्यत्यासो णिजभावो विष्णोः सर्वस्वातंत्र्यं द्योतयितुं कृत इति भावः। द्वादशादित्यमध्यस्थविष्णोः संसाराभावादाह ॥ विष्णुव्यतिरिक्ता इति ॥ प्रधानेनेति ॥ मुख्यवायुनेत्यर्थः ॥ १४ ॥

(टीकाविवृतिः)

इन्द्रो यातः ।। इयमृगीश्वरविषयैवेति ।। अस्माभिर्योज्यत इति शेषः । अस्या ऋच ईश्वरविषयत्वस्यान्यैर्ज्ञातुमशक्यत्वेन तावन्मात्रं भाष्यकारैरुच्यते न त्वस्याःप्रसिद्धेन्द्रपरत्वमपि । प्रसिद्धेन्द्रे योजनायाःस्पष्टत्वेनान्यैर्ज्ञातुं शक्यत्वात् । अत एव यातोवसितस्येत्यादिनां ते प्रसिद्धेन्द्रे योजयिष्यन्ति टीकाकृतः । अन्यथा पूर्वोत्तरटीकाग्रन्थयोर्विरोध इति बोध्यम् ।। अभक्तैस्तत्प्रसादेन विनेति ।। अभक्तैःसर्वथा न ज्ञायते भक्तैस्तु तत्प्रसादेनविना न ज्ञायते इति प्रत्येकमन्वयो ज्ञेयः ।। अवसितस्य पर्यवसानगन्तुरिति ।। अवपूर्वात्षोऽन्तकर्मणीत्यतो भावे क्तप्रत्यये द्यतिस्यतिमास्थामित्तिकितीतिधातोरिकारादेशे निष्पन्नावसितशब्दस्यावसानार्थकस्य लक्षणया तद्वंत्रर्थकत्वमिति भावः ।। राजा स्वामीति ।। राजा प्रभौ नृपे चन्द्र इति विश्वोक्तेरिति भावः ।। शमस्य च मुक्तेरपीति ।। शंशब्दस्य सुखनामसु पाठाच्छं सुखं मुख्यत्वात्स्वरूपसुखं मनुते यत्र सः शमो मोक्ष इत्यर्थः । मनु अवबोधन इत्यत औणादिको ड इति भावः ।। स इदिति ।। संहितायां तु सोचिलोपे चेत्पादपूरणमित्यनेन स इति पदस्थसुलोप आद्गुण इति गुणे सेदुराजेति भवति ।। शृङ्गशब्दःप्रकाशवाचक इति ।। हृणिःशृङ्गणीति ज्वलतोनामसु पाठेपि अर्चिःशोचिरित्यादि शब्दसमभिव्याहारात्प्रकाशार्थकत्वमपीति भावः ।। तद्वतो नक्षत्रादेरिति ।। शृङ्गिशब्दस्याभियुक्तव्याख्याने राजेत्यनेनान्वयो ज्ञेयः । मुक्तानां पूर्वमुक्तत्वेनाह ।। मुक्तातिरिक्तानामिति ।। ऐश्वर्यकर्मेति ।। क्षयति राजतीति ऐश्वर्यनामसु पाठादिति भावः । इदानीं प्रसिद्धेन्द्रे स्वयं योजयति ।। यातो वसितस्य जंगमस्य स्थावरस्येति ।। यात इत्यस्य व्याख्यानं जंगमस्येति । या प्रापण इत्यतः शतरि षष्ठ्यन्तस्येदं रूपम् । अत्र सावेकाचस्तृतीयादिर्विभक्तिरित्यनेन सप्तमीबहुवचने परे एकाच्कोयस्ततः परायास्तृतीयादिविभक्तेरुदात्तत्वविधानादंतोदात्तत्वमिति भावः । अवसितस्येत्यस्य व्याख्यानं स्थावरस्येति । अवसितशब्दःकर्मणि क्तान्तः तथा चावसितस्यावस्थितस्य जगतो राजेत्यन्वय इति भावः । एवं सेद्विति पदत्रयं अन्यान्यपि पदानि प्रसिद्धेन्द्रे योज्यानि ।। १५ ।।

इतीरितायां नरसिंहनाम्ना छलारिनारायणवर्यजेन ।
ऋग्भाष्यटीकाविवृतौ द्वितीयो ह्यध्यायकोयं हरितुष्टयेस्यात् ।। १ ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतस्य ऋग्भाष्यस्य टीकायाः
जयतीर्थमुनिविरचितायाः विवृतौ नरसिंहकृतायां द्वितीयोध्यायः ।। २ ।।

# अथ तृतीयोऽध्यायः

ऋक्संहिता पदपाठसहिता (सू-३३, व-१)

(३८४) एतायामोप गव्यन्त इन्द्रमस्माकं सुप्रमतिं वावृधाति । अनामृणः
कुविदादस्य रायो गवां केतं परमावर्जते नः ॥ १ ॥

(प०) आ । इत । अयाम । उप । गव्यन्तः । इन्द्रम् । अस्माकम् ।
सु । प्रऽमतिम् । ववृधाति । अनामृणः । कुवित् । आत् ।
अस्य । रायः । गवाम् । केतम् । परम् । आऽवर्जते । नः ॥१॥

(३८५) उपेदहं धनदामप्रतीतं जुष्टां नश्येनो वसतिं पतामि । इन्द्रं
नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥ २ ॥

(प०) उप । इत् । अहम् । धनऽदाम् । अप्रतिऽइतम् । जुष्टाम् । न ।
श्येनः । वसतिम् । पतामि । इन्द्रम् । नमस्यन् । उपऽमेभिः ।
अर्कैः । यः । स्तोतृभ्यः । हव्यः । अस्ति । यामन् ॥ २ ॥

(३८६) निसर्वसेन इषुधीरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मापणिर्भूरस्मदधि प्रवृद्ध ॥ ३ ॥

(प०) नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सम् । अर्यः । गाः ।
अजति । यस्य । वष्टि । चोष्कूयमाणः । इन्द्र । भूरि । वामम् ।
मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ ३ ॥

(३८७) वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र । धनोर
धिविषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४ ॥

(प०) वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः । चरन् ।
उपऽशाकेभिः । इन्द्र । धनोः । अधि । विषुणक् । ते । वि
आयन् । अयज्वानः । सनकाः । प्रऽइतिम् । ईयुः ॥ ४ ॥

(ऋक्संहिता पदपाठसहिता)

(३८८) परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्रयद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५, १ ॥

(प०) परा । चित् । शीर्षा । ववृजुः । ते । इन्द्र । अयज्वानः ।
यज्वऽभिः । स्पर्धमानाः । प्र । यत् । दिवः । हरिऽवः ।
स्थातः । उग्र । निः । अव्रतान् । अधमः । रोदस्योः ॥५,१॥

## ऋग्भाष्यम्

ॐ ये सखायस्त्वरिता एत देवा उपायाम पशुवत्तद्वशस्थाः । गव्यंत उक्ता अतिनिश्चितेर्थे भूतशब्दश्चेत्याह सूत्रं परेशः । प्रकृष्टज्ञानं वर्धयत्येव सुष्टु स नोऽभेद्योऽनामृणः क्वापि तस्य । वित्तानि तस्माद्वेदवाक्योत्थमेव केतं ज्ञानं परमावर्जते नः । ददाति ॥ १ ॥ उपैवेशमहं पतामि यथा श्येनो वसतिं पूर्वभुक्ताम् । इन्द्रं नमस्यन्ननुकूलगर्भिरिव यः स्तोतृभ्यो हव्य एवास्ति काले ॥ २ ॥ अशेषसेनापतिरेष शत्रूनशेषतो हन्तुमथो तमांसि । बध्नाति तूणान्निजसज्जनान्वा संयोजयत्यात्मनि मानबाणान् । अर्यो गम्योधीश्वरो गा मती र्वासंकालयत्येव च यस्य वष्टि । भक्तस्य तत्त्वं ददमानस्य भूरि भद्रं माभूरसुरस्त्वं कदाचित् । अस्मदर्थे हिंसकत्वेन नित्यप्रवृद्ध ॥ ३ ॥ वज्रेण घनेन दस्युम् । ज्ञानेन वाऽज्ञानगणं धनाढ्यमयज्युं चाप्येक एवांतरे च । चरंश्छाकैः शक्तिभिः सर्वदेवनरादिलोकं यमयज्ञघंथ । अधिकृत्य त्वां धनुमत्यन्तपुष्टं विष्वग्जग्मुरयजंतः सदैव । मृतिं प्रापुर्दुःखबाहुल्यरूपां सनका लाभे योग्यरूपा अपि स्म ॥ ४ ॥ अयज्वानोऽन्ये वक्ष्यमाणास्तु ये ते संत्यासुरा यज्वभिः स्पर्धमानाः । शिरांस्यपि स्वानि संतत्यजुस्ते सद्भिः स्पर्धामात्रसम्पूरितार्थाः । तानव्रतान्स्वर्गतः खात्पृथिव्या निरधमस्त्वं स्थैर्यवानिन्द्रियेशः ॥ ५, १ ॥

## ऋग्भाष्यटीका

एतायाम ॥ पञ्चदशर्चमेतदैन्द्रं सूक्तम् ॥ ये सखायः । इतेति मध्यमपुरुषप्रयोगाद्येऽस्माकं सखायो देवाः देवादयः । सखायो देवाश्चेति वा ते यूयमेत आगच्छत । देवा इन्द्रियादिकं प्रेरयत अन्ये सङ्घट्टिनो भवत । आङो व्याख्यानं त्वरिता इति । किमर्थं वयमिन्द्रमुपायाम शरणमिति शेषः । कथंभूताः गव्यन्तः

(ऋग्भाष्यटीका)

उपमानादाचार इति गोशब्दादाचारे क्यच्। ततः शतृप्रत्ययः। गोवदाचरन्तः। ननु तत्र कर्मण इति वर्तते तथापि छान्दसेन व्यत्ययेन कर्तुरपि भवति। उपमानोपमेयत्वविवरणार्थमाह॥ पशुवदिति॥ यथा गवाद्याः पशवः स्वामिवशस्थास्तथेन्द्र वशस्था वयमिति। ननु सुप आत्मनः क्यजितीच्छायां क्यचिकृते गा इच्छन्त इति भविष्यति। सत्यम्। अधिकमपि दर्शयितुमेतत्। नन्वयामेति कोऽयं शब्दः यातेर्लङि रूपमेतत् लङ् भूते वर्तते न चात्र तत्सम्भवतीत्यत आह॥ अतीति। अतिनिश्चितेऽभूतेपि धात्वर्थे भूतत्ववाची शब्दः प्रयोक्तव्य इत्यस्यार्थस्य प्रतिपादकं सूत्रमाहेत्यर्थः। अन्यत्र च। एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यत इति। अयतेर्लोटि रूपमेतदित्यङ्गीकारेपि न कश्चिद्दोष इति चशब्दः। किं प्रयोजनम्। स इन्द्रोस्माकं नः प्रमतिं प्रकृष्टज्ञानं बह्वर्थविषयं सु सुष्ठु यथार्थं वा वृधाति वर्धयति। यङर्थ एवेति। कुतः यस्मात्स इन्द्रः कुवित्काप्यनामृणोऽभेद्यः क्वापि भेद्यो न भवति यस्माच्च गवां वाचां सम्बन्धिवेदवाक्योत्थं परमुक्तविधयोत्तमं केतं ज्ञानम् एकवचनं बहुवचनार्थे। अस्य तस्येन्द्रस्यैव रायो वित्तानि। आत्तस्मादसौ नोस्मभ्यमावर्जते स्त्यागार्थत्वाद्ददाति। ज्ञानानामधिपतिः प्रतिहतिरहितश्च शरणं प्राप्तः कथं तानि न दद्यादिति॥ १॥

उपेत्। उपैव। अहं धनदां धनस्य दातारम्। अप्रतीतं वैरिभिरप्रतिगतम्। इन्द्रमित् ईशमेव। उपपतामि उपगच्छामि। क इव जुष्टां सेवितां पूर्वभुक्ताम्। वसतिं नीडम्। श्येनो न श्येनो यथा। कथं उपमेभिरर्कैः उपमशब्दः सदृशार्थः। अर्का ऋचः अनुकूलग्भिः इन्द्रप्रतिपादकग्भिरिन्द्रमेव नमस्यन् स्तुवन्निति यावत्। कथंभूतम्। य इन्द्रो यामन् यामे। वीप्साभिप्रायमेतत्। सर्वस्मिन्काले कालवाचक एव वाऽयम्। स्तोतृभ्यः स्तोतॄणां हव्य एवास्ति। जुहोतिरत्रादनार्थः। अदनं चोपजीवनम्। स्तोतॄणां सदा सेव्यो दत्तावसर एवेति॥ २॥

निसर्व। अशेष। सर्वा सम्पूर्णा सेना यस्यासौ सर्वसेनः अशेषसेनापतिरेष इन्द्रोऽशेषतः शत्रून्हंतुमिति शेषः। इषुधींस्तूणान्। न्यषक्त षंजसङ्गे वष्टीति श्रवणाल्लकारव्यत्ययः। बध्नाति। यद्वा नीत्युपसर्ग श्रवणात्ससाधनक्रियाऽध्याहारेणोक्तं नि नितरामशेषतः शत्रून्हंतुमिति। अथो वा यद्वा। परमेश्वरस्तमांसि भक्तानामज्ञानादीनि हन्तुमिषुधीनिवेषुधीन् मानबाणान् मानानि प्रमाणानि बाणा इव येषु तान्निजसज्जनांस्तानेवासक्त आत्मनि संयोजयति। स्वविषयचित्तादिवृत्तीन्करोति ततः शत्रून्हत्वा चासावर्यः ऋगतौ गम्यः शरणं प्राप्य इन्द्रः। ननु च ऋहलोर्ण्यदिति विशेषविहिते ण्यति कृते आर्य इति स्यात्। सत्यम्। तथापि अर्यः स्वामिवैश्ययोरिति स्वामिन्यभिधेये सामान्यविहितयदन्तस्यार्यशब्दस्य निपातनाददोष इति भावेनोक्तमधीश्वर इति। गाः शत्रुभ्यो हृताः। द्वितीयेर्थे मतीर्वा। यस्य भक्तस्य। वष्टि वांछति दातुमिति शेषः। तस्मै समजति अजगतिक्षेपणयोः। सम्यक् क्षिपति संकालयत्येव। ददात्येवेति यावत्। परोक्षतः स्तुतमभिमुखीकृत्याह हे प्रवृद्ध नित्यप्रवृद्ध इन्द्र। एवं भूरिवामं भूरिभद्रं गवादिकम्। तत्वं

तत्वज्ञानं वा। भक्तेभ्यश्चोष्कूयमाणः दानार्थे चायं यङन्तः अतिशयेन ददमानस्त्वमस्मदधि द्वितीयार्थे पञ्चमी। अस्मान्प्रति अस्मदर्थे। कदाचित्पणिर्हिंसकत्वेन सादृश्येनासुरो सुरविशेषो माभूः। महता प्रयत्नेन भक्तानां साध्वाचरन्नस्मान्प्रति निष्ठुरो माभूरिति॥ ३॥

वधीर्हि। वज्रेण। हे इन्द्र एक एव परापेक्षारहितः। उप समीपे। सर्वस्यान्तरे। चशब्दाद्बहिश्च। शाकेभिः शक्लृशक्तौ घञ्। शाकैः शक्तिभिश्चरन्सर्वदेवनरादिलोकं यमयन्निति यावत्। त्वं दस्युं कम्। धनिनं धनाढ्यं तन्मात्रेण कथं दस्युत्वम्। अयज्वान इति वक्ष्यमाणत्वादयज्युं चापि। सत्यपि धने त्वामयजमानमिति यावत्। घनेन मूर्तेनातिदृढेन वज्रेणेति शेषः। वधीरवधीर्जघंथ। यद्वा घनेन ज्ञानेन दस्युमज्ञानगणमवधीः। तस्य धनित्वं धनाकाङ्क्षाजनकत्वम्। अस्यैव विवरणं यस्मात्ते पुरुषा धनोः पुष्ट्यर्थस्य धिनोतेरूपमेतत्। षष्ठी च द्वितीयार्थे। धनुमत्यंतपुष्टं त्वामधि अधिकृत्य अयज्वानः सदैवायजन्तो विषुणक् विष्वक्। व्यायन् जग्मुः। देवतांतरादिकं पूजयन्ति स्म। तस्मात्ते प्रेतिमीयुर्मृतिं प्रापुः। सर्वसाधारणं मरणं कथमस्य फलमित्यत उक्तं दुःखेति। कथंभूताः सनकाः षणिर्लाभार्थः। ततो ण्वुल् मोक्षादिलाभे योग्यस्वरूपा अपि स्म मुक्तियोग्या अपि परमेश्वरं त्यक्त्वाऽन्यान्पूजयन्तो न रकाद्यनर्थं प्राप्नुवन्ति। किं पुनरयोग्या इति॥ ४॥

पराचित्। अत्राप्ययज्वान इति श्रवणात्पूर्वोक्ता एवेति प्रतीतिं तावन्निराकरोति। अयज्वान इति। ये वक्ष्यमाणा अयज्वानस्ते तु पूर्वोक्तेभ्योऽन्ये तेषां सनकत्वात् एतेषां महादोषोक्तेः। तर्हि के ते। ये आसुरा असुरस्वभावाः सन्ति। एवं तात्पर्यमभिधाय यज्वभिरित्यादिना व्याख्याति। यद्वोक्तं विवेकं प्रदर्शयन्नेवायज्वानोन्य इत्यादिनैव व्याख्याति। हे इन्द्र ये तु ते पूर्वोक्तेभ्योन्ये वक्ष्यमाणा आसुरा अयज्वानः सन्ति ते यज्वभिः स्पर्धमानाः सन्तः शीर्षा शीर्षाणि। चित् अपि। स्वानि शिरांस्यपि। परावबृजुः सन्तत्यजुः। स्पर्धानिमित्तं स्वशिरस्त्यागमपि न गणयन्ति। सद्भिः सह स्पर्धामात्रेण सम्पूरितार्थाः प्राप्तप्रयोजना इति भावः। ततः किम्। हे हरिवः हरयोश्वा इन्द्रियाणि वाऽस्य सन्तीति हरिवान् तस्येयं सम्बुद्धिः। स्थातः स्थिर उग्र। इन्द्रियेशः स्थैर्यवान्। दैत्यानामुग्रस्त्वमिति यावत्। यद्यस्मादेवं भूतास्ते तस्मादव्रतान्व्रतेन त्वत्पूजनेन हीनांस्तान् दिवः स्वर्गतः। रोदस्यो रोदसीभ्याम्। खादन्तरिक्षलोकात्पृथिव्याश्च निरधमः निराकृतवानसीति॥ ५, १॥

## मन्त्रार्थमञ्जरी

ॐ अथ 'एतायामोप' इति पञ्चदशर्चं वर्गत्रयात्मकमैन्द्रं त्रैष्टुभं त्रयस्त्रिंशं सूक्तम्। अत्र (ऋचि) 'आ + इत = एत' इति मध्यमपुरुषश्रवणात् 'सखायः' इति 'देवाश्च' इति शेषः। येऽस्माकम् (सखायोदेवाश्च)। ते यूयम्– आ इत, शीघ्रमागच्छत, देवा इन्द्रियादिकं प्रेरयत, अन्ये (सखायः)

संघटि(ट्टि)नो भवत– इति भावः। 'किमर्थम्?' इत्यत उक्तम्– 'अयाम' इत्यादि। वयम् गव्यन्तः, गोवदाचरन्तः, 'उपमानादाचारे' इति कर्तर्यपि च्छान्दसः क्यच्प्रत्ययः, अवादेशः, ततः शतृप्रत्ययः, यथा गवाद्याः पशवः स्वामिवश्यास्तथेन्द्रवश्याः, यद्वा– 'सुप आत्मनः क्यच्' इतीच्छार्थे क्यच्, गा इच्छन्तः इत्यर्थः। इन्द्रम्। उप अयाम (शरणम्) इति शेषः, शरणं प्राप्स्यामः इत्यर्थः, 'या प्रापणे' लङ्भविष्यदर्थे ध्येयः 'एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यते' इत्युक्तेः, 'इण् गतौ' इत्यस्य वा लोट्युत्तमपुरुषे रूपम्। शरणप्राप्तौ किं प्रयोजनम्? उच्यते (सः) इन्द्रः। अस्माकम्। प्रमतिम्, प्रकृष्टज्ञानम्, बह्वर्थविषयकमिति यावत्। सु, सुष्ठु, यथार्थम्। वावृधाति, 'वृधु वर्धने' यङ्लुगन्तम्, यङन्तप्रयोगस्यार्थः (भाष्ये) 'एव' इति। कुतो वर्धयति ज्ञानम्? (यस्मात्) (सः) इन्द्रः। कुवित्, क्वापि। अनामृणः, अभेद्यः, क्वापि भेद्यो न भवति। (यस्माच्च) गवाम्, वाचां सम्बन्धि, वेदवाक्योत्पन्नम्। परम्, यथार्थवाद्युक्तविधयोत्तमम्। केतम्, ज्ञानम्, 'केतुः केतश्चितिश्चित्तं मतिः क्रतुः' इति (गी० भा० ४।६ उदा०) अभिधानात्, एकवचनं बहुवचनार्थे वेदजोत्तमज्ञानानि– इत्यर्थः। अस्य, इन्द्रस्य (एव) रायः, वित्तानि। आत्, तस्मात्। (असौ) इन्द्रः। नः, अस्मभ्यम्। आवर्जते, ददाति, 'ज्ञानानामधिपतिः प्रतिहतिरहितश्च शरणं प्राप्तश्च कथं तानि न दद्यात्? इति तात्पर्यम्॥ १॥

अहम्। धनदाम्, धनस्य दातारम्। अप्रतीतम्, वैरिभिरप्रतिगतम्। (इन्द्रम्) इत्, ईश्वरमेव। उप पतामि, गच्छामि। क इव? जुष्टाम्, सेविताम्, पूर्वानुभूताम्। वसतिम्, नीडम्। श्येनः न, श्येनपक्षी यथा। कथम्? उपमशब्दः सदृशार्थः, अर्का ऋचः, उपमेभिः अर्कैः, अनुकूलाभिर्ऋग्भिः, इन्द्रप्रतिपादकर्ग्भिः। इन्द्रम् (एव) नमस्यन्, स्तुवन्निति यावत्। कथं भूतम्? यः, इन्द्रः। यामन्, यामे यामे, वीप्साभिप्रायमेतत्, सर्वस्मिन्काले, कालवाचक एव वा यामन्शब्दः। स्तोतृभ्यः, स्तोतॄणाम्। हव्यः (एव) अस्ति, 'हु दानादनयोः' इत्यदनार्थस्य जुहोतेर्यत्प्रत्यये रूपत्वात्– उपजीव्य एव इत्यर्थः। स्तोतॄणां सदा सेव्यो दत्तावसर एव इति भावः॥ २॥

सर्वा सम्पूर्णा सेना यस्यासौ– सर्वसेनः, अशेषसेनापतिः। (एषः) इन्द्रः। (अशेषतः शत्रून्हन्तुम्) इति शेषः। इषुधीन्, तूणान्। नि असक्त, 'षन्ज सङ्गे' लडर्थे लुङ् बाणाधार कोशान्पश्चाद्भागे बध्नाति इत्यर्थः॥ यद्वा (एषः) (इन्द्रः) परमेश्वरः। (भक्तानामज्ञानादीनि हन्तुम्)। इषुधीनिव– इषुधीन्, मानाख्यबाणाधारान्, सज्जनान्। नि असक्त, आत्मनि

(मन्त्रार्थमञ्जरी)

संयोजयति, स्वविषयचित्तादिवृत्तीन्करोति। (ततः) शत्रुहन्तृत्वात्। (असौ) अर्यः, गम्यः, शरणं प्राप्यः, स्वामीति यावत्, 'अर्यः स्वामिवैश्ययोः' (अम० ३।३।१४६) इति वचनात्। (इन्द्रः) गाः, शत्रुभ्यो हृताः, मतीर्वा। यस्य, भक्तस्य। वष्टि, दातुमिच्छति। (तस्मै)। सम् अजति, 'अज गतिक्षेपणयोः' सम्यगजति, ददात्येव– इत्यर्थः। परोक्षतस्तु– तमभिमुखीकृत्याह– (हे) प्रवृद्ध इन्द्र। एवम् भूरि। वामम्, भद्रम्, गवादिकं तत्त्वज्ञानं वा। भक्तेभ्यः चोष्कूयमाणः, 'ष्कुदाने' इत्यतो यङ्, शानच्, अतिशयेन ददमानः। (त्वम्) अस्मत् अधि, द्वितीयार्थे पञ्चमी, अस्मान्प्रति, अस्मदर्थे। कदाचित्– पणिः, हिंसकत्वेन सादृश्येन– असुरविशेषः। मा भूः, महता प्रयत्नेन भक्तानां साध्वाचरन्नस्मान्प्रति निष्ठुरो मा भूः इति भावः ॥ ३ ॥

(हे) इन्द्र। (एकः हि) एक एव, परापेक्षारहितः। (उपशाकेभिः) उप समीपे सर्वस्यान्तरे बहिश्च शाकेभिः 'शक्लृ शक्तौ' घञ्, शाकैः, शक्तिभिः। चरन्, सर्वदेवनरादिलोकं यमयन्निति यावत्। (त्वम्) दस्युम्। को वादस्युः ? धनिनम्, धनाढ्यम्। तन्मात्रेण कथं दस्युता ? इति चेत्– 'अयज्वानः' इति वक्ष्यमाणमिह द्वितीयान्ततयाप्यन्वेति, सत्यपि धने त्वाम् (अयज्वानम्) इति यावत्। घनेन, मूर्तेन, अतिदृढेन। (वज्रेण) इति शेषः। वधीः, अवधीः, जघन्थ। यद्वा घनेन ज्ञानेन। दस्युम्, अज्ञानगणम्। वधीः, अवधीः। तस्य (दस्योः) धनित्वं धनाकाङ्क्षाजनकत्वम्। पूर्वार्धोक्तस्यैव विवरणम्– 'धनोः' इत्यादि। धनोः इति षष्ठी द्वितीयार्थे, 'धन पुष्टौ' धनुं पुष्टम्, अत्यन्तपुष्टिमन्तम् (त्वाम्) (अधि) अधिकृत्य। अयज्वानः, सदैवायजन्तः। विषुणक्, विष्वक्। वि आयन्, जग्मुः, देवतान्तरम्– पूजयन्ति स्म। तस्मात् ते। प्रेतिम् ईयुः, मृतिं दुःखबाहुल्यरूपां प्रापुः इत्यर्थः। कथं भूताः ? सनकाः, 'षण लाभे' ण्वुल्, मोक्षादिलाभे योग्यस्वरूपा अपि, मुक्तियोग्या अपीति यावत्, परमेश्वरं त्यक्त्वान्यान्पूजयन्तो नरकाद्यनर्थं प्राप्नुवन्ति, किं पुनर्योग्याः ? इति ॥ ४ ॥

(हे) इन्द्र। (ये तु ते) पूर्वोक्तेभ्योऽन्ये, वक्ष्यमाणा असुराः। अयज्वानः (सन्ति) ते यज्वभिः स्पर्धमानाः (सन्तः) शीर्षाचित्, शीर्षाणि चित्, स्वशिरांस्यपि। परा ववृजुः, संतत्यजुः, 'स्पर्धानिमित्तं स्वशिरस्त्यागमपि न गणयन्ति, सद्भिः सह स्पर्धामात्रेण प्राप्तप्रयोजनाः' इति भावः। 'ततः किम्?' इत्यत उच्यते (हे) हरिवः, हरयोऽश्वा इन्द्रियाणि वास्य सन्तीति हरिवान्, तस्य सम्बुद्धिः। स्थातः, स्थिर। उग्र। इन्द्रियेशः, स्थैर्यवान्, दैत्यानामुग्रः त्वम्' इति यावत्। यत्, यस्मात्। (एवं भूतास्ते तस्मात्) अव्रतान्, व्रतेन त्वत्पूजनेन हीनान्। (तान्) दिवः, स्वर्गतः।

(मन्त्रार्थमञ्जरी)

रोदस्योः, रोदसीभ्याम्, अन्तरिक्षलोकात्पृथिव्याश्च। प्र निः अधमः, निराकृतवानसि। इति॥ ५ ॥ प्रथमो वर्गः ॥ १ ॥

## रूपावतारः

एतायाम ॥ ये सख्याय इत्यादीनामध्याहारे निमित्तमाह। इतेति मध्यमेति। अधिकमपीति। गा इच्छन्त इत्यर्थमविहायैव इन्द्रवशत्वरूपमतिशयितमप्यर्थं दर्शयितुं पशुवत्तद्वशस्था इत्यादि भाष्यमित्यर्थः। यातेर्लङीति। यातेर्लङि लङो मसादेशे सकारलोपे अडागमे विकरणस्य लुकि अयामेति रूपम्। न चात्रेति। शरणप्राप्तेर्वर्तमानत्वेन भूतत्वार्थकलङ्प्रयोगो न संभवतीति भावः। अयतेरिति। अयतेर्लोटो मसादेशे 'आडुत्तमस्य पिच्च' (३।४।९२) इत्यडागमे अयामेति रूपम्।

वावृधातीति। वृधेरन्तर्ण्यर्थात् यङि द्वित्वे छान्दसत्वात् 'रीगृदुपधस्य च' (७।४।९०) इति रीगागमस्याप्रवृत्तौ लेटि तस्य तिपि लेट अडागमे 'दीर्घोऽकितः' (७।४।८३) इति दीर्घे वावृधातीति संहितायां रूपम्। पदकाले तु 'दीर्घोऽकितः' (७।४।८३) इत्यस्याप्रवृत्तेः ववृधातीति रूपम्। यङर्थ एवेति। भृशार्थकत्वमेवशब्दोक्तमित्यर्थः ॥ १ ॥

उपेत् ॥ उपमशब्द इति। सादृश्यात् उपमाशब्दात् मत्वर्थे 'अर्श आदिभ्योऽच्' (५।२।१२७) इति अच्प्रत्यये कृते निष्पन्न उपमशब्दः सादृश्यार्थ इत्यर्थः ॥ २ ॥

नि सर्वसेनः ॥ न्यषक्तेति। षजेर्लुङि व्यत्ययेनात्मनेपदे 'झलो झलि' (८।२।२४) इति सिज्लोपे 'अनिदितां....' (६।४।२६) इति नलोपे अडागमे न्यषक्त इति रूपम्। ननु श्रुतौ न्यषक्तेति लुङन्तपदश्रवणात् भाष्ये तादृशमेव प्रतिपदं देयम्। बध्नातीति लडन्तपददानं कथमित्यत आह। वष्टीति श्रवणादिति। अशेषतः शत्रून् हन्तुमिति अध्याहार इति भावेन व्याख्याय प्रकारान्तरेण व्याख्याति। यद्वेति। अत्राध्याहारेणेति प्रक्षिप्तम्। लाभ इति भावेनेत्युच्छिन्नम्। ततश्चैवं टीकावाक्यपाठः। यद्वा नीत्युपसर्गश्रवणात् ससाधनक्रियालाभ इति भावेनोक्तमिति। अवश्यं चैतदेवं विज्ञेयम्। पूर्वमध्याहारस्योक्तत्वेन पुनस्तदभिधानायोगात्। उपसर्गाणां क्रियावचनाभावे ससाधनक्रियावाचित्वेन नीत्युपसर्गस्य ससाधनक्रियाध्याहारज्ञापकत्वायोगाच्च। अदोष इतीति। इह स्वामित्वरूपार्थस्य विवक्षितत्वात् अर्य इति रूपमुपपन्नमिति भावः। चोष्कूयमाण इति। धातूनामनेकार्थत्वात् दानार्थकात् ष्कुञः यङि तस्य द्वित्वे 'गुणो यङ्लुकोः' (७।४।८२) इति अभ्यासस्य गुणे लटि तस्य शानचि 'आने मुक्' (७।२।८२) इति मुकि चोष्कूयमाण इति रूपम्। अधिशब्दः

(रूपावतारः)

अधिकृत्येत्यर्थकः। तस्य सकर्मकत्वात् अस्मानिति वक्तव्यम्। अस्मदिति पञ्चमी कथमित्यत आह। द्वितीयार्थ इति। अनेन ''अस्मदधी''त्यस्यास्मानधिकृत्येत्यर्थ उक्तो भवति। अस्मदधीत्यस्य तात्पर्यार्थमाह। अस्मान्प्रतीति। 'अस्मदधी'त्यस्य महातात्पर्यमाह। महतेति ॥ ३ ॥

वधीर्हि ॥ अयज्युं चापीति। इति ग्राह्यमिति शेषः। जघन्तेति। हन्तेर्लिटि सिपि तस्य थलि द्वित्वे 'अभ्यासाच्च' (७।३।५५) इति हकारस्य कुत्वे नकारस्यानुस्वारे जघंथेति रूपम्। धिनोते रूपमिति। धिनुपुष्टावित्यत उप्रत्यये इकारस्याकारे षष्ठ्यैकवचने धनोरिति रूपम् ॥ ४ ॥

पराचित् ॥ निरधम इति। निःपूर्वाद्धमेर्लङि सिपि अडागमे निरधम इति रूपम् ॥ ५ ॥ १ ॥

## पदार्थप्रकाशिका

श्री जयराजगुरुभ्यो नमः ॥ निर्विघ्नमस्तु ॥

नत्वा व्यासं पूर्णबोधं मुनीन्द्रान्
जयार्यपूर्वान् यादवार्यान् गुरूंश्च ॥
ऋग्भाष्यस्य तृतीयाध्यायटीकां
विवृण्महेऽलं गुरुशिक्षानुसारात् ॥

एतायामोप गव्यन्त इन्द्रम् ॥ इन्द्रस्य पञ्चोना एतेत्यनुक्रमणिकां हृदि निधायाह पञ्चदशर्चमेतदैन्द्रं सूक्तमिति। पञ्चोनेत्यस्यार्थः। पञ्चदशेति। विंशतिसङ्ख्यायां पञ्चोनत्वे पञ्चदशत्वं लभ्यत इति तस्य भावः। भाष्यकारेण सखायो देवा इति सम्बुध्यन्तपदाध्याहारकरणे निमित्तं दर्शयति। इतेति मध्यमपुरुषप्रयोगादिति। बाह्यार्थविवक्षयाह। सखायो देवादय इति। अस्मत्सखिभूता देवादय आ इतेत्यन्वयः। अध्यात्मविवक्षायाह सखायो देवाश्चेति वेति ॥ अत्र सखायः इन्द्रियाभिमानिदेवातिरिक्ताः सज्जना ग्राह्याः। अध्यात्मं आगच्छतेत्यस्यार्थं दर्शयति देवा इति। इन्द्रियप्रेरका देवा इत्यर्थः। अन्य इति। इन्द्रियाभिमानिदेवातिरिक्ताः सज्जना इत्यर्थः। सङ्घट्टिनः अनुग्रहादिना सहकारिणः। किमर्थमिति। आ इत आगच्छत प्रेरयतेति प्रार्थना किमर्थं क्रियत इत्यर्थः। वयमिति। भवतामिन्द्रभृत्यत्वादस्माकं भवत् स्वामिनं प्रति शरणागतत्वादिति भावः। कथं भूताः। वयमिति शेषः।

उपमानादाचार इति। उपमानादाचारार्थे क्यच् प्रत्ययः स्यादिति सूत्रार्थः। तथाच गोशब्दात् उपमानादाचार इति सूत्रेण गोवदाचरन्त इत्यर्थस्य विवक्षितत्वेनाचारार्थे कर्तरि क्यच्प्रत्यये

(पदार्थप्रकाशिका)

ककारचकारयोर्लोपे गोयेति स्थिते वान्तोयि प्रत्यये यकारादौ प्रत्यये परे अव्-आव् इत्येतावादेशौ स्त इत्युक्तत्वेन ओकारस्य अवादेशे गव्य गव्येति स्थिते पश्चात् शतृप्रत्यये 'त्' इत्येतद्विहाय शकार ऋवर्णयोर्लोपे गव्यत् इति प्रातिपदिकं सिद्ध्यति पश्चात्स्वाद्युत्पत्तौ गव्यन्त इति भवतीत्यर्थः । आचारार्थमेव दर्शयति गोवदाचरन्त इति । गाव इव आचरन्त इत्यर्थः । ननु उपमानादाचार इति सूत्रे धातोः कर्मणः समानकर्तृकादिच्छायां वेति पूर्वसूत्रात्कर्मण इत्यनुवर्तते । तथा च उपमानात्कर्मणः । कर्मभूतादुपमानात् द्वितीयान्तादिति यावत् । आचारार्थे क्यच्प्रत्ययो भवतीति हि सूत्रार्थः । अत एव पुत्रमिवाचरति पुत्रीयति द्विजच्छात्रमित्युदाहृतम् । तथाच गा इवाचरन्तीति गव्यन्त इति वक्तव्यं न तु गाव इवाचरन्तीति कर्त्रर्थे क्यचमभिप्रेत्य पशुवदिति व्याख्यानं न युक्तमिति भावेनाशङ्कते । ननु तत्रेति । यद्यपीति शेषः । छान्दसेनेति । बहुलं च्छन्दसीत्युक्तेन छन्दःसंबन्धिना व्यत्ययेनेत्यर्थः । कर्तुरपीति । कर्तृर्थकादुपमानादित्यर्थः । तथा च प्रथमान्तादप्युमानात् क्यच् भवति छन्दस्त्वादतः पशुवदित्युक्तं गाव इवाचरन्त इति व्याख्यानं युक्तमेवेत्यर्थः । वयमिति । शरणमुपयामेत्यन्वयः । सुप आत्मन इति । सुबन्तादुपपदात् आत्मनस्तदिच्छतीत्यर्थे क्यच्प्रत्ययः स्यादिति सूत्रार्थः । तथाच गाः आत्मनामिच्छतीति गव्यन्तः गवादिलाभेच्छावन्त इत्यर्थसंभवेन उपमानस्य कर्मत्वाविवक्षायामपि इच्छार्थे क्यचः भावाद्व्यत्ययेन कर्तरि आचारे क्यच् न व्याख्येय इत्यर्थः । अधिकमपीति । गोदृष्टान्तेन परमात्माधीनत्वरूपमधिकमप्यर्थं दर्शयितुं एतत् कर्तरि आचारे क्यचमङ्गीकृत्य व्यत्ययेन व्याख्यानमित्यर्थः । अयामेत्यस्य अयधात्वाश्रयणपक्षे लोट बहुवचनरूपत्वं भविष्यति । या धात्वाश्रयणपक्षे च लङ्बहुवचनरूपत्वं भविष्यति । अतः साधारण्यात्पृच्छति । नन्वयामेति कोऽयं शब्द इति । उत्तरमाह । यातेर्लङिति ॥ तद्वाचिता या प्रापणेस्माल्लङि तस्योत्तमपुरुषबहुवचने मस् इत्यादेशे स् इत्यस्य लोपे लुङ्लङ्लृङ्क्ष्वडुदात्त इति सूत्रेण धातोः पूर्वमडागमे च सति अयामेति लङि रूपं भविष्यतीत्यर्थः । पुनराशङ्कते । लङिति भूत इति । अतीतार्थ इत्यर्थः । भूते लङ् लुङ् लिटस्तथेति वचनादिति भावः । न चात्रेति । इदानीं शरणगमनप्रार्थनायाः क्रियमाणत्वेन वर्तमान तया इदानीं शरणं प्राप्नुम इति वक्तव्ये पूर्वं वयं शरणमयामेति भूतार्थकथनं न संभवति प्रार्थनाननुगुणत्वादित्यर्थः । अभूते अनतीतेपि वर्तमान इति यावत् । धात्वर्थे अतिनिश्चिते सतीत्यन्वयः । प्रकृते च शरणगमनमिदानीं क्रियमाणमतिनिश्चितमस्तीति द्रष्टव्यम् । वर्तमानार्थेऽतिनिश्चिते सति तत्र भूतत्वेन निर्देशो युक्त इत्युपपाद्येदानीमेष्यत्यप्यर्थेऽतिनिश्चिते सति तत्र भूततया निर्देशो दृष्ट इत्याह अन्यत्र चेति । तथाच वयमुत्तरत्र त्वां शरणं प्राप्ता भविष्याम इत्यर्थस्यातिनिश्चितत्वात्तदभिप्रायेणायामेति भूतोक्तिरित्यर्थः । भूतशब्दश्चेत्यत्रत्यचशब्दार्थमाह ।

(पदार्थप्रकाशिका)

अयतेरिति। तथाच अयपयगतौ अस्माल्लोटि बहुवचने तस्य मस् इत्यादेशे स् इत्यस्य लोपे दीर्घे च सति अयामेति लोटि रूपम्। अतो लङ्भूते वर्तते न चात्र तत्संभवतीत्युक्तदोषोऽत्र न प्राप्नोति लोटो विध्यर्थत्वेन भूतार्थत्वाभावादिति भावः। किं प्रयोजनमिति। कस्मै प्रयोजनाय शरणमयामेत्यर्थः। सुप्रमतिमित्यत्र स्थितयोः प्रसु इत्युपसर्गयोरर्थमाह प्रकृष्टेत्यादि। ज्ञानस्य मतेः प्रकृष्टत्वं कीदृशमित्यत आह बह्वर्थेति। मतेः सुष्ठुत्वं कीदृशमित्यत आह यथार्थमिति। यङोर्थ एवेतीति। पुनःपुनरित्यर्थे भृशमित्यर्थे वा यङो विधानाद्वावृधातीत्यभ्यासदर्शनेन यङ्लुगन्तत्वात् एवेति तदर्थः कथितः। क्रियासमभिहाराख्यपौनःपुन्यस्य भृशत्वस्य वाऽवधारणे पर्यवसन्नत्वादिति भावः। तथाच वावृधातीत्यस्य पुनः पुनर्भृशं वावर्धयतीत्यर्थो द्रष्टव्यः। तथाच ज्ञानवर्धनरूपप्रयोजनाय त्वां शरणमयामेत्युक्तं भवति। कुत इति। अयं ज्ञानानि वावृधातीत्येतत्कुत इत्यर्थः। तस्य ज्ञानानामधिपतित्वात् केनचित्प्रतिहतिरहितत्वाच्चेत्युत्तरमाह। यस्मात्स इन्द्र इत्यादिना। उक्तविधयेति। बह्वर्थविषयकत्वेनेत्यर्थः। इन्द्रस्य परोक्षत्वादस्य तस्येत्युक्तम्। इन्द्रस्यैवेति। संबन्धीनीत्यर्थः। आवर्जत इत्यस्य दानार्थत्वोपपादनायोक्तं त्यागार्थत्वादिति। दानस्यापि त्यागविशेषत्वादिति भावः। ऋक्तात्पर्यमाह ज्ञानानामधिपतिरित्यादिना। अस्य रायो गवां केतमित्यनेन ज्ञानानामधिपतित्वं अनामृण इत्यनेन प्रतिहतिरहितत्वं अयामेत्यनेन शरणं प्राप्त इत्येतच्चोक्तमिति ज्ञातव्यम्॥ १॥

उपेदहंधनदामप्रतीतम्। कथमिति। उपगच्छामीति संबन्धः। सदृशार्थ इत्यादि। तथा चेन्द्रसदृशग्भिः तद्योग्यग्भिरिति यावत्। तदनुकूलग्भिरिति तु तात्पर्यार्थः। यामशब्दः प्रहरवाची। वीप्सेति। प्रतियाममित्यर्थः। तात्पर्यार्थमाह सर्वस्मिन् काल इति। यामन्शब्दः कालादिशब्दवत्कालसामान्यवाचक एव वाऽस्त्वित्याह कालवाचक इति। जुहोतिरिति। हव्य इत्येतत् हुदानादनयोरित्यस्य रूपम्। अतो जुहोतिरित्यस्य हव्यशब्दप्रकृतित्वाज्जुहोतिरित्युक्तम्। अदनार्थ इति। तथा च हव्योऽद्य इत्यर्थः। नात्राद्यत्वं भक्षणीयत्वमित्याह अदनं चेति। उपजीव्यत्वमेवाद्यत्वमिति वचनाद्धव्य उपजीव्य इत्यर्थः। तस्यापि तात्पर्यमाह सदा सेव्य इति। तस्यापि निर्गलितार्थमाह दत्तावसर एवेति। त्वदीयस्तोत्रश्रवणेन ममावकाशोऽस्तीति न परिहरतीति यावदित्यर्थः॥ २॥

निसर्वसेन इषुधीरसक्त। अशेषतः शत्रून् हन्तुमिति शेष इति। एतावान् ऋचि शेष इत्यर्थः। नीत्युपसर्गस्यासक्तेत्यनेन संबन्धमभिप्रेत्याह न्यषक्तेति। ननु न्यषक्तेति लुङो भूतार्थाभिधायित्वात्तद्व्याख्यानपदे भाष्ये बबन्धेति निर्देशः कर्तव्यः। बध्नातीति वर्तमाननिर्देशस्तु कथमित्यत आह

(पदार्थप्रकाशिका)

वष्टीति श्रवणादिति। वर्तमानार्थकलकारप्रकरणादसक्तेत्यस्य बध्नातीत्यर्थ उक्त इति भावः। पूर्वं नीत्युपसर्गस्यासक्तेति क्रियया संबन्धकृत्वात्तस्यासङ्गरूपक्रियायामतिशयद्योतकत्वं तस्येत्यङ्गीकृत्य व्याख्यातम्। इदानीमध्याहृतहननक्रियायामतिशयद्योतकत्वं तस्येत्यङ्गीकृत्य व्याख्याति यद्वेति॥ ससाधनेति। साधनं कारकम्। तथा च शत्रून् हन्तुमित्येवं कर्मकारकवाचिपद-सहितक्रियावाचिपदाध्याहारेणेत्यर्थः। अधिकस्य पदस्याहारः आहरणमध्याहारः। अध्याहारे बीजप्रदर्शनाय नीत्युपसर्गश्रवणादित्युक्तम्। उपसर्गाः क्रियायोग इति क्रियायोग एवोपसर्गत्वश्रवणात्तस्योपसर्गत्वोपपत्त्यर्थः। साधनक्रियावाचिपदद्वयाध्याहारः कृत इत्यर्थः। नितरामिति व्याख्यायाशेषत इति तत्तात्पर्योक्तिः। तथाच नीत्युपसर्गबलेन शत्रून् हन्तुमिति साधनक्रियावाचिपदाध्याहारकाणां उपसर्गाणां च क्रियायोगतदर्थेऽतिशयद्योतकत्वस्य दर्शनात् प्रकृतेपि क्रियावाचिपदाध्याहारेण क्रियायोगस्य सत्वान्नीत्युपसर्गस्य हननरूपक्रियायां अतिशयद्योतकत्वमुक्तं भवतीत्यवगन्तव्यम्। तथा चोपसर्गाणां साधनक्रियावाचित्वात्कथ-मध्याहारेणेत्युक्तमिति कुचोद्यानवकाश इति सम्प्रदायिकोर्थः। उपसर्गाणां ससाधनक्रिया-वाचित्वादत्राध्याहारो नाम प्रतिपादनम्। तथाच ससाधनक्रियाप्रतिपादकत्वाभिप्रायेणेत्यर्थ इति केचित्प्रतिपन्नाः। अन्ये तु वाचकत्वमिहाध्याहारशब्दार्थस्तथा च ससाधनक्रियावाचकत्वाभि-प्रायेणेत्यर्थ इत्यवगताः। अपरे तु अध्याहार आश्रयणम्। तथा च नामैकदेशग्रहणे नामग्रहणमिति न्यायेन ससाधनक्रियाशब्देन ससाधनक्रियावाचकत्वं गृह्यते तदध्याहारेण तदाश्रयणेनेत्यर्थ इति ज्ञातवन्तः। अत्र सर्वत्राप्यध्याहारपदास्वारस्यमित्यवगन्तव्यम्। एके तु पण्डितंमन्या अध्याहारपदास्वास्यकातराः सन्तः ससाधनक्रियाध्याहारेणेति पाठः प्रमादिकः किं तु ससाधनक्रियावाचित्वमेवेत्युक्तमित्येव पाठ इति पाठान्तरमेव यत्कल्पयन्ति तन्न। क्वचिदपि पुस्तके कल्पितस्य पाठान्तरस्याभावात्। सर्वपुस्तकेष्वप्येवमेव पाठस्य समस्तविद्वत्संमतत्वादित्यवधेयम्।

व्यवहितयोः संबन्ध इत्यभिप्रेत्याह अथो वेति। तस्यैवार्थमाह यद्वेति। ननु इषवो धीयन्तेऽत्रेति बाणाधिकरणत्वं इषुधिशब्दार्थस्तत्रनिजसज्जनानां कथमिषुधित्वमित्याशङ्कायां प्रवृत्तं मानबाणा-नितिपदं व्याचष्टे मानबाणानिति। तानेवेति। निजसज्जनानेव तानिति संबन्धः। अध्यात्मं निजसज्जनाख्येनेव तान् इषुधीन् मानबाणान् असक्तेत्यर्थः। स्वविषयेति। तथा च निजसज्जनानां स्वविषयबुध्यादिकं दत्वा तैः सज्जनैः कर्तृभिर्मानरूपैः करणैर्भक्तानामज्ञानाय। नाशयतीत्यर्थो द्रष्टव्यः। शरणं प्राप्यः शरणं प्राप्तुं योग्यः। ननु आर्य इति स्यादिति। कथम्। ऋ गतौ अस्मात् अचो यदिति सूत्रेण यत् प्रत्यये हलन्त्यमिति तकारलोपे गुणे तस्य च रपरत्वे सति अर्य इत्येव

(पदार्थप्रकाशिका)

भविष्यतीत्यत उक्तम् । ऋहलोर्ण्यदिति विशेषविहित इति । अचो यदिति यत्प्रत्ययविधायकं सामान्यसूत्रं तदपवादकं विशेषसूत्रं ऋहलोर्ण्यदिति । रदन्ताद्धलन्ताच्च धातोर्ण्यत्प्रत्ययः स्यादिति तदर्थः । एवं च ऋगताविति धातोर्ण्यत्प्रत्यये णकारतकारयोर्लोपे अचो ञ्णितीति सूत्रेण णित्वादादिवृद्धौ सत्यां तस्य च रपरत्वे आर्य इति स्यादित्यर्थः । अर्यः स्वामीत्यादि । अयमर्थः । अचो यदिति यत्प्रत्ययविधायकं सामान्यसूत्रं तदपवादकं ऋहलोर्ण्यदिति ण्यप्रत्ययविधायकं सूत्रं तदपवादकं च अर्यः स्वामिवैश्ययोरिति सूत्रम् । स्वामिवैश्ययोरभिधेययोः सतोरचो यदिति सूत्रेण यत्प्रत्यय एव भवतीति तदर्थः । अर्यः स्वामी अर्यो वैश्य इत्युदाहरणम् । एवं चापवादस्यापवादे पुनरुत्सर्गस्यैव प्राप्तिरिति न्यायेनाचो यदिति सूत्रप्राप्तयदन्त एवायं शब्द इति अर्य इति युक्तमिति । अधीश्वर इतीति । अनेन यत्प्रत्ययनिमित्तं स्वामित्वरूपमभिधेयं दर्शितमित्यवगन्तव्यम् । शत्रुभ्यः पणिभ्यः । द्वितीयेऽर्थे । अध्यात्मरूपेऽर्थे परोक्षत इति । समजतीति लटा परोक्षनिर्देशादित्यर्थः । एवं ददमान इति संबन्धः । बाह्ये गवादिकम् । अध्यात्मं तत्वज्ञानम् । यङन्त इति । अत एव चोप्कूयमाण इति तत्कार्योभ्यासो दृश्यत इत्यर्थः । यङर्थं दर्शयति । अतिशयेनेति । अतिशयापरपर्याये भृशार्थे यङो विहितत्वादिति भावः । पञ्चमी । अस्मदिति पञ्चमी । इन्द्रे पणिशब्दो गौण्या वृत्त्येति भावेनाह । हिंसकत्वेन सादृश्येनेति । ननु मा भूरसुर इति भाष्ये सामान्येन निषेधादृचि पणिर्मा भूदिति विशेषनिषेधादृग्भाष्ययोर्विसंवाद इत्यत आह असुरोऽसुरविशेष इति । पणिनामक इत्यर्थः । ऋक्तात्पर्यमाह महता प्रयत्नेनेति । बाह्ये वै शत्रुहननादिरूपेणाध्यात्मे च भक्तानां स्वविषयचित्तादिवृत्तिसंपादनादिरूपेण महता प्रयत्नेनेत्यर्थः। साध्वाचरन्निति बाह्येऽध्यात्मं च गोतत्वज्ञानदानेन भद्रमेवाचरंस्त्वमित्यर्थः । मापणिर्भूरित्यस्य तात्पर्यं अस्मान्प्रति निष्ठुरो मा भूरिति । निष्ठुरो भवदभिलषितं न ददामीत्यादि दुर्वाक्यवक्ता मा भूरित्यर्थः ॥ ३ ॥

वधीर्हि दस्युं धनिनं घनेन ॥ घञिति । शक्लृ शुक्तौ अत्र लृकारोऽनुबन्धार्थः । शक् इत्येव धातुः तथाच शक् अस्माद्धञ् प्रत्यये अकारमात्रं विहाय सर्वस्य लोपे ञित्वादादिवृद्धौ प्रत्ययाकारे च मिलिते सति शाकेति भवतीति द्रष्टव्यम् । यमयन् नियामयन् । तन्मात्रेणेति । धनवत्वमात्रेणेत्यर्थः । घनेन मूर्तेनेति । मूर्तौ घन इति सूत्रम् । तस्यार्थः । मूर्तिः काठिन्यम् । मूर्तिः काठिन्यकाय-योरित्यमरः । तस्मिन्नर्थे घन इति निपात्यत इति । तदेतद् हृदि निधाय घनेनेत्यस्यार्थो दर्शितो मूर्तेनेति । तस्याऽप्यर्थमाह ॥ अतिदृढेनेति ॥ अतिकठिनेनेत्यर्थः ॥ नन्वज्ञानगणस्य कथं धनित्वमित्यत आह तस्य धनित्वमिति ॥ अस्यैव विवरणमिति । वधीहीति पूर्वार्धस्यैव विवरणमित्यर्थः । अयज्वान इत्युक्त्या उक्तरीत्या दस्युविवरणात् दुःखबाहुल्यापादकमृत्युक्त्या

(पदार्थप्रकाशिका)

वधविवरणादित्यादि द्रष्टव्यम् । ते पुरुषाः । दस्युरूपाः पुरुषाः । विष्वगिति । भगवत्पूजामार्ग-व्यतिरिक्तमार्गान्तरेणेत्यर्थः । तदेव दर्शयति ॥ देवतान्तरमिति ॥ सर्वसाधारणमिति । देवतान्तरपूजकभगवत्पूजकसाधारणमित्यर्थः । अस्य देवतान्तरपूजकस्य । कथंभूता इति । विषुणक् व्यायन्नित्युक्ताः देवतान्तरपूजकाः कथंभूता इत्याशङ्कायां सनका इत्युक्तमित्यर्थः ॥ ततो ण्वुलिति । षण् लाभेऽस्मात् ण्वुल् प्रत्यये वकारं विहाय सर्वस्य लोपे वकारस्य युवोरनाकावित्यकादेशे धात्वादेः षस्य सत्वे निर्वचनत्वात् णस्य नत्वे च सति सनकेति रूपम् ॥ योग्यस्वरूपा अपि देवतान्तरं पूजयन्तीति संबन्धः । घनोरधीत्युत्तरार्धतात्पर्यमाह मुक्तियोग्या अपीत्यादिना । नरकादीत्यादिपदेन त्रिदिवान्तरिक्षभूमिषु परावृत्तिग्रहणम् । मुक्तियोग्या अपि स्मेत्यत्रत्यापिशब्दार्थमाह किं पुनरिति । अयोग्या नरकाद्यनर्थं प्राप्नुवन्तीति किं वक्तव्यमित्यर्थः ॥ ४ ॥

परा चिच्छीर्षा ववृजुस्त इन्द्र ॥ अत्रापि । अस्यामपि ऋचि । पूर्वोक्ता एवेति ॥ एतदृगुक्ता अयज्वानः पूर्वोक्ताः सनका एव मोक्षयोग्या एवेति प्रतीतिमित्यर्थः । अन्ये कुत इत्यत आह तेषामिति । पुर्वऋगुक्तानामयज्वनामित्यर्थः । एतेषाम् । एतदृगुक्तानामयज्वनाम् । महादोषोक्तेरिति । पूर्वोक्तानामयज्वनां नरकाद्यनर्थोक्तेः एतेषां लोकत्रयभ्रष्टत्वोक्त्यान्ध-तमःप्राप्त्युक्तेरित्यर्थः । के त इति । एतदृगुक्ता अयज्वान के इत्यर्थः । उक्तविवेकमिति । पूर्वोक्तेभ्यः सनकेभ्योऽयज्वभ्य एतदृगुक्तानामयज्वनां विवेकं भेदमित्यर्थः । प्राप्तप्रयोजनाः । सद्भिः स्पर्धामात्रमेव तेषां प्रयोजनमिति यावत् । ततः किमिति । सद्भिः स्पर्धामात्रस्यैवाप्रयोजनत्वात्ततोपि भाविप्रयोजनं तेषां किमित्यर्थः । अस्य सन्तीति । अधीनतया सन्तीत्यर्थः । तस्य हरिवच्छब्दस्य हरिव इतीयं संबुद्धिरित्यर्थः । हरिवःस्थातरिति पदद्वयं सम्यग्व्याख्याय तत्र भाष्यं संयोजयति । इन्द्रियेशः स्थैर्यवानिति । उग्रशब्दस्य तंत्रभाष्येऽव्याख्यातत्वात्केषामुग्र इत्याशङ्कायामाह दैत्यानामिति । ऋचि संबुध्यन्ततया स्थितयोर्हरिवःस्थातरिति पदयोर्भाष्ये प्रथमान्ततया व्याख्यातत्वादुग्रपदस्यापि हरिव इत्यादिवत् स्वयं प्रथमान्ततया व्याख्यातत्वादिति यावदित्युक्तम् । एवंभूतास्त इति । अत्रोक्ता अयज्वानः सद्भिः स्पर्धामात्रसंपूरितार्था यस्मादित्यर्थः । रोदसीभ्यां निरादयः क्रान्ताद्यर्थे पञ्चम्येत्यभिहितत्वादिति भावः । निराकृतवानसीति । तमःसंस्थानकरोरिति भावः ॥ ५ ॥ १ ॥

## पदार्थदीपिका

एताया ॥ देवा देव्यादय इत्यनेन भाष्येण देवा इति बहुवचनमाद्यर्थे इत्युक्तं भवति । इतेति । इण् गतौ । अदादित्वाच्छपो लुकि इतेति रूपसिद्धिः । त्वरिता इत्यस्याभाष्यत्वं व्यावर्तयति । आङो

(पदार्थदीपिका)

व्याख्यानमिति। अनेन त्वरिता आगच्छतेति व्याख्येयमित्युक्तं भवति। क्यच्प्रत्यय इति। ततश्च वान्तो यि प्रत्यये इति अवादेशे गव्यशब्दनिष्पत्तिरिति ज्ञातव्यम्। तत इति। क्यच् प्रत्ययान्तात् धातोरित्यर्थः। शतृप्रत्यय इति। लटः शतृशानचाविति लटः शत्रादेश इत्यर्थः। तत्र उपमानादाचार इत्यत्र कर्मण इति वर्तते इति। धातोः कर्मणः समानकर्तृकादिति पूर्वयोगात् कर्मण इत्यनुवर्तत इत्यर्थः। तथा चोपमानकर्मणः सुबन्तादाचारार्थे क्यच्प्रत्ययविधायकत्वादुपमानादाचार इत्यस्य न कर्तृभूतादुपयोगात्सुबन्तात् आचारार्थे क्यच् विधायकतेति तथा व्याख्यानमुपपन्नमिति भावः। छान्दसेन व्यत्ययेनेति। व्यत्ययो बहुलं इति छन्दसि सर्वविधिव्यत्ययेनोक्तिरित्यर्थः। तथा च कर्तृभूतादुपमानादपि तत्सिद्धौ तथा व्याख्यानमुपपन्नमिति भावः। सुप आत्मनः क्यजिति। अत्र कर्मण इच्छायां वेत्यनुवर्तते। इषि कर्मणः इषितुरात्मसम्बन्धिनः सुबन्तादिच्छायामर्थे वा क्यच्प्रत्ययो भवतीति सूत्रार्थः। ततश्च गा आत्मन इच्छतीति इच्छार्थे गोशब्दात् क्यचि परोक्तरीत्या व्याख्याने वान्तो यि प्रत्यय इत्ययादेशे प्रत्ययान्तात् धातोः लटः शत्रादेशे गव्यन्त इति रूपनिर्वाहात् व्यत्ययमूलकं कर्तुरुपमानादाचारार्थे प्रत्ययमाश्रित्य गोवदाचरन्त इति व्याख्यानमयुक्तमिति भावः।

अधिकमिति। परमात्मनः स्वामित्वरूपाधिक्यलाभार्थं व्याख्यानमिति भावः। लङ् भूते वर्तत इति वक्ष्यमाणानुपपत्तिं मनसि निधाय गूढाभिसन्धिः नन्वयमेतीति अतीत्यादि परिहारभाष्याभिप्रायं मनसि निधाय गूढाभिसन्धिरेव परिहरति। यातेर्लङि रूपमेतदिति। यातेर्लङुत्तमपुरुषबहुवचने मसि नित्यं ङित इति ङिल्लकारोत्तरसकारस्य लोपे लुङ्लङ्लृक्ष्वडुदात्त इत्यडागमे अयामेति रूपसिध्दिः। पूर्ववादी स्वाशयमुद्घाटयति। लङ्भूत इति। अनद्यतने लङित्यनुशासनादिति भावः। उत्तरवादी स्वाशयमुद्घाटयितुं भाष्यमवतारयति। अत आहेति। अन्यत्र चेति। अनेन वचनेन निश्चितभविष्यदर्थस्यातीतत्वेनोक्तत्वाच्च भविष्यदर्थे भूतार्थकलङ्-प्रयोगो युक्त इति भावः। अयतेर्लोटि रूपमिति। गत्यर्थादयतेर्लोडुत्तमपुरुषबहुवचने मसि लोटो लङ्वदिति लङ्वद्भावात् नित्यं ङित इति सलोपे आडुत्तमस्य पिच्चेत्यडागमे आयामेति रूपसिद्धिः। न केवलं यातेर्लिङि रूपत्वांगीकृतावुक्तदिशा न दोषः, किन्त्वयतेर्लोटि रूपत्वांगीकारेऽपि न दोष इत्यपिशब्दः। यद्वा एतेर्लोटि रूपत्वांगीकृतावपि न दोष इत्यनुक्तसमुच्चयार्थोऽपिशब्दः। एतेर्लोडुत्तमबहुवचने आडुत्तमस्य पिच्चेत्याडागमे लङ्वद्भावात्सार्वधातुकलक्षणे यादेशे च सति आयामेति रूपसिद्धेरप्रत्यूहत्वात्। न च इणो यणिति इणो यणादेशविधानात् यामेत्येव स्यान्न त्वायामेति वाच्यम्। मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति वचनात्तस्येयङादेशापवादकत्वेन गुणबाधकत्वाभावात् प्रत्युत परत्वाद्गुणेनैव यणादेशो बाध्यते।

(पदार्थदीपिका)

तथा चोक्तं वृत्तौ इयङादेशापवादोऽयं मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् इति गुणवृद्धिभ्यां परत्वाद्बाध्यते अयनमित्यादि। तस्मादनुक्तसमुच्चयेऽपि न दोष इति ध्येयम्। चशब्द इति। भाष्य इति शेषः। वावृधातीति। वृधु वृद्धौ लेटि लेटोडाटावित्यडागमः। धातोरेकाचो हलादेरिति यङि द्विर्भावे च सति ववृधातीति सिद्ध्यति। संहितायामभ्यासस्य दीर्घश्छान्दस इति ज्ञेयम्। वर्धयतीति। अनेन तु लडर्थे लेडित्युक्तं भवति। ननु एवेति कस्यार्थ इत्यत आह। यङोर्थ एवेतीति। अव्ययानामनेकार्थत्वादतिशयार्थरूपयङर्थप्रातिपदिकमेवशब्दस्येति भावः। अनामृणोऽभेद्य इति। मृण हिंसायाम्। मृणन्ति हिंसतीति मृणः। इगुपधलक्षणः कः। न सन्ति मृणा यस्येत्यनामृणोऽहिंस्य इत्यर्थः। तस्य तात्पर्यार्थोऽभेद्य इति। तस्येति। इन्द्रस्य परोक्षत्वेनास्य इत्यपरोक्षनिर्देशानुपपत्तेरस्येत्येतत्तस्येति व्याख्यातमिति ध्येयम्। आवर्जत इति ददातीति व्याख्यातं भाष्ये। तद्वर्जनार्थत्वाद्वृजेरयुक्तमित्यत आह। त्यागार्थत्वादिति। धातूनामनेकार्थत्वात् त्यागार्थोऽयमत्रेति भावेन तथा व्याख्यानमिति भावः ॥ १ ॥

उपेत्। धनदामिति। धनं ददातीति धनदः। आतो मनिन् वनिप् क्वनिपश्चेति विच्। जुष्टां सेवितामिति। जुषी प्रीतिसेवनयोः। श्वीदितो निष्ठायामितीट् प्रतिषेध इति भावः। उपमेभिरिति। बहुलं छन्दसीति भिस ऐसादेशाभाव इति ज्ञेयम्। अर्का ऋच इति। अर्चन्त्यर्कमर्किणमित्येतद्व्याख्यानावसरे नियामकस्योक्तत्वादिति भावः। स्तोतृभ्यां स्तोतॄणामिति। सुपां सुलुगिति षष्ठ्यर्थे चतुर्थीति भावः। हव्य इति। अचो यदिति यत्। गुणे धातोस्तन्निमित्तस्यैवेत्यवादेश इति भावः। अत्रादानार्थ इति। होतव्यत्वासंभवादिति भावः। उपजीव्यत्वमेवाद्यत्वमित्यन्यत्रोक्तेरिति भावः ॥ २ ॥

निसर्वसेनः। सर्वसेन इति। इनेन सह वर्तते सेना। वोपसर्जनं तस्येति भावः। ततो बहुव्रीहिः। इषुधीनिति। इषव एषु धीयन्त इति इषुधयः। कर्मण्यधिकरणे चेति किप्रत्ययः। संहितायां दीर्घादटीत्यादिना नकारस्य रुत्वं अत्रानुनासिकः पूर्वस्य तु वेति पूर्वः स्वरोऽनुनासिकः। ऋगतौ गम्य इति। अस्मादचो यदिति यत्प्रत्यय गुणरपरत्वादीनि द्रष्टव्यानि। ऋहलोर्ण्यदिति ण्यदिति। ऋवर्णातात् हलन्ताच्च धातोः ण्यप्रत्ययः स्यादिति सूत्रार्थः। तथा च णित्वात् अचो ञ्णितीति वृद्धौ आर्यमिति भावः। वष्टीति। वश कान्तौ। अदादित्वाच्छपो लुक्। व्रश्चेति षत्वं ष्टुना ष्टुरिति ष्टुत्वम्।

चोष्कूयमाणः। ष्कुय् आप्रवणे। धातोरेकाच इति यङः अकृत्सार्वधातुकयोर्दीर्घः द्विर्भावः। शर्पूर्वाः खयः इति ककारः शिष्यते। सकारो लुप्यते। कुहोश्चुरिति कुत्वम्। गुणो यङ्लुकोरिति

(पदार्थदीपिका)

गुणः । सुषामादित्वात् षत्वं । यङन्ताल्लटः शानच् । आने मुक् । ततश्चोष्कूयमाण इति रूपसिद्धिः । माभूरिति । न माङ्योग इत्यडभावः ॥ ३ ॥

वधीरिति । घञिति भाव इति शेषः । ततश्च ञित्वादचो ञ्णितीति वृद्धिः । घनेन मूर्तेनेति । मूर्तो घन इति कठिनमूर्ताभिधेयायां हन्तेरप्रत्ययस्य घनादेशस्य च विधानादिति भावः । अक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यमिति संहितायां प्रकृतिभावः । छान्दसोऽनुनासिकः । तस्यार्थोऽतीति । वधीरिति । हन हिंसागत्योः । लुङि चेति वधादेशः । स चादन्तः । तस्यातो लोप इति लोपः । अल्लोपस्य स्थानिवद्भावात् अतो हलादेर्लघोरिति वृद्ध्यभावः । इट ईटीति सिचो लोपः । बहुलं छन्दस्यमाङ्योगेऽपीति अडागम इति ज्ञेयम् । विषुणगिति । विसुपूर्वस्याञ्चतेर्ल्युडागमः । ईयुरिति । एतेरुसि परत्वादिणो यणि यणादेश द्विर्वचनेऽचीति स्थानिवद्भावादिकारस्य द्विर्भवनं दीर्घ इणः कितीत्यभ्यासस्य दीर्घत्वमिति भावः । ण्वुल्लिति । वृद्ध्यभावः छान्दस इति ज्ञेयम् ॥ ४ ॥

पराचित् । अयज्वान इति । यजतेः सुयजोङ्वनिबिति वनिप् । शीर्षा शीर्षाणीति शेषं छन्दसि बहुलमिति शेर्लोपः । हरिव इति । अत्र छन्दसीर इति मतुपो वत्वम् । संबुद्धौ मतुवसोरुरिति रुत्वम् । अव्रतान् । दीर्घादटि समानपदे इति नकारस्य रुत्वम् । आतोटि नित्यमित्यनुनासिक आकारः । निरधमः । ध्मा शब्दाग्निसंयोगयोः । लघ्विति । साशश्वि । पाघ्राध्मेत्यादिना धमादेशः ॥ ५, १ ॥

## टीकाविवृतिः

श्रीब्रह्मवायुरुद्रेन्द्राःप्राप्नुवन्ति यदाश्रयात् ।
महाफलमहं वन्दे तद्विष्णोःपरमं पदम् ॥ १ ॥

एता याम ॥ पञ्चदशर्चमिति ॥ अनुक्रमणिकायां एतेति सूक्तमात्रप्रतीकेन पञ्चोनेत्यनुवृत्त्यास्यार्थस्य अनादेशपरिभाषयेन्द्रदेवताकत्वस्य त्रिष्टुप्छन्दस्कत्वस्य च सिद्धत्वादिति भावः ॥ मध्यमपुरुषेति ॥ ते यूयमित्यतःपरं इति सिद्धमिति शेषः । युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम इति सूत्रेण तिङ्वाच्यकारकवाचिनि युष्मच्छब्दे प्रयुज्यमानेऽप्रयुज्यमानेपि युष्मच्छब्दार्थविवक्षायां मध्यमपुरुषविधानात् यूयमित्यस्य इतेति प्रयोगान्यथानुपपत्त्या सिद्धत्वात्संबोधनाभावे यूयमित्यस्यापि वक्तुमशक्यत्वात् ये सखाय इत्यादिसिद्धिरिति भावः । सर्वसज्जनसंग्रहार्थमाह ॥ देवाः देवादय इति ॥ अर्धर्चाः पुंसि चेत्यादौ बहुवचन-स्याद्यर्थत्वदर्शनादत्रापि तथोक्तिः । अत एवारुचेराह ॥ सखायो देवाश्चेति वेति ॥ संघट्टिन इति ॥

(टीकाविवृतिः)

सहायभूता इत्यर्थः ।। आचारे क्यजिति ।। ततो वांतोयि प्रत्यये इत्यवादेश इति शेषः ।। तत्र कर्मण इति वर्तत इति ।। धातोः कर्मणः समानकर्तृकादिच्छायां वेत्यत इति शेषः ।। कर्तुरपीति ।। कर्तृवाचकाच्छब्दादित्यर्थः ।। गा इच्छन्त इतीति ।। गव्यन्त इत्यस्यार्थ इति शेषः ।। अधिकमपीति ।। एतमर्थमविहायैवेन्द्रवशत्वरूपार्थमपि दर्शयितुं पशुवदिति भाष्यमित्यर्थः ।। नन्वयामेति कोयं शब्द इति ।। गूढाभिसंधेरियमाशङ्का । अयामेति शब्दःकः कीदृशः । प्रकृतिःका प्रत्ययःक इति यावत् । गूढाभिसंधिनैवोत्तरमाह ।। यातेर्लङीति ।। पूर्वपक्षी स्वाभिप्रायमाविष्करोति ।। लङ्भूते वर्तत इति ।। न चात्रेति ।। अस्यामृचि तद्भूतत्वं न च संभवति प्रमतिं वावृधातीति समभिव्याहाराद्भविष्यदर्थस्यावश्यकत्वादिति भावः । सिद्धांत्यभिसंध्युद्घाटनं तु अतिनिश्चित इति भाष्येणैवेति ज्ञेयम् ।। अभूतेपीति ।। वर्तमाने भविष्यति वेत्यर्थः । तथा च पाणिनिरपि आशंसायां भूतवच्चेत्यनेनाप्राप्तेष्टप्राप्तीच्छायां गम्यमानायां भविष्यदर्थकाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया वा स्युरित्याह ।। अयतेर्लोटि रूपमेतदिति ।। अयगतावित्यतो लोटो मसादेशे शपि आडुत्तमस्येत्याडागमे लोटो लङ्वदिति लङ्वद्भावेन नित्यं ङित इति मसःसलोपे अयामेति रूपसिद्धेर्लोटःकालसामान्ये विधानाद्भविष्यदर्थोपपत्तेः सूत्राद्याश्रयणेन क्लिष्टकल्पनाऽनवकाश इत्यर्थः । उपलक्षणमेतत् । यातेश्छन्दसि लुङ्लङ्लिट इति कालसामान्ये विहितलङोङ्गीकारेपि न कश्चिद्दोष इति ग्राह्यम् । या प्रापण इत्येतस्यानद्यतने लङिति पक्षे अभूतस्य भूतवद्भावेन भूतसामान्यविहितलुङ भाव्यं न तु लङ । सामान्यातिदेशे विशेषानतिदेश इति परिभाषावचनादित्याशंका तत्र छान्दसत्वेन परिहार्या । अत्र सापि नास्तीति सूचयितुं कश्चिदित्युक्तम् । अयामेत्यस्य इतेति तिङन्तात्परत्वात्तिङ्ङतिङ इति न निघातः । वावृधातीत्यत्र वृधेर्यङ्लुकि द्वित्वादौ सत्यभ्यासस्य छान्दसत्वाद्रीगाद्यभावे दीर्घोकित इति दीर्घे लेटि लेटोडाटावित्यडागमे अन्तर्णीतण्यर्थाश्रयेण वर्धयतीति व्याख्यानं चेद्यङ्वैयर्थ्यमित्यत आह ।। यङर्थ एवेतीति ।। धातोरेकाच इति क्रियासमभिहारे यङो विधानात्पौनःपुन्यभृशार्थरूपत्वात्क्रियासमभिहारस्यात्र भृशार्थग्रहणमिति भावेन भाष्ये एवेत्युक्तम् । एवशब्दार्थस्यावधारणस्यैव भृशार्थरूपत्वादिति भावः ।। अनामृणोभेद्य इति ।। आङ्पूर्वमृणहिंसायामित्यतःकर्मणि औणादिके क प्रत्यये नञ्समासे नञ्सुभ्यामित्यनेन बहुव्रीहौ समासे आभ्यां परस्यान्तोदात्तविधानादनामृण इत्यस्यांतोदात्तत्वम् । तथा चाऽऽमृणो हिंस्यःभेद्य इति यावत् । सामर्थ्यादाङो नञा संबन्ध इति भावेनोक्तं क्वापि भेद्यो नभवतीति ।। केतं ज्ञानमिति ।। भक्तेषु विद्यमानमिति शेषः । प्रज्ञानामसु केतःकेतुरिति पाठात् । केतमित्यस्य अस्य तस्येन्द्रस्यैवेत्यनेनान्वयः । ननु भक्तानां

(टीकाविवृतिः)

भिन्नत्वात्तत्संबद्धज्ञानानामनेकत्वात्केतमित्येकवचनं कथमित्यत आह ।। एकवचनं बहुवचनार्थ इति ।। समुदायविवक्षयैकवचनमिति भावः ।। रायो वित्तानीति ।। अत्रापि भवन्तीत्यध्याहारः ।। आवर्जतेस्त्यागार्थत्वाद्ददातीति ।। वृजी वर्जन इत्यस्माच्चुरादौ आधृषीयाण्णिजभावे लटो व्यत्ययेनात्मनेपदे शप्युपधागुणे आङा समासे आवर्जते इति रूपम् । वर्जनस्य त्यागरूपत्वं स्त्रीवर्जनं स्त्रीत्याग इत्यादिप्रयोगेणैव सिद्धमित्याशयेनोक्तं त्यागार्थत्वादिति । दानस्यापि स्वत्वत्यागरूपत्वाद्ददातीति भाष्ये व्याख्यातम् । यद्यपि विष्णोः सर्वस्वामित्वात्कुत्रापि स्वत्वत्यागो नास्ति तथापि परस्वत्वापादनेन राजादिदानवत्स्वत्वत्यागप्रतीत्याऽयं व्यवहारो गौणोंगीकार्यः । एतद्द्युक्तमाहात्म्यस्य दानोपयोगं दर्शयति ।। ज्ञानानामिति ।। अनेन ज्ञानवित्तप्रभुत्वात्प्रतिबन्धकाभावात्प्रतिग्रहीतुरधिकारित्वाच्च दानस्यावश्यकत्वमित्युक्तं भवति ।। १ ।।

उपेदहम् ।। धनदां धनस्य दातारमिति ।। कर्मार्थधनशब्दोपपदाद्ददातेरातोमनिन्क्वनिब्वनिपश्चेति चकारात्कर्तरि विच्प्रत्यये आकारान्तो धनदाशब्द इति भावः ।। अप्रतीतमिति ।। प्रतिपूर्वादिण्धातोर्गत्यर्थाकर्मकेति कर्तरि क्ते नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरेण नञ उदात्तत्वमिति भावः ।। उपपतामि उपगच्छामीति ।। अततिपततीतिगतिकर्मसु पाठादिति भावः ।। वसतिं नीडमिति ।। वहिवस्यर्तिभ्यश्चिदित्यनेन वसेरधिकरणेऽतिप्रत्ययः ।। वसतिः स्त्रीगृहे रात्राविति मेदिनीकोशोक्तेरिति भावः ।। उपमशब्दःसदृशार्थ इति ।। सादृश्यार्थादुपमाशब्दान्मत्वर्थ अर्शआद्यचिनिष्पन्नत्वादिति भावः ।। यामन् याम इति ।। सर्वधातुभ्योमनिन्निति यातेर्मनिन् प्रत्यये सप्तम्याः सुपां सुलुगित्यनेन लुकि नङि संबुध्द्योरिति नलोपनिषेध इति भावः । ननु यामन् शब्दपर्यायियामशब्दस्य यामस्तु प्रहरे व्रत इति विश्वोक्तेःप्रहरार्थकत्वात्काल इति प्रतिपदं कथमुक्तमित्यत आह ।। वीप्साभिप्रायमिति ।। तथा च यामे यामे इत्यर्थकत्वात्सर्वकाल इति तात्पर्यार्थः । नित्यवीप्सयोरिति द्वित्वाभावस्तु छान्दस इति भावः ।। कालवाचक एव वेति ।। कालविशेषवाचकोयं लक्षणया कालसामान्यप्रतिपादक इति भावः । सदा सेव्यत्वस्य निद्राकाले बाधितत्वादाह ।। दत्तावसर एवेति ।। हरिणोक्तस्तोत्रकाले प्रातरादावित्यर्थः ।। २ ।।

निसर्वसेनः ।। इषुधींस्तूणानिति ।। शराश्रयान् । तूणोपासंगतूणीरनिषंगा इषुधिर्द्वयोरित्यमरोक्तेरिति भावः । संहितायां दीर्घादटि समानपाद इति नस्य रुत्वे अत्रानुनासिकः पूर्वस्येत्यनुनासिकः ।। षंज संग इति ।। अस्माल्लुङि व्यत्ययेनात्मनेपदे अनिट्त्वाज्झलो झलीति सिज्लोपे तप्रत्ययस्य सार्वधातुकमपिदिति ङित्त्वादनिदितामिति नलोपे असक्तेति रूपमिति भावः ।

(टीकाविवृतिः)

ननु तर्ह्यस्य लुङन्तप्रतिपदं विहाय भाष्ये बध्नातीति लडन्तप्रतिपदं कथमित्यत आह ।। वष्टीति श्रवणादिति ।। उपलक्षणमेतत् । अजतीति प्रयोगादित्यपि ग्राह्यम् । एतत्सामानाधिकरण्याय लकारव्यत्ययस्याश्रयणीयत्वादिति भावः । नीत्यस्य क्रियान्वयमाश्रित्याशेषतः शत्रून्हंतुमिति भाष्यं शेषोक्तिपरत्वेन व्याख्याय प्रकारान्तरेण व्याख्याति ।। यद्वेति ।। ससाधनक्रिया चाध्याहारश्च ससाधनक्रियाध्याहारमिति द्वन्द्वैकवद्भावः । साधनं तिङ्प्रत्ययवाच्यकर्तृकर्मभावाख्यं तेन सहिता ससाधनक्रियेत्यर्थः । उपसर्गस्य क्रियाया असन्निधाने ससाधनक्रियावाचकत्वान्निहन्तुमिति सिद्धौ योग्यत्वादशेषतः शत्रूनित्यध्याहार इति भावः । तदेव दर्शयति ।। नि नितरामिति ।। अस्य हन्तुमित्यनेनान्वयः । अध्यात्मरूपपक्षान्तरद्योतके अथो वेति व्यवहिते पदे संबन्धयन्व्याचष्टे ।। अथो वा यद्वेति ।। इषुधीनित्यर्थस्य सज्जनानित्यस्य तूणसाम्यार्थं इषव इव विरोधिनाशे तीव्राःधियो येषान्त इति विग्रहं मनसि निधायोक्तं मानबाणानिति भाष्यं व्याचष्टे ।। मानानीति ।। ण्यति कृत इति ।। अचो ञ्णितीति वृद्धौ च कृतायामिति शेषः ।। द्वितीयेर्थ इति ।। अध्यात्मार्थे गाःमतीरित्यर्थः ।। भूरिवामं भद्रमिति ।। भूरिशब्दस्य बहुनामसु पाठाद्वामशब्दस्य प्रशस्यनामसु पाठात् भूरि बहु वामं प्रशस्यभद्रमित्यर्थः । बाह्येर्थे योग्यतया गवादिकं विशेष्यं गृह्यते अध्यात्मार्थे तु तत्वज्ञानमिति भावः ।। दानार्थे चायमिति ।। कुशब्दे इत्ययं धातूनामनेकार्थत्वाद्दानार्थः पारस्करादेराकृतिगण-त्वादभ्यासात्परस्य सुडागम इति भावः । मापणिर्भूरित्येतत्पादोक्तप्रमेयं प्रति पूर्वपादत्रयोक्तस्य हेतुत्वं द्योतयितुं ऋगभिप्रायमाह ।। महता प्रयत्नेनेति ।। इषुधिधारणादिरूपेण साध्वाचरन् गोदानादि कुर्वन्नित्यर्थः ।। ३ ।।

वधीर्हि ।। घञिति ।। भावे इति शेषः । उपशाकेभिश्चरन्नित्यस्य तात्पर्यमाह ।। सर्वदेवेत्यादिना ।। तन्मात्रेणेति ।। धनाढ्यत्वमात्रेणेत्यर्थः ।। वक्ष्यमाणत्वादिति ।। उत्तरार्धस्यैतद्व्याख्यान रूपत्वादत्रापि तद्विशेषणं ज्ञेयमिति भावः ।। घनेन मूर्तेनेति ।। मूर्तौ घन इति सूत्रेण हन्तेरप्रत्ययो घनादेशश्च काठिन्ये वाच्ये निपात्यते । धर्मधर्मिणोरभेदात्काठिन्यवांश्चोच्यते । अत एव घनःसांद्रे दृढे दार्ढ्य इति विश्वकोशेप्युक्तमिति भावः । अतीत्यनेन अलाक्षणिकानुनासिकापरपर्याय- रङ्गार्थो ज्ञेयः । धनित्वमित्यज्ञानस्य विशेषणमुपपादयति ।। तस्येति ।। अस्यैव विवरणमिति ।। वधीर्हीति प्रथमपादविवरणं द्वितीयार्ध इत्यर्थः ।। पुष्ट्यर्थस्य धिनोतेरिति ।। धिनु पुष्टावित्यतो भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उरिति सूत्रेण उप्रत्ययो धातोरुपधाया अकारादेशो निपातनादिति भावः ।। विषुणगिति ।। विषूपपदादंचतेर्क्विप्रत्यये छान्दसोऽकारनकारयोर्विपर्ययः । विष्वगित्यत्र तु क्विपि अनिदितामिति नलोपे यणादेश इति भावः ।। ततो ण्वुलिति ।। अत उपधाया

(टीकाविवृतिः)

इत्युपधावृद्ध्यभावश्छान्दस इति भावः । उत्तरार्धस्य प्रथमपादविवरणत्वं तु कैमुत्तिकन्याय-द्योतकत्वेनेति भावेनोभयोराशयमाह ॥ मुक्तियोग्या अपीति ॥ किं पुनरयोग्या इति प्रथमपादाशयकथनं तत्र वधी इत्युक्तेरिति ज्ञेयम् ॥ ४ ॥

पराचित् ॥ पूर्वऋगुक्तात्रोक्ता यज्वनां कुतो भेदोक्तिरित्यत आह ॥ तेषां सनकत्वादिति ॥ पूर्वत्र सनकशब्देन मोक्षलाभयोग्यत्वोक्तेरित्यर्थः ॥ एतेषां महादोषोक्तेरिति ॥ स्वशिरस्त्यागभयमपि त्यक्त्वा सदा सज्जनद्वेषकरणाख्यमहादोषोक्तेरित्यर्थः । यज्वभिरित्यादिना भाष्येण ऋग्व्याख्यानपक्षे तत्रायज्वान इत्यस्याग्रहणादरुच्या पक्षान्तरमाह ॥ यद्वोक्तविवेकमिति ॥ उक्तेभ्योऽयज्वभ्यो विवेकं भेदमित्यर्थः । तं प्रकारं दर्शयति ॥ हे इन्द्रेति ॥ हरयोश्वा इति । हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकांतरेषु चेति विश्वोक्तेरश्ववाच-काद्धरिशब्दान्मतुपि छन्दसीर इति इकारान्ताद्रेफांताच्च परस्य मतुपो मस्य वत्वविधानात् वत्वे तकारस्य मतुवसोरुः संबुद्धौ छन्दसीति रुत्वमिति भावः ॥ स्थातःस्थिरेति ॥ ष्ठाधातोःताच्छीलिकस्तृन्निति भावः । स्थैर्यवानिन्द्रियेश इति भाष्यं तात्पर्यार्थकथनपरमिति भावेनाह ॥ इन्द्रियेश इति ॥ एवं भूता इति ॥ अयज्वत्वादिधर्मोपेता इत्यर्थः । श्रुतौ दिव इति पृथगुक्तेःरोदस्योरित्यस्य दिवस्पृथिवीवाचकस्यापि स्वर्गसंबद्धान्तरिक्षपृथिवीवाचकत्वमिति भावेनाह ॥ खादन्तरिक्षलोकादिति ॥ निरधम इति ॥ धम इति सौत्रधातोर्लङि रूपमेतत् । अत एव वोपदेवेन सौत्रधातुप्रकरणे धमध्वान इति पठितम् ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता (सू-३३, व-२)

(३८९) अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः । वृषायुधो
नवध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥ ६ ॥

(प०) अयुयुत्सन् । अनवद्यस्य । सेनाम् । अयातयन्त । क्षितयः ।
नवऽग्वाः । वृषऽयुधः । न । वध्रयः । निःऽअष्टाः ।
प्रवत्ऽभिः । इन्द्रात् । चितयन्तः । आयन् ॥ ६ ॥

(३९०) त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे । अवादहो दिव
आ दस्युमुच्चा प्रसुन्वतः स्तुवतः शंसमावः ॥ ७ ॥

(प०) त्वम् । एतान् । रुदतः । जक्षतः । च । अयोधयः । रजसः । इन्द्र । पारे । अव । अदहः । दिवः । आ । दस्युम् । उच्चा । प्र । सुन्वतः । शंसम् । आवः ॥ ७ ॥

(३९१) चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः । न हिन्वानासस्तितिरुस्त इन्द्रं परिस्पशो अदधात्सूर्येण ॥ ८ ॥

(प०) चक्राणासः । परिऽनहम् । पृथिव्याः । हिरण्येन । मणिना । शुम्भमानाः । न । हिन्वानासः । तितिरुः । ते । इन्द्रम् । परि । स्पशः । अदधात् । सूर्येण ॥ ८ ॥

(३९२) परियदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतःसीम् । अमन्यमानाँ अभिमन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ॥ ९ ॥

(प०) परि । यत् । इन्द्र । रोदसी इति । उभेइति । अबुभोजीः । महिना । विश्वतः । सीम् । अमन्यमानान् । अभि । मन्यमानैः । निः । ब्रह्मऽभिः । अधमः । दस्युम् । इन्द्र ॥ ९ ॥

(३९३) नये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन् । युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत् । १०,२ ॥

(प०) न । ये । दिवः । पृथिव्याः । अन्तम् । आपुः । न । मायाभिः । धनऽदाम् । परिऽअभूवन् । युजम् । वज्रम् । वृषभः । चक्रे । इन्द्रः । निः । ज्योतिषा । तमसः । गाः । अधुक्षत् ॥१०,२॥

## ऋग्भाष्यम्

यदा नवग्वा ऋषयोऽसुरेन्द्रैरुपद्रुताः शरणं वासुदेवम् । प्रापुस्तमोभिस्तामसैर्वाऽघसंघैः सम्पीडिता अयुयुत्संस्तदा तैः । सेनांच विष्णोर्निरयातयंस्ते वधाय तेषां हरिभक्त्यादिकान्वा । गुणान्समर्था इव योधाः स्वशत्रुवधैकशीला अपि नष्टाः प्लवद्भिः । गुणैर्विष्णोः स्वैर्गुणैर्वा प्रसादादीशस्य संकालयंतो ह्यगच्छन् ॥ ६ ॥ रक्षोगणान्भक्षयतो मुनींश्च सम्पीडितान्रुदतश्च त्वयैव । अयोधयो रजसोंऽते सुसत्त्ववृद्धिर्यदा जगतः स्यात्तदैव ।

(ऋग्भाष्यम्)

पुंदोषान्वा गुणभक्षान्नृसत्त्ववृद्धौ दिवो ज्ञानतोऽवादहश्च। अज्ञानदस्युं स्तुवतः संस्तुतिं च प्रावोऽरक्षः ॥ ७ ॥ बन्धनं ये जनानाम्। कुर्वन्ति हेम्ना मणिभिश्शोभमाना दैत्यादयो दृढदोषा धनैर्वा। ते प्रेरयन्तोपि परस्परेण नैवातरन्वासुदेवं कथंचित्। सहैव सूर्येण च देवसङ्घांश्चरानज्ञातानदधाद्वासुदेवः। दैत्यानां वा तमसां वृत्तदृष्ट्यै ॥ ८ ॥ पर्यभुङ्थाः सह यद्रोदसीच। स्वमहिम्ना विश्वतः सम्यगेव तदभक्तान्निरधमो भक्तसङ्घैः ॥ ९ ॥ ये दस्यवो द्युपृथिव्योरशेषभोगेच्छवो धनदं चेश्वरं तम्। जिगीषवः स्वीयमायाभिरेव नैवोदापुर्द्वयमेतत्कदाचित्। युक्तं ज्ञानं वज्रमेवायुधं वा दस्यून्हंन्तु कृतवान्देवदेवः। निजेनैव ज्योतिषा भक्तहृद्गतमोगूढान्यदुहन्निश्चयेन। ज्ञानानि विष्णुर्यत्तदज्ञान-मुग्रम् ॥ १०, २ ॥

## ऋग्भाष्यटीका

अयुयुत्सन्। इतिहासगर्भत्वादितिहासं सूचयन्व्याख्याति। यदेति। नवग्वानाम ऋषयः क्षितयः प्रजाः। बाह्यैरसुरेन्द्रैरुपद्रुता यदेन्द्रं शरणं प्रापुः। यद्वा। तदुपलक्षिताः सज्जनास्तमोभिरज्ञानसंशयविपर्ययैस्तामसैस्तमोगुणकार्यैरघसंघैर्वा सम्पीडिता यदा वासुदेवं शरणं प्रापुः तदा तच्छरणप्राप्त्युपोद्बलितास्तैरसुरेन्द्रैस्तमःप्रभृतिभिर्वा सहायुयुत्सन् योद्धुमैच्छन्। यद्वा। वासुदेवमिन्द्रान्तर्गतं स्वांतर्गतं चेत्युभयत्र योजना। युयुत्सवस्ते मुनयस्तेषामसुराणामज्ञानादीनां वा वधायानवद्यस्य निर्दोषस्येन्द्रान्तर्यामिणो विष्णोः। सेनां चतुरङ्गिणीम्। स्वान्तर्गतस्य विष्णोः सेनां हरिभक्त्यादिकान् गुणान्वा। अयातयन्त निरयातयन् प्रेरितवन्तः। तदा वृषायुधोन वृषशब्दः श्रेष्ठवाची युध इति च क्विबन्तः। कर्मधारयः समासः। समर्था योधा इव वध्रयः तच्छीले कर्तरि रिप्रत्ययः। स्वशत्रुवधैकशीला अपि ते असुरादयः प्रवद्भिः प्लवद्भिराशुगतिभिः विष्णोर्गणैः परिवारैः स्वैर्भक्त्यादिर्गुणैर्वा निमित्तैर्निरष्टाः अतिशयेन व्याप्ताः अशूव्यास्तौ पलायन्तो दिशो भेजुः नष्टाः पलायमाना अदर्शनं गताः तेषु पलायितेष्वैन्द्रागणा इन्द्रादिन्द्रस्य ईशस्य प्रसादाच्चितयन्तस्तानसुरान्सङ्क्षालयन्तः पुनर्द्रावयन्त आयन् अगच्छन् हि ॥ ६ ॥

त्वमेतान्। रक्षोगणान् हे इन्द्र त्वं त्वयैव सम्पीडितान् सम्पीडितत्वादिति यावत्। रुदतश्च जक्षतो मुनीन्भक्षयतश्च। जक्षभक्षहसनयोः। एतान् नरभक्षकत्वेन प्रसिद्धान् रक्षोगणान् रजसो रजोगुणस्य पारेऽते जगतः सुसत्ववृद्धिर्यदा स्यात्तदैवायोधयो योधितवानसि। जगत इत्युक्त्या बाह्यं सत्वमिति सूचयति। यद्वा। रुदतः शोच्यान्। जक्षतो गुणभक्षकानानन्दादिगुणाच्छादकानेताननुभवसिद्धान्पुंदोषानज्ञानादीन् रजसः पारेऽन्ते। नृसत्ववृद्धा वाध्यात्मिकसत्वगुणवृद्धौ सत्यामयोधयः। किञ्च। दस्युं तान्दस्यून्

राक्षसान्दिवः स्वर्गादासम्यक् अवादहः अवाक्षिप्तवानसि। दहतिरत्र सामर्थ्यात्क्षेपार्थः। सङ्ग्रामे हत्वा स्वर्गादपि निराकृतवानसीति। यद्वा दिवो निराकृत्य नरके वादह इति बहिः स्पष्टम्। अध्यात्मं तु दस्युम् अज्ञानदस्युम्। सर्वदोषोपलक्षणमेतत्। गुणभक्षत्वादज्ञानादिकान्दस्यून्दिवो ज्ञानतो ज्ञानं दत्वाऽसम्यग-वादहो दग्धवानसीति। तेन रक्षसामज्ञानादीनां च विनाशेन सुन्वतः। सुन्वतां सवनमिति शेषः। स्तुवतः स्तुवतामुच्चा उच्चैः शंसं स्तुतिं संस्तुतिं च। प्रावः प्रकर्षेणारक्षः। विघ्ननिवारणे हि तद्रक्षितं भवति॥ ७॥

चक्राणासः। बन्धनम्। ये दैत्यादयः। पृथिव्याः पृथिवीस्थितानां जनानाम्। परीणहं णह बन्धने भावे सम्पदादित्वात्क्विप्। न हि वृतीत्यादिनोपसर्गस्य दीर्घः। परितो बन्धनम्। चक्राणासः भृशं कुर्वाणाः कुर्वन्ति। निरपराधान्प्राणिनः कारागारेषु निबध्य ततोपहृतेन हिरण्येन हेम्ना। मणिना मणिभिश्च। शुम्भमानाः शोभमानाः सन्ति। अध्यात्मन्तु दृढदोषाहिरण्येन मणिना शुम्भमाना इति तैस्तैर्धनैः प्रलोभ्य जनानां संसारे बन्धनं कुर्वन्तीति। त एवमकुतोऽभयंमन्याः हिन्वानासः हिगतौ वृद्धौ च। अन्तर्णीतण्यर्थस्येदं रूपम्। इतरेतरं गमयन्तो वर्धयन्तो वा। परस्परेण प्रेरयन्तोपि। परस्परेणेत्यव्ययम्। इतरेतरसाहाय्यवन्तोपीन्द्रं वासुदेवं कथंचिन्न तितिरुः नैवातरन्। यद्यपीह दुर्दमास्ते तथापीश्वरेण परत्र दण्ड्यन्त एवेति भावः। नन्वीश्वरस्तद्वृत्तं ज्ञात्वा दण्डयेत्। तज्ज्ञानमेव तस्य कथं सर्वज्ञत्वात्। किं चेन्द्रो वासुदेवो बहिर्दैत्यानामन्तस्तमसामज्ञानादीनां वृत्तदृष्ट्यै वृत्तदर्शनार्थम्। सूर्येण सहैव सूर्यसहितान्स्पशः अज्ञातचरान्देवसंघान्पर्यदधात् परितः स्थापितवान्। तथाचोक्तम्। आदित्यचन्द्रावनिलोनलश्च द्यौर्भूमिरापो हृदयं मनश्च। अहश्चरात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तमिति। तथा सूर्योग्निः खंमरुद्गावः सोमः संध्याहनी दिशः। कालः स्वयं धर्म इति ह्येते धर्मस्य साक्षिण इति॥ ८॥

परियत्। पर्यभुङ्थाः। हे इन्द्र त्वम्। यद्यस्मान्महिना स्वमहिम्ना। विश्वतः सर्वदा। सीं सम्यगेवानुपचारेण। रोदसी द्यावापृथिव्यौ। उभे मिलिते सहैव। एककालमेव वा पर्यबुभोजीः। छान्दसं द्विर्वचनम्। पर्यभुङ्थाः। हे इन्द्र परमैश्वर्योपेत। तत्तस्मात्त्वाममन्यमानास्त्वाम- जानतो दस्युं दस्यूनभक्तान्मन्यमानैस्त्वां जानद्भिः। ब्रह्मभिर्ब्राह्मणैर्भक्तसङ्घैर्निरधमो निराकृतवानसि। यस्मात्त्वं महासमर्थोतस्त्वदीया अपि त्वदाश्रयेण विरोधिनां निरासे समर्था इति। एक इन्द्रशब्दः संज्ञा। द्वितीयः परमैश्वर्यवचनः। इन्द्रेन्द्रेत्यादराद्वा द्विर्वचनम्॥ ९॥

नये दिवः। अत्र पूर्वार्धस्थपदानां य इत्यनेन सम्बन्धे त एवमिति वक्तव्यं नास्तीति न्यूनता स्यादित्यतो य इत्यतः परमध्याहार्यं प्रदर्श्य यत् श्रुतेः सिद्धेन त इत्यनेनान्वितया व्याख्याति। ये दस्यव इति। ये दस्यवो दैत्याः। स्वीयमायाभिरेव स्वछद्मभिरेव द्युपृथिव्योरशेषभोगेच्छवो द्यावापृथिवीसम्बन्धि समस्तभोगेच्छवो धनदं च तमिन्द्रमीश्वरं जिगीषवस्त इत्येतावानध्याहारः। नैवेत्यादिकं संक्षेपतो

(ऋग्भाष्यटीका)

व्याख्यानम् । दिवः स्वर्गस्य पृथिव्याश्चान्तमेकदेशमपि नापुः । मायाभिश्चिदपि धनदां धनस्य दातारमिन्द्रम् । न पर्यभूवन् । नाजैषुः । तत्किं सहायवान् बहुभिरपि न पराजीयते । वृषभो वर्षिता श्रेष्ठो वेन्द्रो देवदेवो दस्यून्हंतुमिति शेषः । वज्रं विष्णुज्ञानमेव । प्रसिद्धस्त्वायुधमेव । युजं युक्तम् । चक्रे कृतवान् । किञ्चेन्द्रो ज्योतिषा स्वप्रभावेन । गास्तमसो गिरिगुहांधकाराग्निरदुक्षत् निष्क्रामयित्वाऽधुक्षदिति । बहिः स्पष्टम् । विष्णुस्तु निर्निश्चयेन ज्योतिषा स्वविषयं निश्चयात्मकं ज्ञानमुत्पाद्य । गाः ज्ञानानि । तमस इति वचनसामर्थ्याद्भक्तहृद्गततमोगूढानि तस्मात्तमसोऽदुक्षत् अदुहत् अधुक्षत् । आवरणनिरासेन व्यक्तानि कृतवान् । ननु तमो नाम ज्ञानाभावः स कथं ज्ञानानि गूहयेत् । तथात्वे वा कथं ज्ञानेन निवर्तेतेत्यत आह ॥ यदिति । यदुग्रं मूलाविद्याख्यं भावरूपमज्ञानं तदिह तमो विवक्षितम् । तत्स्वरूपज्ञानावरणं प्रमाणज्ञाननिवर्त्यं चेति भावः ॥ १०, २ ॥

## मन्त्रार्थमञ्जरी

नवग्वाः, नवग्वा नाम ऋषयः । क्षितयः, प्रजाः । बाह्यैरसुरेन्द्रैरुपद्रुता यदेन्द्रं शरणं प्रापुः, यद्वा नवग्वोपलक्षिताः सज्जना अज्ञानसंशयविपर्ययैरघसंघैर्वा सम्पीडिता यदा वासुदेवं शरणं प्राप्ताः, तदा तच्छरणप्राप्त्युपोद्बलितास्तैरसुरेन्द्रैरज्ञानप्रभृतिभिः सह अयुयुत्सन्, योद्धुमैच्छन् । युयुत्सवस्ते मुनयः (सज्जना वा) तेषामसुराणामज्ञानादीनां वा वधाय अनवद्यस्य, निर्दोषस्य, इन्द्रान्तर्यामिणो विष्णोः । सेनाम्, चतुरङ्गिणीम् । स्वान्तर्गतस्य विष्णोः सेनां हरिभक्त्यादिकान्गुणान्वा । अयातयन्त, निरयातयन्, प्रेरितवन्तः । तदा वृषयुधः न, वृषशब्दः श्रेष्ठवाची, 'युधः' इति क्विबन्तः, कर्मधारयः, समर्था रोधा इव । वध्रयः, ताच्छील्ये कर्तरि रिप्रत्ययः (क्रिन्प्रत्ययः) स्वशत्रुवधैकशीलाः । (अपि) (ते) असुरादयः । प्रवद्भिः, प्लवद्भिः, आशुगतिभिर्विष्णोर्गणैः परिवारैः, स्वैर्भक्त्यादिगुणैर्वा, निमित्तैः । निरेष्टाः, अतिशयेन व्याप्ताः, 'अशू व्याप्तौ' पलायन्तो दिशो भेजुः, पलायमाना अदर्शनं गताः । तेषु पलायितेषु (ऐन्द्रा गणाः) इन्द्रात्, इन्द्रस्येशस्य प्रसादात् । चितयन्तः, तानसुरान्संकालयन्तः, पुनर्द्रावयन्तः । आयन्, आगच्छन् । (हि) ॥ ६ ॥

(हे) इन्द्र त्वम् । त्वयैव । (सम्पीडितान्), सम्पीडितत्वादिति यावत् । रुदतः । जक्षतः च, मुनीन्भक्षयतश्च, 'जक्ष भक्षहसनयोः' । एतान्, नरभक्षकत्वेन प्रसिद्धान्रक्षोगणान् । रजसः, रजोगुणस्य । पारे, अन्ते । जगतः सुसत्त्ववृद्धिर्यदा । स्यात्तदैव अयोधयः, योधितवानसि । यद्वा रुदतः, शोच्यान् । जक्षतः च, गुणभक्षकान्, आनन्दादिगुणाच्छादकान् । एतान्, अनुभवसिद्धान्, पुंदोषानज्ञानादीन् । रजसः । पारे, अन्ते । आध्यात्मिकसत्त्वगुणवृद्धौ सत्याम्– अयोधयः । किं च,

दस्युम्, दस्यून्, तान्राक्षसान् । दिवः, स्वर्गात् । आ, सम्यक् । अव अदहः, अवक्षिप्तवानसि, दहतिः अत्र सामर्थ्यात्क्षेपार्थः, सङ्ग्रामे हत्वा स्वर्गादपि निराकृतवानसि इति भावः, यद्वा– दिवो निराकृत्य नरक अवादहः इति स्पष्टम् । अध्यात्मं तु दस्युम्, गुणभक्षकत्वादज्ञानादि-दोषाख्यदस्यून् । दिवः, ज्ञानतः, ज्ञानं दत्वा । आ, सम्यक् । अव अदहः, दग्धवानसि । इति (तेन) रक्षसामज्ञानादीनां च विनाशेन । सुन्वतः, बहुवचनार्थे, (सवनम्) इति शेषः, सवनं सुन्वतां कुर्वताम् । स्तुवतः, स्तोत्रं कुर्वताम् । उच्चा, उच्चैः । शंसम्, स्तुतिम् । (च) । प्र आवः, प्रकर्षेणारक्षः, विघ्नविनिवारणे हि तद्रक्षितं भवति ॥ ७ ॥

(ये) दैत्यादयः । पृथिव्याः, पृथिवीस्थितानां जनानाम् । परीणहम्, 'णह बन्धने' भावे सम्पदादित्वात्क्विप्, 'नहिवृतिवृषिव्यधिरुचि सहितनिषु क्वौ' इत्युपसर्गस्य दीर्घः, परितो बन्धनम् । चक्राणासः, चक्राणाः, भृशं कुर्वाणाः । निरपराधान्प्राणिनः कारागारेषु निबध्य ततोऽपहृतेन– हिरण्येन । मणिना, मणिभिः । (च) शुम्भमानाः, शोभमानाः सन्ति । अध्यात्मं तु (ये), दृढदोषाः । हिरण्येन मणिना शुम्भमानाः । तैस्तैर्धनैः प्रलोभ्य (पृथिव्याः, पृथिवीस्थितानाम्) जनानाम् । (परीणहम्) संसारे (परितः) बन्धनम् । (चक्राणासः), कुर्वन्ति । इति । ते, एवमकुतोभयं मन्याः । हिन्वानासः, 'हि गतौ वृद्धौ च' अन्तर्णीतण्यर्थस्येदं रूपम्, इतरेतरं गमयन्तो वर्धयन्तो वा, परस्परं सहायवन्तोऽपि । इन्द्रम्, वासुदेवम् । न तितिरुः, नैवातरन्, यद्यपीह दुर्मदास्तथापीश्वरेण परत्र दण्डयन्त एव इति भावः । 'तद्वृत्तज्ञाने खलु दण्डनम्, तदेव कथमीश्वरस्य ? इत्यतः 'सर्वज्ञत्वात्' इति परिहारे सत्यप्यन्यदप्युच्यते (इन्द्रः) वासुदेवः । बहिर्दैत्यानामन्तरज्ञानादीनां वृत्तदर्शनार्थम्– सूर्येण (सहैव) सूर्यसहितान् । स्पशः, अज्ञाताँश्चारान्, देवसंघान् । परि अदधात्, परितः स्थापितवान्, तथा चोक्तं भारते– 'आदित्यचन्द्रावनिलोऽनलश्च । द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च संध्ये । धर्मश्च जानाति नरस्य वृत्तम्' इति ॥ ८ ॥

(हे) इन्द्र (त्वम्) यत्, यस्मात् । महिना, स्वमहिम्ना । विश्वतः, सर्वदा । सीम्, सम्यगेव, अनुपचारेण । रोदसी, द्यावापृथिव्यौ । उभे, मिलिते । (सहैव), एककालमेव । परि अबुभोजीः, छान्दसं द्विवचनम्, पर्यभोजीः पर्यभुङ्क्थाः । (हे) इन्द्र, परमैश्वर्योपेत । (तत्) तस्मात् । (त्वम्) अमन्यमानान्, त्वामजानतः । दस्युम्, दस्यून्, अभक्तान् । अभि मन्यमानैः, त्वां जानद्भिः । ब्रह्मभिः, ब्राह्मणैः, भक्तसङ्घैः । निः अधमः, निराकृतवानसि, यस्मात्त्वं महान्समर्थोऽतस्त्वदीया

(मन्त्रार्थमञ्जरी)

अपि त्वदाश्रयेण विरोधिनां निरासे स मर्थाः इति भावः । एकः इन्द्रशब्दः संज्ञापरः, द्वितीयः परमैश्वर्यपरः, 'इन्द्र! इन्द्र!!' इत्यादराद्वा द्विर्वचनम् ॥ ९ ॥

ये, दस्यवः, दैत्याः, स्वकीयच्छद्मभिरेव द्युपृथिवीसम्बन्धिसमस्त- भोगेच्छवः, इन्द्रं जिगीषवः (ते) दैत्याः । दिवः, स्वर्गस्य । पृथिव्याः (च) अन्तम्, एकदेशम् । (अपि) न आपुः । मायाभिः (चित्) छद्मभिरपि । धनदाम्, धनस्य दातारम्, इन्द्रम् । न पर्यभूवन्, नाजैषुः तत्किं सहायवान्बहुभिरपि न पराजीयते ? 'न' इत्युच्यते वृषभः, वर्षिता, श्रेष्ठो वा । इन्द्रः (दस्यून्हन्तुम्) इति शेषः । वज्रम्, स्वायुधमेव, विष्णुपक्षे ज्ञानम् । युजम्, युक्तम् । चक्रे, कृतवान् । किं च, (इन्द्रः) ज्योतिषा, स्वभावेन । गाः । तमसः, गिरिगुहान्धकारात् । निः अधुक्षत्, निष्क्रम्याधुक्षत्, दुग्धवान् । विष्णुपक्षे निः, निश्चयरूपेण । ज्योतिषा, ज्ञानेन, स्वविषयं निश्चयात्मकं ज्ञानमुत्पाद्य । गाः, ज्ञानानि, 'तमसः' इत्युक्तिसामर्थ्यात् भक्तहृद्गततमोगूढानि । तस्मात् तमसः । अधुक्षत्, दुग्धवान्, आवरणनिरासेन व्यक्तानि कृतवान् ॥ १० ॥ इति द्वितीयो वर्गः ॥ २ ॥

## रूपावतारः

अयुयुत्सन् ॥ अयुयुत्सन्निति । युध संप्रहार इत्यतः सनि द्वित्वे धकारस्य 'खरि च' (८।४।५५) इति चर्त्वे लङो झस्यान्तादेशे अडागमे शपि 'अतो गुणे' (६।१।९७) इति पररूपे अयुयुत्सन्निति रूपम् । क्विबन्त इति । वेदे युधेः क्विपि तस्य लोपे वृषयुध इति हलन्तः शब्दः । भाष्ये तु योधीति अकारान्तः शब्द इत्युक्तम् । निरष्टा इति । अशेः क्त प्रत्यये 'व्रश्च....' (८।२।३६) इति षत्वे निरा योगे निरष्टा इति रूपम् ॥ ६ ॥

त्वमेतान् ॥ अयोधय इति । युधेर्ण्यन्ताल्लङि सिपि शपि अडागमे अयोधय इति रूपम् ॥ ७ ॥

चक्राणासः ॥ नहिवृतीत्यादिनेति । 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' (६।३।११६) इति सूत्रम् । तस्यार्थः । नहिवृतिवृषिव्यधिरुचिसहितनि इत्येतेषु उत्तरपदेषु पूर्वपदस्य दीर्घो भवतीति । (परीणहम्) चक्राणास इति । कृञः लिटि तस्य कानजादेशे जसि 'आज्जसेरसुक्' (७।१।५०) इति असुगागमे चक्राणास इति रूपम् । हिन्वानास इति । हिगतावित्यस्मात् लटि तस्य शानजादेशे श्नुप्रत्यये 'हु श्नुवोः सार्वधातुके' (६।४।८७) इति यणादेशे जसि 'आज्जसेरसुक्' (७।१।५०) इत्यसुगागमे हिन्वानास इति रूपम् । ननु परस्परेणेति तृतीया कथमित्यत आह । परस्परेणेति । विभक्तिप्रतिरूपकमव्ययमित्यर्थः । तितिरुरिति । तॄप्लवनतरणयोरित्यतः लिटि तदादेशझेरुसि

(रूपावतारः)

छान्दसे ''ऋच्छत्यृताम्'' (७।४।११) इति गुणाभावे 'ऋत इद्धातोः' (७।१।१००) इति इत्वे द्विर्वचने तितिरुरिति रूपम् ॥ ८ ॥

परियत् ॥ ननु भुजेर्लुङि(च्लेः)सिचि(तिङः) ईडागमे सिचः इडागमे च इट ईटि (८।२।२८) इति सिचो लोपे अडागमे च भोजीरिति भाव्यम्। कथं द्विर्वचनमित्यत आह। छान्दसमिति ॥ ९ ॥

नये दिवः ॥ यत्श्रुतेः सिद्धेनेति। यत्तदोर्नित्यसंबन्धात् यच्छब्दश्रवणेनावश्यवक्तव्यतया सिद्धेन त इत्यनेनेत्यर्थः। स्वयं विशेषतो व्याख्याति। दिवः स्वर्गस्येति। अधुक्षदिति दुहेर्लुङि च्लिप्रत्यये तस्य 'शल इगुपधादनिटःक्सः' (३।१।४५) इति क्सादेशे 'दादेर्धातोर्घः' (८।२।३२) इति हस्य घत्वे 'एकाचो बशोभष् झषन्तस्य स्ध्वोः' (८।२।३७) इति भष्भावे ''खरि च' (८।४।५५) इति चर्त्वे 'आदेशप्रत्यययोः' (८।३।५९) इति सस्य षत्वे अडागमे अधुक्षदिति रूपम् ॥ १० ॥ २ ॥

## पदार्थप्रकाशिका

अयुयुत्सन्ननवद्यस्य सेनाम् ॥ इतिहासगर्भत्वादिति। एतदृगर्थस्येति शेषः। प्रजा इति। ऋषिरूपाः प्रजा इत्यर्थः। उपद्रुताः संतः। अध्यात्मं व्याख्याति यद्वेति ॥ तदुपलक्षित इति। नवग्वपदोपलक्षिता इत्यर्थः। तमोभिरित्यत्र बहुवचनमाद्यर्थे अज्ञानपूर्वकैरित्यर्थः इत्यभिप्रेत्याह अज्ञानेत्यादि। संपीडिताः सन्तः तैरसुरेन्द्रैरित्यादि। बाह्ये ऋषयो यदेन्द्रं शरणं प्रापुस्तदा तच्छरणं प्राप्त्युपोद्बलितास्तैरसुरेन्द्रैरयुत्सन्निति संबन्धः। यदा सज्जनाः वासुदेवं शरणं प्रापुस्तदा तच्छरणप्राप्त्युपोद्बलितास्तैः तमःप्रभृतिभिरयुध्यन्नित्यध्यात्मपक्षसंबन्धो द्रष्टव्यः। बाह्यपक्षे पूर्वं उपद्रुताः शरणमेत्यचेन्द्रमित्यध्याहृत्य भाष्यं योजितम्। इदानीं तु बाह्यपक्षेऽपीन्द्रमित्यध्याहारः किन्तु नवग्वा ऋषयो वासुदेवं इन्द्रान्तर्गतं शरणं प्राप्नुरित्येव योज्यम्। अध्यात्मपक्षेऽपि नवाग्वोपलक्षिताः सज्जनाः वासुदेवं स्वान्तर्गतं शरणं प्रापुरिति योज्यमित्याह यद्वा वासुदेवमिति। बाह्ये अध्यात्मं च मिलित्वैव योजनामाह युयुत्सव इत्यादिना। चतुरङ्गिणीम् हस्त्यश्वरथपदातिरूपाङ्गचतुष्टययुक्ताम्। प्रेरितवन्त इत्यनन्तरं यदेति शेषः। क्विबन्त इति। युधशब्दात् क्विप्प्रत्यये तस्य सर्वस्य लोपे युध् युधौ युध इति धकारान्तशब्दो द्रष्टव्यः। कर्मधारय इति। वृषाश्च ते युधश्च वृषायुध इति कर्मधारय इत्यर्थः। वृषायुध इति दीर्घस्तु सांहित इति द्रष्टव्यम्। समर्थाः श्रेष्ठाः। तच्छील इति। वधुहिंसायामस्मात् तच्छीलार्थे कर्तरि रिप्रत्यये वध्रीति प्रातिपदिकसिद्धिः। पश्चात्स्वाद्युत्पत्तौ वध्रय इति भवतीति द्रष्टव्यम्। असुरादय इत्यत्रादिपदेनाज्ञानादिकं ग्राह्यम्। विष्णोरिन्द्रान्तर्गतस्य। परिवारैः चतुरङ्गसेनारूपैः। अतिशयेनेति निरोऽर्थः। व्याप्ताः दिक्ष्विति शेषः।

(पदार्थप्रकाशिका)

पदार्थमुक्त्वाऽभिप्रायमाह पलायन्त इति। सन्त इति शेषः। इममेव पदार्थमभिप्रायं च हृदि निधाय भाष्ये निरष्टा इत्यस्य नष्टा इत्यभिप्राय उक्तः। तद्व्याख्याति पलायमानाः सन्तोऽदर्शनं गता इति। णश् अदर्शन इति धातोरित्यर्थः। दिशो भेजुरित्यस्यादर्शनगमने तात्पर्यमिति द्रष्टव्यम्। बाह्याभिप्रायेणैवाह तेष्विति॥ ऐन्द्राः गणा इति। इन्द्रान्तर्गतस्य विष्णोर्गणाः चतुरङ्गसेना इत्यर्थः। सङ्कालयन्त इति। चिती सङ्कालन इति धातोरिति भावः। आगच्छन्निति। पृष्टतोऽनुसृत्यैव गता इति भावः॥ ६॥

त्वमेतान्रुदतो जक्षतश्च। हे इन्द्र त्वमित्यस्य जगतः सुसत्ववृद्धिर्यदा स्यात्तदेवायोधय इति संबन्धः। त्वयैव संपीडितानि इत्येतन्न ऋक्पदस्य व्याख्यानम्। ऋचि तद्व्यख्येयपदाभावात्। अतः संपीडितत्वं तेषां रोदने हेतुत्वेनोक्तमित्यभिप्रेत्याह। संपीडितत्वादिति यावदिति। अन्ते नाशे। तस्याभिप्रायमाह जगत इत्यादि। जगतः सज्जनसमूहस्य। रजस्तमश्चाभिभूय सत्वं भवति भारतेति वचनादिति भावः। सत्वेति। सत्वगुणेत्यर्थः। ननु सत्वं द्विविधम्। देहाद्बाह्यं देहान्तर्गतं चेति॥ एवं चात्र विवृद्धत्वेनोच्यमानं सत्वं किं देहाद्बाह्यमन्तर्गतं वेत्याशङ्कायामाह जगत इतीति। जगतो बाह्यपदार्थत्वादिति भावः। बाह्यं देहात्। विरोधिनिरसनेन जगत्पालनमकरोरित्याशयः। शोच्यान् शोच्यत्वापादकान्। अध्यात्मिकेति। आत्मानमधिकृत्य विद्यमानेत्यर्थः। देहान्तर्गतेति यावत्। अवादहो दिव आदस्युमित्यंशस्य बाह्येर्थः स्पष्ट इति भाष्यकारैर्नोक्तोऽतः स्वयं बाह्ये द्वेधार्थमाह किञ्चेति। तान् रुदतो जक्षतश्च। ननु दह भस्मीकरण इति धातोरवादहो दग्धवानसीति व्याख्यातव्यं अवाक्षिप्तवानसीति कथं व्याख्यातं अपदार्थत्वादित्यत आह दहतिरत्रेति॥ सामर्थ्यात्। अर्थाबाधरूपयोग्यताबलादित्यर्थः। दिवः स्वर्गात् अवादहो दग्धवानसीत्यर्थे योग्यताया अभावादिति भावः। अभिप्रायमाह संग्राम इति। युद्ध इत्यर्थः। स्वर्गादपीति। वीरस्वर्गापरपर्यायसाङ्कल्पिकस्वर्गादपीत्यर्थः। साङ्कल्पिकस्वर्गोपि तेषां यथा न स्यात्तथाऽकरोरिति भावः। नन्वेतदयुक्तम्। युद्धे मृतानामसतामपि वीरस्य स्वर्गस्य ये युध्येते प्रधनेषु शूरास इति श्रुतिसिद्धत्वादित्यस्वरसादाह यद्वेति। दिवा निराकृत्येति। साङ्कल्पिकस्वर्गभोगानन्तरं ततो निराकृत्येत्यर्थः। नरकेऽवादह इति। नरके तमसि अवाक्षिप्तवानसीत्यर्थः। तमोयोग्यानां वीरस्वर्गभोगानन्तरं तमसि पातस्य श्रुतिसिद्धत्वात्। यथोक्तमाथर्वणोपनिषदि। इष्टापूर्त्तं मन्यमाना वरिष्टं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्टे सुकृते तेऽनुभूत्वा य इमं लोकं हीनतरं वा विशन्तीति। व्याख्यातं च तद्भाष्ये। हीनतरं तम एवाविशन्तीति। सदिवो निराकृत्येति पाठे यान् रक्षोगणानयोधयः स त्वमित्यर्थो द्रष्टव्यः। दस्युत्वोपपादनायाह गुणभक्षकत्वादिति। आनन्दादि-

(पदार्थप्रकाशिका)

गुणाच्छादकत्वादित्यर्थः । विनाशनेन । निमित्तेन । ऋचि स्तुवतः शंसमिति कर्मणः सत्वात् भाष्येपि संस्तुतिं चेति चशब्दसद्भावात् सुन्वत इत्यत्रापि कर्माध्याहरति । सुन्वता सवनमिति शेष इति । सुन्वत सोमखण्डनं कुर्वतां कर्मिणां सवनं कण्डनं तत्प्रभृति कर्मजातमित्यर्थः । राक्षसादिविनाशनस्य सवनस्तुतिरक्षणे निमित्तत्वमुपपादयति विघ्नेति । यज्ञविघ्नकारिराक्षसनिवारणे हि सवनादिकर्म रक्षितं भवति । तथाऽज्ञानादिविघ्ननिवारणे हि ज्ञानपूर्वं क्रियमाणं संस्तवनं च रक्षितं भवति तन्न स्यादित्यर्थः ॥ ७ ॥

चक्राणासः परीणहं पृथिव्या ॥ क्विबिति । णहधातोरपि संपदादिगणस्थत्वात्परीत्युपसर्गपूर्वकात् णहधातोः भावे क्विप्रत्यये तस्य लोपे णहेति भवतीत्यर्थः । ननु तर्हि परिणहेति स्यात् परीणहेत्युपसर्गस्य दीर्घः कुत इत्यत आह । नहि वृतीत्यादिनेति । नहि-वृति व्यधि-रुचि सहि-तनिषु क्वौ-इत्यत्र इकारोनुबन्धार्थः । नह बन्धन इत्यादिषु सप्तसु क्विप्रत्ययान्तेषु धातुषु परतः सत्सु पूर्वपदस्य दीर्घः स्यादिति सूत्रार्थः । नहि परे उपानत् परीणहं वृतिपरे नीवत् । वृषिपरे प्रावृट् । व्यधिपरे हृदयाविध् । रुचिपरे नीरुक् । सहिपरे ऋतीषट् । तनिपरे परीतन् इत्युदाहरणानि ॥ तथाच प्रकृते क्विप्रत्ययान्ते नहधातौ परतः सति पूर्वपदस्य परीत्युपसर्गस्य दीर्घे नकारस्य णत्वे च सति परीणहेति भवतीत्यर्थः । कृञ्धातोरभ्यासदर्शनेन यङ्लुगन्तत्वाद्यङोर्थप्रदर्शनं भृशमित्यनेन कृतमिति ध्येयम् । कारागारेष्विति । कारा बन्धने रुचुकेपि चेत्यभिधानात् कारा बन्धनं तदर्थं क्लृप्त आगारो गृहं कारागार इत्यर्थः । दृढदोषाः अज्ञानसंशयमिथ्याज्ञानादयः । अज्ञानादीनां हिरण्यादिना शुम्भमानत्वं कथमित्यतस्तदुपपादयति तैस्तैर्धनैरिति । हिरण्यमण्यादिरूपैर्धनैरित्यर्थः। प्रलोभ्येति । तथाचशुम्भमानाः शोभतियमानाः प्रपुरुषं प्रलोभायमाना इत्यर्थोत्र द्रष्टव्यः । तथाहि पुमानज्ञानादिदोषेण धनादिभिर्मोहितः सन् संसारे बद्धो भवतीति प्रसिद्धम् । अकुतोभयंमन्या इति । परस्वमपहृत्य तेन स्वात्मशोभाकरणे इत्ह लोके अन्यप्रयुक्तभयाभावं जानमाना इत्यर्थः । गतेर्हिधात्वर्थत्वादितरेतरं गमयन्त इत्युक्तम् । परस्परं गमनं प्रेरयन्त इत्यर्थः । वृद्धेरपि हि-धात्वर्थत्वाद्वर्धयन्तो वेत्युक्तम् । परस्परं मिलित्वा कार्यकरणे मतिं वर्धयत इत्यर्थः । एवं स्वयं पदार्थमुक्त्वा तत्तात्पर्यकथनपरं भाष्यं सङ्गमयति । परस्परेणेति । ननु परस्परेणेति कथं तृतीया । तथाहि । कर्तृकरणयोस्तृतीयेति सूत्रेण तिङाद्यनुक्ते कर्तरि करणे च तृतीया विहिता । रामेण बाणेन हतो वालीति प्रयोगदर्शनात् । कर्तुस्तिङाद्युक्तौ तु निषेधः वाली हत इति प्रयोगात् । प्रकृते च परस्परशब्दोक्तानां दैत्यरूपकर्तॄणां प्रेरयत इति लडादेशभूतशतृप्रत्ययान्तशब्देनोक्ततया तिङुक्तत्वात्प्रथमयैव भाव्यं अतः परस्परमित्येव वक्तव्यं न तु परस्परेणेति तृतीया युक्तेत्यत आह

(पदार्थप्रकाशिका)

परस्परेणेत्यव्ययमिति । तथा च चिरेणेत्यादिवत्परस्परेणेत्यस्यापि विभक्तिसरूपाव्ययत्वेन परस्परमित्येवार्थो विवक्षित इति न दोष इति भावः । अन्ये तु ननु परस्परेण प्रेरिता इति वक्तव्यं न तु प्रेरयन्त इति अर्थासङ्गतेरत आह परस्परेणेत्यव्ययमिति । तथाचाव्ययत्वेन परस्परेणेत्यस्य परस्परमित्येवार्थकतया प्रेरयन्त इत्येतत्सङ्गतमित्यर्थ इत्याहुः । तस्याप्यभिप्रायमाह इतरेति । प्राणिनां कारागृहेषु बन्धनादिना तदीयहिरण्याद्यपहारे परस्परसाहाय्यवन्त इत्यर्थः । नैवातरन्निति । तमतिक्रम्य न गता इत्यर्थः । तदन्तान्तर्गता एवेत्याशयः । पादत्रयस्य तात्पर्यमाह यद्यपीह दुर्दमा इति । इदं पूर्वार्धतात्पर्यकथनम् । एवं बलिष्ठतयेह लोके स्थितैः प्राणिभिर्दमितुं दण्डितुमशक्या इत्यर्थः । तथापीति । तृतीयपादतात्पर्यं परिस्पशो अदधात्सूर्येणेति चतुर्थपादेन बाह्येऽध्यात्मं च दैत्यानां अज्ञानादीनां च दुर्वृत्तज्ञानार्थं सूर्यादिदेवान् अधिदैवमध्यात्मं च स्थापितवानिति प्रतिपाद्यते । तथाच परमात्मा तदीयदुर्वृत्तं सूर्यादिगूढचारिभिर्जानातीत्युक्त्या तस्य स्वतोऽज्ञानित्वं प्राप्तमित्याशङ्क्याऽयं पाद अभ्युच्चयेन प्रवृत्त इत्यभिप्रायेण सर्वज्ञत्वादिति समाधानम् स्वयं तावद्बहिरेव वदन्नवतारयति । नन्वीश्वर इति । तद्वृत्तं तेषां दैत्यानामज्ञानादीनां चावृत्तम् । दुर्मार्गेऽवस्थानरूपं वृत्तान्तम् । अज्ञातचरानिति । दैत्याद्यज्ञानत्वेन सञ्चरणवतः गूढचारिण इति यावदित्यर्थः । स्पशाज्ञातदृशाविति धातोः पूर्वमुक्तत्वादत्रानुक्तिरिति ध्येयम् । परितः । अधिदैवे तथाऽध्यात्म इत्यर्थः । तथाचोक्तमिति । विष्णुपुराण इत्यर्थः । सूर्योग्निरिति भागवतवाक्यम् ।। ८ ।।

परि यदिन्द्र रोदसी उभे । सीमित्यनूद्य तस्यार्थमाह सम्यगेवेति । सकारार्थः सम्यगिति । ईमित्यस्यार्थ एवेति । पर्यबुभोजीरिति परिसम्यक् अबुभोजीः अवनमकार्षीरित्यर्थः । भुजोऽनवन इति अनवनार्थतायामात्मनेपदविधानात् प्रकृते चावनार्थत्वात् श्रुतौ परस्मैपदं युक्तं भाष्ये तु अवनार्थत्वेऽपि पर्यभुङ्था इत्याद्यपदप्रयोगस्तु चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमिति वचनान्नानुपपन्न इति द्रष्टव्यम् । ननु अबुभोजीरित्यस्य लुङ्त्वेन लुङि द्वित्वासंभवात्कथं बुभोजीरिति द्वित्वमित्यत आह छान्दसं द्विर्वचनमिति । द्विर्वचनं द्वित्वं धातोरभ्यास इति यावत् । छान्दसं बहुलं छन्दसीति स्मरणादिति भावः । तत्तस्मादिति । द्यावापृथिव्योरेककाल एवावनकर्तृत्वेनातिसमर्थत्वादित्यर्थः । निराकृतवानसीति णिजन्तम् । ऋक्तात्पर्यमाह यस्मात्त्वमिति । ऋचि द्विवारमिन्द्रेत्युक्तत्वात्पुनरुक्तिरित्याशङ्क्य एक इन्द्रशब्दो रूढो विशेष्यभूतः अपरस्तु यौगिकस्तद्विशेषणभूतोऽतो न पुनरुक्तिरित्याह एक इन्द्रशब्द इति । संज्ञा रूढः । परमैश्वर्यवचनः । योगिकः । उभावपि रूढावेव स्तां अथापि न पुनरुक्तिः द्विर्वचनस्यादरार्थत्वादिति

(पदार्थप्रकाशिका)

समाधानान्तरमाह इन्द्रेत्यादराद्वा द्विर्वचनमिति। यद्यपि क्रियाद्वयसद्भावादिन्द्रशब्दद्वयमपेक्षितमेव तथापि पूर्वस्यैवानुवृत्तिसंभवेन पुनर्वचनमादरार्थमिति मन्तव्यम्॥ ९॥

न ये दिवः पृथिव्या अन्तमापुः॥ पूर्वार्धस्य पदानामिति। दिवः पृथिव्या अन्तमापुरित्यादिपदानामित्यर्थः। त एवमिति वक्तव्यं नास्तीति ये दिवः पृथिव्या अन्तनापुः ये मायाभिर्धनदां न पर्यभूवन् ते एवं कृतवन्त इत्यादि किञ्चिद्वक्तव्यम् किमपि ऋचि नोच्यत इति न्यूनता स्यादित्यर्थः। अध्याहार्यं प्रदर्शयेति। अत्र हि द्युपृथिवीसंबन्धिभोगैकदेशमपि नापुर्धनदमिन्द्रं च न पर्यभूवन् तत्पराभवं नाकुर्वन्नित्युच्यते। इदं च तदैव सङ्गतं स्याद्यदि तेषां द्युपृथिवीसंबन्ध्यशेषभोगेच्छेन्द्रजिगीषा च स्यात् नान्यथेत्यत एतदुभयम्। न दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन्नित्येतदनुसारेण य इत्यनन्तरमध्याहार्यप्रदर्शनेनोच्यत इत्यर्थः। तथाच ये द्युपृथिवीसंबन्ध्यशेषभोगेच्छवस्ते दिवः पृथिव्या अन्तं नापुः य ईश्वरं जिगीषवस्ते न धनदां पर्यभूवन्निति योज्यमिति भावः। नन्वेवं यच्छब्दस्याध्याहृतेनान्वये ऋचि तच्छब्दाभावान्नये दिव इत्यादेरनन्वयः स्यादित्यत उक्तम्। यत् श्रुतेः सिद्धेनेति। यच्छब्दश्रवणसिद्धेनेत्यर्थः। सङ्क्षेपेणेति। नैवोदापुर्द्वयमेतत्कदाचिदिति सामान्यस्तत्तात्पर्योक्त्या सङ्क्षेपत एव व्याख्यानमित्यर्थः। भाष्ये द्वयमित्यस्य द्युपृथिवीसंबन्ध्यशेषभोगमिन्द्रजयं चेति द्वयमित्यर्थो द्रष्टव्यः। अत एव स्वयं सम्यक्पदार्थकथनपूर्वकं व्याख्याति। दिव इत्यादिना। दिवः स्वर्गस्य पृथिव्याश्च संबन्धिनमित्यर्थः। अन्तमित्यनूद्य एकदेशमिति व्याख्यानम्। भोगैकदेशमित्यर्थः। अपिशब्देनाशेषभोगं नापुरिति किमु वक्तव्यमिति सूचयति। तथा चेच्छामात्रमेवाकुर्वन् तदनुसारेण कार्यं न जातमिति भावः। भाष्ये कदाचिदित्यत्र स्थितस्य चिदित्यस्यार्थमाह। चित् अपीति। एवं सति कदाचिदित्यस्यार्थमाह कदापीति। कदापि न पर्यभूवन्नित्यन्वयः। नाजैषुरिति। न पर्यभूवन् तत्पराभवं नाकुर्वन् न जितवन्त इत्यर्थः। तत्किं सहायवानित्यत्र सहायवानिति हेतुर्गर्भविशेषणम्। बहुभिरपि दैत्यैरिन्द्रो न पराजीयत यत् तत् सहायवत्वात्किमिति प्रश्नः। वक्ष्यमाणरीत्या ज्ञातव्यं किं सहायवानित्येव क्वचित्पाठः तत्राप्युक्तरीत्यैवार्थो द्रष्टव्यः। किं सहायवान् केन सहायेन युक्त इत्यर्थ इत्यन्ये। वृषभ इत्याद्युत्तरम्। वृषभो वज्रं युजंयुक्तं इत्युक्त्या सहायवत्वान्न पराजीयत इति न किन्तु परनिरपेक्षः सन्नेक एवेत्युक्तं भवतीति द्रष्टव्यम्। विष्णुज्ञानमेवेत्यध्यात्माभिप्रायेण। प्रसिद्धस्त्विति बाह्याभिप्रायेण। वृषभः प्रसिद्ध इन्द्र इत्यर्थः। आयुधं वज्राख्यं प्रसिद्धायुधमेवेत्यर्थः। युक्तं चक्र इति। दैत्यैर्युक्तं संबद्धं कृतवान्। दस्युभूतदैत्यवधायेति शेषः। तत्किं सहायवानिति प्रश्नस्य वृषभ इत्युत्तरमुक्तम् अधुना वज्रविसर्गोत्तरभाविकार्यमपि स्वप्रभावेनैव कृतवानिति न परसहायापेक्षेत्याशयेनाह किञ्चेति।

(पदार्थप्रकाशिका)

वज्रप्रयोगेण दैत्यवधानन्तरमिति शेषः । निरोर्थो निष्क्रमयित्वेति । अधुक्षत् यज्ञोप युक्तक्षीरदोग्धीरकरोदित्यर्थः । बहिः स्पष्टमिति । अतो न भाष्यकारैर्व्याख्यातमिति भावः । अध्यात्मपक्षे त्वाह विष्णुस्त्विति । निनिश्चये, नाधुक्षदित्यन्वयः । निजेनैव ज्योतिषेति । स्वप्रभावेनेत्यर्थः । भक्ततमोगूढानीति । भक्तानां यत्तमस्तेन गूढान्याच्छादितानीत्यर्थः । चतुर्थपादाभिप्रायमाह आवरणेति । तथाचात्रादुहदित्यस्य व्यक्तान्यकारोदित्यर्थो द्रष्टव्यः । ऋचि संहिताकाले अदुक्षदिति । पदकाले त्वधुक्षदिति भवतीति द्रष्टव्यम् । अभावस्यावरकत्वादर्शनादिति भावः । अन्धकारस्यापि भावत्वमेव इति हृदयम् । तथात्व इति । ज्ञानाभावस्यापि ज्ञानावरकत्वाङ्गीकार इत्यर्थः । कथमिति । यद्यस्यावरकं तत् आव्रियमाणेन तेनैव निवर्त्यं न दृष्टं न हि घटावरकोऽन्धकारो घटनिवर्त्यो दृष्ट इति भावः । सिद्धान्ते भावरूपमज्ञानं लिङ्गशरीरमिति संप्रदायः । स्वरूपज्ञानेति । जीवस्वरूपज्ञानेत्यर्थः । प्रमाणज्ञानेति । प्रमाणजन्यज्ञानेत्यर्थः । निवर्त्यं परम्परया । आगमादिश्रवणजनितपरोक्षज्ञानद्वारकापरोक्षज्ञानेन लिङ्गभङ्गे सति च स्वरूपज्ञानं व्यज्यत इत्यस्य शास्त्रसिद्धत्वादिति भावः । तथाच यद्यस्यावरकं तत्तेनैव निवर्त्यमित्यङ्गीकारान्नोक्तदोष इत्यवधेयम् । तथाच विष्णुर्ज्योतिषा स्वप्रभावेन स्वविषयं निश्चयात्मकं श्रवणादिद्वारकमपरोक्षज्ञानमुत्पाद्य गाः स्वरूपभूतज्ञानानि भावरूपाज्ञाना-ख्यतमोगूढानि तस्मात्तमसो निर्निश्चयेनाधुक्षत् आवरणभूतलिङ्गभङ्गेन पुनरावृतानि यथा न स्युस्तथा व्यक्तानि कृतवानित्येवमन्त्यपादार्थो द्रष्टव्यः ।। १० ।।

## पदार्थदीपिका

अयुयुत्सन् । क्षितयः प्रजा इति । क्षि निवासगत्योः । क्षियन्ति गच्छन्तीति क्षितयः । प्रजाः । क्तिच् क्तौ च सञ्ज्ञायामिति क्तिच् । अयुयुत्सन्निति । युध संहारे । सनि हलन्ताच्चेति सनः कित्वाद्गुणाभावः । एकाच उपदेशेऽनुदात्तादितीट् प्रतिषेधः । व्यत्ययेन परस्मैपदमिति द्रष्टव्यम् । सेनाम् । इनेन सह वर्तत इति सेना । वोपसर्जनस्येति भावः । अयातयन्त । यती प्रयत्ने । हेतुमति चेति णिच् । वृषायुधः । अन्येषामपि दृश्यत इति संहितायां पूर्वपदस्य दीर्घः । अशू व्याप्ताविति । भावे निष्ठा । यस्य विभाषेति इट् प्रतिषेधः । व्रश्चेत्यादिना षत्वम् । ष्टुत्वम् । चितयन्त इति । चिती संज्ञाने । अस्माण्ण्यन्ताल्लटः शतृ । अनित्यमागमशासनमिति वचनाल्लघूपधगुणाभावः ।। ६ ।।

रुदतः । रुदिर् अश्रुविमोचने । लटः शतृ । अदादित्वाच्छपो लुक् । जक्षतः । पूर्ववच्छपो लोपः । सुन्वतः । सुनोतेः शतरि स्वादिभ्यः श्नुः । हुश्नुवोः सार्वधातुके इति यणादेशः । स्तुवतः । ष्टुञ् स्तुतौ । अदादित्वाच्छपो लुक् । उवङादेशः ।। ७ ।।

(पदार्थदीपिका)

भावे परिणहम् । परिणत् । हि गताविति । श्नुविकरणात् हि गतौ वृद्धावित्यस्मात् ताच्छीलकश्चानश् ॥ ८ ॥

ननु भुज धातोः श्नुविकरणत्वाभावात् कथं लुङि द्विर्वचनमित्यत आह । छान्दसमिति । भुजपालनाभ्यवहरणयोरस्माल्लुङि सिपि बहुलं छन्दसीति विकरणस्य लुक् । ततो द्विर्भाव इति छान्दसं द्विर्वचनमित्यर्थः । अत्र पर्यभुङ्थाः इति भाष्ये आत्मनेपदं तु चान्द्रादयस्तु मन्यन्त इति न्यायेनैव भुजोऽनवन इत्यनवनार्थस्यैवात्मनेपदत्वविधानेनावनार्थस्य तदसंभवादिति द्रष्टव्यम् ॥९॥

युजं युक्तमिति । युजिर् योगे । ऋत्विगित्यादिना क्विप् । अनित्यमागमशासनमिति वचनात् नुमभावः । अदुक्षत् । दुह प्रपूरणे । अस्माल्लुङि शल इगुपधादनिटः क्स इति च्लेः क्सादेशः । दादेर्धातोर्घ इति घत्वम् । एकाचो भष् इति भष्भाव इति भावः । संहितायां भष्भावाभावः छान्दस इति ज्ञेयम् ॥ १०, २ ॥

## टीकाविवृतिः

अयुयुत्सन् ॥ क्षितयःप्रजा इति ॥ क्षितयःकृष्टय इति मनुष्यनामसु पाठादिति भावः । अध्यात्मार्थमाह ॥ यद्वेति ॥ अयुयुत्सन्निति ॥ युध संप्रहार इत्यतोनिटःसन्नंताल्लङि पूर्ववत्सन इति सूत्रेण सन्प्रकृतेरात्मनेपदित्वे सनंतादप्यात्मनेपदविधानेप्यस्य संज्ञापूर्वकत्वेनानित्यत्वान्नात्मनेपदमिति भावः । पूर्वं बाह्यार्थपक्षे इन्द्रमित्यध्याहृत्य वासुदेवमिति भाष्यमध्यात्मपक्षे योजितम् । इदानीं बाह्याध्यात्मपक्षयोरुभयोरपि वासुदेवमिति भाष्यं योजयति ॥ यद्वा वासुदेवमिति ॥ स्वान्तर्गतमध्यात्मगतम् । वासुदेवमित्यस्य बाह्याध्यात्मरूपोभयार्थे योजनेत्यर्थः ॥ अयातयन्तेति ॥ यती प्रयत्न इत्यतो णिजंताल्लङि णिचश्चात्मनेपदविकल्प इति भावः ॥ वृषशब्दःश्रेष्ठवाचीति ॥ शुक्रले मूषके श्रेष्ठे सुकृते वृषभे वृष इत्यमरोक्तेरिति भावः ॥ युध इति च किबन्त इति ॥ क्विप्चेति कर्तरि क्विप् । युध्यन्त इति युधो योद्धार इत्यर्थः ॥ तच्छीले कर्तरि रिप्रत्यय इति ॥ अदिशदिभूशुभिभ्यःक्रिन्नित्युक्तक्रिन्प्रत्ययो बहुलोर्वधेस्तच्छीलार्थ इत्यर्थः ॥ प्रवद्भिरिति ॥ पुङ्प्लुङ्गताविति धातोर्ङित्वाल्लटः शानचि प्राप्ते व्यत्ययेन शत्रादेशः । तदनुसारित्वाद्भाष्येपि प्लवद्भिरिति प्रतिपदमिति भावः ॥ अशू व्याप्ताविति ॥ अस्मात् क्तप्रत्यये व्रश्चादिसूत्रेण षत्वेष्टुत्वमिति भावः ॥ तस्य तात्पर्यमाह ॥ पलायन्तो दिशो भेजुरिति ॥ एवं स्वयं निरष्टा इत्यस्यार्थमुक्त्वा भाष्योक्तं नष्टा इति तात्पर्यार्थं तत्र योजयति ॥ नष्टा इति ॥ नश अदर्शन इति धातोर्नष्टा इत्यस्यादर्शनं गता इत्यर्थः । निरष्टा इत्यस्य पलायमाना इत्यर्थः स्तथा च

(टीकाविवृतिः)

पलायमानानामदर्शन गमनस्य स्वाभाव्यान्निरष्टा इत्यस्य नष्टा इति प्रतिपदमिति भावः ॥ चितयन्त इति ॥ पतति चततीतिगतिकर्मसु पठितचतेर्णिजन्ताल्लटः शत्रादेशे व्यत्ययेन धातूपधाया इकारादेश इति भावः ॥ आयन्नगच्छन्हीति ॥ अयतेर्लङि रूपमिति भावः ॥ ६ ॥

त्वमेतान् ॥ श्रुतौ रुदत इत्युक्ते हेतुत्वेन भाष्येऽध्याहृत विशेषणस्य त्वयैव संपीडितानित्यस्य हेतुगर्भत्वमभिप्रेतमित्याशयेनाह ॥ संपीडितत्वादिति यावदिति ॥ बाह्यं सत्वमिति ॥ आध्यात्मिकभिन्नमाधिभौतिकाधिदैविकरूपजगतो यत्सत्वमित्यर्थः । देवादौ दिव्ये जगति भौतिके च जगति तमोगुणवृद्धौ दैत्यैर्जगतः पीडा जायते । सत्ववृद्धौ तु इन्द्रस्तैस्सह युद्धं कृत्वा दैत्यान्हत्वा यज्ञं रक्षतीति भावः । अध्यात्मार्थमाह ॥ यद्वेति ॥ अवादह इति पादस्य भाष्ये बाह्यार्थानुक्तेःस्वयं तदर्थमाह ॥ किञ्चेति ॥ नन्ववपूर्वाद्दह भस्मीकरण इति धातोर्लङन्तस्यावादह इति रूपम् । तस्य क्षेपार्थत्वं कथमित्यत आह ॥ दहतिरत्रेति ॥ दिव इत्युक्तिसामर्थ्यादवेत्युपसर्गोक्तिसामर्थ्याद्वेत्यर्थः । अस्मादेवास्वरसादाह ॥ यद्वेति ॥ निराकृत्येति शेषोक्तिः । अवादह इत्यस्य तु नरके दहनमेवार्थ इति भावः । इदानीं भाष्यं सङ्गमयति ॥ अध्यात्ममिति ॥ दिव इति ल्यब्लोपनिमित्ता पञ्चमीति भावेनाह ॥ ज्ञानं दत्वेति ॥ प्रदायेति यावत् । स्तुवतःशंसमिति कर्मसमभिव्याहारात्सुन्वत इत्येतत्संबन्धिकर्माध्याहरति ॥ सवनमिति शेष इति ॥ राक्षसाज्ञानादि नाशस्य सवनस्तुतिरक्षणहेतुत्वं कथमित्यतोभिप्रायमाह ॥ विघ्ननिवारणे हीति ॥ ७ ॥

चक्राणासः ॥ संपदादित्वादिति ॥ संपदादेराकृतिगणत्वादित्याशयः ॥ न हि वृतीत्यादिनेति ॥ नहि वृतिवृषिव्यधिरुचिसहितनिषु क्वावित्यने न क्विबन्तेषु नहादिधातुषु परेषु पूर्वपदस्य दीर्घविधानादत्रापि क्विबन्तनहधातोः परत्वादुपसर्गरूपपरीति पूर्वपदस्य दीर्घ इत्यर्थः । णत्वं तूपसर्गादसमासेपि णोपदेशस्येत्यनेनेति भावः ॥ चक्राणास इति ॥ कृञो लिटः कानजादेशे द्वित्वादि । यद्यपि कृञो ञित्वेन बन्धनकरणजन्यफलस्य दुःखादेःपरगामित्वात्स्वरितञित इत्यात्मनेपदाभावात्क्स्वादेशेन भाव्यम् । तथापि व्यत्ययेन कानजादेश इति भावेन भृशमिति व्यत्ययार्थ उक्तः । हिरण्यमण्यादेःस्वसामर्थ्यलब्धस्य बन्धनकरणाफलत्वात् । अत एव भाष्ये कुर्वन्तीत्युक्तमिति भावः ॥ शुंभमाना इति ॥ शुभशुंभशोभार्थ इति धातोर्लटः शानजादेशे शपि आनेमुगिति मुगागम इति भावः ॥ धनैः प्रलोभ्येति ॥ अनेन शुंभमाना इत्येतदन्तर्णीतण्यर्थत्वाच्छोभयमानाः स्वाश्रयभूतान्प्रलोभयमाना इत्यर्थकमित्युक्तं भवति । नन्वीश्वरभये सति कथं बन्धनं कृतमित्यतःपूर्वार्धाशयमाह ॥ त एवमिति ॥ आत्मानं कुतोपि भयरहितं मन्यन्त इत्यकुतोभयंमन्या इत्यर्थः ॥ हि गतौ वृद्धौ चेति ॥ अस्माल्लटः शानजादेशो

(टीकाविवृतिः)

स्वादित्वात् श्नुप्रत्यये हुश्नुवोः सार्वधातुक इति यणादेश इति शेषः । ननु प्रेरणं प्रति कर्मत्वेन भाष्ये परस्परमिति वक्तव्ये कथं परस्परेणेत्युक्तमित्यत आह ॥ परस्परेणेत्यव्ययमिति ॥ विभक्तिस्वरप्रतिरूपकाश्चेत्युक्तेरिति भावः ॥ नतितिरुरिति ॥ तॄ प्लवनतरणयोरिति धातोर्लिटि झेरुसादेशे सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनात्तॄफलभजत्रपश्चेत्येत्वाभ्यासलोपाभावे ऋत इद्धातोरितीत्वे द्वित्वादौ रूपमेतत् । तृतीयपादाशयमाह ॥ यद्यपीति ॥ हिन्वानास इत्यस्याभिप्रायः इह दुर्दमा इति ॥ इन्द्रंन तितिरुरित्यस्य तथापीश्वरेणेत्यादि । ईश्वरस्य ज्ञानाभावेन दण्डनाभावमाशङ्कते ॥ नन्विति ॥ परिहरति ॥ सर्वज्ञत्वादिति ॥ इन्द्रशब्दार्थोयम् । तथाहि । इदंशब्दोपपदाद्दृशेरिगुपधज्ञाप्रीकिरःक इति कप्रत्यये उपपददशब्दधातुशकारयोर्लोपः पृषोदरादित्वात् । तथा चैतरेयोपनिषत् । स इदं ब्रह्मततममपश्यदिदमदर्शमिति तस्मादिन्द्रो नामेदन्द्रोहवै नामतमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेणेति । शिक्षकाणां सतां स्वज्ञानमात्रेण शिक्षणादिकार्यस्याकर्तव्यत्वद्योतनायेश्वरेण साक्षिणःकृता इत्येतदर्थप्रतिपादकं चतुर्थपादं व्याचष्टे ॥ किश्चेति ॥ बहिर्बाह्यार्थे । अन्तः अध्यात्मार्थे । वृत्तदर्शनार्थं पुण्यपापरूपकर्मदर्शनार्थमित्यर्थः ॥ स्पशोऽज्ञातचरानिति ॥ स्पशबाधनस्पर्शनयोरित्यस्माद्धातूनामनेकार्थत्वेनाज्ञातत्व विशिष्टचरणार्थकात्कर्तरि क्विबित्यर्थः । देवसंघानिति विशेष्याध्याहार इति भावः ॥ आदित्यचन्द्राविति ॥ सूर्यचन्द्रधर्माःस्वतो देवाः अन्यत्राभिमानिनो ग्राह्याः । हृदयं बुद्धिः मनःअहंकारादिवृत्तिचतुष्टयम् । अत्रगवां कालसामान्यस्य चानुक्तेःप्रमाणान्तरमाह ॥ सूर्योग्निरिति ॥ अत्र चाबादीनामनुक्तेः पूर्वप्रमाणोपन्यास इति भावः ॥ ८ ॥

परि यत् ॥ श्रुतौ महिनेत्यत्र मकारलोपश्छान्दस इति भावेनाह ॥ स्वमहिम्नेति ॥ विश्वशब्दात्कालार्थकात्सप्तम्यंतात्तसिरिति भावेनाह ॥ विश्वतःसर्वदेति ॥ तसेः सार्वविभक्तिकत्वादिति भावः ॥ सीं सम्यगेवेति ॥ श्रेष्ठाविकल्पयोःसंस्यात्साध्वर्थ उपसर्जन इत्येकाक्षररत्नमालोक्तेः साध्वर्थकस्संशब्दः । तत्र व्यत्ययेनाकारस्य य ईकारस्तस्यार्थ एवेतीति भावः ॥ छान्दसं द्विर्वचनमिति ॥ भुजेर्लुङि च्लेःसिजादेशे व्यत्ययो बहुलमिति शपि बहुलं छन्दसीति शपःश्लौ सति श्लाविति द्वित्वमिति भावः । इदं चोपलक्षणम् । भुजोनवन इति रक्षणातिरिक्तार्थे आत्मनेपदविधानादत्र परस्मैपदंतथाऽनिट्त्वादत्रेडागमश्च छान्दस इत्यपि द्रष्टव्यम् ॥ अमन्यमानानिति ॥ मनज्ञान इत्यतो लटःशानजादेशे दिवादित्वात् श्यन्विकरणे नञ्समास इति भावः ॥ ब्रह्मभिर्ब्राह्मणैरिति ॥ ब्रह्मा विरिञ्चद्विजयोरिति विश्वोक्तेरिति भावः । इन्द्रशब्दस्य यौगिकस्य पूर्वोक्तं हेतुत्वं स्पष्टयति ॥ यस्मात्त्वमिति ॥ मन्दबोधनायाह ॥ एक इन्द्रशब्द इति ॥ योगाद्रूढेर्बलीयस्त्वादाह ॥ इन्द्रेन्द्रेतीति ॥ ९ ॥

(टीकाविवृतिः)

नये दिवः ॥ भाष्ये ये दस्यव इत्यादिपादोन श्लोकः श्रुतिव्याख्यान- रूपत्वाभावाद्व्यर्थ इत्याशङ्कां परिहर्तुमवतारयति ॥ अत्र पूर्वार्धस्थेति ॥ ये दैत्या दिवःपृथिव्याश्चान्तं नापु स्तथा धनदामिन्द्रं मायाभिर्न पर्यभूवन्निति संबन्धे क्रियमाण उत्तरार्धे त एवं हता इत्यादिवक्तव्यं स्यात्तच्च नास्तीत्यर्थः ॥ अध्याहार्यमिति ॥ पूर्वार्धस्थपदानामनुकूलमिति शेषः ॥ यत् श्रुतेःसिद्धेनेति ॥ यच्छब्दश्रवणादवश्यं प्राप्तेन यत्तदोर्नित्यसंबन्धादिति भावः ॥ व्याख्यातीति ॥ पूर्वार्धस्थपदानीति शेषः । प्रथमपादत्रयस्याध्याहारमुक्त्वा चतुर्थपादं योजयति ॥ नैवेत्यादिकमिति ॥ स्वयं पूर्वार्धाक्षरार्थमाह ॥ दिवः स्वर्गस्येति ॥ उत्तरार्धं सङ्गमयितुं शङ्कते ॥ तत्किं सहायवानिति ॥ किंशब्दःप्रश्नार्थकः सहायोस्यास्तीति किंसहायवान्सन्नित्यर्थः । एतदुत्तरत्वेन तृतीयपादं योजयति ॥ वृषभ इति ॥ निरदुक्षदिति ॥ दुहेर्लुङि तिप्लेः शल इगुपधादनिटःक्स इति क्सादेशे एकाचो बश इति भष्भावस्तु संहितायां छान्दसत्वान्न पदकाले तु भवत्येवेति सूचनायोभयमुदाहृतं ज्ञेयम् । भाष्येप्यदुहदिति शब्व्यत्ययेन ज्ञेयः ॥ बहिःस्पष्टमिति ॥ अतो भाष्यकारैर्न व्याख्यातमिति शेषः ॥ तथा त्वेवेति ॥ ज्ञानाभावस्य ज्ञानाच्छादकत्वे ज्ञाननिवर्त्यत्वं नस्यात् आच्छाद्यस्याच्छादकनिर्वतकत्वादर्शनादिति भावः ॥ तत्स्वरूपज्ञानेति ॥ अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते । स्वगुणाच्छादिका त्वेकेत्युक्तेरिति भावः ॥ प्रमाणज्ञानेति ॥ भिद्यते हृदयग्रन्थिरित्यादेरिति भावः ॥ १० ॥

**ऋक्संहिता पदपाठसहिता** (सू-३३, व-३)

**(३९४) अनु स्वधामक्षरन्नापो अस्यावर्धतमध्य आ नाव्यानाम् ।**
**सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभिद्यून् ॥ ११ ॥**
**(प०) अनु । स्वधाम् । अक्षरन् । आपः । अस्य । अवर्धत । मध्ये ।**
**आ । नाव्यानाम् । सध्रीचीनेन । मनसा । तम् । इन्द्रः ।**
**ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥ ११ ॥**
**(३९५) न्याविध्यदिलीबिशस्य दृह्ळा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।**
**यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥ १२ ॥**
**(प०) नि । अविध्यत् । इलीबिशस्य । दृह्ळा । वि । शृङ्गिणम् ।**
**अभिनत् । शुष्णम् । इन्द्रः । यावत् । तरः । मघऽवन् ।**
**यावत् । ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ॥१२॥**

(ऋक्संहिता पदपाठसहिता)

(३९६) अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणापुरोऽभेत् । सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥ १३ ॥

(प०) अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् । सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ १३ ॥

(३९७) आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम् । शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥ १४ ॥

(प०) आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युध्यन्तम् । वृषभम् । दशऽद्युम् । शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसह्याय (नृऽसाह्याय)। तस्थौ ॥१४॥

(३९८) आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ॥ ज्योक्चिदत्रतस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥ १५, ३, ३३ ॥

(प०) आवः । शमम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् । ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकरित्यकः ॥ १५ ॥

ऋग्भाष्यम्

यस्य कर्माण्यक्षरन्सौख्यमेव । यो वेदवाचां सृतिनावात्मकानां मध्येऽवर्धदयथा ज्ञानरूपः । समीचीनज्ञानतोऽहंस्तमीश ओजिष्ठेन हतिरूपेण सम्यक् । मोक्षप्रकाशार्थमथापि नावा तरणीयानां मध्यतोऽपां वृधंतम् । अहिंवा ॥ ११ ॥ इळिनो भूस्थिताः स्युस्तत्राविशन्नसुरो नाम तस्य । इळीबिशस्तस्य दृढानि यानि बलादीनि न्यहनत्तानि देवः । तमसो वा शृङ्गिणं शोषकं च वृषरूपं दैत्यमहन्नथोवा । कामं यावच्छक्तितो विक्रमाद्वा वेगेन वा शत्रुमथो पृथन्युम् । जघंथ वज्रेण सुबोधतो वा न शक्तिसामस्त्यमिहोदितं हरेः । अनन्तशक्तिर्हि हरिः सदैव कुत एव शत्रुस्तदमुष्य कोपि ।

(ऋग्भाष्यम्)

अतो यथा शक्त्यभियुध्यमानं शत्रुं जघंथेति महानिहार्थः ॥ १२ ॥ ससर्वतः सिद्धियुतः सदैव जिगाय जीवारिगणान्पुरश्च । संसाररूपा अभिनद्धृषेण प्राणेन तिग्मेन विरोधिनः प्रति । संयोजयामास वज्रेण वृत्रं ज्ञानेन वा ज्ञानममुष्य हत्यै । मतिं च स्वामदिशत्स्वप्रजाभ्यः सशाशदानः सुसुखी सदैव ॥ १३ ॥ कुत्सं दशद्युं च मुनिं नृपंच यस्मिंस्थितः स्वात्मरूपं सुभक्त्या । अदर्शयस्तोषितो यः स्वतंत्रश्चाकन्नुक्तः कर्मयतः स्वतन्त्रे । वृषरूपस्यास्य नृपस्य युध्यतः शफच्युतो रेणुरुन्नक्षतद्याम् । श्वेता वाणी वायुभार्या सुतोस्याः श्वैत्रेयो यं युधयतो ह्युदस्थात् । वृषः श्वैत्रेयो धर्म एवाथ कुत्सनामाध्यात्मे कुत्सितोत्सारणात्स्यात् । धर्मरेणुः स्वर्गमात्राभिगामी साक्षाद्धर्मो मोक्षफलोपगः स्यात् ॥ १४ ॥ शमात्मकं वृषभं धर्ममेवाप्य रक्षस्त्वं तुग्रियास्वप्यधीश । तुग्र्याख्या स्यात्संततिर्दीर्घकाला मुक्तिक्षेत्रविजयायैव धर्मम् । श्वेतासुतं रमणाद्रेफ उक्तस्तमरक्षस्त्वं त्वयि ये तस्थिवांसः । ज्योतिश्चक्रुर्निजरूपं विमुक्त्या ज्ञानान्यरीणामधराणि चाकरोः ॥ १५, ३, १ ॥

## ऋग्भाष्यटीका

अनुस्वधाम् । एकवाक्यतासिद्धये यच्छब्दाध्याहारेण व्याख्याति ॥ यस्येति । यस्यास्येन्द्रस्य । आपः कर्माणि । स्वधां सौख्यमेवान्वक्षरन् । सन्ततमदुः । यदीयव्यापारज्ञानादिना परमानन्दावाप्तिर्भवति स एवंभूत इन्द्र ईश । योऽयथाज्ञानरूपो विरोधी । नाव्यानां स्वार्थे यत्प्रत्ययः । नावांसं सृतिनावात्मकानां संसारसागरतरणोपायानां वेदवाचां मध्येऽवर्धत । मिथ्याज्ञानमपि ह्यन्यथाव्याख्याताद्वेदादेव भवति । तमोजिष्ठेन वीर्यवता । हन्मना करणे मनिन् । (हेति) हतिरूपेण अनर्थनिबर्हणेन । सध्रीचीनेन मनसा समीचीनज्ञानतः । आसम्यगहन् । किमर्थम् । अभिद्यून् । अभितो द्यौः प्रकाशः प्रसिद्धिर्येषां पुरुषार्थानां तानुद्दिश्यमोक्षप्रकाशार्थम् । अनेनैकस्मिन्नेव मोक्षे व्यत्ययेन बहुवचनम् । नित्यसिद्धत्वान्मोक्षस्य प्रकाश एव प्राप्तिरित्युक्तं भवति । अथापि प्रसिद्धेन्द्रपक्षे नाव्यानां नौवयोधर्मेत्यादिना नावस्तार्ये यत् । नावातरणीयानामगाधानामपामिति शेषः । मध्यतो वृधं वृद्धं तमहिमिति व्याख्येयम् । अन्यत्समानम् । उपलक्षणमेतत् । सध्रीचीनेन मनसा निर्भयेन हृदयेन । हन्मना युद्धेनेत्यपि व्याख्यातव्यम् । अस्य प्रसिद्धताद्योतनार्थो वैशब्दः ॥ ११ ॥

न्या विध्यत् । इलिनः । भूस्थिता मनुष्याः इलिनः स्युः इला भूः साऽस्त्येषामाश्रय इति व्रीह्यादित्वादिनिः । तत्र तेष्वाविशन्यो सुरस्तस्येलिबिश इति नाम । इलिनो विशतीति इगुपधलक्षणः कः ।

(ऋग्भाष्यटीका)

उपपददैर्घ्यं वस्य बत्वं च छांदसम्। इन्द्रो देवस्तस्येलीविशस्यासुरस्य। दृह्ला यानि दृढानि। बलादीनीति शेषः। तानि। न्यविध्यन्न्यहनत् अनाशयत्। इलीविशस्येत्यस्य तमसोऽज्ञानस्येति वार्थः। तदपि हि मानुषान्प्रविष्टम्। अन्यद्विष्णौ समानम्। किंचेन्द्रः शुष्णं शुषेर्नक् शोषकम्। जनानां दुःखहेतुम्। शृङ्गिणं वृषरूपं च दैत्यम्। व्यभिनत् अहन्। अथोवा अध्यात्मम्। विष्णुः कामं व्यभिनदित्यर्थः। कामातुरा अपि शुष्यन्तीति सोपि शुष्णः। वृष इवादम्य इति शृङ्गी च। परोक्षतःस्तुत्वाऽपरोक्षतः स्तौति। हे मघवन्यावत्तरः यावान् स्वस्य वेगोस्ति तावता वेगेन। यावदोजः यावच्छक्तितो वा स्वस्य विद्यमानाद्विक्रमाद्वा। ओजः शब्दस्योभयार्थत्वात्। पृतन्युं युध्यन्तम्। अथो अन्यमपि शत्रुं वज्रेणावधीर्जघंथ। वज्रेणेत्यस्य सुबोधत इति वार्थः। अत्र हे मघवन्विष्णो। यावत्तरो यावांस्ते वेगोस्ति तावता समस्तेन। यावदोजो यावती शक्तिरस्ति तया समस्तया। यावद्वीर्यमस्ति तेन समस्तेन। शत्रुं क्रोधादिकम्। अवधीरिति शत्रुवधे हरेः शक्त्यादिसामस्त्यप्रयोगोप्यर्थः प्रतीयते। यावदवधारण इति स्मरणात्। तां प्रतीतिं निराकरोति। नेति। शक्तिसामस्त्यमिति वेगादेरप्युपलक्षणम्। कुतो नेत्यत आह॥ अनन्तेति। हि यस्मात्तत्तस्मात्। यस्मिन्समस्तं शक्त्यादिकं प्रयुंजीतेति शेषः। यत एवमतः पूर्वोक्त एवार्थ इत्युपसंहारव्याजेनोक्तं विवृणोति। अत इति॥ महान्प्रमाणाविरुद्धस्तदनुसारी च। इन्द्रेप्येवमेव योजना॥ १२॥

अभिसिध्मः। स सर्वतः। अभिसर्वतः सर्वस्मिन्देशे सदैव वा। सिद्धियुतः सिधेर्भावेक्विप्। ततो मत्वर्थे मः। स परमेश्वरोस्यजीवजातस्य शत्रून् जीवारिगणान्कामादीनजिगात् अजयत् जिगाय। अलाक्षणिकं छान्दसम्। किञ्च। विरोधिनः प्रति तिग्मेन क्रूरेण। वृषभेण वृषेण जीवश्रेष्ठेन प्राणेन। प्राणिनां संसाररूपाः पुरो व्यभेत् अभिनत्। संसाररूपं लिङ्गं हि प्राणिनां पुरमिव। तच्च प्राणोपदेशादि द्वारेश्वरो भिनत्ति। इन्द्रस्त्वस्य लोकस्य शत्रून्दैत्यानजयत्। वृषभेण वर्षणाङ्गेन तिग्मेन तीक्ष्णेन वज्रेण शम्बरस्य पुरोऽभिनदिति स्पष्टम्। किञ्चेन्द्रो वृत्रं वज्रेण समसृजत् संयोजयामास। अमुष्यवृत्रस्य हत्या इति शेषः। न हि दारुसंयोगं विना कुठारेण तच्छिद्यते। ईश्वरस्तु वृत्रमज्ञानं वज्रेण ज्ञानेन संयोजयामास। समानविषयं चकारेति व्याख्येयम्। अमुष्यहत्या इत्यत्रापि समम्। किञ्च। शाशदानः अतिशयितं शं शशं तस्यादनो भोक्ता शशादनः। व्यत्ययेन शाशदानः। सदैव सुसुखी स इन्द्रः। स्वां स्वविषयां मतिं प्रातिरत्। अदिशत् दत्तवान्। स्वप्रजाभ्य इति शेषः॥ १३॥

आवः कुत्सम्। अत्र कुत्संदशद्युमिति पदद्वयाभिधेयमाह। कुत्समिति। यथासंख्यं व्याख्यानम्। यस्मिन्नित्येतत्साकाङ्क्षमत आह॥ अस्मिंस्थित इति। इन्द्रस्य सर्वत्र स्थितत्वाद्धचर्थमेतदित्यतोभिप्रायमाह॥ स्वात्मेति। यस्य सुभक्त्या तोषितस्त्वं स्वात्मरूपमदर्शयः। चाकन्नित्येतद्व्याख्याति। य इति। यः स्वतन्त्रः स चाकन्नुक्तः कथमित्यत आह॥ कर्मेति॥ करोतेः शत्रंतस्य चाकन्निति छन्दसि रूपम्। कुर्वन्निति क्रियाश्रय उच्यते। कर्मापरपर्याया क्रिया च कर्तरि वर्तते। कर्ता च स्वतन्त्रः। यत एवमतो

(ऋग्भाष्यटीका)

युक्तमुक्तम्। ततश्चायमर्थः। हे इन्द्र चाकन्कुर्वंस्त्वं यस्मिन्कुत्से स्थितस्तं कुत्सं नाम मुनिमावः अरक्षः। युध्यंतं वृषभं वृषरूपं दशद्युं नामनृपं च प्रावः प्रकर्षेणारक्ष इति। तस्यैव युद्धमुत्तरार्धे प्रपञ्च्यते। तदपि त्वदधीनमिति सूचयितुम्। तत्र वृषरूपस्यास्य युध्यतो नृपस्येति। युध्यन्तं वृषभमित्युक्तानुवादः प्रागव्याख्यातत्वात्कृतः। शफच्युतः खुरोत्थितः। द्यामन्तरिक्षम् उन्नक्षत उदनक्षत उदगच्छत्। कदा श्वेता वाणी कथम्। वायुभार्या वायुर्हि श्वा। तेनेताश्वेतेति॥ अस्याः श्वेतायाः सुतः श्वैत्रेयः। स्त्रीभ्यो ढक्। रेफार्थस्तु वक्ष्यते। अयं दशद्युर्यदा नृषाह्याय नृणां प्रतिभटानां पुंसां साह्यं सहनमभिभवः तस्मै। तयोरेव कृत्यक्तखलर्था इति भावे कृत्यः। यद्यपि ऋहलोर्ण्यदिति प्राप्तस्य ण्यतोपवादः शकिसहोश्चेति यद्विहितस्तथापि कृत्यल्युटो बहुलमिति वचनाच्छन्दसि ण्यदपि भवति। युधतो युद्ध्यतोऽभिभवितुमिति शेषः। उत्तस्थौ उदस्थात्। अनेनोदित्युपसर्गस्योभयत्रापि सम्बन्ध इत्युक्तं भवति। हीत्यस्येतिहासस्य प्रसिद्धतां द्योतयति। अथाध्यात्मे। तृतीयासप्तम्योर्बहुलमिति सप्तम्या अम्भावाभावः। धर्म एव श्वैत्रेयो वृषः दशद्युश्चेत्यपि वक्तव्यम्। कुत्सितोत्सारणात्कुत्सनामा च स्यात्। भिन्नाभिधेयताव्युदासायैवशब्दः। शफच्युत इत्यादेस्तात्पर्यं धर्मरेणुरित्यादि। अल्पो धर्मः। प्रवृत्तिलक्षण इति यावत्। स्वर्गमात्राभिगामी स्वर्गमात्रसाधनम्। साक्षाद्धर्मो निवृत्तिलक्षणः। मोक्षफलोपगः परंपरया तत्साधनं तदन्तर्भूतफलो वा स्यात्। तथा चैवं योजना। हे इन्द्र परमेश्वर। कुत्सङ्कुदिति निपातः कुत्सितार्थः। सृगतौ अन्तर्णीतण्यर्थात् डः। कुत्सितं पापमुत्सारयतीति क्रियारूपं भक्तानां धर्मं त्वमावः। चाकंस्त्वं यस्मिंस्त्वज्ज्ञानं यदधीनंतम्। पापेन सह युध्यन्तम्। दशसु दिक्षु द्यौः प्रकाशो यस्य तं दशद्युं वृषभं धर्मनामैवैतत्। अदृष्टरूपं धर्मं च। प्रावः। धर्मस्वरूपमेव प्रपञ्चयति। शफच्युत इव तत्सम्बन्धी तज्जातीयो रेणुर्द्यामुन्नक्षत। श्वैत्रेयो वाणीपुत्रो वेदप्रतिपाद्यो मुख्यो धर्मस्तु नृषाह्याय नृणां ज्ञानिनां साहाय्यायोत्तस्थाविति॥ १४॥

आवः शमम्। शमात्मकम्। हे मघवन्नधीश शमं न केवलं क्रियाऽदृष्टात्मकम्। किन्तु भक्तानां शमात्मकमपि वृषभं धर्ममेव। त्वमावोऽरक्षः। न केवलं भक्तानाम्। किं नाम तुग्र्यास्वपि। का तुग्र्येत्यत आह॥ तुग्र्याख्येति। ततो भक्तानां सन्ततिष्वपि धर्ममरक्ष इत्यर्थः। कथं सन्ततिस्तुग्र्या। दीर्घकाला। अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति शाब्दाः। अत्र वरिष्ठार्थो गृह्यते। वरिष्ठ इति च विशेष्यापेक्षः। तथाच कालो विवक्ष्यते। वरिष्ठो दीर्घः कालस्तुग्रः। साक्षाद्वा दीर्घकालस्तुग्रः। तत्र भवार्थे तुग्राद्घनिति घन्। विशेष्याकाङ्क्षायां स्त्रीलिङ्गप्रयोगाद्योग्यतया च सन्ततिर्लभ्यत इति भावः। वृषभमित्युक्तत्वाद्गामिति पुनरुक्तिरित्यतोनुवादोयमित्यभिप्रायेण क्षेत्रेत्यादि व्याख्याति। त्वं तं श्वित्र्यं श्वेतासुतं गांधर्मं यदरक्षस्तत्क्षेत्रजेषे मुक्तिक्षेत्रविजयायैव। न तु क्षुद्रविषयलाभार्थम्। क्षियंत्यत्रेति क्षेत्रमवस्था मुक्तिश्च। तत्क्षेत्रं च। जि जये तुमर्थे से इति से। ततः षष्ठीसमासः। श्वित्र्यमिति कथमित्यतः किञ्चिद्व्युत्पादयति। रमणाद्रेफ उक्त इति॥ अकारशिरस्क इति शेषः। शुना इता श्विता। शकंध्वादित्वात्पररूपम्। सा च सा

(ऋग्भाष्यटीका)

रमणाद्वा च श्वित्रा। अत्रापि पररूपत्वम्। तस्या अपत्यमित्यर्थे ढ्यः। किं च अत्र त्वयि ये पुरुषास्तस्थिवांसो ज्ञाननिष्ठा युक्तास्ते चिदपि। ज्योक् दीप्तिवचनोयं निपातः। ज्योगामयावीति यथा। ज्योतिरक्रन् चक्रुः। देदीप्यमानमकुर्वन्किंनिजरूपम्। कथम्। विमुक्त्या ये त्वांतत्वतो जानंति ते मुक्ताः सन्तो दीप्तस्वरूपा भवन्ति। किं सर्वेपि नेत्युच्यते। शत्रूयतां शत्रुवदाचरताम्। न हि परमेश्वरस्य साक्षाच्छत्रुरस्ति। अरीणामयोग्यानाम्। वेदना वेदनानि ज्ञानानि। अधराधराणि। फलादपभ्रष्टान्येवाकरोः। इन्द्रपक्षे दशद्युर्नृप एव वृषभः। शमोपेतत्वाच्छमः। क्षेत्रं तु भूमण्डलम्। शेषं समानम्॥ १५, ३, १॥

## मन्त्रार्थमञ्जरी

(यस्य) अस्य, इन्द्रस्य। आपः, कर्माणि। स्वधाम्, सौख्यम्। अनु अक्षरन्, संततमदुः, यदीयव्यापारज्ञानादिना परमानन्दावाप्तिर्भवति। (सः) एवं भूतः। इन्द्रः, ईशः (यः) अयथार्थज्ञानरूपो विरोधी। नाव्यानाम्, स्वार्थे यत्प्रत्ययः, नावाम्, सृतिनावात्म(त्मि)कानां संसारतरणोपायानां वेदवाचाम्। मध्ये अवर्धत, मिथ्याज्ञानमप्यन्यथा- व्याख्याताद्वेदाद्भवति। तम्। ओजिष्ठेन, वीर्यवता। हन्मना, करणे मनिन्, हतिरूपेणानर्थनिबर्हणेन। सध्रीचीनेन मनसा, समीचीनेन ज्ञानेन। आ, सम्यक्। अहन्, हतवान्। किमर्थम्? अभि द्यून्, अभितो द्यौः प्रकाशः प्रसिद्धिर्येषां पुरुषार्थानां तानुद्दिश्य, मोक्षप्रकाशार्थम्, एकस्मिन्नपि मोक्षे व्यत्ययेन बहुवचनम्, नित्यसिद्धत्वान्मोक्षस्य प्रकाश एव प्राप्तिः इत्युक्तं भवति। इन्द्रपक्षे तु नाव्यानाम्, नावा तरणीयानाम्। (अपाम्) इति शेषः। मध्ये (यः) अवर्धत। तम्, अहिम्। इति तथा 'सध्रीचीनेन मनसा, निर्भयेण हृदयेन। हन्मना, आयुधेन।' इति च व्याख्येयम्। अन्यत्समानम्॥ ११॥

(इन्द्रः) प्रसिद्धेन्द्रः। इलीबिशस्य, इळा भूमिरेषामस्त्याश्रयत्वेने- तीळिनो भूमिस्था मनुष्याः, व्रीह्यादित्वादिनिः, तान्विशतीतीळीविशः, 'इगुपधज्ञाप्रीकिरः कः' इति कः, उपपददैर्घ्यं ळस्य लत्वं वस्य बत्वं च च्छान्दसम्, तस्यासुरस्य। दृह्ला, दृढा, दृढानि। (यानि बलादीनि) इति शेषः। (तानि) नि अविध्यत्, अनाशयत्। विष्णुश्चेत् इलीबिशस्य, मनुष्यगताज्ञानादेः। (बलादीनि) नि अविध्यत्' नि अविध्यत् इत्यर्थः। किं च, इन्द्रः। शुष्णम्, शुषेः नक्, शोषकम्, जनानां दुःखहेतुम्। शृङ्गिणम्, वृषरूपं च दैत्यम्। वि अभिनत्, अहन्। विष्णुश्चेत् (शृङ्गिणम्) कामम्। वि अभिनत् इत्यर्थः, कामातुरा अपि शुष्यन्तीति सोऽपि शुष्णो वृषभ इवादम्य इति शृङ्गी च। परोक्षतः स्तुत्वाऽपरोक्षतः स्तौति (हे) मघवन्। यावत् तरः, यावान्स्वस्य वेगोऽस्ति तावता वेगेन। यावत् ओजः, यावच्छक्तिर्यावद्विक्रमस्तावता। अथान्यम्– पृतन्युम्, युध्यन्तम्। (अपि) शत्रुम् वज्रेण। अवधीः, जघन्थ। 'वज्रेण' इत्यस्य 'सुज्ञानेन' इति चार्थः॥ १२॥

(मन्त्रार्थमञ्जरी)

अभि सिध्मः, अभितः सर्वतः सर्वस्मिन्देशे सर्वदैव वा सिध्मः सिद्धियुतः, 'षिध गत्याम्' इत्यतो भावे क्विप्, ततो मत्वर्थे मप्रत्ययः । (सः) परमेश्वरः । अस्य, जीवजातस्य । शत्रून्, कामादीन् । अजिगात्, अजयत्, यकारस्य गाभावो जकारस्य जित्वं च च्छान्दसम् । किं च, विरोधिनः प्रति तिग्मेन, क्रूरेण । वृषभेण, जीवश्रेष्ठेन, प्राणेन । प्राणिनां संसाररूपाः पुरः । वि अभेत्, अभिनत्, विकरणलोपश्छान्दसः, संसाररूपं हि लिङ्गं प्राणिनां पुरमिव, तच्च प्राणोपदेशादिद्वारेणेश्वरो भिनत्ति । इन्द्रस्तु– अस्य, लोकस्य । शत्रून् । (अजिगात्) अजयत् । वृषभेण, वर्षणस्याङ्गेन । तिग्मेन, तीक्ष्णेन । (वज्रेण) शम्बरस्य पुरः । (वि अभेत्) अभिनत् । इति ज्ञेयम् । किं च, इन्द्रः वृत्रम् वज्रेण । सम् असृजत्, संयोजयामास । (अमुष्य वृत्रस्य हत्यर्थम्) इति शेषः । नहि दारुसंयोगं विना कुठारेण तच्छिद्यते । ईश्वरस्तु वृत्रम्, अज्ञानम् । वज्रेण, ज्ञानेन । (सम् असृजत्) संयोजयामास, मानविषयं करोति । (अज्ञानहत्यर्थम्) इति व्याख्येयम् । किं च, शाशदानः, अतिशयितं शंसुखं शशम्, तस्यादनो भोक्ता, कर्तरि ल्युट्, शशादनः, व्यत्ययेन शाशदानः, सदैव सुसुखी । (सः) इन्द्रः । स्वाम्, स्वविषयाम् । मतिम् । प्र अतिरत्, अदिशत्, दत्तवान् । (स्वप्रजाभ्यः) इति शेषः ॥ १३ ॥

(हे) इन्द्र । चाकन्, करोतेः शतृप्रत्यये छान्दसे द्विर्वचनेऽभ्यासस्य चुत्वम् आत्त्वे धात्वृकारस्य लोपे च 'चाकन्' इति सिद्धेः, क्रियाश्रयः, स्वतन्त्र इति यावत् । (त्वम्) यस्मिन्, कुत्से । (स्थितः) इति शेषः, यस्य सुभक्त्या तोषितस्त्वं स्वात्मरूपमदर्शय इति यावत् । (तम्) कुत्सम्, कुत्सनामानं मुनिम् । आवः, अरक्षः । युध्यन्तम् । वृषभम्, वृषरूपम् । दशद्युम्, दशद्युनामकं नृपम् । (च) प्र आवः, प्रकर्षेणारक्षः इति । तस्यैव युद्धमुत्तरार्धेन प्रपञ्चयते, 'तदपीशाधीनम्' इति सूचयितुम्– शफच्युतः, सुरोत्थितः । रेणुः । द्याम्, अन्तरिक्षम् । उत् नक्षत, उदनक्षत्, उदगच्छत्, 'णह बन्धने' इत्येतत्पूर्वाल्लिङर्थे लेटि तस्याडागमे सिपि 'हो ढः' इति हस्य ढत्वे 'षढोः कः सि' इति कत्वे 'इण्कोः' इति षत्वे च रूपसिद्धेः । कदा ? (यदा) श्वैत्रेयः, वाणीसुतः, दशद्युः । नृषाह्याय, नृणां प्रतिभटपुंसां साह्याय सहनाय, अभिभवाय, युध्यतः प्रतिभटानभिभवितुमिति यावत् । (उत्) तस्थौ, उदस्थात् । तदा इति । 'उत्' इत्यस्योभयत्रान्वयः ।

श्वा वायुः तेनेता श्वेता वाणी, सा च सा रमत इति रा च श्वेत्रा, उपपदान्तलोपः, 'तस्याः सुतः' इत्यर्थे 'स्त्रीभ्यो ढक्' 'श्वैत्रेयः' इति रूपम् । 'नृऽसाह्याय' इत्यत्र 'शकिसहोश्च' इति यत्प्रत्ययेन भाव्यम्, तथापि 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणाच्छन्दसिण्यदपि भवतीति भावे ण्यत्प्रत्ययः,

'तयोरेव कृत्यक्तखलर्थाः' इत्युक्तेः इति ज्ञेयम्, 'नृऽसह्याय' इति त्वध्यापकपदपाठः। अध्यात्मं तु (हे) इन्द्र, परमेश्वर। कुत्सम्, 'कुत्' इति निपातः कुत्सितार्थः, 'सृ गतौ' अन्तर्णीतण्यर्थाड्डः, कुत्कुत्सितं पापं सारयत्युत्सारयतीति कुत्सं क्रियारूपं भक्तानां धर्मम्। (त्वम्) आवः, अरक्षः। चाकन्, स्वतन्त्रः। (त्वम्) यस्मिन्, यदधीनम् इत्यर्थः। (त्वज्ज्ञानम्) इति शेषः, त्वद्विषयकं ज्ञानं यदधीनं यद्धर्माधीनम्। (तम्) पापेन सह युध्यन्तम्। दशद्युम् वृषभम्, धर्मनाम चैतत्, अदृष्टरूपं धर्मम्। (च) प्र आवः। 'को धर्मः?' इत्यतः 'प्रवृत्तनिवृत्तभेदेन द्विविधो धर्मः, तत्र प्रवृत्तः स्वर्गमात्राभिगामी, निवृत्तस्तु मोक्षगामी' इति भावेन धर्मस्वरूपं प्रपञ्चयति (शफच्युतः) शफच्युत इव (अ) मुख्यधर्मजातीयः। रेणुः, अल्पास्थिरफलकत्वाद्रेणुरिव स्थितो धर्मः। द्याम्, स्वर्गम्। (उत् नक्षत) उदनक्षत्, उदगच्छत्। श्वैत्रेयः, वाणीपुत्रः, वेदप्रतिपाद्य इति यावत्, मुख्यो धर्मः। (तु) नृषाह्याय, नृणां ज्ञानिनां साह्याय। (उत्) तस्थौ, स्यात् इति॥ १४॥

(हे) मघवन्, अधीश। शमम्, न केवलं क्रियादृष्टात्मकम्, किं तु भक्तानां शमात्मकम्। (अपि) वृषभम्, धर्मम्। (एव त्वम्) आवः, अरक्षः। न केवलं भक्तानाम्, किं नाम तुग्र्यासु (अपि) भक्तानां संततिष्वपि। (वृषभम् आवः) (त्वं तम्)। श्वित्र्यम्, श्वित्र्याख्यं वाणीसुतम्, वेदबोध्यमिति यावत्। गाम्, धर्मम्। (यदरक्षस्तत्) क्षेत्रजेषे, मुक्तिरूपक्षेत्रविजयायैव, मुक्तिप्राप्त्यर्थमेव, न तु क्षुद्रविषयलाभार्थम्। किं च, अत्र, त्वयि (ये) पुरुषाः। तस्थिवांसः, ज्ञाननिष्ठायुक्ताः। (ते) चित्, तेऽपि। ज्योग्दीप्तिवचनोऽयं निपातः, 'ज्योगामयावी(वि)' इति यथा, ज्योक् अक्रान्, निजं रूपं विमुक्त्या देदीप्यमानमकुर्वन्, ये त्वां तत्त्वतो जानन्ति ते मुक्ताः सन्तो दीप्तस्वरूपा भवन्ति इति (भावः)। किं सर्वेऽपि ? 'न' इत्युच्यते– शत्रूयताम्, अयोग्यानाम्। वेदना, वेदनानि। अधरा, अधराणि, फलादपभ्रष्टान्येव। अकः, अकरोत्। इन्द्रपक्षे तु दशद्युर्नृप एव वृषभः, शमोपेतत्वाच्छमः, क्षेत्रं तु भूमण्डलम्। शिष्टं समम्। अत्र 'तुग्र्यासु' इत्यादेः प्रक्रिया तु दीर्घकालस्तुग्रः, तत्र भवार्थे 'तुग्राद्घन्' इति घन्प्रत्ययः, तस्ये यादेशे 'यस्येति च' इत्यलोपे रूपम्, ('तुग्रियासु' इति शाखान्तरे, 'तुग्र्यासु' इति बह्वृचाः) तत्र विशेष्याकाङ्क्षायां स्त्रीलिङ्गप्रयोगाद्योग्यतया च संततिलाभः। क्षीयन्तेऽत्रेति क्षेत्रम्, 'क्षि क्षये' इत्यतो वा 'क्षि निवासगत्योः' इत्यतो वा ष्ट्रन्प्रत्ययो गुणश्चेति 'क्षेत्रम्' इति रूपम्, मुक्त्याख्यावस्था, 'जि जये', 'तुमर्थे सेसेनसे' इति सेप्रत्ययः, (गुणः) षत्वम्, 'क्षेत्रस्य जेषे' इति षष्ठीसमासः। श्वित्र्यम् इत्यत्र श्वा वायुः, तेनेता श्विता, शकन्ध्वादित्वात्पररूपम्, सा च सा रमणाद्रा च श्वित्रा, उपपदान्तलोपः, तस्यापत्यार्थे घः। 'अक्रन्' इति करोतेः शविकरणस्य लङि च्छान्दसं रूपम्।

(मन्त्रार्थमञ्जरी)

'अकः' इति करोतेः लङि शब्विकरणस्य रूपम् ॥ १५ ॥ इति तृतीयो वर्गः ॥ ३ ॥ त्रयस्त्रिंशं सूक्तम् ॥ ३३ ॥

## रूपावतारः

अनुस्वधाम् ॥ एकवाक्यतासिद्धय इति। अध्याहाराभावे अस्य कर्माणि सौख्यमेवाक्षरन्निति एकं वाक्यम् इन्द्रः योवर्धत तमहन् इत्यपरं वाक्यमिति वाक्यभेदः स्यात्। यस्येत्यध्याहारे तु यस्येन्द्रस्य कर्माणि सौख्यमक्षरन् स इन्द्र इति एकवाक्यता स्यादिति भावः । नौ वयोधर्मेत्यादिनेति । 'नौवयोधर्मविषमूलमूल्यसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्य- समसमितसम्मितेषु' (४।४।९१) इति सूत्रम्। तस्यार्थः। नावादिभ्योऽष्टभ्यः शब्देभ्यः अष्टस्वेव तार्यादिष्वर्थेषु यथासंख्यं यत्प्रत्ययो भवतीति ॥ ११ ॥

न्याविध्यत् ॥ इगुपधलक्षणः कः इति। 'इगुपधाज्ञाप्रीकिरः कः' (३-१-१३५) इति कप्रत्यय इति भावः। शुषेर्नगिति। 'तृषिशुषिरसिभ्यः कित्' (उ.२९९) इति अनेन सूत्रेण शुषेर्नक्प्रत्यये कित्वाद्गुणाभावे शुष्णामीति रूपमिति भावः। यावदवधारण इति स्मरणादिति। 'यावदवधारणे' इति सूत्रेण यावच्छब्दस्य सामस्त्यरूपावधारणार्थे अव्ययीभावसमासविधानात् यावदिति भिन्नपदस्यापि सामस्त्यरूपार्थो वक्तुं शक्य इति भावः ॥ १२ ॥

अभि ॥ ननु यजतेर्लङि शपि गुणे अयादेशे अडागमे अजयदिति भाव्यम्। अजिगादिति कथमित्यत आह। अलाक्षणिकमिति गागमः शबभावश्चेत्येतत् छान्दसमित्यर्थः। वृषभेणेति। 'ऋषिवृषिभ्यां कित्' (उ.४१०) इत्यौणादिकसूत्रेण वृषेरभच्प्रत्यये कित्वाद्गुणाभावे तृतीयैकवचने वृषभेणेति रूपम्। व्यत्ययेनेति। अदेरकारस्यादिशकारात्परत्वेन दकारस्थाकारस्य दीर्घत्वेन चेत्यर्थः। (शाशदानः) ॥ १३ ॥

आवः ॥ ननु शतरि कुर्वन्निति भवेत् चाकन्निति कथमित्यत आह। करोतेरेति। कृञः शतरि छान्दसे द्विर्वचने अभ्यासस्य दीर्घे चुत्वे ऋकारस्य लोपे चाकन्निति रूपम्। चाकन्निति लाक्षणिकोऽयं प्रयोग इति भावेन शक्यसंबन्धं दर्शयति। कुर्वन्निति। युक्तमिति। चाकन्नित्यस्य स्वतन्त्र इति व्याख्यानं युक्तमित्यर्थः। चाकन् कुर्वन् इति। अत्र चाकन् स्वतन्त्र इत्येव टीकावाक्यपाठः। नतु कुर्वन्निति। भाष्यकृता चाकन्नित्यस्य स्वतन्त्र इत्यर्थाभिधानात्। प्रागव्याख्यातत्वादिति। प्रागव्याख्यातत्वादनुवादव्याजेन व्याख्यानं कृतमिति भावः। ढगिति।

(रूपावतारः)

ढस्य 'आयनेयी...' (७।१।२) इति सूत्रेण एयादेशे 'किति च' (७।२।११८) इति वृद्धिश्चेति द्रष्टव्यम् । (श्वैत्रेय) वक्ष्यत इति । भावेण्यर्थादित्यर्थः (ण्यत्प्रत्यय इत्यर्थः) । उभयत्रेति । नक्षततस्थावित्युभयत्र संबन्ध इत्यर्थः । ननु आत्मानमधिकृत्येति विग्रह्य समासे 'अनश्च' (५।४।१०८) इति टचि 'नस्तद्धित' (६।४।१४४) इति टिलोपे अध्यात्मशब्दस्याकारान्तत्वात् 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः (२।४।८३) इति विभक्तेरमादेशेन भाव्यमित्यत आह। तृतीया सप्तम्योरिति ।। १४ ।।

आवः शमम् ।। कथं सन्ततिरिति । कथं सन्ततिस्तुग्र्याख्येत्याशङ्कापरिहारार्थं दीर्घकालेत्युक्तमिति भावः। 'तुग्राद्घन' (४।४।११५) इति घनिति। 'आयनेयी....' (७।१।२) इत्यादिसूत्रेण घस्येयादेशे इकारस्य लोपे ''यस्येति च'' (६।४।१४८) इति अकारस्य लोपे तुग्र्यास्विति छन्दसि रूपमिति भावः । पररूपमिति । श्वनूशब्दस्य टेः पररूपमित्यर्थः । अत्रापीति । श्वितशब्दाकारस्यापि पररूपमित्यर्थः । अपत्यार्थे घ इति । घस्येयादेशे इकारलोपे श्वित्र्यमिति रूपम्। शत्रुवदाचरतामित्युक्तेः प्रयोजनमाह। नहीति। अकरिति। कृञो लङि तस्य सिपि अडागमे उविकरणलोपे विसर्गे अकरिति रूपम्।। १५ ।। ३ ।। १ ।।

## पदार्थप्रकाशिका

अनु स्वधामक्षरन्नापो अस्य।। एकवाक्यतासिद्ध्य इति। पूर्वोत्तरग्रन्थैकवाक्यतासिद्ध्य इत्यर्थः। एकवाक्यताप्रकारमेव दर्शयति । यस्यास्येति । यस्य पूर्वं प्रतिपादितस्यास्येदानीं प्रतिपद्यमान स्येत्येकवाक्यताऽनेनोक्तेति द्रष्टव्यम्। आपः कर्माणीति। अप्शब्दस्य कर्मनामसु पठितत्वादिति भावः। सन्ततमदुरिति। क्षर विनाशसंततदानयोरिति धातोर्निरन्तरं दत्तवन्त्य इत्यर्थः। य इत्यस्य तमित्यनेनान्वयः। ननु नाव्यानामित्यस्य नावामित्यर्थकत्वे यत्प्रत्ययोव्यर्थ इत्यत आह स्वार्थ इति। ननु वेदानां यथार्थज्ञानजनकत्वेन तद्वर्धकत्वाद्वेदवाचां मध्ये अयथार्थज्ञानमवर्धतेत्येतद्विरुद्धमित्यत आह मिथ्याज्ञानमपीति।। करणे मनिन्निति। हन हिंसागत्योरिति धातोः करणे मनिन् प्रत्यये इन् इत्यस्य लोपे हन्मन् इति प्रतिपदिकसिद्धिः। पश्चात्स्वाद्युत्पत्तौ हन्मनेति भवति। हतिरूपेणेत्यस्य हतिः रूप्यते साध्यते अनेनेति व्युत्पत्या हतिसाधनत्वमेवार्थ इत्यभिप्रेत्यार्थमाह।। अनर्थनिबर्हणेनेति ।। अनर्थभूतमिथ्याज्ञाननाशसाधनेनेत्यर्थः। ननु मोक्षस्यैकत्वादभिद्यूनिति बहुवचनं कथमित्यतः सुपां सुलुगिति सूत्रेण व्यत्ययेन द्वितीयैकवचनस्यामो द्वितीयाबहुवचनरूपशसादेश इत्यभिप्रायेणाह ।। अनेनेति । मोक्षग्रहणेनेत्यर्थः । मोक्षमित्यनुक्त्वाऽभिद्युतिप्रकाशपरशब्देन मोक्षोपादानेन प्रयोजनमाह नित्येति ।। मोक्षस्येति । ज्ञानानन्दादिस्वरूपत्वस्येत्यर्थः । प्रकाशः आविर्भावेन

(पदार्थप्रकाशिका)

सम्यगनुभवः । नौवयो धर्मेत्यादिनेति । नौ-वयो-धर्मविष-मूल मूल सीता-तुलाभ्य स्तार्य-तुल्य प्राप्य-वध्य- आनाम्य सम-समित-संमितेष्विति सूत्रस्यायमर्थः । नौवयो धर्मेत्याद्यष्टभ्यः शब्देभ्यो यथासङ्ख्यं तार्याद्यर्थेषु यत्प्रत्ययो भवति । नावा तार्यं नाव्यम् । उदकम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेनानाम्यं मूल्यम् । मूलेन समो मूल्यः पटः । सीतया समितं सीत्या । सीतेति हलमुच्यते ।। तया संमितं सञ्जातं क्षेत्रमित्यर्थः । तुलया संमितं तुल्यां इत्युदाहरणानीति । नावस्तार्ये यदिति । तथा चानेन सूत्रेण नावः नौशब्दात् तार्यरूपेऽर्थे विवक्षिते सति यत्प्रत्यये हलंत्यमिति तकारलोपे नौयेति स्थिते वान्तो यि प्रत्यय इति औकारस्य आव् इत्यादेशे सति नाव्येति रूपमित्यर्थः । अगाधानाम् अनल्पानाम् । अगाधापामेव नावातरणीयत्वं दृष्टं नान्यासामिति नावातरणीयत्वोक्त्याऽगाधत्वमुक्तमिति द्रष्टव्यम् । अन्यत्समानमिति । अनुस्वधामक्षरन्नापो अस्येति पादस्य यस्य कर्माण्यक्षरन् सौख्यमेवेति यत्परमेश्वरपक्षे कृतं व्याख्यानं तत्प्रसिद्धेन्द्रपक्षेऽपि समानमित्यर्थः । उपलक्षणमेतदिति । अवर्धत मध्य आनाव्यानामिति पादस्य अथापि वा नावेत्यादिना यदिन्द्रपक्षे व्याख्यानं कृतं तत्सध्रीचीनेनेत्युत्तरार्ध-व्याख्यानस्याप्युपलक्षणमित्यर्थः । तदेव दर्शयति । सध्रीचीनेनेति । आयुधेन वज्राख्येन । अहिमहन्निति संबन्धः । ओजिष्ठत्वं नाम वीर्यवत्वम् । तच्चायुधे प्रसिद्धमिति नोक्तम् । अस्मिन्पक्षे अभिद्यूनित्यस्य उक्तव्युत्पत्त्या स्वर्गं उद्दिश्येत्यर्थो दृष्टव्यः । एकस्मिन्नपि स्वर्गे बहुवचनं व्यत्ययेनेत्यपि द्रष्टव्यम् । तथाच यतः आयुधेन नदीप्रतिबन्धकेऽहौ हते सति लोकानां नदीस्नानादिना स्वर्गोभवतीति प्रसिद्धम् । अथोऽभिद्युं स्वर्गमुद्दिश्य हन्मना अपां मध्ये वृद्धमहिं अहन्नित्युक्तमित्यवधेयम् । नन्वन्यत् समानमित्यनेनोत्तरार्धव्याख्यानस्यापि संगृहीतत्वादुप-लक्षणमेतदिति पृथगुपलक्षणकरणं व्यर्थमिति चेदुच्यते । आद्यपादव्याख्यानस्य यस्य कर्माणीत्यादेरीश्वरपक्ष इव प्रसिद्धेन्द्रपक्षेऽपि समानत्वादन्यत्समानमित्युक्तम् । ईश्वरपक्षे उत्तरार्धव्याख्यानस्य समीचीनज्ञानतोऽहन्नित्यादेः प्रसिद्धेन्द्रपक्षेऽसाम्यात् उपलक्षणमेतदिति पृथगुपलक्षणं कृतमिति संप्रदायविदः । अस्येति । प्रसिद्धेन्द्रपक्ष उक्तस्यैतदृगर्थस्य प्रसिद्धताद्योतनाय भाष्ये वैशब्द इत्यर्थः । अहिं वा इलिनं इति भाष्ये अहिं वै इलिन इति पदच्छेदो द्रष्टव्यः ।। ११ ।।

न्याविध्यदिलीबिशस्य दृळ्हा । ननु इला एषामस्तीति इलिन इत्ययुक्तम् । अत इनिठनाविति सूत्रेण आकारान्तात् इलाशब्दात् कथं मत्वर्थे इनिप्रत्यय इत्यत आह व्रीह्यादित्वादिति । व्रीह्यादिगणस्थत्वादित्यर्थः । व्रीह्यादिभ्यश्चेति सूत्रेण व्रीह्यादिभ्यः प्रातिपदिकेभ्य आकारांतेभ्योऽपि इनिठनौ प्रत्ययौ स्तो मत्वर्थ इत्युक्तत्वात् मायास्यास्तीति मायीत्यादिप्रयोगदर्शनात्प्रकृतेप्याका-

(पदार्थप्रकाशिका)

रान्तादपीलाशब्दादिनिर्युक्त इत्यर्थः। तेषु इलिशब्दवाच्येषु मनुष्येषु। इलिनो विशतीति। इलिनो मनुष्यान् देहान्तरे केन रूपेण पापमार्गप्रवर्तनाय विशतीति व्युत्पत्या इलीविशेति नामेति संबन्धः। ननु विश इति कथमकारान्तःशब्द इत्यत आह। इगुपधलक्षण इति। इगुपधत्वनिमित्तको यः कप्रत्ययः। इगुपधज्ञाप्रीकिरः क इति सूत्रेण विहितः सोऽत्रेत्यर्थः। तथाच विश् प्रवेश इति धातोः इकारोपधत्वेनेगुपधत्वादुक्तसूत्रेण कप्रत्यये ककारलोपे प्रत्ययाकारसंबन्धे च सति विश इत्यकारान्तो युक्त इति भावः। कित्वाच्च गुणाभावः। अन्यथा वेशेति स्यादिति द्रष्टव्यम्। ननु तर्हि इलिविश इत्येव स्यान्न त्विलीबिश इति। उपपददैर्घ्यविधायकस्य वस्य बत्वविधायकस्य चाभावादित्यत आह। उपपददैर्घ्यं वस्य बत्वं च छान्दसमिति। प्रसिद्ध इत्यर्थः। इलीविशस्य मनुष्येषु पीडकत्वेन प्रविष्टत्वेन तन्नामकस्य। बलादीनिति शेष इति। भाष्यकारैः ऋचि शेषः पूरित इत्यर्थः। इति वार्थः। अध्यात्ममिति शेषः। अज्ञानस्येलीविशत्वमुपपादयति। तदपीति ॥ अन्यदिति। दृळ्हा अविध्यदिति पदद्वयव्याख्यानं प्रसिद्धेन्द्र इवाध्यात्मं विष्णुपक्षेऽपि समानमित्यर्थः। तथाचेन्द्रो विष्णुरध्यात्मं इलीविशस्य इलिनो विशतीति व्युत्पत्त्याऽज्ञानस्य दृढा यानि दृढानि बलादीनि संसारे बन्धकत्वादिति रूपाणि तानि न्यहनत् अनाशयदित्यर्थो द्रष्टव्यः। शुषेर्नगिति। शुष् शोषेऽस्मात्कर्तरि नक् प्रत्यये ष्टुत्वे नस्य णत्वे क इत्यस्य हलन्त्यमिति च सति शुष्णेति भवतीत्यर्थः। कित्वाद्गुणाभावः। अन्यथा शोष्णेति स्यादिति ध्येयम्। ननु कामः कथं शुष्णशब्दवाच्य इत्यत आह कामातुरा अपीति ॥ शुष्यन्तीति। कामज्वरादिना देहशोषवन्तो भवन्तीत्यर्थः। तथाच कामस्यापि शोषकत्वादेव शुष्णशब्दवाच्यत्वमिति भावः। ननु तथापि कामस्य शृङ्गिशब्दोक्तं वृषरूपत्वं कथमित्यतो गौण्या वृत्त्येत्याशयेनाह वृषभ इवेति। अदम्यो दमयितुमशक्यः। ननु पूर्वमिन्द्रो न्याविध्यदिति परोक्षतया प्रसक्तोऽतस्तं प्रति वज्रेण शत्रुमवधीरित्यपरोक्षनिर्देशः कथमित्यत आह। परोक्षत इति। यावत्तरो यावदोज इति पदद्वयं पृतन्युपदेनान्वितं कृत्वा व्याचष्टे हे मघवन्नित्यादिना। विक्रमात् पराक्रमात्। उभयार्थत्वादिति। शक्तिविक्रमरूपोभयार्थत्वादित्यर्थः। अन्यमपीति। इलीविशनामकासुरवृषरूपदैत्याभ्यामन्यमपीत्यर्थः। इति वार्थः। अध्यात्मपक्ष इत्यर्थः। अस्मिन्पक्षे योजनां दर्शयन्नेवोत्तरभाष्यमवतारयति। अत्र हे मघवन्नित्यादिना। तरशब्दस्तु रयशब्दपर्यायो वेगवाचीत्याशयेनोक्तं यावान् वेग इति ॥ शत्रुमिति। अज्ञानकामाभ्यामन्यमपि शत्रुमित्यर्थः। अवधीरित्यत्र सुबोधाख्यवज्रेणेति पूरणीयम्। प्रयोगोऽपीति। यावत्तरो यावदोज इति पदद्वयस्य पृतन्युमित्यनेनान्वयमकृत्वा शत्रुमवधीरित्यनेनान्वये कृते सति हरेः शक्त्यादिसामस्त्यस्य प्रयोगोऽप्यर्थः प्रतीयत इत्यर्थः। यावत्तरो यावदोज इत्यनयोरिव धीरित्यनेन संबन्धे सति हरेः

(पदार्थप्रकाशिका)

शक्त्यादिसामस्त्यस्य प्रयोगः कथं प्रतीयत इत्यत आह । यावदवधारण इति । यावदित्यव्ययं अवधारणे वर्तमानं सुपा सह समस्यते अव्ययीभावश्च समासो भवतीति सूत्रार्थः । अवधारणमियत्तापरिच्छेदः । यावदमत्रं ब्राह्मणानामन्त्रयस्व यावन्त्यमत्राणि संभवन्ति तावदेवामन्त्रयस्वेत्यर्थः । यावन्तः श्लोकास्तावन्त एव प्रणामा यावच्छलोकम् । इत्याद्युदाहरणम् । अवधारण इति किम् । यावद्दत्तं तावद्भुक्तं नावधारयामि कियद्भुक्तमिति । एवं च प्रकृते यावत्तरो यावदोजस्तेनावधीरित्युक्ते वेगशक्त्योरियत्तापरिच्छेदप्राप्त्या वेगशक्त्यादिसामस्त्यस्य प्रयोगोऽप्यर्थः प्रतीत एवेति भावः । वेगादेरिति । यावत्तरपदोक्तवेगस्येत्यर्थः । आदिपदेनोजःशब्दोक्तविक्रमरूपार्थान्तरग्रहणम् । तदमुष्येत्यत्रत्यस्य तदित्यस्यार्थस्तस्मादिति । भाष्ये शेषमाह यस्मिन्निति । तथा च हि यस्माद्धरिः सर्वदैवानन्तशक्तिस्तत् तस्मात् यस्मिन् शत्रौ भगवान् समस्तं शक्त्यादिकं प्रयुञ्जीत । सः यः कोपि अमुष्य भगवतः शत्रुः कुत्र एव न कुतोऽपीति भाष्ययोजना द्रष्टव्या । पूर्वोक्त एवार्थ इति । यावत्तरो यावदोज इत्यनयोः शत्रुमवधीरित्येवनान्वयः । किन्तु पृतन्युमित्यनेन वेत्यभिप्रेत्य यावच्छक्तितो विक्रमाद्वा वेगेन वा शत्रुमथो पृतन्युमिति य एव पूर्वोक्त एवार्थ इत्येवमुपसंहारव्याजेनेत्यर्थः । उपसंहारव्याजेनेत्युक्त्या पुनरुक्तिदोषोऽपि परिहृत इति ज्ञातव्यम् । उक्तम् । यावच्छक्तित इत्याद्युक्तम् । विवृणोतीति । अभियुध्यमानमिति पृतन्युशब्दार्थोक्त्या महानिति प्रमाणाविरुद्धत्वाद्युक्त्या च विवरणं द्रष्टव्यम् । अर्थस्य महत्वं नाम कीदृशमित्यत आह । महानिति । इन्द्रेऽप्येवमेवेति । तत्वाभिमानिन इन्द्रस्यापि दैत्याऽधिकशक्तित्वेन यावत्तरो यावदोजश्च पृतन्यु युध्यन्तं अन्यं शत्रुं वज्रेणावधीरित्येवमिन्द्रपक्षेप्युत्तरार्धस्य योजना एवमेव विष्णुपक्ष इव द्रष्टव्येत्यर्थः ॥ १२ ॥

अभि सिध्मो अजिगादस्य शत्रून् ॥ सिद्धेर्भावे क्विबिति । सिधु् सिद्धाविति धातोर्भावे क्विप्प्रत्यये तस्य लोपे सिधुधातोः क्विबन्तप्रतिपदिकत्वसिध्या शब्दत्वसिद्धिर्द्रष्टव्या ॥ ततो मत्वर्थे म इति । क्विबन्तात्सिधुशब्दान्मत्वर्थे मप्रत्यये सिध्म इति भवतीत्यर्थः । ननु सिधेर्मत्वर्थे म इत्येवानुक्त्वा सिधेः क्विप् प्रत्ययः कस्मादुक्त इति चेन्न । धातूपरि तद्धितप्रत्ययविधानं नास्ति किन्तु शब्दोपर्येवेति वैय्याकरणानां संप्रदायः । अतः क्विपमानीय सिध् धातोः क्विबन्तप्रातिपदिकतासंपादनेन शब्दत्वं संपाद्य पश्चान्मत्वर्थीयस्तद्धितो मप्रत्यय आनीत इति द्रष्टव्यम् ॥ ननु जि जये इति धातोः लुङि तस्य परस्मैपदिनि तिबादेशे इ इत्यस्य लोपे कर्तरि शप्प्रत्यये अकारमात्रं विहाय शकारपकारयोर्लोपे जि अत् इति स्थिते धातोरभ्यासे जिजि अतिति स्थिते अभ्यासात्परस्य जेः गकाररूपे कुत्वे लुङ्लङ्लृङ्क्ष्वडुदात्त इति पूर्वमडागमे अजिग अदिति जाते अकः सवर्णेदीर्घे च सति लुङि रूपम् ।

(पदार्थप्रकाशिका)

तदयुक्तम्। लुङि अभ्यासस्य अभ्यासात्परस्य धातोः कुत्वस्य चाविधानादित्यत आह अलाक्षणिकं छान्दसमिति। लक्षणं सूत्रं तन्निष्पाद्यं लाक्षणिकम्। न लाक्षणिकम्। एतादृशं यत् लुङि अभ्यासः कुत्वं चेति द्वयं तत् छान्दसमिति संप्रदायिकोऽर्थः। वीत्यस्यार्थमाह। विरोधिनं प्रतीति। संसारशब्देन पुरत्वमुपपादयति। संसाररूपमिति। संसरत्यत्रेति व्युत्पत्या संसारशब्देन रूप्यते प्रतिपाद्यत इति संसाररूपं संसारशब्दवाच्यमित्यर्थः। लिङ्गम्। लिङ्गशरीरम्। पुरमिवेति। भोगायतनत्वसाधर्म्यादिति भावः। प्राणोपदेशादिद्वारेति। मुख्यप्राणकर्तृकोपदेशद्वारेत्यर्थः। आदिपदेन मुख्यप्राणोपासनाग्रहणम्। आदौ मुख्यप्राणमुपासनयाऽपरोक्षीकृत्य तदुपदेशेन तदधिष्ठानकं भगवन्तं दृष्ट्वा लिङ्गभङ्गमाप्नोतीत्येवं प्राणोपदेशादिद्वारेणेश्वरो भिनत्तीत्यर्थः। यथोक्तं एकादशस्कन्धतात्पर्ये। उपास्य वायुं प्रथमं वायौ सुष्ठ्वपरोक्षिते। अनुज्ञातस्ततस्तद्वं तत्र तत्र हरिं स्मरेत्। कृत्वाऽपरोक्ष्यं तं चापि काले काले स्मरन्पुनः। न किञ्चित्कामयेत्पश्चात्स क्षिप्रं मुक्तिमेष्यतीति। अनुज्ञात उपदिष्टः। यद्वा शिष्येषु अधिकार्युत्तमत्वादिना वायुस्वरूपोपदेशद्वारेणेत्यर्थः। आदिपदेन तज्ज्ञानादि। यथोक्तं तत्रैव। सर्वदेवोत्तमो वायुरिति ज्ञानान्न चापरम्। प्रियमस्ति हरेः किञ्चित्तथा वायो हरेर्विदः। भारतीवायुलक्ष्मीणामात्मनश्च यथाक्रमम्। आधिक्यज्ञापनाद्विष्णुः सर्वतः संप्रसीदतीति। यद्वा प्राण इति ब्रह्मोच्यते। तथाच तत्कर्तृकोपदेशद्वारेणेत्यर्थः। आदिपदेन तत्साक्षात्कारः। यथोक्तं न्यायविवरणे। उपदेशो ब्रह्मणस्तु सर्वेषामेव मुक्तय इति। उक्तं चैकादशतात्पर्ये। स्वयं चोपदिशेद्ज्ञानं वैरिञ्चिपदयोगिनि। अनुग्रहात्तेन चापि ज्ञानं दत्वा विमुक्तिगैः। ज्ञानं प्राप्य बहुभ्योऽपि नर्ते मुक्तिश्चतुर्मुखात्। ज्ञानमप्राप्य तु तेषां ज्ञानदो विष्णुरेव हीति। प्रसिद्धेन्द्रे योजयति। इन्द्रस्त्विति। अभिसिध्मः। सिद्धियुत इतीन्द्रविशेषणं स्पष्टत्वान्नोक्तम्। एवं तिग्मेनेत्यत्र विरोधिनः प्रतीत्यपि। वर्षणाङ्गेनेति। शरदादिकाले शृङ्खलया बद्धान् मेघान् वर्षाकाले प्राप्ते वज्रेण तदीयाः शृङ्खलः च्छित्वा वृष्ट्यै आदिशतीति प्रसिद्धत्वाद्वज्रस्य शृङ्खला छेदद्वारा वर्षणाङ्गत्वं मन्तव्यम्। तथाहि शन्तिपर्ववचनम्। मेघानां शृङ्खलाश्छित्वा वज्रेण शतपर्वणा। सुत्रामाज्ञापयद्वृत्यैतान् लोकहितकाम्ययेति। वज्रस्य वर्षणाङ्गत्वं नाम दैत्यहननादिद्वारा सज्जनाभिलषितवर्षकत्वमित्यप्याहुः। संयोजयामास। संयुक्तमकरोत्। शेष इति। भाष्यकारैः ऋचि शेषः पूरित इत्यर्थः। ननु वृत्रहनने वक्तव्ये वृत्रवज्रसंयोगोक्तिरसङ्गतेत्यतोऽवान्तरव्यापारत्वान्न तदुक्तिरसङ्गतेत्याशयेन दृष्टान्तमाह। नहीति। कुठारस्येति शेषः। तत्। दारु। समानविषयमिति। यद्विषयकाज्ञानमभूत्तद्विषयकं ज्ञानमुत्पादितवानित्यर्थः। समानविषयं किमर्थं चकारेत्यत आह। अमुष्येति। अज्ञानस्येत्यर्थः।

(पदार्थप्रकाशिका)

अत्रापि ईश्वरपक्षेऽपि। किञ्च शाशदानेत्यादिकं ईश्वरपक्षे इन्द्रपक्षे च यथायोग्यं समानम्। ननु तर्हि शशादन इत्येव स्यान्न शाशदान इतीत्यत आह। व्यत्ययेनेति। वर्णविपर्ययेणेत्यर्थः। निरुक्तत्वेनेति यावत्। वर्णागमो वर्णविपर्ययश्चेति वचनात्। तथाच शश अदन इत्यत्र स्थित एक एवायमकारो दकारात्पुरतः आद्यशकात्पुरतश्च गतः। तथाचोभयत्र सवर्णदीर्घे सति शाशदान इति भवतीति भावः। स्वप्रजाभ्य इति। स्वभक्तजनेभ्य इत्यर्थः। इति शेष इति। भाष्ये ऋचि शेषः पूरित इत्यर्थः। व्यत्ययस्यार्थः सदेति॥ १३॥

आवः कुत्समिन्द्र यस्मिन्चाकन्। यथासङ्ख्यमिति। कुत्सं मुनिं दशद्युं नृपं चेति यथासङ्ख्यमित्यर्थः। व्यर्थमेतदिति। यस्मिन् कुत्से स्थित इति किमर्थमुच्यते इन्द्रस्य सर्वत्र स्थितत्वेन विशिष्य तत्स्थितत्वकथने प्रयोजनाभावादित्यर्थः। अदर्शय इति। तथाच कुत्सं प्रति देहान्तः स्वात्मस्वरूपप्रदर्शनाय विशेषसन्निधानेन स्थितत्वस्योच्यमानत्वेन सप्रयोजनत्वाद्यस्मिन् स्थित इति कथनं न व्यर्थमित्यर्थः। ननु करोतेः शतरि कुर्वन्निति भवेत् चाकन्निति कथमित्यत आह करोतेरिति। तथाच कृञ्करणेऽस्मात् शतृप्रत्यये अकारमात्रं विहाय सर्वस्य लोपे ककारस्याभ्यासेऽभ्यस्तककारस्य चुत्वे तस्य दीर्घे नुमागमे च सति चाक् अन् चाकन् इति भवतीत्यर्थः। नाभ्यस्ताच्छतुः। अभ्यस्तात्परस्य शतुर्नुम् न स्यादिति नुमो निषिद्धत्वात् छन्दसीत्युक्तम्। अभ्यासोऽपि छान्दसो द्रष्टव्यः। चाकन्नित्यस्यार्थः कुर्वन्निति। तर्हि क्रियायतः स्वतन्त्र इति वाच्ये कर्मेति कथमुक्तमित्यत आह कर्मापरपर्याय इति। कर्ता च स्वतन्त्र इति। स्वतन्त्रः कर्तेति स्मरणादिति भावः। युक्तमिति यः स्वतन्त्रः स चाकन्नुक्त इत्युक्तं युक्तमित्यर्थः। कुर्वंस्त्वमिति। स्वतन्त्रस्त्वमित्यर्थः। यस्मिन् कुत्से स्थित इति। स्वात्मसाक्षात्कारायेति भावः। किमर्थं प्रपंच्यत इत्यत आह तदपीति। वृषभरूपदशद्युनामकनृपकृतं युद्धमपीत्यर्थः।

ननु शफच्युतो रेणुर्न क्षतद्यामित्युत्तरार्धे वृषभं दशद्युमितिपदस्याभावादुत्तरार्धव्याख्यानसमये वृषभरूपस्यास्य नृपस्य युध्यत इति किमर्थमुक्तमत आह तत्रेत्यादिना। अव्याख्यातत्वादिति। वृषभं दशद्युमित्यस्येत्यर्थः। सुरोद्धितो रेणुः। उदगच्छत् व्याप्तवान्। कदेति। कदा उन्नक्षतेत्याशङ्कायामाहेत्यर्थः। यदेति शेषः। श्वैत्रेयो यं वृषरूपो दशद्युर्नृषाह्याय प्रतिभनामभिटाय युधतो युध्यतोऽभिभवितुं यदोत्तस्थौ तदा शफच्युतो रेणुर्नक्षतद्यामित्यन्वयो द्रष्टव्यः। दशद्योः श्वैत्रेयत्वमुपपादयति श्वेतेति। वाणी भारती। कथमिति। श्वेताशब्दाद्वाणी कथमुक्तेत्यर्थः। श्वेताशब्दाद्वायुभार्यापि कथं लब्धेत्यत आह वायुर्हि श्वेति। तस्मै श्वा श्वेतः

(पदार्थप्रकाशिका)

प्रादुर्बभूवेति छान्दोग्ये प्रसिद्धं वायोः श्वरूपमिति हिशब्दः । तेनेति । तेन भर्त्रा इता युक्तेत्यर्थः । श्वेतायाः वायुपत्न्याः भारत्याः । श्वेतायाः सुतः श्वैत्रेय इति कथं लभ्यत इत्यत आह स्त्रीभ्यो ढगिति । तथा चानेन सूत्रेण स्त्रीलिङ्गात् श्वेताशब्दात् अपत्यार्थे ढक्प्रत्यये आयनेयेयीनीयः फढखछघां प्रत्ययादीनामिति सूत्रेण ढस्य एयादेशे श्वेता एयेति जाते आदिवृद्धौ श्वैता एयेति जाते आकारस्य परस्मिन् एकारे प्रवेशरूपे पररूपे सति श्वैतेयेति रूपमित्यर्थः । ननु तर्हि श्वैत्रेय इति कथमित्यत आह रेफार्थस्त्विति । वक्ष्यत इति । उत्तरस्यां ऋचि श्वित्र्यमितिपदव्याख्यानसमये रमणाद्रेफ उक्त इत्यनेन रेफार्थो वक्ष्यते । तथाच श्वेता च सा राच श्वेत्रा तस्या पुत्रः श्वैत्रेय इत्यर्थः । अयं दशद्युरिति । भारतीपुत्रो दशद्युरित्यर्थः । साह्यं सहनमिति । अत्र यद्यपि नृषह्यायेतिपदं शाकल्याः पठन्ति तथाच शकि सहोश्चेति यत्प्रत्यय एव व्युत्पादनीयः तथापि नृसाह्यायेत्यपिपदमत्र भविष्यत्येव न हि शाकल्यपरिदृष्टप्रकारेणैव पदविभागः कार्य इत्यत्र किञ्चिन्नियामकमस्ति अतो ऋष्यन्तरदृष्टप्रकारेण साह्यायेतिपदमङ्गीकृत्य तत्रोपपत्तिमाह साह्यं सहनमित्यादिना । तस्मै अभिभवाय । नन्वत्र साह्यशब्दो ण्यत्प्रत्ययान्तः ऋहलोर्ण्यदिति सूत्रेण हलन्तात् षहधातोः ण्यत्प्रत्यये णकारतकारयोर्लोपे णित्वादादिवृद्धौ साह्येति जातत्वात् ण्यत्प्रत्ययश्च कृत्यप्रत्ययः । कृत्याः प्राङ्ण्वुल इति सूत्रेण ण्वुल् तृचावित्यतः पूर्वं विहितानां कृत्यप्रत्ययत्वात्तन्मध्ये ऋहलोर्ण्यदिति ण्यप्रत्ययस्यापि विहितत्वात् ।

एवं च कृत्यानां कर्मणि विधानात्कथं भावार्थे ण्यदाख्यः कृत्यप्रत्यय आनीयत इत्यत आह तयोरेवेति । कृत्याः क्तप्रत्ययः खलर्थाश्च प्रत्ययास्तयोरेव भावकर्मणोरेव भवन्तीति सूत्रार्थः । एवं च प्रकृते भावे कृत्य इत्यर्थः । अपवादो अपवादरूपः । शकि सहोश्चेति । शकि सहोधात्वोर्यत्प्रत्ययः स्यादिति सूत्रार्थः । शक्यं सह्यमित्युदाहरणम् । एवं च सहशब्दात् यत्प्रत्यये आदिवृद्धि-विधायकाभावेन वृध्यभावे सह्यमित्येव स्यादित्यर्थः । कृत्यल्युट इति । कृत्या ल्युटश्च छन्दसि बहुलं भवन्ति विशेषविधेरेवापवादका भवन्तीति सूत्रार्थः । शकि सहोश्चेति विशेषसूत्र-विहितयत्प्रत्ययापवादोऽयम् । एवं चापवादस्यापवादे पुनरुत्सर्गस्यैव प्राप्तिरिति न्यायेन ऋहलोर्ण्यदिति विहितो ण्यत्प्रत्ययोऽपि भविष्यति तथाच णित्वादादिवृद्धौ साह्यमिति युक्तमित्याशयः । युधत इत्यनूद्य युध्यत इति व्याख्यानम् । द्वितीयाबहुवचनमेतत् । उदस्थात् । स्थितः । अनेनेति । उदस्थादिति वहुवचनेनेत्यर्थः । उभयत्रापीति । नक्षतात् स्थावित्यु-भयत्रापीत्यर्थः । अत एव पूर्वमुन्नक्षतद्यामित्युक्तमिति द्रष्टव्यम् ।

अस्येतिहासस्येति । भारतीपुत्रो दशद्युर्नामनृपो वृषभरूपः सन् प्रतिभटानयुध्यते-त्यस्येतिहासस्येत्यर्थः । प्रसिद्धतामिति । नन्वध्यात्मे इति कथम् । नाव्ययीभावादतोम्त्वपञ्चम्या इति

(पदार्थप्रकाशिका)

सूत्रेण अदन्तादव्ययीभावात्सुपो न लुक् तस्य पञ्चमीं विनाऽमादेश इत्युक्तत्वादत्र सप्तम्या अम्भावेऽध्यात्ममित्येव स्यादित्यत आह तृतीयेति । अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलममभावः स्यादिति सूत्रार्थः । उपकृष्णं कार्यम् । उपकृष्णेन कार्यं उपकृष्णं स्थिता अनुपकृष्णे न स्थित इत्युदाहरणम् । तथा चानेन सूत्रेण तृतीयासप्तम्योरम्भावस्य वैकल्पिकत्वविधानादत्र सप्तम्या अम्भावो न जात इत्यध्यात्म इति युक्तमित्यर्थः । भिन्नाभिधेयव्युदासायेति । पूर्वं यथा दशद्यु कुत्सशब्दयोर्नृपमुनिरूपभिन्नाभिधेयवत्वमेवमिह न भिन्नार्थत्वं किन्तु वृषभवाच्यो धर्म एव कुत्सितः सारणादिनिमित्तेन कुत्सादिशब्द इत्येवं भिन्नाभिधेयव्युदासायेत्यर्थः । तात्पर्यमिति । नतु शफच्युत इत्यादेरक्षरार्थ इत्यर्थः । परम्परयेति । ज्ञानद्वारेणेत्यर्थः । तत्साधनम् । मोक्षसाधनम् । मोक्षफलोपग इत्यस्य प्रकारान्तरेणार्थमाह । तदन्तर्भूतफलो वेति । लिङ्गशरीरभङ्गविशिष्टानन्दाभिवृद्धेर्मोक्षत्वात् मोक्षान्तर्भूतानन्दाभिवृद्धिफलक इत्यर्थः । अपरोक्षज्ञानोत्तरं कृतेन निवृत्तकर्मणा आनन्दाभिवृद्धिर्भवतीति प्रमाणप्रसिद्धमिति भावः ।

अन्तर्णीतेति । सारयतीति णिजर्थोऽन्तर्नीत इत्यर्थः । ड इति । तथाच कुदित्युपसर्गपूर्वकात् सृगताविति धातोर्डप्रत्यये डित्वाट्टीभूतस्य ऋवर्णस्य लोपे प्रत्ययाकारसंबन्धे च सति कुत्सेति रूपमित्यर्थः । क्रियारूपमिति । अश्वमेधादिरूपमित्यर्थः । यज्ञतत्साध्यादृष्टयोरुभयोरपि व्यवहारादादृष्टरूपधर्मस्य वृषभशब्दवाच्यत्वेन वक्ष्यमाणत्वादत्र तद्ग्रहणे पुनरुक्तिः स्यादतः क्रियारूपमित्युक्तमिति भावः । अपापे पापशङ्कितत्वादश्वमेधैर्यजाच्युतमित्यादिवचनेनाश्वमेधादिरूपयज्ञादिक्रियायाः पापोत्सारणहेतुत्वं प्रसिद्धमिति द्रष्टव्यम् । चाकंस्त्वमिति । स्वतन्त्रस्त्वमित्यर्थः । यस्मिन्नित्येतद्यस्मिन् स्थित इत्यादि प्राक् व्याख्यातमिदानीं प्रकारान्तरेण तदर्थमाह यस्मिन्निति । यस्मिन्भक्ते जायमानं त्वद्विषयकं ज्ञानं यदधीनं यस्य धर्मस्याधीनं तं अदृष्टरूपं धर्मं प्राप इत्यर्थः । सक्रियाजन्यादृष्टेन भगवज्ज्ञानमुत्पद्यत इत्यस्य प्रमाणप्रसिद्धत्वमिति भावः । प्रकाशः । प्रसिद्धिः । यथा वृक्षस्य सं पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वातीति श्रुतेरिति भावः । पूर्वं वृषभं वृषभरूपमिति व्याख्यातमिदानीं तु वृषभपदं धर्मवाचकमेवेत्याह धर्मनामैवैतदिति । तन्नामसु पाठादिति भावः । धर्मस्वरूपमेवेति । अदृष्टाख्यधर्मस्वरूपमेवेत्यर्थः । अदृष्टाख्यो धर्मोऽपि द्विविधः प्रवृत्तनिवृत्तभेदात् । तत्राद्यो रेणुशब्दवाच्यो द्वितीयस्तु वृषभशब्दवाच्यः तदुभयस्वरूपं चोत्तरार्धेन प्रपंञ्चत इति भावः । शफच्युत इत्यस्य खुरोत्थितः इति मुख्यार्थस्य बाधादाह शफच्युत इवेति । शफच्युतरेणुरिवेत्यर्थः । इवेत्युक्तं सादृश्यं विवृणोति । तत् संबन्धीति । वृषभसंबन्धीत्यर्थः । यथा शफच्युतो रेणुः प्रसिद्धः वृषभसंबन्धी एवं रेणुरूपः

(पदार्थप्रकाशिका)

प्रवृत्तधर्मोऽपि वृषभशब्दवाच्यनिवृत्तधर्मसंबन्धीत्येवं वृषभसंबन्धित्वरूपसादृश्याच्छफच्युतशब्दो गौण इति भावः।

ननु कथं प्रवृत्तधर्मस्य निवृत्तधर्मसंबन्धित्वं अतत्साधनत्वादतत्साध्यत्वाच्चेत्यत आह। तज्जातीय इति। सिद्धान्ते जातेरभावाज्जातिशब्दो धर्मपरः निवृत्तधर्मनिष्ठधर्माक्रान्त इत्यर्थः। स च धर्मः क्रियासाध्यत्वरूपो वाऽदृष्टरूपधर्मत्वरूपो वा स्वर्गमोक्षयोरुभयोरपि पुरुषार्थत्वेन व्यवहारात् पुरुषार्थसाधनत्वरूपो वा द्रष्टव्य इति संप्रदायः। रेणुः। प्रवृत्तधर्मः। द्यामुदनक्षत स्वर्गसाधनमभवत्। वाणीपुत्र इत्यस्य तात्पर्यं वेदप्रतिपाद्य इति। मुख्यो धर्मो निवृत्तधर्मः। साहाय्यायेति। ज्ञानिनामानन्दाभिवृद्धिरूपमोक्षजनने ज्ञानस्य साहाय्यायोत्तस्थौ स्थित इत्यर्थः। सिद्धान्ते आनन्दाभिवृद्धिरूपमोक्षस्य समुच्चयसाध्यत्वाङ्गीकारादिति भावः॥ १४॥

आवः शमं वृषभं तुग्र्यासु॥ अधीशेति। कर्मनिर्णये मघवन्नित्यस्य मखपते इत्यर्थस्योक्तत्वादिहापि अधीशेत्यस्य मखाधीशेत्यर्थो द्रष्टव्यः। न केवलमिति। केवलं क्रियादृष्टात्मकं धर्ममेवावः इति नेत्यर्थः। शमात्मकमिति त्वद्विषयकबुद्धिरूपमपि धर्ममित्यर्थः। उपलक्षणमेतत् भक्त्यादिकमप्यत्र ग्राह्यम्। त्वमेवाव इत्यन्वयः। भक्तानाम्। शममाव इति शेषः। सन्ततेस्तुग्र्याशब्दवाच्यत्वमुपपादयितुं दीर्घकालस्य तुग्रशब्दवाच्यत्वं तावदादावुपपादयति। अन्नाकाशेति। अत्राकाशेत्यपि पाठः। अर्थचतुष्टयमध्ये प्रकृते तुग्रशब्देन कोऽर्थो ग्राह्य इत्यत आह अत्रेति। नन्वेतावता वरिष्ठकालस्य तुग्रशब्दवाच्यत्वप्राप्तावपि दीर्घकालस्य कथं तुग्रशब्दवाच्यत्वमित्यत आह वरिष्ठो दीर्घ इति। एवं दीर्घकालस्य परम्परया तुग्रशब्दप्रतिपाद्यत्वमुपपाद्य प्रकारान्तरमप्याह। साक्षाद्वेति। दीर्घकालः साक्षान्मुख्यया वृत्त्या रूढ्येति यावत् तुग्रशब्दवाच्य एव तन्नामसु पाठादिति भावः। एवं दीर्घकालस्य तुग्रशब्दत्वं प्रकारद्वयेनोपपाद्य सन्ततिस्तुग्र्याख्येत्युक्तमुपपादयति। तुग्राद्घन्नितीति। तुग्रशब्दात्तत्रभवार्थे तद्धिते घन्प्रत्यये हलन्त्यमिति नकारलोपे आयनेयेयीनीयः फढखछघां प्रत्ययादीनामिति घस्य इयादेशे यस्येति चेति ग्रकारस्थस्य अकारस्य लोपे तुग्र् इय तुग्रियेति प्रातिपदिकनिष्पत्तौ सत्यां पश्चादाबन्तत्वे स्वाद्युत्पत्तौ वा तुग्रियास्विति भाष्ये युक्तमिति भावः। ऋचि तु तुग्रशब्दाद्भवार्थे यत्प्रत्यये यस्येति चेति तुग्रशब्दस्थाकारलोपे तुग्र्यास्विति भवतीति ज्ञातव्यम्। ननु तुग्र्यास्वित्यस्य विशेष्याकांक्षायां तत्पूरणाय भाष्ये सन्तान इति कस्मान्नोक्तमित्यतो ऋचि स्त्रीलिङ्गप्रयोगात्सन्ततिर्लभ्यत इत्याह स्त्रीलिङ्गप्रयोगादिति। नन्वथापि दीर्घकाला काचन स्त्री किं न स्यात् सन्ततेरेव कुतो लाभ इत्यत

(पदार्थप्रकाशिका)

आह । योग्यतया चेति । सन्ततिव्यतिरिक्तार्थग्रहणस्य प्रकृते असंभवेनायोग्यत्वादिति भावः । उक्तत्वादिति । आवः शमं वृषभमित्युक्तत्वादित्यर्थः । पुनरुक्तिरिति । वृषभगोशब्दयोरुभयोरुरपि धर्मरूपैकार्थवाचित्वादित्यर्थः । अनुवादोयमिति । आवः शमं वृषभमित्युक्तस्यानुवाद एव गामित्यनेन क्रियते तथा पूर्वस्यां ऋचि श्वैत्रेय इत्युक्तस्यैव श्वित्र्यमित्यनुवादः क्रियते क्षेत्रजेष इति विधानायेत्यर्थः । श्वेतासुतम् । वाणीपुत्रं वेदप्रतिपाद्यमित्यर्थः । गां धर्ममिति । गोशब्दस्य बलीवर्दादिवाचित्व इव धर्मवाचित्वे पुल्लिङ्गत्वात् श्वित्र्यमिति तद्विशेषणं युक्तमिति ज्ञातव्यमित्याहुः । वस्तुतस्तु गां धर्ममिति व्याख्यानापेक्षया विशेषणत्वं युक्तमिति ज्ञातव्यम् । क्षुद्रविषयेति । प्रसिद्धक्षेत्रादिरूपेत्यर्थः । भगवता धर्मे सम्यग्रक्षिते सति तत्प्रभावेन भक्तानां तत्सन्ततेश्च मुक्तिर्भवतीति प्रसिद्धमिति ज्ञातव्यम् । मुक्तेः कथं क्षेत्रत्वमित्यत आह क्षियन्त्यत्रेति । क्षि निवासगत्योरिति धातोरत्र क्षियन्ति सर्वदा वसन्तीत्यर्थः । एवं च मुक्तिक्षेत्रविजयायेत्यस्य मुक्तिरूपावस्थाप्राप्तय इत्यर्थो द्रष्टव्यः । जेषे इत्येतत् विजयायेति व्याख्यातम् । तद्व्युत्पादयति । जि जय इत्यादिना । तथाच जिजयेऽस्मात् तुमर्थे सेसेन असे असेन् इत्यादिसूत्रेण तुमुन् प्रत्ययस्यार्थे से प्रत्यये इकारस्य गुणे सत्स्य षत्वे च जेषे इति भवति जेतुमित्यर्थः । तदनन्तरं क्षेत्रस्य जेष इति क्षेत्रपदेन षष्ठीसमासे क्षेत्रजेष इति भवति तस्य च क्षेत्रविजयायेत्यर्थकथनं युक्तमिति भावः । श्वित्र्यमिति कथमिति । उक्तरीत्या श्वैतासुतं श्वेतेयमिति स्यात् श्वित्र्यमिति तु कथमित्यर्थः । किञ्चिदिति । उप्रत्ययपररूपत्वादेरव्युत्पादनादिति भावः । ननु रमणाद्रेफ उक्त इत्ययुक्तम् । रमणादित्यनेन रम् क्रीडायामस्मात् डप्रत्यये डित्वाट्टीभूतस्य अम् इत्यस्य लोपे र इति भवतीति सूचितम् । तथाच रमणात् र इत्युक्त इति वाच्ये रेफ उक्त इति कथमुक्तं तथात्वे र् इत्येव स्यात्तत्र च रमणादित्यर्थोक्त्यसंभव इत्यत आह । अकारशिरस्क इति । तथाच अकारशिरस्को रेफ उक्त इत्यर्थः। एवं सति र इत्युक्त इत्येवोक्तं भवतीति भावः । शुना इतेति । श्वरूपेण वायुना इता तद्वार्येत्यर्थः । ननु श्वन् इतेत्यत्र न लोपः प्रातिपदिकान्तस्येति नकारलोपे गुणे श्वेतेति स्यात् । श्वितेति कथमित्यत आह शकन्ध्वादित्वादिति । शकंध्वादिभ्य पररूपं वाच्यमिति वार्तिकादस्यापि शकंध्वादिग-णस्थत्वादित्यर्थः । तथाच यथा शक अन्धुरित्यत्र सवर्णदीर्घे सति शकान्धुरिति भाव्ये उक्तवार्तिकेण ककारस्थस्य अकारस्य परस्मिन् अनुस्वारे प्रवेशरूपे पररूपे संजाते सति शकन्धुरिति भवति एवं प्रकृतेऽपि श्व इतेत्यत्र अ इत्यस्य परस्मिन् इकारप्रवेशरूपे जाते सति श्वितेति भवतीति भावः । श्वित्र्येत्यत्र विग्रहं दर्शयति सा चेति । श्विता च सेत्यर्थः । रमणात् रमणकर्तृत्वात् । श्वित्रेति । वाणीति शेषः । ननु तर्हि श्वितरेति स्यात् श्वित्रेति कथमत आह अत्रापीति । श्वितरेत्यत्रापि तकारोपरि

विद्यमानस्य अकारस्य परस्मिन् नकारे प्रवेशरूपे पररूपे सति श्वित् रा श्वित्रेति रूपं युक्तमित्यर्थः। एवं श्वित्राशब्दं व्युत्पाद्य गोशब्दवाच्यधर्मविशेषणभूतं श्वित्र्यमित्येतद्व्युत्पादयति। तस्या अपत्यार्थ इति। श्वित्रायाः वाण्याः अपत्यमित्यर्थे घ इत्यर्थः। अपत्यत्वं च प्रतिपाद्यत्वादित्युक्तमेव। तथाच श्वित्राशब्दात्तस्य अपत्यमित्यर्थे तद्धिते घप्रत्यये तस्य इयादेशे यस्येति चेति भसंज्ञकस्य आकारस्य लोपे श्वित्र् इति स्थिते निर्वचनत्वादिकारस्यापि लोपे श्वित्र्येति रूपं भवतीति भावः। अत्रेत्यस्यार्थस्त्वयीति। ज्ञाननिष्ठा युक्ता इति। त्वद्विषयकज्ञाने स्थितियुक्ता इत्यर्थः। चिदपीति। तथाच ते सर्वेऽपीत्यर्थो द्रष्टव्यः। अयं निपात इति। ज्योगितिपदं निपात इत्यर्थः। स्वरादिनिपातमव्ययमिति वचनादव्ययमिति भावः। ज्योगित्यस्य दीप्तिवचनत्वे यजुर्वेदीयसप्तमप्रपाठकद्वितीयपत्रस्थं प्रयोगं दर्शयति। ज्योगामयावीति यथेति। यो ज्योगामयावी स्यात्स नवरात्रेण यजेतेति वाक्यस्यायमर्थः। यः पुमान् ज्योगामयावी ज्योगाख्यामयावी देहे दीप्त्याख्यरोगवान् उष्णरोगवान्। ज्वराख्यरोगवानिति यावत् स्यात् स नवरात्रेण सूत्रेण यजेतेत्यर्थः। एवं चात्र यथा दीप्त्यर्थकत्वं एवं प्रकृतेऽपीति भावः। केचित्तु यः पूर्वं आमयावी रोगी तत्प्रयुक्तदेहकान्त्यादिरहितो यदि ज्योक् दीप्तिमान् रोगपरिहारेण कान्तिमान् स्यात्तर्हि स नवरात्रेण यजेतेत्येवमस्य वाक्यस्यार्थमभिधाय तदुपरि। ननु ज्योगित्यस्य दीप्तिमत्वार्थकत्वे कथं निपातता। चादयोऽसत्व इत्यद्रव्यार्थानामेव चादीनां निपातता विधानात्। दृष्टान्तदार्ष्टान्तिकोभयत्र दीप्तिकर्तृत्वार्थकत्वेन द्रव्यार्थकत्वात्कथं निपाततेत्याशङ्क्य द्रव्यार्था अपि निपाताः शास्त्रे बहवः संतीति न दोष इति समादधुः। अस्माभिः ज्योगाख्यामयावीति व्याख्यानात् टीकाकारैरपि दीप्तिवचनोयमित्येवोक्तत्वेन दीप्तेश्चाद्रव्यतया युक्तम् ज्योगित्यस्य निपातत्वमिति नास्मत्पक्षे पूर्वोक्तशङ्कावकाशमासादयति। देदीप्यमानमिति वचनं तु प्रकृतसङ्गत्यर्थं फलितार्थकथनपरं न तु ज्योक्शब्दवाच्यार्थकथनपरमतो न दोष इति ज्ञातव्यम्। अत एव ज्योतिरक्रन् दीप्तिं चक्रुरित्यर्थस्यासङ्गतत्वादाह देदीप्यमानमिति। ज्योक्चिदिति पादाभिप्रायमाह येत्वेति। अत्र तस्थिवांस इत्यस्याभिप्रायो ये त्वा तत्वतो जानन्तीति। ज्योतिरक्रन् इत्यस्य तात्पर्यं ते मुक्ताः सन्त इत्यादि। किं सर्वेऽपीति। त्वां तत्वतो जानमानाः सर्वेऽपि विमुक्ताः सन्तो दीप्तस्वरूपा भवन्ति किमित्यर्थः। ओमिति चेत् तथात्वे त्रिपुरं घ्नता रुद्रेण ये दैत्यास्तत्रस्था दग्धाः सन्तः पृथिवीतले जातास्तेषामपि भगवद्विषयकं तत्वज्ञानवत्वान्मुक्तिप्रसङ्ग इत्यभिप्रायः। यथोक्तं भगवत्पादैः श्रीमत्तात्पर्यनिर्णये। "दग्धाः पुरा ये त्रिपुरं घ्नतैव रुद्रेण जाताः पृथिवीतले ते ॥ अदर्शनं सर्वमुनीन्द्रवृन्दैः सहैव सज्ज्ञानमहानिधाने ॥ व्यासे प्रयातेऽपि सुतत्वविद्यातत्संप्रदायादपि

(पदार्थप्रकाशिका)

तैरवाप्ता । उत्सादितत्वाच्च दुरागमानां तत्संप्रदायस्य च नाशितत्वात् । प्रसारितत्वाच्च सदागमानां पापा अपि ज्ञानमवापिरे तदि''ति । नेत्युच्यत इति । इति शङ्कायां नेत्युच्यते उत्तरपादेनेत्यर्थः । शत्रूणामित्यनुक्त्वा शत्रूयतामिति शत्रुवदाचरणं अरीणां कस्मादुक्तमित्यत आह नहीति । शत्रुः शातयिता खण्डयिता 'शत्रुश्चापि वधादिकृदि'ति वचनात् । न हि भगवतः साक्षात् मुख्यतः शत्रुः शातयिता वधादिकर्तास्ति । अतः शत्रुवदाचरतामित्युक्तमित्यर्थः । अरीणामित्येतदपि तादृगेव । अरिर्वधादिकर्तेति गीताभाष्योक्तेः । अत उक्तं अयोग्यानामिति । वेदनानि तत्वज्ञानानि फलादपभ्रष्टानि । बुद्धरूपेणावतृत्य तान् मोहयित्वेति शेषः । शेषं समानमिति । तुग्र्यासु श्वित्र्यं गामित्यादिसमानमित्यर्थः । तथाच हे मघवन्निन्द्र श्वित्र्यं भारतीपुत्रं गां गोरूपं स्त्रीगोरूपत्ववारणाय तस्यैव विवरणं वृषभं वृषभरूपं शमं शमोरूपं शान्त्यादिगुणयुक्तम् । त्वन्निष्ठबुद्धियुक्तं वा त्वद्भक्तमिति यावत् । दशद्युमित्यनुवर्तते । तं नृपं आवः न केवलं तम् किन्तु तुग्र्यासु तदीयसन्ततिषु उत्पन्नाः प्रजा इति शेषः । ताश्चावः । किमर्थम् । क्षेत्रजेषु । तदीयभूमण्डलादिविजयादिप्राप्त्यर्थम् । यदि तदीयां सन्ततिं त्वं नारक्षस्तर्हि नश्येत् । तथाच तदीयभूमण्डलाद्याधिपत्यं प्राप्तः कोऽपि न स्यात् । तदीयसन्ततिस्थं विनाऽन्येन तस्यालभ्यत्वादित्यभिप्रायः । किञ्चात्र त्वयि ये तस्थिवांसस्त्वद्भक्ताः यज्ञादिकारिणः ते ज्योतिरक्रन् निजं रूपं दीप्यमानमकुर्वन् । त्वा यजन्तः स्वर्गं प्राप्य तेजोमयदेहयुक्ताः भवन्तीति यावत् । किं सर्वेऽपि नेत्युच्यते शत्रूयतां त्वदरीणां अयोग्यानां वेदना वेदनानि तदुपलक्षितकर्मादिसाधनानि अधरा अधराणि फलभ्रष्टान्यकः अकरोरित्येवं प्रसिद्धेन्द्रपक्षे ऋगर्थो द्रष्टव्यः ॥ १५ ॥ ३ ॥ १ ॥

## पदार्थदीपिका

नाव्यानां स्वार्थे यत्प्रत्यय इति । नौवयोर्धर्मेत्यादिना नावस्तार्यार्थे विहितो यत् बाहुलकात् स्वार्थेऽपि भवतीत्यर्थः । वान्तो यि प्रत्यय इत्यनेनावादेशः । करणे मनिन्निति । अन्येभ्योऽपि दृश्यत इति दृशिग्रहणात् करणे मनिन्नित्यर्थः । बहुवचनमिति । अभिधूनिति बहुवचनमित्यर्थः ॥ ११ ॥

व्रीह्यादित्वादिति ॥ अदन्तत्वाभावेनात इनिठनावित्यनेनोऽप्रसंगादेतदुक्तम् । इगुपधलक्षणः क इति ॥ तथा च कित्वाद्गुणाभाव इति भावः । दृल्हादंहेर्निष्ठायादृल्हस्तूल्वलयोरिति निपात्यते । छन्दसि बहुलमिति शेर्लोपः । अविध्यत् । व्यध ताडने । श्यनि ग्रहिज्येति सम्प्रसारणम् । लुङ्चेति हन्तेर्वधादेशः ॥ १२ ॥

(पदार्थदीपिका)

सिधेरिति ॥ सेधनं सिध् । सिध् विद्यते यस्यासौ सिध्यः । ननु जिगायेति भाष्यानुसारेण अजिगादित्येतल्लङि जि जये इत्येतस्य रूपमित्याभाति । तथा च अजयदिति वक्तव्यं द्विर्भावादिकं कथमित्यत आह ॥ अलाक्षणिकमिति ॥ लक्षणं व्याकरणं तन्निष्पाद्यं लाक्षणिकं न लाक्षणिकमलाक्षणिकम् । यत् जीजय इत्यस्य लुङि द्वित्वं कुत्वं इकारस्याकारश्चेति तत्सर्वं छान्दसमित्यर्थः । अभेत् । भिदिर् विदारणे श्नमि प्राप्ते व्यत्ययेन शप् । तस्य बहुलं छन्दसीति लुक् । लघूपधगुणे हल्ङ्याब्भ्य इति तिलोपः । यद्वा लुङि च्लेर्लुक् । अतिरत् । तरतेर्व्यत्ययेन शः । ऋत इद्धातोरितीत्वम् ॥ १३ ॥

युध्यन्तम् । व्यत्ययेन परस्मैपदमिति भावः । उन्नक्षतेति । नक्ष गतौ व्यत्ययेनात्मनेपदमिति भावः। तेनेता श्वेतेति शकन्ध्वादित्वात्पररूपत्वमिति द्रष्टव्यम् । स्त्रीभ्यो ढगिति । स्त्रीप्रत्ययान्तेभ्योऽपत्यार्थे ढक् प्रत्ययस्स्यादिति सूत्रार्थः । ढस्येयादेशः । कित्वादादिवृद्धिरिति भावः । नन्वेवं श्वैतेय इति स्यात् श्वैत्रेय इति कथमित्यत आह ॥ रेफार्थ इति ॥ रेफस्तु अधिकोत्र द्रष्टव्यस्तदर्थस्तु मरणाद्रेफ उक्त इत्यादिनोत्तरत्र वक्ष्यते इत्यर्थः । ण्यदपि भवतीति । परभाष्ये तु शकि सहोश्चेति कर्मणि यदिति व्याख्यातम् तत्तु सह्यायेति ऋषिदृष्टपदकल्पनयेति बोध्यम् । न साह्यायेति चिरन्तनपदपाठाभिप्राये चेतावाक्षेपपरिहाराविति ज्ञेयम् । संहितायां पूर्वपदादिति षत्वम् । द्यौः प्रकाशो यस्येति ॥ दीव्यतेः प्रकाशार्थत्वात् सम्पदादिलक्षणः क्विप् । श्रूडित्यूठ् । दशसु दिक्षु द्यौर्यस्यासौ दशद्युश्छान्दसं ह्रस्वत्वम् । यद्वा द्युशब्दो त्वनीमसु पठितः तेन प्रवृत्तिनिमित्तभूताः प्रकाशा लक्ष्यन्ते ॥ १४ ॥

घन्निति ॥ घस्येयादेशः । ईकारलोपश्छान्दसः । अवस्थेति ॥ अवतिष्ठन्त्यत्रेति व्युत्पत्या मुक्तिरवस्थाशब्दार्थ इति बोध्यम् । षष्ठीसमास इति ॥ ननु न लोकाव्ययेत्यव्यययोगे षष्ठीनिषेधात् कथं जेष इत्यव्यययोगे क्षेत्रस्येति षष्ठी । कथं च क्षेत्रस्य जेषे क्षेत्रजेषे इति षष्ठीसमासः पूरणगुणसहितार्थसदव्ययतव्येत्यव्ययेन षष्ठीसमासस्य निषिद्धत्वात् । तथा च ब्राह्मणस्य कृत्वेत्यादिवत् क्षेत्रस्य जैष इत्येव भवितव्यम् । न चायं निषेधोऽनित्यः । तज्ज्ञापकाभावात् । न चानुर्यत्समयेत्यत्र समासदर्शनमेव तत्र ज्ञापकम् । कथमन्यथा यस्य समया यत्समयेति समासः । तत्रापि पूरणगुणेति निषेधप्रसंगादिति वाच्यम् । सामीप्यार्थकस्य समयशब्दस्य सत्ववाचित्वात् अव्ययत्वेऽपीह समयावाचिन्यनुशब्दे समयाशब्दस्य वृत्तद्रव्यवाचित्वादव्ययत्वाभावेन तत्रोक्तनिषे-धाप्रसंगेन समासस्योपपन्नतया तस्य निषेधानित्यत्वज्ञापकत्वायोगात् । अंगीकृत्य चैतदुक्तम् । वस्तुतस्तु अव्ययशब्दः सूत्रे नाव्ययमात्रपरः । किन्तु कृदव्ययपर एव । सतव्येति पूर्वोत्तरकृत्साहचर्येण

(पदार्थदीपिका)

अव्ययशब्दस्यापि कृदव्ययपरत्वस्यैव न्याय्यत्वात् । नचैवं यत्समयेत्यत्रापि अकृदव्ययत्वे-नोक्तनिषेधाप्रसक्तेः द्रव्यवृत्तितयानव्ययत्वेन समासोपपादनं हरदत्तादीनामनर्थकमिति वाच्यम्। पूर्वोत्तरकृत्साहचर्यमनाश्रित्य तस्य प्रकारान्तरत्वात् । तदाश्रयणे च तत एव यत्समयेति समाससिद्धेरव्ययत्वाश्रयणानर्थक्यस्येष्टत्वात्। ततश्च पूरणगुणेति न कृदकृत्साधारणाव्ययमात्रेण समासनिषेधः किन्तु कृदव्ययमात्रेणैवेति यत्समयेत्यादौ अकृदव्ययत्वात् समासो युक्त एव। अत एव त्वदुपरि मदुपरीत्यादिप्रयोगः। सर्वपश्चादित्यन्यपदार्थसूत्रे भाष्यप्रयोगश्च। अत एव वाच्यनिषेधे वृक्षस्योपरीत्यादिकमपि उदाहरणमिति कैयटहरदत्तादिवचनमुपेक्ष्यम् । ततश्च कृदव्ययेन समासनिषेधस्य नित्यत्वात् कथं जैष इति कृदव्ययेन षष्ठीसमासः। किञ्च अव्ययेनापि समासपक्षे कृत्तद्धितसमासाश्चेति प्रातिपदिकत्वात् सुबुत्पत्तिसम्भवेन सुप्श्रवणं प्रसज्येत। तत्कथं टीकाकारेण षष्ठीसमासाभ्युपगम इति चेत् उच्यते। न तावदाद्यो दोषः। न लोकाव्ययेति षष्ठीमात्रस्य निषेधः किन्तु कारकषष्ठ्या एवेति तावदाकरे स्थितम् । ततश्चाव्यययोगे कारकषष्ठ्यसंभवेपि शेषषष्ठीस्वीकारे न बाधकमस्ति। अंगीकारवादश्चायम्। कारकषष्ठ्यैवैषा इत्यंगीकारेऽपि न काचित्क्षतिः। न लोकेति निषेधस्य तत्र निर्दिष्टत्वात् नञिवयुक्तन्यायस्य चाकर्तरि कारके संज्ञायामित्यादौ कारकादिग्रहणान्यथानुपपत्त्यानित्यत्वस्यापि आकरे व्यक्तत्वात्। समक्षं चैतत् टीकाकाराणाम्॥ अन्यस्येति॥ कर्तुमिति॥ कृद्योगे कर्तरि षष्ठी न लोकेति निषेधश्च नञा निर्दिष्टमनित्यमित्यनित्यमिति गीताभाष्यटीकायां टीकाकारैः स्वयमेव वर्णितत्वात्। पूरणेत्यव्ययेन षष्ठीनिषेधानुपपत्त्यापि तदनित्यत्वसिद्धेश्च। न ह्यव्यययोगे असत्यां षष्ठ्यां षष्ठीसमासे निषेधोस्ति यः पूरणगुणेति निषिध्यते। ततश्च प्रकारद्वयेनापि निषेधस्यानित्यत्वात् युक्तैव षष्ठी। अंगीकृत्य चाव्ययत्वमिदमुक्तम्। वस्तुतस्तु सर्वमिदं कांडं स्वरादपि पठ्यते। यद्यनुक्रान्तं तसिलादिस्तद्धित इत्यादिना। सति चैवं पुनः चतुःसूत्रयोगेऽनर्थकः। सन्नव्यये संज्ञाया अनित्यत्वज्ञापनार्थ एव वैयाकरणाभियुक्तैरुक्तत्वात् न जैष इत्यस्य नित्याव्ययत्वमित्यनव्ययतद्योगे षष्ठी युक्तैव। अत एव पूरणेति अव्ययमात्रेण वा कृदव्ययेन वा समासनिषेधात्कथं षष्ठीसमास इति द्वितीयेऽपि न दोषः। तदव्ययताया नित्यत्वस्य व्युत्पादितत्वेनाव्ययेन समासे दोषाभावात्। यच्च विभक्तिश्रवणमापादितं तदसत्। दधि यस्येत्यादाविव लुप्ततयाश्रवणसंभवात्। अस्ति ह्युत्पन्नाया अपि विभक्तेर्लोपविधायकं शास्त्रं सुपां सुलुक्पूर्वसवर्णेत्यादीति युक्तैव षष्ठीसमासांगीकारष्टीकाकाराणामिति सकलमकलंकम्। नन्वेवं श्वितरेति स्यादित्यत आह॥ अत्रापीति॥ अपत्यार्थे घ इति। घस्येयादेशः। इकारलोपश्छान्दसः। तस्थिवांसः। तिष्ठतेः वस्वेकाजाद्धसामितीडागमः। अक्रन्। लुङि

(पदार्थदीपिका)

मन्त्रेघसेत्यादिना च्लेर्लुक् । शत्रुवदाचरतामिति ।। उपमानादाचार इति शत्रुशब्दात् आचारे क्यच् । क्यचि चेति दीर्घः । क्यजंतांल्लिटः शत्रादेश इति ज्ञेयम् । अधरावेदनेत्युभयत्र छन्दसि बहुलमिति शेर्लोपः । अकः । करोतेर्लुङि मन्त्रे घसेत्यादिना च्लेर्लुक् । गुणः ।। १५, ३, ३३ ।।

## टीकाविवृतिः

अनुस्वधाम् ।। एकवाक्यतासिद्धय इति ।। यच्छब्दाध्याहाराभाव अस्येन्द्रस्यापःस्वधामक्षरन् इन्द्रस्तं अहन्निति परस्परान्वयाभावेन प्रथमपादस्येतरपादत्रयस्य च भिन्नवाक्यत्वं स्यादिति भावः ।। आपः कर्माणीति ।। अपःअप्न इति कर्मनामसु पाठादिति भावः ।। स्वधां सौख्यमिति ।। स्वतः स्वभावेनैव धीयतेधार्यते न तु स्रक्चन्दनादिवत्सुखोद्देशेनेति स्वधा सुखम् । स्वशब्दोपपदाद्धाञो ड प्रत्यये टाबिति भावः ।। अक्षरन्निति ।। क्षर संचलन इति धातोरन्तर्णीतण्यर्थस्येदं रूपम् । स्वस्मात्परोद्देशेन चालनस्य दानरूपत्वाद्दुरित्युक्तमिति भावः ।। ईश्वरकर्मणां चेतनात्मकत्वात्सौख्यदातृत्वसंभवेपि लोके कर्मणां सुखदातृत्वादर्शनादभिप्रायमाह ।। यदीयव्यापारेति ।। स एवंभूत इति ।। स्वचरित्रज्ञातुर्मोक्षदाता । इन्द्र ईश इत्यस्य आसम्यगहन्नित्यनेनान्वयो ज्ञेयः ।। विरोधीति ।। मोक्षस्येति शेषः ।। स्वार्थे यत्प्रत्यय इति ।। तद्धिता इति बहुवचनादिति भावः । नाव्यानामित्यत्र प्रत्ययस्वरापवादस्य तित्स्वरितमित्यस्यापवादेन यतोनाव इत्यनेन यत्प्रत्ययान्तस्य द्व्यच्कस्याद्युदात्तत्वविधायकेनानाव इति पर्युदासात्तित्स्वरितमिति यत्प्रत्ययस्य स्वरितत्वादुदात्तस्वरितपरस्य सन्नतर इति नाशब्दाकारस्यानुदात्ततरो बोध्यः । वेदेन मिथ्याज्ञानवृद्धिःकथमित्यत आह ।। मिथ्याज्ञानमपीति ।। करणे मनिन्निति ।। अन्येभ्योपि दृश्यन्त इत्यत्र दृशिग्रहणादिति भावः । भाष्ये हतिरूपेणेत्यस्य हतिं हननं रूपयति करोतीत्यर्थं मनसि निधायाह ।। अनर्थनिबर्हणेनेति ।। हेतिरूपेणेति पाठे आयुधरूपेणेत्यर्थः । तस्य तात्पर्यम् ।। अनर्थनिबर्हणेनेति ।। अनर्थस्य दुःखादेर्नाशकेनेत्यर्थः । अनर्थस्येति योग्यतयासंबन्धः ।। पुरुषार्थानामिति ।। आनन्दादीनां प्रसिद्धिःसम्यगनुभव इत्यर्थः । रूढमोक्षपदं विहायाभिद्यूनिति यौगिकपदग्रहणस्य प्रयोजनमाह ।। नित्यसिद्धत्वान्मोक्षस्येति ।। ज्ञानानंदादिरूपमोक्षस्य नत्वविद्यानिवृत्तिरूपस्येत्यर्थः ।। नौवयोधर्मेत्यादिनेति ।। नौवयोधर्मविषमूलमूलसीतातु-लाभ्यस्तार्यतुल्य प्राप्यवध्यानाम्यसमसमितसंमितेष्वित्यनेन नावादिभ्योष्टभ्यःक्रमात्तार्याद्यष्टार्थेषु यतो विधानादिति भावः ।। वृधमिति ।। इगुपधेति कः ।। अन्यत्समानमिति ।। प्रथमपादार्थःतमिन्द्र ओजिष्ठेन अहन्नभिद्यूनित्यर्थःसमान इत्यर्थः । तत्राभिद्यूनित्यस्य विशेष्यभूता देवा ग्राह्या इति

(टीकाविवृतिः)

भावः । सध्रीचीनेत्यादिभाष्येऽर्थानुक्तेरर्थः कथमित्यत आह ।। उपलक्षणमेतदिति ।। वैशब्द इति ।। भाष्ये वैशब्दस्तु बाह्यार्थस्पष्टत्वद्योतनायेत्यर्थः ।। ११ ।।

न्याविध्यत् ।। इळाभूरिति ।। अदितिः इळेति पृथिवीनामसु पाठादिति भावः ।। व्रीह्यादित्वादिनिरिति ।। व्रीह्यादिभ्यश्चेति सूत्रेण व्रीह्यादिगणान्मत्वर्थ इनिठनोर्विधानादिळा-शब्दस्यापि व्रीह्यादित्वादिनिरिति भावः ।। उपपददैर्घ्यमिति ।। व्यत्ययो बहुलमित्यनेन ह्रस्वस्य दैर्घ्यं वर्णव्यत्ययश्चेत्यर्थः ।। दृह्ळा दृढानीति ।। दृढशब्दात्सुपां सुलुगित्यादिना शस आजादेश इति भावः ।। न्यविध्यदिति ।। व्यध ताडन इत्यतो लङि तिपि दिवादित्वाच्छ्यनि ग्रहिज्येति संप्रसारणे अडागमः । तत्र निशब्दस्य निपातस्वरेणोदात्तस्य यणादेशे जाते तिङ्ङतिङ इति अविध्यदि-त्यस्यानुदात्तत्वादुदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येति सूत्रेणोदात्त स्वरितस्थानिकयणः परस्यानुदात्तस्य स्वरित विधानादकारस्य स्वरितत्वेछान्दसं दैर्घ्यमिति भावः । नन्विलीबिश-शब्दस्याज्ञानार्थत्वेऽवयवार्थःकथमित्यत आह ।। तदपीति ।। इलिनो भूस्थिता मनुष्या-स्तान्विशतीत्यज्ञानमिलीबिशमित्यर्थः ।। अन्यदिति ।। अज्ञानस्य दृढानि बलादीनि न्यविध्यदित्येतदित्यर्थः ।। शुषेर्नगिति ।। इणषिञ्जिदीङुष्यविभ्यो नगित्युक्तो बहुलोक्तेरंतण्यर्था-दस्मादपीति भावः । अध्यात्मपक्षे शुष्णशब्दं कामे योजयति ।। कामातुरा इति ।। इति हेतोःकामोपि शोषकत्वाच्छुष्ण शब्दवाच्य इत्यर्थः । शृंगिशब्दं गौण्या वृत्त्या कामप्रतिपादकमित्याह ।। वृष इवेति ।। नन्विन्द्रो न्यविध्यदिति व्यभिनदिति च परोक्षत उपक्रमात्कथं त्वमवधीरिति प्रत्यक्षनिर्देश इत्यत आह ।। परोक्षत इति ।। यावत्तर इत्यत्र तरश्शब्दो वेगार्थः । तरो बले च वेगे चेति विश्वोक्तेरित्याशयेनाह ।। यावानिति ।। ओजःशब्दस्योभयार्थत्वादिति ।। ओजस्तेजसि धातूनामवष्टंभप्रकाशयोः। ओजो बले च दीप्तौ चेति विश्वोक्तेः । अवष्टंभशब्दस्य विक्रमपर्यायत्वात् । तत्र शक्तिः शारीरं बलं विक्रमो जगद्वशीकरणसामर्थ्यमिति भेद इति भावः ।। पृतन्युं युध्यन्तमिति ।। पृतना रण इति संग्रामनामसु पाठाद्युद्धार्थकपृतनाशब्दात्क्यचि कव्यध्वरपृतनस्यर्चिलोप इति पृतनाशब्दस्याकारलोपे क्याच्छन्दसीत्युप्रत्ययः । क्यच इच्छार्थकत्वेपि इच्छामात्रेण वधायोगादिच्छाकार्यं युद्धकरणं लक्ष्यत इत्याशयेन युध्यन्तमित्युक्तम् ।। इति वार्थ इति ।। विष्णुपक्ष इति शेषः । यावत्तरो यावदोज इत्यनयोः पदयोस्सन्निहितेनावधीरित्यनेनान्वयं विहाय व्यवहितेन पृतन्युशब्देन कथमन्वय इति भावेन विष्णुपक्षे योजनामन्यथाप्रतीतिं च दर्शयन्नवतारयति ।। अत्र हे मघवन्निति ।। यावदवधारण इति स्मरणादिति ।। अनेन सूत्रेणावधारणार्थकयावच्छब्दस्या व्ययीभावसमासविधानात् यावद्देवं वैष्णवा इत्युदाहरणे यावन्तो देवास्तावन्तो वैष्णवा

(टीकाविवृतिः)

इत्यर्थप्रतीतेरिति भावः ।। यस्मिन्निति ।। तथा चैवं भाष्ययोजना । हि यस्माद्धरिःसदैवानन्तशक्तिस्तत्तस्माद्यस्मिन् शत्रौ समस्तं शक्त्यादिकं प्रयुंजीत तादृशः अमुष्य विष्णोःशत्रुःको वा कुत एव कारणाद्भवेत् न कोपि न कुतोपीति ।। इन्द्रेप्येवमिति ।। यावत्तरो यावदोज इत्यनयोःपृतन्युमित्यनेनैव योजनेत्यर्थः ।। १२ ।।

अभिसिध्मः ।। मत्वर्थे म इति ।। द्युद्रुभ्यां म इत्यत्र म इति योगविभागादिति भावः ।। अस्येति ।। इदंशब्दस्य इदमोन्वादेशेऽशनुदात्तस्तृतीयादावित्यनुदात्ते अशादेशे स्यप्रत्ययस्य सुप्त्वादनुदात्तत्वादस्येति पदं सर्वानुदात्तं ज्ञेयम् । ननु जिजये इत्यतो लङि तिपि शपि गुणायादेशयोरजयदिति भाव्यं तत्कथमजिगादिति । अत्र शबभावान्मध्ये गा इत्यस्याविहितस्याधिक्यादित्यत आह ।। अलाक्षणिकं छान्दसमिति ।। सर्वे विधयश्छन्दसि विकल्प्यन्त इति शबभावः । गा इत्येतद्व्यत्ययो बहुलमिति बहुलग्रहणादागमरूपमिति भावः । पूर्वमवधीरित्यपरोक्षनिर्देशेप्यत्राजिगादिति प्रथमपुरुषप्रयोगात्परोक्षत्वमपि विवक्षितमिति भावेन भाष्ये जिगायेति लिट्प्रयोगो ज्ञेयः ।। व्यभेदिति ।। भिदेर्लङि ति पि व्यत्ययेन श्नमभावे बहुलं छन्दसीति शपो लुकि पुगन्तलघूपधस्येति गुणे हल्ङ्याभ्य इति तिपो लोप इति भावः । वृषभेणेति हेतौ तृतीया तथा च प्राणस्य कथं संसारछेदने हेतुत्वमित्यत आह ।। संसाररूपं लिङ्गं हीति ।। लिङ्गशरीरस्यैव संसारमूलत्वादिति भावः ।। तच्चेति ।। मुख्यप्राणस्योपदेशेन विना मोक्षाभावादिति भावः ।। वर्षणांगेनेति ।। वज्रस्य वर्षणांगत्वं च भक्ताभीष्टप्रतिबन्धकदैत्यध्वंसकत्वेन ज्ञेयम् ।। इति स्पष्टमिति ।। अतःपूर्वार्धो न व्याख्यात इति शेषः । एवमन्यत्रापि स्पष्टमित्युक्तौ शेषो ज्ञेयः । वज्रेण वृत्रमच्छिनदिति वक्तव्ये संयोजनोक्तिःकथं घटत इत्यत आह ।। नहि दारुसंयोगं विनेति ।। व्यत्ययेनेति ।। ह्रस्वदीर्घविपर्यासेनेत्यर्थः । तस्यार्थःसदैवेति ।। प्रातिरदिति ।। तॄ प्लवनतरणयोरित्यतो लङि व्यत्ययेन शविकरणे तस्य ङित्वाद्गुणाभावे ऋत इद्धातोरितीकारादेश इति भावः ।। १३ ।।

आवःकुत्सम् ।। यथासंख्यमिति ।। कुत्सं मुनिं दशद्युं नृपमिति क्रमेणेत्यर्थः ।। यस्यसुभक्तयेति ।। अनेन यस्मिन्कुत्से दर्शनविषयत्वेन स्थित इत्यभिप्राय उक्तो भवति ।। छन्दसीति ।। तथा च कृञो यङ्लुगन्ताच्छतरि छन्दस्त्वादभ्यासस्य रुगाद्यभावे दीर्घोकित इति दीर्घे छान्दस एव टिलोप इति भावः ।। क्रियाश्रय इति ।। क्रियात्र व्यापारः न तु धात्वर्थरूपा । तस्यागमनादिरूपायाःकर्तृस्थक्रियात्वात्कर्तरि सत्त्वेपि पचनादिरूपस्य कर्मस्थक्रियात्वेन कर्त्राश्रयत्वाभावात् ।। कर्ता च स्वतन्त्र इति ।। स्वतन्त्रःकर्तेति स्मरणादिति भावः । उत्तरार्धस्यासङ्गतिपरिहारायाह ।।

(टीकाविवृतिः)

तस्यैव युद्धमिति ।। तर्हि भाष्ये उत्तरार्धाव्याख्यानरूपस्य वृषरूपस्यास्य नृपस्य युध्यत इत्यस्य कथमुपयोग इत्यत आह ।। तदपीति ।। तदपि युद्धमपि । अस्य त्वद्रक्षितस्येत्युक्त्या त्वद्रक्षितत्वादेव दशद्युतुरगखुरोत्थितो रेणुरंतरिक्षमगमदिति सूचनाय पूर्वमव्याख्यातपदानामर्थतोनुवादः कृत इति भावः । तृक्षस्तृक्षणक्षगताविति धातुपाठं मनसि निधाय उन्नक्षतेत्यस्यार्थमाह ।। उदगच्छदिति ।। वायुर्हिश्वेति ।। प्रसादार्थं बकस्यापि वायुनोक्तःश्वरूपिणेति छान्दोग्यभाष्योक्तेरिति भावः ।। तेनेतेति ।। तेन वायुना भार्यात्वेन इता प्राप्तेत्यर्थः । स्त्रीभ्यो ढगिति ।। अनेन सूत्रेण स्त्रीप्रत्ययान्तेभ्योऽपत्येर्थे ढको विधानाड्ढकि तस्यायनेयीनिति सूत्रेण एयादेश इति भावः । तर्हि श्वैतेय इति वक्तव्ये रेफस्याधिकस्य श्रूयमाणत्वात्तदर्थो वाच्य इत्यत आह ।। रेफार्थस्त्विति ।। श्वित्र्यं गामित्येतद्व्याख्यावसरे श्वेता सुतं रमणाद्रेफ उक्त इति भाष्येणेति शेषः ।। तयोरेवेति ।। कृत्यादिप्रत्ययाः भावकर्मणोरेव स्युरिति सूत्रार्थः । ननु पदकाले नृसह्यायेति ह्रस्वशब्दःपठ्यते संहिताकाले दीर्घादिःतत्र किंनियामकमित्यत आह ।। यद्यपीति ।। यद्विहित अचो यदित्यनुवृत्तेर्यत्प्रत्ययो विहितः अत एव पदकाले ह्रस्वादिःसह्यशब्दःपठ्यत इति शेषः । तथापि संहितायां कृत्यल्युट इति वचनाण्ण्यदपि भवतीत्यर्थः । संहिताकालपदकालयोःपदैक्यात्कथं प्रत्ययभेद इत्यत उक्तम् ।। छन्दसीति ।। वेदे सादृश्यादैक्यव्यवहारेपि अथातोनिर्भुजप्रवादा इत्यैतरेयोपनिषदि संहितापदक्रमाणां देवताभेदफलभेदकथनात्तद्भाष्ये तेषां- नित्यत्वकथनाच्च संहितापदकालयोःक्वचित्प्रकृतिप्रत्ययभेदः क्वचित्कार्यभेदो भवति । एवं क्रमकालेपि ।। तथाहि । नरावाशंसमिति संहितापाठो नराशंसं वेति पदपाठःसर्वत्र पदद्वये क्रम इति नियमेपि क्वचित्त्रयाणां चतुर्णां पञ्चानां वा क्रमो दृश्यते । यथा मोषुण इत्यत्र उदूषण इत्यत्र निरुस्वसारमस्कृतोषसमित्यत्र । एवं तत्र तत्र संहितापदक्रमेष्ववान्तरविशेषाः वैदिकानान्तु प्रसिद्धाः । संहितायामन्येषामपि दृश्यत इति दीर्घ इत्युक्तिरगतिकागतिरिति भावः ।। युधतो युध्यत इति ।। रिपूनित्यपि शेषो ज्ञेयः ।। उभयत्रापीति ।। नक्षततस्थावित्युभयपदयोरित्यर्थः । ननु भाष्ये अध्यात्मे इति कथम् । आत्मनीति विभक्त्यर्थेव्ययीभावसमासे अनश्चेति समासान्ते टचि नस्तद्धित इति टिलापे अव्ययादाप्सुप इति प्राप्तसुब्लुकं नाव्ययीभावादित्यनेन निषिध्याम्भावविधानादध्यात्ममिति भाव्यत्वादित्यत आह ।। तृतीयासप्तम्योरिति ।। बहुलग्रहणस्य विधिनिषेधविकल्पकार्यान्तररूपचतु- र्विधार्थकत्वादिति भावः ।। भिन्नाभिधेयताव्युदासायेति ।। दशद्युकुत्सशब्दयोर्धर्मविशेषणत्वेन विवक्षितत्वादिति भावः ।। तात्पर्यमिति ।। अक्षरार्थस्तु वक्ष्यते ।। परंपरयेति ।। कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवतीति श्रुतेर्ज्ञानद्वारेत्यर्थः । ज्ञानात्पूर्वंकृत इति शेषः । अपरोक्षज्ञानानन्तरं कृतो धर्मस्तु

(टीकाविवृतिः)

मोक्षान्तर्भूतानन्दादिवृद्धिसाधनमित्याह ।। तदंतर्भूतेति ।। मोक्षस्यानिष्टनिवृत्तीष्टप्राप्तिरूपोभयात्मकत्वादिति भावः । पुनरुक्तिपरिहारायाह ।। क्रियारूपमिति ।। अग्निहोत्रादिप्रवृत्तकर्मजन्यमित्यर्थः । उत्तरत्राग्निहोत्रादिनिवृत्तकर्मजन्यं पुण्यमदृष्टरूपमित्यनेन गृह्यत इति भावः ।। यस्मिन्निति ।। यस्मिन्धर्मे स्थितस्त्वमित्यक्षरार्थे स्थिते तात्पर्यमाह ।। त्वज्ज्ञानं यदधीनमिति ।। कर्मजन्यत्वाज्ज्ञानस्य तदधीनत्वमिति भावः ।। धर्मनामैवेति ।। वृषभः पुंगवे वृष इति विश्वोक्तेःश्रेष्ठार्थत्वाश्रयेण धर्मस्य चतुर्विधपुरुषार्थेषु प्राथम्याच्छ्रेष्ठत्वात्पूर्वं ग्रहणमङ्गीकृतमिदानीं वृषःस्याद्वासवे धर्म इति विश्वोक्तिबलादेव वृषशब्दस्य धर्मनामत्वाद्वृषभशब्दस्य वृषवाचकत्वेन तत्रैवोक्तेरिति भावः । धर्मे शफच्युतशब्दं गौण्या वृत्त्योपपादयति ।। शफच्युत इवेति ।। ननु काम्यधर्मःतत्संबन्धी धर्मसंबन्धी कथं स्वस्यापि धर्मत्वादित्यत आह ।। तज्जातीय इति ।। यथा पांसुःशफच्युतस्तथा महाफलकनिवृत्तधर्मच्युतोल्पफलकः प्रवृत्तधर्मो निवृत्तधर्मजातीयो रेणुरित्युच्यत इति भावः ।। साहाय्यायेति ।। श्रुतौ साहाय्य शब्दे हकारोत्तराकारलोपः पृषोदरादित्वादिति भावः ।। १४ ।।

आवःशमम् ।। शमात्मकमिति ।। ज्ञानात्मकमित्यर्थः ।। शाब्दा इति ।। वृत्तिकारा इत्यर्थः ।। तुग्राद्धन्निति ।। सगर्भसयूथसनुताद्यन्नित्यतो यन्प्रत्ययानुवृत्तेर्यन्प्रत्ययश्चेति शेषः । यस्येति चेति तुग्रशब्दाकारलोपे तुग्र्येति रूपम् । अथवा घन्प्रत्यये घस्यायन्नादिसूत्रेणेयादेशे छान्दस इयादेशस्थेकारलोप इति भावः ।। क्षुद्रविषयेति ।। सस्याद्युत्पत्तिस्थानरूपक्षेत्रलाभायेत्यर्थः । क्षुद्रस्य लौकिकप्रभुदर्शनादिसाध्यत्वेनेश्वरप्रार्थनानपेक्षत्वादिति भावः । क्षेत्रशब्दं निर्वक्ति ।। क्षियंत्यत्रेतीति ।। क्षि निवासगत्योरिति धातोर्निवसंतीत्यर्थः । तुदादित्वाच्छे क्षियन्तीति रूपमिति भावः ।। जि जय इति ।। जयस्त्वत्र प्राप्तिमात्रं नत्वभिभवोऽसंभवादिति भावः ।। अकारशिरस्क इति शेष इति ।। अकारोत्तरो रेफ इत्यर्थः ।। पररूपमिति ।। श्वन्शब्दस्य टेःपररूपम् । महाभाष्ये सीमन्त इत्यादिप्रयोगसामर्थ्याच्छकंध्वादिषु टेःपररूपस्येष्टत्वादिति भावः ।। अत्रापीति ।। शकंध्वादिषु चेति वार्तिके अच्परत्वानुक्तेर्हल्परत्वेपि श्विताशब्द आकारस्य रेफे पररूपत्वमित्यर्थः ।। अपत्यार्थे ट्य इति ।। तद्धिता इति बहुवचनादिति शेषः । ट्यप्रत्यये चुटू इति टस्येत्संज्ञायां यस्येति चेति लोपे श्वित्र्यमिति रूपमिति भावः ।। ज्योगिति ।। द्युतदीप्तावित्यस्मादन्येभ्योपि दृश्यंत इति विचि उपधागुणे पृषोदरादित्वाद्दकारतकारयोर्जकारककाराविति भावः ।। ज्योगामयावीति ।। इति प्रयोगे । पूर्वमामयावी रोगी इदानीं ज्योक् दीप्त इत्यर्थ प्रतीतेर्ज्योक्शब्दस्य दीप्त्यर्थकत्वम् । अनेनैवाशयेन तत्र तत्रोपनिषत्स्वपि ज्योग्जीवतीत्यादि प्रयुज्यत इति भावः ।। अक्रन्निति ।। कृञो लङि व्यत्ययो

(टीकाविवृतिः)

बहुलमित्युक्तेविकरणाभावे झेरन्तादेशे यणादेशादीति भावः ॥ शेषं समानमिति ॥ तुग्र्यासु श्वित्र्यं ज्योकिदित्यादि समानमित्यर्थः ॥ १५ ॥

ऋक्संहिता पदपाठसहिता (सू-३४, व-१)

(३९९) त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां यामंउतरातिरंश्विना । युवोर्हियन्त्रं हिम्येव वासंसोऽभ्यायंसेन्यां भवतं मनीषिभिंः ॥१॥

(प०) त्रिः । चित् । नः । अद्य । भवतम् । नवेदसा । विऽभुः । वाम्। यामंः । उत । रातिः । अश्विना । युवोः । हि । यन्त्रम्। हिम्याऽइंव । वासंसः । अभिऽआयंसेन्यां । भवतम् । मनीषिऽभिंः ॥ १ ॥

(४००) त्रयंः पवयौ मधुवाहंने रथे सोमंस्य वेनामनु विश्व इद्विदुः । त्रयंःस्कम्भासंः स्कभितासं आरभे त्रिर्नक्तं याथस्त्रिर्वंश्विना दिवां ॥ २ ॥

(प०) त्रयंः । पवयंः । मधुऽवाहंने । रथैं । सोमंस्य । वेनाम् । अनुं । विश्वें । इत् । विदुः । त्रयंः । स्कम्भासंः । स्कभितासंः । आऽरभें । त्रिः । नक्तंम् । याथः । त्रिः । ऊँइतिं । अश्विना । दिवां ॥ २ ॥

(४०१) समाने अहन्त्रिरंवद्यगोहना त्रिरद्ययज्ञं मधुंना मिमिक्षतम् । त्रिर्वाजंवतीरिषों अश्विना युवं दोषा अस्मभ्यंमुषसंश्च पिन्वतम् ॥ ३ ॥

(प०) समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् । मधुंना । मिमिक्षतम् । त्रिः । वाजंऽवतीः । इषंः । अश्विना । युवम् । दोषाः । अस्मभ्यंम् । उषसंः । च । पिन्वतम् ॥ ३ ॥

(ऋक्संहिता पदपाठसहिता)

(४०२) त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् । त्रिर्नान्द्यं वहतमश्विना युवं त्रिःपृक्षो अस्मे अक्षरेव पिन्वतम् ॥४॥

(प०) त्रिः । वर्तिः । यातम् । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतम् । त्रिः । नान्द्यम् । वहतम् । अश्विना । युवम् । त्रिः । पृक्षः । अस्मे इति । अक्षराऽइव । पिन्वतम् ॥ ४ ॥

(४०३) त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः । त्रिःसौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरेदुहिता रुहद्रथम् ॥५॥

(प०) त्रिः । नः । रयिम् । वहतम् । अश्विना । युवम् । त्रिः । देवऽताता । त्रिः । उत । अवतम् । धियः । त्रिः । सौभगऽत्वम् । त्रिः । उत । श्रवांसि । नः । त्रिऽस्थम् । वाम् । सूरे । दुहिता । आ । रुहत् । रथम् ॥ ५ ॥

(४०४) त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः। ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥ ६, ४ ॥

(प०) त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊँइति । दत्तम् । अत्ऽभ्यः । ओमानम् । शम्ऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतम् । शुभः । पतीइति ॥ ६, ४ ॥

## ऋग्भाष्यम्

आरभ्य चाद्यैवदिवानिशायां तदन्तरे च त्रिरपि स्म सर्वदा । अस्माकमेव भवतं यतोन्यो वेत्ता न तावित्युदितौ नवेदसौ । गौणं तदन्यत्र हरौ तु मुख्यतो व्यापीतु मार्गो

(ऋग्भाष्यम्)

युवयोश्च दानम् । अशेषदेशेषु गतेरशेषदातृत्वतश्चैव युवोर्हि यन्त्रम् । वासोयन्त्रं यद्वदयत्नतः स्याद्धिम्या हिनोतेस्तंतुविक्षेपणी हि । तद्वद्धुद्धिप्रेरकाऽयत्नतो वामायार्थसेनौ भवतं मनीषिभिः । सहैव देवैः ॥ १ ॥ पवयश्चायुधानि सोमस्य पानं चेतनत्वाद्धिदुस्ते । वज्रः खड्गः शर इत्यायुधानि त्रिवेणवः स्तंभनामान एव । दिवानिशायां त्रिस्त्रिरेवानुयाथः कर्मारंभार्थं लोकसिद्ध्यर्थमञ्जः । चक्रं गदाशरइत्यायुधानि वेदास्त्रयो वासुदेवस्य च स्युः । रथः स्वीयो ज्ञानिनां वा शरीरं प्राणादयः स्तम्भनान्यस्य चापि ॥ २ ॥ वैषम्यहीने सुखभाजनेऽह्नि विमुक्तिकालेऽखिलदोषनाशकौ । स्वभक्तानां शोधयन्तं च यज्ञं त्रिरस्माकं युद्धजिता इषश्च । सुखानि वा मोक्षगतानि नोऽलमहोरात्रं क्षरतं सर्वदैव ॥ ३ ॥ यद्वर्तनं सर्वलोकेषु तच्च त्रिकालगं युवयोरेव सर्वम् । भक्ते जने सुष्टुरक्ष्ये सुभक्ते त्रिधेव कालानुगते सुशिक्षतम् । सुखं वहेतं च युवां तु नः सदा पुष्टिं च नित्यां क्षरतं वर्णवच्च ॥ ४ ॥ वित्तं च नित्यं देवततिं च नित्यं धियं च शुभ्रां नित्यमेवावतं नः । कीर्तिं सौभाग्यं रक्षतं नः सदैव कालत्रये युष्मदीयं रथं च । पुत्री सूर्यस्यारुहद्भक्तदेहे ज्ञानोदयो वा भगवत्प्रसादात् ॥ ५ ॥ सर्वेषु कालेष्वपि भेषजानि नः सर्वलोकप्रभवानि दत्तम् । अद्भ्यः सुखायैव सुखं ममैव स्वल्पस्य युष्मत्पुत्रकस्याथ दत्तम् । पती शुभस्याथ सुतस्य शंयोर्मदीयस्यैवावहतं सुखं वा ॥ ६,४ ॥

## ऋग्भाष्यटीका

त्रिश्चित् । द्वादशर्चमाश्विनं सूक्तम् । आरभ्य च । हे नवेदसा नवेदसौ अश्विनौ । अद्य आरभ्यैव चेति शेषः । सङ्कुचितप्रार्थने कारणाभावादिति स्मशब्दः । त्रिश्चित् । त्रिरपि दिवानिशायां तदन्तरे संध्ययोश्च सर्वदेति यावत् । युवां नोस्माकमेव भवतम् । सर्वतोप्यस्मासु कृपां कुरुतम् । नवेदसावित्यस्यार्थमाह । यत इति । यतः कारणात्ताभ्यामन्यो वेत्ता न । इति तस्मात्तौ नवेदसावित्युदितौ । विदेरसुन् । न विद्यते वेदा याभ्यामिति विगृह्य समासः । सर्वतोप्यधिकज्ञानिनाविति तात्पर्यम् । नभ्राण्नपान्नवेदा इति नञः प्रकृतिभावः । किमेतद्व्याख्यानं देवतान्तरे हरौ च समानमित्यपेक्षयामाह । गौणमिति । कथं भूतौ ययोर्वांयुवयोस्तु । यामो यांत्यनेनेति मार्गो विभुर्व्यापी । रातिरुतदानं च विभु । कथं मार्गदानयोर्विभुत्वमित्यत आह ॥ अशेषेति । यथासंख्यं सम्बन्धः । देशेष्वित्यतः पर एवशब्दः । किञ्च । युवोर्युवयोर्यंत्र्यंते नियंम्यन्तेऽनेनेति यन्त्रं नियमनम् । वाससो हिम्येव हि । वासोयन्त्रं हिम्याख्यं यद्वदयत्नतो महाप्रयत्नेन विना वाससो निष्पादकं स्यात्तथेत्यर्थः । का हिम्येत्यत आह ॥ हिम्येति । तन्तवो

(ऋग्भाष्यटीका)

विक्षिप्यंतेऽनयेति तन्तुविक्षेपणी तुरी। हिनोतेस्तंतुषु गतेर्हिम्या। हि गतौ। ततो म्यक्। हीति रूढोयं शब्द इत्याह। प्रागविवृतत्वाद्दार्ष्टान्तिकं विवृणोति। तद्वदिति। प्रेरका प्रेरकौ। एवं भूतौ युवां मनीषिभिर्ज्ञानिभिर्देवैः सहैवाभ्यायंसेन्यौ। अयगतौ घञ्। अभ्यायोभ्यागमनम्। सेनया युक्तौ सेन्यौ। अभ्यायाय सेन्यौ। छांदसो मुम्। यद्वाऽभ्यायार्थासेनाऽभ्यायसेना तया युक्तावभ्यायं सेन्यौ। आयार्थसेनौ। अस्मान्प्रत्यागन्तुं स्वसेनोपेतौ भवतम्॥ १॥

त्रयः। पविशब्दो यद्यपि वज्रवाची तथापि सादृश्यादायुधमात्रेऽत्र प्रयुक्त इत्याह। पवयश्चेति। चस्त्वर्थः। आयुधान्येवेत्येव शब्दार्थे वा। सोमस्येत्येतदनुपपन्नतया प्रतीतं घटयति। सोमस्येति। चेतनत्वाच्चेतनाधिष्ठितत्वात्। ते पवयःस्तम्भाश्च। त्रयः पवय इत्युक्तम्। कानि तानि त्रीण्यायुधानीत्यत आह॥ वज्र इति। अत्र वज्र इत्यादितो निर्देशाद्वज्रसहचरितत्वात् त्रयाणामपि पवित्वमित्यपि सूचितम्। त्रयस्कंभास इत्युच्यते। के त इति तत्राह। त्रिवेणव इति। त्रयश्च ते वेणवश्चेति विशेषणसमास एवायं न द्विगुः। कुन्तादयस्त्रयो वेणव एव स्तम्भनामानः। आरभ इत्यादि व्याचष्टे॥ दिवेति। तथा चायमर्थः। हे अश्विनौ भवदीये मधुवाहने मधु सोमं प्रत्यूह्येते भवंतौ येन तस्मिन्रथे त्रयः पवयस्त्रयः स्कंभासः स्कंभाःस्तंभाश्च स्कभितासः स्कभिताः स्तंभिताः स्थापिताः सन्ति। ते विश्व इत् सर्व एव। सोमस्य वेनाम्। वीगतिप्रजनकांत्यसनखादनेषु। अस्मान्नप्रत्ययः। खादनं च पानं पानक्रियां वा पीयत इति रसं वाऽनुविदुः। एवं भूतेन रथेन। युवामारभे। सम्पदादित्वात्क्विप्। प्राणिनां यज्ञादिकर्मारम्भार्थं कर्माणि कारयितुमिति यावत्। यद्वांजो लोकसिद्ध्यर्थं कृतकर्मणां स्वर्गादिलोकप्राप्त्यारंभार्थं नक्तं निशायां त्रिर्दिवा च त्रिरेवानुयाथः। बहिष्टे विष्णौ आयुधान्याह॥ चक्रमिति। अध्यात्ममाह॥ वेदा इति॥ बहिरध्यात्मं च रथं क्रमेणाह॥ रथ इति। स्वीयो वैष्णवः। त्रयःस्तंभाः बहिः प्रसिद्धाः। अध्यात्ममाह। प्राणादय इति। कस्यांचिद्धारणायां द्वयोर्विलोपेन त्रय एव प्राणादयः शिष्यन्ते। यथोक्तम्। त्रित्वे हुत्वाथ पञ्चत्वमिति। यद्वा सत्स्वपि वागादिषु प्राधान्यात्पञ्चानां मुक्तिर्यथा तथा पञ्चस्वपि त्रयाणामिति। स्तम्भा इति वक्तव्ये तद्व्याख्यानाय स्तंभनानीत्युक्तम्। अस्य देहस्य अपि शब्देनैवमन्यदपि व्याख्येयमिति समुच्चिनोति। अध्यात्मं मधुशब्दो मोक्षार्थः। सोमस्य मनसो वेनाङ्गतिमिति च॥ २॥

समाने। वैषम्य। हे अश्विनौ समाने वैषम्यहीने सुखदुःखवत्त्वलक्षणेन वैचित्र्येण रहिते किं तु केवलं सुखभाजने। अहन्नह्नि। विमुक्तिकाल इति यावत्। त्रिः सर्वदा। अवद्यगोहनौ दोषाच्छादकौ अखिलदोषनाशकौ। युवाम्। प्रसिद्धाश्विपक्षे समानमहर्यज्ञे प्रसिद्धम्। तत्राखिलक्रियाभ्रेषनाशकाविति व्याख्येयम्। अथ स्वभक्तानां युवयोर्भक्तानाम् अस्माकम्। यज्ञं त्रिस्त्रिवारम्। मधुना मधुत्वहेतुना हस्तेन मिमिक्षतं स्पृशतम्। हस्तस्पर्शेन शोधयतम्। चशब्दो वक्ष्यमाणसमुच्चये। किं च युवं युवामस्मभ्यम्। नो दोषाः रात्रौ उषसश्च उषसि च ततः परस्मिन्दिने च अहोरात्रम्। त्रिः सर्वदैव। वाजवतीर्युद्धवतीर्युद्धजिता

(ऋग्भाष्यटीका)

इषोन्नानि। यद्वा मोक्षगतानि सुखानि। तान्यपि ह्याध्यात्मिकयुद्धलब्धानि। पिन्वतं दानकर्मायम् अलं क्षरतम्॥ ३॥

त्रिर्वर्तिः। यद्वर्तनम्। हे अश्विना अश्विनौ। युवं युवाम्। यद्वर्तिः सर्वलोकेषु वर्तनम्। न केवलं सामान्यम्। किन्तु। यच्च त्रिःत्रिकालगंतत्प्रतियातं याथः। अतीतानागतवर्तमानं सकलं प्राणिनां कर्म प्रवर्तयितुं सर्वत्र सन्निहितौ स्थः। तत्सर्वं युवयोरेवेति यावत्। किञ्च अनुव्रते भक्ते जने विषये। त्रिःसर्वदा शिक्षतं शिक्षयथः। सुप्राव्ये सुष्टु रक्ष्ये सुभक्ते विषय इति यावत्। कथं भूते। त्रेधेव कालानुगते कालत्रयभाविनि कालसम्बन्धनिमित्तमेव त्रैविध्यं न तु वस्तुत इतीवशब्दः। त्रिःसर्वदा। सुशिक्षतम् अतिशयेन शिक्षयथः। एवं भूतौ युवामस्मे अस्मभ्यं नस्तु त्रिः सर्वदा नांद्यंनन्दतीति नन्दस्तस्य भावं सुखं च वहतं वहेतं प्रापयेतम्। पृक्षः पुष्टिं च। त्रिस्त्रिकालगां नित्यां पिन्वतं क्षरतम्। अक्षरेव अक्षराणीव वर्णवदेव। यथा वैदिकामन्त्राः सर्वमभिमतं ददति तथैव॥ ४॥

त्रिर्नो रयिम्। वित्तं च। हे अश्विनौ युवां नोस्मभ्यम्। त्रिर्नित्यम्। रयिं वित्तं च। वहतं प्रापयतम्। देवताता देवततिं च। त्रिर्नित्यं वहतम्। देवाः सर्वदा यथाऽस्मत्पूजास्वीकारायागच्छेयुस्तथा कुरुतम्। सुभग एव सौभगस्तस्य भावः सौभगत्वं सौभाग्यम्। नोस्मभ्यम्। त्रिः सदैवावतम्। श्रवांस्युत कीर्तिं च। नस्त्रिः सदैवावतम्। कथं भूतौ। सूरेः सूर्यस्य दुहिता पुत्री उषाः त्रिष्ठं कालत्रयेभवम्। वां रथं युष्मदीयं रथमारुहत्। तथाभूतौ। अध्यात्मं तु वां भगवतोर्युवयोः प्रसादात्। सूरेर्विदुषो गुरोर्दुहिता बुद्धिस्त्रिकाले भवं रथमारुहत्। भक्तदेहे ज्ञानोदयो भवतीति॥ ५॥

त्रिर्नो अश्विना। पूर्वार्धं संक्षेपतो व्याख्याति। सर्वेष्विति। अद्भ्य इत्येतत् दिव्यानि पार्थिवानीत्येतत्तुल्यं पुनस्त्रिशब्दश्रवणादिति प्रतीतिनिरासायोक्तम्। अद्भ्यः सुखायैवेति। यथा चैवं योजना। हे अश्विनौ अद्भ्यः उ सुखायैव। नोस्मभ्यम्। त्रिः सर्वेष्वपि कालेषु। दिव्यानि दिवि भवानि। भेषजा भेषजानि दत्तम्। त्रिःपार्थिवानि पृथिव्यां भवानि च दत्तम्। तथा त्रिरंतरिक्ष्याण्यपि दत्तमिति शेषः। अपां लोकत्वाभावात् ये देवा स इत्यत्रेवापुच्छब्दस्यांतरिक्षलोकोपलक्षणत्वे तु न विरोधः। तत्र पञ्चमीबहुवचनमेतत्। उत्तरार्धव्याख्यानं सुखमिति। अथान्यच्च। न केवलं सुखसाधनानि भेषजानि। किं तु शुभस्पती पारस्करादित्वात्सुट्। युवां शयोः कंशंभ्यामिति मत्वर्थे युस्। भेषजजनितैहिकसुखवतः। चतुर्थ्यर्थे षष्ठी। सूनवे युष्मत्पुत्रकस्य। ममकाय स्वल्पस्य ममैव। अस्मदश्चतुर्थ्या ममादेशः छान्दसः। अल्पार्थे चाकजित्युक्तं भवति। ओमानम् ओतामानेष्वित्युक्तप्रकारेणानुभवगोचरम्। त्रिधातु त्रिष्वपि कालेषु धीयत इति नित्यम्। शर्म सुखं मुक्तिगतम्। वहतं प्रापयतं दत्तम्। अथ सुतस्येत्यादिना प्रकारान्तरेण व्याचष्टे। अथवेति सम्बन्धः। पूर्वं ममकाय सूनव इति सामानाधिकरण्येन व्याख्यातम्। इदानीं तु वैयधिकरण्येनेति विशेषः। ममकाय मामकाय। अणि वृद्ध्यभावः छान्दसः॥ ६, ४॥

## मन्त्रार्थमञ्जरी

अथ 'त्रिश्चिंन्नो' इति द्वादशर्चं वर्गद्वयात्मकमाश्विनं चतुस्त्रिंशं सूक्तम्। (तत्र नवमीद्वादश्यौ त्रिष्टुभौ, शिष्टा जगत्यः) (हे) नवेदसा, नवेदसौ, सर्वतोऽधिकज्ञानौ, न विद्यतेऽन्यो (वेदाः) वेदिता याभ्यामिति विग्रहः, नञ्पूर्वाद्विदेः असुन्, 'नभ्राण्नपान्नवेदा' इति नलोपाभावः। अश्विना, अश्विनौ। अद्य (आरभ्यैव च) इति शेषः। त्रिः चित्, त्रिरपि, दिवा निशायां संध्ययोश्च, सर्वदेति यावत्। (युवाम्) नः, अस्माकम्। (एव) भवतम्, सर्वतोऽप्यस्मासु कृपां कुरुतम्। कथं भूतौ ? (ययोः) वाम्, युवयोः। (तु) यामः, यात्यनेनेति व्युत्पत्त्या मार्गः। विभुः, व्यापी, अशेषदेशेषु गतेः। रातिः उत, दानं च। (विक्षुः), विभु, अशेषदा तृत्वात् इति भावः। किं च, युवोः, युवयोः। यन्त्रम्, यम्यते नियम्यतेऽनेनेति यन्त्रं नियमनम्। वाससः। हिम्येव, तन्तुविक्षेपणी तुरी यथा– इत्यर्थः, किमुक्तं भवति ? तुरी यथा वाससोऽतिप्रयत्नेन विना निष्पादिका तद्वदयत्नेन सर्वबुद्धिप्रेरकौ। (युवाम्) मनीषिभिः, ज्ञानिभिः, देवैः सह। (एव) अभ्यायंसेन्या, अस्मान्प्रत्यागन्तुं सेनायुक्तौ। भवतम्। हि। अभिपूर्वादयतेः घञ्प्रत्ययेऽभ्यायोऽभ्यागमनम्, (सेन्या) सेन्यौ सेनायुक्तौ, सेनाशब्दात् 'युक्तः' इत्यर्थे यत्, अवर्णलोपः, अभ्यायायाभ्यागमनाय स्वसेनायुक्तौ– इति शब्दावयवार्थः, 'अभ्यायम्' इति च्छान्दसो नुम्॥ १॥

(हे) (अश्विना) अश्विनौ। भवदीये– मधुवाहने रथे, मधु सोमं प्रत्यूह्येते भवन्तौ येन तस्मिन्रथे। त्रयः पवयः, वज्रखड्गशररूपत्रीण्यायुधानि, वज्रसाहचर्यात्खड्गशरयोरपि पवित्वं ज्ञेयम्। त्रयः। स्कम्भासः, स्कम्भाः, स्तम्भाः, कुन्तादयस्त्रयो वेणवः। (च) स्कभितासः, स्कम्भिताः, स्तम्भिताः, स्थापिताः सन्ति। ते विश्वे इत्, सर्व एव। सोमस्य। वेनाम्, 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इत्यतो नप्रत्ययः, खादनं च पानम्, पानक्रियां वा रसं वा। अनु विदुः पव्यादिशब्दितवज्रादीनां चेतनाधिष्ठितत्वात् 'विदुः' इति युज्यते। एवं भूतेन रथेन युवाम्– आरभे, सम्पदादित्वाद्भावे क्विप्, प्राणिनां यज्ञादिकर्मारम्भार्थम्, कर्माणि कारयितुमिति यावत्, यद्वा– कृतकर्मणां स्वर्गादिलोकप्राप्त्यारम्भार्थम्। नक्तम्, निशायाम्। (त्रिः) दिवा (च) (त्रिः) (अनु) याथः, अनुगच्छथः। (उ) बहिष्ठविष्णुरूपविषये तु (हे) (अश्विना) अश्विनौ। भवदीये– मधुवाहने, सुखकरवाहनरूपे। (रथे) अधिदेवरथे। त्रयः पवयः, 'चक्रम्, गदा, शरः' इति त्रीण्यायुधानि। त्रयः स्कम्भासः, त्रयो वेणवः, प्रसिद्धाः। (शिष्टं समम्) अध्यात्मं तु– मधुवाहने, मधु मोक्षं प्रत्युह्यत इति मोक्षसाधने। रथे, भक्तदेहाख्ये। त्रयः पवयः, त्रयो वेदाः। त्रयः

(मन्त्रार्थमञ्जरी)

स्कम्भासः, प्राणानां पञ्चत्वे प्राधान्यात्रयः प्राणाः– इत्यर्थः । सोमस्य वेनाम्, मनसो गतिम् । अन्यत्समानम् ॥ २ ॥

(हे) (अश्विना) अश्विनौ । समाने, सुखदुःखवता लक्षणेन वैचित्र्यहीने, केवलं सुखभाजने । अहन्, अह्नि, विमुक्तिकाल इति यावत् । त्रिः, सर्वदा । (अवद्यगोहना) अवद्यगोहनौ, दोषाच्छादकौ, अखिलदोषनाशकौ । (युवाम्) प्रसिद्धाश्विपक्षे समाने अहन्, यज्ञे । (त्रिः । अवद्यगोहना) अखिलक्रियादोषनाशकौ इति व्याख्येयम् । अद्य (स्वभक्तानाम्) युवयोर्भक्तानाम्, अस्माकम् । यज्ञम् । त्रिः, त्रिवारम् । मधुना, मधुत्वहेतुना हस्तेन । मिमिक्षतम्, स्पृशतम्, हस्तस्पर्शेन । शोधयतम् । किं च, युवम्, युवाम् । अस्मभ्यम् । दोषाः रात्रौ । उषसः च, उषसि च, ततः परस्मिन्दिने च, अहोरात्रम् । त्रिः, सर्वदा । (एव) वाजवतीः, युद्धजिताः । इषः, अन्नानि, मोक्षगतानि सुखानि वा, तान्यपि ह्याध्यात्मिकयुद्धलब्धानि । पिन्वतम्, पिधातुर्दर्शने वर्तते, श्नुविकरणं शब्विकरणं चेति द्विविकरणम्, लोट्, अलं क्षरतम्– इत्यर्थः ॥ ३ ॥

(हे) अश्विनौ, अश्विना । (युवां यत्) वर्तिः, सर्वलोकेषु वर्तनम् । न केवलं सामान्यम्, किं तु– (यच्च) (त्रिः) त्रिकालगम् । (तत्प्रति) यातम्, याथः, अतीतानागतवर्तमानं सर्वप्राणिनां कर्म प्रवर्तयितुं सर्वत्र संनिहितौ स्थः, तत्सर्वं युवयोरेवेति यावत् । किं च, अनुव्रते, भक्ते । जने, विषये । त्रिः, सर्वदा । (शिक्षतम्), शिक्षयथः । सुप्राव्ये, सुष्ठु रक्ष्ये, सुभक्ते विषय इति यावत् । कथंभूते ? 'त्रेधेव, कालानुगते, कालत्रयभाविनि 'कालसम्बन्धिनिमित्तमेव त्रैविध्यम्, न तु वस्तुतः' इतीवशब्दः । त्रिः सर्वदा (शिक्षतम्) सुशिक्षतम्, अतिशयेन शिक्षयथः । एवं भूतौ (युवम्), युवाम् । अस्मे, अस्मभ्यम्, नस्तु । त्रिः, सदा । नान्द्यम्, नन्दतीति नन्दः, तस्य भावं च सुखम् । वहतम्, प्रापयतम् । पृक्षः, पुष्टिम् । (च) त्रिः, त्रिकालगाम् । नित्यम् । पिन्वतम्, क्षरतम् । अक्षरेव, अक्षराणीव, वेदवर्णवदेव, यथा वैदिका मन्त्राः सर्वमभिमतं ददति, तथैव इति ॥ ४ ॥

(हे) (अश्विना) अश्विनौ । (युवम्) युवाम् । नः, अस्मभ्यम् । त्रिः, नित्यम् रयिम्, वित्तम् । वहतम्, प्रापयतम् । देवताता, देवततिम् । (च) त्रिः, नित्यम् । (वहतम्) देवाः सदा यथास्मत्पूजास्वीकारायागच्छेयुस्तथा कुरुतम् । उत, अन्यच्च । धियः, बुद्धीः शुद्धां धियम् । (च) त्रिः, नित्यम् (एव) । अवतम्, रक्षतम् । सुभग एव सौभगः स्वार्थिकोऽण्, तस्य भावः– सौभगत्वम्, सौभाग्यम् । (नः) अस्मभ्यम् । त्रिः, सदा । (एव) (अवतम्) श्रवांसि उत, कीर्तिं च । नः । त्रिः, सदा । (एव) (अवतम्) कथं भूतौ ? सूरे, (सूरस्य) सूर्यस्य । दुहिता, पुत्री, उषाः ।

(मन्त्रार्थमञ्जरी)

त्रिष्ठम्, कालत्रये भवम्। वां रथं, युष्मदीयं रथम्। आ रुहत्। तादृशौ– इत्यर्थः। अध्यात्मं तु– वाम्, भगवतोर्युवयोः। (प्रसादात्) (सूरे) सूरेः, विदुषो गुरोः। दुहिता, बुद्धिः। (त्रिष्ठम्) त्रिकाले भवम्। रथम् आरुहत्, भक्तदेहे ज्ञानोदयोऽभवत् इति॥ ५॥

(हे) (अश्विना) अश्विनौ। अद्भ्यः, सुखाय। (उ) एव। नः, अस्मभ्यम्। त्रिः, सर्वेष्वपि कालेषु। दिव्यानि, दिवि भवानि। भेषजा, भेषजानि। (दत्तम्) त्रिः। पार्थिवानि, पृथिव्यां भवानि (च) दत्तम्। तथा, त्रिः आन्तरिक्षाणि च (दत्तम्) इति शेषः। न केवलं सुखसाधनानि भेषजानि, किं तु (शुभ + पती) = शुभस्पती, पारस्करादित्वात्सुट्, (अध्यापकास्तु 'शुभः। पती इति' इति पदद्वयं वदन्ति) (युवाम्) शंयोः, 'कंशंभ्यां बभयुस्तितुतयसः' इति मत्वर्थे युस्, भेषजजनितैहिक सुखवतः, चतुर्थ्यर्थे षष्ठीयम्। सूनवे, युष्मत्पुत्राय। ममकाय, स्वल्पाय मह्यम्, अस्मदश्चतुर्थ्यां ममादेशश्च च्छान्दसः, अल्पार्थे चाकच्। यद्वा युष्मत्पुत्राय सूनवे, मह्यम्। ममकाय, मामकाय, मदीयाय इत्यर्थः, अणि वृद्ध्यभावश्छान्दसः। ओमानम्, 'ओता मानेषु' (ऋ० भा०) इत्युक्तप्रकारेणानुभवगोचरम्। त्रिधातु, त्रिकालेषु धीयत इति नित्यम्। शर्म, सुखम्, मुक्तिगतम्, वहतम्, प्रापयतम्, दत्तम्॥ ६॥ इति चतुर्थो वर्गः॥ ४॥

## रूपावतारः

त्रिश्चित्॥ ननु 'न लोपो नञः' (६।३।७३) इति नलोपेन भाव्यमित्यत आह। न भ्राण्नपाद्.... (६।३।७५) इति। यन्त्रं नियमनमिति। नियमनसाधनमित्यर्थः॥ १॥

त्रयः॥ प्रकारान्तरेणायुधत्रयस्य पविशब्दार्थत्वमाह। अत्र वज्र इतीति। ननु त्रिवेणव इत्यत्र त्रयो वेणवः समाहृता इति। विगृह्य 'तद्धितार्थोत्तरपदसमाहारे च' (२-१-५२) इति समासे 'संख्यापूर्वो द्विगुः' (२-१-५१) इति द्विगुसंज्ञायां 'द्विगुरेकवचनम्' (२-४-१) इत्येकवद्भावे 'स नपुंसकम्' (२-४-१७) इति नपुंसकत्वे च त्रिवेणु इति भाव्यं त्रिवेणव इति कथमित्यत आह। त्रयश्चत इति। न प्रत्यय इति। वी धातोर्नप्रत्यये गुणे टापि च वेनामिति रूपम्। आरभ इति शब्दः भकारान्तप्रातिपदिकात् चतुर्थ्येकवचने निष्पन्न इति भावेनाह। संपदादीति॥ २॥

समाने॥ दोषा इति। विभक्तिप्रतिरूपकमव्ययं दोषेति अव्ययपर्याय इति भावेनाह दोषा रात्राविति॥ ३॥

**(रूपावतारः)**

त्रिर्वर्तिः ।। शिक्षतम् शिक्षयथ इति । लोडर्थासंभवात् लटा व्याख्यातमिति बोध्यम् । धातोश्चुरादित्वात् ण्यन्तप्रयोगः ।। ४ ।।

त्रिर्नो रयिम् ।। सूरेः सूर्यस्येति । सूरिशब्दः सूर्यशब्दपर्यायः । तस्य षष्ठ्यैकवचने गुणे षष्ठ्याः लुकि सूरे इति रूपम् ।। ५ ।।

त्रिर्नो अश्विना ।। शुभस्पती इति । षष्ठ्यैकवचनान्तस्य भकारान्तस्य शुभ्शब्दस्य व्याख्यानं शुभस्येति । इतःपरं टीकायां श्रूयमाणं पारस्करादित्वात्सुट् इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । शुभःपती इत्यस्य पदद्वयत्वेन 'षष्ठ्याः पति.....' इत्यनेन विसर्गस्य सकारस्य विहितत्वात् सुडागमाभिधानायोगात् । ननु 'तवममौ ङसि' (७।२।९६) इति षष्ठ्यैकवचने ममादेशविधानात् कथं चतुर्थ्येकवचने ममादेश इत्यत आह । अस्मद इति । ननु अस्मच्छब्दादपत्यार्थे अणि ममकादेशे आदिवृद्धौ मामकायेति भवेत् ममकायेति कथमित्यत आह । अणीति ।। ६ ।। ४ ।।

## पदार्थप्रकाशिका

त्रिश्चिन्नो अद्या भवतं नवेदसा ।। त्रिश्चिद्द्वादशाश्विनमित्यनुक्रमणिकां हृदि निधायाह द्वादशर्चमिदमाश्विनं सूक्तमिति । शेष इति । ऋचि शेषो भाष्ये पूरित इत्यर्थः । नन्वद्यैव भवतमित्येव प्रार्थनमस्तु आरभ्येति शेषपूरणं कस्मात्कर्तव्यमित्यत आह संकुचितेति । अद्य भवतमिति प्रार्थने सङ्कोचः प्रतीयते । अतोऽद्यारभ्येत्युक्तं एवं पुरुषाणामसङ्कुचितप्रार्थनं प्रसिद्धं सङ्कोचे कारणाभावादिति सूचयितुं स्मशब्द इत्यर्थः । सर्वतः सर्वापेक्षया । ताभ्यां अश्विभ्यां तन्नामकभगवद्रूपविशेषाभ्याम् । वेत्ता स्वपरगताशेषविशेषौ । विदेरसुन्निति । विदज्ञानेऽस्मादसुन्प्रत्यये उन् इत्यस्य लोपे गुणे च सति वेदस् इति प्रातिपदिकनिष्पत्तिः । पश्चात्स्वाद्युत्पत्तौ वेदसाविति भवति । यतोन्यो वेत्तानतावित्युदितौ नवेदसाविति भाष्यं अर्थ कथनपरमित्यभिप्रेत्य स्वयं विग्रहं दर्शयन् समासं च दर्शयति न विद्यत इति । वेदाः वेत्ता याभ्याम् अन्यः । विगृह्य विग्रहं कृत्वा समासः । न आवेदस्पदस्य समासः । नवेदस्पदस्यैवं विग्रहप्रदर्शनपूर्वकं अर्थ कथयित्वा तत्तात्पर्यार्थमाह सर्वतोऽपीति । ननु नवेदसावित्यत्र कथमत आह नभ्राडिति । नञः प्रकृतिभाव इति । नञो या प्रकृतिः स्वरूपं तस्य एवं भावः स्थितिर्नकारो न लुप्त इत्यर्थः । एवं च 'न भ्राण्नपान्नवेदनासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्येति' सूत्रेण नलोपाभावस्य निपातितत्वादत्र नवेदसाविति युक्तमिति भावः । एतद्व्याख्यानम् नवेदस्शब्दव्याख्यानम् । देवतान्तरे । प्रसिद्धाश्विनामके देवतान्तरे गौणमितीति । तथाच तदन्यत्र

(पदार्थप्रकाशिका)

हरेरन्यत्र । प्रसिद्धाश्विनोः यतस्तदन्यो वेत्तानेत्येतेनोक्तं सर्वतोप्यधिकज्ञानित्वरूपं नवेदस्-शब्दप्रवृत्तिनिमित्तं स्वावरसर्वापेक्षयाधिकज्ञानित्वाभिप्रायेण गौणममुख्यं व्याख्याय मुख्यार्थस्य बाधितत्वादिति भाष्यार्थो द्रष्टव्यः ।

यथासङ्ख्यं संबन्ध इति । यथेतरेषां मार्गोऽल्पदेशेष्वेव भवति न तथा युवयोर्मार्गः किन्तु अशेषेषु देशेषु गतेर्हेतोर्युवयोर्मार्गो व्यापी विभुः अशेषदातृत्वतोहेतोर्युवयोर्दानं च व्यापि विभ्विति यथासङ्ख्यं संबन्ध इत्यर्थः । विरुद्धार्थयोश्चैवशब्दयोरेकत्र संबन्धायोगादशेषदेशेष्ववगतेरिति संबन्धः कार्य इत्याह देशेष्विति । ततो म्यगिति । गत्यर्थात् हिधातोः कर्तरि म्यक्प्रत्यये हिम्येति रूपम् । कित्वाद्गुणाभावः । अन्यथा हेम्येति स्यादिति ध्येयम् । रूढोयमिति । तथाच योगरूढोऽयं शब्द इति भावः । दार्ष्टान्तिकं विवृणोतीति । तद्वदिति दार्ष्टान्तिकोक्तिः । बुद्धिप्रेरकाऽयत्नत इत्युक्त्या तद्विवरणं च सूचितमिति द्रष्टव्यम् । भाष्ये सुपांसुलुगित्यादिना प्रथमाद्विवचनस्य आकारादेश इत्याशयेनाह प्रेरका प्रेरकाविति । घञिति । अमिपूर्वकादय् धातोर्भावे घञ्प्रत्यये अकारं विहाय घकारञकारयोर्लोपे ञित्वादादिवृद्धौ अभ्यायेति रूपम् । ऋचि चतुर्थीसमास इत्याह अभ्यायायेति । अस्मान् अभि प्रति आयाय आगमनायेत्यर्थः । ननु तर्ह्यभ्याय सेन्यावित्येव स्यान्नत्वभ्यायं सेन्याविति मुमागमः । विधायकाभावादित्यत आह छान्दसोमुमिति । अभ्यायार्थेति । तथाच मध्यमपदलोपी समास इति भावः । एवं ऋक्पदं स्वयं प्रकारद्वयेन व्याख्याय तत्रार्थद्वयेपि भाष्यं सङ्गमयति । आयार्थसेनाविति । तस्यार्थमाह अस्मानिति । अस्मानिति योग्यतया संबन्धः । अभीत्यस्यार्थः प्रतीति । आयमित्यस्यार्थ आगन्तुमिति अयपयगताविति धातोः । सेन्यावित्यस्य स्वसेनोपेतौ भवतमिति ॥ १ ॥

त्रयः पवयो मधुवाहने रथे ॥ वज्रवाचीति । वज्रस्तु कुलिशः पविरिति तन्नामसु पाठादिति भावः । सादृश्यादिति । वधकारणत्वसादृश्यादन्यत्रापि खड्गाद्यायुधे पविशब्दो गौण्या वृत्या वर्तत इति भावः । आयुधान्येवेति । न तु वज्रमित्यर्थः । इत्येतत् इत्यादिकम् । अनुपपन्नतया प्रतीतमिति । जडानामायुधानां सोमरसज्ञातत्वस्यानुपपन्नत्वादित्यर्थः । वज्रसहचरितत्वादिति । छत्र्यच्छत्रि-समुदाये छत्रिसाहचर्याच्छत्रि शब्दवत् वज्रावज्रसमुदाये वज्रसाहचर्याद्वज्रशब्दोऽजहत्स्वार्थलक्षणया प्रवर्तत इति भावः । किमत्र सूचकमित्यत उक्तम् । अत्र वज्र इत्यादितो निर्देशादिति । पविशब्दगृहीतेष्वायुधेषु वक्तव्येषु सत्सु खड्गो वज्रः शर इत्यनुक्त्वा वज्रस्यादितो निर्देशादित्यर्थः । इत्यपीति । तथाच सादृश्यादायुधमात्रे प्रयुक्त इति गौणत्वोक्त्या न विरोध इति भावः । ननु त्रिवेणव

(पदार्थप्रकाशिका)

इति कथम्। संख्यापूर्वो द्विगुरिति द्विगुसंज्ञायां द्विगोरिति ङीषि द्विगुरेकवचनमिति सूत्रेण द्विगोरर्थः समाहारे एकवत् स्यादित्युक्तत्वेनैकवचने त्रयाणां वेणूनां समाहारस्त्रिवेणीति स्यात् पञ्चखट्वीतिवत्। तत्राह विशेषणसमास एवायमिति। विशेषणं विशेष्येण बहुलमिति सूत्रविहितः कर्मधारयसमास एवायं न द्विगुर्येन ङीषः प्राप्त्या रूपविकारः स्यादित्यर्थः। कुन्तादयस्त्रयो वेणव इति। कुन्तं भल्लमेकं ध्वजो द्वितीयो धनुस्तृतीयमित्येव कुन्तादयो वेणुविकारास्त्रयः पदार्थाः स्तम्भनामान इत्यर्थः। मध्वित्यनूद्य सोममिति व्याख्यातम्। प्रतीतिशेषोक्तिः। सोमपानार्थमागमनायेति यावत्। त्रयः पवयो वज्राद्याः। स्तम्भाश्च कुन्तादयः। अस्मान्नप्रत्यय इति। गत्यर्थाद्वीधातोर्नप्रत्यये नप्रत्ययस्य च आर्धधातुकत्वात्तस्मिन् परे सार्वधातुकार्धधातुकयोरिति गुणे वेनेति प्रातिपदिकसिद्धौ पश्चादाबन्तत्वे स्वाद्युत्पत्तौ च वेनामिति भवतीति भावः। पीयत इतीत्यनन्तरं व्युत्पत्या रसपानमिति शेषः।

एवंभूतेनेति। सोमरसपानवेतृपविस्कम्भाधिकरणीभूतेनेत्यर्थः। क्विबिति। तथाचाङ्पूर्वात् रमूधातोः क्विप् प्रत्यये तस्य चतुर्थ्यैकवचनम्। सा च चतुर्थी तादर्थ्ये इत्यभिप्रेत्याह यज्ञादिकर्मारम्भार्थमिति। आरम्भ इत्यस्यैवान्तरमाह यद्वेति। प्राप्त्यारम्भार्थम्। प्राप्ति लक्षणारम्भार्थम्। निशायां त्रिरिति। निशाप्रारम्भे तन्मध्ये तदन्ते चेति त्रिवारमित्यर्थः। एवं दिवा च त्रिरित्येतदपि व्याख्येयमित्याहुः। बहिष्ठ इति। आश्विनसूक्तवाच्ये अश्विनदेवतान्तर्गते विष्णौ विष्णुरूपे इत्यर्थः। यथोक्तं प्रथमाध्याये। पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि च। अग्न्यादिसूक्तवाच्यानीति। व्याख्यातं चैतत्। अग्न्यादिसूक्तवाच्यानि भगवद्रूपाणि द्विविधानि। अग्न्यादिदेवतातरगाणि पृथक् तदन्तर्गतानि च। सर्वाणि चाग्न्यादिना भवन्तीति। आयुधानीति। पविशब्दविवक्षितानीत्यर्थः। चक्रमितीति। तथाच चक्रं गदा शर इति वासुदेवस्य चायुधानि पविशब्दवाच्यानि स्युरिति भाष्यार्थो द्रष्टव्यः। यद्वा वासुदेवस्य स्वीयो रथः वासुदेवस्य ज्ञानिनां शरीरं वा रथ इत्यन्वयो द्रष्टव्यः। अध्यात्ममाहेति। पविशब्दार्थमाहेत्यर्थः। वेदा इतीति। तथाच त्रयो वेदाः अध्यात्मं पविशब्दवाच्यः स्युरिति भाष्यार्थो द्रष्टव्यः। वैष्णव इति। विष्णुसंबन्धी सैन्यसुग्रीवमेघपुष्पबलाहकाख्यलसद्धयचतुष्टयेकोषः प्रसिद्धः स एव ग्राह्य इत्यर्थः। बहिर्बहिष्ठे विष्णौ। स्तम्भाः प्रसिद्धा इति। पूर्वोक्ताः कुन्तादयस्त्रयः स्तम्भा प्रसिद्धा इत्यर्थः। ननु प्राणादीनां पञ्चानां मध्ये त्रयाणामेवाध्यात्मं स्तम्भत्वोक्तौ किं निमित्तमित्यत आह कस्याश्चिद्धारणायामिति। धर्मराजकृतायां धारणायामित्यर्थः। त्रित्वे हुत्वाथेति। त्रित्वे हुत्वाथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिरिति भागवतस्यायमर्थः। त्रित्वे पञ्चत्वं एकत्व इति धर्मिप्रधानो निर्देशः। तथाच मुनिर्मननशीलो धर्मः। अथ अनन्तरौ उदानसमानौ त्रित्वे त्रिषु प्राणापानव्यानेषु लीयेते इति हुत्वा ध्यात्वा तच्च

(पदार्थप्रकाशिका)

पञ्चत्वं तान् पञ्चापि प्राणान् एकत्वे एकस्मिन् मुख्ये मूलप्राणेऽजुहोदिति। यथोक्तं तात्पर्ये। उदान-समानौ तेषु त्रिषु। तांश्च मूलप्राण इति। त्रित्वे हुत्वाथ पञ्चत्वमित्यत्र पञ्चत्वं त्रित्वे हुत्वेत्यन्वयः। पञ्चानामपि त्रित्वं संपाद्येत्यर्थ इति व्याख्यानं तु भागवततात्पर्यसंप्रदायानभिज्ञैः कृतमित्युपेक्ष्यम्। एवं च द्वयोर्विलोपेनेत्यस्योदानसमानयोस्त्रिषु प्राणादिष्वन्तर्भावकरणेन प्राणापानव्यानास्त्रय एवोर्वरिता भवन्तीत्यर्थो द्रष्टव्यः। प्राधान्यात्पञ्चानामुक्तिर्यथेति। 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च' इत्यादौ ज्ञानसाधनत्वेन प्राधान्याच्छ्रोत्रादिपञ्चेन्द्रियाणामेवोक्तिर्यथेत्यर्थः। यथोक्तम्। हस्तादयस्तु स्थितेतो नैवमिति। तथेत्यनन्तरं प्राधान्यादित्यनुवर्तते। पञ्चसु प्राणादिषु। त्रयाणां प्राणापानव्यानानाम्। अत्रोदानसमानापेक्षया प्राणादित्रयाणां प्राधान्यं च तदुभयव्यापारापेक्षया एतेषां व्यापारबाहुल्याद्वा त्रित्वे हुत्वाथेत्युक्तरीत्या तदुभयकर्मकहोमाधिकरणत्वाद्वा द्रष्टव्यम्। न तु स्वरूपापेक्षया पञ्चानामपि मुख्यप्राणरूपाणां समत्वेन गुणप्रधानभावाभावादित्यवधेयम्।

तद्व्याख्यानाय स्तम्भशब्दव्याख्यानाय। स्तम्भनानीत्यस्य शरीरधारकाणीत्यर्थो द्रष्टव्यः। अस्य देहस्येति। अध्यात्मरथत्वेनोक्तज्ञानिशरीरस्येत्यर्थः। अन्यदपि। मधुशब्दादिकम् व्याख्येयम्। अध्यात्मपक्ष इति शेषः॥ तदेव दर्शयति अध्यात्ममित्यादिना। गतिम् भगवद्विषये गतिप्रकारम्। बहिर्व्याख्यानापेक्षया इति वेत्युक्तम्। तथाच हे अश्विनौ भगवद्रूपविशेषौ भवदीये मधुवाहने मधुमोक्षं प्रति भक्तानां तद्दानायेति यावत्। उह्येते भवन्तौ येन तस्मिन् रथे ज्ञानिशरीराख्ये त्रयः पवयो वेदाः सन्ति तदभिमानिनो देवाः सन्निहिताः सन्तीति यावत्। त्रयः स्कंभासः शरीरस्तंभनहेतुत्वात्स्तंभनामकाः प्राणाद्यास्त्रयः स्कंभितासः स्कंभिताः युवाभ्यां स्थापिताः सन्ति ते विश्व इत् वेदाभिमानिदेवाः प्राणाद्याः पविस्कंभशब्दवाच्याः सर्व एव। सोमस्य मनसो वेनां भगवद्विषये गतिप्रकारमनुविदुः। एवंभूतेन मनोगतिवेतृपविःस्कंभशब्दवाच्यवेदप्राणाधिकरणीभूतेन ज्ञानिशरीराख्यरथेन युवां आरभे ज्ञानयज्ञादिकर्मारम्भार्थं ज्ञानयज्ञादिकं कारयितुमिति यावत्॥ यद्वा लोकसिध्यर्थं कृतज्ञानयज्ञादिकर्माणां मोक्षाख्यलोकप्राप्तिलक्षणारम्भार्थं नत्वा निशायां त्रिः दिवा च त्रिरेवानुयाथः सर्वदा तत्र सन्निहितौ स्थ इत्यध्यात्मपक्षे ऋगर्थो द्रष्टव्यः॥२॥

समाने अहन् त्रिरवद्य गोहना॥ दोषाच्छादकानित्युक्त्या विमुक्तिकालेपि दोषा अच्छन्नाः सन्तीति प्रतीयतेऽत आह अखिलेति॥ समानमहर्यज्ञे प्रसिद्धमिति। अग्निष्टोमेत्यग्निष्टोमोचथ्यषोडशीवाजपेयातिरात्रात्पोर्यामाख्यसप्तसंस्थोपेतो ज्योतिष्टोमाख्यो यज्ञः इत्याहुर्निर्वर्त्यः प्रसिद्धोस्ति तत्र द्वितीयं चतुर्थं षष्ठं चाहः समानमहरित्युच्यते आद्यं तृतीयं पञ्चमं

(पदार्थप्रकाशिका)

सप्तमं चाहो विषममहरिति याज्ञिकप्रसिद्धेस्तत्र समाने अह्नि क्रियमाणा या अखिला क्रिया तस्याः दोषनाशकावित्यर्थः। अखिला ये क्रियादोषास्तेषां नाशकाविति वा। क्रियाभ्रेषेति पाठे भ्रेषशब्दो दोषपर एव। यद्वा लोपपरस्तथाच क्रियालोपप्रयुक्तदोषनाशकावित्यर्थो द्रष्टव्यः। यज्ञमिति। यद्यपि यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागस्तथापि तस्या हस्तेन स्पर्शासंभवात्परित्यज्यमानं हविरादिद्रव्यमिह यज्ञशब्दार्थो द्रष्टव्यः। त्रिवारमिति। प्रातरादिसवनानां त्रित्वादिति भावः। मधुत्वहेतुनेति। स्वादुरसोपेतत्वेन निमित्तेनेत्यर्थः। तथाहि तद्धस्तस्पर्शेन हविषः स्वादुरसवत्वं संपद्यत इति भावः। शोधयतमिति। पवित्रीकुरुतमित्यर्थः। वक्ष्यमाणेति। त्रिर्वाजवतीरित्युत्तरार्धेन वक्ष्यमाणान्नदानसमुच्चये चशब्द इत्यर्थः। अहोरात्रमिति भाष्यं संयोजयितुं दोषा उषसश्चेत्येतत् स्वयं व्याचष्टे। दोषा इत्यादिना। उषःकालमात्रप्रतीतिवारणायोषसीत्यस्य स्वयमभिप्रायमाह ततः परस्मिन्दिने चेति। ततः रात्र्यपेक्षया परस्मिन् उत्तरस्मिन् काले इत्यर्थः। तथाच रात्र्यपेक्षयोत्तरकाल उषःशब्दार्थः दिन इति तदभिप्रायकथनम्। अन्हीत्यर्थः। स्वयं व्याख्यातार्थे भाष्यं संयोजयति अहोरात्रमिति। अन्नानि चक्षतमित्यन्वयः। अध्यात्ममिष इत्यस्यार्थमाह यद्वेति।

ननु वाजवतीरित्युक्तयुद्धजितत्वं कथं मोक्षगतसुखानामित्यत आह तान्यपि हीति ॥ आध्यात्मिकयुद्धेति। ज्ञानाज्ञानकर्तृकं यदाध्यात्मिकं युद्धं तत्र ज्ञानेनाज्ञाने नाशिते सति मोक्षसुखानि लभ्यन्ते इत्यर्थः। दानकर्माऽयमिति। दानार्थक इत्यर्थः॥ ३॥

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने ॥ सर्वलोकेषु यद्वर्तनमिति ॥ सकलप्राणिषु यत् वर्तनं कर्म। सकलप्राणिभिः क्रियमाणं कर्मेति यावदित्यर्थः। न केवलं सामान्यमिति। कालत्रयासंबन्धिवर्तमान सामान्यमेव प्रवर्तयितुं यथा इत्येव न किन्तु तदेव वर्तनं त्रिरिति त्रिकालगत्वेन विशेष्य तत्प्रवर्तयितुमपि याथ इत्युच्यत इत्यर्थः। यच्च तत्। वर्तनम्। अभिप्रायमाह अतीतेत्यादिना। वर्तनं प्रति यातमित्युक्त्या वर्तनस्य प्राधान्यमश्विनोस्त्वप्राधान्यं प्रतीयते ततश्च तयोर्न देवतात्वमित्याशङ्कापरिहाराय युवयोरेव सर्वमिति तात्पर्यकथनपरं भाष्यं संयोजयति। तत्सर्वमिति। सकलप्राणिकर्मजातमित्यर्थः। युवयोरिति। प्रवर्त्यतया युष्मत्संबन्धीत्यर्थः। ततश्च प्राधान्यप्राप्त्या तयोर्देवतात्वं युक्तमिति भावः। शिक्षयथ इति। गुर्वादिद्वारासन्मार्गमिति शेषः। अनुव्रत इति उत्तमभक्तातिरिक्तभक्तपरम्। सुप्राव्य इत्यत्तमभक्तपरम्। सुप्रेति विशेषणादिति द्रष्टव्यम्। त्रेधेवेति। त्रैविध्योपेते सुभक्त इत्यर्थः। ननु कथमेकस्य सुभक्तस्य त्रैविध्यमित्यतस्त्रेधेत्यस्य व्याख्यानपरं भाष्यमनूद्य व्याचष्टे कालानुगत इत्यादिना। अनेन कालत्रयसंबन्धित्वेन त्रैविध्यमित्युक्तं भवति।

(पदार्थप्रकाशिका)

ननु एकस्यैवोत्तमभक्तस्य त्रित्वं कालत्रयोपाधिकमेव कुतः वास्तवमेव त्रैविध्यं किं न स्यादित्याशङ्कामिवशब्दाभिप्रायकथनेन परिहरति कालसंबन्धेति । कालत्रयसंबन्धेत्यर्थः । सुशिक्षतमिति । यद्यपि सुप्राव्य इत्येकमेवपदं वैदिकाः पठन्ति । तदनुसारेणैव सुप्राव्ये सुष्ठु रक्ष्य इति व्याख्यातं तथापि भिन्नपदत्वमप्यत्र संभवतीत्याशयेन सु इत्युपसर्गस्य क्रियासंबन्ध उक्त इत्यवधेयम्। एवंभूताविति । भक्तशिक्षकावित्यर्थः । अस्म इति ऋक्पदमनूद्यास्मभ्यमिति स्वयं व्याख्याय तत्र भाष्यं संयोजयति । नस्त्विति । अस्माकं त्वित्यर्थः । नन्दतीति । सुखवान् भवतीत्यर्थः । त्रिरित्यनूद्य त्रिकालगामिति स्वयं व्याख्याय पिन्वतमिति संयोजितमिति ज्ञातव्यम् । सर्वमभिमतम् सुखादिकम्। तथैव युवानं पिन्वतमित्यन्वयः ।। ४ ।।

त्रिर्नो रयिं वहतमश्विना युवम् ।। स्वाभाविकीति । स्वाभाविकत्वेन सदा विद्यमानाया बुद्धेः रक्षणप्रार्थनाया अयोगादिति भावः । शुभ्रामित्यादि । धीमात्रस्य सदा सत्वेपि बुद्धायास्तस्याः सर्वदाऽभावेन तां दत्वाऽवतमिति प्रार्थना युक्तैवेति भावः । ननु सुभगस्य भावः । सौभगमिति वा सुभगत्वमिति वा वक्तव्यं सौभाग्यमिति तु कथमुक्तं भाष्य इत्यत आह सुभग एवेति । स्वार्थे अण् प्रत्यय इति भावः । भवम् विद्यमानम् । त्रिष्ठमिति पादस्याश्विनत्वासिध्यार्थमाह तथाभूताविति। सूर्यपुत्र्युषारोहाधिकरणीभूतरथोपेतावित्यर्थः । उषआख्यस्त्रिया सहैकस्मिन् रथे संस्थिताविति यावत् । सूर्यकन्यापतिभूताविति तात्पर्यम् । वामित्यनूद्य भगवतोरित्यादिव्याख्यानम् । गुरो र्दुर्हितेति । गुरूपदेशेन हि शिष्यबुद्धिर्जायतेऽतो गुरोर्दुहिता बुद्धिरित्यर्थः । रथम् भक्तदेहाख्यम्। अभिप्रायमाह भक्तदेह इति । स्वप्रसादेन गुरूपदेशद्वारा भक्तदेहे ज्ञानोदयसम्पादकावश्विनौ भगवद्रूपविशेषाववतमित्यध्यात्मं तात्पर्यार्थः ।। ५ ।।

त्रिर्नो अश्विना दिव्यानि भेषजा । एतत्तुल्यमिति । दिव्यानि भेषजा त्रिः पार्थिवानीत्यत्र द्युपृथिवीशब्दयोर्यथा लोकपरत्वं तथाऽद्भ्य इत्यत्राप्यप्शब्दस्यान्तरिक्षलोकपरत्वमेवाङ्गी-कर्तव्यमित्येवं अद्भ्य इत्येतद्व्याख्यानं दिव्यानि पार्थिवानीत्येतद्व्याख्यानेन तुल्यमित्यर्थः । कुत इत्यत आह पुनरिति । त्रिर्नो दिव्यानि त्रिः पार्थिवानीतिवत् त्रिरुदत्तमद्भ्य इत्यत्रापि त्रिरिति श्रुतत्वेन प्रायपाठाल्लोकपरतैवाप्शब्दस्य वाच्या अन्यथा पुनस्त्रिरित्यस्य वैयर्थ्यापत्तेरित्यर्थः । अद्भ्य इत्येतच्चतुर्थीबहुवचनमित्यभिप्रेत्य सुखायेत्युक्तम् । उ इत्यस्यार्थ एवेति । अप् शब्दस्य सुखनामसु पाठादिति भावः । तर्हि त्रिरुदत्तमित्यत्र त्रिरित्युर्वरितमत आह तथा त्रिरित्यादि । नन्वन्तरिक्ष्याण्यपि दत्तमिति शेषः कुतः क्रियते अप् शब्दस्यैवान्तरिक्षलोकपरत्वमङ्गीकृत्याद्भ्य- इत्यस्यैवान्तरि-

(पदार्थप्रकाशिका)

क्षाण्यपि दत्तमिति व्याख्यानोपपत्तेरित्यत आह अपामिति । अप् शब्दस्यान्तरिक्षलोकवाचकत्वाभावादित्यर्थः ।

नन्वथाप्यप्शब्दस्यान्तरिक्षवाचकत्वाभावेपि लक्षणया तत्परत्वमस्तु । तथाच नोक्तरीत्या शेषः कर्तव्यः । पुनस्त्रिरित्येतच्च स्वरसमित्यतोऽस्त्वित्याह अप् शब्दस्येति । अप् शब्दस्यान्तरिक्षोपलक्षकत्त्वं कुत्राप्यदृष्टमित्यतो वैदिकप्रयोगं दर्शयितुमुक्तम् ये देवास इत्यत्रेवेति । ये देवासो दिव्येकादशस्थ पृथिव्यामध्येकादशस्थ अप्सुषदो महिनैकादशस्थ ते देवासो यज्ञमिमं जुषध्वमिति मन्त्रस्यायमर्थः । ये एकादश देवा दिविस्थ दिवि तिष्ठन्तीति ये चैकादशदेवाः पृथिव्यामधि अधिकृत्य स्थ तिष्ठन्ति ये चाप्सुषदः लोकप्रकरणात् अप्सु लक्षणायान्तरिक्षलोके सीदन्तीत्यप्सुषदः एकादशदेवास्ते सर्वेपि देवासो देवा इमं यज्ञं जुषध्वं प्रीत्या सेवध्वमिति । एवं चात्र यथाप्शब्दस्यान्तरिक्षलोकोपलक्षकत्वं दृष्टं तद्वदित्यर्थः । तत्रेति । अप्शब्दस्यान्तरिक्षलोकोपलक्षकत्वपक्ष इत्यर्थः । पञ्चमीबहुवचनमेतदिति । प्रदेशबाहुल्याद्बहुवचनम् । तथा चाद्भ्यः सकाशात् अन्तरिक्षलोकादिति यावत् । जातानि भेषजानि त्रिदत्तमिति योजना द्रष्टव्या । अश्विनोर्भिषकत्वाद्भेषजदानप्रार्थनमित्यवगन्तव्यम् । सुखसाधनानीति । अद्भ्य उ सुखायैव भेषजानि दत्तमित्युक्तत्वादिति भावः । ननु शुभपती इति स्याच्छुभस्पती इति कथमित्यत आह पारस्करादित्वादिति । पारस्करादिभ्यश्चेति सूत्रेण पारस्करादिगणेभ्यः सुडागमविधानात्पारस्करो वृक्ष इति प्रयोगदर्शनात् अस्यापि तद्गणस्थत्वेन शुभशब्दात्सुडागमे उट् इत्यस्य लोपे शुभस् पती शुभस्पती इति युक्तमित्यर्थः । कंशंभ्यामिति । कंशंभ्यां बभयुस्तितुयसः कंशमिति मकारान्तौ शब्दौ । तथाच कंशमिति पदाभ्यां मत्वर्थे ब भ युस् ति तु त यस् इत्यन्तसप्तप्रत्ययाः स्युरिति सूत्रार्थः । उदाहरणानि तु । कंबः कंभः कंयुः कंतिः कंतुः कंतः कंयः शंबः शंभः शंयुः शंतिः शंतुः शंतः शंय इति । एवं च मकारान्तात् शंशब्दात् मत्वर्थे युस् प्रत्यये रुत्वे विसर्गेच शंयुरिति रूपमित्यर्थः । मत्वर्थं दर्शयति भेषजजनितसुखवत इति ।

ननु शंयोः सुखवतः शर्म वहतमिति सुखदानप्रार्थना न युक्ता । शंयोरित्यनेनैव सुखवत्वस्य सिद्धत्वेन प्रार्थनाऽयोगादित्यत उक्तं ऐहिकेति । तथाच शंयोरित्यनेनैहिकसुखवत्वमुक्तं, त्रिधातु शर्म वहतमित्यनेन तु पारत्रिकं मौक्तसुखं प्रार्थ्यत इति न दोष इति भावः । ननु कर्मणा यमभिप्रैति स सम्प्रदानमिति सम्प्रदानसंज्ञायां सम्प्रदाने चतुर्थी स्यात् । तथाच शंयवे दत्तमिति स्यात् शंयोर्दत्तमिति कथमुक्तमित्यत आह चतुर्थ्यर्थ इति । शंयोरिति षष्ठ्यनुसारेण सूनवे ममकायेति चतुर्थ्यावपि षष्ठ्यर्थ

(पदार्थप्रकाशिका)

इति भावेन भाष्यं प्रवृत्तमित्याशयेनाह सूनव इत्यादि। ननु तव ममासीति अस्मदः षष्ठ्येकवचनस्यैव ममादेशो विहितो न चतुर्थ्याः अतो मह्यं मे इत्येव चतुर्थीप्रयोगेन भाव्यं न तु ममकायेति तत्राह अस्मदश्चतुर्थ्या ममादेशश्छान्दस इति। अल्पार्थे चेति। तथाच ममशब्दादल्पार्थेऽकच्प्रत्यये चकारलोपे यस्येति चेति भसंज्ञकाकारलोपे ममकेति प्रातिपदिकसिद्धिः। पश्चात् स्वाद्युत्पत्तौ ममकायेति भवतीति द्रष्टव्यम्। ओतामानेष्वित्युक्तप्रकारेणेति। ओमासश्चर्षणीधृत इत्यत्र ओतामानेषु मावैषु पोता ओमा इतीरिता इत्युक्तप्रकारेणेत्यर्थः। मानुषु ज्ञानेषु विषयतया ओता इत्यपि तद्भाष्यार्थ इत्यभिप्रेत्येदमुक्तमित्यवगन्तव्यम्। इति नित्यमिति। इति व्युत्पत्या नित्यमित्यर्थः। व्यवहितत्वादाह अथवेति सम्बन्ध इति। सामानाधिकरण्येनेति। ममकाय सूनव इत्येतत् अर्हत्वसूनत्वयोः सामानाधिकरण्यमङ्गीकृत्य ममैव युष्मत्पुत्रकस्येति व्याख्यातमित्यर्थः। वैय्यधिकरण्येनेति। ममकाय मामकाय मदीयस्य सूनवे सुतस्येत्येवमर्हत्वसूनत्वयोः प्रातिपदिकार्थयोर्वैय्यधिकरण्यमङ्गीकृत्य व्याख्यातमिति विशेष इत्यर्थः। अनेन पूर्ववदत्रापि ममकाय सूनव इत्यनयोः शाब्दसामानाधिकरण्यसद्भावाद्वैयधिकरण्येनेति कथमुक्तमिति शङ्कानवकाशः। शाब्दसामानाधिकरण्यस्योभयत्र सत्वेपि अर्हत्वसूनुत्वरूपप्रतिपदिकार्थमात्रस्यैव वैयधिकरण्याङ्गीकारादित्यवधेयम्। अर्हत्वसूनुत्वयोर्वैयधिकरण्यप्रदर्शनायैव भाष्ये मदीयस्येत्युक्तम्। नन्विदं ममकायेत्यनेन कथं लभ्यत इत्यत आह ममकाय मामकायेति। ननु ऋचि ममकायेति कथम्। मम शब्दादकच्प्रत्ययेऽच् इत्यस्य लोपे ममक् इति जाते पश्चात्तस्येदमित्यर्थे अण् प्रत्यये णित्वादादिवृद्धौ मामकेति प्रातिपदिके सिद्धे तच्चतुर्थ्यैकवचनं मामकायेति भवेदित्यत आह अणि वृध्यभावश्छांदस इति। ममकशब्दादण्प्रत्यये जातेपि तत्प्रयुक्ता या वृद्धिः सा छान्दसत्वान्न जाता। तथाच ममकायेत्युपपन्नमित्यर्थः। तथाच शंयोः ऐहिकसुखवतः ममकाय मामकाय चतुर्थी षष्ठ्यर्थे मदीयस्य सूनवे सुतस्य त्रिधातु शर्म वहतमित्यर्थो द्रष्टव्यः॥ ६, ४॥

## पदार्थदीपिका

त्रिश्रित्। न वेदसा। सुपां सुलुगित्याकारः। अद्येति॥ निपातस्य चेति संहितायां दीर्घः। प्रकृतिभाव इति॥ तथा च न लोपो नञ इति नलोपो नेति भावः। अत्र मूलटीकयोः व्यापीति व्यवहृतम्। अत्र वदन्ति ननु सुप्यजातौ णिनिस्ताच्छील्ये इति सूत्रे सुपि स्थ इत्यतः सुपीति वर्तमानेऽपि पुनः सुप् ग्रहणमनर्थकमित्याशंक्य पूर्वं हि सुप् ग्रहणं उपसर्गेऽपीत्युपसर्गेण सम्बद्धम्। तदनुवृत्तौ तु तस्याप्यनुवृत्तिः स्यात्। अतोऽत्रोपसर्गनिवृत्त्यर्थं पुनस्सुप् ग्रहणमिति वदता वृत्तिकारेणोपसर्गभिन्न एव सुप्युपपदे सति ताच्छील्ये णिनिविधानाभ्युपगमात् व्यापीत्यत्र

(पदार्थदीपिका)

सोपसर्गतयाप्नोतेः कथं तस्मात्ताच्छील्यार्थे णिनिः इत्यतः अत्रोपसर्गपदस्योपसर्गमात्रपरत्वे ब्राह्मणानामन्त्रयितेत्याङ् उपसर्गत्वेन प्रसंगस्यैवाभावात् तद्व्यावर्तकस्याजातावित्यस्य वैय्यर्थ्यं स्यात्। किञ्च पाणिनीयानुसारिर्णी सकर्मकः कर्मसुतानुछधी (?) कुसुमानुसारिभिरित्यादावपि सोपसर्गत्वात् सर्त्तेर्णिनिर्न स्यादिति बहुविप्लवः स्यात् । तस्मात् उपसर्गपदस्य केवलोपसर्गपरत्वावश्यंभावात् पाणिनीयानुसारिणीमित्यादौ पाणिनीयादिपदमप्यस्तीति उपसर्गस्याकेवलत्वात् सोपसर्गात्सर्त्तेर्णिनिः व्युत्पादनीयः । ततश्च केवलपदस्यासहायपरत्वात् असहायोपसर्ग निवृत्त्यर्थत्वप्राप्त्या पाणिनीयानुसारिणीमित्यादौ सुबन्तेन उपसर्गस्य सहायत्ववत् अनेकोपसर्गस्थले उपसर्गान्तरेण सहायत्वसंभवात् प्रकृते च वि आपीत्याङ् प्रश्लेषेणानेकोपसर्गपूर्वकत्वसंभवात् युक्त एव सोपसर्गादप्याप्नोतेर्णिनिरिति। तदुक्तमनन्तपण्डितैः - व्यापीत्याङ्प्रश्लेषात् उदासारिण्यः प्रत्यासारिण्य इति साध्वित्यादि । अत्र चोप सर्गान्तरेणाप्युपसर्गस्य ससहायत्वकल्पनयानेकोपसर्गत्वपूर्वकात् णिनिव्युत्पादनं नादृष्टचरमिति सूचितम्। अनेकदृष्टान्तप्रदर्शनेनेति सकलमकलंकम् इति। अत्रेदमालोचनीयम्। सुप्यजातावित्यत्र सोपसर्गात् णिनेरनिषेधेन सोपसर्गतया तन्निषेधशंकाअनवकाश एव। न च वृत्तिकृतोपसर्गभिन्न एव सुपि णिनिरिति व्याख्यानात्, हरदत्तमाधवादिभिश्च तस्यैवानुसरणात् सूत्रस्य सोपसर्गात् णिनिनिषेधकत्वसिद्धेः कथं शंकाया निर्दलत्वमिति वाच्यम्। भाष्यविरोधेन तस्योपेक्षणीयत्वात्। यदाह भाष्यकारः सुपि स्थ इत्यत्र सुप् ग्रहणं सत्सूद्विषेति सूत्रस्थोपसर्गग्रहणेनानुपसर्गार्थमिति ज्ञापितम्। इदं पुनः सुप् मात्र एव यथा स्यात् उदासारिण्यः प्रत्यासारिण्य इति। एवं च जाताविति किं ब्राह्मणानामन्त्रयितेति प्रत्युदाहृतम्। अन्यथा हि आङ उपसर्गत्वात् प्रसंग एव न स्यात्। ततश्च सुप् ग्रहणेनोपसर्गव्यावृत्तेः भाष्यानभिप्रेतत्वात् सुप् ग्रहणस्योपसर्गनिवृत्त्यर्थत्ववर्णनं वृत्तिकारादीनां कथं न भाष्यविरुद्धम्। बभूवोपजीविनां अनुयायिवर्गः पतत्यधो धाम विसारि, न वञ्चनीयाः प्रभवोऽनुपजीविभिरित्यादौ सोपसर्गेऽपि णिनेः प्रसिद्धतया सुपीत्यस्योपसर्गनिवृत्त्यर्थत्वायोगाच्च। नह्यत्रोपसर्गग्रहणं तस्यासहायोपसर्गपरत्वेनापि प्रतीकारः संभवति। ततश्च भाष्यादिविरुद्धत्वात् वृत्तिकाराद्युक्तमुपेक्षणीयमेव। न च तर्ह्यस्तु उपसर्गनिवृत्त्यर्थत्वोक्तिः भाष्याद्यनुसारेणोपसर्गेपि भवतीत्यर्थाभिप्राया। न ह्यत्रोपसर्गनिवृत्यर्थेति सोपसर्गात् न भवतीत्यर्थः। किन्तु अर्थशब्दस्य निवृत्तिवचनतया मशकार्थो धूम इत्यादौ मशकनिवृत्त्यर्थत्ववत्प्रकृतेऽप्युपसर्गनिवृत्यर्थस्यैव लाभात्। निवृत्तनिवृत्तिश्च प्रवृत्तिरेव नत्वन्या। तेनोपसर्गेपि भवतीत्यर्थत्वात् न भाष्यादिविरोध इति चेत् सत्यमेवमविरोधः । तथापि शंका अतिनिर्दलैव स्यात् । प्राचीनपक्षे वृत्तिकारमतानुसारेण

शंकाप्रसक्तावपि अत्र भाष्यवृत्तिकारमतयोरैकरूप्ये सोपसर्गात्तदनिषेधसिद्ध्या शंकानवकाशात्। भाष्यरीत्या वृत्तिव्याख्याने उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानरूपोत्तरवृत्तिविरोधापाताच्चोपसर्गाद-निषिद्धतयोपसंख्यानस्य व्यर्थत्वात् । उत्प्रतिभ्यामाङि सर्त्तेरित्यनुपसंख्यानात् पाणिनीयानु-सारिणीमिति सोपसर्गात् णिनिप्रयोगाच्च सुबुक्तिरुपसर्गनिवृत्त्यर्थेतिरामचन्द्राचार्योक्तिः भाष्याद्यनुसारेणार्थशब्दस्य निवृत्तिवचनत्वकल्पनया उपसर्गेपि भवतीत्यर्थाभिप्रायेति व्याकुर्वता टीकाकारेण वृत्तौ तथाभिप्रायाभावस्य स्थितत्वाच्च । तस्मात् भाष्यादिविरुद्धत्वात् सुपीत्यस्योपसर्गनिवृत्त्यर्थत्ववर्णनं वृत्तिकारादीनामुपेक्षणीयमेवेति न शंकानवकाशः । एवं च व्यापीत्यदिप्रयोगा अपि निर्बाधा एव। उपसर्गपूर्वकात् आप्नोतेर्णिनिसंभवात्। लिंगशेषविधिर्व्यापि विशेषैर्यद्यबाधित इत्यमरप्रयोगाच्च । सति चैवं व्यापीत्याङ् प्रश्लेषादित्युक्तिसंभवव्युत्पाद-नमनन्तपण्डितीयं भ्रमपरम्परामूलकमेव। तथाहि सुबुक्तिरुपसर्गनिवृत्यर्थेति तावदेको भ्रमः। तथा सति पाणिनीयानुसारिणीमित्यदौ असंगतिमाशंक्योपसर्गग्रहणं केवलोपसर्गपरम् । इह तु पाणिनीयादिपदान्तरमप्यस्तीति प्रसादादिग्रन्थं पुरस्कृत्य तत्र केवलपदस्यासहायपरतयाने-कोपसर्गसद्भावे णिनिर्भवत्येव इति चापरो भ्रमः। तत्र चोत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानमिति स्वोपजीव्यवृत्तिविरोधापर्यालोचनं उपसर्गादपीत्येतदंशव्यावृत्तिफलमिह सुप् ग्रहणमिति वृत्तिमते उपसर्गोत्तरं किञ्चिदाश्रित्यैव णिनिः प्रवर्तते। नत्वनेकमप्युपसर्गमिति मतशरीरस्यापर्यालोचनं च तन्मूलमिति उक्तसंभवं चिकीर्षता भ्रमपरंपरैव शरणीकर्तव्या स्यादित्यास्तां तावत्।

रातिरिति। रा दाने। अस्माद्भावे क्तिन्। युवोरिति। सुपां सुपो भवन्तीति षष्ठीद्विवचनस्य षष्ठीद्विवचनादेशः। अत आदेशविषयत्वात् योऽचीति यत्वं न भवति। शेषे लोप इति टिलोपः। ह्रिम्येवेति कित्वाद्गुणाभावः। घञिति। ञित्वात् वृद्धिरिति भावः ॥ १ ॥

येनेति। करणे ल्युडिति भावः। स्कभितास इति। स्कभुः सौत्रो धातुः। अस्मान्निष्ठायां यस्य विभाषेति इट् प्रतिषेधे प्राप्ते ग्रसितस्कभित इत्यादिना इडागमोऽपि निपातितः। विदुरिति। वेत्तेः लिटि विदो लटो वेति झेरुसादेशः। आरभ इति। रभ राभस्ये। अस्मादाङ् पूर्वात् सम्पदादिलक्षणो भावे क्विप् । द्वयोर्विलोपेन इति । समानोदानयोः प्राणापानेषु लयेनेत्यर्थः । त्रयः प्राणापानव्यानाः ॥ २ ॥

अहन्। सप्तम्या लुक्। अवद्यगोहनौ। गुहू संवरणे। नन्द्यादित्वात् ल्युः। इदुपधाया गोह इति प्राप्तस्योत्वस्याभावश्छान्दसः। मिमिक्षतम् स्पृशतम्। सनि एकाच उपदेशेनुदात्तादितीट् प्रतिषेधः।

(पदार्थदीपिका)

हलन्ताच्चेति सनः कित्वाल्लघूपधगुणाभावः। द्विर्भावहलादिशेषौ। ढत्वकत्वषत्वानि। वाजवतीः। उगितश्चेति ङीप्। पिन्वतम्। पिमि चिणि विसेचने। अत्र तु दानार्थः। इदित्वान्नुम्। कर्तरि शप्॥ ३॥

वहेतम्। लिङि रूपमेतत्॥ ४,५॥

एतत्तुल्यमिति। अद्भ्यः भेषजानि धत्तमिति प्रतीतिनिरासार्थमित्यर्थः। नन्वप्शब्देनान्तरिक्षलोकग्रहणेन अद्भ्यः भेषजानि धत्तमिति अद्भ्य इत्येतत् दिव्यानि पार्थिवानीत्येतत्तुल्यमेवास्तु तत्किं शेषं पूरयित्वा व्याख्यानेन इत्यतोऽप् शब्दस्यान्तरिक्षलोकवाचकत्वाभावेऽपि तदुपलक्षकत्वात् तथा व्याख्यानमस्तु इत्यत आह। इष्टापत्त्या समाधत्ते॥ यइति॥ एतत् अद्भ्य इत्येतत्। ननु शुभपतीति भवितव्यं कथं शुभस्पतीति इत्यत आह। पारस्करादित्वादिति। एतच्चैकपदत्वमभिप्रेत्योक्तम्। भिन्नपदत्वे तदप्रसक्तेः संहितायां षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वसंभवेन सुडाश्रयणवैयर्थ्यादिति बोध्यम्। वाकजित्येव टीकायां पाठः। अयं भावः छान्दसे ममादेशे अल्पस्य ममेत्यल्पार्थे कप्रत्यये ममकशब्दात्परस्य ङेर्विभक्तेर्यादेशे सुपि चेति दीर्घत्वे सति ममकायेति रूपनिष्पत्तिरिति भावः। ननु चाव्ययसर्वनाम्नामकच्प्राक्टेरित्यचः कापवादकत्वस्याकरे स्थितत्वात् अल्पार्थे प्राप्तकापवादेनाकजेव स्यात्। तत्कथं कप्रत्ययो व्याख्यायते। अकचश्च तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् सर्वनामकार्यस्य दृष्टत्वात्। ङेप्रथमयोरमिति ममकशब्दात्परस्य ङेविभक्तेरमवश्यंभावात् ममकमित्येव भवितव्यम्। तत्कथं ममकायेति रूपनिष्पत्तिरिति चेदुच्यते। यत्तावदुक्तं कापवादकत्वादकजेव भविष्यतीति तदसत्। विरोधे हि सति बाध्यबाधकभावो भवति नत्वन्यथा अतिप्रसंगात्। काकचोस्तु भिन्नदेशत्वात् न विरोध इति कथमकचः कस्यापवादः स्यात्। अव्ययानामवश्यं देशकृत एव विरोधः। किन्त्वकचुकृतेपि-काकचोस्तु प्रयोजनमेकमज्ञाताद्यर्थज्ञापनं नाम तस्मिंश्चाकजकृते प्रयोजनाभावात् को न भविष्यति इत्येवाभिप्राय इति चेत्तर्हि समानन्यायतया कप्रत्ययेनापि अज्ञाताद्यर्थज्ञापने कृते प्रयोजनाभावादकजपि न भविष्यतीत्येवेति कथमकचः कप्रत्ययापवादकत्वम्। तस्मादेकार्थानां विकल्पव्यवस्थितेः विकल्पे च उभयस्याशास्त्रार्थत्वात्के सति अकच् न, तस्मिन् सति न क इति वाचनिकविकल्पाश्रयणेऽपि न्यायप्राप्तत्वात् विकल्पस्य तदभिप्रायेण वाकचिति टीकोक्तिरप्युपपन्नैव। अत एव कप्रत्ययपक्षे तस्य मध्यपतितत्वेन तद्ग्रहणेनाग्रहणात् ङेप्रथमयोरम्भावाप्रसक्तेर्ममकाय इत्यपि युक्तमेवेति सकलमकलंकम्॥ ६, ४॥

## टीकाविवृतिः

त्रिश्चित् ।। द्वादशर्चमिति ।। तथा चानुक्रान्तम् । त्रिश्चिद्द्वादशाश्विनं नवम्यंत्ये त्रिष्टुभाविति । अस्यार्थः । त्रिश्चिन्नो अद्येति सूक्तमश्विनिदेवताकं नवमी ऋक् अंत्या च ऋक् इत्युभे त्रिष्टुप्छन्दस्के एकादशाक्षरपादयुक्तत्वात् । शिष्टा दश जगत्य इति । ननु अद्येत्यनेनान्वयपूर्तौ आरभ्ये तिशेषेकिंप्रमाणमित्यत आह ।। संकुचितेति ।। इति भावेनोक्त इति शेषः । अद्य भवतमित्युक्ते संकोचप्रतीतेस्तद्व्यावृत्तये शेषोक्तिरिति भावः ।। त्रिश्चिदिति ।। क्रियाभ्यावृत्तिगणनेऽर्थे त्रिशब्दाद्द्वित्रिचतुर्भ्यःसुजिति सुज्विधानात्कालभेदंविना क्रियावृत्तेरभावात्क्रियाभ्यावृत्त्याश्रयकालविशेषकथनायदिवानिशायामित्याद्युक्तिर्न तु त्रिरित्यस्य वाच्यार्थकथनमिति ज्ञेयम् ।। समास इति ।। न वेदसावितीति शेषः । नन्वस्मिन्नञ्तत्पुरुषे नलोपो नञ इति नकारलोपे अवेदसाविति भाव्यमित्यत आह ।। नभ्राणिति ।। इति सूत्रेण नभ्राणित्याद्युदाहरणेषु नञो नलोपाभाव निपातनादिति भावः ।। याम इति ।। अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदिय क्षिनीभ्यो मन्निति सूत्रेण यातेःकरणे मन्प्रत्यय इति भावः ।। रातिरुतेति ।। रा दान इति धातोर्भावे क्तिन्निति भावः ।। यथासंख्यमिति ।। विष्णोरशेषदेशेषु गतेर्मार्गो व्यापी । अशेषदातृत्वतश्च दानं व्यापीत्यन्वयो भाष्ये ज्ञेय इति भावः ।। देशेष्वित्यतःपर एव शब्द इति ।। गतेरित्यतःपरमप्येवशब्द इत्यर्थः । देशेषु गतेरेव मार्गस्य विभुत्वं न तु स्वरूपेणेति भावः ।। यन्त्र्यते नियम्यतेनेनेति ।। यत्रिसंकोच इत्यतःकरणे अच्प्रत्यय इति भावः ।। ततो म्यगिति ।। उणादयो बहुलमित्युक्तेरिति भावः ।। विवृणोतीति ।। पूर्वं युवयोर्यंत्रमित्यनुवादेनाविवृतस्य बुद्धिप्रेरकेत्यनेन विवरणादिति भावः ।। सेनया युक्ताविति ।। तद्धिता इति वचनाद्युक्तार्थे सेनाशब्दाद्यन्प्रत्यय इति भावः । ननु अभ्यायमित्यत्रांते मुमागमाभावात्कथमनुस्वार इत्यत आह ।। छान्दसो मुमिति ।। मकारागम इत्यर्थः । चतुर्थी तदर्थेति सूत्रे प्रकृतिविकाररूपतादर्थ्ये चतुर्थीसमासस्य वृत्तिकारैर्व्याख्यातत्वादभ्यागमन सेन्ययोःप्रकृतिविकारभावाभावात्कथमत्र समास इत्यरुचेराह ।। यद्वेति ।। शाकपार्थिवादित्वादर्थशब्दलोप इति भावः । आयार्थसेनाविति भाष्यं पूर्वं तात्पर्यार्थिकथनपरत्वेन व्याख्यातम् । इदानीं विग्रहप्रदर्शकत्वेनेति भेदः ।। १ ।।

त्रयःपवयः ।। वज्रवाचीति ।। पविःसृक इति वज्रनामसु पाठादिति भावः ।। सादृश्यादिति ।। घातकत्वेनेति शेषः ।। अनुपपन्नतया प्रतीतमिति ।। आयुधस्तंभानां जडत्वात्सोमपानज्ञानासंभवादिति भावः ।। चेतनाधिष्ठितत्वादिति ।। तथा च पविस्कंधशब्दौ लक्षणया

**(टीकाविवृतिः)**

स्वनिष्ठचेतनार्थकावित्युक्तं भवति ।। वज्रसहचरितत्वादिति ।। अपिपदात्पूर्वं गौणीवृत्तिराश्रिता । इदानीं छत्रिन्यायेनाजहत्स्वार्थलक्षणाश्रीयते इत्युक्तं भवति । ननु भाष्ये त्रयो वेणवःसमाहृता इति विग्रहे तद्धितार्थोत्तरपदसमाहारे चेति समासे संख्यापूर्वो द्विगुरिति द्विगुत्वाद्विगुरेकवचनमित्येकवद्भावे स नपुंसकमिति नपुंसकत्वात्रिवेण्विति स्यात्रिवेणव इति कथमित्यत आह ।। विशेषण समास एवेति ।। कर्मधारय इत्यर्थः ।। कुंतादय इति ।। कुंता प्रासे चण्डभाव इति विश्वोक्तेःप्रासादियुक्ताःवेणवस्त्रयस्तंभनामान इत्यर्थः ।। स्कंभास्तंभाश्चेति ।। स्तंभुस्तुंभुस्कंभुस्कुंभुस्कुञ्भ्यःश्नुश्चेति सूत्रोक्तानां सौत्रधातूनां निरोधनार्थकानांकर्मणि घञि स्तभ्यंते स्कभ्यन्ते निरुध्यन्ते गर्तादाविति स्तंभाःस्कंभा इति रूपसिद्धेःस्तंभस्कंभशब्दयोः पर्यायत्वादिति भावः ।। अस्मान्नप्रत्यय इति ।। धाप्पृवस्यज्यतिभ्योन इत्युक्तो न प्रत्ययो बहुलोक्तेरस्मादपि भवतीति भावः ।। खादनं च पानमिति ।। चशब्दस्तुशब्दार्थः । भाष्यस्थःपानशब्दो करणे ल्युटि पात्रार्थक इत्यर्थः । अथवा भावे ल्युडन्त इत्याशयेनाह ।। पानक्रियां वेति ।। कृत्यल्युटो बहुलमिति वचनात्पानमिति कर्मणि ल्युडिति भावेनाह ।। पीयत इति ।। रसं वेति ।। संपदादित्वादिति ।। भावे क्विपि भकारान्तारभ् शब्दात्तादर्थ्ये चतुर्थीति भावः ।। निशायां त्रिरिति ।। रात्रौ त्रिवारं दिवा च त्रिवारमायाथ इत्यर्थः । उञोर्थ एवेति ज्ञेयम् । उञः संहितायामिति शब्दपरत्वाभावादुञ इति प्रगृह्यसंज्ञाभावेन प्रकृतिभावा भावाद्यणादेश इति भावः ।। बहिष्ठेति ।। अश्विन्यनंतर्गते शरीरानन्तर्गते च पृथग्रूप इत्यर्थः ।। अध्यात्ममिति ।। शरीरान्तर्गते विष्णावित्यर्थः ।। बहिःप्रसिद्धा इति ।। रथाधारभूता इत्यर्थः ।। द्वयोरिति ।। उदानसमानयोर्विलोपेन प्राणादिषु लयेन धारणायां चिन्तनायां क्रियमाणायामित्यर्थः ।। यथोक्तमिति ।। भागवत इति शेषः । तत्र वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गन्तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाथ पंचत्वं तच्चैकत्वे जुहोन्मुनिरित्युक्तस्यायमर्थः । वाचमुमां मनसि रुद्रे तन्मनः प्राणे तं परं प्राणमितरेऽपाने अपानं च धृत्या सह तथा सोत्सर्गं पुरीषोत्सर्गसहितं तत्परत्वे तस्मात्पूर्वभाविनि व्याने लयं चिंतितवान् । पञ्चत्वं प्राणादयः पञ्च त्रित्वे हुत्वा प्राणादित्रिषूदानसमानौ लीनाविति ध्यात्वा तच्च त्रित्वं प्राणादित्रिकं एकत्वे मुख्यप्राणे लीनमिति ध्यानं कृतवानिति ।। पञ्चानामुक्तिर्यथेति ।। श्रोत्रं चक्षुःस्पर्शनं च रसनं घ्राणमेव चेत्यादौ बाह्येन्द्रिय मध्येति शेषः ।। स्तंभनानीतीति ।। स्थापकानीत्यर्थः ।। एवमन्यदपीति ।। आरभे इत्येतज्ज्ञानारंभार्थं मोक्षप्राप्त्यारंभार्थं वेति द्विवचनं च द्विरूपाभिप्रायेण व्याख्येयमित्यर्थः ।। स्वयं च किंचित्स्पष्टयति ।। अध्यात्ममिति ।। २ ।।

(टीकाविवृतिः)

समाने अहन् ॥ यज्ञे प्रसिद्धमिति ॥ द्वितीयचतुर्थादियुग्मदिनं समानमहः । प्रथमतृतीयादिदिनं विषममह इति प्रसिद्धमित्यर्थः । त्रिरिति पदेन विषमस्याप्यह्नोग्रहणमिति भावेन समाने अहन्त्रिरवद्यगोहनेत्यस्य तात्पर्यार्थमाह ॥ अखिलक्रियाभ्रेषनाशकाविति ॥ भ्रेषो भ्रंशः । यदा यथा यत्कर्म कर्तव्यं तदा तथा प्रमादेन तत्कर्माकरणमिति यावत् ॥ वक्ष्यमाणसमुच्चय इति ॥ इषः पिन्वतं चेत्युत्तरार्धोक्तेन समुच्चय इत्यर्थः । उषःप्रभा तेसंध्यायामिति विश्वोक्तेरुषसि प्रातःकाल इत्यक्षरार्थे सिद्धे तात्पर्यमाह ॥ ततःपरस्मिन् दिने चेति ॥ आध्यात्मिकयुद्धेति ॥ वादवितंडाख्ययुद्धं प्राप्तानीत्यर्थः ॥ अलंक्षरतमिति ॥ दत्तमित्यर्थः ॥ ३ ॥

त्रिर्वर्तिः ॥ न केवलं सामान्यमिति ॥ सामान्यं प्रवृत्तिमात्रमेव केवलं न किंतुकालविशेषसहितमित्यर्थः । तात्पर्यमाह ॥ अतीतेति ॥ भाष्यं संगमयति ॥ तत्सर्वमिति ॥ सर्वं कर्म युवयोरेवाधीनमित्यर्थः ॥ सुप्राव्ये इति ॥ सुप्रपूर्वादवतेर्यत्प्रत्यय इति भावः ॥ नतु वस्तुत इति ॥ भक्तस्यातीतादिकालसंबन्धेनैव त्रैविध्यं(अतीतभक्तत्वादित्रैविध्यं)न तु स्वरूपेणेत्यर्थः । गुर्वादिशिक्षितत्वादेव भक्तस्य सुप्राव्यत्वात्पुनःशिक्षत- मित्ययुक्तमित्यतोः भाष्ये सुशब्दाध्याहारेण सुशिक्षतमित्युक्तं तस्यार्थमाह ॥ अतिशयेन शिक्षयथ इति ॥ लोटो विध्याद्यर्थ-कत्वासंभवाल्लट्प्रयोगःकृत ॥ पृक्षः पुष्टिं चेति ॥ पॄ पालनपूरणयोरित्यतः उणादयो बहुलमित्युक्तेःक्षस्प्रत्यय इति भावः ॥ ४ ॥

त्रिर्नोरयिम् ॥ देवतातेति ॥ तनोतेःदुतनिभ्यां दीर्घश्चेति भावे क्तप्रत्यये अचो दीर्घेचानुदात्तोपदेशेत्यादिना नकारलोपे निष्पन्नविस्तारार्थकतात शब्दस्य तृतीयान्तदेवशब्देन तत्पुरुषसमासे तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृति स्वरे द्वितीयैकवचनस्य सुपां सुलुगित्यादिना आकारादेश इति भावः ॥ सूरेः सूर्यस्येति ॥ ऋचि सूरसूर्यार्यमादित्येत्यमरोक्तेः सूर्यवाचकसूरशब्दाकारस्य व्यत्ययो बहुलमितीकारादेशे सूरिशब्दस्यापि सूर्यवाचकत्वे तस्मात्षष्ठ्याःसुपां सुलुगिति भावः । एतदृक्तुर्थपादे अश्विविशेषणत्वद्योतकपदाभावादध्या-हाराश्रयेणाह ॥ तथाभूताविति ॥ सूर्यदुहितृपतिरूपावित्यर्थः ॥ सूरेर्विदुष इति ॥ अस्मिन्पक्षे पण्डितः सूरिराचार्य इति धनंजयोक्तेर्विद्वद्वाचकसूरिशब्दात्षष्ठ्याःलुकि न लुमतांगस्येत्यस्यानित्यत्वाद्धेर्ङितीति गुण इति भावः ॥ त्रिकाले भवं रथमिति ॥ तस्मिन् तस्मिन्काले विद्यमानं देहाख्यं रथमित्यर्थः ॥ ५ ॥

त्रिर्नो अश्विनादिव्यानि ॥ नन्वब्ध्य इत्यस्य कर्मनामसु पठितापुशब्दरूपत्वात्कर्मवाचकस्य भाष्ये लक्षणया तज्जन्यसुखार्थकत्वेन व्याख्यानं किमर्थमित्यत आह ॥ अब्द्य इत्येतदिति ॥ दिव्यानि

(टीकाविवृतिः)

पार्थिवानीत्यत्र त्रिशब्दद्वयवदद्भ्य इत्यत्रापि त्रिशब्दश्रवणाद्दिव्यपार्थिवशब्दवद्भेष-जविशेषणत्वं प्रतीयते । अतस्तन्निरासायाद्भ्य इत्यस्य चतुर्थ्यंतत्वाश्रयणेन सुखार्थत्वमुक्तं कर्मार्थत्वस्य प्रकृतासंगतेरिति भावः ।। अन्तरिक्ष्याणीति ।। अन्तरिक्षस्थसूर्यादिलोकगतानीत्यर्थः । शेषोक्तिःकुत अद्भ्य इत्यस्यैव त्रिरित्यनेनान्वयसंभवादित्यत आह ।। अपां लोकत्वाभावादिति ।। दिव्यानि पार्थिवानीति लोकप्रकरणादद्भ्य इत्यनेनापि लोकग्रहणस्योचितत्वादप्शब्दवाच्यलोकस्य तु प्रसिद्ध्यभावात्रि रित्यनेनान्वयार्थं शेषोक्तिरिति भावः । ननु ये देवासो दि॒व्येका॑दश॒स्थ-पृ॑थि॒व्यामध्येका॑दश॒स्थ ।। अ॒प्सु क्षि॒तौमहि॒नैका॑दश॒स्थते देवासो य॒ज्ञमि॒मं जु॑षध्वमित्यस्यामृचि त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपा इति प्रतिज्ञाय सोमपान्देवानुक्त्वा एकादश प्रयाजा एकादशानुयाजा एकादशोपयाजा एते सोमपा इति ब्राह्मणवाक्यानुसारेण हे देवाःये प्रयाजनामका एकादशसंख्याका यूयं दिविस्थ भवथ ये च पृथिव्यां अनुयाजनामका एकादशस्था ये च अप्सु क्षितः अप्शब्दस्य आकाशमाप इत्यन्तरिक्षनामसु पाठादंतरिक्षवाचकस्य तत्रत्यलोकोपलक्षकत्वेनाप्सु अन्तरिक्षस्थसूर्यादिलोकेषु क्षितो निवसन्त एकादशस्थते सर्वे देवाः यूयं महिना भक्तानुकंपित्वादिस्वमहिम्ना युक्ताःसन्तः इमं यज्ञं जुषध्वमङ्गीकुरुध्वमित्यर्थप्रतीतेस्तद्वदद्भ्य इत्यत्रापि किं न स्यादित्यत आह ।। ये देवास इत्यत्रेवेति ।। तर्हि अद्भ्य इति चतुर्थी कथमित्यत आह ।। तत्रेति ।। अद्भ्य इत्यस्यान्तरिक्षलोकोपलक्षकत्वे पञ्चमीत्वाङ्गीकारात् श्रुतौ भाष्ये चानीयेति पदाध्याहारेण भेषजविशेषणत्वोपपत्तेर्न कश्चिद्विरोधः । अस्मिन्पक्षे भाष्ये सुखायेति शेषोक्तिर्नतु अद्भ्य इत्यस्य व्याख्यानमिति भावः । शुभस्पतीत्यत्र समाधानं पूर्वमेव कृतं ज्ञेयम् ।। कंशंभ्यां बभयुस्तितुतयस इति सूत्रेण कंशंशब्दाभ्यां बादयःसप्तप्रत्ययाःस्युरित्युक्ते- रिति भावः ।। ऐहिकसुखवत इति ।। उत्तरत्र त्रिधातुशर्मेति नित्यसुखस्य वक्ष्यमाणत्वादैहिकेति विशेषणम् ।। चतुर्थ्यर्थे षष्ठीति ।। सूनव इत्यादिसामानाधिकरण्याय चतुर्थ्यर्थे बहुलं छन्दसीति श्रुतौ शंयोरिति षष्ठीति भावः । भाष्ये तु सूनवे ममकायेत्येतद्द्वयं शंयोरित्येतदनुसारेण संप्रदानस्य शेषत्वविवक्षया षष्ठ्यंतं व्याख्यातम् । सूनव इत्यस्य सापेक्षत्वाद्युष्मच्छब्दाध्याहारेण योजना कृता । कथं ममकशब्दस्य स्वल्पस्य ममेत्यर्थ इत्यत आह ।। अस्मद इति ।। अस्मच्छब्दाच्चतुर्थ्यां परतो ममादेशे जाते अव्ययसर्वनाम्नामकच्प्राक् टेरित्यनुवर्तमाने अल्प इति सूत्रेणाकचि ममकशब्दस्य छान्दसमाद्युदात्तत्वं नतु चित इत्यंतोदात्ततेति भावः ।। अनुभवगोचरमिति ।। मानेषु ज्ञानेषु ऊयतेविषयीक्रियत इत्योमानम् । आङ्पूर्वाद्वेञःकर्मणि क्विपि वचि स्वपीति संप्रसारणे आङ आद्गुण इति गुणे ओ इति रूपे सिद्धे मानशब्देन समास इति भावः ।। धीयत इतीति ।। धाञः कर्मणि

तुन्निति भावः ॥ व्याचष्ट इति ॥ ममकायेति पदमिति शेषः । प्रकारान्तरत्वमेव स्पष्टयति ॥ पूर्वमिति ॥ युष्मत्सूनोर्ममेति विशेषणविशेष्यभावेनेत्यर्थः । इदानीं तु ममकाय मत्संबन्धिने सूनव इति वैयधिकरण्येनेत्याशयः । नन्वस्मच्छब्दादपत्यार्थे अणि तवकममकावेकवचने इति ममकादेशे तद्धितेष्वचामादेरित्यादिवृद्धौ मामकायेति भाव्यमित्यत आह ॥ वृद्ध्यभावश्छान्दस इति ॥ ६ ॥

ऋक्संहिता पदपाठसहिता (सू-३४, व-२)

(४०५) त्रिर्नो॑ अश्विना यज॒ता दि॒वेदि॑वे॒ परि॑ त्रि॒धातु॑ पृथि॒वीम॑शायतम् ।
ति॒स्रो ना॑सत्या रथ्या परा॒वत॑ आ॒त्मेव॒ वात॒ः स्वस॑राणि
गच्छतम् ॥ ७ ॥

(प०) यज॒ता । दि॒वेऽदि॑वे । परि॑ । त्रि॒ऽधातु॑ । पृ॒थि॒वीम् । अ॒शा॒य॒त॒म् ।
ति॒स्रः । ना॒स॒त्या॒ । र॒थ्या॒ । प॒रा॒ऽवत॑ः । आ॒त्माऽइ॑व । वात॑ः ।
स्वस॑राणि । ग॒च्छ॒त॒म् ॥ ७ ॥

(४०६) त्रिर॑श्विना॒ सिन्धु॑भिः स॒प्तमा॑तृभि॒स्त्रय॑ आहा॒वास्त्रे॒धा ह॒विष्कृ॒तम् ।
ति॒स्रः पृ॑थि॒वीरु॒परि॑ प्र॒वा दि॒वो नाक॑ रक्षे॑थे॒ द्युभि॑र॒क्तु-
भि॒र्हि॒तम् ॥८॥

(प०) त्रिः । अ॒श्वि॒ना॒ । सिन्धु॑ऽभिः । स॒प्तमा॑तृऽभिः । त्रय॑ः ।
आ॒ऽहा॒वाः । त्रे॒धा । ह॒विः । कृ॒तम् । ति॒स्रः । पृ॒थि॒वीः ।
उ॒परि॑ । प्र॒वा । दि॒वः । नाक॑म् । र॒क्षे॒थे॒इति॑ । द्युऽभि॑ः ।
अ॒क्तुऽभि॑ः । हि॒तम् ॥ ८ ॥

(४०७) क्व॑१॒त्री च॒क्रा त्रि॒वृतो॒ रथ॑स्य क्व॑१॒त्रयो॑ व॒न्धुरो॒ ये सनी॑ळाः ॥ क॒दा
योगो॑ वा॒जिनो॒ रास॑भस्य येन॑ य॒ज्ञं ना॑सत्योपया॒थः ॥ ९ ॥

(प०) क्व॑ । त्री । च॒क्रा । त्रि॒ऽवृत॑ः । रथ॑स्य । क्व॑ । त्रय॑ः । व॒न्धुर॑ः ।
ये । स॒ऽनी॑ळाः । क॒दा । योग॑ः । वा॒जिन॑ः । रास॑भस्य । येन॑ ।
य॒ज्ञम् । ना॒स॒त्या॒म् । उ॒प॒ऽया॒थः ॥ ९ ॥

(४०८) आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ॥१०॥

(प०) आ । नासत्या । गच्छतम् । हूयते । हविः । मध्वः । पिबतम् ।
मधुऽपेभिः । आसऽभिः । युवोः । हि । पूर्वम् । सविता ।
उषसः। रथम् । ऋताय । चित्रम् । घृतऽवन्तम् । इष्यति ॥१०॥

(४०९) आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ॥
प्रायुस्तारिष्टं नीरपांसिमृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥११॥

(प०) आ । नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातम्।
मधुऽपेयम् । अश्विना । प्र । आयुः । तारिष्टम् । निः । रपांसि ।
मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥ ११ ॥

(४१०) आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं
वाजसातौ ॥ १२, ५, ३४ ॥

(प०) आ । नः । अश्विना । त्रिऽवृता । रथेन । अर्वाञ्चम् । रयिम् ।
वहतम् । सुऽवीरम् । शृण्वन्ता । वाम् । अवसे । जोहवीमि ।
वृधे । च । नः । भवतम् । वाजऽसातौ ॥ १२, ५, ३४ ॥

## ऋग्भाष्यटीका

त्रिर्नो अश्विना यजता । अयं वर्गः शिष्यमतिपरीक्षार्थं न व्याख्यातो भाष्यकृतेति सम्प्रदायविदः । तथापि यथा श्रुतं यथामति व्याख्यास्यामः । हे अश्विनौ दिवे दिवे । त्रिः कालत्रये । युवां नोस्माकम् । यजतौ याज्यौ । भवतमिति शेषः । यौ त्रिधातु त्रिकालम् । सितनिगमि इत्यादिना धत्त इति धातुःकालः । पृथिवीं पर्यशायतं पर्यशाययतम् । स्थापितवन्तौ स्थः । हे नासत्यौ परावतो दूरतोप्यागन्तुमिति शेषः । तिस्रो लोकत्रयसम्बन्धिन्यो रथ्या रथ्याः । युवयोः सुगमाः सन्ति । तस्माज्जगतोंतरात्मा वात इव । स्वसराणि सर्वेषुदिनेषु । गच्छतमागच्छतम् ॥ ७ ॥

(ऋग्भाष्यटीका)

त्रिरश्विना। हे अश्विनौ युवाम्। सिंधुभिर्नदीभिः सप्तमातृभिश्च सह। वेद्युत्तरेत्युक्तास्तिस्रः पृथिवीः प्रत्यागच्छतम्। यतो युवां प्रति त्रयः सवनत्रयसम्बन्धिनः। आहवाः आह्वानानि क्रियन्ते। तथात्रेधाहविश्चकृतम्। यौ दिवोप्युपरि। प्रवा प्रवौ। प्रकृष्टगतिमन्तौ। वागतिगन्धनयोः विच्। यौ च नाकं स्वर्गं द्युभिर्दिनैः दिनेषु अक्तुभीरात्रिभिः रात्रिषु च। हितं यथा तथा। रक्षेथे रक्षथः॥ ८॥

क्व। हे नासत्यौ युवयोस्त्रिवृतस्त्रीन्लोकान्वृणोतीति त्रिवृत् तस्य रथस्य। त्री त्रीणि। चक्रा चक्राणि। क्व। दर्शनोत्कण्ठयैवं पृच्छति। तस्य च रथस्य। बन्धुरो बन्धुरा उन्नता नतास्त्रयः प्रदेशाः क्व। कथं भूताः ये सनीळाः सनीडाः। तस्मिंश्च रथे रासभस्य वाजिनो योगः कदा नु भविष्यति। कथं भूतो येन रथेनास्मदीयं यज्ञमुपयाथः॥ ९॥

आनासत्या। हे नासत्यावागच्छतम्। युवां प्रत्यस्माभिर्हविर्हूयते। किं च मधुपेभिः सोमपैः आसभिरास्यैः। मध्वो मधु सोमम्। पिबतम्। उषसोपि वक्ष्यमाणत्वाद्बहुवचनम्। युवोर्युवयोश्चित्रम् अद्भुतम्। घृतवन्तं दीप्तिमन्तं रथम्। सवितोषस इति व्यत्ययेन। सवितुः सुतोषाः। ऋताय यज्ञाय। यज्ञं गन्तुम्। पूर्वं प्रथमत एवेष्यति गच्छति हि। तया सहागच्छतमिति भावः॥ १०॥

आनासत्या त्रिभिः। हे नासत्यौ त्रिभिरेकादशैरेकादशानां वर्गैः त्रयस्त्रिंशद्भिर्देवेभिर्देवैः सहेह यज्ञे। पेयं पातव्यम्। मधु सोमम्। प्रत्यायातम्। आगत्य चायुरस्मभ्यं प्रतारिष्टं प्रयच्छतम्। अस्मदीयानि रपांसि पापानि निर्मृक्षतं शोधयतम्। द्वेषो द्विषः। सेधतं प्रतिषेधतम्। सचाभुवा सहभुवास्माकं सखायौ भवतम्॥ ११॥

आनः। हे अश्विनौ नोस्मभ्यं दातुम्। सुवीरं रयिम्। त्रिवृता रथेनार्वांचं स्वर्गादर्वागिति यावत्। वहतम्। किंच शृण्वन्तावुक्तमवधारयन्तौ। वां युवाम् अहमवसे रक्षायै। जोहवीमि आह्वयामि। तस्मात् वाजसातौ युद्धे। नो रक्षायै। वृधे वृद्ध्यै च। भवतम्॥ १२,५,२॥

## मन्त्रार्थमञ्जरी

पञ्चमो वर्गो भाष्यकृता शिष्यबुद्धिशिक्षार्थं न व्याख्यातः– इति सम्प्रदायविदः, टीकाकृता तु व्याख्यातः। (हे) (अश्विना) अश्विनौ। दिवेदिवे। त्रिः, कालत्रये। (युवाम्) नः, अस्माकम्। यजता, याज्यौ, यजतेः कर्मण्यतच्प्रत्ययः। (भवतम्) इति शेषः। (यौ) त्रिधातु, त्रिकालम्, 'सितनिगमिमसिसच्यविधञ्क्रुशिभ्यस्तुन्' इत्युणादिसूत्रेण दधातेः तुन्प्रत्ययः, धत्त इति धातुः कालः। पृथिवीम्। परि अशायतम्, स्थापितवन्तौ स्थः। (हे) (नासत्या) नासत्यौ। परावतः, दूरतः (अपि) (आगन्तुम्) इति शेषः। तिस्रः, लोकत्रयसम्बन्धिन्यः। रथ्या, रथ्याः, रथमार्गाः।

(मन्त्रार्थमञ्जरी)

युवयोः सुगमाः सन्ति तस्मात् (आत्मेव वातः) जगतोऽन्तरात्मा वात इव । स्वसराणि, सर्वेषु दिनेषु । गच्छतम्, आगच्छतम् ॥ ७ ॥

(हे) (अश्विना) अश्विनौ । (युवाम्) (त्रिः) । सिन्धुभिः, नदीभिः । सप्तमातृभिः । (च सह)। वेद्युत्तरा इत्युद्युक्ताः तिस्रः पृथिवीः (प्रत्यागच्छतम्) यतो युवां प्रति– त्रयः, सवनत्रयसम्बन्धिनः । आहावाः, आह्वानानि । (क्रियन्ते) यथा त्रेधा । हविः कृतम्, हविश्च कृतम् । दिवः (अपि) उपरि । प्रवा, प्रकृष्टगतिमन्तौ, 'वा गतिगन्धनयोः' विच् । (यौ च) नाकम्, स्वर्गम् । द्युभिः, दिनैः दिनेषु । अक्तुभिः, रात्रिभिः, रात्रिषु । (च) हितम्, यथा भवति तथा । रक्षेथे, ॥ ८ ॥

(हे) (नासत्या) नासत्यौ । युवयोः त्रिवृतः, त्रील्लोकाँन्वृणोतीति त्रिवृत्, तस्य । रथस्य । त्री, त्रीणि । चक्रा, चक्राणि । क्व, दर्शनोत्कण्ठयैवं पृच्छति । (तस्य च) (रथस्य) वन्धुरः, बन्धुरः, बन्धुराः, उन्नतानताः । त्रयः (प्रदेशाः) क्व । कथं भूताः ? ये । सनीळाः, सनीडाः । (तस्मिन्रथे) रासभस्य वाजिनः योगः कदा (नु भविष्यति) कथं भूते ? येन, रथेन । अस्मदीयम्– यज्ञम् उपयाथः ॥ ९ ॥

(हे) (नासत्या) नासत्यौ । आ गच्छतम् । युवां प्रत्यस्माभिः हविः हूयते । किं च, मधुपेभिः, सौमपैः । आसभिः, आस्यैः । मध्वः, मधु, सोमम् । पिबतम् । उषसोऽपि वक्ष्यमाणत्वात् 'आसभिः' इति बहुवचनम् । युवोः, युवयोः । चित्रम्, अद्भुतम्। घृतवन्तम्, दीप्तिमन्तम् । रथम् । 'सविता, उषसः' इति व्यत्ययेन, सवितुः सुतोषाः । ऋताय, यज्ञाय, यज्ञं गन्तुम् । पूर्वम्, प्रथमतः । (एव) इष्यति, गच्छति । हि । यथा सहागच्छतम्– इति भावः ॥ १० ॥

(हे) (नासत्या) नासत्यौ । (अश्विना, अश्विनौ ।) त्रिभिः । एकादशैः, एकादशानां वर्गैः, त्रयस्त्रिंशद्भिः । देवेभिः, देवैः सह । इह, यज्ञे । (मधुपेयम्, पेयं मधु) पेयं पातव्यं मधु सोमं प्रति । आ यातम् । आगत्य च आयुः (अस्मभ्यम्) प्रतारिष्टम्, प्रयच्छतम् । अस्मदीयानि रपांसि, पापानि । निः मृक्षतम्, शोधयतम् । द्वेषः, द्विषः । सेधतम्, प्रतिषेधतम् । सचाभुवा, सहभुवा सह भवत इति सहभुवौ, अस्माकं सखायौ । भवतम् ॥ ११ ॥

(हे) (अश्विना), अश्विनौ । नः, अस्मभ्यम् । (दातुम्) सुवीरम् रयिम् त्रिवृता रथेन अर्वाञ्चम्, स्वर्गादवागिति यावत् । (आ) वहतम् । किं च, (शृण्वन्ता) शृण्वन्तौ, उक्तमवधारयन्तौ । वाम्, युवाम् । (अहम्) अवसे, रक्षायै । जोहवीमि, आह्वयामि । तस्मात्– वाजसातौ, युद्धे । नः ।

(मन्त्रार्थमञ्जरी)

(अवसे) रक्षायै । वृधे, वृद्ध्यै । च भवतम् ॥ १२ ॥ इति पञ्चमो वर्गः ॥ ५ ॥ चतुस्त्रिंशं सूक्तम् ॥ ३४ ॥

## रूपावतारः

त्रिर्नो अश्विना ॥ यजतेति । यजेरतच्प्रत्यये औकारस्याकारादेशे यजतेति रूपम् । सितनिगमीति । सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (उ.७२) इति तुन्प्रत्यये कृते निष्पन्नो धातुशब्दः धत्त इति हेतोः कालवाचीत्यर्थः । अशायतमिति । शीङो ण्यन्तात् लङादेशथसः तमादेशे अडागमे छान्दसे णिलोपे अशायतमिति रूपम् ॥ ७ ॥

त्रिरश्विना ॥ सप्तमातृभिरिति । ब्राह्मीमाहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डाः सप्त मातर इत्युक्तसरस्वत्यादिमातृभिरित्यर्थः । वेद्युत्तरे युक्ता इति । 'वेद्युत्तरासदश्चैव प्राग्वंशो योनयः स्मृता' इति भाष्ये उत्तरावेदिसदोमण्टपः प्राग्वंशो हविर्गृहात् प्राग्भाग इत्युक्ताः तिस्रः पृथिवीरित्यर्थः ॥ ८ ॥

क्व ॥ चक्रा इत्यत्र जस अकारादेश इति भावेनाह । चक्राणीति ॥ ९ ॥

आनासत्या ॥ व्यत्ययेनेति । उषः शब्दात् परा विभक्तिः सवितृशब्दाज्ज्ञेया । सवितृशब्दात्परा विभक्तिः उषस्शब्दात् ज्ञेयेति भावः ॥ १० ॥

आनासत्या त्रिभिः ॥ तारिष्टमिति । तृधालोर्लुङि थसस्तमादेशे सिचि तस्येडागमे वृद्धौ सिचः सस्य षत्वे छान्दसे अडभावे तारिष्टमिति रूपम् ॥ ११ ॥

आनः ॥ जोहवीमीति । ह्वेञो यङ्लुगन्तस्य 'अभ्यस्तस्य च' (६-१-३३) इति संप्रसारणे द्वित्वे अभ्यासगुणे 'यङोवा' (७।३।९४) इति सूत्रेण ईडागमे धातोर्गुणे अवादेशे जोहवीमीति रूपम् ॥ १२ ॥ ५ ॥ २ ॥

## पदार्थप्रकाशिका

त्रिर्नो अश्विना यजता दिवे दिवे । नन्वयं वर्गो भाष्यकृता कुतो न व्याख्यात इत्यतस्तत्र निमित्तमाह अयं वर्ग इति । भाष्यकृदव्याख्यातवर्गस्य सम्यक् व्याख्याने का भवतां शक्तिरित्यत उक्तं यथामतीति । तर्हि केवलं स्वमतिबलेनैवेदं व्याख्यानं क्रियते न तु सम्प्रदायानुसारेणे-त्यश्रद्धेयत्वपरिहारायोक्तं यथा श्रुतमिति । त्रिःकालत्रय इति । एकैकस्मिन्नपि दिवसे

(पदार्थप्रकाशिका)

प्रातरादिकालत्रय इत्यर्थः । यजतौ याज्याविति । यजेः कर्मण्यतच्प्रत्यय इति भावः । तथाच इज्येते इति यजतावित्यर्थो द्रष्टव्यः । उत्तरत्र याति शुभ्राभ्यां यजतो हरिभ्यामित्यत्र भाष्यकारैर्यजत इत्यस्य याज्य इत्यर्थस्योक्तत्वात्तदनुसारेणेत्थं व्याख्यातमित्यवगन्तव्यम् । कालस्य कथं धातुशब्द-वाच्यत्वमित्यत आह सितनिगमीत्यादिनेति । सितनिगमिसचिअविधाञ् कृशिभ्यस्तुन् । एभ्यो धातुभ्यः कर्तरि तुन्प्रत्ययः स्यादित्युणादिसूत्रार्थः । उदाहरणं तु । सेतुः । तन्तुः । गन्तुः । सक्तुः ओतुः । धातुः । क्रोष्टेत्यादि । तथाच डुधाञ धारणपोषणयोरिति धातोः कर्तरि तुन्प्रत्यये नकारलोपे धातुरिति भवति । कर्त्र्थमेव दर्शयति धत्त इतीति । जगत्प्रवृत्तिं धत्त इत्यर्थः । एवं च कालस्य धातुशब्दार्थत्वात् त्रिधात्वित्यस्य त्रिकालमित्यर्थो युक्त इत्याशयः । परावत इत्यस्यार्थो दूरत इति । रथ्याः रथमार्गाः । सुगमाः सुखेन गन्तुं शक्याः । तस्मादिति । लोकत्रयसम्बन्धिरथमार्गानां युवयोः सुगमत्वादित्यर्थः । वात इव मुख्यप्राण इव । ईश्वरपक्षेऽयं नीचदृष्टान्तः प्रसिद्धाश्विदेवतापक्षे त्वधिकदृष्टान्त इति द्रष्टव्यम् ॥ ७ ॥

त्रिरश्विना सिंधुभिः सप्तमातृभिः ॥ नदीभिः नदीदेवताभिः । सप्तमातृभिरिति ब्राह्माद्याभिः सप्तमातृभिरित्यर्थः । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च महेन्द्राणी चामुण्डा सप्तमातर इत्यमरकोशोक्तेः सप्तमातृशब्दः आसुरूढ इत्यवगन्तव्यम् । अन्ये तु महदहङ्कारपञ्च-भूताभिमानिदेवाः सप्तमातर इत्याहुः । अपरे तु सप्त शिवासु मातृष्वित्युक्तप्रकारेण ऋगादिचतुष्टय भारतपञ्चरात्र मूलरामायणाभिमानिदेवाः सप्तमातर इत्याहुः । वेद्युत्तरेत्युक्ता इति । सादयायोनिषु त्रिष्वित्येतद्व्याख्यानावसरे वेद्युत्तरा सदश्चैव प्राग्वंशो योनयः स्मृता इत्युक्तप्रकारेण पृथिव्यपरपर्याययोनिशब्दवाच्यानि त्रीणि स्थानानि प्रतीत्यर्थः । ननु त्वया आवयोरनाहू-तत्वादस्मद्योग्यह- विषोप्यधुनाऽकृतत्वात्कथमावाभ्यां स्थानत्रयं प्रत्यागन्तव्यमित्यत आह । यत इत्यादि । त्रेधा हविश्चेति । स्थानत्रयेपि हविषः क्रियमाणत्वाद्धविषस्त्रित्त्वं प्रातरादिसवनत्रयेपि हविषः क्रियमाणत्वात्तदभिप्रायेण वा त्रित्वमित्यवगन्तव्यम् । विजिति । प्रोपपदाद्वा गतिगन्धनयोरिति धातोर्विच्प्रत्यये तस्य विब्बत्सर्वस्यापि लोपे प्रवेति रूपम् । क्विपं विहाय विब्करणं स्वार्थमिति मन्तव्यम् । स्वर्गे सर्वदा दिनमेव न रात्रिरस्ति अतो दिनेषु रात्रिष्वित्युक्तेः सर्वदेत्यत्र तात्पर्यं द्रष्टव्यम् । हितं यथेति । तत्रत्यप्राणिनामिति शेषः । भवदुद्देशेन दत्तहविःफलभूतस्वर्गस्य तत्रत्यप्राणिहितकरतया सर्वदा भवद्भ्यां संरक्ष्यमाणत्वात् स्वर्गसाधनीभूतास्मद्धविस्वीकारार्थ-मुक्तस्थानत्रयं प्रत्यागच्छतमित्यृगभिप्रायः ॥ ८ ॥

(पदार्थप्रकाशिका)

क्वात्री चक्रा त्रिवृतो रथस्य ॥ त्रीनिति । लोकत्रयसञ्चरणे प्रतिबन्धकाभावादित्याशयः । त्रीणीति । सूर्यरथस्यैकचक्रवदेतदीयरथस्य चक्रत्रयमस्तीत्यवगन्तव्यम् । हे नासत्यौ युवयोरिति सम्बोधनकरणादिना गगने प्रत्यक्षतया दृश्यमानत्वं तावद्वक्तव्यं अन्यथा युवां पृथिवीः प्रत्यागच्छतमित्याद्ययोगात् । एवं च तदीयरथचक्रबन्धुरनीडरासभानां प्रत्यक्षतो दृश्यमानत्वात्क्वेति प्रश्नो न युक्त इत्यत आह दर्शनोत्कण्ठ्येति । दृष्टेपि वस्तुनि पुनर्दर्शनौत्कण्ठ्यवशात्क्वेति प्रयोगो युक्त इति भावः । रथे गुप्तिस्थानं नीडशब्देनोच्यते । रासभस्य वाजिन इति । अत्र वाजशब्दो वाहनपरः । प्रवृत्ताविदमेव निमित्तम् । एवं चाश्वतरीरूपरासभाख्यवाहकस्येत्यर्थः । कथंभूते । रथ इत्यर्थः ॥ ९ ॥

आ नासत्या गच्छतं हूयते हविः । किमर्थमावामागच्छाव इत्यत आह युवां प्रतीति । हूयते यतोऽत आगच्छतमित्यन्वयः । ननु पिबतोर्नासत्योर्द्वित्वादास्याभ्यामिति वक्तव्यमास्यैरिति कथमुक्तमित्यत आह उषसोपीति । वक्ष्यमाणत्वादिति । उत्तरार्धे इति शेषः । तथा चाश्विनोरास्यद्वयं उषसश्चैकमास्यमित्यास्यत्रयविवक्षयाऽऽस्यैरिति बहुवचनं युक्तमित्यर्थः । दीप्तिमन्तमिति । घृ क्षरणदीप्त्योरिति भावः । व्यत्ययेनेति । सवितोषस इति प्रथमाषष्ठीविभक्त्योर्व्यत्ययेनेत्यर्थः । उषस इत्यत्रत्यायाः षष्ठ्याः सवित्रपदे सम्बन्धः । सवितेत्यत्रत्यायाः प्रथमाया उषस्पदे सम्बन्धः कल्पनीय इति भावः । व्यत्यये सति कथमर्थः सम्पन्न इत्यत आह सवितुः सुतोषा इति । प्रथमत एवेति । युवयोः सकाशात्प्रथमत एवेत्यर्थः । इष्धातोरनेकार्थत्वमभिप्रेत्याह गच्छतीति । प्राप्नोतीत्यर्थः । गन्तुं रथमारुह्य तत्र सन्नद्धतयोपविष्टास्तीति भावः । अस्यार्थस्याश्विनत्वसिध्यर्थमाह तया सहेति । युवयोः पूर्वरथमारूढ्या उष आख्यस्त्रिया सहागत्य सोम पिबतमित्यर्थः । तथा चास्यार्धस्याश्विनत्वसिद्धिरिति भावः ॥ १० ॥

आ नासत्या त्रिभिरेकादशैरिह । एकादशैरिति । अत्र यद्यपि पञ्चद्दशतौ वर्गे वेति सूत्रे वर्गार्थे पञ्चत् दशत् इति निपातनात् प्रकृतेप्येकादशशब्दस्य वर्गार्थत्वेन एकादशदिति भाव्यं तथा चैकादशतैरिति वक्तव्यं तथापि वाशब्दात् दशशब्दस्यापि निपातनमङ्गीकृत्यैवमुक्तमित्यवगन्तव्यम् । यथोक्तं टीकाकारैः प्रपञ्चो यदि विद्यतेत्येतद्व्याख्यानावसरे पञ्चद्दशतौ वर्गे वेति वाशब्दात्पञ्चशब्दस्यापि निपातनाङ्गीकारादिति । केचित्तु तत्र दशशब्दस्य वर्गार्थत्व एव सविचारः अयं त्वेकादशशब्दोऽतो नात्र पूर्वोक्तशङ्काप्रसक्तिरिति नायं समाधिर्युक्त इत्याहुस्तत्तुच्छम् । तथात्वे पञ्चशब्दोपर्येव स विचार इति प्रपञ्चशब्दोपरि तत्प्रसक्तेरभावात्प्रपञ्चो यदीत्यत्र टीकाकारीयं

(पदार्थप्रकाशिका)

समाधानकरणमनुपपन्नमेव प्रसज्येतेति। नन्वेकादशानां त्रयो वर्गाः मिलित्वा कियन्तः सम्पन्ना इत्यत आह त्रयस्त्रिंशद्भिरिति। अत्र यद्यपि नवकोटयो हि देवानामिति वचनाद्देवा इतोप्यतिबहवः सन्ति तथापि प्रधानदेवा एतावन्त इति ज्ञातव्यम्। कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिंशादिति होवाचेति वाक्यव्याख्यानावसरे बृहद्भाष्ये एवं प्राधान्यतो देवास्त्रयस्त्रिंशत्प्रकीर्तिता इति भगवत्पादैरुक्तत्वादिति ज्ञातव्यम्। रयांसि पापानीति। तन्नामसु पाठादिति भावः। शोधयतम्। प्रक्षालयतम्। द्विषो द्वेषिजनात्। सह भुवाविति। सचेत्ययं सहार्थे सहस्थितावित्यर्थः। तत्तात्पर्यं अस्माकमिति। लोके सखायावेव सहभुवौ प्रसिद्धाविति भावः॥ ११॥

आ नो अश्विना त्रिवृता रथेन। सुवीरं पुत्रं रयिं द्रव्यम्। अर्वाञ्चं स्वर्गादर्वाक्। भूलोके स्थितानामस्माकं दातुं सुवीरं रयिं च रथेन वहतमित्यन्वयः। पुत्रं द्रव्यं च रथे स्थापयित्वाऽस्माकं दातुमायातमिति भावः। त्रिवृतेति। त्रीन् लोकान् वृणोतीति त्रिवृत् तेनेत्यर्थः। लोकत्रय सञ्चरणे प्रतिबन्धकशून्येनेति यावत्। उक्तं भोक्तोक्तम्। अवधारयन्तौ सम्यक् हृदि धारयन्तौ। आह्वयामि यस्मात्। युद्ध इति वाजस्य वैरिधनस्य सातिर्लाभो यस्मादिति व्युत्पत्या युद्धं वाजसातिरित्युच्यत इत्यर्थः। अवस इत्यस्यात्राप्यनुवृत्तिरभिप्रेता। वृधे चेति चशब्दप्रयोगादित्यभिप्रेत्योक्तं रक्षाया इति वृध्यै इति। वैरिपराभवहेतुभूतबलाद्यभिवृध्या इत्यर्थः॥ १२, ५, २॥ (३४)॥

## पदार्थदीपिका

यजतौ याज्यौ। यजेः कर्मण्यतच् प्रत्ययः। इज्येते स्तोतौ यजतावित्यर्थः। सुपां सुलुगित्यौकारस्याकारः। सितेति। अनेनाणौदिकसूत्रेण धाञस्तुप्रत्ययविधानात्त्रिधात्विति युक्तमिति भावः। रथ्याः सुगमाः सन्तीति पाठः॥ ७,८,९॥

मधुपेभिरिति। मधु सोमं पिबन्तीति मधुपानि। आतोऽनुपसर्गे क इति कः। आतो लोप इटि चेत्यालोपः। आसभिरिति। पद्दन्नित्यादिना आस्यशब्दस्यासन्नादेशः। मध्वो मधु लिंगव्यत्ययः। शसि यणादेशः छान्दसः। बहुवचनमेकवचनार्थ इति भावः। बहुवचनं आसभिरिति बहुवचनमित्यर्थः॥ १०॥

पेयमिति। पा पाने अचो यदिति कर्मणि यत्। ईद्यतीत्यकारस्येकारादेशः। प्रतारिष्टमिति। तॄ प्लवनतरणयोरिति। अनेकार्थत्वादिह दानार्थः। छान्दसे प्रार्थनायां लुङि च्लेःसिच् इडागमः। वृतो वेति प्राप्तस्य दीर्घस्य सिचि च परस्मैपदेष्विति प्रतिषेधः। बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः।

(पदार्थदीपिका)

मृक्षतं छन्दसि लुङ् लङ् लिट इति लोडर्थे लुङ्। शल इगुपधादनिटः क्स इति च्लेःक्सादेशः। एकाच उपदेशेऽनुदात्तादिति इट् प्रतिषेधः। षत्वकुत्वे। पूर्ववदडभावः। सेधतं प्रतिसेधतम्। षिधू गत्याम्। अत्र केवलोपि षिधिः प्रतिपूर्वस्यार्थे वर्तते। प्रार्थनायां लोडिति ज्ञातव्यम्। सचाभुवा। सचेत्ययं निपातः सहशब्दसमानार्थः। तथा च यास्कः। सचा सहेत्यर्थे इति सचाभवत इति सचाभुवा सहभुवा। क्विप्। सुपीति यणादेशस्य न भूसुधियोरिति प्रतिषेधः। सुपां सुलुगिति विभक्तेराकारः ॥ ११ ॥

श्रुण्वन्तौ। श्रु श्रवणे शतरि श्रुवः शृ चेति शृः श्रुभावश्च। हुश्नुवोः सार्वधातुक इति यणादेशः। सुपां सुलुगित्याकारः। जोहवीमि। ह्वेञ् स्पर्धायां शब्दे च यङ्लुकि अभ्यस्तस्य चेति कृतसम्प्रसारणादस्माल्लडुत्तमैकवचने यङो वेति इडागमः। वाजसातौ। षू दाने किनि तु तन्त्रेत्यादिना इट्प्रतिषेधः। जनसनेत्यात्वम्। वृधे। वृधु वृद्धौ। अस्मात्संपदादित्वाद्भावे क्विप्॥ १२, ५ ३४ ॥

## टीकाविवृतिः

त्रिर्नो अश्विना यजता ॥ भाष्यकारैरेतद्वर्गव्याख्यानाकरणे निमित्तमाह ॥ अयं वर्ग इति ॥ स्वोक्तमार्गेण बुद्धिमन्तःशिष्याःकथं व्याकरिष्यन्तीति ज्ञातुमयं वर्गो न व्याख्यात इत्यर्थः ॥ त्रिःकालत्रय इति ॥ दिवे दिवे प्रतिदिवसं सायं प्रातर्मध्याह्नरूपकालत्रय इत्यर्थः ॥ यजतौ याज्याविति ॥ भृमृदृशि यजि पर्विपच्यमितमिनमिहर्येभ्योऽतजिति सूत्रेण यजेरुणादयो बहुलमित्युक्तेःकर्मण्यतच्प्रत्यय इति भावः ॥ सितनिगमीत्यादिनेति ॥ सितनिगमिमसि-सच्यविधाञ्क्रुशिभ्यस्तुन्निति तुन्प्रत्ययः। कालाध्वनोरत्यन्तसंयोग इति सूत्रेण कृतद्वितीयायाः सुपां सुलुगिति लुकि त्रिधात्विति रूपमिति भावः ॥ अशायतमिति ॥ शीङोणिजन्ताल्लङि शपि छान्दसो णिलोप इति भावः ॥ परावतो दूरत इति ॥ आरे परावत इति दूरनामसु पाठादिति भावः ॥ रथ्या इति ॥ रथशब्दाद्रथाद्यदिति इदमर्थे यत्प्रत्ययःरथांग एव विधानादिति काशिका तु रथ्या प्रतोली विशिखेत्यभिधाने तत्श्रुतिविरोधाच्चोपेक्ष्या। रथगमनवीथिका इत्यर्थः ॥ स्वसराणि सर्वेषु दिनेष्विति ॥ वासरं स्वसराणीत्यहर्नामसु पाठादिति भावः ॥ ७ ॥

त्रिरश्विना ॥ सप्तमातृभिरिति ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुंडा सप्तमातर इत्युक्तेःसरस्वत्यादिसप्तमातृभिरित्यर्थः ॥ वेद्युत्तरेत्युक्ता इति ॥ वेद्युत्तरा सदश्चैव प्राग्वंशो योनयःस्मृता इत्यनेन भाष्येण सादयायोनिषु त्रिष्वित्येतद्व्याख्यानावसरे उत्तरावेदिःसदो मण्टपश्च हविर्गृहात्प्राग्भागः प्राग्वंशाख्य इति देवतासादनार्थमुक्ताः

(टीकाविवृतिः)

योनिशब्दपर्यायाःपृथिवीरित्यर्थः ॥ आह्वावा इति ॥ आङ्पूर्वात् ह्वेञो घञि बहुलं छन्दसीति संप्रसारणेन वकारस्योकारादेशे तस्य वृद्ध्यावादेशाविति भावः ॥ त्रेधेति ॥ चर्वाज्यपुरोडाशरूपेणेति शेषः ॥ विजिति ॥ वातेर्धातोरातो मनिन्क्वनिब्वनिपश्चेत्यत्र चकाराद्विचोनुकर्षणाद्विचि तस्य वेरपृक्तस्येति लोपे प्रथमाद्विवचनस्य सुपां सुलुगिति लुगिति भावः ॥ द्युभिर्दिनैरिति ॥ द्युर्भानुरित्यहर्नामसु पाठादिति भावः ॥ उक्तुभीरात्रिभिरिति ॥ शर्वरी अक्तुरितिरात्रिनामसु पाठादिति भावः ॥ हितं यथेति ॥ भक्तानां सुखकरं यथेत्यर्थः । श्रुतौ रक्षेथे इत्यात्मनेपदं व्यत्ययेनेत्याशयेनाह ॥ रक्षथ इति ॥ सर्वदेत्यर्थकःत्रिरित्यत्रैवान्वेति ॥ ८ ॥

क१त्री ॥ त्रींल्लोकान्वृणोतीति ॥ गमनेन लोकत्रयसंबन्धवानित्यर्थः । नासत्यस्तोत्र प्रसङ्गे चक्रादिप्रश्नःकुत इत्यत आह ॥ दर्शनोत्कण्ठयेति ॥ नासत्ययोरिति शेषः ॥ बन्धुरा उन्नतानता इति ॥ बन्धूरबन्धुरौ रम्ये नम्रे हंसे तु बन्धुरं इति विश्वोक्तेः उन्नताःरम्याःनता नम्रा इति वा बन्धुरशब्दार्थ इति भावः ॥ सनीडा इति ॥ पक्षिनिवासगृहसहिता इत्यर्थः ॥ रासभस्य वाजिन इति ॥ वेति शेषः ॥ गर्दभस्य वा अश्वस्य वा योग इत्यर्थः ॥ ९ ॥

आनासत्यागच्छतम् ॥ युवां प्रतीति ॥ अत्र यत इति शेषः । आगच्छतमित्यत्रात इति शेषः ॥ आसभिरास्यैरिति ॥ पद्दन्नोमासित्यादिना आस्यशब्दस्यासन्नित्यादेशे भिसि नलोप इति भावः । ननु नासत्ययोर्द्वित्वान्मुखद्वित्वेन आसभ्यामिति वक्तव्ये बहुवचनं कथमित्यत आह ॥ उषसोपीति ॥ घृतवन्तं दीप्तिमन्तमिति ॥ घृक्षरणदीप्त्योरित्यतो भावे क्त प्रत्ययांतान्मतुबिति भावः ॥ व्यत्ययेनेति ॥ सवितृशब्दात्षष्ठ्याःसुपां सुलुगिति सु इत्यादेशः । उषस्शब्दात्प्रथमायाःव्यत्ययेन षष्ठ्यादेश इतिभावः ॥ ऋताययाज्ञायेति ॥ ऋतमुंछशिले तोये दीप्ते सत्येभिपूजित इति विश्वोक्तेःऋतं पूजितम् । अत्र यज्ञप्रकरणाद्यज्ञाख्यमिति भावः ॥ इष्यति गच्छतीति ॥ इषगतावित्यस्माद्दिवादित्वाच्छ्यन्निति भावः । यज्ञं प्रति गन्तुम् । उषसो रथं प्रतिगमनोक्तेःकथमुपयोग इत्यतोभिप्रायमाह ॥ तया सहेति ॥ अत इति शेषः । पूर्वत्र हिशब्दो यस्मादित्यर्थः ॥ १० ॥

आनासत्यात्रिभिः ॥ एकादशैरेकादशानां वर्गैरिति ॥ एकादशशब्दाद्वर्गार्थे तद्धितो डप्रत्यय इति भावः ॥ त्रयस्त्रिंशद्भिरिति ॥ अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चैते देवाःसोमपा इति ब्राह्मणोक्तैरिति शेषः । मधुपेयमिति कर्मधारये पेयमिति विशेषणस्य कडाराःकर्मधारय इति परनिपात इत्याशयेन तत्पदं व्याचष्टे ॥ पेयं पातव्यं मधु सोममिति ॥ रपांसिपापानीति ॥ रपवध इत्यतःकरणे असुन्प्रत्ययः रप्यते वध्यते नरकादौ यैःपापैस्तानि रपांसीति

(टीकाविवृतिः)

भावः ।। मृक्षतमिति ।। मृजूष् शुद्धावित्यतो लोटि थसस्तमित्यादेशे शपोऽदादित्वेप्यलुकि छान्दसे सगागमे व्रश्चभ्रस्जेत्यादिना षत्वे षढोःकःसीति कत्वमिति भावः ।। द्वेषोद्विष इति ।। द्विष अप्रीतावित्यतो विच्युपधागुणे षान्तद्वेष् शब्दाद्वितीयाबहुवचने द्वेष इति रूपमिति भावः ।। सचाभुवेति ।। सहशब्दहकारस्य वर्णव्यत्ययेन चकारादेशे अन्येषामपि दृश्यत इति दीर्घः । सहविद्यमानावित्यर्थः । तात्पर्यार्थमाह ।। अस्माकं सखायाविति ।। ११ ।।

आनो अश्विना ।। सुवीरमिति ।। शोभनो वीरः पुत्रो यस्य तं पुत्रसहितमित्यर्थः ।। स्वर्गादर्वागितीति ।। स्वर्गापेक्षया अधमफलरूपं इत्यर्थः ।। वहतमिति ।। स्वर्गादर्वाचं सुवीरं रयिमस्मभ्यं दातुं रथेनास्मान्प्रापयतमित्यर्थः ।। जोहवीमीति ।। ह्वेञो बहुलं छन्दसीति संप्रसारणे यङ्लुकि द्वित्वादीति भावः ।। वाजसाताविति ।। वाजशब्दस्य युद्धनामसु पाठात्षै क्षये इत्यस्य क्तिन्नंतस्य धातूनामनेकार्थत्वात्प्राप्त्यर्थत्वमिति भावः । अत्राप्यवसे इत्येतदनुवृत्तिमाश्रित्याह ।। रक्षाया इति ।। वृधे इति ।। वृधेर्भावे किबिति भावः ।। १२ ।।

ऋक्संहिता पदपाठसहिता (सू-३५, व-१)

(४११) ह्वया॑म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒ ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से । ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒ ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑ ।। १ ।।

(प०) ह्वया॑मि । अ॒ग्निम् । प्र॒थ॒मम् । स्व॒स्तये॑ । ह्वया॑मि । मि॒त्रावरु॑णौ । इ॒ह । अव॑से । ह्वया॑मि । रात्री॑म् । जग॑तः । नि॒ऽवेश॑नीम् । ह्वया॑मि । दे॒वम् । स॒वि॒तार॑म् । ऊ॒तये॑ ।। १ ।।

(४१२) आ कृ॒ष्णेन॒ रज॑सा॒ वर्त॑मानो नि॒वेश॑यन्न॒मृतं॒ मर्त्यं॑च । हि॒र॒ण्यये॑न सवि॒ता र॒थेना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ।। २ ।।

(प०) आ । कृ॒ष्णेन॑ । रज॑सा । वर्त॑मानः । नि॒ऽवे॒शय॑न् । अ॒मृत॑म् । मर्त्य॑म् । मर्त्य॑म् । च॒ । हि॒र॒ण्यये॑न । स॒वि॒ता । रथे॑न । आ । दे॒वः । या॒ति॒ । भुव॑नानि । पश्य॑न् ।। २ ।।

(४१३) याति॑ दे॒वः प्र॒वता॑ यात्यु॒द्वता॑ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम् । आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒विश्वा॑ दु॒रि॒ता बाध॑मानः ।।३।।

(ऋक्संहिता पदपाठसहिता)

(प०) याति । देवः । प्रऽवता । याति । उत्ऽवता । याति । शुभ्राभ्याम्। यजतः । हरिऽभ्याम् । आ । देवः । याति । सविता । पराऽवतः। अप । विश्वा । दुःऽइता । बाधमानः ॥३॥

(४१४) अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम् । आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥ ४ ॥

(प०) अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः। बृहन्तम् । आ । अस्थात् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥ ४ ॥

(४१५) विजनाञ्छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहन्तः । शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५ ॥

(प०) वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः । शश्वत् । विशः । सवितुः । दैव्यस्य। उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ ५ ॥

(४१६) तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् । आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥६,६॥

(प०) तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने । विराषाट् । (आणिम् । न । रथ्यम् । अमृता । अधि । तस्थुः । इह । ब्रवीतु । यः । ऊँइति । तत् । चिकेतत् ॥६,६॥

## ऋग्भाष्यम्

ह्वयामि देवानग्निपूर्वानथो वा विष्णुं तैस्तैर्नामभी राति यस्मात् । रतित्वाद्वारतिदत्वात्सरात्री ॥ १ ॥ कृष्णं रजः शार्वरं हृत्तमोवा । देवान्नृजातानथवा विमुक्तानन्यान्मर्त्यान्सृतिगान्वा लयेषु । निशासु वा स्वात्मनि संनिवेशयन्प्रस्वापयन्वा

रविगो जनार्दनः ॥ २ ॥ आयाति नित्यं चोच्चनीचैः प्रदेशैः शुभ्राश्वयुक्तेन रथेन याज्यः । शुभौच तौ रमणीयौ च शुभ्रौ पुरोगाश्वौ हरिदश्वोहि सूर्यः । परावतोदूरतः ॥ ३ ॥ अभीवृतश्चरथो हिरण्यैस्तस्य शम्या युगाणी । तमः प्रकाशौ यदधीनौ यतस्तौ दधान इत्युच्यते वासुदेवः । कृष्णं रजस्तविषी सत्त्वपूर्वा गुणास्त्रयो व्युत्क्रमात् ॥ ४ ॥ तत्तुरङ्गाः । श्यावाः श्यामत्वान्नीलपादो जगत्ते पश्यन्ति संधिः प्रउगं रथस्य । देवप्रियत्वाद्दैव्यनाम्नो हरेस्तु समीपस्थं सर्वगत्वाज्जगद्धि ॥ ५ ॥ तिस्रोद्यावो मात्र यं द्वावुपस्थौ जडाजडे श्रीर्विराषाडधीश । विश्वस्य साक्षाद्भगवान्नियंता यमोस्य सर्वं गदितं सदैव । जडाजडत्वान्नान्यमुक्तं पृथग्घि सर्वस्वाम्यं वक्तुमेवोदिता श्रीः । अन्योन्यसम्बन्धविवक्षयैव ह्युपस्थत्वं मुक्तभूतानि यानि । अशेषतस्तानि रथस्य यद्वदाणिं रथ्यं संश्रितं सर्वदैव । एवं हरिं संश्रितान्यब्जजेशपूर्वाण्यपीत्येष वेदार्थसारः । इह ब्रवीत्वन्यथा योभिपश्ये कुर्याद्वा तद्यो यथावच्च पश्येत् । शेषं ज्ञानं स ब्रवीत्वस्मदर्थे च कार यो विष्णुरेतत्सवानः ॥ ६, ६ ॥

## ऋग्भाष्यटीका

ह्वयाम्यग्निम् । एकादशर्चमिदं सूक्तम् । तत्राद्या लिङ्गोक्तदैवतपादा । शेषाः सावित्र्यः । प्रथमां प्रतीतदेवतासु विष्णौ च क्रमेण संक्षेपतो व्याचष्टे ॥ ह्वयामीति । तैस्तैरग्न्यादिनामभिर्युक्तम् । प्रागव्याख्याततत्वाद्रात्रिशब्दं विष्णौ निर्वक्ति ॥ रातीति । राति ददाति यस्मात्तस्मात्स विष्णू रात्री । रातेःष्ट्रप्रत्ययः । रतित्वाद्रतिकर्तृत्वात् रमेः ष्ट्रो डिच्च । रतिदत्वाद्वा रतं रातीति रतशब्दाद्याकारस्यदीर्घो द्वितीयस्य लोपः । रातेश्च कः । स्त्रियामीकारः । तथा चायमर्थः । अहं स्वस्तये सन्ततसौख्याय । प्रथमं वैश्वानराख्यमग्निं ह्वयाम्याह्वयामि । मित्रावरुणौ चावसे रक्षणायेह यज्ञे ह्वयामि । जगतो निवेशनीं निविशन्तेऽत्रेत्याश्रयभूतां रात्रीं ह्वयामि । सवितारं देवं चोतये रक्षायै ह्वयामीति ॥ १ ॥

आकृष्णेन । अत्र कृष्णं रजोबहिरन्तश्च व्याख्याति । कृष्णमिति । शार्वरन्तम इति सम्बन्धः । देवोऽमृतं मर्त्यं च निवेशयन्नायाति इत्येतद्द्वेधा व्याचष्टे ॥ देवानिति । अथवेति पूर्वेण सम्बन्धः । मर्त्यानित्यनुवादेन सृतिगानिति व्याख्यानम् । ततश्चायमर्थः । देवः सविता । कृष्णेन रजसा शार्वरेण तमसा । तत्प्रवर्तकतयेति यावत् । आवर्तमानः प्रवर्तमानोऽमृतं देवजातम् । मर्त्यं नृजातं च । उपलक्षणमेतत् । अन्यानपि प्राणिनो निवेशयन्निशासु प्रस्वापयन्हिरण्य येन हिरण्मयेन । रथेन भुवनानि पश्यन्नायातीति । यद्वा सविता देवो रविगो जनार्दनः । कृष्णेन रजसा आवर्तमान इत्यादि पूर्ववत् । रविगतत्वं विनापि जगत्प्रसविता विष्णुः ।

(ऋग्भाष्यटीका)

कृष्णेन रजसाऽविद्याख्येन हृत्तमसा। आवर्तमानोऽमृतं विमुक्तवर्गम्। मर्त्यं च सृतिगजातं च। निवेशयं ह्रयेषु स्वात्मनि सन्निवेशयन्वासयन्हिरण्ययेन स्वीयेन रथेन भक्तानां शुद्धेन शरीरेण वा भुवनानि पश्यन्नायातीति॥ २॥

याति देवः। अत्र पूर्वपादार्थमाह॥ आयातीति। एतत्पदं पूर्वत्रापि सम्बध्यते। पूर्वं रथेनायातीत्युक्तम्। अत्र शुभ्राभ्यां हरिभ्यामिति तदविरोधेन व्याख्याति। शुभ्रेति। यजत इत्यस्यार्थो याज्य इति। यजेरतप्रत्ययः। शुभ्रशब्दः श्वेतवाचीति प्रतीतिनिवारणायाह॥ शुभौ चेति॥ रमेर्डः पूर्वपदाकारलोपश्च। शुभौ गत्यादिना। रमणीयौ रूपेणेति शुभ्रावित्यर्थः। ननु सूर्यस्य सप्ताश्वाः तत्र कथं द्वयोरेव ग्रहणं प्राधान्यादित्याह। पुरोगेति। शुभ्रशब्दस्य प्रसिद्धार्थपरित्यागे को हेतुरित्यत आह॥ हरिदिति॥ परावत इत्येतदनूद्य व्याचष्टे॥ परावत इति॥ तथा चायमर्थः। आयातीत्युक्तानुवादेन विशेषणान्युच्यन्ते। देवः सविता। प्रवता प्रवणेन। क्वचिन्नीचैः प्रदेशैरायाति। क्वचिदुद्धतोन्नतेनोच्चैः प्रदेशैरायाति। नित्यमिति शेषः। एतच्च क्रियासातत्ये लडिति ज्ञापनार्थम्। किं च यजतो याज्यः। शुभ्राभ्यां हरिभ्यां शुभ्राश्वयुक्तेन रथेनायाति। अपि च सविता देवः। प्राणिनां विश्वानि दुरितान्यपबाधमानः। परावतो दूरत आयातीति॥ ३॥

अभीवृतम्। अत्र रथस्य कृशनैरभीवृतत्वं विशेषणमुक्तम्। तद्व्याचष्टे। अभीवृतश्चेति। कृशनशब्दस्य हिरण्यनामसु पाठात्। तस्य सवितुः। शम्याशब्दं व्याख्याति। शम्येति। युगाणी युगकीलम्। तदयमर्थः। यजतो याज्यश्चित्रभानुः। कृष्णानि रजांसि तमांसि। तविषीं तेजश्च दधानः। कृशनैरभीवृतमाच्छादितम्। विश्वरूपं विचित्रम्। हिरण्यशम्यं हिरण्मयशम्यम्। बृहंतं रथमास्थात् अधिष्ठितवानिति। अत्र तमसः परस्तात् न तत्र सूर्यो भाति इत्युक्तेः परमेश्वरे कथं तमःप्रकाशौ दधान इति वचनमित्यत आह। तम इति। तमः प्रकाशौ प्रवृत्तौ यदधीनौ यतश्चोत्पन्नौ। स वासुदेवस्तौ दधान इत्युच्यते। कृष्णेत्यादिपदार्थानन्यथाप्याह॥ कृष्णमिति॥ कृष्णा रजांसीति प्राक्समानाधिकरणतया व्याख्यातमिदानीं तु पृथक् वृत्त्यपेक्षया बहुवचनमित्यभिप्रायेण कृष्णं रज इत्युक्तम्। सत्वपूर्वास्त्रयो गुणाः कृष्णं रजस्तविषीति पदत्रयेणोच्यन्ते इत्युक्ते यथाक्रममिति प्रतीतिः स्यात् न च कृष्णत्वं सत्वे तविषीत्वं तमसि शक्यसमर्थनमत उक्तम्। व्युत्क्रमादिति। कृष्णत्वं तमस्यजामेकामित्यादौ प्रसिद्धम्। प्रकाशहेतुत्वात्सत्वं तविषी॥ ४॥

विजनान्। तत्तुरङ्गाः। श्यामत्वाच्छ्यावाः। शितिपादो नीलपादो हिरण्यप्रउगं रथम्। जनान् प्रति वहन्तः सामर्थ्यात्तत्तुरङ्गास्तस्य सवितुः ते प्रसिद्धास्तुरङ्गाः। शश्वत्सर्वदा। विशः प्रजाः जगदिति यावत्। व्यख्यन्। अपश्यन्पश्यन्ति। यस्याश्वा अपि सर्वदर्शिनः किमुतासाविति। प्रउगं किमुच्यत इत्यत आह॥

(ऋग्भाष्यटीका)

सन्धिरिति । रथस्य रथावयवानाम् । ततश्च हिरण्योपनिबद्धसन्धिमित्यर्थः । किंच विश्वानि भुवनानि जगदिति यावत् । दैव्यस्य देवप्रियत्वाद्दैव्यनाम्नः सवितुर्हरेस्तु हरेरेवोपस्थे समीपे तस्थुः समीपस्थं वर्तते । कथं सर्वगतत्वात् तच्च यच्च किंचिदित्यादि श्रुतिसिद्धमिति ॥ ५ ॥

तिस्रो द्यावः । इह तिस्रो द्याव इति अनूद्य व्याचष्टे । तिस्र इति । प्रत्यक्षानुमानागमजन्यं प्रमात्रयम् । द्युत्यर्थस्य दीव्यतेर्भावे रूपमेतत् । द्वावुपस्थावित्यनूद्याभिधेयमाह । द्वाविति । विराषाडित्यस्याभिधेयं निमित्तं चाह ॥ श्रीरिति । यमशब्दस्य सनिमित्तमभिधेयमाह ॥ विश्वस्येति । अस्य पदस्य पूर्वत्रापि सम्बन्धः । यच्छतेः पचाद्यच् । पूर्वार्धपदानां सङ्क्षेपतो घटनां सूचयति ॥ अस्येति ॥ गदितं सर्वं द्युत्रयाश्रयत्वादिकं सदैवास्य भगवतः । तदयमर्थः । तिस्रो द्यावोय मस्य सवितुरुपस्थाः समीपवर्तिन्यः । तथा द्वौ जडाजडवर्गावुपस्थौ । एवं भुवने विषये विरापाडेकाऽद्वितीया तस्योपस्थेति । ननु सर्वं विश्वं जडाजडवर्गद्वयांतर्भूतं तत्किमर्थं पृथकू प्रमाग्रहणमित्यत आह ॥ जडेति । जडाजडशब्दाभ्यां हि यत्केवलं जडं यच्च केवलं चैतन्यं तल्लभ्यते । न तूभयसमाहारात्मकम् । तथाविधं च मानं प्रमात्रयम् अतः पृथगुक्तम् । न च जडभागो जडशब्देन चैतन्यं चाजडशब्देन ग्रहीष्यत इति वाच्यम् । संसारे चैतन्यस्य मनोवृत्तेश्च संवलनेनैव प्रवृत्त्या पृथक्करणायोगात् । तथात्वं चान्यत्रोदाहृतप्रमाणसिद्धमिति हिशब्दः । तर्हि केवलचैतन्यरूपा श्रीर्न पृथग्वक्तव्येत्यत आह ॥ सर्वेति ॥ पृथगिति वर्तते सत्यं सामान्यतो लब्धापि श्रीः सर्वस्वाम्यं वक्तुं पृथगुदिता । तच्च सवितुरुत्कर्षायोपयोक्ष्यते । ननु च द्युत्रयादिक स्य समीपस्थत्वोक्त्या सवितुः का स्तुतिः कृता स्यादित्यत आह ॥ अन्योन्येति । अन्योन्यसम्वन्धो नियम्यनियामकभावादिरिह विवक्षितः । तृतीयपादं व्याख्याति । मुक्तेति ॥ न केवलं संसारिणामाश्रयो हरिः किन्नाम रथ्यं रथसम्बन्धि वस्तुजातं रथस्याणिं न यद्वत्सर्वदैव संश्रितम् एवममृतानि मुक्तभूतानि यानि तान्यब्जजेशपूर्वाण्य-शेषतोप्यधि तस्थुराश्रितानि वर्तन्ते । सवितारं हरिमिति प्रकरणाल्लभ्यते । एतत्प्रशंसामात्रं न पुनरत्र तात्पर्यमित्यद्वैतिनस्तन्निरासायाह । इत्येष इति । वेदार्थसारो वेदतात्पर्यगोचरोर्थः । कुत इत्याकाङ्क्षानिरासार्थत्वेन चतुर्थपादार्थमाह ॥ इहेति । य उ य एव तत् । उक्तं प्रमेयं चिकेतत् पञ्चमो लकारः । अभिपश्येदन्यथेति शेषः । स इह मम पुरतो ब्रवीतु । चिकेतदित्यस्यार्थान्तरं कुर्याद्वेति । अन्यथेत्यत्रापि सम्बध्यते । बाधकाभावादिति भावः । कालान्तरे विपरीतकरणाशङ्कानिरासाय कुर्याद्वेत्युक्तम् । चतुर्थपादं प्रकारान्तरेण व्याचष्टे ॥ तद्य इति । तत्सवितुः स्वरूपं ममैतावत् ज्ञातम् । य उ यस्तु । चिकेतत् यथावदेवातिशयेनेति यावत् । पश्येत् । स इह अस्मासु अस्मदर्थे शेषं ज्ञानम् अस्मदविदितं तत्स्वरूपं ब्रवीतु । प्रकारान्तरेण व्याख्याति । चकारेति । य एव विष्णुस्तदेतद्विश्वं चिकेतच्चकार । स इह नः प्रति । स्वस्वरूपं ब्रवीत्विति वेति ॥ ६, ६ ॥

## मन्त्रार्थमञ्जरी

अथ 'ह्वयाम्यग्निम्' इत्येकादशर्चं वर्गद्वयात्मकं पञ्चत्रिंशं सूक्तम्। तत्र आद्या लिङ्गोक्तदैवतपादा, शिष्टाः सावित्र्यः। (आद्या नवमी च जगत्यौ, शिष्टास्त्रिष्टुभः) (अहम्) स्वस्तये, सन्ततसौख्याय। प्रथमम्। वैश्वानराख्यम्– अग्निम्, ह्वयामि, आह्वयामि। मित्रावरुणौ (च)। अवसे, रक्षणाय। इह, यज्ञे। ह्वयामि। जगतः। निवेशनीम्, निविशन्तेऽत्रेत्याश्रयभूताम्। रात्रीम्, राति ददातीष्टमिति रात्रीनामकं विष्णुम्, रात्रिदेवतां च, रातेः त्रिप्प्रत्ययः। ह्वयामि। सवितारम् देवम्। (च) ऊतये, रक्षायै। ह्वयामि। इत्यर्थः। अग्न्यादिपदानि प्राक् विष्णौ निरुक्तानि॥ १॥

देवः सविता। कृष्णेन रजसा, शार्वरेण तमसा, तन्निवर्तकतयेति यावत्। आ वर्तमानः, प्रवर्तमानः। अमृतम्, देवजातम्। मर्त्यम्, नृजातम्। च। उपलक्षणमेतत् अन्यानपि प्राणिनः। निवेशयन्, निशासु प्रस्वापयन्। हिरण्ययेन, हिरण्मयेन। रथेन भुवनानि पश्यन् आ याति इति। यद्वा– सविता देवः, रविगो जनार्दनः। कृष्णेन रजसा आ वर्तमानः' इत्यादि पूर्ववत् रविगत्वं विनापि (सविता देवः) जगत्प्रसविता विष्णुः। कृष्णो न रजसा, अविद्याख्येन हृत्तमसा, तन्निवर्तकतया। आ वर्तमानः। अमृतम्, मुक्तवर्गम्। मर्त्यम्, संसारिजातम् च। निवेशयन्, लये स्वात्मनि निवेशयन्, वासयन्। हिरण्ययेन। स्वीयेन रथेन। भक्तानां शुद्धेन शरीरेण वा भुवनानि पश्यन् आ याति इति॥ २॥

(आ) याति इत्युक्तानुवादेन विशेषणान्यत्र उच्यन्ते देवः (सविता)। प्रवता, प्रवणेन, क्वचिन्नीचैः प्रदेशैः। (आ) याति, क्वचित्– उद्वता, उन्नतेन, उच्चैः प्रदेशैः। (आ) याति, क्रियासातत्ये लट्, नित्यमायाति इत्यर्थः। किं च, यजतः याज्यः, यागविषय इति यावत्। शुभ्राभ्याम्, रूपेण रमणीयाभ्याम् इत्यर्थः, रमेः डः, उपपदाकारलोपः, शुभौ च तौ (रौ च) रमणीयौ यौ च– इति विग्रहः। हरिभ्याम्, अश्वाभ्याम्। (युक्तेन रथेन) (आ) याति। सवितुः सप्ताश्वत्वेऽप्यग्रगामिणोर्हरिद्वर्णयोः प्राधान्याद्विवचनम्। अपि च, सविता देवः। प्राणिनाम् विश्वा, विश्वानि। (दुरिता) दुरितानि। अप बाधमानः। परावतः, दूरतः। आ याति इति॥ ३॥

यजतः याज्यः चित्रभानुः (सविता।) (कृष्णा) कृष्णानि। रजांसि, तमांसि। तविषीम्, तेजः। (च) दधानः, तयोर्नि (तन्नि) यन्ता इत्यर्थः। यद्वा (कृष्णा) कृष्णम्, (रजांसि) रजः, (तविषीम्), तविषी इति तमोगुणरजोगुणसत्त्वगुणा उच्यन्ते, नियन्तृतया तान् दधानः, वृत्त्यपेक्षया 'रजांसि' इति बहुवचनम्। कृशनैः, सुवर्णैः तन्नामसु (वै० नि० १।२) पाठात्। अभिवृतम्,

आच्छादितम्। विश्वरूपम्, विचित्रम्। हिरण्यशम्यम्, हिरण्मययुगकीलोपेतम्। बृहन्तं रथम्। आ अस्थात्, अधिष्ठितवान्, स्वार्थे लुङ्॥ ४॥

श्यामत्वात् श्यावाः। शितिपादः, नीलपादः। हिरण्यप्र उगम्, हिरण्योपनिबद्धरथावयव-संधिम्। (रथम्) जनान् (प्रति) वहन्तः। सामर्थ्यात् 'तुरगाः' इत्यन्वेति, तस्य (सवितुः) (तुरगाः) शश्वत्, सर्वदा। विशः, प्रजाः, जगदिति यावत्। वि अख्यन्, अपश्यन्, पश्यन्ति, 'यस्याश्वा अपि सर्वदर्शिनः, किम्वसौ ?' इति भावः। किं च, (विश्वा) विश्वानि। भुवनानि, जगदिति यावत्। दैव्यस्य, देवप्रियतया देवसम्बन्धित्वाद्दैव्यनाम्नः। सवितुः, हरेः। उपस्थे, समीपे। तस्थुः, समीपस्थं वर्तते, कथम् ?सर्वगत्वात्तस्य, 'यच्च किंचिज्जगत्सर्वम्' (महाना० उ० ११।६) इत्यादि श्रुतिसिद्धम् इति॥ ५॥

तिस्रः। द्यावः, प्रत्यक्षानुमानागमजन्याः प्रमाः, द्युत्यर्थाद्दीव्यतेः भावे (ड्यो) ड्युप्रत्यये '(द्यौः) द्युः' इति रूपसिद्धेः। यमस्य, यच्छति नियमयति विश्वमिति यच्छतेः पचाद्यच्, तस्य विश्वनियन्तुः। सवितुः। 'उपस्था, (उपस्थाः) समीपे वर्तिन्यः' इत्यावृत्तिविपरिणामाभ्यां योज्यम्। तथा, द्वौ, जडाजडवर्गौ। (उपस्था) उपस्थौ, समीपस्थौ (एव) भुवने, भुवनविषये। एका, अद्वितीया। विराषाट्, श्रीः। (यमस्य सवितुः उपस्था) द्युत्रयादेः सवित्रुपस्थत्वम्– 'सवितृनियम्यत्वं सवितृनियामकत्वं च' इत्येवं सम्बन्धाभिप्रायेणोपस्थितत्वोक्तिः इति ज्ञेयम्। न केवलमजडपदोक्तसंसारिणामाश्रयः, किं तु रथ्यम्, आणिम् न, रथसम्बन्धिवस्तुजातं रथकीलमाश्रित्य यथास्ति। (एवम्) (अमृता) अमृतानि, अब्जजेशपूर्वाण्यशेषमुक्तभूतानि। अधि तस्थुः, आश्रितानि। (सवितारम्) हरिम् इति प्रकरणाल्लभ्यते। 'उक्तं सर्वं मिथ्या किं स्यात् ?' इत्यत उक्तम् 'इह' इत्यादि यः उ, य एव। तत्, प्रागुक्तं हरेः सर्वाश्रयत्वं प्रमेयम्। चिकेतत्, 'कित ज्ञाने' इत्यतो लेट्, अडागमः, छान्दसं द्विर्वचनम्, अभ्यासस्य चुत्वम्, अभिपश्येत्, कुर्याद्वा। (अन्यथा) इति शेषः (सः) इह, मम पुरतः। ब्रवीतु, बाधकाभावादुक्तं न मृषा इति भावः। यद्वा– तत् सवितुः स्वरूपम्, मयैतावज्ज्ञातम्। यः उ, यस्तु। यथावदतिशयेन चिकेतत्, अभिपश्येत्। (सः) इह, अस्मासु, अस्मदर्थे। अस्मदविज्ञातं तत्स्वरूपम्– ब्रवीतु। यद्वा– (यः उ) य एव, विष्णुः। तत्, एतद्विश्वम्। चिकेतत्, चकार। (सः) इह, नः प्रति। स्वस्वरूपम्– ब्रवीतु। इत्यर्थः॥ ६॥ इति षष्ठो वर्गः॥ ६॥

## रूपावतारः

ह्वयाम्यग्निम् ॥ रातेःष्ट्र इति । 'रातेःष्ट्र' इति रातेःष्ट्रप्रत्यये षित्वात् ङीषि रात्रीति रूपम् । रमे ष्ट्रो डिच्चेति । उपलक्षणमेतत् । रेफात् पर आकारागमश्चेत्यपि द्रष्टव्यम् ॥ १ ॥

आकृष्णेन ॥ देवानितीति । इतःपरं टीकायां श्रूयमाणं अथवेति पूर्वेणसंबन्ध इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । यथास्थाने संबन्धसंभवेन पूर्वेण संबन्धाभिधानायोगात् ॥ २ ॥

याति देवः ॥ एतत्पदमिति । आयातीति पदं 'रविगो जनार्दन' इति पूर्वभाष्येणापि संबध्यत इत्यर्थः । पूर्वपदाकारेति । भकारस्थाकारलोप इत्यर्थः (शुभ्) । एतच्चेति । भाष्यस्थं नित्यमिति पदं आयातीति लट् क्रियासातत्य इति ज्ञापनार्थमित्यर्थः ॥ ३ ॥

अभीवृतम् ॥ यजत इति । यजेरतच्प्रत्यये यजत इत्यकारान्तं रूपम् । आस्थादिति । आङ्पूर्वात् स्थाधातोर्लुङि सिचि 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि कृते आस्थादिति रूपम् । इदानीं तु पृथगिति । इतःपरं टीकायां श्रूयमाणं ''वृत्त्यप्रेक्षया बहुवचनमित्यभिप्रायेण कृष्णं रज इत्युक्तं'' इति वाक्यं प्रक्षिप्तम् न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । रजोगुणव्यक्तीनां बहुत्वेन रजांसीति श्रौतबहुवचनस्य न्यायप्राप्तत्वेन वृत्त्यपेक्षया बहुवचनमित्युक्त्ययोगात् । कृष्णशब्दे एकवचनस्यापि संभवेन कृष्णं रज इत्युक्तमिति कृष्णशब्दग्रहणवैय्यर्थ्याच्च ॥ ४ ॥

विजनान् ॥ शितिपाद इति । अयं पाच्छब्दो बहुवचनान्तः ॥ ५ ॥

तिस्रो द्यावः ॥ द्युत्यर्थस्येति । द्युत्यर्थस्य दीव्यतेर्भावे ड्योप्रत्यये द्याव इति रूपम् । अस्य पदस्येति । भाष्यस्थविश्वस्येति पदस्य अधीशेति पूर्वपदेनापि संबन्ध इत्यर्थः । यच्छतेरिति । यमेः पचाद्यच् इत्यर्थः । द्युत्रयाश्रयत्वादिकमिति ।

यद्यपि ऋचि द्योशब्द एवास्ति । न तु द्युशब्दः । द्याव इति श्रवणात् । अन्यथा दिव इति श्रवणं स्यात् । तथापि द्योशब्दपर्यायो द्युशब्द इत्यभिप्रायेण द्युत्रयाश्रयत्वादिकमित्युक्तमिति बोध्यम् । चिकेतदिति । कित ज्ञान इत्यतः लेटि तस्य तिपि इतो लोपे शपः श्लौ द्विर्वचने चुत्वे लघूपधगुणे 'लेटोऽडाटौ' (३।४।९४) इत्यडागमे चिकेतदिति रूपम् ॥ ६ ॥ ६ ॥

## पदार्थप्रकाशिका

ह्वयाम्यग्निं प्रथममं स्वस्तये ॥ ह्वयाम्येकादशसावित्रम् । आद्या लिङ्गोक्तदैवतपादेत्यनुक्रमणिकां हृदि निधायाह एकादशर्चमिति ॥ तत्राद्येति एकादशवर्गे सूक्ते आद्या ऋक्

(पदार्थप्रकाशिका)

अग्न्याह्वानादिलिङ्गेनोक्तानि ज्ञापितानि । यानि दैवतानि अग्न्यादीनि तदुपेता ये चत्वारः पादास्तदुपेतेत्यर्थः । एवं सत्यस्या अप्यृचः सावित्रीत्वं न विरुद्धम् । अन्त्यपादे सवितुः श्रवणादिति भावः । प्रथमां ऋचम् । प्रतीतदेवतासु । अग्न्यादिषु । रातेः ष्ट्रप्रत्यय इति । रादानेऽस्मात्कर्तरि ष्ट्रप्रत्यये षकार लोपे रात्रेति भवति । षकारात्पुरतः त्रकारे सति ष्टुना ष्टुरिति तकारस्य टवर्गस्थे टकारे सति ष्ट्रेति जातत्वात् । पश्चात् षिद्गौरादिभ्यश्चेति सूत्रेण षित्वात् ङीषि ईकारं विहाय सर्वस्य लोपे त्रकारस्थस्य अकारस्य च लोपे रात्र् ई रात्रीति रूपमित्यर्थः । त्रप्रत्ययमात्रकरणे ङीषोऽप्राप्तेः ष्ट्रप्रत्यय इत्युक्तमित्यवगन्तव्यम् । रमेः ष्ट्रो ङिच्चेति । रम् क्रीडायामस्मात् ष्ट्रप्रत्यये षकारलोपे तस्य ङित्कार्यकारिताया इह विवक्षितत्वेन तद्बलाट्टीभूतस्याम् इत्यस्य लोपे रत्रेति स्थिते निरुक्तत्वाद्धातोराकारागमे षित्वात् ङीषि रात्रीति रूपम् । रमेः ष्ट्रो ङीष् चेति पाठे साधनप्रकारसिद्धम् । रमु क्रीडायामस्मात् ष्ट्रप्रत्यये अनुनासिकस्य क्विझलोरिति सूत्रे क्विझलोः परयोरनुनासिकस्य आकारादेशविधानात् प्रकृते चानुनासिकस्य मकारस्य षकाररूपे झलि परे आकारादेशे र आ इति जाते सवर्णदीर्घे षित्वात् ङीषि रात्रीति रूपं द्रष्टव्यम् । रमेः ष्ट्रो ङीच्चेति पाठे साधनप्रकारस्तूक्तरीत्यैव । ष्ट्रप्रत्ययस्य ङीत्कार्यकारित्वकथनं तु किमर्थमिति विचार्यम् । रतिदत्वाद्वेति । अनेन हृत्तमो वेत्यत्रत्यो वाशब्दो रतिदत्वादित्यनेन सम्बध्यत इत्युक्तं भवतीति ज्ञातव्यम् । रतिदत्वं कथं रात्रिशब्दाल्लभ्यत इत्यत आह रतं रातीति । भावे क्तः रतं सुखम् । ननु तर्हि रतरीति स्यादित्यत आह आद्याकारस्येत्यादि । रतशब्दे य आद्यः रेफस्थ अकारस्तस्य दीर्घः द्वितीयस्य तकारोपरि स्थितस्य च लोपो निर्वचनत्वात् । तथाच रात् इति जाते पश्चात् सुखार्थकाद्रात् इत्युपपदात् रादानेऽस्मात् कप्रत्यये आतो लोप इटि चेति कित्वाद्धात्वाकारलोपे प्रत्ययाकारसम्बन्धेन रात् र् अ रात्रेति जाते यस्येति त्रकारस्थाकारलोपे र् इति जातेऽनन्तरं स्त्रीत्वविवक्षायां निर्वचनत्वात् ईकारप्रत्यये सति रात् र् ई रात्रीति रूपम् । प्रथमं प्रधानम् । वैश्वानराख्यमिति । तस्यैवानलकुलेन्द्रत्वादिति भावः । जगतो निवेशनीं आश्रयभूतामित्यन्वयः । निवेशनशब्दः कथमाश्रयार्थ इत्यत उक्तम् निविशंतेऽत्रेति । जना इति शेषः । इतीत्यनन्तरं व्युत्पत्त्येति शेषः ॥ १ ॥

आकृष्णेन रजसा वर्तमानः । बहिरन्तश्चेति । अस्या ऋचः प्रसिद्धरविपरत्वाद्रविगत जनार्दनपरत्वात् रविगतत्वं विना केवलं विष्णुमात्रपरत्वाच्च । बहिः रविपक्षे । तदन्तर्गतजनार्दनपक्षे च । अन्तश्च । केवलो विष्णुरन्तरप्येकेन रूपेण तिष्ठति तद्विवक्षायां चेत्यर्थो द्रष्टव्यः । शार्वरमिति । शर्वरी रात्री तत्संबन्धीतं इति बुध्या विवेकेन सम्बन्ध इत्यर्थः । द्वेधेति । उक्तरीत्या बहिरन्तश्चेति

(पदार्थप्रकाशिका)

द्विधेत्यर्थः। देवानितीति। अत्र देवान्नृजातानन्यान्निशासु स्वापयन्निति बाह्याभिप्रायेण। विमुक्तान् मर्त्यान् सृतिगान् लयेषु प्रस्वापयन्निति केवलविष्णुपक्षाभिप्रायेणेति द्रष्टव्यम्। ननु देवान्नृजातान् विमुक्तान्सृतिगान्वेति पक्षान्तरत्वाद्योतकवाशब्दसद्भावादथवेति व्यर्थमित्यत आह अथवेति। पूर्वेण सम्बन्ध इति। कृष्णं रजः शार्वरं अथवा हृत्तम इति पूर्वेण सम्बन्ध इत्यर्थः। ननु हृत्तमो वेति वाशब्दस्य तत्र सत्वात्कथं तेनास्य सम्बन्ध इति चेदुच्यते। तत्रत्यवाशब्दस्य रतिदत्वादित्यनेन सम्बन्धकरणात्। अत एव पूर्वं टीकाकारैः रतिदत्वाद्वेत्युक्तमिति सम्प्रदायविदः। अन्ये तु देवान्नृजातान् विमुक्तान् सृतिगान्वेति पक्षान्तरत्वद्योतकवाशब्दस्य विद्यमानत्वादथवेति व्यर्थमित्यत आह अथवेतीति। तथा च अथवेत्येतत्पूर्वेण देवान्नृजातानित्यनेन सम्बध्यत इत्यर्थः। तथाचाथवेति निपातसमुदायो वाशब्दार्थः। एवं च देवानृजातान्वा विमुक्तान् सृतिगान्वेत्यर्थो द्रष्टव्य इत्याहुः। तन्न ।। देवानिति वाक्यस्यैवेदानीं व्याक्रियमाणत्वेन पूर्वेण सम्बन्ध इत्यस्य स्वारस्यात् नृजातानित्यनेन सम्बन्धाभिप्राये अथवेति निपातसमुदायो वा शब्दार्थ इत्येव वक्तव्यं स्यात्। अथवेत्यस्य नृजातानित्यतः परं यथास्थाने विद्यमानत्वेन सम्बन्धोक्तिवैयर्थ्याच्च। अन्यथा सृतिगान्वेत्यत्रापि वाशब्दः पूर्वेण सम्बध्यत इति वक्तव्यं स्यादिति यत्किञ्चिदेतत्।

रविपक्षे रविगतजनार्दनपक्षे रविगतत्वं विनापि विष्णुमात्रग्रहणपक्षे च ऋचं व्याख्यातुं भाष्यस्य सकलङ्गेन प्रवृत्तत्वाद्विभज्य ऋगर्थमाह ततश्चायमर्थ इति। देवः सविता प्रसिद्धो रविः। तत्प्रवर्तकतयेति। ननु सवितुः कथं शार्वरतमःप्रवर्तकत्वं प्रत्युत तन्नाशकत्वमेवेति चेदुच्यते यदा सूर्यः पूर्वस्यां दिश्युदयं प्राप्य पश्चिमेऽस्तमेति तदा पूर्वदिशिस्थितानां रात्रिर्भवति। ततश्चान्धकारः प्रवर्तत इत्येवं स्वास्तमयेन शार्वरतमःप्रवर्तकत्वमस्तीति ज्ञातव्यम्। एवं च तत्प्रवर्तकतयेत्यत्र स्वास्तमयेनेति शेषः कर्तव्यः। ननु अमृतं देवजातं निशासु प्रस्वापयन्निति कथम्। स्वर्गस्थानां देवानां सुप्त्यभावस्य 'स्वर्गस्थानां न तु स्वाप' इति प्रमाणसिद्धत्वात्। अतः कथमेतदिति चेत्। उच्यते। देवजातस्य मूलरूपेण सुप्त्यभावेपि भूम्यादावर्जुनादिरूपेणावतारदशायां सुप्तिसद्भावात्तदभिप्रायेणेदमुक्तम्। यद्वा शार्वरतमःप्रवर्तकतया वर्तमानः सूर्यो मनुष्यान्निशासु प्रस्वापयतीति तावत्सिद्धम्। तथाच यदा मनुष्याः सुप्ता भवन्ति तदा तद्देहस्थानां मुख्यप्राणातिरिक्ततत्वाभिमानिदेव-जातानामपीषत्सुप्तिरस्तीति प्रमाणप्रमितम्। यथोक्तमेकादशस्कन्धतात्पर्ये। एवं सुप्तावपि स्फुटम्। तदन्या देवताः सर्वाः प्राणस्यैव वशे स्थिताः। ईषच्च सुप्तवद्यान्ति नैव मानुषजीववत्। स्वर्गस्थानां न तु स्वाप इत्यादि। एवं चैतदभिप्रायेण देवजातं निशासु प्रस्वापयन्नित्युक्तमिति सम्प्रदायविदः। उपलक्षणमेतदिति। अमृतं मर्त्यञ्चेति पदद्वयमप्युपलक्षकं विनिगमनाविरहादिति भावः।

(पदार्थप्रकाशिका)

अन्यानपीति। देवमनुष्योभयातिरिक्तानसुरानित्यर्थः। यद्वा पक्ष्यादीनित्यर्थः। तेषामपि रात्रौ स्वस्वनीडेषु प्रस्वापसद्भावादित्यवधेयम्। पूर्ववदिति। प्रसिद्धसवितृपक्ष इव व्याख्येयमित्यर्थः। तमसेति । तत्प्रवर्तकतयेत्यर्थः । जगत्प्रसवितुर्विष्णोरेकेन रूपेण हृद्यपि विद्यमानत्वेन तत्रत्याविद्याप्रवर्तकत्वं युक्तमिति ज्ञातव्यम्। सृतिगजातम् संसारिजातम्। वासयन् वासयुक्तं कारयन्। स्वीयेनेति। सैन्यसुग्रीवादि हयचतुष्टययुक्तेन वैष्णवेन रथनेत्यर्थः। भक्तानां ब्रह्मादीनाम्। हिरण्ययेन रथेनेत्यस्य तात्पर्यं शुद्धेन शरीरेणेति। सात्विकेन शरीरेणेत्यर्थः। तत्र सन्निहितः सन्निति यावत्। पश्यन्निति। कथमेते लोकाः सद्धर्ममाचरन्तीति परीक्षां कुर्वन्नित्यर्थः। यदा जनानां धर्मप्रवृत्यर्थं ब्रह्मादय आयान्ति तदा विष्णुः स्वयमेवायातीत्याशयः। पश्यन्नायातीत्यनेनोत्तर ऋक्स्थ आयातीति पदं पूर्वोत्तराभ्यां संबध्यत इत्युक्तं भवतीति ज्ञातव्यम्॥ २॥

याति देवः प्रवता यात्युद्वता। पूर्वत्रापीति। रविगोजनार्दन आयातीति पूर्वत्रापि सम्बध्यत इत्यर्थः। पूर्वमिति। सविता रथेनादेवो यातीत्यनेन रथमारुह्य यातीत्युक्तम्। अत्र तु शुभ्राभ्यां हरिभ्यामिति शुभ्राश्वमारुह्यायातीत्युच्यते। अतो विरोधपरिहाराय पूर्वाविरोधेन व्याख्यातीत्यर्थः। शुभ्रेतीति। पूर्वं रथेनायातीत्युक्तं किमश्वतर्यादियुक्तेन रथेनेति शङ्कायां शुभ्राश्वयुक्तेनैव रथेनायाति नाश्वतर्यादियुक्तेनेत्येतदनेनोच्यत इति न विरोध इति भावः। पूजार्थकाद्यज् धातोः कर्मण्यतच् प्रत्यये हलन्त्यमिति चकारलोपे यजत इत्यकारान्तःशब्दो ज्ञातव्यः। रमेर्ड इति। शुभशब्दोपपदाद्रम् धातोर्डप्रत्यये डित्वाट्टीभूतस्याम् इत्यस्य लोपे प्रत्ययाकारसम्बन्धे च सति शुभ्रेति रूपम्। ननु तर्हि शुभरेति स्यादित्यत आह पूर्वपदेति। पूर्वपदे शुभपदे य अकारो भकारस्थस्तस्य लोप इत्यर्थस्तथाच शुभ्‌रशुभ्रेति रूपम्। रमणीयौ मनोहरौ। सूर्यस्य सप्ताश्वा इति। सूर्यरथस्य सप्ताश्वा इत्यर्थः। ननु सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्त नामेति श्रुतेः सूर्यरथस्य कथं सप्ताश्वाः सन्तीति चेदुच्यते। एक एवाश्वजीवस्तस्य सप्तरूपाणि सप्तनामवत्वमस्तीति विरोधाभावात्सप्ताश्वा इति पुरोगाश्वाविति चोपपन्नमिति सम्प्रदायविदः। द्वयोरेवेति। शुभ्राभ्यामित्युक्तत्वादिति भावः। उत्तरमाह प्राधान्यादिति । प्रसिद्धार्थे श्वेतरूपाख्यार्थत्याग इत्यर्थः । हरिदितीति । हरिद्वर्णोपेताश्वयुतरथोपेतः सूर्यो हि प्रसिद्धो यस्मात्तस्माच्छुभ्रशब्दस्य श्वेतरूपाख्यार्थाङ्गीकारे तद्विरोध स्यादित्यर्थः। इन्द्रनीलमणिवद्वर्णो हरिद्वर्ण इति केचित्। दूर्वावर्णवद्वर्णो हरिद्वर्ण इति श्रुतोर्थः। ननु सविता रथेनादेवो यातीति पूर्वमुक्तत्वादादेवो याति सवितेति पुनः किमर्थमुच्यत इत्यतः प्रवतेत्यादि विशेषणानि विधातुं पूर्वोक्तमेवानूद्यत इत्यताह आयातीत्युक्तानुवादेनेति॥ तथाच देवः सविता रथेनायातीति यत् तत् प्रवता उद्वता। नित्यमित्यादि योज्यम्। शेषः ऋचि

(पदार्थप्रकाशिका)

किमर्थं कर्तव्य इत्यतस्तत्प्रयोजनमाह। एतच्चेति। ऋचि देवः सविता प्रवता उद्वता आयातीत्युक्ते लटा इदानीं वर्तमानकाल एवागमनप्रतीत्या पूर्वं नागतः उत्तरत्र नायास्यतीति प्रतीयते तन्निराकर्तुं नित्यमिति भाष्यकारैः ऋचि शेषः पूरितः। तेनायातीति लट् अस्य सवितुः प्रवतादिप्रवेशैरागमनादिक्रिया संतता नित्या न तु कादाचित्कीति क्रियासातत्ये इति भाष्यकारैर्ज्ञापितं भवतीत्यर्थः। यजतो रथेनायातीति यत् तत् शुभ्राभ्यां हरिभ्यामिति योज्यम्। दूरतो दूरदेशात्। अत्रापि सविता देव आयातीति यत् तत् प्राणिनां विश्वानि समस्तानि दुरितान्यपबाधमानः सन् परावतो दूरतः इति योज्यम्॥ ३॥

अभीवृतं कृशनैर्विश्वरूपं। चित्रा भानवा रश्मयो यस्यासौ चित्रभानुः सूर्यः। तमोधारकत्वं चोक्तरीत्या तत्प्रवर्तकतयेति ज्ञातव्यम्। तविषीशब्दोक्तप्रकाशापरपर्यायतेजोधारकत्वं च प्रसिद्धमेव। परमेश्वरे परमेश्वरस्यात्र वाच्यत्वपक्षे। तमोधारकत्वं नाम तमःशब्दवाच्याज्ञानवत्वं तत्परमेश्वरे न युक्तम्। आदित्यवर्णं तमसः परस्तादिति श्रुतेः। तेजोधारकत्वं नाम सूर्यादितेजसो प्रकाशत्वरूपं वक्तव्यं तदयुक्तम्। न तत्र सूर्यो भाति न चन्द्रतारकम् नेमा विद्युतो भान्ति कुतोऽयमग्निरिति श्रुतेरित्यर्थः। प्रवृत्तौ स्वप्रवृत्तिविषये दधान इत्युच्यत इति। तथाच कृष्णा रजांसि सूर्यादितविषीं च प्रवर्तकतया दधान इत्यर्थो द्रष्टव्यः। समानाधिकरणतयेति। कृष्णा रजांसीति भिन्नपदोक्तयोर्विशेषणविशेष्यभावमङ्गीकृत्य तमोगुणवाचितामङ्गीकृत्य व्याख्यातमित्यर्थः। पृथगिति। कृष्णेत्यस्य रजो विशेषणत्वमनङ्गीकृत्य तमोगुणवाचितामङ्गीकृत्य व्याख्यायत इत्यर्थः। ननु ऋगनुसारेण कृष्णानि रजांसि तविषीति भाष्ये वक्तव्यं कृष्णं रज इत्येकवचनप्रयोगे किं निमित्तमित्यत आह वृत्यपेक्षयेति। वृत्तिः कार्यम्। तथाच वस्तुगत्या तमोरजश्चैकमेव। ऋचि बहुवचनं तु तमोगुणवृत्तीनां च बाहुल्यात्तदपेक्षया बहुवचनमित्यर्थ इत्याहुः। नन्वास्तां प्रतीतिः को दोष इत्यत आह न चेति। सत्वस्य प्रकाशहेतुत्वेन शुक्लतया कृष्णत्वस्य तस्मिन् सर्वथाऽशक्यसमर्थनत्वादित्यर्थः। तविषीत्वं तमसीति। तमसः कृष्णत्वेन प्रकाशहेतुत्वाभावात्तविषीत्वमपि तस्मिन्नशक्यसमर्थनमित्यर्थः। ननु तमसः कृष्णत्वाभावान्न तच्छब्दवाच्यत्वं तस्येत्यत आह कृष्णत्वं तमसीति। अजामेकां लोहितशुक्लकृष्णामिति श्रुत्या तमोगुणो कृष्णत्वस्य प्रसिद्धत्वाद्युक्तं कृष्णशब्देनात्र तद्ग्रहणमित्यर्थः। ननु प्रकाशापरपर्यायतविषीशब्दवाच्यत्वं कथं सत्त्वगुणस्येत्यत आह प्रकाशहेतुत्वादिति। सत्वात्सञ्जायते ज्ञानमिति वचनेन सत्वगुणस्य प्रकाशापरपर्यायज्ञानहेतुत्वावगमात्तविषीशब्दवाच्यत्वं युक्तं तादर्थ्यात्ताच्छील्यमित्यस्य आयुर्वै घृतमित्यादौ दर्शनादिति भावः॥ ४॥

(पदार्थप्रकाशिका)

विजनांछ्यावाः शितिपादो अख्यन्। श्यामत्वाछ्यावा इति। ननु पूर्वं हरिदश्वो हि सूर्य इति सूर्याश्वानां हरिद्वर्ण उक्तः। अत्र तु श्यामत्वं अतो विरोध इति चेत्। उच्यते। न श्यामशब्दस्य शुद्धं नीलरूपमर्थः। किं तु नीलशुक्लसमाहार एव। शुक्लनीलसमाहारः श्याम इत्यभिधीयत इति वचनात्। मेघः श्याम इत्युक्ते श्यामशब्देनोभयरूपप्रतीतेः। एवं च प्रकृतेऽपि हरिद्वर्णे किञ्चिन्नीलशुक्लसमाहारोस्त्येव। दूर्वादौ हरितोपले तथा प्रतीतेः। अतस्तदश्वानां हरिद्वर्णत्वेऽपि श्यामत्वस्याविरुद्धत्वात्तदुक्तिर्युक्तेति सम्प्रदायविदः। शितिपादः इति। पादातिरिक्तावयवानां श्यामत्वमेव। पादानां केवलं नीलत्त्वमिति विशेषद्योतनाय शितिपाद इत्युक्तमिति भावः। ननु शितिपाद इत्येतत्तुरंगाणां कथं विशेषणमिति चेन्न। शितिपात् शितिपादौ शितिपाद इति पाच्छब्दस्य बहुवचनमेतदित्यतो युक्तो विशेषणविशेष्यभाव इति मन्तव्यम्। जनान्प्रतीति। जनानां प्रवृत्यर्थमित्यर्थः। ननु श्यावाः शितिपादो जनान्प्रति रथं वहन्ती मनुष्यादय एव किं न स्युस्तुरंगा एवेति कुतः अतो भाष्ये तुरंगा इति विशेष्यपूरणमयुक्तमित्यत उक्तम् सामर्थ्यादिति। पूर्वं हरिभ्यामिति प्रकृतत्वेन वहनयोग्यतया तुरंगा एव ग्राह्याः नान्ये। पूर्वप्रकृतबाधादिति भावः। श्यावास्तुरङ्गा व्यख्यान्निति वचनेन तुरङ्गाणामेव प्राधान्यावगमात्तेषामेवात्र देवतात्वप्रतीत्या सावित्रत्वभङ्ग इत्यत आह यस्याश्वा अपीति। यस्य सवितुः। असौ सविता। प्रउगं प्रउगशब्दवाच्यम्। भाष्ये रथस्य सन्धिः प्रउगमित्यन्वयः। तथाच रथस्य सन्धिः प्रउगमित्युक्ते रथस्य रथान्तरेणान्येन केनचिद्वा सन्धिरिति प्रतीयेतातो व्याचष्टे। रथस्य रथावयवानामिति। तथाच रथावयवानामेव यः सन्धिः स प्रउगमिति भाष्यार्थः। हिरण्यप्रउगमित्यस्यार्थमाह। हिरण्योपनिबद्धसंधिमिति। सुवर्णमयकीलेनोपनिबद्धः परस्परं सङ्घट्टितो यो रथावयवानां सन्धिः। आन्तरालिकप्रदेशः तदुपेतमित्यर्थः। ऋचि विश्वा भुवनानि तस्थुरिति बहुवचनसद्भावेपि भाष्ये समीपस्थजगदित्येकवचनं समुदायापेक्षमित्यवगन्तव्यम्। जगत् हरेरेव समीपस्थं वर्तत इत्यर्थः। दैव्यं देवप्रियत्वादिति भाष्योक्तं तात्पर्यार्थमुक्त्वा पदार्थमाह। देवसम्बन्धित्वादिति। देवशब्दात्तस्येदमित्यर्थे ष्यञ्प्रत्यये ञित्वादादिवृद्धौ सत्यां दैव्यमिति भवतीति भावः। वैकुण्ठादिलोकत्रयस्थहरिसमीपे कथं सर्वं जगदस्तीत्याशयेन शङ्कते। कथमिति। उत्तरमाह सर्वगतत्वादिति। हरेरिति शेषः। तथाच तत्समीपस्थं सत् जगद्वर्तत इत्युक्तं युक्तमिति भावः। भगवतः सर्वगतत्वं च यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेपि वा। अन्तर्बहिश्चतत्सर्वं व्याप्य नारायणः स्थितः इति श्रुतिसिद्धमित्याह तच्चेति। इति हिशब्देन सूचितमिति शेषः॥ ५॥

तिस्रो द्यावः सवितुर्द्वा उपस्था॥ प्रमात्रयमिति। यथार्थानुभवरूपं केवलप्रमाणत्रयमित्यर्थः। द्युत्यर्थस्य दीव्यतेरिति। दिव् क्रिडाविजिगीषाद्युति स्तुतीत्यादिधातोर्भावे क्विपि तस्य लोपेऽनन्तरं

**(पदार्थप्रकाशिका)**

दिव औत् इति सूत्रे दिव वकारस्य औकारे दिऔ यणादेशे द्यौरिति रूपम् द्यौः द्यावौ द्याव इति औकारान्तद्यौशब्दस्य बहुवचनं द्याव इतीति द्रष्टव्यम् । निमित्तमिति । विराषाट्शब्दप्रवृत्तौ निमित्तमित्यर्थः । भाष्ये अधीशेत्यनेन निमित्तमुक्तमिति ज्ञातव्यम् । सनिमित्तमभिधेयमिति । भगवानित्यनेनाभिधेयं विश्वस्य नियन्तेति प्रवृत्तिनिमित्तं चोक्तमिति भावः । अस्य पदस्येति । विश्वस्य नियन्तेतिवत् विश्वस्याधीशेति विश्वपदस्याधीशपदेनापि सम्बन्ध इत्यर्थः । यच्छतेरिति । तथाच यम् नियमनेऽस्मात् नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इति सूत्रेणास्यापि पचादिगणस्थत्वात्कर्तरि अच्प्रत्ययः । ननु यच्छतेरिति (यमेरिति भवितव्यम्) कथम् । उच्यते इषुगमियमां छ इति सूत्रेण इष् इच्छायां गम्लृगतौ यम् नियम इति धातूनामन्त्याक्षरस्य छकारादेशविधानात् यच्छतेरिति युक्तमिति ज्ञातव्यम् । संक्षपतो घटनामिति । पूर्वं तिस्र इत्यादिना पदार्थमात्रस्योक्तत्वादिदानीं तात्पर्योक्त्या सङ्क्षेपतः पदानामन्वयरूपघटनापरपर्यायवाक्यार्थमाहेत्यर्थः । संक्षेपतो घटनाप्रकारमेव दर्शयति गदितं सर्वमित्यादिना । अन्ये तु तिस्र इत्यादिनोक्तो भगवन्महिमा कुत इति शङ्कायां तत्र घटनामुपपत्तिं सङ्क्षेपतः सूचयतीत्यर्थः । अस्य भगवत इति व्याख्यानकरणेन तत्रोपपत्तिः सूचिता । भगवत्वेनाघटितघटनाशक्तिलाभादिति वदन्ति । तत्र पूर्वार्धपदानामित्येतन्न स्वरसम् । पूर्वार्धोक्तप्रमेये घटनां सूचयतीत्येव वक्तव्यत्वादिति । द्युत्रयेति । प्रमात्रयेत्यर्थः । आश्रयत्वं च विषयत्वेन ज्ञातव्यम् । समीपवर्तिन्य इति । तद्विषयकतया तन्नियम्यतया च समीपवर्तिन्य इत्यर्थः । भाष्ये द्वा उपस्थावित्यनूद्य जडाजडे इति तात्पर्यमात्रमुक्तम् । स्वयं द्वावित्यनूद्य पुल्लिङ्गानुसारेणैव तदर्थमाह जडाजडावर्गाविति । उपस्थौ नियम्यतया तत्समीपस्थौ । भुवने विषय इत्यनेन भाष्ये विश्वस्येत्येतत्तात्पर्यतो व्याख्यानमिति ज्ञातव्यम् । एकेत्यस्य भाष्येऽव्याख्यातत्वात्स्वयं तदर्थमाह एकाऽद्वितीयेति । असमा श्रीदेवीत्यर्थः । उपस्था नियम्यतया तत्समीपस्था । तत्किमर्थमिति । प्रमात्रयस्यापि सर्वविश्वान्तर्गतत्वेन जडाजडपदाभ्यामेव ग्रहणसम्भवादित्यर्थः । तथाच ऋचि द्वा उपस्थावित्यनेनैवालं तिस्रो द्याव इति व्यर्थमिति भावः । केवलं जडमिति चैतन्यामिश्रमित्यर्थः । केवलचैतन्यम् जडामिश्रम् । उभयसमाहारात्मकम् । चिदचित्संवलनात्मकम् ।

ननु तर्हि मानत्रयस्यापि केवलजडत्वे केवलचेतनत्वे वा जडशब्देन वा ग्रहणमस्त्वित्यत आह तथा विधं चेति । चिदचित्संवलनात्मकतयोभयसमाहारात्मकमित्यर्थः । पृथगुक्तमिति । तिस्रो द्याव इति पृथगुक्तमित्यर्थः । नचेत्यनन्तरं उभयसमाहारात्मकेपि मानत्रय इति शेषः । गृहीष्यत इति । पृथक्कृत्य गृहीष्यत इत्यर्थः । संसारिचैतन्यस्य संसारिणां स्वरूपज्ञानस्य । मनोवृत्तेः मनोवृत्तिरूपप्रमाण-

(पदार्थप्रकाशिका)

जन्यज्ञानस्य । संवलनेनामिश्रीभावेन । तथाचान्तःकरणस्य चिदचित्संवलनात्मकत्वेन तत्परिणामरूपं प्रमाणज्ञानमपि तादृशमेवेति न पृथक्करणं युक्तमित्यर्थः । मुक्तस्वरूपज्ञानस्य जडमनोवृत्या संवलानाभावात्संसारीत्युक्तम् । चैतन्यमनोवृत्योः संवलने प्रवर्तने किं प्रमाणमित्यत आह तथात्वं चेति । अन्यत्रोदाहृतेति । चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदैव तु । तान्येव जडयुक्तानि विभिन्नानि स्वरूपत इति द्वितीयस्कन्धतात्पर्योदाहृतप्रमाणसिद्धमित्यर्थः । तथाचोक्तमनुव्याख्याने । धीर्भीरिति मनोस्त्येवेत्याह च श्रुतिरंजसा । चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिरिति ॥ ननु यदि प्रमात्रयस्योभयसमाहारात्मकत्वाद्वक्तव्यता तर्हि श्रियः केवलचैतन्यरूपत्वेन द्वावुपस्थावित्यत्राजडशब्देनैव ग्रहणसंभवात् एका यमस्य भुवने विराषाडिति पृथक्प्रवक्तव्यम् स्यादित्याशङ्कते । तर्हीति । सत्यमिति । अजडशब्देन गृहीतत्वात्पृथङ्न वक्तव्येत्येतत्सत्यमित्यर्थः । सामान्यत इति । अजडपदेनेति शेषः । वक्तुमिति । भुवने विराषाडित्यनेन तस्योक्तत्वादिति भावः । श्रियः सर्वस्वाम्यवचनं प्रकृतासङ्गतमित्यत आह तच्चेति । यदा सर्वस्वामिनी श्रीस्तस्योपस्था तदा श्रीपतिः सवितृनामा हरिः सर्वोत्कृष्ट इति किमु वक्तव्यं इत्येवं श्रियः सर्वस्वामिवचनं सवितृ नामकस्य श्रीहरेरुत्कर्षद्योतनायोपयोक्ष्यत इत्यर्थः । भाष्ये एते द्युत्रयादयस्तदुपस्थतया तन्नियम्याः स तु नियामक इत्यन्योन्यसम्बन्धविवक्षयैव उपस्थत्वं द्युत्रयादिकस्योच्यत इति शेषः । रथाः रथमणिशब्देनोच्यते ।

ननु तिस्रो द्याव इत्यस्यां ऋचि सवितारमिति द्वितीयान्तपदाभावादेवं हरिं संश्रितानीति कस्य व्याख्यानमित्यत आह सवितारं हरिमिति प्रकरणाल्लभ्यत इति । अस्य सूक्तस्य सावित्रत्वेन तत्प्रकरणत्वात्सवितृनामकं हरिमिति लभ्यत इत्यर्थः । एतदिति । द्युत्रयादिनियामकत्वं मुक्ताश्रयत्वं चेत्यर्थः । ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वात् मुक्तौ ब्रह्मचैतन्यातिरिक्तस्य कस्याप्यभावादिति युक्तिसूचनायाद्वैतवादिन इत्युक्तमिति ज्ञातव्यम् । कुत इति । एष वेदार्थसार इत्येतत्कुत इत्यर्थः । पञ्चमो लकार इति । लेडित्यर्थः । तथाच कितनिवासेऽस्माल्लेटि तस्य तिपि इप् इत्यस्य लोपे श्लुविकरणे तद्बलात् कीत्यस्याभ्यासेऽभ्यस्तककारस्य चुत्वे द्वितीयककारस्थस्य इकारस्य एकाररूपे गुणे चिकेतदिति रूपं द्रष्टव्यम् । निवासार्थस्यापि कितधातोर्दर्शनार्थत्वं करणार्थत्वं च धातूनामनेकार्थत्वाभिप्रायेणेति मन्तव्यम् । योन्यथा मदुक्तं प्रमेयं पश्येत् अन्यथा कुर्याद्वा स इह मत्पुरतः आगत्य शक्तिरस्ति चेद्ब्रवीत्विति हिरण्यस्तूपेन कथं धैर्येण प्रतिज्ञा क्रियते । यदि कश्चिदन्यथा कुर्याद्वा स इह तदा कथं सोपपन्ना स्यादित्याशङ्कायां तत्र हेतुमाह बाधकाभावादिति । मदुक्तप्रमेयस्य वास्तवत्वेन तत्र बाधकाभावेन मया प्रतिज्ञा सुखेन कर्तुं शक्यत इत्याशयः । ननु

(पदार्थप्रकाशिका)

करोतीति वर्तमानार्थकलट्प्रयोगमकृत्वा कुर्यादिति कालान्तरपरलिङ्प्रयोगः कुत इत्यत आह कालान्तर इति। भविष्यत्काल इत्यर्थः। प्रकारान्तरेणेति। पूर्वं ब्रवीत्वित्येतदाक्षेपाभिप्रायेण योजितम्। इदानीं प्रार्थनाभिप्रायेण व्याचष्टे इत्यर्थः। एतावत् परिच्छिन्नम्। ज्ञातं मद्योग्यतानुसारेण ज्ञातमित्यर्थः। यस्तु मदपेक्षया श्रेष्ठ कश्चिद्देवादिरित्यर्थः। अतिशयेन। मज्ज्ञातादतिशयेन। प्रकारान्तरेणेति। पूर्वं चिकेतदित्यस्य ज्ञानार्थत्वमङ्गीकृत्य मदपेक्षया यः कश्चिच्छ्रेष्ठो जानाति चेत्स ब्रवीत्विति सामान्येनोक्तम्। इदानीं तस्य करणार्थत्वमङ्गीकृत्य य इदं सर्वं विश्वं चकार विष्णुः स एवागत्य हरिस्वरूपं स्वस्वरूपमिति यावत् नः प्रतिब्रवीत्विति प्रकारान्तरेण व्याख्यातीत्यर्थः ॥६॥

## पदार्थदीपिका

रातेः ष्ट्रप्रत्यय इति। षित्वात् षिद्गौरादिभ्यश्चेति ङीप्। रमेःष्ट्रो डिच्चेति। मकारस्यानुनासिकस्य क्विब्झलावित्यनेनाकारादेशः। सवर्णदीर्घः। षित्वात् ङीषिति भावः। आद्याकारस्य दीर्घो द्वितीयस्य च लोप इति। निरुक्तत्वादिति भावः। क इति। आतोऽनुपसर्गे क इति कः। आतो लोप इटि चेत्याकारलोपः। स्त्रियामीकार इति। स्त्रीत्वविवक्षायां छान्दसो ङीबिति भावः। मित्रावरुणौ। देवताद्वन्द्वे चेति पूर्वपदस्यानङ्। निविशन्तेऽत्र इति करणाधिकरणयोश्चेति ल्युट्। टिड्ढाणित्यादिना ङीप्। ऊतये। अवतेः क्तिनि ज्वरत्वरेत्यादिना वकारस्योपधायाश्चोठ्॥ १॥

सृतिगान्वेति अन्ते श्रुतवाशब्देनैव विकल्पसूचनादथवेत्यस्य वैय्यर्थ्यमित्यत आह अथवेति। पूर्वेण सम्बन्ध इति। अथवा रतिदत्वादिति पूर्वेण संबन्ध इत्यर्थः॥ २॥

एतत्पदमिति। आयातीति पदमित्यर्थः। पूर्वत्र पूर्वभाष्येऽपि। तत्रायातीत्युक्तेरभावादिति भावः। नन्वेवं शुभराविति स्यादित्यत आह पूर्वेति। निर्वचनत्वादिति भावः। यजेरिति। भृमृदृशीत्यादिना कर्मण्यतच् प्रत्यय इत्यर्थः॥ ३॥

हिरण्यनामस्विति। कृशनं लोहमिति सुवर्णनामसु पाठादित्यर्थः। अभीवृतमिति। वृतु वर्तने क्विप्। न हि वृतीत्यादिना पूर्वपदस्य दीर्घत्वम्। आस्थादिति। तिष्ठतेर्लुङि गातिस्थेति सिचो लुक्। तविषीम्। तवतिः सौत्रो धातुः। अस्मादिषेण् प्रत्ययः। टित्वात् टिड्ढाणञित्यादिना ङीप्॥ ४॥

श्यामत्वादिति। उत्तमांगसम्बन्धिना गुणेन लक्षणया श्यामत्वोक्तिः। अतः न हरिदश्वो हीति पूर्वग्रन्थविरोध इति ध्येयम्। तथा च मूर्धनि श्यामत्वात् श्वावा इति योजना द्रष्टव्या। शिति पादः। सुपां सुलुगिति जसः सु आदेशः। सामर्थ्यादिति। तत्तुरंग इति सामर्थ्यलब्धोक्तिर्भाष्ये। नन्विदं

(पदार्थदीपिका)

कस्यचिद्व्याख्यानमिति भावः । अख्यन्निति । ख्यातेर्लुङि अस्यति वक्ति इत्यादिना च्लेरङादेशः । दैव्यस्येति । तस्येदमित्यर्थे देवस्य इदमिति देवशब्दात् प्राग्दीव्यतीयो यञ् । तद्धितेष्वचामादेरित्यादिवृद्धिरिति ज्ञेयम् । उपस्थे । आतश्चोपसर्गे इति कः । आतो लोप इटि चेत्याकारलोपः ॥ ५ ॥

पूर्वत्रापीति । विश्वस्य अधीशेति विश्वस्येति पदस्य अधीशेत्यत्रापि सम्बन्ध इत्यर्थः । तथात्वं चान्यत्रोदाहृतप्रमाणसिद्धमिति । रथ्यमिति । रथाद्यदिति यत् । आणिमिति । रथाद्बहिः रक्षच्छिद्रे प्रक्षिप्तः कीलविशेषः आणिरित्युच्यते इति भावः । ननु श्रुतौ हरिमित्युक्तेः कथं हरिसमाश्रितानीति भाष्यकारीयं व्याख्यानमित्यत आह सवितारमिति । प्रकरणात् सवितृप्रकरणादित्यर्थः । तथा च प्रकरणलब्धार्थोक्तिरियं न तु व्याख्यानमिति भावः । पञ्चमो लकार इति । चित ज्ञाने लेटचडागमः । इतश्च लोप इति इकारलोपः । जुहोत्यादित्वात् श्लुः । लघूपधगुण इति भावः । प्रशंसामात्रं कुतो न भवतीत्यत आह बाधकाभावादिति । अन्यथा अतिप्रसंगस्स्यादिति भावः ॥ ६,६ ॥

## टीकाविवृतिः

ह्वयाम्यग्निम् ॥ एकादशर्चमिति ॥ ह्वयाम्येकादशसावित्रं नवमी जगत्याद्या च सालिङ्गोक्तदेवतपादा इत्यनुक्रमणिकोक्तेः अनुक्रमणिकार्थस्तु ह्वयाम्यग्निमिति सूक्तमेकादशत्व-सङ्ख्याकं सवितृदेवताकं च । तत्र नवमी ऋक् आद्या च ऋक् जगतीछन्दस्का शिष्टास्त्रिष्टुप्छन्दस्काः आद्या लिङ्गेनाभिधानसामर्थ्येनोक्ताःप्रतिपादिताः देवता अग्निमित्रवरुणरात्रिसवित्राख्याःपादेषु यस्याः सा तथोक्तेति ॥ रातेःष्ट्रप्रत्यय इति ॥ सर्वधातुभ्यःष्ट्रन्निति सूत्रेणेति शेषः । षित्वात्षिद्गौरादिभ्यश्चेति ङीषिति भावः ॥ रमेःष्ट्रो डिच्चेति ॥ एतदुपलक्षणम् ॥ उणादयो बहुलमित्युक्तेः ष्ट्रप्रत्ययात्पूर्वमाकारागम आद्युदात्तत्वं चेति ज्ञेयम् । डित्वाट्टिलोपः ॥ रतशब्दाद्याकारस्येति ॥ रतशब्दे य आद्यो रेफात्पर अकारस्तस्य दीर्घःतकारात्परस्य लोप इत्यर्थः ॥ रातेश्च क इति ॥ आतोनुपसर्गे क इत्यनेनेति शेषः । गौरादित्वात्स्त्रियामीकार इति भावः ॥ प्रथमं वैश्वानराख्यमिति ॥ स्थूलभुग्वैश्वानरःप्रथमःपाद इति माण्डूकोपनिषदि विश्वनामकस्य जाठराग्न्यंतर्गतस्य वैश्वानराख्यस्य प्रथमत्वोक्तेरितिभावः । अत एव ब्राह्मणे अग्निर्वा एष वैश्वानरःपञ्चमे निर्यत्पुरोहित इति वाक्ये शरीरस्थजाठराग्नेर्वैश्वानरनामक विश्वसन्निधा-नाद्वैश्वानरशब्दवाच्यस्य पञ्चज्वालावत्त्वमुक्तम् । अनेनैवाशयेन श्रीमद्भगवद्गीतायां च

(टीकाविवृतिः)

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तःपचाम्यन्नं चतुर्विधमिति श्रीकृष्णेनोक्तमिति ज्ञेयम् ।। १ ।।

आकृष्णेन ।। बहिरन्तश्चेति ।। शरीरादिति शेषः ।। शार्वरमिति ।। क्षपाशर्वरीति रात्रिनामसु पाठाच्छर्वर्यां रात्रौ भवं शार्वरमिति भावः ।। द्वेधेति ।। सूर्यविष्णुपक्षद्वयानुसारेणेति शेषः ।। अथवेति पूर्वेण संबन्ध इति ।। अमृतमिति पदव्याख्यानभूतदेवानित्यनेन पूर्वेणेत्यर्थः । तथा च देवान् अथवा विमुक्तनिति श्रौतममृतपदं जात्येकवचनाभिप्रायेण व्याख्यातं तथा मर्त्यमित्येतन्नृजातान्वा अथवा सृतिगानिति व्याख्यातं ज्ञेयम् । तथा चाथवेत्यस्य सृतिगान्वेत्य त्रवाशब्देन न पौनरुक्त्यमिति भावः । नृजातानित्यनेन मर्त्यानित्यस्य पौनरुक्त्यमाशङ्क्याह ।। मर्त्यानित्यनुवादेनेति ।। श्रौतमर्त्यमित्यस्य जात्येकवचनान्तस्येति शेषः । भाष्ये अधिदैवाद्यर्थत्रयस्य संकलितत्वाद्विवेकेनाह ।। ततश्चायमर्थ इति ।। कृष्णेन रजसेत्यत्र रजःशब्दस्य रात्रिनामसु पठितस्य संबन्धलक्षणया कृष्णशब्देन गृहीततमसोविशेषणत्वमभिप्रेत्याह ।। शार्वरेण तमसेति ।। देवजातमिति ।। देवसमूहमित्यर्थः । एवं नृजातमित्यस्यापि मनुष्यसमूहोर्थो बोध्यः ।। हिरण्ययेनेति ।। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसीति निपातनाद्धिरण्यशब्दात्परस्य मयटो म इत्यस्य लोप इति भावः ।। भुवनानि पश्यन्नितीति ।। लक्षणहेत्वोःक्रियाया इत्यनेन क्रियायाश्चिह्ने साधन रूपे फलरूपे वा हेतौ वर्तमानाद्धातोर्लटःशत्रादेशविधानादत्रापि फलरूपहेत्वर्थकाद्दृशेर्लटःशत्रादेशः । तथा च सवित्रागमनं लोकदर्शनार्थमित्युक्तं भवति । सूर्यान्तर्गतविष्णुविवक्षया व्याचष्टे ।। यद्वेति ।। पूर्ववदिति ।। कृष्णेन रजसा शार्वरेण तमसेत्युक्तप्रकारेणेत्यर्थः ।। रविगतत्वं विनापीति ।। केवलं विष्णुपक्षे अध्यात्मस्थविष्णुपक्षे चेयं योजना ज्ञेयेत्यर्थः ।। २ ।।

यातिदेवः ।। एतत्पदमिति ।। आयातीति पदं पूर्वत्रऋग्व्याख्यानेपीत्यर्थः ।। यजेरतच्प्रत्यय इति ।। भृमृदृशियजिपर्वीत्यादिना उणादयो बहुलमिति बहुलग्रहणात्कर्मण्यतच्प्रत्यय इति भावः ।। रवेर्ह इति ।। डित्वाट्टिलोपे र इति रूपम् । अस्मात्पूर्वस्य शुभशब्दस्य पृषोदरादित्वादकारलोपे र शब्देन समासे शुभ्रशब्दसिद्धिरिति भावः । आकृष्णेनेत्यत्रायातीत्युक्तत्वात्पुनरुक्तिरित्यत आह ।। आयातीत्युक्तानुवादेनेति ।। आगमनस्य देशविशेषसंबन्धादिविशेषण प्रतिपादनायानुवादत्वान्न पौनरुक्त्यमिति भावः ।। प्रवतेति ।। प्रपूर्वस्य वन षण संभक्तावित्यस्य पचाद्यजंतस्य नीचत्वार्थकस्य प्रेत्युपसर्गेण ससाधनक्रियावाचकेन ग्रहणात्तस्मान्मतुपिनीचप्रदेशार्थकत्वमिति भावः । एवमुद्वतेत्यत्रापि बोध्यम् । क्वचिद्दक्षिणायने । उत्तरत्र क्वचिदित्यस्योत्तरायण इत्यर्थो ज्ञेयः ।। एतच्चेति ।।

(टीकाविवृतिः)

नित्यमिति वचनं क्रियासातत्ये क्रियायाः सन्ततत्वे नित्यत्व इति यावत्। यातीति श्रौतपदस्थो लडिति ज्ञापनायेत्यर्थः। यथा तिष्ठन्ति पर्वताः स्रवंति नद्य इत्यादावुदाहरणे पर्वतादिष्व-वस्थानादेःसदातनत्वेन भूतभविष्यत्त्वाभावे तत्प्रतियोगिकवर्तमानत्वस्याप्यभावेन वर्तमाने लडित्यस्याप्रवृत्तेर्वार्तिककारेण नित्यप्रवृत्ते च कालाविभागादित्यनेन लङ्विहितस्तथेहापि सूर्यागमनस्य सदातनत्वाद्वर्तमानत्वानुपपत्तेर्वार्तिकेनैव लडिति भावः। वार्तिकार्थस्तु नित्यं प्रवृत्ते विद्यमानेऽवस्थानादिरूपे व्यापारे भूतंभविष्यद्वर्तमानमिति कालविभागज्ञानाभावात्सदातनक्रिया-वाचकाद्धातोर्लङ्वाच्य इति॥ अपबाधमानइति॥ नाशं कुर्वाण इत्यर्थः॥ ३॥

अभीवृतम्॥ अभीवृतश्च रथ इति भाष्ये रथग्रहणस्य प्रयोजनं सूचयन्संगमयति॥ अत्र रथस्येति॥ अभीवृतशब्दो व्यवहितरथशब्दान्वित इति ज्ञापनाय रथग्रहणमिति भावः॥ हिरण्यनामस्विति॥ कृशनं लोहं कनकमितीति शेषः॥ युगाणी युगकीलमिति॥ कीलकं तु द्वयोरणिरित्य-मरोक्तेःकीलं ह्यणिः कृदिकारादिति ङीषि दीर्घान्तोप्यणी शब्द इति भावः॥ तविषीं तेजश्चेति॥ तविषःबर्हिषदिति प्रकाशापरपर्यायमहर्नामसु पाठादिति भावः॥ आस्थादिति॥ स्थाधातोर्लुङि गातिस्थेति सिचो लुगिति भावः॥ इत्युक्ते इति॥ तमसःपरस्तादित्यनेन तमसो विदूरत्वेनोक्ते विष्णौ न तत्रेति वाक्येन सूर्यादि प्रकाशविषयत्वेनोक्ते च कथं तमःप्रकाशधारकत्वोक्तिरिति भावः॥ प्रवृत्तौ यदधीनाविति॥ प्रवृत्तिरूपे कार्ये विष्णवधीनावित्यर्थः॥ प्राक्समानाधिकरणतयेति॥ कृष्णरजःशब्दाभ्यामंधकारग्रहणादिति भावः॥ इदानीं तु पृथगिति॥ कृष्णरजःशब्दाभ्यां गुणद्वयग्रहणादित्यर्थः॥ वृत्त्यपेक्षयेति॥ सत्त्वादिगुणानां वृत्तिविकारो महदहंकारादिस्तस्य बहुविधत्वात्तद्विवक्षया श्रुतौ कृष्णारजांसीति बहुवचनमिति भावः॥ कृष्णत्वमिति॥ अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपामित्यत्र प्रकृतेः सृष्टिस्थितिसंहारकारणी-भूतरजःसत्वतमोगुणानां लोहित शुक्लकृष्णशब्दैर्ग्रहणादिति भावः॥ प्रकाशहेतुत्वादिति॥ सत्वात्संजायते ज्ञानमित्युक्तेरिति भावः॥ ४॥

विजनात्॥ श्यामत्वादिति॥ कॄगॄशॄदॄभ्यो व इत्युक्तो वप्रत्यय उणादयो बहुलमित्युक्तेः श्यैङ्गतावित्यस्मादपि जातः। अस्यादेच उपदेशेशितीत्यात्वे कृते श्याव इति रूपम्। श्यावत्वात्कृष्णपीतमिश्ररूप- वत्त्वात्। श्यावःस्यात्कपिशो धूम्र इत्यमरोक्तेरिति भावः॥ शितिपादो नीलपाद इति॥ शितिःकृष्णे शिते पूज्ये इति विश्वोक्तेः। पादस्य लोपोऽहस्त्यादिभ्य इति सूत्रेण बहुलव्रीहिसमासे पादशब्दान्त लोपात् शितिपाद इति प्रथमाबहुवचनमिति भावः॥ देवसंबन्धित्वादिति॥ देवशब्दात्तस्येदमित्यर्थे तद्धिता इति बहुवचनाद्यञिति भावः। हरेस्त्विति

(टीकाविवृतिः)

भाष्ये तुशब्द अवधारणार्थ इति भावेनाह ।। हरेरेवेति ।। तस्थुरिति लिड्वर्तमानार्थ इति भावेनाह ।। वर्तत इति ।। जगत्वैकुण्ठस्थस्य विष्णोः समीपस्थं कथमित्यत आह ।। सर्वगतत्वादिति ।। यच्च किंचिदित्यादीति ।। यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतिसिद्धमित्यर्थः ।। ५ ।।

तिस्रो द्यावः ।। द्युत्यर्थस्य दीव्यतेरिति ।। उणादिप्रत्ययानां बाहुलकत्वात् ग्लानुदिभ्यां डौरित्युक्तौ डौ प्रत्ययोस्मादपि भावे वकारलोपश्चापि भवतीति भावः । द्युतेर्भावे डौप्रत्यये द्याव इति सिद्धेपि प्रकारान्तरप्रदर्शनार्थमेतदिति ज्ञेयम् ।। अभिधेयमाहेति ।। द्वाविति पदस्येति शेषः ।। निमित्तं चेति ।। अधीशत्वरूपमित्याशयः । राजतेरैश्वर्यकर्मसु पाठाद्विविशेषेण राजत्वं अधिकेश्वरत्वं सहते प्राप्नोतीति विराषाट् । विपूर्वकिबन्तराजतेर्जकारलोपश्छान्दसस्तथा छन्दसि सह इत्यनेन सहतेण्विप्रत्यये उपधावृद्धिरिति भावः ।। पूर्वत्रापि संबन्ध इति ।। विश्वस्येत्यस्याधीशेत्यत्र अपिशब्दान्नियन्तेत्यत्र च संबन्ध इत्यर्थः ।। यच्छतेरिति ।। यम्धातोरित्यर्थः ।। अस्य भगवत इति ।। उपस्थमिति शेषः ।। संसारे इति ।। संसारे पृथक्करणायोगादित्यन्वयः । तत्र हेतुःचैतन्यस्य स्वरूपज्ञानस्य मनोवृत्तिरूपस्य ज्ञानस्यापि संवलनेन मिश्रीभावेन संसारे प्रवृत्तेरिति । मनसश्चिदचित्संवलनात्मकत्वात्तत्परिणामभूतप्रमात्रयस्यापि तथात्वादित्यपि हेतुःस्फुटत्वान्नोक्तः । मोक्षे तु शुद्धचैतन्यस्यैव प्रवृत्तिरिति भावः ।। अन्यत्रेति ।। द्वितीयस्कंन्धभागवततात्पर्योदाहृते ब्रह्मपुराण इत्यर्थः । चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदैव तु । तान्येव जडयुक्तानि विभिन्नानि स्वरूपत इत्यनेन मुक्तानां चिन्मात्रैर्मन आदीन्द्रियैःप्रवृत्तिमुक्त्वाऽन्यदा संसारे स्वरूपतो भेदशून्यैश्चिदिन्द्रियैर्जडयुक्तैः प्रवृत्त्युक्तेरिति भावः ।। केवलचैतन्यरूपाश्रीरिति ।। समाना चासृत्युपक्रमादमृतत्वं चानुपोष्येत्यादिनानित्यमुक्तत्वेनोक्तेति शेषः ।। तच्चेति ।। तच्च श्रियः सर्वस्वाम्यवचनं सवितुर्विष्णोः । सर्वस्वामिनीलक्ष्मीर्यस्य नियम्येत्युक्त्या विष्णोरत्युत्तमत्वलाभादिति भावः ।। नियम्यनियामकभावादिरिति ।। आदिशब्दात्प्रेर्यप्रेरकत्वादि ग्राह्यम् ।। रथ्यमिति ।। रथाद्यदिति यत्प्रत्यय इति भावः । अधितस्थुरित्यत्र कर्मानुक्तेराह ।। सवितारं हरिमिति प्रकरणादिति ।। इत्येष वेदार्थसार इति भाष्यं श्रुतिव्याख्यानरूपत्वाभावात्किमर्थमित्यतस्तत्संगमयति ।। एतत्प्रशंसामात्रमिति ।। एतत्प्रमात्रयादिनियामकत्वादिकं विष्णोःस्तुतिमात्रं न तुश्रुतेस्तत्र-तात्पर्यमिति भावः ।। पञ्चमो लकार इति ।। लेडित्यर्थः । कित ज्ञान इत्यतो लेटि तिपि जुहोत्यादित्वाच्छपः श्लौ द्वित्वादौ च तिप इतश्च लोप इतीकारलोपे लेटोडाटावित्यडागम इति भावः ।। अन्यथेति शेष इति ।। भाष्यकारैः श्रुतावन्यथेति शेषः पूरित इत्यर्थः । भाष्योक्तं कुर्याद्वेत्येतद्योजयति ।। चिकेतदित्यस्येति ।। अन्यथा कुर्यादन्यथा प्रतिपादयेदित्यर्थः ।

(टीकाविवृतिः)

प्रमात्रयादेर्विष्णुनियम्यत्वज्ञानमेवान्यथाज्ञानं किंनस्यादित्यत आह ।। बाधकाभावादितीति ।। बाधकेनैवान्यथाज्ञानत्वमनुमेयं नान्यथेति भावः । अभिपश्येदिति व्याख्यानेनैवालम् । कुर्याद्वेति व्याख्यानान्तरं व्यर्थं विशेषाभावादित्यत आह ।। कालान्तर इति ।। विपरीतकरणं प्रमात्रयादेरन्यो नियामको भविष्यतीति प्रतिपादनमित्यर्थः ।। ६ ।।

ऋक्संहिता पदपाठसहिता (सू-३५, व-२)

(४१७) वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः । क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ।। ७ ।।

(प०) वि । सुऽपर्णः । अन्तरिक्षाणि । अख्यत् । गभीरऽवेपाः । असुरः । सुऽनीथः । क्व । इदानीम् । सूर्यः । कः । चिकेत । कतमाम् । द्याम् । रश्मिः । अस्य । आ ततान ।। ७ ।।

(४१८) अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्तसिन्धून् । हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ।। ८ ।।

(प०) अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् । हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ।। ८ ।।

(४१९) हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते । अपामीवां बाधते वेति सूर्यमभिकृष्णेन रजसा द्यामृणोति ।।९।।

(प०) हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभेइति । द्यावापृथिवी इति । अन्तः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ।। ९ ।।

(४२०) हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँयात्वर्वाङ् । अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ।। १० ।।

(ऋक्संहिता पदपाठसहिता)

(प०) हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् । अपऽसेधन् । रक्षसः । यातुऽधनान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ॥ १० ॥

(४२१) ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे । तेभिर्नो अद्य पथिभिः सुगेभी रक्षा चनो अधिच ब्रूहिदेव॥११,६,३५,७॥

(प०) ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः। सुऽकृताः। अन्तरिक्षे । तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥ ११, ७, ३५, ७ ॥

## ऋग्भाष्यम्

गम्भीरवेगो भगवान्वा सुपर्णः परानन्दादन्तरिक्षाण्यपश्यत् । असौ रतिः शुभनीतिश्च विष्णुरित्यपश्यद्दुर्लभत्वात्क एव । पश्यन्नवे रश्मिगणानपीह सर्वव्याप्तानपि विष्णोर्न रश्मीन् । लोकः पश्येदिति कुत्राततानेत्याक्षिप्यते व्यक्तिमपेक्ष्य रश्मेः ॥ ७ ॥ ऊर्ध्वं मध्यमधरं चेति धन्वत्रयं तमः सुखलीनं यतस्तत् । युक्तं भवेत्तद्गतैः सर्वदैव दृढश्लेषाद्योजनं स्यात्तमोहि । अष्टौ दिशः प्रकृतेर्वा पृथिव्या महदाद्याः सिंधवस्तान्यपश्यत् । हिरण्याक्षो नरसिंहात्मना स वार्याणि यद्वरणीयं सुवित्तम् ॥ ८ ॥ चर्षणिभ्यो यत्प्रजाभ्यो विशिष्टो विचर्षणिः केशवः सूर्यमेति । ऋणोति सम्पूरयति ॥ ९ ॥ स्ववान्स स्वतन्त्रत्वात्स्वर्णपात्रं सुपूर्णम् । दधानोऽसौ स्वर्णवर्णश्च तेन स्वर्णपाणिः स्वर्णहस्तश्च देवः । पृथक्पृथक्पाणिपूर्वाङ्गवित्त्यै स्वर्णवर्णः स्वर्णपाणिः स उक्तः । एतैर्लिङ्गैर्वेत्ति सूर्यं यतश्च सूर्यादन्यः सविता वासुदेवः । उक्तो गायत्र्या चारणैस्तत्र तत्र कप्यासपद्माक्ष इति ह्युदाख्यः ॥ १० ॥ ये पन्थानो देवयाना अमुत्रसाध्या ये ते रेणवो रागतो वा । रजोहानादथवा तान्प्रदाय रक्षाधिकान्ब्रूहि नोऽथो समेभ्यः ॥ ११, ७, ३, ७ ॥

## ऋग्भाष्यटीका

विसुपर्णः । गम्भीर । परानन्दात्कारणात्सुपर्णः सु अतिशयेन परः ण आनन्दोऽस्येति । गभीरवेपाः । वेपःशब्दो वेगवाची गम्भीरवेगः । असौ प्राणे रतिरस्येत्यसुरः । सुनीथः नीथो नीतिः । शुभनीतिश्च ।

सविता भगवान्विष्णुरन्तरिक्षाणि स्वान्त(रीक्ष्याणि)रिक्षाणि। ईक्ष दर्शने कर्मण्यकारो ह्रस्वता च। व्यख्यदपश्यत्। उत्तरार्धतात्पर्यमाह ॥ इतीति। इत्येवंभूतं परमानन्दमगाधवेगम्। प्राणे रममाणं फलाव्यभिचारिनीतिम् अन्तर्भावितप्रपञ्चं सर्वज्ञं क एवापश्यत् न कोपि। कथम्। दुर्लभत्वादाक्षेपः। ततश्चैवं योजना। एवंभूतः सूर्य इदानीं क्व तिष्ठति। अस्य रश्मिः कतमां द्यां कतमस्मिन्नंतरिक्षप्रदेशे आततान व्याप्तः। इति कश्चिकेत को ददर्श। न कोपीति। यथान्यत्र देवतांतरपरत्वमविहायैव भगवत्परत्वं व्याख्यायते न तथात्र। किं तु केवलं भगवत्परत्वमेवेत्याशयवानाह। पश्यन्निति। इह गगने रवेः रश्मिगणानपि पश्यन्नपि लोकः सर्वव्याप्तान्विष्णोरश्मीस्तं च न पश्येदित्यभिप्रायेणैव कुत्राततानेत्याद्याक्षिप्यते। एतदुक्तं भवति। सूर्यस्तदीयारश्मयश्च गगनाधोभागव्यापिनो लोके न दृश्यन्त एव। अतो न तदपेक्षयाऽयमाक्षेपो युक्तः। किन्तु व्याप्तत्वेपि भगवांस्तदीया रश्मयश्च प्राकृतैर्न दृश्यन्त इति तद्विषय एवेति। नन्वयमाक्षेप इति कथमुच्यते। आक्षेपस्य विपर्ययेऽपर्यवसानात्। क्वेदानीं सूर्यो न क्वापि। कतमां द्यां रश्मिरस्याततान न कतमामपीत्यापत्तेरित्यत आह ॥ व्यक्तिमिति। आक्षिप्यत इति सम्बन्धः। यथा चैतत्तथैवास्माभिर्योजितमिति ॥ ७ ॥

अष्टौ। अत्र त्रीधन्वेति व्याख्याति। ऊर्ध्वमिति। ऊर्ध्वं मध्यमधरं चेति त्रिविधं तमो धन्वत्रयम्। धन्वत्वं कथमित्यत आह ॥ सुखेति। तत्तमो यतः सुखलीनं सुखरहितं तस्माद्धन्वशब्दम्। निरुदको हि देशो धन्वशब्देनोच्यते। तेन सुखाभावो लक्ष्यते। योजनशब्दस्याभिधेयं निर्वचनं चाह ॥ युक्तमिति। तम एव योजनं स्यात् कुतः दृढश्लेषात्कृत्यल्युटो बहुलमिति वचनाद्युज्यते श्लिष्यत इति योजनम्। प्रकर्षगतिविज्ञानाद्दृढेत्युक्तम्। तस्यैव विवरणं युक्तं भवेत्तद्वतैः सर्वदैव हीति। पृथिव्या अष्टौ ककुभ इत्येतत् द्वेधा व्याचष्टे ॥ अष्टाविति। पृथिव्याः प्रसिद्धाया अष्टौ ककुभो दिशः पूर्वाद्याः तदवच्छिन्नप्रदेशा इत्येकोर्थः। यद्वा पृथुत्वात्पृथिव्याः प्रकृतेः प्रदेशा अष्टौ ककुभोदिश इत्यपरः। सप्तसिंधवः समुद्रास्तावत्प्रसिद्धाः अपरान् आह ॥ महदाद्या इति ॥ महदहंकारभूतानि स्यन्दनात्कार्य प्रवाहत्वात्सिंधवः। पूर्वार्धवाक्यार्थमाह ॥ तानीति। तानि ककुभादीनि वस्तूनि। हिरण्याक्षत्वं हरौ घटयति। हिरण्येति। वार्याणीत्येतद्व्याचष्टे ॥ वार्याणीति ॥ यद्यस्मात्सुवित्तं शोभनानि वित्तानि वरणीयं वरणीयानि तस्माद्वार्याणि। ऋहलोर्ण्यत्। अनेन रत्नशब्दो वित्तार्थ इत्युक्तं भवति। ततश्चायमर्थः। यःपृथिव्या अष्टौ ककुभस्त्रीणि योजनानि धन्वानि सप्तसिन्धूंश्च व्यख्यदपश्यत्। स हिरण्याक्षः। सविता देव आगादस्मानागच्छत्। कथम्। दाशुषे दातुं वार्याणि रत्नानि दधत्। वार्याणि रत्नानि दाशुषे दधत् ददिति वेति ॥ ८ ॥

हिरण्यपाणिः। विविधाश्चर्षणयो यस्यासौ विचर्षणिरिति सिद्धेऽर्थान्तरमाह ॥ चर्षणिभ्य इति। कुगतिप्रादय इति समासः। सूर्यं वेतीत्यस्यार्थमाह ॥ सूर्यमिति। वीगत्यादौ।

(ऋग्भाष्यटीका)

धातूनामनेकार्थत्वाद्दृणोतीत्येतत्सम्पूरयतीति व्याख्यातम् । यद्वा प्रापणार्थत्वाद्धातोः सम्पूरयतीति तात्पर्यार्थकथनम् । तदयमर्थः । वक्ष्यमाणप्रकारेण हिरण्यपाणिर्विचर्षणिः सविता । उभे द्यावापृथिवी उभयोर्द्यावापृथिव्योरन्तर्मध्ये ईयते प्रतीयते । अन्तरान्तरेण योग इवान्तर्योगेपि द्वितीयोपसंख्यातव्या । किञ्च । अमीवां प्राणिनां पापमपबाधते । सूर्यं प्रसिद्धं वेति । कृष्णेन रजसा तमसा द्यामंतरिक्षमभिऋणोतीति ॥ ९ ॥

हिरण्यहस्तः । स्वस्य स्वेन सम्बन्धाभावात्स्ववानित्ययुक्तमित्यत आह ॥ स्ववानिति ॥ स विष्णुः । परवान्स्ववानिति परतंत्रस्वतन्त्रयोर्हि नामनी । हिरण्यहस्त इत्येतद्व्याकुर्वन्पूर्वं हिरण्यपाणिरित्येतदपि व्याख्याति स्वर्णेति । सुपूर्णं रत्नादिना । यतोऽसौ देवः सुपूर्णं स्वर्णपात्रं दधानो वर्तते । तेन पूर्वस्यामृचि स्वर्णपाणिर्हिरण्यपाणिरिह च स्वर्णहस्तो हिरण्यहस्त उक्त इत्येकं व्याख्यानम् । हिरण्यं हिरण्यात्मकं पात्रं पाणौ यस्येत्यादि निर्वचनात् । यतः स्वर्णवर्णस्तेन चेत्यपरम् । कथमेतदित्यत आह ॥ पृथगिति ॥ स्वर्णवर्णः स स्वर्णपाणिरुक्तः हिरण्यवर्णौ पाणी अस्येति निर्वचनादिति भावः । तथापि पाण्योरेव हिरण्यवर्णत्वं लभ्यते न सर्वावयवानाम् इति न वाच्यम् । उपलक्षणार्थत्वात्पाणिशब्दस्येत्युक्तम् । पृथक् पृथक् सर्वेषामिति यावत् । पाणिपूर्वाणामंगानां हिरण्यवर्णत्ववित्या इति । उपलक्षणे किं प्रयोजनमित्यतोप्युक्तम् । पृथक् पृथगिति । प्रत्येकमेव न समुदायेनेति भावः । तथा चायमर्थः । यो देवो रक्षसो रक्षांसि । यातुधानांश्च । अवान्तरजातिभेदात्पृथगुक्तिः । अपसेधन्निराकुर्वन्प्रतिदोषं सर्वासु रात्रिषु । दोषाशब्देनात्र तदुपक्रमोपसंहारौ लक्ष्येते । गृणानस्तूयमानोस्थात्स्थितः स हिरण्यहस्तोऽसुरोऽसुषु रतः सुनीथः सुनीतियुक्तः सुमृळीकोऽधिकं रक्षकः स्ववानर्वाङ्नीचानस्मान्प्रतियात्विति । अन्यत्र देवतांतरमविहाय भगवत्परत्वव्याख्यानादत्रापि तथेति प्रतीतिं वारयति । एतैरिति । अत्र सविता सूर्यादन्य एव स च वासुदेव एव । अन्यत्वं तावत्कुतः । एतैः केदानीं सूर्य इत्यादिनोक्तैर्लिङ्गैः । यतो वेति सूर्यमित्युक्तमतश्च कर्मकर्त्रोर्भेदावश्यंभावात् । तथापि वासुदेवः कुतः एतैराणिं न रथ्यमित्यादिनोक्तैर्लिङ्गैः । किञ्च । प्रतिदोषं गृणान इति गायत्री प्रतिपाद्योयं प्रतीयते । गायत्र्या चोक्तो वासुदेव एव । ध्येयः सदेति पुराणवाक्यात् । अपि चात्र हिरण्यवर्णः कथितः । हिरण्यवर्णश्चारणैरुपनिषद्भिस्तत्र तत्र हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण इत्यादौ वासुदेव एवोक्तः । न च तत्रापि सूर्यः । सूर्ये कथितत्वात् । न चान्यः । यतस्तस्य यथा कप्यासम्पुण्डरीकमेवमक्षिणी । इति कप्यासपद्माक्ष इत्युक्तः । कम्पिबन्नालसम्बन्धि कमलायतलोचनेति ब्रह्माण्डे । किञ्च । तस्योदिति नामेत्यसावुदाख्य उक्तः । न च सूर्यादीनामिदंनाम सम्भवति । स एष सर्वेभ्यः पाप्मभ्य उदित इति तन्निर्वचनात् । तस्य संसारिण्यसम्भवादिति ॥ १० ॥

ये ते । ये पंथानः । हे सवितर्देव ये ते प्रसिद्धा देवयानाः पूर्वभवाः पूर्व्याः । ये ते चान्तरिक्षे अमुत्र लोके साध्या इति शेषः । अरागतो वा अथवा रजोहानादरेणवः रेणुशब्देन रजःशब्दो लक्ष्यते । तस्य च रागो वा

(ऋग्भाष्यटीका)

**रजोगुणो वार्थः। तद्रहितपुरुषसम्बन्धद्वारकं चेदं विशेषणम्। सुकृताः निवृत्तसुकृतप्राप्याः पन्थाः पन्थानः। तेभिस्तैः। सुगेभिः सुगमैः। कण्टकादिरहितैः पथिभिः। तान्प्रदायेति यावत्। अद्य नोस्मान्रक्ष च संसारात्। अथो अन्यच्च नः अस्मानधिअधिकांश्च ब्रूहि। त्वद्वचनमात्रेणाधिका भविष्यामः। हीनेभ्योधिकत्वस्य सिद्धत्वादधिकेभ्यस्त्वप्राप्यत्वात्समेभ्य इत्युक्तम्। एतद्धटनं चान्यत्र द्रष्टव्यम्। पथां बहुत्वं चावान्तरभेदेनेति॥ ११, ७, ३, ७॥**

## मन्त्रार्थमञ्जरी

सुपर्णः, स्वतिशयेन पर उत्कृष्टो णः सुखं यस्य सः। गभीरवेपाः, गम्भीरवेगः, वेपशब्दो वेगपर्यायः। असुरः, असौ प्राणे (रः) रतिरस्येत्यसुरः, रमेर्भावे डः। सुनीथः, नीथो नीतिः, शोभननीतिः। (च) (सविता) भगवान्विष्णुः। अन्तरिक्षाणि, स्वान्तरीक्ष्याणि, 'ईक्ष दर्शने' कर्मण्यकारो ह्रस्वता च। वि अख्यत्, अपश्यत्। एवं भूतः सूर्यः इदानीम्। क्व, कुत्र। (तिष्ठति) अस्य रश्मि। कतमाम् द्याम्, कतमस्मिन्नन्तरिक्षे प्रदेशे।आ ततान, व्याप्तः। (इति) कः चिकेत, को ददर्श ? न कोऽपि। सूर्यस्य तद्रश्मेश्च सर्वैः प्रत्यक्षतोऽवगमेऽपीश्वरतद्र- श्मीनपेक्ष्य 'क्व?' इत्याक्षेपः इति ज्ञेयम्॥ ७॥

(यः) पृथिव्याः, प्रसिद्धपृथिव्याः। अष्टौ। ककुभः, प्राच्याद्याः तदवच्छिन्नाः प्रदेशाः। इत्येकोऽर्थः, 'पृथुत्वात्– पृथिव्याः, प्रकृतेः। अष्टौ। ककुभः, दिशः, प्रदेशाः (महदाद्याः) इत्यपरः, तान्। त्री धन्व, त्रीणि धन्वानि, ऊर्ध्वमध्याधरभेदेन त्रिविधानि धन्वानि सुखरहितानि धन्वन् शब्दस्य निरुदकदेशवाचितया तेन सुखराहित्यलक्षणात्। युज्यते श्लिष्यते स्वगतैरिति योजनं तमः– योजना, योजनानि, तमांसि। सप्त सिन्धून् (च) सप्त समुद्राँश्च। वि अख्यत्, अपश्यत्, चक्षिङः ख्याञादेशो लुङ्। (सः) हिरण्याक्षः। नृसिंहरूपी– सविता देवः। आ अगात्, अस्मानागच्छतु, लोडर्थे लुङ्। कथम् ? दाशुषे, यजमानाय। दातुम्– वार्याणि, वरणीयानि। रत्ना, रत्नानि। दधत्, 'ददत्' इति वा॥ ८॥

हिरण्यपाणिः, हिरण्यात्मकं पात्रं पाणौ यस्य स हिरण्यपाणिः, रत्नादिना सम्पूर्णं हिरण्यपात्रं पाणौ दधानो वर्तत इति हिरण्यपाणिरुच्यते, हिरण्यवर्णदेहत्वाद्वा हिरण्यवर्णौ पाणी यस्येति हिरण्यपाणिः। विचर्षणिः, विविविधाश्चर्षणयः प्रजा यस्य स विचर्षणिरिति वा, चर्षणिभ्यो विशिष्टो विचर्षणिरिति वा, 'कुगतिप्रादयः' इति प्रादिसमासः। सविता। उभे द्या वापृथिवी, उभयोर्द्यावापृथिव्योः। अन्तः, मध्ये। ईयते, प्रतीयते, अन्तरान्तरेणयोग इवान्तर्योगेऽपि वा द्वितीया

**(मन्त्रार्थमञ्जरी)**

वक्तव्या। किं च, अमीवाम्, प्राणिनां पापम्। अप बाधते। सूर्यम्, प्रसिद्धं सूर्यम्। वेति, 'वी गतिव्याप्तिप्रजनकान्त्य सनखादनेषु' इति धातोः, एति इत्यर्थः। कृष्णेन रजसा, शार्वरेण तमसा। द्याम्, अन्तरिक्षम्। (अभि) ऋणोति, धातूनामनेकार्थत्वात्– सम्पूरयति– इत्यर्थः॥ ९॥

(यः) देवः। रक्षसः, रक्षांसि। यातुधानान् (च) अवान्तरजातिभेदात्पृथगुक्तिः। अपसेधन्, निराकुर्वन्। प्रतिदोषम्, सर्वासु रात्रिषु, अत्र दोषाशब्देन दुतपक्रमोप संहार रूपसंध्याकालग्रहः। गृणानः गायत्र्यादिमन्त्रैः स्तूयमानः। अस्थात्, स्थितः। हिरण्यहस्तः, प्राग्वत् असुरः, असुषु रतः। सुनीथः, सुनीतियुक्तः। सुमृळीकः, अधिकं रक्षकः। स्ववान्, स्वतन्त्रः। अर्वाङ्, नीचान् अस्मान्प्रति। यातु इति॥ १०॥

(हे) सवितः देव। ते, प्रसिद्धाः, देवयानाः। पूर्वं भवाः पूर्व्याः (त एव पूर्व्यासः) ये च अन्तरिक्षे, अमुत्र लोके। (साध्याः) इति शेषः। पुनः कीदृशाः ? अरेणवः, रेणुशब्देन रजो लक्ष्यते, रजश्च रागो वा रजोगुणो वा, तद्रहितपुरुषप्राप्यत्व सम्बन्धात् 'अरेणवः' इत्युक्ताः। सुकृताः, निवृत्तकर्मप्राप्याः। पन्थाः, पन्थानः। तेभिः तैः। सुगेभिः (सुगैः) सुगमैः, कण्टकादिहीनैः। पथिभिः, तान्प्रदायेति यावत् अद्य। नः, अस्मान्। रक्ष च (संसारात्) (अथो) अन्यश्च। (नः) अधि च, अस्मानधिकाँश्च। ब्रूहि, त्वद्वचनमात्रेणाधिका भविष्यामः। पथां बहुत्वं चावान्तरत्वेन इति ज्ञेयम्॥ ११॥ इति सप्तमो वर्गः॥ ७॥ पञ्चत्रिंशं सूक्तम्॥ ३५॥ सप्तमोऽनुवाकः॥ ७॥

## रूपावतारः

विसुपर्णः॥ व्यख्यदिति। विपूर्वात् चक्षिङ्धातोर्लुङि च्लिप्रत्यये ख्याञादेशे 'अस्यति वक्ति ख्यातिभ्योऽङ्' (३।१।५२) इति च्लेरङादेशे 'आतो लोप इटि च' (६।४।६४) इति अकारलोपे अडागमे च इकारलोपे व्यख्यदिति रूपम्। ननु सूर्यः क्वास्तीति कश्चिकेत न कोऽपीति विपर्यये पर्यवसानसंभवादयमाक्षेपोऽस्तु। अस्य रश्मिः कतमां द्यामाततानेति कथमाक्षेपः स्यात्। पूर्ववत् विपर्ययपर्यवसानप्रसंगादिति भावेन शङ्कते। नन्वयमाक्षेप इति। क्वेदानीं सूर्य इति॥ इतःपरं क्वापीति प्रक्षिप्तम् इति कश्चिकेत नकोऽपीतिवदित्युच्छिन्नम्। ततश्चैवं टीकावाक्यपाठः क्वेदानीं सूर्य इति कश्चिकेत, न कोऽपीतिवत् कतमां द्यां रश्मिरस्याततान कतमामपीत्यापत्तेरित्यत आहेति। अवश्यं चैतदेवं विज्ञेयम्। क्वेदानीं सूर्य इति भागे कश्चिकेतेति पदद्वयसद्भावेन शङ्कानुत्थानात् भाष्यकृता कतमां द्यां रश्मिरस्याततानेति ग्रन्थस्यैव कश्चिकेतेति पदद्वयस्यावृत्त्यान्वयमभिप्रेत्य व्यक्तिमपेक्ष्य रश्मेरित्याक्षेपत्वसमर्थनाच्च॥ ७॥

(रूपावतारः)

अष्टौ व्यख्यत् ॥ ननु भावे करणाधिकरणयोश्च ल्युटोऽनुशासनात् कथं व्याख्यायत इत्यत आह। कृत्यल्युट इति। यद्वा पृथुत्वादिति। अत्र यद्वेति प्रक्षिप्तम्। पूर्वं एकस्यापरार्थस्यानिरूपितत्वेन ''यद्वा अपरं'' इत्युक्त्ययोगात्। आगादिति। आङ्पूर्वादिणः व्यत्ययेन लोडर्थे लुङि 'इणो गा लुङि' (२।४।४५) इति गादेशे 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' (२।४।७७) इति सिचो लोपे अडागमादौ आगादिति रूपम्। दाशुष इत्यनन्तरं अध्याहार्यमाह। दातुमिति ॥ ८ ॥

हिरण्यपाणिः ॥ कुगतिप्रादय इतीति। वेर्निरादित्वात्पञ्चम्यन्तेन समास इति भावः। अत एव वार्तिककृता इदं सूत्रं निरादयः क्रान्ताद्यर्थे पञ्चम्येति व्याख्यातम् ॥ ९ ॥

हिरण्यहस्तः ॥ तदुपक्रमेति। रात्र्युपक्रमरात्र्युपसंहारावुपलक्ष्येतेत्यर्थः। भेदावश्यंभावादिति। बाधकाभाव इति शेषः ॥ १० ॥

ये ते पन्थाः ॥ रजःशब्द इति। रज इति शब्दो यस्येति रजःशब्दार्थ इत्यर्थः। एतेन– रजःशब्दस्यान्वयप्रतियोगित्वाभावेन तत्तल्लक्षणणाभिधानमयुक्तमिति परास्तम्। रजःशब्दार्थस्यैव लक्ष्यत्वाभिधानात्। को रजःशब्दार्थ इत्यत आह। तस्य चेति। तद्रहितेति। मार्गस्य पुरुषो विशेषणम्। पुरुषस्यारागत्वं रजोगुणशून्यत्वं विशेषणम्। एवं च विशेषणपरंपरासंबन्धविवक्षया विशेषणत्वेनोक्तमिति भावः ॥ ११ ॥ ७ ॥ ३ ॥ ७ ॥

## पदार्थप्रकाशिका

विसुपर्णो अन्तरिक्षाण्यख्यत्। अयमर्थः सुपर्णशब्दात्कथं लभ्यत इत्यतस्तत्प्रकारं दर्शयति। सु अतिशयेनेति। शुभनीतिरिति। फलाव्यभिचरितनीतिरित्यर्थः। नीतिः प्रवृत्तिः। यस्यां नीतौ क्रियमाणायां नियमेन फलं भवतीति यावत्। अन्तरिक्षशब्दात्कथमयमर्थो लभ्यत इत्यत आह ईक्ष दर्शनमिति। अत्र क्षकारस्थ अकारोनुबन्धार्थः। इक्ष् इत्येव धातुः। तथाच अन्तरुपपदात् ईक्ष् दर्शनेऽस्मात् कर्मणि अकारप्रत्यये ईकारस्य च ह्रस्वे अन्तरिक्षेति रूपम्। इतीत्यनुवादेन एवं भूतमिति व्याख्यानम्। पूर्वार्धोक्तविशेषणयुक्तमित्यर्थः। तान्येव विशेषणान्यर्थतोऽनुवदति परमानन्दमित्यादिना ॥ सुपर्णशब्दार्थानुवादोऽयम्। अगाधवेगमिति गभीरवेपा इत्यस्य। प्राणो रममाणमित्यसुर इत्यस्य। फलाव्यभिचरितनीतिमिति सुनीथ इत्यस्य। नीतेः स्वित्युपसर्गोक्तशुभत्वविवरणाय फलाव्यभिचरितेत्युक्तम्। स्वान्तरीक्ष्यार्थकान्तरिक्षपदलब्धार्थानुवादोन्तर्भावितप्रपञ्चमिति। अपश्यदित्यनेन लब्धार्थप्रदर्शनं सर्वज्ञमिति। दुर्लभत्वादिति। एवं भगवत्स्वरूपं

(पदार्थप्रकाशिका)

द्रष्टुर्दुर्लभत्वादित्यर्थः । यत्रास्ति दुर्लभं चापि यत्तदाक्षिप्यते द्वयमिति वचनादिति भावः । ततश्चैवं योजनेति । पूर्वार्धस्य भाष्यकारैः सम्यग्व्याख्यातत्वादुत्तरार्धस्य तात्पर्यमात्रस्यैवोक्ते-रस्माभिरक्षरयोजनोच्यत इत्यर्थः । एवं भूत इति । सुपर्णत्वादिगुणक इत्यर्थः । रश्मिगणान-पीत्यपिशब्दसमुच्चेयं दर्शयति रविमिति । नन्वस्याः ऋचः सूर्यरूपदेवतान्तरपरत्वं न पश्यन्नवेरिति भाष्येण किं बाधकमुक्तमित्यत आह एतदुक्तं भवतीति । विपर्यये पर्यवसानात् विपर्यये पर्यवसानबलादित्यर्थः । सूर्यो भगवान् । अस्य रश्मिः । भगवतो रश्मिः । इत्यापत्तेरिति । तथाच अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतिविरोध इति भावः । व्याख्यानमिति । एवं भूतः सूर्य इत्यादिना । कश्चिकेत को ददर्श न कोपीत्येवमभिव्यक्तिमपेक्ष्यैवायमाक्षेप इति पूर्वमस्माभिर्व्याख्यातमित्यर्थः ॥ ७ ॥

अष्टौ व्यख्यत्ककुभः पृथिव्या । ननु युज् योगे योगश्च श्लेषः । ततश्चास्माद्धातोः कर्मणि ल्युटि युवोरनाकाविति अनादेशे गुणे च सति हि युज्यते श्लिष्यते तद्गतैरिति व्युत्पत्या तमः योजनमुच्यत इति वक्तव्यम् । तन्न युक्तम् । ल्युट् भावे करणाधिकरणयोश्चेत्युक्तत्वेन कर्मणि ल्युटोऽननुशासना-दित्यत आह कृत्यल्युट इति । तथाच बहुलग्रहणात्कर्मण्यपि ल्युडिति भावः । भाष्ये श्लेषादित्येव वक्तव्यम् दृढेति व्यर्थमित्यत आह प्रकर्षेति । गतिर्गमनिका व्याख्या । प्रकृष्टा हि गतिर्विज्ञायते शब्दानामिति न्यायादित्यर्थः । मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायादिति यावत् । तथाच श्लेषदृढश्लेषयोर्मध्ये दृढश्लेषस्यैव मुख्यत्वान्मुख्यस्यैव ग्राह्यात्वादित्याशयेन दृढेत्युक्तमिति भावः । तस्यैव दृढश्लेषादित्यस्यैव । विवरणमिति । तद्गतैरित्युक्तत्वादिति भावः । श्लेषादित्यस्य युक्तं भवेत्तद्गतैरिति विवरणम् । दृढेत्यस्य विवरणं सर्वदैवेतीति ज्ञातव्यम् । प्रसिद्धाया इति पञ्चभूतावराया इत्यर्थः । पृथिव्याः पूर्वाद्या दिश इत्यसंगतमत आह तदवच्छिन्ना इति ॥ पूर्वादिदिगवच्छिन्नाः भूप्रदेशा इत्यर्थः। प्रकृतेः प्रदेशा इति । प्रकृतिरव्याकृताकाशः तत्प्रदेशा इत्यर्थः । सिद्धान्तेऽव्याकृताकाशभागानामेव दिक्त्वादिति ध्येयम् । अपरोर्थः । भूतानि पञ्च भूतानि । भाष्य एकवचनं समुदायापेक्षमित्याशयेन सुवित्तं शोभनानि वित्तानीत्याद्युक्तम् । ननु वरणीयत्वाद्वर्यमिति स्यात् वार्यमिति तु कथमित्यत आह । ऋहलोर्ण्यदिति । वृञ्वरणेऽस्मात् ऋदंताद्धातोः कर्मणि ण्यत्प्रत्यये णित्वादादिवृद्धौ तस्य च रपरत्वे वार्यमिति युक्तमिति भावः ॥

ननु ऋचिरत्नेत्युक्तत्वात्तदनुसारेण भाष्ये वरणीये सुरत्नमिति वक्तव्यम् । सुवित्तमिति कस्मादुक्तमित्यत आह ॥ अनेनेति ॥ सुवित्तमिति वचनेनेत्यर्थः । हिरण्याक्षः सवितेति ।

नरसिंहात्मा सविता देव इत्यर्थः । दाशुष इति । यजमानायेत्यर्थः । दातुमिति शेषोक्तिः । दाश्वासुश्शब्दस्य यजमानवाचित्वं च एषउएव वदेति श्रुतिसिद्धमिति द्रष्टव्यम् । वार्याणि रत्नानि दधत् दधानः सविता देवो यजमानाय तानि दातुं आगच्छत्वित्यर्थः । अनेनागमनदानयोर्भिन्नकालीनत्त्वं प्राप्तं ततश्चागमनानन्तरं दाने विलंब इति प्रतीयेतातः प्रकारान्तरेणार्थमाह वार्याणीति ॥ तथाच वार्याणि रत्नानि दाशुषे यजमानाय दधत् सन् आगच्छत्वियुक्त्या आगमनदानयोरेकका-लीनत्वप्राप्तेर्न दाने विलंब इति सूचयतीति ध्येयम् ॥ ८ ॥

हिरण्यपाणिः सविताविचर्षणिः । ननु वीत्यस्य कथं चर्षणिपदेन समासः । समर्थः पदविधिरिति सूत्रेण समर्थस्य सुबन्तस्य समर्थेन सुबन्तेनैव समासविधानात् । वीत्यस्य चोपसर्गत्वेनासुबंतत्वात्कथं तस्य चर्षणिपदेन समास इत्यत आह कुगतिप्रादय इति समास इति । कुशब्दो गतिसंज्ञाः प्रादयश्च समस्यंते संतत्पुरुष इत्युक्तत्वेन वीत्यस्यापि । प्र । परा अप अव निर् दुर् वि आङ् । नि इत्येवं गति संज्ञकप्राद्युपसर्गमध्ये पठितत्वेन सुबंतत्वाभावेपि समासविधानाद्वीत्यस्य युक्तश्चर्षणिपदेन समास इत्यर्थः । तथाच चर्षणिभ्यो वि विशिष्टो विचर्षणिरिति विग्रहो द्रष्टव्यः । वेतीत्यस्य एतीति व्याख्यानमुपपादयति विगत्यादाविति । वी गतिप्रजनकान्त्यशनखादनेष्विति धातोरित्यर्थः । तथाच वी गतौ इण् गताविति धात्वोरेकार्थत्वात् वेतीत्यस्य एतीति व्याख्यानं युक्तमित्यर्थः । ऋण शब्द इति पठ्यमानत्वादाह धातूनामिति । क्रियावाचित्वमाख्यातुमेकैकोर्थः प्रदर्श्यते । प्रयोगतोनुगन्तव्या अनेकार्था हि धातव इति वचनदिति भावः । अत एवास्वरसादाह । यद्वेति । धातोः ऋणधातोः । भाष्ये पदार्थमात्रस्यैवोक्तेः स्वयं सम्यगृगर्थमाह तदयमर्थ इति । वक्ष्यमाणप्रकारेणेति । स्वर्णपात्रं सुपूर्णं दधानोसौ स्वर्णवर्णश्च तेन स्वर्णपाणिरिति वक्ष्यमाणप्रकारेणेत्यर्थः । विचर्षणिः प्रजाभ्यो विशिष्टः । यद्यपि अन्तरान्तरेण युक्त इति सूत्रेण अन्तरान्तरेणेति शब्दरूपयोग एव षष्ट्यपवाद-कत्वेन द्वितीया विहिता नान्तर्योगे तथाप्यन्तर्योगेपि ऋचि द्यावापृथिवीति द्वितीया छान्दसीत्याशयेन द्यावापृथिवीत्येतत् व्यत्ययेन द्यावापृथिव्योरिति षष्ट्यर्थत्वेन व्याख्येयमित्याशयेन द्यावापृथिव्योरंतरित्युक्तम् । व्यत्ययभीरुः समाधानांतरमाह अन्तरान्तरेण योग इवेति । अन्तरान्तरेण युक्ते । अन्तरान्तरेणेति शब्दौ निपातौ । अन्तरान्तरेणेति शब्दाभ्यां योगे द्वितीया विभक्तिर्भवति । षष्ठ्यपवादोयम् । अन्तरा त्वां च मां च कमण्डलुः । अन्तरेण त्वां च मां च कमण्डलुः । अन्तरेण पुरुषकारं न किञ्चिल्लभ्यत इत्युदाहरणम् । एवं चान्तरान्तरेणेति शब्दाभ्यां योगे यथा सूत्रे द्वितीया विहिता एवं अन्तःशब्दयोगेऽपि द्वितीयोपसंख्यातव्या । अतः द्यावापृथिवी अन्तरिति युक्तमिति भावः । उपसंख्यातव्या वेति वाशब्दसंबन्धो द्रष्टव्यः । अमीवामिति । सोमपाशब्दवत्

(पदार्थप्रकाशिका)

आकारान्तपुल्लिंगस्यामीवाशब्दस्य द्वितीयेति मन्तव्यम्। अमीवां पापं अपबाधत इत्युक्ते केषामिति शंकायां प्राणिनामिति योग्यतया लाभ इत्युक्तं भवति। प्रसिद्धं सूर्यं वेतीति। सूर्यं प्रति एति लोकानां ध्यानविषयत्वाय सवितृमध्ये वर्ती भवतीत्यर्थः। अभिऋणोति। सम्पूरयतीत्यर्थः। पूर्वस्यां दिशि उदयं प्राप्य यदा पश्चिमदिगभिमुखतया गच्छति तदा सायंकालो भवति। तथाच पूर्वदिग्भागेन्तरिक्षं तमसा आवृतं भवतीति प्रसिद्धमतः सवित्रंतर्गतः सवितृनामा श्रीनारायण एव कृष्णेन रजसा तमसा द्यामंतरिक्षमभिऋणोति सम्पूरयतीति युक्तमिति द्रष्टव्यम्॥ ९॥

हिरण्यहस्तो असुर सुनीथः। स्वस्येत्यादि। आत्माश्रयप्रसंगादिति भावः। आहेति। नायं स्ववच्छब्दो यौगिकः येन स्वस्य सम्बन्धरूपं स्ववत्वमयुक्तमिति शंका स्यात् किन्तु यथा परवानिति शब्दः परतन्त्रे रूढः एवं स्ववानिति शब्दोपि स्वतन्त्रे रूढ इति नावयवार्थमादायानुपपत्तिः शंकेत्या हेत्यर्थः। नामनीत्यनेन रूढत्वमुक्त्व रूढिज्ञापकं बहुलप्रयोगं दर्शयितुं हीत्युक्तमिति ज्ञातव्यम्। पूर्वम्। पूर्वऋक्स्थितम्। ननु तेन हिरण्यपाणि हिरण्यहस्त इति भाष्ये वक्तव्यम्। न तु स्वर्णपाणिः स्वर्णहस्त इति पूर्वस्य ऋचि अस्यां चर्चि हिरण्यपाणि हिरण्यहस्तशब्दयोरेव सत्वेन स्वर्णपाण्यादि शब्दाभावादित्यतः स्वर्णपाण्यादि शब्दमनूद्यार्थमाह पूर्वस्यां ऋचि स्वर्णपाणिरित्यादिना। स्वर्णपात्रं दधान इत्ययमर्थः कथं हिरण्यपाणिर्हिरण्य हस्तशब्दाभ्यां लभ्यत इत्यत आह हिरण्यमित्यादि। इत्यादिनिर्वचनादित्यनेन हिरण्यं हिरण्यात्मकं पात्रं हस्ते यस्येति निर्वचनमपि ग्राह्यम्। तेन चेत्यपरमिति। तेन स्वर्णपाण्यादिरुक्त इत्यपरं व्याख्यानमित्यर्थः। सः भगवान्। स्वर्णपाणिरुक्तो हिरण्यपाणिरुक्तः। स्वर्णवर्ण इत्ययमर्थो हिरण्यपाणिशब्दात्कथं लभ्यत इत्यत आह हिरण्यवर्णाविति। व्याख्यानं कुर्वन्नेव प्रतीकं गृह्णाति। पृथकपृथगित्यादिना वित्यावित्यन्तेन। लक्षणाप्रयोजनकथनपरत्वेनापि तदेव भाष्यं व्याचष्टे। उपलक्षण इति। उपलक्षणे पाणिशब्देनेतरांगोपलक्षणे। तस्यार्थमाह प्रत्येकमेवेति। प्रत्येकं प्रत्येकं पाणिपूर्वाणामंगानां हिरण्यवर्णत्वज्ञापनं प्रयोजनमित्यर्थः। एवकारव्यावर्त्यं दर्शयति। न समुदायेनेति। समुदायेनागानां हिरण्यवर्णत्वज्ञापनं न प्रयोजनमित्यर्थः। अयमभिप्रायः। हिरण्यपाणिरित्यनेन पाण्योरेव हिरण्यरूपत्वरूपमुख्यार्थस्य हिरण्यश्मश्रुर्हिरण्यकेश आप्रनखात्सर्व एव सुवर्ण इति श्रुति विरोधेनानुपपत्त्या पाणिशब्देनेतरांगोपलक्षणा कार्या। तत्र च प्रयोजनं प्रत्येकं प्रत्येकं एकैकस्याप्यङ्गस्य हिरण्यवर्णत्वज्ञापनम्। नन्विदं योजनं कुतः सर्वोप्यवयवसमुदायो हिरण्यवर्ण इति ज्ञानं प्रयोजनं कस्मान्न स्यात्। तथात्वे छत्रिन्यायेन हिरण्यवर्णपाणिसहचरितत्वादेवेतरा-वयवानामपि हिरण्यवर्णत्वमिति प्रतीतिः स्यात्सा मा भूदिति पृथक् पृथक् प्रत्येकं प्रत्येकं एकैकस्याप्यगस्य हिरण्यवर्णत्वज्ञापनमेव प्रयोजनमुक्तमिति।

ननु यातुधानानामेव राक्षसत्वात्कथं रक्षसो यातुधानानिति पार्थक्योक्तिः । यातुधानः पुण्यजनो नैर्ऋतो यातु रक्षसी इत्यभिधानेन यातुधानराक्षसपदयोः पर्यायत्वावगमादित्यत आह अवान्तरेति । यातुधानेष्वेव वा राक्षसेष्वेव वा केचन यातुधाना इत्युच्यन्ते केचन राक्षसा इत्येवं यातुधानत्वरक्षस्त्वरूपावान्तरजातिभेदात्पृथगुक्तिरित्यर्थः । यद्वा ननु यातुधानराक्षस योरुभयोरप्यसुरत्वादपसेधन्न सुरानित्यनुक्त्वा रक्षसो यातुधानानिति पृथगुक्तिः किमर्थेत्यत आह अवान्तरजातीति । असुरेष्वेवेति शेषः । असुरेष्वेव केचन राक्षसाः केचन यातुधाना इत्येवं राक्षसत्वाद्यवान्तरजातिभेदादित्यर्थः । यद्वाऽवान्तरजातिभेदादित्यस्य कुबेरसेवका यक्षाः पुण्यजनाः निर्ऋतिसेवका राक्षसा इत्येवं कुबेरभृत्यत्वनिर्ऋतिभृत्यत्वरूपावान्तरधर्मभेदादित्यर्थो द्रष्टव्यः । अर्धरात्रिकाले सवितुर्गायत्र्यादिना स्तूयमानत्वाभावाद्दोषाशब्दस्तदुपक्रमोप संहारभूतकालोपलक्षक इत्याह दोषाशब्दमात्रेति । तदुपक्रमः । रात्र्युपक्रमः । सायंकाल इति यावत् । तथाच प्रतिदोषं प्रातःसंध्याकाले सायंसंध्याकाले सर्वैस्त्रैवर्णिकैर्गायत्र्या स्तूयमान इत्यर्थः । तथाच गायत्रीप्रतिपाद्यत्वेन गायत्र्या स्तूयमानः सवितृनामा भगवान् गायत्र्याऽर्घ्ये दत्ते तदर्घ्याप्सु स्थित्वा सूर्येण सह योद्धुं प्राप्तान् राक्षसान् निराकरोतीति तात्पर्यार्थः । यथोक्तं यजुर्वेदे रक्ष्यांसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त तान्प्रजापतिर्वरेणोपामन्त्रयत तानि वरमसृणं तादित्यो नो योद्धा इति तान् प्रजापतिरब्रवीत् योधयध्वमिति तस्मादुष्ठतं हवा आदित्यं योधयंति यादस्तमन्वगात्तानि रक्षांसि गायत्र्याभिमन्त्रितेनांभसा शाम्यंति तदुहवा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याभिमंत्रिता आप ऊर्ध्वं निक्षिपन्ति इता एता आपो वज्री भूत्वा तानि रक्ष्यांसि मंदेहारुणे द्वीपे प्रक्षिपतीत्यादि ।

स्ववान् स्वतन्त्रः । अत्राप्यस्यां ऋचि । तथा देवतांतरपरत्वम् । अन्यत्वं तावदिति । अत्र प्रतिपाद्यस्य सवितुः सूर्यादन्यत्वं तावत्कुत इत्यर्थः । क्वेदानीमित्यस्य यथा प्रसिद्धसूर्य-विवक्षायामसंभवस्तथोक्तं प्राक् । ननु वेति सूर्यमित्यत्र प्रसिद्ध एव सविता प्रतिपाद्यः किं न स्यात् । सविता सूर्यं वेतीति सूर्यसवित्रोः कर्मकर्तृभावश्रवणात् । ततः किमित्यत आह कर्मकर्त्रोरिति । उत्सर्गत इति शेषः । यथोक्तं कर्मकर्त्रोरुत्सर्गतो भिधा । अभेदोपि विशेषे स्यादिति । प्रकृते चाभेदसाधकं प्रबलं प्रमाणं नास्तीति भावः । तथापीति । अस्त्वेतैर्लिङ्गैः सवितुः सूर्यादन्यत्वं तस्य वासुदेवत्वं तु कुत इत्यर्थः । आणिं रथ्यमित्यादिनेति । मुक्ताश्रयत्वादिकं च मुक्तोपसृप्यव्यपदेशात् मुक्तानां परमा गतिरित्यादिना वासुदेवस्यैव प्रसिद्धमित्याशयः । तत्रापि । हिरण्यश्मश्रूरित्यादि-वाक्येपि । सूर्ये कथितत्वादिति । य एषोंतरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुरिति

(पदार्थप्रकाशिका)

हिरण्यवर्णत्वादिमतः सूर्ये कथितत्त्वात्सूर्यस्य सूर्यान्तर्गतत्वासम्भवादिति भावः । ननु सूर्ये कथितत्वेपि वासुदेवत्वं तस्य कुतः सूर्योग्निः खंमरुद्भावः इत्यादिना सूर्ये प्रोक्तत्वाद्रुद्रस्य स एवान्तरादित्ये स्थितः किं न स्यादित्याशंक्य निषेधति । न चान्य इति । श्रुतौ एवं तस्य सूर्यातर्गतस्याक्षिणीत्यन्वयो द्रष्टव्यः । कप्यासंपद्माक्षः । कप्यासं यत्पद्मं तद्वद्विद्यमाने अक्षिणी यस्यास्यौ तथोक्तः । कपेरासः आसनं गुदं कप्यासः तद्वत् विद्यमानं यत्पुण्डरीकं एव यस्याक्षिणीति परेणेदं वाक्यमन्यथा व्याख्यातमत एतत् ध्यानपरं छान्दोग्यभाष्योक्तं प्रमाणमेवोदाहरति । कं पिबन्निति ।। तथाच कमुदकं पिबतीति कपि । उदकान्तर्निरूढमिति यावत् । एतादृशं यत् आसं आसनं नालमिति यावत् । यस्य तत् कप्यासं एतादृशं यत्पुण्डरीकं अम्लानं अतिरक्तं चेति यावत् । एवं तस्य सूर्यान्तर्गतस्य श्रूयेते अक्षिणी इति श्रुत्यर्थः । असाविति । हिरण्यवर्णत्वादिगुणकोऽथ सोऽसावित्यर्थः । इदं नाम उदिति नाम । कुत इत्यत आह स एष इति । तन्निर्वचनात् । उच्छब्दनिर्वचनात् । तस्य उच्छब्दप्रवृत्तिनिमित्तभूतस्य सर्वपापोद्गतत्वस्यासंसारिषु सूर्यादिदेवेष्विति हेतुगर्भविशेषणम् ।। १० ।।

ये ते पंथाः सवितः पूर्व्यासः । ननु ऋचि ये पंथास्तेभिर्नो अद्येत्यन्वयोपपत्तेरेकस्तच्छब्दो व्यर्थ इत्यतस्तस्यार्थमाह ते प्रसिद्धा इति । तथा चानुवादरूपत्वान्न वैय्यर्थ्यमिति भावः । पूर्वभवा इति । सनातना इत्यर्थः । यथोक्तम् । एते सृती ते नृपवेदगीते त्वयाभिपृष्टे च सनातने चेति । देवयाना इति । कार्याकार्यब्रह्मसाधनीभूता अर्चिरादिमार्गा इत्यर्थः । नन्वन्तरिक्षे इति कथम् । न हि देवयानमार्गा अन्तरिक्ष एव सन्ति अन्तरिक्षलोकस्थसूर्यादुपर्यपि सत्त्वात् । यथोक्तं उत्क्रान्तस्तु शरीरात्स्वाद्गच्छंत्यर्चिषमेव तु । ततो हि वायोः पुत्रं च योसौ नाम्नातिवाहिकः । ततोहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा । तटितं वरुणं चैव प्रजापं सूर्यमेव च । सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा । ततो वायुं परं प्राप्य तेनैति पुरुषोत्तममिति । अतः अन्तरिक्ष इत्यनूद्य व्याचष्टे अमुत्रलोक इति । परलोक इत्यर्थः । देवयानविशेषणमरेणव इति पदं द्वेधा व्याख्याति । अरागतो वेति । अथ रजोहानाद्वेति सम्बन्धः । जडानां मार्गाणां कथं रागरजोगुणाभ्यां शून्यत्वमसंगतमुच्यते कथं चारेणु शब्दस्येदमर्थद्वयमित्यत आह रेणुशब्देनेति । तस्य लक्षितरजःशब्दस्य । एतादृशरजः शून्यत्वरूपारेणुत्वरूपं विशेषणं मार्गाणामुपपादयति तद्रहितेति । दुष्टरागरजोगुणरहितेत्यर्थः । तथा चारेणव इत्यस्य रेणुशब्दोक्तरागरजोगुणशून्यपुरुषोपेता इत्यर्थः । उपेतत्वं च तैः प्राप्यत्वमित्यवधेयम् । सुकृतप्राप्या इति । निवृत्तसुकृतलभ्यापरोक्षज्ञानप्राप्या इत्याशयः । तान् एतादृशनिष्कण्टकमार्गान् । रक्षेति मुक्तिं देहीत्याशयः ।

(पदार्थप्रकाशिका)

ननु मया यूयमधिका इत्युक्ते तावन्मात्रेण भवतां किमाधिक्यं भविष्यति । अतः अधि च ब्रूहीति किं प्रार्थ्यत इत्याशंकायां भविष्यत्येवेत्याह तद्वचनमात्रेणेति । नन्वधिकेभ्य आधिक्यं यथा न प्राप्यं एवं समापेक्षयाप्याधिक्याप्राप्यत्वात्कथमेतदित्यत आह एतद्घटनं चान्यत्रेति । इदं च चक्रवर्तिरूपमनुष्यविषयमेव । न देवताविषयम् । तथाहि । समावेवापरोक्षज्ञानिनौ तन्मध्ये केनचिदपरोक्षज्ञानानन्तरं बहूनि सत्कर्माणि कृतानि केनचिन्न कृतानि तत्र स्वरूपेण समस्यापि कृतकर्मणः अकृतकर्मापेक्षया मुक्तावानन्दवैचित्र्यमस्तीति बृहदारण्यक भाष्ये अधि च ब्रूहीत्यस्य घटनमुपपत्तिर्द्रष्टव्येत्यर्थः । यथोक्तं बृहद्भाष्ये । मनुष्याणां योग्यतया स्वसमेभ्यः प्रयत्नाधिक्यान्मुक्तौ प्राप्तुं शक्यत इति । ननु ज्ञानोत्तरानुष्ठितात् प्रयत्नाधिक्यान्मुक्तौ प्राप्यमाधिक्यं नाम न तावत्स्वरूपसुखस्यैव पुनराधिक्यम् । तस्य क्लृप्तत्वेनानागन्तुकत्वात् । नापि क्लृप्तसुखस्यैवाभिव्यक्तिः। ज्ञानेनावरणभूतलिङ्गशरीराख्याविद्याया निवृत्तौ स्वरूपसुखाभिव्यक्तेः सर्वसाधारण्यात्। नापि पृथगेव सुखं जायते । तदनङ्गीकारात् । अतः कथमेतदिति चेत् । उच्यते । नाविद्यैवात्मस्वरूपस्यावरणं किं त्वीश्वरेच्छापि । तथाच ज्ञानेनाविद्यायां निवृत्तायाम् अशेषानिष्टनिवृत्तिर्भवति स्वरूपसुखं च बहुतरं व्यज्यते न तु सर्वम् । एवं च योग्यतया साम्येपि येन ज्ञानोत्तरं निवृत्तकर्मानुष्ठानलक्षणं प्रयत्नाधिक्यं कृतं तेन तज्जन्येश्वरप्रसादद्वारा यावत्स्वरूप सुखाभिव्यक्तिलक्षणं आधिक्यं प्राप्तुं शक्यते । येन तु न तदनुष्ठितं तेन नेति । एतदभिप्रायेणैवानन्दवृद्धिह्रासप्रतिपादनं तत्र तत्र क्रियते । इदमपि न देवेषु सम्भवति । देवानां यावत्स्वरूपानन्दाभिव्यक्तेः क्लृप्तत्वेन तत्र वृद्धिह्रासाभावात् । यथोक्तं सुराणां मुक्तौ तु सुखं क्लृप्तमिति । अतो मनुष्येष्वेवेदं न । तदीयानन्दस्य च वृद्धिह्रासौ वर्तेत एव यथोक्तं वृद्धिह्रासौ विमुक्तिगौ नृणामिति । यावत्स्वरूपानन्दानभिव्यक्तिलक्षणानन्दह्रासं प्रति विकर्मवत् भगवत्पूजात्मककर्माकरणे च निमित्तम् । यथोक्तमीशावास्यभाष्ये । कृष्णोपास्तिमकुर्वतः ज्ञानिनोपि यतो ह्रास आनन्दस्य भवेद्ध्रुवमिति । अयोग्यकं महापदे विधातुरेष हि क्रतुः । समानयोग्यतागणात्करोति मुक्तिगं वरमित्येतदपि चक्रवर्तिरूपमनुष्यपरं योज्यम् । तथाहि वाक्यशेषः । अतस्त्रिशंकुपुत्रको नृपानतीत्य वर्तत इति । अतो नो अधि च ब्रूहीत्येतदपि उक्तरीत्या मानुषचक्रवर्तिविषयमेव न देवताविषयमिति सम्प्रदायो बृहदारण्यकभावबोधानुसारेणावगन्तव्यः । ननु मोक्षसाधनीभूतस्य देवयानमार्गस्यैकत्वाद्येते पन्था इति कथं बहुवचनीभूतस्य देवयानमार्गरचनमित्यत आह पंथाबहुत्वं चावांतरभेदेनेति । देवयानमार्गस्य सामान्यत एकत्वेपि तदवान्तरभेदानामर्चिरादिनाममुत्र लोके बहूनां सत्वात्तदभिप्रायेण बहुवचनं युक्तमित्यर्थः ॥ ११, ७, ३, ७ ॥

## पदार्थदीपिका

ननु करणाधिकरणयोश्चेति स्मरणात्कथं युज्यत इति कर्मणि ल्युडित्यत आह ॥ कृत्यल्युटो बहुलमिति वचनादिति। ननु युजेः श्लेषमात्रार्थकत्वेन श्लेषादित्येव व्याख्यातव्यम्। दृढश्लेषादिति कथं व्याख्यानमित्यत आह प्रकर्षेति । प्रकर्षे शब्दानां या गतिः तस्य विज्ञानात् । अनुभवसिद्धत्वादित्यर्थः। तथा चोत्सर्गतः शब्दानां प्रकृष्टार्थप्रतिपादकत्वात् युजेरप्यसति बाधके दृढश्लेषार्थकत्वमिति व्याख्यानमिति भावः। अगादिति। एतेर्लुङि इणो गा लुङि इति गादेशः। गातिस्थेति सिचो लुक् । शतरि नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः । अभ्यस्तयोरात इत्याकारलोपः। दाशुषे। दाश्वान् साह्वानित्यादिना क्वसुप्रत्ययान्तो निपातितः। चतुर्थ्यैकवचने वसोः सम्प्रसारणमिति सम्प्रसारणम्। परपूर्वत्वं शासिवसिघसीनां चेति षत्वमिति ज्ञेयम् ॥ ८ ॥

कुगतीति । वि विशिष्टः चर्षणीभ्य इति प्रादिसमास इत्यर्थः । ननु ऋण गताविति ऋणोतेर्गत्यर्थत्वात् संपूरयतीति कथं व्याख्यानमित्यत आह । अनेकार्थत्वादिति । यद्वेति । ऋणोतेर्गत्यर्थत्वात्गत्यर्थानां च प्रापणार्थत्वादित्यर्थः। वक्ष्यमाणेति। हिरण्यहस्तेति उत्तरवाक्यव्याख्यानावसरे वक्ष्यमाणप्रकारेणेत्यर्थः । उपसङ्ख्यातव्येति । पूर्वं द्यावापृथिवीत्यस्य छान्दसं द्वितीयान्तत्वमभ्युपेत्य द्यावापृथिव्योरिति षष्ठ्यन्ततया द्वितीया व्याख्याता सम्प्रति अन्तर्योगेपि द्वितीया भवत्येव। तथा च षष्ठ्यर्थतया व्याख्यानं न कर्तव्यमिति पक्षान्तरमुच्यत इति भेदः। वेति। वीगतिव्याप्तिप्रजनकांत्यसखादनेषु। अदादित्वाच्छपो लुक्। ऋणोतीति। ऋण गतौ। तनादित्वादुः। तनादिषु करोतेरेव गुणो नान्येषामिति आपिशालिमतेन गुणाभाव इति ज्ञेयम् ॥९॥

स्ववानिति। मादुपधाया इति मतुपो वत्वम्। संहितायां नकारस्य दीर्घादटिसमानपद इति रुत्वम्। आतोटि नित्यमिति सानुनासिकाकारः। रोर्यत्वम्। यलोपश्चेति द्रष्टव्यम्। गृ शब्दे। कर्मणि लटः शानच्। व्यत्ययेन प्वादीनां ह्रस्व इति ह्रस्वत्वम्।

ननु सूर्यं वेत्तीत्युक्तेपि सविता सूर्य एव किं न स्यादित्यत आह कर्मकर्त्रोरिति। तथा सति सूर्यस्यैवावगतिक्रियाकर्तृत्वकर्मत्वे स्यातां ते न सम्भवतः। कर्मकर्त्रोरुत्सर्गतो भेदनियमात्। प्रकृते च बाधकाभावादिति भावः। न च तत्रापीति। उपनिषत्स्वपि स्वर्णवर्णत्वेनोच्यमानोपि सूर्य एवेति च न च वाच्यमित्यर्थः। कथितत्वादिति। य एषोऽन्तरादित्ये हिरण्मयःपुरुषो दृश्यत इत्युपक्रम इति शेषः ॥ १०,११ ७,३५ ॥

## टीकाविवृतिः

विसुपर्णः ॥ परो ण आनन्द इति ॥ णश्च निर्वृतिवाचक इत्युक्तेर्णशब्दस्य सुखार्थत्वं परशब्दांतलोपश्च छान्दस इति भावः ॥ असौ प्राणे इति ॥ स एषोसुःस एष प्राण इति श्रौतप्रयोगात्पुंसि भूम्न्यसवःप्राणा इत्यमरकोशे नित्यबहुवचनांतत्वोक्तिःप्रायिकत्वाभिप्रायेति बोध्यम् ॥ नीथो नीतिरिति ॥ नयतेर्हनिकुषिनीरमिकाशिभ्यःक्थन्निति भावे क्थन्प्रत्यय इति भावः ॥ कर्मण्यकार इति ॥ ऋच्यौणादिक इति शेषः । अन्तरिक्षाणीति पाठे तु भाष्ये चेत्यपि शेषः ॥ व्यख्यदिति ॥ ख्या प्रकथन इत्यतो लुङि तिपि च्लेरस्यति वक्ति ख्यातिभ्यो ङित्यङादेश इति भावः ॥ दुर्लभत्वादिति ॥ एतादृशपरमात्मज्ञानिन इति शेषः । भाष्ये सूर्यतद्रश्मिसमूहं पश्यतो लोकस्य सर्वत्र व्याप्तविष्णुतद्रश्मिदर्शनाभावः कथमसंगतःकथ्यते इत्यत आह ॥ एतदुक्तं भवतीति ॥ अस्माभिर्योजितमिति ॥ इतिशब्दाध्याहारेण कश्चिकेतेत्यस्य योजनया द्रष्टृमात्राक्षेपान्न सूर्याद्याक्षेप इति भावः ॥ ७ ॥

अष्टौ व्यख्यत् ॥ धन्वशब्दमिति ॥ धन्व इति शब्दोवाचको यस्य तत् धन्वशब्दमित्यर्थः ॥ निरुदको हि देश इति ॥ मरुदेशः । समानौ मरुधन्वानावित्यमरोक्तेरिति भावः । ननु योजनशब्दस्य ल्युडन्तस्य कथं धन्वविशेषणत्वं ल्युटःकरणाधिकरणभावार्थकत्वाद्धन्वनश्च कर्मत्वादित्यत आह ॥ कृत्यल्युटो बहुलमितीति ॥ युज्यत इति ॥ तमः स्वगतैरिति शेषः । भाष्ये दृढेति कस्यार्थ उक्त इत्यत आह ॥ प्रकर्षगमीति ॥ सर्वेषां स्वगतसंबन्धस्य सत्त्वात्तमस एव योजनेति विशेषण-सामार्थ्यात्प्रकर्षस्य गतेःप्राप्तेर्विज्ञानादित्यर्थः ॥ प्रकृतेरिति ॥ लक्ष्म्याः तदभिमन्यमाना-व्याकृताकाशस्येति यावत् ॥ दिश इत्यपर इति ॥ पूर्वव्याख्याने दिगवच्छिन्नाःभूप्रदेशाःककुप्शब्देन गृह्यन्ते इदानीं तु दिश एवेति भेदः ॥ स्यंदनादिति ॥ स्यंदू प्रस्रवण इत्यतः स्यंदेः संप्रसारणं धश्चेत्युप्रत्ययो यकारस्य संप्रसारणमिकारोदकारस्य धकारादेशश्चेति भावः ॥ ऋहलोर्ण्यदिति ॥ अनेन सूत्रेण वृञो ण्यति अचोञ्णितीति वृद्धौ वार्याणीति रूपमिति भावः ॥ वित्तार्थ इतीति ॥ रत्नं रयिरिति धननामसु पाठादिति भावः ॥ आगादिति ॥ इणःछन्दसि लुङ्लङ्लिट इति कालसामान्ये लुङि इणो गालुङीति गादेशे गातिस्थेति सिचो लुगिति भावः ॥ दाशुष इति ॥ दाशृदान इत्यतोदाश्वान्साह्वानिति सूत्रेण क्वसोर्निपातनाद्दात्रे इत्यर्थः ॥ रत्नानि दधदिति ॥ धारकः धाञो लटःशत्रादेशे शपःश्लुरिति भावः । अस्मिन्पक्षे दातुमित्यध्याहारदोषात्पक्षान्तरमाह ॥ दधद्ददिति वेति ॥ दातेत्यर्थः । दाञः शतरि शपःश्लौ व्यत्ययेन दस्य धकार इत्याशयः । रत्नानीत्यस्यात्रापि संबन्धः ॥ ८ ॥

(टीकाविवृतिः)

हिरण्यपाणिः ॥ इति सिद्धे इति ॥ बहुव्रीहौ समासे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वे च सिद्ध इत्यर्थः । चर्षणिभ्यो विशिष्ट इति विग्रहेण पञ्चमीतत्पुरुषे णि शब्दस्य पूर्वनिपातःस्यादित्यत आह ॥ कुगतीति ॥ प्रादिसमासोयं न गतिसमासः । चर्षणिशब्दस्य क्रियावाचकत्वाभावेनविशब्दस्य क्रियायोगाभावेन गतिसंज्ञाभावात् । अत एव न कृदुत्तरपदप्रकृतिस्वरः किंतु तत्पुरुषे तुल्यार्थेत्यनेनाव्ययपूर्वपदप्रकृतिस्वरेण विशब्द उदात्त इति भावः ॥ वीगत्यादाविति ॥ वीगतिव्याप्तिप्रजनकांत्यसनकादनेष्वित्युक्तेः । प्रकृते भाष्ये एतीत्युक्त्या गत्यर्थस्य विवक्षितत्वादिति भावः ॥ वक्ष्यमाणेति ॥ उत्तरग्व्याख्याने हिरण्यहस्तशब्दहिरण्यपाणिशब्दयोःस्वर्णपात्रमिति भाष्ये व्याख्यानाद्धिरण्यपाणिरित्यस्य सुवर्णपात्रपाणिस्तथा सुवर्णवर्ण इत्यर्थो ज्ञेय इति भावः । षट्सु द्वितीयेत्युक्तेःसुपां सुप इति वचनाद्वा षष्ठ्या द्वितीयादेशे सिद्धेपि प्रकारान्तरमाह ॥ अन्तर्योगेपि वेति ॥ अमी वां प्राणिनां पापमिति ॥ अमगत्यादावित्यतःकरणे शे वयह्वजिह्वाग्री- वाप्वामीवा इति वप्रत्यय निपातने ईकारागमस्यापि निपातने अमी वा इति रूपं सूत्रे अकारप्रश्लेषेण ज्ञेयम् । अम्यते गम्यते नरकमनेन पापेनेत्यमी वा पापमित्यर्थः ॥ ९ ॥

हिरण्यहस्तः ॥ स्वस्य स्वेनेति ॥ ऐक्यात्संबन्धायोगादिति भावः ॥ परतन्त्रस्व-तन्त्रयोर्हिनामनीति ॥ परतन्त्रस्वतन्त्रयोर्हिनामनीति ॥ परशब्दस्वशब्दाभ्यां नित्ययोगेऽतिशायने इति वचनान्नित्ययोगे मतुपि नित्यं स्वसत्तादौ परापेक्षावानिति परवानित्यस्य परतन्त्रार्थबोधकत्वात्परतन्त्र नामत्वम् । एवं स्वसत्तादौ स्वापेक्षावानेव न परापेक्षावानिति स्ववानित्यस्य स्वतन्त्रार्थबोधकत्वात्स्वतन्त्रनामत्वमिति भावः । भाष्यस्थस्वर्णपाणि-स्वर्णहस्तशब्दौ ऋग्गतहिरण्यपाणिहिरण्यहस्तशब्दयोरर्थतोनुवादपरावित्याशयेनाह ॥ पूर्वस्या-मृचीति ॥ कथमेतदिति ॥ पाणिशब्दस्य वर्णवाचकत्वाभावादिति भावः । उपलक्षण-स्याजहल्लक्षणारूपस्यावच्छेदकमाह ॥ पाणिपूर्वाणामंगानामिति ॥ अङ्गत्वावच्छिन्नस्य सुवर्णवर्णत्वज्ञापनाय पाणिशब्दग्रहणादिति भावः ॥ प्रत्येकमेवेति ॥ एकैकमङ्गं प्रत्येकं सुवर्णवर्णं ध्येयम् । तत्तद्दार्ढ्ये अङ्गान्तरं न तु प्रथममेव समुदायेन सुवर्णवर्णत्वं ध्येयम् । मन्दानान्तदशक्तेरिति ज्ञापनाय पाणिशब्दग्रहणमिति भावः । ननु रात्रौसंध्यावंदननिषेधात्कथं प्रतिदोषमित्युक्तिरित्यत आह ॥ तदुपक्रमोपसंहाराविति ॥ द्वौ संध्याकालावित्यर्थः । रात्रिनिषेधवाक्यं तु संध्याकालःप्रागुदयाद्विप्रस्य द्विमुहूर्तकः । रात्रौ प्रहरपर्यन्तं दिवाकर्माणि कारयेदित्यादित्यादि

(टीकाविवृतिः)

वचनविरोधान्मध्यरात्रिनिषेधपरमिति भावः ।। असुषु रत इति ।। मुख्यप्राणरूपेषु स्नेहवानित्यर्थः ।। सुमृळीक इति ।। मृडसुखने इत्यत औणादिकःऋजेःकीकन्नित्युक्तःकीकन्प्रत्यय इति भावः ।। तथेति प्रतीतिमिति ।। देवतांतरपरत्वप्रतीतिमित्यर्थः ।। केदानीं सूर्य इत्यादिनोक्तैरिति ।। प्राकृताज्ञेयत्वादिलिङ्गैरित्यर्थः ।। वेतिसूर्यमित्युक्तमिति ।। पूर्वस्यामृचि सूर्यं प्रतिगमनमुक्तमित्यर्थः । एतैर्लिङ्गैरिति भाष्यं प्रकारान्तरेण व्याचष्टे ।। एतैराणिं न रथ्यमिति ।। मुक्ताश्रयत्वादिभिरिति शेषः ।। गायत्रीप्रतिपाद्योयमिति ।। संध्याकालद्वये प्रदोषकालत्वेन वेदाध्ययननिषेधात्संध्यांगगायत्री-स्तुत्यत्वमेव वाच्यमित्यर्थः ।। सुवर्ण इत्यादाविति ।। आदिशब्दाद्यदा पश्यःपश्यते रुग्मवर्णमिति वाक्यं ग्राह्यम् ।। सूर्ये कथितत्वादिति ।। य एष आदित्ये हिरण्मयःपुरुष इति वाक्य इति शेषः ।। न चान्य इति ।। ब्रह्मरुद्रादिरित्यर्थः ।। कप्यासपद्माक्ष इति ।। कप्यासं यत्पद्मं तद्वदक्षिणी यस्येति विग्रहः । कप्यासशब्दार्थं प्रमाणेनाह ।। कं पिबन्निति ।। नालसंबन्धि नालान्तर्वर्ति कं जलं पिबन्नास्त इति कप्यासमम्लानं पद्ममिति शेषेण योज्यम् । कमलायतलोचनेति तु यथाकप्यासमिति वाक्यतात्पर्यार्थ इति भावः । अत्रापि तादृशेति कमलविशेषणं ज्ञेयम् । हिरण्यश्मश्रुरिति वाक्यप्रतिपाद्यो विष्णुरेव न सूर्यादिरित्यत्र तदुपनिषत्स्थं ज्ञापकान्तरमाह ।। किञ्चेति ।। असौ हिरण्यश्मश्रुः ।। तस्येति ।। सर्वपापराहित्यरूपोच्छब्दनिर्वचनस्येत्यर्थः ।। १० ।।

ये ते पंथाः ।। श्रुतौ ते शब्दस्यानुदात्तत्वेन युष्मच्छब्दरूपस्य ते तव संबन्धिनःपंथा न इत्यन्वयाभिप्रायेणाह ।। देव ये ते प्रसिद्धा इति ।। हे देव ते तव ये प्रसिद्धा इत्यन्वयः । प्रसिद्धा इति ते इत्यस्य न व्याख्यानं किन्तु ये इत्यस्य वा अध्याहाररूपं वा । यच्छब्दसापेक्षस्य तेभिरिति तच्छब्दस्यानेनान्वय इति बोध्यम् ।। देवयाना इति ।। शरीरस्थाःसुषुम्नादिनाड्यो देवयाना इत्यर्थः ।। अमुत्रेति ।। अर्चिरादिलोक इत्यर्थः ।। तद्रहितपुरुषेति ।। विषयरागरारजोगुणरहितपुरुषसंबन्धिन इति अरेणव इति पदस्यार्थ इति भावः ।। सुगेभिरिति ।। सुपूर्वाद्गमेःसुदुरोरधिकरण इति डप्रत्ययः । सुखेन गच्छंत्यत्र सुगास्तैःसुगेभिरित्यर्थः । नन्वधिकेभ्य इव न समेभ्योप्याधिक्यप्राप्तिः स्वरूपस्यानपायादित्यत आह ।। एतद्घटनं चेति ।। ये स्वसमाःकालान्तरे मोक्षिणस्तेभ्यः शीघ्रेण मोचनमाधिक्यम् । अथवा येषां समानां सत्कर्माकरणात् महद्दुष्कर्मकरणाद्वानंदादिह्रासस्तेभ्यः संपूर्णस्वरूपानुभवरूपमाधिक्यघटनं छान्दोग्यभाष्यादौ कृतं द्रष्टव्यमित्यर्थः । मोक्षमार्गस्यै-क्यात्पथामिति बहुवचनं कथमित्यत आह ।। पथां बहुत्वं चेति ।। गरुडशेषमार्गभेदाद्गरुडमार्गे शेषमार्गे च पृथगवान्तरभेदादर्चिरादिलोकानां मार्गभूतानां भेदाद्वेत्यर्थः ।। ११ ।।

ऋक्संहिता पदपाठसहिता (सू-३६, व-१)

(४२२) प्र वो यह्वं पुरूणां विशां देवयतीनाम् । अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते ॥ १ ॥

(प०) प्र । वः । यह्वम् । पुरूणाम् । विशाम् । देवऽयतीनाम् । अग्निम् । सुऽउक्तेभिः । वचःऽभिः । ईमहे । यम् । सीम् । इत् । अन्यः । ईळते ॥ १ ॥

(४२३) जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेमते । स त्वं नो अद्यसुमना इहाविता भवा वाजेषु संत्य ॥ २ ॥

(प०) जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः । विधेम। ते । सः । त्वम् । नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । सत्य ॥ २ ॥

(४२४) प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम् । महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ॥ ३ ॥

(प०) प्र । त्वा । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् । महः । ते । सतः । वि । चरन्ति । अर्चयः । दिवि । स्पृशन्ति । भानवः ॥ ३ ॥

(४२५) देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते । विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥ ४ ॥

(प०) देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सम् । दूतम् । प्रत्नम् । इन्धते । विश्वम् । सः । अग्ने । जयति । त्वया । धनम् । यः । ते । ददाश । मर्त्यः ॥ ४ ॥

(४२६) मन्द्रो होता गृहपतिरग्ने दूतो विशामसि । त्वे विश्वा संगतानि व्रताध्रुवा यानि देवा अकृण्वत ॥ ५, ८ ॥

(प०) मन्द्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि । त्वेइति । विश्वा । समऽगतानि । व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥ ५, ८ ॥

## ऋग्भाष्यम्

कण्वस्त्वध्यापयन्विष्णोरनुग्रहमथाप्नुवन् । इच्छंश्च ज्ञानविततिं देवांस्तुष्टाव भक्तितः । ऋक्शतेनावशिष्टं च जप्यस्यांते तु कालतः । शृण्वन्तु स्तोममित्यंता ददर्शैकाग्रमानसः । बह्वाधेयत्वतः पुत्रं बहूनां वो हुताशनम् । बहुज्ञेयत्वतो विष्णुं वेमहे हेप्रजाः सदा । देवज्ञानाद्वा यजनाद्देवयत्यः समीळते । यमन्ये च जनास्सन्तः ॥ १ ॥ सहसा वायुनैधितम् । धारयन्ति जनास्तस्य कर्म कुर्मो वयं चते । संत्यः सम्यक्त्वतो विष्णुर्वायोरपि विवृद्धिकृत् ॥ २,३ ॥ प्रततेः पुरातनत्वाद्वा प्रत्नः ॥ ४ ॥ मन्द्रो महामखः ॥ ५, ८ ॥

## ऋग्भाष्यटीका

एवं हिरण्यस्तूपदृष्टा ऋचो व्याख्यायोत्तरासाम् ऋषिमाह ॥ कण्वस्त्विति ॥ विष्णोरनुग्रहमवाप्नुवन्ज्ञानविततिमिच्छन्निति अध्यापने हेतुद्वयम् । अथचशब्दावितरेतरसमुच्चये । तुशब्द एवार्थः । तेन जीवनार्थत्वं वारयति । देवान्विष्णुप्रधानकानग्न्यादीन् । ऋक् शतावशिष्टं च स एव ददर्शेति सम्बन्धः । तर्हि कथमस्य शतर्चित्वमित्यत उक्तम् । जप्यस्येति । भावे कृत्यः कालत इति कालान्तरत्वमुक्तम् । जप्यस्यान्त इत्यवस्थान्तरत्वम् । एतदर्थमेवाध्यापयन्नित्युक्तम् अवशिष्टमित्युक्तस्यैव विवरणम् । शृण्वंत्विति । इत्यन्ता ऋच इति तद्गुणसंविज्ञानो बहुव्रीहिः । अनेन त्वमग्न इत्यतः प्राक्तनीनां कण्वदृष्टत्ववचनेन नाग्नेषळूनाप्रस्कण्व इति कण्वदृष्टास्वेव चतुर्दशानां यत्प्रस्कण्वदृष्टत्ववचनं तदसदित्युक्तं भवति । प्रमाणं तु प्रागेवोक्तमिति ॥ प्रवः । विंशत्यृचमिदमाग्नेयं सूक्तम् । ऊर्ध्व ऊष्विति द्वे यौप्यावित्येके । बहुव इति श्रवणात् । हे प्रजाः ज्ञानकर्माधिकृताः । देवयतीनां देवज्ञानाद्देवानां यजनाद्वा देवयत्यः तासाम् । द्वितीयांतस्य देवशब्दस्येणः शत्रंतात्स्त्रियां ङीपि कृते सिद्धेन यतीशब्देन श्रितादिषु गमिगम्यादीनामुपसंख्यानात्समासः । गतिश्च ज्ञानं वा यजनं वेति । पुरूणां बहूनां विशां प्रजानां वो युष्माकम् । यह्वं यहुम् । छन्दस्यमि पूर्वरूपमकृत्वा यणादेश एव कृतः । पुत्रमग्निं हुताशनं विष्णुं वा । हुताशनस्य बहुपुत्रत्वघटकं बह्वाधेयत्व इति । विष्णोस्तु बहुज्ञेयत्वत इति । अत एव देवयतीशब्दो द्वेधा

व्याख्यातः। वयं सूक्तेभिः सम्यक् प्रयुक्तैर्वचोभिः। प्रः सदेमहे। याश्चाकर्मसु पाठात्। कथं भूतम् अन्ये च सन्तो जना यं सीमित् सम्यगेव। ईळते स्तुवन्ति॥ १॥

जनासः। पूर्वार्धं व्याख्याति। सहसेति। यं सहोवृधं सहसा वायुनैधितम्। वर्धतेः कर्मणि क्विप्। अग्निं त्वाम्। जनासः सज्जनाः। दधिरे धारयन्ति। वयं च ते तस्य हविष्मन्तः सन्तो विधेम। कर्म कुर्मः। परिचरणकर्मसु पाठात्। उत्तरार्धगतं संत्येति पदं व्याख्याति। संत्य इति। सम्पूर्वात्तनोतेर्ड्यः। धार्याग्निस्तद्गतस्य विष्णोश्च सन्ततत्वं प्रसिद्धमेव। विष्णुः कथं सहोवृधित्यत आह॥ विष्णुरिति। सहः शब्दे कर्मण्युपपदेन्तर्णीतण्यर्थात्क्विप्। उभयत्रेगुपधलक्षणः को वा। हे संत्य स एवमस्माभिः पूजितः सुमनास्त्वमिह लोकेऽद्य। वाजेष्वन्नेषु विषयेषु। नोस्माकमविता रक्षको भवेति॥ २॥

प्रत्वा। हे अग्ने वयं दूतं होतारं विश्ववेदसं त्वां प्रवृणीमहे। यस्य महो महतः सतस्तेऽर्चयोर्चिषो विचरन्ति भानवो रश्मयश्च दिवि दिवं स्पृशन्ति॥ ३॥

देवासः। अत्र प्रत्नशब्दार्थमाह॥ प्रततेरिति। प्रपूर्वात्तनोतेरकार उपधालोपश्च पुरातनत्वात्प्रत्न इति प्रसिद्धम्। हे अग्ने वरुणो मित्रो अर्यमा इत्यादयो देवाः। दूतं प्रत्नं त्वां समिंधते सन्दीपयन्ति। किञ्च। यो मर्त्यस्ते तुभ्यं ददाश। दाशृ दाने ददौ। स त्वया प्रसन्नेन सता विश्वं सम्पूर्णं धनं जयति प्राप्नोति॥ ४॥

मन्द्रः। अत्र मन्द्रशब्दार्थमाह॥ मन्द्र इति। महान्मखो यस्मिन्विषये स महामखः। मदंत्यनेन देवा इति मन्दो मखः सो अस्यास्तीत्यूषसुषिमुष्कमधोर इत्यत्र योगविभागाद्रः। अन्येन महत्त्वम्। भूमनिन्देत्यादिना वा। हे अग्ने मन्द्रस्त्वम्। विशां प्रजानाम्। होता गृहपतिर्दूतश्चासि। किञ्च। देवाः यानि ध्रुवाण्यव्यभिचरितानि। व्रतानि कर्माण्यकृण्वत अकुर्वत। तानि विश्वानि सर्वाणि। त्वे त्वयि। सङ्गतानि त्वद्विषयाण्येव॥ ५, ८॥

## मन्त्रार्थमञ्जरी

अथ 'प्र वो यह्वम्' इत्यारभ्य 'त्वमग्ने (ऋ० म० १।४५।१) इत्यतः प्राक्तनस्य दशोत्तरऋक्शतस्य कण्वऋषिः, तस्य शतर्चित्वप्रसिद्धिरप्यधिकानां कालान्तरे दृष्टत्वाद्युक्ता। छन्दस्तु यथायथं ध्येयम्। (तत्र) प्र वो यह्वम्' इत्यादि विंशत्यृचं वर्गचतुष्टयात्मकमाग्नेयं प्रागाथं षट्त्रिंशं सूक्तम्, 'ऊर्ध्व ऊ षु' इति द्वे यौप्यौ (यूपदेवताके) इत्येके (अनुक्रमणिकाकाराः) (प्रागाथोऽत्र बार्हतः, बार्हतो नाम– अयुजो बृहत्यो युजः सतोबृहत्यः, सतो बृहती नाम पङ्क्तिविशेषश्छन्दः, पङ्क्तिच्छन्दोदेवता तूक्तैव बृहतीछन्दोदेवतास्तु 'श्रीर्ब्रह्माणी भारती गरुडस्तारा' इति पञ्च) (हे प्रजाः) ज्ञानकर्माधिकृताः। देवयतीनाम्, देवज्ञानाद्देवानां यजनाद्वा देवयत्यस्ता-

साम्, द्वितीयान्तस्य देवशब्दस्य 'इण् गतौ' इत्यतः शत्रन्तात्स्त्रियां ङीपि कृते सिद्धेन यतीशब्देन श्रितादिषु गमिगाम्यादीनामुपसंख्यानात्समासः, गतिश्च– ज्ञानं यजनं च। पुरूणाम्, बहूनाम्। विशाम्, प्रजानाम्। वः, युष्माकम्। यह्वम्, यहुम्, छन्दस्यामि पूर्वरूपमकृत्वा यणादेश एव कृतः, पुत्रम्। अग्निम्, हुताशनं विष्णुं वा। (वयम्) सूक्तेभिः, सम्यक्प्रयुक्तैः। वचोभिः। (प्र) ईमहे, 'ईङ् याच्ञायाम्' इत्यपि (वै० नि० ३।१९) धातुपाठात्। कथं भूतम्? अन्ये (च) सन्तो जनाः। यम्। सीम् इत्, सम्यगेव। ईळते, स्तुवन्ति। अत्राग्नेर्विष्णोश्च बहून्प्रति पुत्रत्वम्– बहुभिराधेयत्वं ज्ञेयत्वं च क्रमाज्ज्ञेयम्॥ १॥

(यम्) सहोवृधम्, सहसा वायुना (वृधम्) एधितम्, 'वृधु वर्धने' इत्यतः कर्मणि क्विप्, विष्णुपक्षे– सहसो वायोः (वृधम्) वृद्धिकरम्, सहस्शब्दात्कर्मण्युपपदेऽन्तर्णीतण्यर्थात्क्विप्, अर्थद्वये– इगुपधलक्षणः कप्रत्ययो वा। अग्निम् (त्वाम्) जनासः, सज्जनाः। दधिरे, धारयन्ति। (वयं च तस्य) ते हविष्मन्तः (सन्तः) विधेम, कर्म कुर्मः। (हे) सत्य, सम्यक्तत, सम्पूर्वात्तनोतेर्ड्यः, धार्याग्नेस्तद्व्रतस्य विष्णोश्च सन्ततत्वं प्रसिद्धमेव। (सः) एवमस्माभिः पूजितः। सुमनाः त्वम्। इह, लोहे। अद्य। वाजेषु, अन्नेषु। नः, अस्माकम्। अविता, रक्षकः। भव इति॥ २॥

(हे अग्ने वयम्) दूतम्। होतारम्। विश्ववेदसम्। (त्वा) त्वाम्। (प्र) वृणीमहे। (यस्य) (महः), महतः। सतः ते। अर्चयः, अर्चिषः। विचरन्ति। भानवः (च), रश्मयश्च। दिवि, दिवम्। स्पृशन्ति॥ ३॥

(हे) अग्ने 'वरुणः, मित्रः, अर्यमा' इत्यादयः (देवासः) देवाः। दूतम् प्रत्नम्, प्रततं पुरातनं वा, प्रपूर्वात्तनोतेः अकारः, उपधालोपश्च ('नश्च पुराणे प्रात्' इति त्नब्वा) (त्वा) वाम्। सम् इन्धते, सन्दीपयन्ति। किं च, यः मर्त्यः। ते, तुभ्यम्। ददाश, 'दाशृ दाने' ददौ। सः। त्वया, प्रसन्नेन सता। विश्वम्, सम्पूर्णम्। धनम्। जयति, प्राप्नोति॥ ४॥

(हे) अग्ने। मन्द्रः, महामखः, मन्दन्तेऽनेन देवा इति मन्दो मखः (करणे घञ्) नुमागमः, 'सोऽस्यास्ति' इत्यर्थे 'ऊषसुषिमुष्कमधो रः' इत्यत्र योगविभागाद्रप्रत्ययः, उपपदान्तलोपः, भूमार्थे मतुप्, महामखः' इत्यर्थलाभः। (त्वम्) विशाम्, प्रजानाम्। होता। गृहपतिः। दूतः (च) असि। किं च, देवाः यानि। ध्रुवा, ध्रुवाणि, अव्यभिचरितानि। व्रता, व्रतानि, कर्माणि। अकृण्वत,

(मन्त्रार्थमञ्जरी)

अकुर्वत, कृञः श्नुविकरणत्वं छान्दसम्। (तानि) (विश्वा) विश्वानि, सर्वाणि। त्वे, त्वयि। सङ्गतानि, त्वद्विषयाणि। (एव) इति॥ ५॥ इत्यष्टमो वर्गः॥ ८॥

## रूपावतारः

भावे कृत्य इति जप्यस्येत्यत्र जपेः पोरदुपधादिति (३।१।८६) भावे यत्प्रत्यय इत्यर्थः। प्रमाणं त्विति। अस्माभिर्यत् ऋष्यादिकमुच्यते तत् ऋक्संहितादिग्रन्थानुसारेणोच्यत इत्युक्तार्थे प्रमाणं पूर्वमेवोक्तमिति भावः। प्रवः॥ द्वितीयान्तस्य देवशब्दस्येति। देवशब्दस्य यतीशब्देन समास इत्यन्वयः। अनेन देवान्यन्तीति देवयत्य इति विग्रहः सूचितः। इणः शतरि 'इणोयण्' (६।५।८१) इति यणादेशे 'उगितश्च' (४।१।६) इति ङीपि यतीतिरूपमिति ज्ञेयम्। ननु 'अमि पूर्वः' (६।१।१०७) इति सूत्रेण यहुमिति भाव्यमित्यत आह। छन्दसीति॥ १॥

जनासः॥ अन्तर्णीतेति। वृद्धेरिति शेषः। सहो वर्धयतीति सहोवृत् इति विग्रहो बोध्यः। उभयत्रेति। व्याख्यानद्वयेऽपि इगुपधलक्षणः कः तथा च सहोवृधशब्द अकारान्त इति भावः॥२॥

प्रत्वा॥ महच्छब्दपर्यायो हकारान्तो महशब्द इति भावेनाह। महो महत इति॥ ३॥

देवासः॥ ददाशेति। दाशतेर्लिटि द्वित्वादौ ददाशेति रूपम्॥ ४॥

मन्द्रः॥ ननु मन्द्रशब्दस्य महामख इति व्याख्यानं कृतम्। महत्त्वं केनोक्तमित्यत आह। अन्येनेति। अलाक्षणिकेन नुमागमेनेत्यर्थः। मतुप्पर्यायेण रप्रत्ययेन वा महत्त्वमुक्तमित्याशयेन वाह। भूमेति॥ ५॥ ८॥

## पदार्थप्रकाशिका

तुशब्द एवार्थ इति। तस्य च विष्णोरनुग्रहमवाप्नुवन् ज्ञानविततिमिच्छन्नित्यनन्तरं सम्बन्धो द्रष्टव्यः। अत्रानुग्रहमवाप्नुवन्निति हेतौ शत्रन्तः। अर्जयन्नर्जनार्थं वसतीतिवत् अनुग्रहावाप्त्यर्थ-मध्यापयन्नित्यर्थो द्रष्टव्यः। अत एव तद्व्यावर्त्यमाह तेनेति। त्रीणि कर्माणि जीविकेति स्मरणेन याजनाध्यापनप्रतिग्रहाणां जीविकार्थत्वावगमादिति भावः। ऋक्शतेति। प्रवो यह्वमित्यारभ्य स्तविष्यामि त्वामहमित्यतः पूर्वं ऋक्शतम्। स्तविष्यामीत्यारभ्य श्रुण्वन्त्वित्यन्ताः ऋचो दशेत्येवं दशाधिकशतऋग्द्रष्टृत्वं कण्वस्येत्यभिप्रायः। शतर्चित्वम् शतर्चित्वप्रसिद्धिः। भावे कृत्यप्रत्यय इति। कृत्याः प्राङ्ण्वुल इति सूत्रेण ण्वुलतृच इत्यतः पूर्वं विहितानां प्रत्ययानां कृत्यप्रत्ययत्वोक्तेः

(पदार्थप्रकाशिका)

पोरदुपधादिति सूत्रविहितयत्प्रत्ययस्यापि कृत्यप्रत्ययत्वेन प्रकृतेऽपि जपधातोरकारोपधत्वेन तेन सूत्रेण भावे यत्प्रत्यये जप्यशब्देन जप एवोच्यत इत्यर्थः । न च विष्णुर्गोपा अदाभ्य इत्यत्र पोरुदुपधादिति दम्भेर्ण्य इति टीकाकारैरुक्तत्वेन तद्वचनविरोधः शङ्क्यः । पोरदुपधादिति सूत्रं यत्प्रत्ययविधायकमेव न ण्यत्प्रत्ययविधायकं येन णित्वादादिवृद्धौ जाप्यस्येति स्यादिति शङ्क्येत। उक्तटीकावचनविरोधस्तु यथा नास्ति तथा तत्रैवास्माभिर्व्याख्यातमनुसन्धेयम् ।

एतदर्थमेवेति । ऋक्शतावशिष्टऋग्दर्शनं जपावस्थान्तरत्वं प्रदर्शयितुमेव पूर्वमध्यापयन्निति ऋक्शतदर्शने अध्यापनावस्थोक्तेति भावः । ननु भाष्ये श्रुण्वन्तु स्तोममित्येवऋक् अन्ते यासां ताः ऋचो ददर्शेत्यत्रातद्गुणसंविज्ञानबहुव्रीह्याश्रयणे श्रुण्वन्तु स्तोममित्येषा ऋक् न कण्वदृष्टेति प्रतीयतेऽत आह इत्यन्ता ऋच इतीति । तस्य अन्यपदार्थस्य गुणा उपसर्जनभूताः पदार्थाः संविज्ञायन्ते प्रधानक्रियान्वितयेति तद्गुणसंविज्ञानः । एवं च लम्बकर्णमानयेत्यत्र लम्बकर्णयोरिव श्रुण्वन्तु स्तोममित्यस्या अपि ऋचः प्रधानभूतदर्शनक्रियान्वयो विवक्षित इति भावः । अनेनेत्यस्यैव विवरणं त्वमग्न इत्यादि । त्वमग्न इत्यतः त्वमग्ने वसूनि ह रुद्रानित्यतः । अग्ने षळूनेति । अग्ने षळूना प्रस्कण्वः काण्व इत्यनुक्रमणिकायामित्यर्थः । कण्वदृष्टास्विति । कण्वदृष्टत्वेनास्माभिरुच्यमानास्वित्यर्थः । कण्वदृष्टत्वेनास्माभिरुच्यमानासु दशोत्तरशतसङ्ख्याकास्वेव ऋक्षु अनुक्रमणिकाकार इत्थं स्वयं विवेकमाह गाधपतिं मेधपतिमित्यतः प्राक्तनाः नवतिसङ्ख्याकाः ऋचः कण्वदृष्टाः । गाधपतिमित्यारभ्य श्रुण्वन्त्वित्यन्ताः कण्वपुत्रेण प्रस्कण्वेन दृष्टाः । श्रुण्वन्त्वित्यन्तानां विंशतिसङ्ख्याकानां सर्वासामप्यृचां प्रस्कण्वदृष्टत्वे प्राप्तेऽपवाद उक्तः अग्ने षळूनेति । अग्ने विवस्वदुषस इति षड्गूनास्तदितिरिक्ता इति यावत् । ऋचः प्रस्कण्वदृष्टाः । विंशति ऋङ्मध्यस्थास्ताश्च षड्चः कण्वदृष्टाः । तथाच कण्वः षण्णवतिसङ्ख्याकर्चो दृष्टवान् । प्रस्कण्वस्तु चतुर्दशसङ्ख्याकर्च इति ।

ननु कथं तदुक्तमसत् कण्वस्य दशोत्तरशतसङ्ख्याकग्द्रष्टृत्वे प्रमाणाभावादित्यत आह प्रमाणं त्विति । ये त्वस्माभिर्ऋषयः कथ्यन्ते ते सर्वे स्वाध्यायादिग्रन्थसिद्धाः इति । ऋक्संहितायाः स्वाध्यायात्प्रबन्धात् व्यासनिर्मितात् । ब्राह्मणेभ्यः तथा मानात्प्रोक्ता स्युर्मुनयोत्र ये । श्रुतिलिङ्गान्यता यावत्तावत्पूर्वप्रमाभवेदिति सामान्येन प्रमाणमुक्तमित्यर्थः । यद्वा काण्वस्य ऋक्शताधिकद्रष्टृत्वे कथं शतर्चित्वमिति शङ्कायाः जप्यस्येत्यादिना कालान्तरे अवस्थान्तरे च ऋक्शतावशिष्टग्द्रष्टृत्वोक्त्या परिहार उक्तः । स न युक्तः शताधिकद्रष्टृत्वेन शतर्चित्वं कथमस्येति शङ्कायास्तादवस्थ्यात् इत्यत आह प्रमाणं त्विति । शताधिकमपि ऋग्जातं शतसङ्ख्यान्तर्गतमेवातः

(पदार्थप्रकाशिका)

शताधिकद्रष्टृत्वेऽपि शतर्चित्वं न विरुद्धमित्यत्र युक्तिरूपप्रमाणं प्रागेव प्रथमाध्याये उक्तमित्यर्थः। तथाहि। कालवस्थानन्तरत्वं च दर्शनस्य चेत्तर्हि शतसङ्ख्यातोऽभ्यधिकमपि शतान्तर्भूतमेव भवेदित्युक्त्वा तत्र प्रमाणाकाङ्क्षायां अन्यस्थानगता इत्यादिना युक्तिरूपप्रमाणस्योक्तत्वात्। एवं चैकदेशकालावस्थासु तेनैवर्षिणा दृष्टाः मूलवेदे चैकानुपूर्वीस्था हि शतर्चित्वे निमित्ततया विवक्षिताः इति प्रागुक्तत्वात्प्रकृतेऽपि स्तविष्यामि त्वामहमित्यादि दशानामृचामेतादृशत्वाभावान्न तस्य शतर्चित्वभङ्ग इति भावः। पूर्वयोजनायां तु एवं शतर्चित्वोपपादनेन बहिरेव द्रष्टव्यम्।

प्रवो यह्वं पुरूणाम्॥ प्रवोविंशति आग्नेयमित्यनुक्रमणिकां हृदि निधायाह विंशत्यृचमिदमाग्नेयं सूक्तमिति॥ ऊर्ध्वऊषुयौप्यावित्यनुक्रमणिकाव्याख्यानं कुर्वन् अस्वरसश्चसूचयन्ननुवदति। उर्ध्वऊष्विति द्वे यौप्याविति। ऊर्ध्वऊषुण ऊतये ऊर्ध्वो नः पाहीति द्वे ऋचौ यूपदेवताकौ। ब्राह्मणे द्वितीयपञ्चिकायां वैष्णवं यूपं कुर्वीतेप्युपक्रम्य ऊर्ध्व ऊषुण ऊतये तिष्ठादेवो न सवितेति यद्वै देवानां नेतीत्यादिनैतदृग्द्वयस्योक्तत्वाद्यूपदेवताकत्वमेतदृग्द्वयस्येति अनुक्रमणिकाकारस्याभिप्रायः। एके इत्युक्त्या यूपश्रुतेर्यूपलिङ्गस्य च अभावान्न यूपदेवताकत्वम्। ऊर्ध्व इत्यस्य च सूद्यतो भव विष्णुवदित्युद्यमित्वार्थतया व्याख्यास्यमानत्वेनोच्चत्वार्थकत्वाभावान्न यूपलिङ्गत्वमत एतदृग्द्वयमप्य-ग्निदेवताकमेवेत्यस्वरसः सूचितो द्रष्टव्यः। ब्राह्मणं त्वन्यार्थमेवेत्याशयः। ऋचि प्रजा इति शेषपूरणे निमित्तमाह व इति श्रवणादिति। देवज्ञानाद्यजनाद्वेति देवयतिशब्दार्थकथनपरभाष्यानुरोधादाह ज्ञानकर्माधिकृता इति। ज्ञानाधिकृताः कर्माधिकृताश्चेत्यर्थः। द्वितीयान्तस्येत्यादि। द्वितीयान्तस्य देवशब्दस्य यतीशब्देन समास इत्यन्वयः। यतीशब्दसिद्धिप्रकारप्रदर्शनं इण इत्यादि। इण् गतावित्यस्माच्छतृप्रत्यये शकारऋवर्णयोर्लोपे इअत् इति स्थिते इको यणचीति यणादेशे य् अत् यदिति जाते उगितश्चेति सूत्रेणोगितःशब्दात्स्त्रियां ङीपो विहितत्वेन शतृप्रत्यये ऋकारस्य लुप्तत्वेनोगित्वात् ङीपि यतीति रूपसिद्धिरित्यर्थः। तथा च देवं देवान्वा यन्ति गच्छन्ति जानन्ति यजन्ति वेति देवयत्य इत्यर्थो द्रष्टव्यः।

ननु द्वितीयान्तस्य यतीशब्देन कुतः समासः किन्तु कर्तृकर्मणोः कृतीति सूत्रेण कर्मणि षष्ठ्या विहितत्वाच्च देवस्य देवानां वा यन्तीति देवयत्य इति षष्ठ्यन्तस्यैव देवशब्दस्य यतीशब्देन समासः किं न स्यादिति चेन्न। यतीशब्दस्य शत्रन्तत्वेन शतृप्रत्ययस्य च लटः शतृ शानचाविति सूत्रेण लादेशत्वोक्तेस्तद्योगे च न लोकेति षष्ठ्या निषिद्धत्वेन तत्प्राप्तेरेवाभावेन समासस्य दूरोत्सारितत्वात् कर्मणि द्वितीयेति सूत्रप्राप्तद्वितीयान्तदेवशब्दस्यैव यतीशब्देन समासः। ननु द्वितीयायाः समासो द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति सूत्रेण वक्तव्यः। स न युक्तः। श्रितादिगणेष्वस्या-

भावादित्यत आह श्रितादिष्विति। गम्यादेरिष्टिरित्युक्तत्वात्तस्य चाकृतिगणत्वादिति भावः। ननु देवं देवान् वा यन्ति गच्छन्तीत्यनेन देवं ज्ञानाद्यजनाद्वेत्यर्थः कथं सम्पन्न इत्यत आह गतिश्चेति। गत्यर्थस्येणोऽनेकार्थत्वमङ्गीकृत्य यजनं वेत्युक्तमिति मन्तव्यम्। तथा देवयतीनामित्यस्य देवं विष्णुं जानता देवान् इन्द्रादीन् यजतां वेत्यर्थो द्रष्टव्यः।

ननु यह्वमिति कथम्। यहु अम् इति स्थिते उकाराकारयोर्मिलित्वा सवर्णदीर्घे प्राप्ते तदपवादकत्वेन अमिपूर्वः अकोऽमि परतः पूर्वरूपमेकादेशः स्यादिति पूर्वरूपविधानादत्रापि उकारस्य अमिपरे पूर्वरूपे सति यहुम् इत्येव स्यादित्यत आह छन्दसीति। अमि परे पूर्वरूपम्। तथाच यहु अम् इति स्थिते इको यणचीति उकारस्य वकाररूपे यणादेशे सति यह्व् अम् यह्वमिति भवतीत्यर्थः। बहुपुत्रत्वघटकम् बहुपुत्रत्वोपपादकम्। बह्वाधेयत्वत इतीति। बहुभिराधानकर्तृभिराधेयत्वतः स्वस्वगृहे स्थापनीयत्वत इत्यर्थः। बहुभिराधानकर्तृभिः स्वस्वगृहे स्थापयित्वा तत्तत्काले अवदानेष्ट्यादिकरणेन पुत्रवत्पालयमानत्वाद्बहूनां पुत्रोग्निरिति भावः। विष्णोस्त्वित्यनन्तरं बहुपुत्रत्वघटकमित्यनुवर्तते। यस्तद्वेद स पितुष्पिता सदित्यादिवचनेन विष्णोर्बहुभिर्ज्ञेयत्वाद्बहुपुत्रत्वमित्यर्थः। अत एवेति। हुताशनविष्ण्वोः पुत्रत्वघटकयोः बह्वाधेयत्वयोर्लाभार्थमेवेत्यर्थः। अत एवेति। हुताशन विष्ण्वोः पुत्रत्व घटकयोर्बह्वाधेयत्वयोः लाभार्थमेवेत्यर्थः। द्वेधेतिति। देवज्ञानाद्यजनाद्वेति द्वेधेत्यर्थः। युक्तैरनुगुणैः। याच्ञा कर्मस्विति। ईधातोर्याच्ञार्थकधातुषु पाठात्प्रार्थयामह इति व्याख्यानं युक्तमित्यर्थः। तथाच हे ज्ञानाधिकृताः प्रजाः देवयतीनां देवं विष्णुं जानतां पुरूणां विशां वो युष्माकं भवद्भिर्ज्ञेयत्वाद्भवतां यह्वं पुत्रं विष्णुं सूक्तैर्वचोभिरीमहे तथा हे कर्माधिकृताः प्रजाः देवयतीनां देवान् इन्द्रादीन् यजतां पुरूणां विशां वो युष्माकं भवद्भिराधेयत्वाद्भवतां पुत्रम् अग्निं वचोभिरीमह इति विवेको द्रष्टव्यः। अन्ये अस्मद्व्यतिरिक्ताः। सन्तो जनाः सज्जनाः। यमीलते तं वयमीमह इति सम्बन्धो द्रष्टव्यः॥ १॥

जनासो अग्निं दधिरे सहो वृधम्। वायुनैधितमिति। वातरशनो हुताशो यतोऽतो वायुनाग्निरभिवृद्धो भवतीत्याशयः। क्विबिति। वृधुवृद्धावस्मात्कर्मणि क्विप्प्रत्यये तस्य लोपे वृध् इति प्रातिपदिकम्। तथा च वृध् वृधौ वृध इति हलन्तस्य वृधशब्दस्येयं द्वितीयेत्यर्थः। कित्वाद्गुणाभावः। अन्यथा वर्धममिति स्यादिति द्रष्टव्यम्। धारयन्तीति। आधानं कुर्वन्तीत्यर्थः। भाष्ये पदयोर्व्यवहितत्वादन्वयं प्रदर्शयति। तस्य त इति। वायुनाऽभिवृध्यादिमतस्ते कर्म कुर्म इत्यन्वयः। हविष्मन्तो हविर्धृतवन्तः सन्तः कर्म कुर्मः। सेवारूपं कर्म कुर्मः। ननु विपूर्वकस्य दधातेः करोतिमात्रार्थकत्वात्सेवाकरणार्थकत्वं कथमित्यतस्तदुपपादयति। परिचरणकर्मस्विति।

(पदार्थप्रकाशिका)

सेवार्थकधातुष्वित्यर्थः । संपूर्वात्तनोतेऽर्ड्य इति सम्पूर्वात्तन् विस्तारेऽस्मात् ड्यप्रत्यये डित्वाट्टीभूतस्यान् इत्यस्य लोपे सन्त् य सन्त्येति रूपम् । धार्याग्नेः आहितस्याग्नेः । तद्गतस्य अग्न्यन्तर्गतस्य सन्ततत्वं प्रसिद्धमेवेति । अजस्याग्नित्वं प्रसिद्धमेवेत्यर्थः । विष्णुरिति । अग्न्यन्तर्गतो बहिष्ठ इत्यर्थः । कथमिति । तस्य वायुना बलवृध्यभावेन सहसा वायुनेधितमित्यर्थासम्भवादिति भावः । अन्तर्णीतेति । सहसं वायुं वर्धयतीत्यन्तर्णीतण्यर्थाद्वृधधातोः कर्तरि क्विप्प्रत्यये तस्य लोपे वृधमिति पूर्ववद्धलन्तस्य वृध्शब्दस्य द्वितीयेत्यवगन्तव्यम् । यद्वा वृधः वृधौ वृधा इत्यकारान्तवृधशब्द एवायमित्यभिप्रेत्य समाधानान्तरमाह उभयत्रेति । अग्निपरत्वपक्षे विष्णुपरत्वपक्षे चेत्यर्थः । इगुपधलक्षण इति । इमुपधज्ञाप्रीकिरः क इति सूत्रप्राप्तः क प्रत्यय इत्यर्थः । तथाच तृतीयान्ते द्वितीयान्ते वा सहःशब्दे उपपदे वृध्धातोः कर्मणि अन्तर्णीतण्यर्थात्कर्तरि वा कप्रत्यये कित्वाद् गुणाभावे वृध् अ वृधेत्यकारान्तप्रातिपदिकसिद्धिः । पश्चात्स्वाद्युत्पत्तौ वृधमिति भवतीत्याशयः । एवं परिचरणादिना । अद्याविनाभावेति सम्बन्धः । वाजशब्दः समस्तविषयोपलक्षक इत्याह विषयेष्विति । तत्तदिन्द्रियैस्तत्तद्विषयजातेष्वनुभूयमानेषु सत्सु त्वं नो अस्माकं रक्षको भव तत्र प्राप्तान् विघ्नान् परिहृत्येति शेषः ॥ २ ॥

प्रत्वा दूतं वृणीमहे । स्पष्टार्थतया भाष्यकारैस्त्यक्तां ऋचं स्वयं व्याचष्टे हे अग्न इत्यादिना । दूतम् । यतोग्निर्यज्ञभागार्थं देवैः सम्प्रार्थितस्ततो दूतस्तम् । संदेशेन यः प्रेष्यते स हि दूत उच्यते । अग्निस्थो विष्णुश्च तत्तत्प्रार्थितकृद्यतो दूत इव दूतः । होतारम् । विशेषतो होतृसंस्थम् । विश्वं वेत्तीति विश्ववेदास्तं विश्ववेदसं सर्वज्ञम् । मह इत्येतत् षष्ठ्यर्थे । महतः सतस्ते इत्यन्वय इत्यभिप्रेत्याह महतः सतस्ते इति । महत्वेन महाज्वालावत्वेन विद्यमानस्य तवेत्यर्थः । अर्चिषो विस्फुलिङ्गाः । विचरन्ति इतस्ततो विविधं चरतीत्यर्थः । रश्मयः प्रकाशाः । दिवमन्तरिक्षम् । सहस्रधनुषस्तूर्ध्वं द्युशब्देनैव भण्यते इति वचनाद्दिवमित्यस्य सहस्रधनुषोप्यूर्ध्वभागमिति वार्थः । स्पृशन्ति तत्र गच्छन्ति ॥ ३ ॥

देवासस्त्वा वरुणो मित्रो अर्यमा ॥ प्रपूर्वादित्यादि । प्रपूर्वात्तनुविस्तरेऽस्मात् अकारप्रत्यये प्रतन् अ इति जाते उपधाभूततकारस्थितस्य अकारस्य लोपे प्रत्न् अ प्रत्नेति रूपम् । प्रसिद्धमिति । प्रत्नं पुरातनं प्रोक्तमित्यभिधानस्योक्तत्वेन रूढत्वात् नास्मिन्नर्थे प्रकृतिप्रत्ययादिना साधनक्लेश इति भावः । सन्दीपयंतीति । ज्वलितं कुर्वन्ति । आज्यादिहविषेति शेषः । यज्ञेन यज्ञमयजन्त देवा इति श्रुतेर्देवानामपि यज्ञकर्तृत्वादिति भावः । ददौ हविरादिकमिति शेषः । प्रसन्नेन सतेति । हविरादिकं गृहीत्वा प्रसन्नतया विद्यमानेन त्वयेत्यर्थः । त्वत्प्रसादादिति यावत् ॥ ४ ॥

(पदार्थप्रकाशिका)

मन्द्रो होता गृहपतिः । महान् मखो यस्येति विग्रहे महामखकर्तृत्वमेवाग्नेः प्रतीयते न तु तदिज्यत्वं अतस्तल्लाभाय विग्रहं दर्शयति महानिति । मखस्य महत्वं च न्यायार्जितबहु-वित्तादिसाध्यत्वादिरूपं द्रष्टव्यम् । यस्मिन्विषय इत्युक्त्या तदिज्यत्वं लभ्यत इति भावः । अयमर्थो मन्दशब्दात्कथं लभ्यत इत्यत आह मन्दन्त्यनेनेति । मन्दन्ति हृष्टा भवन्ति । मन्दो मख इति । तथाच मदि हर्षेऽस्मादच्प्रत्यये इकारस्य लोपे इदितो नुम्धातोरिति सूत्रेण इदित्वान्नुमागमे मन्देति शब्दो मखवाचीत्यर्थः । सोस्यास्तीति । स मखोऽस्याग्नेरस्तीत्यर्थः । तद्वत्त्वं च तदिज्यत्वेनेति भावः। तथाच मन्दशब्दात् मत्वर्थे तद्धिते रप्रत्यये तस्मिन्परे यस्येति चेति दकारस्थाकारलोपे मन्द्रेति रूपं द्रष्टव्यम् । ननु मन्दशब्दात्कथं रप्रत्ययः । तथाहि ऊषसुषि मुष्कमधोरः । एभ्यश्चतुर्भ्यः शब्देभ्यो मत्वर्थे रप्रत्ययः स्यात् । ऊषं सारभागाभावोऽस्यास्तीत्यूषरं क्षेत्रम् । सुषि छिद्रमस्यास्तीति सुषिरं पात्रम् मुष्कं वृषणमस्यास्तीति मुष्करो बस्तः । मधु अस्यास्तीति मधुरं क्षौद्रपटलमित्युदाहरणानि । एवं च ऊषादिशब्दविशेषेभ्य एव मत्वर्थे रप्रत्ययविधानात्कथं मन्दशब्दाद्रप्रत्यय इत्यत उक्तं ऊषसुषिमुष्कमधोर इत्यत्रेति । योगो वाक्यम् । तथा चोषसुषि मुष्कमधोरित्येकं वाक्यम् । र इत्यपरम् । एवं चोषादिशब्दचतुष्टयेभ्यो रप्रत्ययो भवति । तथाऽन्यस्मादपि मन्दादिशब्दाद्रप्रत्ययो भवतीति तदर्थो द्रष्टव्यः । ननु मन्द्रशब्देन मखवत्वमेव लभ्यते न तु महामखवत्वं अतो महामख इति कथमुक्तं भाष्य इत्यत आह अन्येन महत्वमिति । मन्द इत्यत्रत्येनाधिकेन अनुस्वारेणेत्यर्थः । आधिक्येऽधिकमिति सूत्रेण अर्थाधिक्ये विवक्षितेऽधिकं शब्दरूपं भवतीति पूर्वमुक्तत्वादिति भावः । अन्येन प्रमाणान्तरेणेत्यर्थस्तु असाम्प्रदायकत्वादुपेक्ष्यः । समाधानान्तरमाह भूमेति । भूमनिन्दा प्रशंसासु भवन्ति मतुबादय इत्युक्तत्वेन प्रकृते मतुबर्थकरप्रत्ययस्य महत्वापरपर्याय भूमरूपार्थविवक्षायामभिप्रेतत्वेन महामखवत्वं मन्द्रशब्दार्थो भवत्येवेत्यर्थः । अत्र मन्दन्त्यनेनेति मन्दः । सोस्यातिशयेनास्तीति मन्द्र इति द्रष्टव्यम् । प्रजानां यजमानानां यज्ञे यो होता तदन्तर्गत इत्यर्थः । गृहपतिरिति । आहितस्याग्नेर्गार्हस्थ्यापादकत्वेन गृहपतित्वं प्रसिद्धमिति द्रष्टव्यम् । अव्यभिचरितानि अव्यभिचरितफलानि । त्वद्विषयाण्येवेति । अग्निपक्षे होमादिसर्वकर्मणामग्नावेव क्रियमाणत्वेन त्वदधिष्ठानकान्येवेत्यर्थः । विष्णुपक्षे तु सर्वकर्माणि त्वद्विषयाण्येव त्वदुद्देश्यकान्येव त्वामुद्दिश्यैव कुर्वन्तीति यावदित्यर्थो द्रष्टव्यः ॥ ५, ८ ॥

## पदार्थदीपिका

तद्गुणेति । तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थो गृह्यते । तस्य गुणत्वेन संविज्ञानं यस्मिन् समासे तथा सर्वस्य विशेषणत्वे समासायोगात् । तदर्थैकदेशस्तथा । एवं च विशेष्यैकदेशं विशेषणं कृत्वा समास

(पदार्थदीपिका)

इत्यर्थः । प्रमाणमिति । ऋक्संहिता स्वाध्यायनिरुक्तादिरूपं प्रमाणमित्यर्थः । प्रागिति । इन्द्रमष्टौ जेता माधुच्छन्दस इति परोक्तरीत्या इन्द्रंविश्वा इत्यादेः पराभिप्रेतऋषिखण्डनावसर इत्यर्थः । योयावित्येक इति । एक इत्यस्वरसोद्भावनम् । तद्बीजं तु आग्नेयक्रतावनुद्धारात् ऊर्ध्वउष्वित्यादिकयोरप्यग्निदेवताकत्वमावश्यकमेव । तथाहि सूक्ते येनावोऽग्निं प्र वो यह्वमिति प्रतीकमात्रस्यैवो पादानात् कृत्स्नं सूक्तमाग्नेयमिति गम्यते । तत्र यद्येतेऽन्यदेवते स्यातां वसिष्वाहीति सूक्तयोरुत्तमामुद्धरेदितिवत् उद्धारं ब्रूयात् । न च ब्रूते । अतः कथनमनयोर्यौप्यत्वमिति । यदि च यूपाधिष्ठानस्यैवाग्नेः स्तूयमान देवतयोरप्यग्निदेवतेत्याग्नेयक्रतावनुद्धार इति मन्यसे तर्हि अग्निदेवताकत्वस्यैव त्वयाप्यंगीकारात् यौप्यत्वोक्तिविरोधः । अधिष्ठानप्राधान्यविवक्षायां निमित्ताभावेन तद्विवक्षया यौप्यत्वाक्तिरित्यस्याप्यसंभवदुक्तिकत्वात् । भाष्यकारो देवतादेः स्वाध्यायादिप्रमाणमूलकत्वेन तद्विरोधेन यौप्यत्वस्यायोगाच्चेति दिक् । व इति । श्रवणादिति ऋचीति शेषः । हे प्रजा इति । भाष्ये हे प्रजा इत्यस्य लाभ इति भावः । इण इति । इण् गतावित्यस्माच्छतरि इणो यणिति भावः । ङीपि कृत इति । उगितश्च इत्यनेनेति शेषः । अनित्यमागमशासनमिति वचनात् नुमभाव इति द्रष्टव्यम् । गम्यादीनामिति । गम्यादेराकृतिगणत्वादिति भावः । अमि पूर्वमकृत्वेति । अमि पूर्व इति पूर्वरूपमकृत्वेत्यर्थः । पूर्वरूपस्य यण् बाधकत्वेऽपि सर्वे विधयश्छन्दसि विकल्पन्त इत्युक्तेरत्र तस्य न तद्बाधकत्वमिति भावेन छन्दसीत्युक्तम् । अत एवेति । एकेन प्रकारेण अग्नाविष्णोर्बहुपुत्रत्वस्य व्युत्पादयितुमशक्यत्वादेवेत्यर्थः । द्वेधेति । देवज्ञानाद्देवयजनादित्येवं द्वेधेत्यर्थः । याञ्चाकर्मस्विति । इमहयामीति याञ्चाकर्मसु पाठादित्यर्थः । ईळत इति । ईड स्तुतौ । अदादित्वाच्छपो लुगिति भावः ॥ १ ॥

कर्मणीति । वर्धत इति । वृधु इति कर्मणीत्यर्थः । जनास इति । आज्जसेरसुगिति भावः । हविष्मन्त इति । तसौ मत्वर्थ इति भत्वेन पदत्वाभावात् रुत्वाद्यभाव इति भावः । विधेमेति । विध विधाने । तुदादित्वाच्छ इति भावः । डूय इति । डित्वाट्टिलोप इति भावः । अन्तर्णीतेति । सहो वर्धयतीति सहोवृध्दिरित्यर्थः । उभयत्रेति । कर्मणि व्युत्पन्नत्वपक्षेऽन्तर्णीतण्यर्थत्वपक्षे च इत्युभयत्रेत्यर्थः । इगुपधेति । इगुपधज्ञाप्रीकिरः कःइति सूत्रेण कप्रत्ययः । कित्वात् गुणाभावः। तथा च सहसा वर्ध्यत इति सहोवृधः तं यतोतिसहोवृधस्तमिति अकारान्तोऽयं वृधशब्द इति भावः ॥ २ ॥

महोमहत इति । मह पूजायामित्यस्मात् क्विप्चेति क्विबिति भावः । महच्छब्दे अच्छब्दलोपश्छान्दस इत्याहुः । सत इति । आस्तेःशतरि श्नसोरल्लोप इत्यकारलोप इति भावः ॥ ३ ॥

(पदार्थदीपिका)

अकार उपधालोपश्चेति। निर्वचनत्वादिति भावः। समिन्धते सन्दीपयन्तीति। इन्धी दीप्तौ इत्यस्माल्लटि झस्यादेशे श्नम्। श्नान्नलोपः। श्नसोरल्लोप इत्यकारलोप इति भावः। दाशृ दान इति। अस्माल्लिटि णलि रूपमेतदिति ज्ञेयम्॥ ४॥

ननु मदन्त्यनेन देवा इति व्युत्पत्त्या मदशब्देन मखमात्रलाभेऽपि तन्महत्वालाभात् कथं महामख इति व्याख्यानमित्यतो मंद इति वक्तव्ये मन्द्र इति वचनेनानुस्वारस्याधिकत्वेनाधिकार्थत्वात् आधिक्यार्थकानुस्वारेण महत्वलाभात् युक्तं तथा व्याख्यानमित्याह। अन्येनेति। अनुस्वारेणेत्यर्थः। भूमेति। भूमत्वं बहुत्वं तस्मिन्नर्थे हि मन्द्र इति रप्रत्ययः। तथा च प्रातिपदिकेन खस्येव मरप्रत्ययेन लब्धत्वात् महत्वयुक्तं महामख इति व्याख्यानमिति भावः। ध्रुवाणीति। शे छन्दसि बहुलमिति शेर्लोप इति भावः। अकृण्वतेति। कृवि हिंसाकरणयोश्चेत्यस्मात् व्यत्ययेन आत्मनेपदम्। इदित्वान्नुम्। धिन्विकृण्व्योरचेत्युप्रत्यय इति भावः। त्वे त्वयीति। सुपां सुलुगिति सप्तम्येकवचनस्य शे आदेशः। त्वमावेकवचन इति मपर्यन्तस्य त्वादेशः। शेषे लोप इति टिलोप इति भावः। सङ्गतेति। गमेःकर्मणि निष्ठायां एकाच इति इटःप्रतिषेधः। अनुदात्तोपदेश इत्यादिना अनुनासिकलोप इति ज्ञेयम्॥ ५, ८॥

## टीकाविवृतिः

अध्यापने हेतुद्वयमिति॥ लक्षणहेत्वोःक्रियाया इति सूत्रेहेतुशब्दस्य साधनफलपरत्वेन वृत्तिकारैर्व्याख्यातत्वादत्रापि हेतुःफलं तथा च विष्ण्वनुग्रहाय ज्ञानविततये चाध्यापनमित्यर्थः॥ तुशब्द एवार्थ इति॥ आप्नुवन्निच्छन्नित्येताभ्यां संबध्यत इति शेषः। तद्व्यावर्त्यमाह॥ तेनेति॥ भावे कृत्य इति॥ पोरदुपधादिति सूत्रेणेति शेषः। जप्यस्य जपस्येत्यर्थः॥ एतदर्थमिति॥ अध्यापनावस्थायां शतर्चदर्शनं जपावसानरूपावस्थांतरे तु शिष्टचतुर्दशर्चदर्शनमिति भावः॥ तद्गुणसंविज्ञान इति॥ शृण्वंतु स्तोममिति ऋगन्ते यासां ऋचां तास्त्वमग्ने वसूंरिहेत्यतःप्राक्तना ऋच इत्यर्थः। तस्य बहुव्रीहेर्गुण अप्रधानं वर्तिपदार्थःसंविज्ञायते यस्मिन्बहुव्रीह्यर्थे स तद्गुणसंविज्ञान इति भावः। अनुक्रमणिकां दूषयति॥ अनेनेति॥ अनुक्रमणिकायां अग्न इत्यनेनाग्ने विवस्वदुषस इति सूक्तस्य प्रतीकग्रहणं षळूना इत्यनेन चतुर्दशत्वसंख्यायाःप्रस्कण्व इत्यनेन ऋषिरुच्यत इत्यर्थः॥ प्रागेवोक्तमिति॥ स्वोक्तार्थे सामान्यतःव्यासोक्तस्वाध्यायादेरुक्तत्वादिति भावः।

प्रवोयह्वम्॥ विंशत्यृचमिति॥ प्रवोविंशतिःकण्वो घोर आग्नेयं प्रागाथमूर्ध्वऊषुयौप्यावित्यनुक्रान्तत्वादिति भावः। प्रवोयह्वमिति सूक्तं विंशतिऋक्संख्याकं इत आरभ्य घोरपुत्रःकण्वो ऋषिः

(टीकाविवृतिः)

अग्निदेवताकं प्रगाथाछन्दस्तद्युक्तं प्रागाथं ऊर्ध्वऊषुणऊतये ऊर्ध्वोनःपात्वंहस इति द्वे ऋचौ यूपदैवत्ये इत्यनुक्रमणिकार्थः । प्रगाथ्यंते संमेल्यन्ते छन्दांसि यस्मिन्सूक्ते तत्प्रगाथम् । प्रगाथास्त्वनेकविधाः । तत्रास्मिन्सूक्ते बार्हतनामक प्रगाथछन्दस्का ऋचः । बृहतीसतोबृहत्यौ बार्हतप्रगाथ इति तल्लक्षणोक्तेः यस्मिन्सूक्ते बृहतीछन्दस्का ऋचःपङ्क्तिविशेष स तोबृहतीछन्दस्काश्च स ऋक्समूहोबार्हतप्रागाथ इति तल्लक्षणार्थः । अस्मिन्सूक्तेऽपि प्रायःप्रथमतृतीयादिविषमऋचो बृहतीछन्दस्काः । आदितोष्टाक्षरौ पादौ तृतीयो द्वादशाक्षरः । चतुर्थोष्टाक्षरश्चेति बृहती खलु वै भवेत् । इति बृहतीलक्षणं ज्ञेयम् । द्वितीयचतुर्थादिसमा ऋचःप्रायःसतोबृहतीछन्दस्काः । सतोबृहतीलक्षणं तु पङ्क्तिप्रकरणे अयुजौजागतौसतोबृहतीति सूत्रे उक्तम् । अस्यार्थः । यस्यामृचि प्रथमतृतीयपादौ द्वादशाक्षरौ द्वितीयचतुर्थावष्टावक्षरौ सा सतोबृहतीति ।। यौप्यावित्येक इति ।। एके अनुक्रमणिकाकाराः । यूपविषयश्रुतिलिङ्गाद्यभावेन स्वाध्यायादिग्रन्थविरोधेन चैतदसदिति भावेनैके इत्युक्तं ।। व इति श्रवणादिति ।। वइत्यस्य श्रौतस्य षष्ठ्यन्तयुष्मच्छब्दरूपत्वेन संबोधनेन विना युष्मच्छब्द-प्रयोगायोगाद्भाष्ये हे प्रजा इत्यध्याहृतमिति भावः । देवयतीशब्दव्याख्यानभाष्यानुसारेणाह ।। ज्ञानकर्माधिकृता इति ।। द्वितीयांतस्य देवशब्दस्येति ।। अस्य यतीशब्देन समास इत्यन्वयः । यतीतिरूपसिद्धिरुच्यते इणःशत्रंतादिति । इण्गतावित्यतो लटःशत्रादेशे उगितश्चेति ङीपि यणादेश इति भावः । तर्हि न लोकाव्ययनिष्ठेति षष्ठीसमासनिषेध इत्यत उक्तं द्वितीयान्तस्येति ।। तर्हि द्वितीयाश्रितातीतेत्यत्र यती शब्दाभावात्कथं द्वितीयासमास इत्यत उक्तं गमिगम्यादीनामिति । आदिशब्दस्य प्रकारार्थत्वाद्यतीशब्दो गृह्यत इति भावः ।। गतिश्चेति ।। ज्ञानस्य मोक्षरूपगतिसाधनत्वाद्यजनस्य च स्वर्गादिगतिसाधनत्वाल्लक्षणया इण्धातुवाच्यगतित्वमिति भावः ।। यह्वं यहुमिति ।। यहुःसूनुरित्यपत्यनामपठितयहुशब्दाद्द्वितीयैकवचने अमि सर्वे विधयश्छन्दसि विकल्प्यन्त इत्युक्तेः अमिपूर्वरूपाभावाद्यणादेशे यह्वमिति रूपमिति भावः ।। बह्वाधेयत्वत इतीति ।। बहुभिराधानाख्यकर्मणोत्पादनादग्नेःपुत्रत्वम् । विष्णोस्तु बहुभिः स्वपरज्ञाने व्यक्तीकरणात्पुत्रत्वमितिभावः ।। अत एवेति ।। अग्नेर्विष्णोश्च पुत्रत्वघटकाधान-ज्ञानाख्यप्रयोजनस्य सत्त्वादेवेत्यर्थः ।। याच्ञा कर्मस्विति ।। ईमहे यामिमन्महे इतीतिशेषः ।। ईळते स्तुवंतीति ।। ईडस्तुताविति धातोरिति भावः ।। १ ।।

जनासो अग्निम् ।। सहसा वायुनेति ।। शूषं सह इति सहःशब्दस्य बलनामसु पाठाद्वायोश्च सर्वबलनियामकत्वात्सहःशब्दवाच्यत्वम् । तथा अग्नेर्व्यजनादिजनितवायुवर्धितत्वं प्रसिद्धमिति भावः ।। परिचरणकर्मस्विति ।। विधेम सपर्यतीत्यादिनेति शेषः ।। अन्तर्णीतण्यर्थादिति ।। सहसं

(टीकाविवृतिः)

वर्धयतीति सहोवृधिति विग्रह इति भावः । नन्वग्निपक्षे कर्मणि क्विप्कल्प्यः । विष्णुपक्षे धातोरन्तर्णर्यर्थत्वं वाच्यमित्यस्वरसादाह ॥ उभयत्रेति ॥ अग्निविष्णुपक्षे वृधेरिगुपधत्वादिगुपधज्ञाप्रीकिरः क इति कप्रत्यय इत्यर्थः । क्विप्पक्षे सहःशब्दस्य कर्तृकर्मरूपकारकत्वाद्गतिकारकोपपदात्कृदितिकुदुत्तरपदप्रकृतिस्वरेण वृधमित्याद्युदात्तम् । कप्रत्ययपक्षे तु प्रत्ययस्वरेणान्तोदात्तत्वे प्राप्ते छान्दसमाद्युदात्तत्वमिति भावः ॥ २ ॥

प्रत्वा ॥ महोमहत इति ॥ महेःक्विपि सावेकाचस्तृतीयादिर्विभक्तिरिति विभक्तेरुदात्तत्वमिति भावः ॥ अर्चयोर्चिष इति ॥ अर्चपूजायामित्यत औणादिके इप्रत्यये अर्चिशब्द इकारान्तः । वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखास्त्रियामित्यमरोक्तेरर्चिषो ज्वालाः । भानुःकरोमरीचिः स्त्रीत्यमरोक्तेरेव भानवः प्रकाशा इत्याशयः ॥ ३ ॥

देवासस्त्वा ॥ प्रसिद्धमिति ॥ प्रत्नं प्रदिव इति पुराणनामसु पाठादिति भावः ॥ दादाविति ॥ हविरादिकमिति शेषः ॥ त्वया प्रसन्नेनेति ॥ निमित्तेन त्वत्प्रसादेनेति यावदिति भावः ॥ धनमिति ॥ अग्निप्रसादेन बाह्यं धनं विष्णुप्रसादेन तु ज्ञानाख्यं धनमिति भावः ॥ ४ ॥

मन्द्रो होता ॥ यस्मिन्विषय इति ॥ विषये उद्देश्य इत्यर्थः । महान्मखो यस्येति विग्रहे तु यज्ञकर्तृत्वं प्रतीयेतेति भावः ॥ मदंत्यनेनेति ॥ मदी हर्ष इत्यतःकरणे अकारप्रत्यय इत्याशयः । ऊषशुषीति सूत्रेण मत्वर्थे रप्रत्यये छान्दसे मदशब्दांत्यलोपेपि महत्त्वज्ञापकं किमित्यत आह ॥ अन्येनेति ॥ नकारेणेति शेषः । आधिक्येधिकमिति सूत्रान्नकारस्य लक्षणाप्राप्तत्वेनाधिकत्वान्महत्त्वार्थकत्वमिति भावः । ननु मदिस्तुतिमोदमदस्वप्नकान्तिगतिष्वितिधातोरिदित्वान्नुमागमसिद्धेर्नुम आधिक्याभावादस्मिन्पक्षे महत्त्वज्ञापकमाह ॥ भूमेति ॥ अतिशायनरूपमत्वर्थे रप्रत्यय इति भावः ॥ त्वे त्वयीति ॥ युष्मदःसप्तम्येकवचनस्य सुपां सुलुगिति शे इत्यादेशे शे इति प्रगृह्यसंज्ञायां त्वमावेकवचने इति त्वादेशे छान्दसत्वेन योचीति यादेशाभावे शेषे लोप इति टिलोपे त्वे इति रूपस्य इतिकरणादोप्रकृतिभाव इति भावः ॥ ५ ॥

**ऋक्संहिता पदपाठसहिता** (सू-३६, व-२)

(४२७) **त्वे इद॑ग्ने सुभगे॑ यविष्ठ्य विश्व॒मा हू॑यते ह॒विः । स त्वं नो॑ अ॒द्य सुमना॑ उ॒ताप॒रं यक्षि॑ दे॒वान्त्सुवीर्या॑ ॥ ६ ॥**

(५०) **त्वेइति॑ । इत् । अ॒ग्ने । सु॒भगे॑ । य॒वि॒ष्ठ्य । विश्व॑म् । आ । हू॒य॒ते । ह॒विः ॥ उ॒त । अ॒प॒रम् । यक्षि॑ । दे॒वान् । सु॒ऽवीर्या॑ ॥६॥**

(ऋक्संहिता पदपाठसहिता)

(४२८) तं घेमित्था नमस्विन उप स्वराजमासते । होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः ॥ ७ ॥

(प०) तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते । होत्राभिः । अग्निम् । मनुषः । सम् । इन्धते । तितिर्वांसः । अति । स्रिधः ॥ ७ ॥

(४२९) घ्नन्तो वृत्रमतरन्रोदसी अप उरुक्षयाय चक्रिरे । भुवत्कण्वे वृषा द्युम्न्याहुतः क्रन्ददश्वो गविष्टिषु ॥ ८ ॥

(प०) घ्नन्तः । वृत्रम् । अतरन् । रोदसी इति । अपः । उरु । क्षयाय । चक्रिरे । भुवत् । कण्वे । वृषा । द्युम्नी । आऽहुतः । क्रन्दत् । अश्वः । गोऽइष्टिषु ॥ ८ ॥

(४३०) सं सीदस्व महाँ असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥ ९ ॥

(प०) सम् । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः । वि । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रऽशस्त । दर्शतम् ॥ ९ ॥

(४३१) यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन । यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥ १०, ९ ॥

(प०) यम् । त्वा । देवासः । मनवे । दधुः । इह । यजिष्ठम् । हव्यऽवाहन । यम् । कण्वः । मेध्यऽ अतिथिः । धनऽस्पृतम् । यम् । वृषा । यम् । उपऽस्तुतः ॥ १०, ९ ॥

## ऋग्भाष्यम्

देवान्सुवीर्यायजसि ॥ ६ ॥ तंहि त्वामेव सर्वदा । उपासते नमस्यंतः सन्तस्तीर्णास्तु संसृतेः । स्रिधोह्यतितितिर्वांसस्तीर्णदुःखा इहैव वा । त्वत्प्रसादेन विद्वांसः प्राप्य ब्राह्मण्यमुत्तमम् ॥ ७ ॥ तमो घ्नन्तो तरँल्लोकानपः कर्माणि चोत्तमाः । उरुब्रह्मक्षितित्वेन चक्रुस्तत्रैव संस्थितेः । वृषा सभगवान्विष्णुर्मुनौ कण्वे भवत्स्थितः । क्रन्ददश्वस्वरूपश्च

(ऋग्भाष्यम्)

ज्ञानस्यान्वेषणे कृते । ततः कण्वान्निस्सरंति शुद्धावेदानुगा गिरः । द्युतिमत्त्वात्स तु द्युम्नी ॥ ८ ॥ देवेषु ज्ञानवत्तमः । सत्वं शोचस्व दीप्यस्व धूमः संसारधूत्कृतेः । अरुषो रोषहीनत्वाद्धूमश्चेच्छुभगंधनात् ॥ ९,१०,९ ॥

## ऋग्भाष्यटीका

त्वे इत् । अत्र चतुर्थपादं व्याचष्टे ॥ देवानिति । सुवीर्येति पञ्चम्येकवचनस्य सुपां सुलुगित्यादिनाकारादेशः । यजेर्लटि बहुलं छन्दसीति शपो लुगिति भावः । हे यविष्ठ्य व्याख्यास्यते । अग्ने विश्वं हविः सुभगे महैश्वर्ये । त्वे इत् त्वय्येव । आसम्यक् । हूयतेऽस्माभिरिति शेषः । स एव मस्माभिर्दत्तहविः सुमनास्त्वमद्य नोस्मदर्थे । सुवीर्या सुवीर्यात्कारणाद्देवान्यक्षि यजसि । अपरमुत आगामिन्यपि काले । यजेति शेषः । सुवीर्यकार्यं ह्येतत् । यदेकस्यैवानेकान्देवान्प्रति युगपदनेक प्रत्तहविः प्रापणम् ॥ ६ ॥

तं घ । तं हि । हे अग्ने ये मनुषः सन्तो मनुष्याः । स्वराजं तमुक्तगुणमग्निं त्वामीम् एव । इत्था निर्विकारतया । सर्वदेति यावत् । नमस्विनो नमस्यन्तः । उपासते । होत्राभिराह्वानरूपाभिर्ऋग्भिः समिन्धते प्रकाशयन्ति च । ते तु स्रिधो बन्धनात् अतितितिर्वांऽसोथ संसृतेस्तीर्णा हि । प्रकारान्तरेण व्याचष्टे । स्रिध इति । ये मनुष इत्था तं त्वामीमेव । नमस्विनस्ते स्वराजं स्वराष्ट्रम् उत्तमं ब्राह्मण्यमिति यावत् । उपासते प्राप्नुवन्ति । प्राप्य च होत्राभिः समिंधते दीप्ताविद्वांसो भवन्ति । ततस्त्वत्प्रसादेन स्रिधोऽतितितिर्वांसो हि । कोर्थः । इहैव जन्मनि तीर्णदुःखाः जीवन्मुक्ता जाता हीति ॥ ७ ॥

घ्नन्तः । तमः । ये उत्तमाः पुरुषाः अपः कर्माणि । उपलक्षणमेतत् । मनः प्रभृति च । उरुक्षयाय उरुः पूर्णस्त्वमेव क्षय आश्रयस्तस्मै । उरुब्रह्मक्षितित्वेन । तत्र त्वय्येव संस्थितेर्निष्ठयेति यावत् । चक्रिरे चक्रुः । ते वृत्रं तमोऽज्ञानं वा । घ्नन्तो रोदसी द्यावापृथिव्यौ तद्गतांल्लोकान् जनानतरन् अत्यशेरत । स एवं स्वाराधकानतिशयितान्कुर्वन् वृषा श्रेष्ठो द्युम्नी भगवान्विष्णुः । क्रन्ददश्वः क्रन्ददश्वस्वरूप एव । सर्वदा वेदानुच्चारयद्धयग्रीवरूपं तेनेति यावत् । कण्वे मुनौ मयि । आहुतः आहितः स्थितो भुवदभवत् । किं निमित्तं गविष्टिषु गोर्ज्ञानस्येष्टिष्वन्वेषणेषु प्रार्थनेषु कृतेषु कण्वेनेति शेषः । सिद्धं चैतत्तस्य प्रयोजनमित्याह भाष्यकारः । तत इति । हयशिरसः सन्निधानात् । शुद्धा इत्यस्यैव विवरणम् । वेदानुगा इति । पूर्वाभ्यस्तवेदात्यन्तसादृश्यवत्यः । यद्वा गोशब्दो गिरां वाचक इति भावेन गविष्टिष्वित्यस्य तात्पर्यमिदम् । द्युम्नी कुत इत्यत आह ॥ द्युतीति । द्युम्नं द्युतिः ॥ ८ ॥

(ऋग्भाष्यटीका)

संसीदस्व। देवेषु। हे मियेध्य मेध्य प्रशस्त स्तुताग्ने। यस्त्वं देववीतमः वीगतौ ततः क्विप् गतिश्च ज्ञानम् अतिशयेन वीर्वीतमः। देवेषु वीतमो देववीतमः। देवेषु ज्ञानवत्तमोऽसि। अन्यैश्च गुणैर्महानसि। सत्वमिह यज्ञे। संसीदस्व सन्निहितो भव। शोचस्व दीप्यस्व च। अनेकार्थत्वात्। विष्णुपक्षे धूममरुषं दर्शतं त्वत्साक्षात्कारमस्माकं विशेषेण सृजेति योजना। तत्र दर्शनस्य कथं धूमत्वादिकमित्यत आह॥ धूम इति। दर्शतशब्दोक्तेश्वरसाक्षात्कारः संसारस्य धूत्कृतिर्यतस्तस्माद्धूमः धुनोतीति। घञर्थे कविधानमिति रुषो रोषः। तद्धीनत्वं च तत्सामानाधिकरण्याभावः। अग्निपक्षे तु दर्शतं दृष्टिगोचरम्। अरुषं धूमं विसृजेति। तत्र धूमस्यारुषत्वं कथमित्यत आह॥ धूमश्चेदिति॥ प्रसिद्धधूमश्चेदत्र विशेष्यो विवक्षितस्तदा शुभगन्धनादाज्याद्युद्भूतशुभगन्धवत्त्वादरुषः। अरुषत्वेन निर्दोषत्वं तेन शुभगन्धनं लभ्यत इति॥ ९॥

यंत्वा। हे हव्यवाहन यं यजिष्ठं त्वामिह लोके देवा मनवे मनोरर्थे दधुराहितवन्तः। यं च त्वां धनस्पृतं धनस्पृशं धनिकम्। कण्वः कण्वपुत्रोमेध्यातिथिर्मेधातिथिश्चदधौ। यंत्वाम्। वृषादधौ। यं चोपस्तुतोदधौ स इति पूर्वत्रान्वयः॥ १०, ९॥

## मन्त्रार्थमञ्जरी

(हे) यविष्ठ्य, यविष्ठेषु स्थितत्वेन हेतुना 'यविष्ठ्य' इत्युक्त विष्णो, यविष्ठशब्दाद्भवार्थे 'भवे छन्दसि' इति यत्प्रत्ययः, 'यस्येति च' इत्यकारलोपः (प्रसिद्धाग्निपक्षे) ब्रह्माद्यपेक्षयात्यन्तनि-कृष्टत्वात् 'यविष्ठ्य' इत्युक्तम्। अग्ने विश्वम् हविः। सुभगे, महैश्वर्ये। त्वे इत्, त्वय्येव। आ, सम्यक्। हूयते (अस्माभिः) इति शेषः। सः, एवमस्माभिर्दत्तहविः। सुमनाः त्वम् अद्य। नः, अस्मदर्थे। सुवीर्या, सुवीर्यात्कारणात्, पञ्चम्येकवचनस्य 'सुपां सुलुक्' इत्यादिनाकारादेशः। देवान्। यक्षि, यजसि, यजेः लटि 'बहुलं छन्दसि' इति शपो लुकि (षत्वम्), कत्वम्, षत्वं च। अपरम् उत, आगामिन्यपि काले। (यज) इति शेषः। सुवीर्यकार्यं ह्येतत्– यदेकस्यैवानेकान्देवान्प्रति युगपदनेकदत्तहविः प्रापणम्॥ ६॥

(हे अग्ने) मनुषः, सन्तो मनुष्याः। स्वराजम्। तम्, उक्तगुणम्। अग्निम् (त्वाम्) (घ) ईम्, एव। इत्था, निर्विकारतया, सर्वदेति यावत्। नमस्विनः, नमस्यन्तः। उप आसते, प्राप्नुवन्ति। प्राप्य च– होत्राभिः, (वाग्भिः) सम् इन्धते, दीप्ता विद्वांसो भवन्ति। ततस्त्वत्प्रसादेन स्रिधः अतितितिर्वांसः (हि) कोऽर्थः ? इहैव जन्मनि तीर्णदुःखा जीवन्मुक्ता जाता हि इति॥ ७॥

(हे अग्ने) (ये) उत्तमाः पुरुषाः। अपः, कर्माणि, उपलक्षणमेतत् मनः प्रभृति च। उरु क्षयाय, य उरुः पूर्णस्त्वमेव क्षय आश्रयस्तस्मै, त्वद्विषयाण्येवेति यावत्, 'क्षिनिवासगत्योः' भावेऽच्प्रत्ययः।

(मन्त्रार्थमञ्जरी)

चक्रिरे, चक्रुः। (ते) वृत्रम्, अज्ञानाख्यं तमः। घ्नन्तः। रोदसी, द्यावापृथिव्यौ, तद्गताञ्जनान्। अतरन्, अत्यशेरत। (सः) एवं स्वाराधकानतिशयितान्कुर्वन्। वृषा, श्रेष्ठः। द्युम्नी, द्युम्नं द्युतिः, तद्वान्भगवान्विष्णुः। (क्रन्दत् अश्वः) क्रन्ददश्वस्वरूप एव, सर्वदा वेदानुच्चारयन्हयग्रीवरूपः। गविष्टिषु, गोर्ज्ञानस्य गवां वेदगिरां वेष्टिष्वन्वेषणेषु प्रार्थनेषु मया कृतेषु। कण्वे, मुनौ मयि। आहुतः, स्थितः। भुवत्, अभवत्, ज्ञानादिसम्पत्त्यर्थम्– इति भावः॥ ८॥

(हे) मियेध्य प्रशस्त, स्तुत। अग्ने। (यः) त्वम्। देववीतमः, 'वी गतौ' ततः क्विप्, गतिश्च ज्ञानम्, अतिशयेन वीर्वीतमः, देवेषु (वीतमः) ज्ञानवत्तमः। असि। अन्यैश्च गुणैः महान् (असि) (सः) त्वम्। (सह) यज्ञे। सम् सीदस्व, संनिहितो भव। शोचस्व, दीप्यस्व, अनेकार्थत्वाद्धातूनाम्। (अग्निपक्षे) दर्शतम्, दृष्टिगोचरम्, दृशेः अतच्प्रत्ययः। अरुषम्, रुषो रोषः, तद्धीनम्, निर्दोषमिति यावत्, तेन– आज्याद्युद्भूतशुभगन्धवत्त्वलाभः, शुभगन्धवन्तम्। (धूमम्। विष्णुपक्षे) धूनोति संसारमिति धूमः, 'धूञ् कम्पने' (ताच्छील्ये मः' (म० व्या० सू०) इति मप्रत्ययः, (तम्-धूमम्) संसारनिवर्तकम्। अरुषम्, रुषो रोषः, 'घञर्थे कविधानम्' इति कप्रत्ययः, अरुषं निर्दोषम्। दर्शतम्, भावेऽतच्प्रत्ययः, त्वदपरोक्षज्ञानम्। (वि) विशेषेण। सृज। इति योजना॥ ९॥

(हे) हव्यवाहन यम्। (यजिष्ठम्, व्यत्ययात्) यविष्ठम्, कनीयांसम्। (त्वा) त्वाम्। इह, लोके। देवासः, देवाः मनवे, मनोरथे। दधुः, आहितवन्तः यम् (च) (त्वा) त्वाम्। धनस्पृतम्, धनस्पृशम्, धनिकम्। कण्वः, कण्वपुत्रः। मेध्यातिथिः (च) (दधौ) आहितवान्। यम् (च)। (त्वा) त्वाम्। (दधौ) यम् (च) (त्वा) त्वाम्। उपस्तुतः (दधौ) 'सः' इति पूर्वेण अन्वयः। भाष्यकृदव्याख्यातेयम् ऋक्॥ १०॥ इति नवमो वर्गः॥ ९॥

## रूपावतारः

त्वे इत्॥ यजतेर्लटीति। यजेर्लटि शपो लुकि 'व्रश्च....' (८।२।३६) इति षत्वे 'षढोः कःसि' (८।२।४१) इति कत्वे 'आदेशप्रत्यययोः' (८।३।५२) इति सिपःसकारस्य षत्वे यक्षीति रूपमिति भावः॥ ६॥

तं घ। पूर्वं संसृतेस्तीर्णा हीत्युक्तम्। इदानीमर्थान्तरं किं वक्तव्यमिति भावेन पृच्छति। कोऽर्थ इति॥ ७॥

घ्नन्तः ॥ पूर्वाभ्यस्तेति । पूर्वाभ्यस्तवेदान्तरात्यन्तसादृश्यवत्य इत्यर्थः । एतेन 'जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः । मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वशः' इति प्रमाणेन प्राक्तनमेव वेदमधीमहे इत्यनुभवेन च पूर्वोत्तरवेदैक्यस्य सिद्धत्वादभ्यस्तवेदसादृश्याभिधानमयुक्तमिति परास्तम् । वेदलक्षणमिहास्तीति ज्ञापनाय वेदान्तरसादृश्यस्यैवेहोक्तत्वात् । गोशब्दस्य ज्ञानवाचित्वमङ्गीकृत्य गविष्टिष्विति पदं व्याख्याय शब्दवाचित्वमङ्गीकृत्य ततःकण्वान्निस्सरन्ति इत्यनेन गविष्टिष्वित्यस्य तात्पर्यमाहेत्याह । यद्वेति । अनेन गविष्टिष्वित्यस्य शब्दान्वेषणेष्विति व्याख्यानं सूचितमिति । द्युम्नं द्युतिरिति । द्युतेर्नक्प्रत्यये तकारस्य मकारे द्युम्नमिति रूपम् ॥ ८ ॥

संसीदस्व ॥ मियेध्येति । मेध्यशब्दमकारैकारयोर्मध्ये छान्दसे इयागमे कृते मियेध्येति रूपम् । धूम शब्दव्युत्पत्तिं दर्शयति । धुनोतीति । रुषशब्दं साधयति । घञर्थे इति । ''घञर्थे कविधानम् (वा.सू. ३।३।५८) इत्यनेन भावे कप्रत्यये रूषेति रूपं भवतीति भावः ॥ ९ ॥

यंत्वा ॥ स इति पूर्वत्रेति । स त्वं संसीदस्वेत्यत्रान्वय इति भावः ॥१०॥९ ॥

## पदार्थप्रकाशिका

त्वे इदग्ने सुभगे यविष्ठ्य । ननु ऋचि सुवीर्येत्युक्तत्वात् सुर्वियादिति कथं भाषितमित्यत आह सुवीर्येतीति । पञ्चम्येकवचनस्य ङसि इत्यस्येत्यर्थः । ननु ऋचि यक्षीति कथम् । दानार्थकात् यजधातोर्लेटि मध्यमपुरुषे तस्य सिप् इत्यादेशे पकारलोपे धातोरनन्तरं शप् प्रत्यये अकारमात्रं विहाय शकारपकारयोर्लोपे यजूअसियजसीति स्यादित्यत आह यजेर्लेटीत्यादि । यद्यत्र शप्प्रत्यय उर्वरितः स्यात्तदैव अकारे मिलिते सति यजसीति स्यान्न चैवं किन्तु बहुलं छन्दसीति अकारसहितस्यैव शपो लोपकरणात् । तथाच यज् सि इति स्थिते चोः कुरिति सूत्रे चवर्गस्थतृतीयजकारस्य कवर्गस्थे तृतीये गकाररूपे कुत्वे सति यग्सीति जाते खरि चेति सूत्रेण सकाररूपे खरि परे गकारूपस्य झलः ककाररूपे चरि सति यक् सीति जाते आदेशप्रत्यययोरिति सस्य षत्वे यक् षीति जाते कषयोगे क्ष इति वचनाद्यक्षीति रूपं युक्तमित्यर्थः । व्याख्यास्यत इति । बृहद्भानोयविष्ठ्येत्यत्र यवीयस्सुस्थितत्वेन यविष्ठो हरिरुच्यते । ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एव यत् । अग्निर्यविष्ठ इत्युक्त इत्येवमग्नाविष्णोर्यविष्ठशब्दो व्याख्यास्यत इत्यर्थः । विश्वम् समस्तम् । अस्मदर्थे । देवेभ्योऽस्माकं फलप्राप्त्यर्थम् । देवान् प्रति हविर्यजसि ददासि । प्रायसीत्यर्थः । अपरमुतेत्यस्यापरस्मिन्नपि काल इत्यर्थमभिप्रेत्यार्थमाह आगामिन्यपि काल इति । यज । हविर्देवान् प्रति प्रापय । अग्निकर्तृके देवान्

(पदार्थप्रकाशिका)

प्रति हविः प्रापणे सुवीर्यस्य कथं करणत्वमित्यतस्तदुपपादयति सुवीर्यं कार्यं ह्येतदिति। एतदित्यस्यैव विवरणं यदेकस्यैवेत्यादि। अनेकप्रत्तेति। अनेकैर्दत्तेत्यर्थः ॥ ६ ॥

तं घेमित्था नमस्विनः। सन्तो मनुष्याः। सज्जनाः। स्वराजम्। स्वत एव राजमानम्। तं घेमित्थेत्यत्र तम्, घ, ई इत्थेति हि पदम्। तत्र ई इत्यस्य एवेत्यर्थः। तमित्यनेन तस्य सम्बन्धमित्यभिप्रेत्याह तं, त्वां, ई, एवेति। प्रकाशयन्ति चेति। तत्स्वरूपं प्रकटं कुर्वतीत्यर्थः। उपासनासमिन्धनयोः परस्परं समुच्चयार्थश्चशब्दः। तेत्विति। उपासनादिकर्तारं इत्यर्थः। घशब्दार्थो हीति। प्रकारान्तरेणेति। अत एवेहैव वेत्यर्थे वाशब्द इति ध्येयम्। ते इत्यनन्तरं तज्जनितपुण्येनेति शेषः। ब्राह्मण्यम् वेदाधिकारसम्पादकमिति शेषः। होत्राभिरिति। त्वत्प्रतिपादकाभि ऋग्भिः समिन्धते दीप्ताः त्वद्विषयकप्रकाशवन्तः भवन्ति तस्यापि तात्पर्यं विद्वांसो भवन्ति परोक्षज्ञानद्वाराऽपरोक्षज्ञानिनो भवन्तीत्यर्थः। ततः अपरोक्षज्ञानानन्तरम्। अपरोक्षज्ञानिनामपि प्रारब्धदुःखसद्भावेनेह जन्मनि तीर्णदुःखत्वाभावात्तस्य तात्पर्यमाह जीवन्मुक्ता जाता हीति। दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यत इति वचनात्सत्यपि दुःखे तत्राभिमानाभावेन उपमर्देन च जीवन्मुक्तास्तीर्णदुःखाः भवन्त्येवेति भावः ॥ ७ ॥

घ्नन्तो वृत्रमतरन् रोदसी अपः। मनः प्रभृतीति। मन आदीन्द्रियजातमित्यर्थः। उरुक्षयायेत्यस्य स्वयं पदार्थमुक्त्वा तात्पर्यकथनपरं भाष्यं संयोजयति। उरुब्रह्माक्षितित्वेनेति। एतस्यापि विवरणपरं तत्रैव संस्थितेरिति भाष्यमित्यभिप्रेत्य तत्र संस्थितेरिति पदद्वयार्थमाह तत्र त्वय्येवेति। निष्ठा भक्तिः। चक्रिर इति। तथाच त्वन्निष्ठया कर्माणि चक्रुः। तथाच निष्ठया मन आदीन्द्रियाणि चक्रुरित्यर्थो द्रष्टव्यः। तमो घ्नन्त इति। भगवद्विषयककर्मकरणादिनाऽपरोक्षज्ञानानन्तरं कर्माणि भोगेन क्षपयित्वोत्क्रमणानन्तरं गमनसमये ज्योतिर्मयदेहप्रकाशेन प्रसिद्धं तमो घ्नन्त इत्यर्थो द्रष्टव्यः। अज्ञानं वा घ्नन्त इति। भगवद्विषयककर्मकरणादिना ज्ञानिनो भूत्वेति यावत् इत्यर्थः। पूर्वार्धस्याग्रेयत्वसिद्धये तत्फलितमर्थमनुवदति। स एवमिति। अतिशयितान् समस्तजनेभ्यः श्रेष्ठान् क्रन्दत् ध्वनिं कुर्वत् योऽश्वस्तत्स्वरूप एवेत्यर्थः। अनेन भाष्ये चशब्द एवार्थ इत्युक्तं भवति। वृथा क्रन्दनस्याप्रयोजकत्वात्। तदेव विशदयति सर्वदा वेदानित्यादिना। अत एव श्रीहयवदनध्याने 'नस्तो मुखादपि निरन्तरमुद्गिरन्तं विद्या अशेषत इत्युक्तमित्यवगन्तव्यम्। किं निमित्तमिति। कण्वमुनौ कस्मै प्रयोजनाय हयवदन आस्थित इत्यर्थः। ज्ञानस्य उद्देशेन। अन्वेषणे कृत इति भाष्यस्थपदद्वयमनूद्यैकवचनं बहुवचनार्थं इत्यभिप्रेत्याह अन्वेषणेष्विति। मम

(पदार्थप्रकाशिका)

वैदिकज्ञानसम्पत्तिर्भूयात्तदर्थं भगवान्मयि सन्निहितो भवत्वित्यभिप्रेत्य कण्वेन प्रार्थितत्वात्तदर्थं स भगवानास्थित इति भावः।

ननु ततः कण्वादित्यादिना आचार्यैः किमसङ्गतमुच्यत इत्यतस्तदवतारयति सिद्धं चैतदिति। वैदिकज्ञानप्राप्तिमुद्दिश्य कण्वेन प्रार्थने कृते सति तत्प्रयोजनं कण्वस्य सिद्धं नवेति शङ्कायां तत्प्रयोजनं सिद्धमित्युच्यते। कुतः। यतः कण्वमुखात् श्रुत्वा वेदरूपा गिरो निःसरन्ति तथा च वैदिकज्ञानप्राप्तिसाध्यस्य अर्थज्ञानपूर्वकं वेदोच्चारणरूपकार्यस्य जातत्वात्तत्कारणभूतं वेदार्थज्ञानं तेन प्राप्तमिति निश्चीयत इति भाष्यकारः स्वयमाहेत्यर्थः। ननु कण्वनिःसृतानां गिरां साक्षाद्वेदत्वाद्वेदानुगा इति वेदसादृश्यं कथमुच्यत इत्यत आह पूर्वाभ्यस्तेति। पूर्वजन्माभ्यस्तेत्यर्थः। यथोक्तं जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः। मुनीनां प्रतिभास्यन्तीति। अत्यन्तसादृश्यम् तत्क्रमस्वराद्युपेतत्वम्। यथोक्तम्। तत्क्रमेणैव तैर्वर्णैस्तैः स्वरैरेव नान्यथेति। पूर्वं गोशब्दो ज्ञानस्य वाचक इत्यभिप्रेत्य गविष्टिष्विति पदं ज्ञानस्यान्वेषणे कृत इति व्याख्याय ततः कण्वादिति भाष्यं प्रार्थनप्रयोजनकथनपरतया बहिरेव योजितम्। इदानीं तु गोशब्दो गिरां वाचक इत्यभिप्रेत्य ततः कण्वादिति भाष्यं गविष्टिष्वित्यस्य तात्पर्यकथनपरमित्यभिप्रेत्याह यद्वेति। अत्र ज्ञानस्येत्यारभ्य गिर इत्यन्तमेकमेव वाक्यम्। तथा च गविष्टिषु गो इष्टिषु अन्वेषणे कृते वेदवाचः सम्यगुच्चारणार्थं मा यांतु तदर्थं भगवान्मयि सन्निहितोस्त्विति कण्वेन प्रार्थनेषु सत्सु भगवान् हयवदनरूपी तस्मिन्नास्थितो जातः। ततः एव कारणात्तस्मात्कण्वात् कण्वमुखाच्छुद्धा वेदानुगा गिरो निःसरन्तीत्यर्थो द्रष्टव्यः। एवं चास्य योजनायां न पूर्वयोजनायामिव परंपरेति द्रष्टव्यम्। द्युम्नं द्युतिरित्यनन्तरं अस्यास्तीति द्युम्नीति शेषो द्रष्टव्यः॥ ८॥

संसीदस्व महाँ असि। मियेध्य मेध्येति। आधिक्ये अधिकमिति सूत्राद्यकार आधिक्यार्थ इति भावः। तथा च मियेध्येत्यस्याधिक्येन मेध्य अतिशयेन पवित्रेत्यर्थो द्रष्टव्यः। प्रशस्तस्तुतेति प्रोपपदात् शंसस्तुतावित्यस्माद्धातोः कर्मणि क्तप्रत्यये सतीदं रूपमिति भावः। कित्वाद्गुणाभावः। अन्यथा वेतमेति स्यादिति द्रष्टव्यम्। तमपोर्थोऽतिशयेनेति। अन्यैश्च गुणैरानन्दादिभिः। ननु शुच् शोक इति धातुनिष्पन्नस्य शोचस्वेत्यस्य कथं दीप्यस्वेत्यर्थः उच्यत इत्यत आह अनेकार्थत्वादिति। शुच् धातोरिति शेषः। क्रियावाचित्वमेकैकोऽर्थः प्रदर्श्यते। प्रयोगतोनुगन्तव्या अनेकार्था हि धातव इति वचनाच्छोचतिः दीप्त्यर्थक इति भावः। सृज उत्पादय। दर्शनस्य ईश्वरसाक्षात्कारस्य। धूमत्वादिकमित्यत्रादिपदेनारुषत्वं ग्राह्यम्। धूत्कृतिः नाशकः। अयमर्थो धूमशब्दात्कथं लभ्यत इत्यत आह धुनोतीति। धुनोतीति व्युत्पत्या धूम इति सम्बन्धः। तथाच धूञ् धूत्कारेऽस्मात् कर्तरि

मप्रत्यये सति धूम इति भवतीति द्रष्टव्यम्। नन्वरुषमिति कथम्। रुषधातोर्भावेऽच्प्रत्यये इकारस्य ओकाररूपे गुणे सति अरोषमिति वक्तव्यत्वादित्यत आह घञर्थ इति। भावः कर्म वा घञर्थः। तस्मिन्नर्थे विवक्षिते सति कप्रत्ययविधानं भवतीति वार्तिकार्थः। तथा च रुषधातोर्भावे कप्रत्यये कित्वाद्गुणाभावे रुषेत्येव भवति। तथाच न विद्यते रुषः क्रोधो यस्यासावरुष इत्यर्थो द्रष्टव्यः। ननु दर्शतशब्दोक्तेश्वरसाक्षात्कारस्य रोषहीनत्वं नाम कीदृशमित्यत आह तद्धीनत्वं चेति। तत्सामानाधिकरण्याभावः। रोषसामानाधिकरण्याभावः। यस्मिन् पुरुषे ईश्वरसाक्षात्कार उत्पन्नः तस्मिन् पुरुषे रोषो नास्तीत्यर्थः। यथोक्तम्। वीतरागभयक्रोधस्थितधीर्मुनिरुच्यत इति। स्थितधीरपरोक्षज्ञानी। विशेष्यो विवक्षित इति। पूर्वं विष्णुपक्षे धूमारुषशब्दयो विशेष्यतया दर्शतशब्दोक्तः साक्षात्कारो विवक्षितः। इदानीं तु दर्शतारुषशब्दयोर्विशेष्यतया धूमः प्रसिद्धो विवक्षितश्चेदित्यर्थः। नन्वरुषशब्देन शुभगन्धवत्वं कथं लभ्यत इत्यतो लक्षणयेत्याह। अरुषत्वेनेति। दोषविशेषवाचिना रुषशब्देन दोषसामान्ये लक्षिते अरुषपदेन दोषसामान्याभावो लभ्यते। तथा च अशुभगन्धस्यापि दोषत्वेन तदभावे लब्धे शुभगन्धत्वमेव लभ्यत इत्यर्थः॥ ९॥

यं त्वा देवासो मनवे दधुरिह। स्पष्टत्वेन भाष्यकारैस्त्यक्तामृचं स्वयं व्याचष्टे हे हव्यवाहनेत्यादिना। हव्यवाहन अग्ने। यजिष्टमिति। यज् शब्दस्य सप्तमी यजीति। गविष्ठो युधिष्ठिर इतिवत्सप्तम्या अलुक्। तथाच यजि यज्ञे पूज्यतया तिष्ठतीति यजिष्ठस्तमित्यर्थः। मनोरर्थ इति। ब्रह्मादयो देवाः स्वायंभुवमनुग्रहं प्रत्यागत्य स्वयमेव तदर्थे यं त्वामाहितवन्त इत्यर्थः। मनुना त्वदाधानं कारितवन्त इति यावदिति भावः। आधानापेक्षितधनद अदातृत्वसामर्थ्योपपादनाय धनस्पृतमिति विशेषणम्। स्वस्य तद्वत्त्वाभावे परस्मै तद्दानानुपपत्तेरिति भावः। ऋचि कण्वो मेधातिथिरिति पितापुत्रयोरभेद उपचरित इत्याशयेन कण्वः कण्वपुत्र इति। दधौ आहितवान्। वृषा तन्नामको राजा। उपस्तुतो नामा वै मुनिः। यच्छब्दस्यान्वयाप्रतीतेराह स इतीति। एवं सर्वैराहितस्त्वं इह यज्ञे संसीदस्व दर्शनमरुषं धूमं च विसृजेति यच्छब्दस्य पूर्वत्रान्वयो द्रष्टव्य इत्यर्थः॥ १०, ९॥

## पदार्थदीपिका

यविष्ठेति। युवशब्दात् अतिशयार्थे इष्टन्। स्थूलदूरेत्यादिना यणादेःपरस्य लोपः। पूर्वस्य च गुण इति भावः। सत्सूद्विषेत्यादिना क्विबिति भावः॥ ६॥

(पदार्थदीपिका)

नमस्विन इति। अस् मायामेधेति मत्वर्थीयो विचिरिति भावः। आसत इति। आस उपवेशने। अदादित्वाच्छपो लुगिति भावः। स्रिधो बन्धनादिति। स्रिधु शोषणे। अस्मात् क्विप् चेति भावः। तितिर्वांस इति। तॄ प्लवनतरणयोरस्माच्छन्दसि लिडिति वर्तमाने लिट् क्वसुश्चेति क्वसुः। वस्वेकाजाद्घसामिति नियमादिडभाव इति भावः। ॠत इद्धातोरितीत्वम्। ऋच्छत्यॄतामिति गुणः, हलि चेति दीर्घत्वं च न भवति संज्ञापूर्वको विधिरनित्य इति तयोरनित्यत्वादिति भावः॥ ७॥

क्षय इति। क्षयति निवसत्यस्मिन्निति क्षयो निवासः। स्थानं पुंसि संज्ञायां घःप्रायेणेति घ इति भावः। घ्नन्त इति। हन्तेः शतरि गमहनेत्यादिनोपधालोपः। होहन्तेर्ञ्णिन्नेष्विति घत्वमिति विज्ञेयम्। भुवदिति। भवतेर्लेटि आडागमः। इतश्च लोप इतीकारलोपः। बहुलं छन्दसीति शपो लुक्। भूसुवोस्तिङीति गुणप्रतिषेधे घ इति भावः। द्युम्नमिति। भावे क्तिनिति भावः॥ ८॥

मियेध्येति। मेधशब्दाच्छन्दसि वेत्यर्हार्थे विहितो यप्रत्ययो विचित्रा हि तद्धितागतिरिति वचनात् भावार्थेऽपि भवति। यस्येति चेत्यलोपः। अकारैकारयोर्मध्ये इयागमश्छान्दस इति भावः। ततःक्विबिति। क्विप् चेति सूत्रेणेति शेषः। महानित्यत्र संहितायां नकाराकारयोः रुत्वानुनासिकावुक्तरीत्या बोध्यौ। सीदस्वेति। पाघ्राध्मा इत्यादिना सीदादेश इति भावः। दीप्यस्वेति। शुच दीप्ताविति धातोरिति भावः। घञर्थ इति। रुष संहितायामित्यस्मात् भावे घञर्थे कविधानमिति कप्रत्ययः। कित्वाल्लघूपधगुणाभाव इति भावः। दृष्टिगोचरमिति। भृमृशीत्यादिना दृशेःकर्मण्यतच् प्रत्यय इति भावः। सृजेति। सृज विसर्गे। तुदादित्वाच्छ इति भावः॥ ९॥

यजिष्ठमिति। यष्टृशब्दात्तु छन्दसीत्यगुणवचनादपि आतिशयनिकेष्ठन् प्रत्ययः। तुरिष्ठेमेयःस्विति तृशब्दलोपः। दधुरिति। लिटि उसि कित्वेनातो लोप इटि चेत्याकारलोप इति भावः। धनं स्पृतति धनेन स्पृणोति प्रीणयतीति धनस्पृत्। स्पृ प्रीतिबलयोरित्यस्मात् क्विप् चेति क्विप्। ततस्तुगिति भावः। पूर्वत्रान्वय इति। सत्वं संसीदस्वेति पूर्वत्रान्वय इत्यर्थः॥ १०॥

## टीकाविवृतिः

त्वे इत्॥ यजेर्लेटीति॥ शपो लुगित्यनन्तरं व्रश्चादिसूत्रेण जस्य षत्वं षढोः कस्सीति षस्य कादेशे आदेशप्रत्यययोरिति सिपः षत्वे यक्षीति रूपमिति शेषः॥ व्याख्यास्यत इति॥ पाहि नो अग्ने रक्षस इत्येतदृग्व्याख्यानभाष्ये यवीयस्सुस्थितत्वेन यविष्ठ्यो हरिरुच्यते। ब्रह्माद्यपेक्षया नित्यं यविष्ठ्यतम एव यत्। अग्निर्यविष्ठ्य इत्युक्त इत्यनेनेति शेषः॥ यदेकस्यैवेति॥ अग्नेरिति शेषः। अनेकप्रत्तहविःप्रापणम्। अनेकैर्यजमानैःप्रत्तस्य दत्तस्य हविषः प्रापणमित्यर्थः॥ ६॥

(टीकाविवृतिः)

तंघ ॥ पुरःकुषन्नित्युक्तःकुषन्प्रत्यय उणादयो बहुलमित्युक्तेर्मन ज्ञान इत्यतोपीत्याशयेन मनुष इत्यस्यार्थमाह ॥ सन्त इति ॥ मनुष्या इति तु विशेष्याध्याहार इति भावः । मनस् शब्दान्मत्वर्थे अस्मायामेधास्रजोविनिरिति विनिप्रत्यय इति भावेनाह ॥ नमस्विनो नमस्यन्त इति ॥ नमो वरिवश्चित्रङःक्यजित्यनेन नमश्शब्दात्क्यचि नमस्यंत इति रूपमिति ज्ञेयम् । नमस्कारं कुर्वन्त इत्यर्थः ॥ होत्राभिराह्वानरूपाभिरिति ॥ ह्वेञो भावे औणादिके त्रप्रत्यये ह्वःसंप्रसारणमित्यधिकारे बहुलंछन्दसीति संप्रसारणमिति भावः ॥ अतितितिर्वांस इति ॥ अति अतिशयेनेत्यर्थः । तॄधातोर्लिटःक्वस्वादेशे ऋत इद्धातोरितीकारादेशे द्वित्वादौ तितिर्वांस इति रूपम् । घशब्दस्यार्थो हीति भावः । श्रुतौ सान्निध्यात्स्वराजमित्यस्योपासत इत्येतं प्रति कर्मत्वप्रतीत्यनुसारेणाह ॥ प्रकारान्तरेणेति ॥ भाष्ये स्रिधो तितिर्वांस इत्यनयोःसंसृतेस्तीर्णा इति व्याख्यातत्वात्तीर्णदुःखा इति पुनरुक्तमित्यतस्तयोस्तात्पर्यमाह ॥ जीवन्मुक्ता इति ॥ इहैवेत्यध्याहारोक्तिभाष्य इति भावः ॥ ७ ॥

घ्नन्तो वृत्रम् ॥ अपःकर्माणीति ॥ अपःअप्न इति कर्मनामसु पाठादिति भावः ॥ मनःप्रभृतीति ॥ प्रभृतिशब्दाच्छ्रोत्रादिवागादिज्ञानकर्मेन्द्रियाणि गृह्यन्ते । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये इत्याद्युक्तप्रकारेण सर्वेन्द्रियाणि यज्ञादिकर्माणि च ईश्वरविषयाणि चक्रुरिति भावः । तत्फलमाह ॥ ते वृत्रन्तम इति ॥ आक्रन्दशब्दसातत्य इति धातोर्लटःशत्रादेशे छान्दसत्वेन आङ्प्रयोगाभावेपि क्रन्द इति धातुःशब्दार्थक इति भावेनाह ॥ वेदानुच्चारयदिति ॥ आहुत आहित इति ॥ आङ्पूर्वाद्दधातेःक्तप्रत्यये दधातेर्हिरिति ह्यादेशे तृतीयोतिशये इतीकारस्योकारादेश इति भावः ॥ भुवदिति ॥ भूधातोर्लङि व्यत्ययेन तौदादिके शप्रत्यये उवङादेश इति भावः ॥ किंनिमित्तमिति ॥ कण्वे स्थितो भवदित्यनुवृत्तेनास्यान्वयः ॥ गोर्ज्ञानस्येति ॥ गौःस्वर्गे च वृषेरश्माविति विश्वोक्ते र्ज्ञानस्यापि प्रकाशत्वात् इषु इच्छायां क्तिनि निष्पन्न इष्टिशब्द उपसर्गाणां द्योतकत्वादुपसर्गाभावेप्यन्वेषणार्थकः श्रुतौ गविष्टिष्वितिनिमित्तसप्तमी । कण्वेन ज्ञानार्थं प्रार्थितत्वात् हयग्रीवः कण्वे स्थित इति भावः । ततःकण्वादिति भाष्यं श्रुत्यव्याख्यारूपं किमर्थमित्यत आह ॥ सिद्धं चेति ॥ तस्य कण्वस्य तत्प्रयोजनं सिद्धमित्यन्वयः । कण्वनिःसृतगिरां वेदत्वाद्वेदानुगा इति कथमित्यत आह ॥ पूर्वाभ्यस्तेति ॥ पूर्वं गुरुभ्योभ्यस्तवेदेन स्वयं प्रतिभातवेदस्य कर्तृप्रसिद्धिशून्यत्वादिनात्यंतसादृश्यमिति भावः ॥ गोशब्द इति ॥ इळा गौर्गौरीति वाङ्नामसु पाठादिति भावः ॥ द्युम्नं द्युतिरिति ॥ द्युतदीप्ताविति धातोरुणादयोबहुलमित्युक्तेर्नक्प्रत्ययः धातुतकारस्य मकारादेशश्चेति भावः ॥ ८ ॥

(टीकाविवृतिः)

संसीदस्व ।। हे मियेध्य मेध्येति ।। मेधार्ह । मेधःनार्य इति यज्ञनामसु पठितमेधशब्दादर्हार्थे दण्डादिभ्यो यः । छन्दसि चेति यत्प्रत्यये मकारात्पर इयागमश्छान्दस इति भावः ।। प्रशस्तस्तुतेति ।। प्रपूर्वाच्छंस स्तुतौ इत्यतःक्तप्रत्यये अनिदितामिति नलोप इति भावः ।। देववीतम इति ।। तमपःपित्वादनुदात्तत्वाद्धातुस्वरेणवीतमशब्दस्याद्युदात्तस्य देवशब्देन समासे कृदुत्तरपदप्रकृति स्वरत्वमिति भावः ।। अनेकार्थत्वादिति ।। शुच दीप्तावित्यस्य मूलकोशेष्वदर्शनात् शुच शोक इति धातोरेव धातूनामनेकार्थत्वाश्रयेण दीप्त्यर्थत्वमिति भावः । दृशेभृमृशीत्यनेन भावे अतच्प्रत्यय इति भावेनाह ।। दर्शतं त्वत्साक्षात्कारमिति ।। संसारधूत्कृतिःकरणम् । निराकरणमिति यावत् । यतो यस्मात्साक्षात्कारात् यतःकारणात् तस्मात्कारणात् स साक्षात्कारो धूम इत्युच्यत इति यत इत्यस्यावृत्त्या योज्यम् । धूमशब्दव्युत्पत्तिं दर्शयति ।। धूनोतीति ।। धूञ् कंपन इत्यतः इषियुधींधिदसिश्याधूसूभ्यो मगिति मक्प्रत्यय इति भावः । धुनोतीति ह्रस्वपाठे तु धुञ्कंपन इति ह्रस्वान्तधातोरेव मक्प्रत्ययो निपातनाद्दीर्घश्चेति भावः ।। घञर्थे कविधानमिति ।। घञर्थे भावादौ कप्रत्ययस्य विधिरिति वार्तिकार्थः ।। रुषो रोष इति ।। कोप इत्यर्थः । साक्षात्कारस्य कोपहीनत्वप्रतिपादनमयुक्तं कोपस्य चेतनधर्मत्वादित्यत आह ।। तद्धीनत्वं चेति ।। तेन ज्ञानेन सह सामानाधिकरण्यमेकस्मिन्विद्यमानत्वं तदभाव इत्यर्थः ।। दर्शतं दृष्टिगोचरमिति ।। अस्मिन्पक्षे दृशेःकर्मण्यतच्प्रत्यय इति भावः । अरुषशब्दस्य कथं शुभगंधार्थकत्वमित्यत आह ।। अरुषत्वेन निर्दोषत्वमिति ।। धूमे कोपासंभवेन कोपराहित्यप्रतिपादनायोगाल्लक्षणया रुषशब्दे दोषग्रहणात्तद्राहित्यं प्रतिपाद्य तस्य च निर्दोषत्वस्य धूमे नेत्रादिदुःखजनके असंभवात्पुनर्लक्षणया शुभगन्धनं लभ्यत इति भावः ।। ९ ।।

यंत्वा ।। हव्यवाहनेति ।। हव्यं वहतीत्यर्थः । हव्येनन्तःपादमिति सूत्रेण हव्यशब्दे उपपदे वहेर्ञ्युट्प्रत्यये अत उपधाया इति वृद्धिरिति भावः ।। यजिष्ठमिति ।। यजेःकर्मणि औणादिकक्विबन्तस्य गुणवाचकत्वेनेष्ठन्प्रत्यये पूज्यतममित्यर्थः ।। मनोरर्थे इति ।। मनोरर्थ अभीष्टप्रयोजनं तत्सिद्ध्ये इत्यर्थः ।। आहितवन्त इति ।। आधानेष्टचा स्थापितवन्त इत्यर्थः ।। वृषादधाविति ।। वृषाधर्ममहेन्द्रयोरिति विश्वोक्तेर्वृषाधर्म इन्द्रो वा । उपस्तुतस्तु राजेत्याहुः ।। पूर्वत्रान्वय इति ।। पूर्वस्यामृचि सत्वं संसीदस्वेत्यन्वय इत्यर्थः ।। १० ।।

ऋक्संहिता पदपाठसहिता (सू-३६, व-३)

(४३२) यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि । तस्य प्रेषो
दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥ ११ ॥
(प०) यम् । अग्निम् । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् ।
अधि । तस्य । प्र । इषः । दीदियुः । तम् । इमाः । ऋचः ।
तम् । अग्निम् वर्धयामसि ॥ ११ ॥
(४३३) रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् । त्वं वाजस्य
श्रुत्यस्य राजसि स नो मृळ महाँ असि ॥ १२ ॥
(प०) रायः । पूर्धि । स्वधऽवः । अस्ति । हि । ते । अग्ने । देवेषु ।
आप्यम् । त्वम् । वाजस्य । श्रुत्यस्य । राजसि । सः । नः ।
मृळ । महान् । असि ॥ १२ ॥
(४३४) ऊर्ध्व ऊषुणं ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य
सनितायदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥
(प०) ऊर्ध्वः । ऊँइति । सु । नः । ऊतये । तिष्ठ । देवः । न ।
सविता। ऊर्ध्वः । वाजस्य । सनिता । यत् । अञ्जिऽभिः ।
वाघत्ऽभिः । विऽह्वयामहे ॥ १३ ॥
(४३५) ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह । कृधीन
ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ १४ ॥
(प०) ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुना । विश्वम् । सम् ।
अत्रिणम् । दह । कृधि । नः । ऊर्ध्वान् । चरथाय । जीवसे ।
विदाः । देवेषु । नः । दुवः ॥ १४ ॥
(४३६) पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः । पाहिरीषत उत वा
जिघांसतो बृहद्भानो यविष्ठ्य ॥ १५, १० ॥

(ऋक्संहिता पदपाठसहिता)

(प०) पाहि । नः । अग्ने । रक्षसः । पाहि । धूर्तेः । अराव्णः । पाहि । रिषतः । उत । वा । जिघांसतः । बृहद्भानो इति बृहत्ऽभानो । यविष्ठ्य ॥ १५, १० ॥

## ऋग्भाष्यम्

यं सुतो मे समीधेग्निं मेध्यातिथिऋतादधि । उक्त्वा सत्यां वेदवाचं देयान्यन्नानि तस्यहि । तं प्रतीमा ऋचः सर्वाः प्रकाशाद्वर्धयाम तम् । इन्धनं तु हरेर्नान्यत्कचिदस्ति प्रकाशनात् ॥ ११ ॥ वित्तानि पूरयास्माकं देवेष्वप्याप्यमस्तिते । यज्ञभागादि-पूज्यत्वात्स्वधावः सुखवर्धकः । श्रुत्यवाजो यज्ञभागो राजा भवसि तस्यहि ॥ १२ ॥ अस्मद्रक्षाकृते नित्यं सूद्यतो भव विष्णुवत् । विष्णुश्चेत्स्वात्मदृष्टान्तो नोन्नदाता तथोद्यमी । यत्स्तुवद्भिर्द्विजैर्युक्ताः स्नेहैस्त्वां विह्वयामहे ॥ १३ ॥ ज्ञानेन पाहि नितरामुद्यम्युच्चगुणोपिनः । असुरा अत्रयः प्रोक्ता मार्गत्रयविवर्जिताः । स्वर्गापवर्गमानुष्यं त्यक्त्वा यान्ति तमोहि ते । अदन्तीत्यथ रक्षांसि वा त्रयोधिकभ-क्षणात् । भोगाय जीवनायापि स्वलोकचरणायच । उत्तमान्कुरु नो नित्यं दोहनानि च लम्भय । देवेभ्योखिलकाम्यानि सदा नोतिमहांति च ॥ १४ ॥ अरं छिद्रं प्रापयतीत्यरावा पापपूरुषः । धूत्कृतेस्तस्य नो रक्ष नश्यतोस्मद्वधायच । यवीयस्सु स्थितत्वेन यविष्ठ्यो हरिरुच्यते । ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एव यत् । अग्निर्यविष्ठ्य इत्युक्तो यदाधिक्यार्थतोधिकम् ॥ १५, १० ॥

## ऋग्भाष्यटीका

यमग्निम् । यं सुतः । यमग्निम् । कण्वः पितापुत्रयोरभेदोपचारात् कण्वस्य मे सुतो मेध्यातिथिर्मे-धातिथिः । ऋतात् यथार्थाद्वेदात् । ल्यब्लोपनिमित्तापञ्चमी । सत्यां वेदवाचमुक्त्वा अनूच्य (व्याख्याय) अधि ईधे समीधे दीपितवान् । तस्य तस्मा अग्नये । इषोन्नानि । प्रदीदियुः अस्माभिरपि प्रदेयानि हि । ददातेः कर्मणि लिङ् । अलाक्षणिकं छान्दसं द्रष्टव्यम् । किञ्च । तमग्निं प्रत्येवेमाः सर्वा ऋचः प्रवर्तनीयाः । ततश्च तमग्निं वयं वर्धयामसि वर्धयाम । कथं वर्धनं प्रकाशात् । तथा च तदीयां पूर्णतां प्रकाशयामेति । ईध इत्यनेन दीप्तिरहितस्य तदुत्पादनमुच्यते इत्यन्यथाप्रतीतिनिरासायाह । इन्धनं त्विति । प्रकाशनात् । प्रज्ञापनात् ॥ ११ ॥

रायः । वित्तानि । हे अग्ने यस्य ते तव । देवेष्वप्याप्यं प्राप्यमस्ति । कुत इत्यत उक्तस्य हीत्यस्यार्थो यज्ञेति । यश्च त्वम् । स्वधावः सुखवर्धकः । सुखवाचिनि द्वितीयांते स्वधाशब्दे उपपदेऽन्त-र्णीतण्यर्थाद्वर्धतेर्डः । सत्वमस्माकं रायो वित्तानि । पूर्धि पूरय पूर्णानि कुरु । सुखवर्धकः स्वधावरिति सम्बोध्यत इति वा । तथात्वेविच् । यश्च त्वं श्रुत्यस्य वाजस्य राजा भवति । अस्य तात्पर्यं श्रुत्येति । श्रुतिसम्बन्धित्वात् श्रुत्यं वाजोन्नं यज्ञभाग इति यावत् । तस्मादग्निरेवमुच्यत इति शेषः । महांश्चासि । सत्वं नोस्मान्मृळ मृळय सुखय रक्ष वा ॥ १२ ॥

ऊर्ध्वः । अस्मत् । यस्त्वम् । वाजस्यान्नस्य । सनिता सनयिता । नोस्मभ्यमन्नदाता । तथोर्ध्व उत्थित उद्यमीसन् । ऊतये अस्मद्रक्षाकृते । सविता देवो न विष्णुवत् सु ऊर्ध्वस्तिष्ठ सूद्यतो भव । ऊशब्दार्थो नित्यमिति । नन्वत्र यदा प्रार्थ्यो विष्णुस्तदा कथं सविता नेति व्याख्येयमित्यत आह ॥ विष्णुश्चेदिति ॥ कुतः यद्यस्माद्वाघद्भिः वदद्भिःस्तुवद्भिर्द्विजैः ऋत्विग्भिर्युक्ता वयं त्वामंजिभिः अञ्ज सङ्गे भावे इकारः सङ्गैः स्नेहैर्भक्तिभिर्विह्वयामहे । तस्मात् ॥ १३ ॥

ऊर्ध्वोनः । ज्ञानेन । ऊर्ध्व उद्यमी उच्चगुणोपि त्वम् । नोस्मान्केतुना ज्ञानेन ज्ञानं दत्वेति यावत् । अंहसः पापात् नि नितरां पाहि । तदर्थं च विश्वमत्रिणं सन्दह । अत्रिशब्दार्थमाह ॥ असुरा इति । अर्थान्तरं चाह ॥ अदन्तीति । अथवा रक्षांस्यत्रयः कस्मात् अदन्तीति । अदनं सर्वसाधारणमित्यत उक्तम् । अधिकेति । अदभक्षणे अस्मादिनिप्रत्ययो रुगागमश्चत्वं च । इकारोप्येवं प्रत्ययो भवतीत्यत्रय इत्युक्तम् । तथा च श्रुतिरत्रिर्हवैनामैतद्यदत्तिरितीति । किंच नो अस्मांश्चरथाय चरणाय । चर गतिभक्षणयोः । भक्षणाय भोगाय गतये च । स्वलोकं त्वदीयलोकं प्रति चरणाय च । जीवसे जीवनायापि । ऊर्ध्वानुत्तमान्कृधि नित्यं कुरु । भोगादिविषयेऽस्मानुत्तमान्कुर्विति । किंच । देवेषु देवेभ्यः । दुवो दोहनानि च । नोस्मान्विदाः पञ्चमो लकारः । सदालम्भय । दोहनानि दर्शयति । अतिमहांत्येवाखिलकाम्यानीति ॥ १४ ॥

पाहि । अरम् । हे बृहद्भानो यविष्ठ्याग्ने । नोस्मान्रक्षसो राक्षसात्पाहि । अरं छिद्रं दुःखादिदोष-मन्यान्प्रापयतीत्यरावा पापपूरुषः । अरशब्दोपपदादाङ्पूर्वादन्तर्णीतण्यर्थाद्वातेरन्प्रत्ययः । तस्याराव्णो । धूर्तेर्धूर्त्कृतेर्हिंसारूपाद्वचनान्नः पाहि रक्ष । तथा रिषतो नश्यतः हिंसार्थत्वात् दुष्टात्पाहि । उत वाऽन्यच्च जिघांसतः अस्मद्वधाय अस्मद्धननाय प्रवर्तमानाच्च नः पाहीति । यविष्ठ्य शब्दं विष्णावग्नौ च क्रमेण व्याचष्टे ॥ यवीयःस्विति । यविष्ठशब्दाद्भवार्थे भवे छन्दसीति यत् । अग्निश्च ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एवेत्यतो यविष्ठ्य इत्युक्तः । कथमेतल्लभ्यत इत्यत आह ॥ यदिति । यस्मादाधिक्यार्थेधिकशब्दरूपं भवति आधिक्येधिकमिति स्मरणात् । अतो यविष्ठशब्दात्परो यशब्दस्तमवर्थ इति ॥१५, १०॥

## मन्त्रार्थमञ्जरी

यम् अग्निम् । कण्वः, पितापुत्रयोरभेदोपचारात्कण्वस्य मे सुतः । मेध्यातिथिः । ऋतात्, यथार्थात्, वेदात् ल्यब्लोपनिमित्ता पञ्चमी, सत्यां वेदवाचमनूच्य । अधि ईधे, दीपितवान् । तस्य, तस्मै, अग्नये । इषः, अन्नानि । प्र दीदियुः, अस्माभिरपि प्रदेयानि हि, ददातेः कर्मणि लिट्, धातोरित्त्वम्, युस्प्रत्ययश्छान्दसः । किं च, तम् (अग्निम्) (प्रत्येव) इमाः (सर्वाः) ऋचः (प्रवर्तनीयाः) ततश्च तम् अग्निम् (वयम्) वर्धयामसि, वर्धयामः, तदीयपूर्णतां प्रकाशयाम (मः) इति ॥ ११ ॥

(हे) अग्ने । (यस्य) ते, तव । देवेषु । आप्यम्, प्राप्यम् । अस्ति (हि) (यश्च) त्वम् । स्वधावः, सुखवर्धकः, सुखवाचिनि द्वितीयान्ते स्वधाशब्द उपपदेऽन्तर्णीतण्यर्थाद्वर्धतेर्डः । (सः) त्वम् । (अस्माकम्) । रायः, वित्तानि । पूर्धि, पूरय, पूर्णानि कुरु । (यश्च) त्वम् । श्रुत्यस्य, श्रुतिसम्बन्धिनः । वाजस्य, अन्नस्य, यज्ञभागस्येति यावत् । राजसि, राजासि, यज्ञभागेन पूज्यत्वात् 'राजसि' इत्युच्यते । सः त्वम् । नः, अस्मान् । (मृळ) मृळय, (मृडय) सुखय रक्षवा । (यश्च) त्वम् । महान् असि । 'सः, नः, मृळ' इति पूर्वेणान्वयः ॥ १२ ॥

(यः) त्वम् । (नः), अस्मभ्यम् । वाजस्य, अन्नस्य । सनिता, सनयिता, 'षणु दाने', अन्नदाता । तथा– ऊर्ध्वः, उत्थितः । उद्यमी । (सः) (त्वम्) । नः ऊतये, अस्मद्रक्षाकृते । सविता देवः न, सविता देवो यथा, विष्णुवत् । ऊर्ध्वः (सु) तिष्ठ, सूद्यतो भव (उ) विष्णुपक्षे स्वात्मदृष्टान्तः । कुतः ? (यत्) यस्मात् । वाघद्भिः, वदद्भिः, द्विजैः, ऋत्विग्भिः । (युक्ता वयं त्वाम्) अञ्जिभिः, 'अन्जू सङ्गे', इकारप्रत्ययः, सङ्गैः, स्नेहैः, भक्तिभिः । विह्वयामहे, आह्वयामः । (तस्मात्) इति ॥ १३ ॥

(ऊर्ध्वः) उद्यमी, उच्चगुणः । (अपि त्वम्) नः, अस्मान् । केतुना, ज्ञानेन, ज्ञानं दत्त्वेति यावत् । अहसः, पापात् । नि, नितराम् । पाहि । तदर्थम्– विष्णुम् । अत्रिणम् । सम् दह, भस्मसात्कुरु । स्वर्गापवर्गमानुषरूपमार्गत्रयहीनत्वादसुरोऽत्रिन्शब्दार्थः, अदन्त्यधिकमिति रक्षोवात्रिन्शब्दार्थः, 'अद भक्षणे' अस्मादि(नि)न्प्रत्ययो रिगागमश्चत्वं च । किं च, नः, अस्मान् । चरथाय, चरणाय, 'चर गतिभक्षणयोः' भक्षणाय, भोगाय च, स्वलोकं त्वदीयलोकं प्रति चरणाय च । (जीवसे) जीवनाय । (अपि) ऊर्ध्वान् उत्तमान् । कृधि, नित्यं कुरु, भोगादिविषयेऽस्मानुत्तमान्कुरु इति । किं च, देवेषु, देवेभ्यः । दुवः (च) दोहनानि च, दुहेः डुप्रत्ययः । नः, अस्मान् । विदाः, लेट्, सिप आडागमः सदा लम्भय ॥ १४ ॥

(मन्त्रार्थमञ्जरी)

(हे) बृहद्भानो यविष्ठय, प्राक् व्याख्यातमिदं पदम्। अग्ने। नः, अस्मान्। रक्षसः, राक्षसात्। पाहि। अराव्णः, अरं छिद्रं दोषमन्यान् (आवाति) प्रापयतीत्यरावा पापपूरुषः, अरशब्दोपपदादाङ् पूर्वादन्तर्णीतण्यर्थाद्वातेः ड(नि)न्प्रत्ययः, तस्याराव्णः। धूर्तेः, धूत्कृतेः, हिंसारूपाद्वचनात्। (नः) पाहि, रक्ष। तथा– रिषतः, नश्यतः, नाशकात्, हिंसार्थत्वात्– दुष्टात्। पाहि। उत वा, अन्यच्च। जिघांसतः, अस्मद्धननाय प्रवर्तमानात् (च) (नः पाहि) इति॥ १५॥ इति दशमो वर्गः॥ १०॥

## रूपावतारः

यमाग्निम्॥ अभेदोपचारादिति। कण्वो मेध्यातिथिरिति समानाधिकरण्यलब्धाभेदोपचारादित्यर्थः। ननु ददातेः कर्मणि लिटि कथं दीदियुरिति रूपमित्यत आह। अलाक्षणिकमिति। अभ्यासाकारस्य ई(इ)कारः धात्वाकारस्येयादेशः परस्मैपदं च छान्दसमिति भावः। वर्धयामसीति। ''इदंतोमसि'' (७।१।४६) इति मस्प्रत्ययस्येकारान्तत्वे वर्धयामसीति रूपम्॥ ११॥

रायः॥ पूर्धीति। पृधातोर्विकारणस्य लोपे हेर्धित्वे 'उदोष्ठ्यपूर्वस्य' (७।१।१०२) इति ऋकारास्योत्वे रपरत्वे 'हलि च' (७।२।७७) इति दीर्घे पूर्धीति रूपम्। तथात्वे विजिति। वर्धतेर्विचि तस्य सर्वस्य लोपे उपधागुणे रपरत्वे छान्दसत्वेन 'रात्सस्य'। (८।२।२४) इति नियममनाश्रित्य संयोगान्तलोपे रेफस्य विसर्गे स्वधावरिति रूपम्। ननु राजसीत्यस्य राजा भवसीति व्याख्यानं युक्तं राजा भवतीति व्याख्यानं कथमित्यत आह। अस्य तात्पर्यमिति॥ १२॥

ऊर्ध्वः॥ अन्नस्य सनितेति। इतःपरं टीकायां श्रूयमाणं सनयितेति पदं प्रक्षिप्तम्। अवश्यं चैतदेवं विज्ञेयम्। भाष्ये वाजस्य सनितेत्यस्यान्नदातेत्यर्थस्योक्तत्वेन सनयितेति णिजन्तप्रतिपदोक्त्ययोगात्। न सवितेत्यत्र नशब्दार्थमाह यथेति। नशब्द इवार्थ इति भावः। न सवितेति वाक्यार्थमाह। विष्णुवदिति। वाघद्भिरिति। वदेः शतरि भिसि धात्वकारस्य दीर्घे दकारस्य घत्वे वाघद्भिरिति छान्दसं रूपम्॥ १३॥

उध्वोनः॥ अत्रिणामिति श्रौतं रूपं साधयति। अस्मादिनीति। भाष्यगतमत्रय इति इकारान्तरूपं साधयति। इकारोप्येवमिति। अदेरिनिप्रत्ययवत् इकारोऽपि प्रत्ययो भवतीति भावः। चरथायेति। चरेः थप्रत्यये चतुर्थ्यैकवचने चरथायेति रूपम्। विदा इति। विदेर्लेटि तस्य सिपि आडागमे तुदादित्वाच्छप्रत्यये गुणाभावे आगमशासनस्यानित्यत्वान्नुमभावे विदा इति रूपम्॥१४॥

पाहि ॥ अन्प्रत्यय इति । कनिन् प्रत्यय इत्यर्थः । तेनाकारलोपो नकारस्य लोपश्च सिध्यति ॥ १५ ॥ १० ॥

## पदार्थप्रकाशिका

यमग्निं मेध्यातिथिः । ननु मेध्यातिथेः कण्वपुत्रत्वेन कण्वो मेध्यातिथिरिति कथं कण्वाभेदोक्तिरित्यत आह पितापुत्रयोरभेदोपचारादिति । आत्मा वै पुत्रनामासीति श्रुतेः पितृदेहांशानां पुत्रदेहोपादानत्वेनाभेदोपचारादित्यर्थः । ल्यब्लोपेति । ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वाच्या । प्रासादात्प्रेक्षते आसनात्प्रेक्षत इत्युदाहरणम् । प्रसादमारुह्य आसने उपविश्य प्रेक्षत इति तदर्थः । सत्यामिति । फलाव्यभिचरितार्थप्रतिपादकामित्यर्थः । भाष्ये उक्तेत्युक्तत्वेपि ल्यब्लोपेत्युक्तविवरणार्थं अनूच्येत्युक्तमित्यवगन्तव्यम् । अधीत्यस्यार्थः समिति । दीपितवानिति । इन्धी दीप्ताविति धातोः फूत्कारादिना दीप्तियुक्तं कृतवानित्यर्थः । कर्मणि लिङिति । अत एव प्रदेयानीत्युक्तमिति द्रष्टव्यम् । लिङादेवाभ्यासो जातोऽस्तीति भावः । तथा च प्रोपपदात् दा दानेऽस्मात्कर्मणि लिटि तस्य परस्मैपदिनि बहुवचने उस् इत्यादेशे धातोरभ्यासे । दादा उस् इति जाते अभ्यस्तधात्वाकारस्य ईकारो दीदा उस् इति जाते धात्वाकारस्येयङादेशे अङ् इत्यस्य लोपे दीदिय् उस् इति जाते सस्य रुत्वे विसर्गे च सति प्रदीदियुरिति भवति । इदमनुपपन्नम् । तथाहि भावकर्मणोरिति सूत्रेण भावे कर्मणि चात्मनेपदं विहितम् । भावे-सुप्यते भवता । ग्लायते भवता । आस्यते भवता । कर्मणि-क्रियते घटः ह्रीयते भारः इत्याद्युदाहृतम् । एवं च प्रकृते कर्मणि लिटो विवक्षितत्वेनात्मनेपदं स्यात् । तथाच बभूविर इतिवत् ददिरे इति स्यात् । तथाच कर्मणि कथं परस्मैपदत्वम् । लिटो भूतार्थत्वात्प्रदेयानीति भविष्यदर्थकत्वं च कथमित्यत आह अलाक्षणिकं छान्दसं द्रष्टव्यमिति । दीदियुरिति लक्षणाप्राप्तं रूपं छान्दसं द्रष्टव्यमित्यर्थः । तथाहि । अभ्यस्तस्य दा इत्यत्रत्यस्य आकारस्य ईकारश्छान्दसः । कर्मणि आत्मनेपदस्य विहितत्वात्परस्मैपदित्वं छान्दसम् । लिटः परस्मैपदिनि बहुवचने उस् इत्यादेशस्य प्राप्तेरेवाभावेन सोपि छांदसः । अचि श्नुधात्विति सूत्रेण धातोरिकारस्यैव इयङादेशविधानेन धातोः अकारस्य इयङादेशविधानाभावात् प्रकृते च इकाराभावेन धात्वाकारस्येयङादेशोपि छान्दसः । लिटोऽभविष्यदर्थकत्वविधानाद्भविष्यदर्थकत्वं च छान्दसं सूत्राविहितत्वादिति भावः । प्रवर्तनीयाः प्रतिपादकतया प्रयोक्तव्याः । ततश्चेति । ताभ्यः सर्वाभ्यो ऋग्भ्य इत्यर्थः । प्रकाशयामेति । तदीयां गुणपूर्णतां तत्प्रतिपादकग्व्याख्यानादिना शिष्यादिजनेषु प्रकाशयाम इत्यर्थः । तदुत्पादनम् । अन्यथाप्रतीतीति । प्रसिद्धाग्निपक्षे फूत्कारादिना दीप्त्युत्पादनसम्भवाद्भगवत्पक्षेऽप्येवमेवेत्यन्वय

(पदार्थप्रकाशिका)

प्रतीतिनिरासायेत्यर्थः । प्रज्ञापनादिति । तथाच वेदवाचमनूच्य तया वेदवाचा अग्निं विष्णुं समीधे दीपितवान् प्रकाशितवान् शिष्येभ्यः प्रज्ञापितवानित्येवं भगवत्पक्षेऽर्थो द्रष्टव्यः ।। ११ ।।

रायस्पूर्धि स्वधावः । देवेषु देवेभ्यः । तथाच यज्ञभागादिपूज्यत्वादिति भाष्यस्य देवकृतयज्ञभागादिपूज्यत्वाद्देवेभ्योप्याप्यं हविरादिकं गृहीत्वाऽस्तीत्यर्थो द्रष्टव्यः । स्वधावशब्द अकारान्त इत्यभिप्रेत्य तत्साधनप्रकारं दर्शयति सुखवाचिनीत्यादिना । अत एव वर्ध इति णिजर्थो दर्शित इति ध्येयम् । वर्धतेर्ड इति । तथाच द्वितीयान्ते सुखवाचिनि स्वधाशब्दे उपपदे वृधुवर्धनेऽस्मादंतर्णीतण्यर्थाड्डप्रत्यये डित्वाट्टीभूतस्य ऋधु इत्यस्य लोपे प्रत्ययाकारसम्बन्धे च सति स्वधावेत्यकारान्तप्रातिपदिकसिद्धिः । पश्चात्स्वाद्युत्पत्तौ स्वधाव इति भवतीत्यर्थः । स्वधावः सुखवर्धक इति । भाष्यस्वारस्यानुरोधेन वधेर्डप्रत्ययं व्युत्पाद्य अकारांतशब्दत्वाङ्गीकारे ऋचि रायस्पूर्धि स्वाधावोस्तिहिते देवेष्वित्यत्र सम्बुध्यंतत्वं विरुध्यते । न च ऋच्यपि तत्पदं सम्बुध्यतमेवं न भवति किंत्वकारमेवेति वाच्यम् । तथात्वे यश्च त्वमित्याद्यध्याहार प्रसङ्गात् इत्यस्वरसात्स्वधावरित्येतत् स्वधावस् शब्दस्य संबुध्यन्तमित्यभिप्रेत्य व्याचष्टे । सुखवर्धकः स्वधावरिति सम्बोध्यत इति वेति । यः सुखवर्धकः स स्वधावरिति सम्बोध्यते अग्निश्च तादृश इति युक्तं स्वधावारिति सम्बोधनमिति भावः । तथात्वे सम्बुध्यन्तत्वे । उस् इति । स्वधाशब्द उपपदे वृधु धातोर्डस् प्रत्यये डित्वाट्टीभूतस्य ऋधु इत्यस्य लोपे स्वधावस् इति सकारान्तप्रातिपदिकसिद्धिः । तस्य सम्बुद्धौ सोर्लोपे सस्य रुत्वे विसर्गे च सति स्वधावरिति भवतीत्यर्थः । अन्ये तु तथात्वे विच् इति पाठमङ्गीकृत्य स्वधाशब्दोपपदात् वृधु धातोर्विच् प्रत्यये विचि परतो वृधेः गुणे तस्य रपरत्वे वर् धु इति जाते रात्सस्येति संयोगान्त धकारलोपे उपधादीर्घे स्वधावर् इति जाते रोर्विसर्गे स्वधावा इति शब्दस्तस्य सम्बुद्धिः स्वधावसित्याहुः । श्रुतिसम्बन्धित्वादिति । प्रतिपाद्यत्वेन तत्सम्बन्धित्वादित्यर्थः । तस्मादिति । यस्मादग्निः यज्ञभागस्य राजा भवति तस्मादेवम् । श्रुत्यस्य वाजस्य राजसीत्युच्यत इत्यर्थः । मृळ सुखन इति धातोः सुखयेत्युक्तम् । मृळीको रक्षकोथ वेति पूर्वं भगवत्पादैरुक्तत्वाद्रक्ष वेत्युक्तमिति मन्तव्यम् ।। १२ ।।

ऊर्ध्व ऊषुण ऊतये यस्त्वं सविता देवो न । सु ऊर्ध्वस्तिष्ठेति सम्बन्धः । सनयिता लम्भयिता प्रापयितेत्यर्थः । एतत्तात्पर्यकथनपरं भाष्यं संयोजयति नोस्मभ्यमन्नदातेति । वाजस्य सनितेत्यादि दृष्टान्तीभूतस्य सवितुर्विशेषणम् । अन्नदाता सविता देवो नेति सम्बन्धः । ऊर्ध्व इत्याद्यपि दृष्टान्तीभूतस्य सवितुरुक्तान्नदातृत्वविशेषणमित्यभिप्रेत्याह यथेत्यादि । सवितुरुक्तान्न

(पदार्थप्रकाशिका)

दातृत्वविशेषणसमुच्चयार्थस्तथाशब्दः। रक्षाकृतावस्थित इति शेषः। नेत्यनूद्य यथेति व्याख्यानम्। सविता देवो नेत्यस्यार्थो विष्णुवदिति। अयमधिकदृष्टान्तः। सु ऊर्ध्व इत्यस्यार्थः सूद्यत इति। तिष्ठेत्यस्यार्थो भवति। अन्नदानेऽस्मद्रक्षायां चेति शेषः। उशब्दार्थ इति। ऊर्ध्वः ऊ इति सु इति हि पदच्छेदः। कथमिति। स्वदृष्टान्तस्य कुत्राप्यदर्शनादिति भावः। आहेति। रामरावणयोर्युद्धं रामरावणयोरिवेत्यादिवचनेषु स्वात्मदृष्टान्तोपादानदर्शनेन प्रकृतेऽपि तदुपादानं युक्तमेवेत्याहेत्यर्थः। कुत इति। अस्मद्रक्षाकृते सूद्यतो भवेत्येतत्कुत इत्यर्थः। भवद्भिर्मदुद्योगसाधनीभूतादान स्याकरणादिति भावः। युक्ताः संहिताः। भावे इकार इति। अंजू सङ्गे अस्माद्भावे इकारप्रत्यये अञ्जीति रूपम्। भक्तिभिः। भक्तिपूर्वकमिति यावत्। विह्वयामहे। विशेषेणाकारयाम इत्यर्थः। तस्मादिति। सूद्यतो भवेति सम्बन्धः॥ १३॥

ऊर्ध्वो नः पाह्यंहसो निकेतुना। ऊर्ध्वशब्दस्यार्थान्तरमाह। उच्चगुणोपीति। न केवलमुद्यमी ऊर्ध्वः किन्तूच्चगुणोपीत्येवं पूर्वव्याख्यानसमुच्चयार्थोऽपि शब्दः। उन्नतेर्ह्यूर्ध्व उच्यत इति वचनेन उन्नतत्वापरपर्यायोच्चत्वस्योर्ध्वशब्दार्थत्वावगमात्। उच्चत्वं उत्कृष्टत्वम्। तच्च गुणेनेति ज्ञातव्यम्। तदर्थमिति। ज्ञानार्थमित्यर्थः। विश्वम् ज्ञानप्रतिबन्धकीभूतसर्वमित्यर्थः। अधिकेत्यनेनासाधारण्येन व्यपदेशा भवन्तीति न्यायः सूचितो भवतीति द्रष्टव्यम्। अस्मादिनिप्रत्यय इत्यादि। तथा च अद भक्षणेऽस्मादिनिप्रत्यये नकारस्थेकारलोपे यस्येति चेति भसंज्ञकस्य दकारस्थाकारस्य लोपे रुक् इत्यागमे कित्वाद्धातोरन्ते जाते उक्इत्यस्य लोपे अद्र् इन् इति स्थिते दकारस्य तकाररूपे चर्त्वे च सति अत्र् इन् अत्रिन् इति नकारान्तप्रातिपदिकसिद्धिः। पश्चत्स्वाद्युत्पत्तौ अत्रिणमिति भवतीति भावः। नन्वेवमत्रिन्शब्दस्य नकारांतत्वाद्भाष्ये 'असुरा अत्रिणः प्रोक्ता' इति वक्तव्यं अत्रय इति इकारान्तात्रिशब्दः कथं व्यवहृत इत्यत आह इकारोप्येवमिति। अदधातोरिनिप्रत्ययवदिकारप्रत्ययेऽपि सति पूर्ववद्रुगागमे चर्त्वे च सति अत्री तीकारान्तप्रातिपदिकसिद्धिः। पश्चात्स्वाद्युत्पत्तौ अत्रय इति भवतीति भाष्ये नानुपपत्तिरिति भावः। इकारप्रत्ययमङ्गीकृत्य अत्रीतीकारान्तः शब्दो युक्त इत्यत्र श्रुतिसंवादमाह तथाच श्रुतिरिति। यदि इनि प्रत्ययान्त एवात्रिशब्दः स्यात्तदा अत्री ह वै नामेति वक्तव्यं स्यादिति भावः। अत्रिर्ह वै अत्रिरिति नाम हरेरतिप्रसिद्धं यद्यस्मादत्रिरदनकर्तेति श्रुत्यर्थः। अनेनात्तृत्वं अत्रिशब्दप्रवृत्तिनिमित्तमित्यपि प्रमापितं भवतीत्यवगन्तव्यम्। भक्षणायेत्यस्य विवरणं भोगायेति। गतये ज्ञानाय। चरणायेत्यस्य भक्षणगतिरूपार्थद्वयमुक्त्वा स्वलोकेत्यंशेनार्थान्तरं सूचितमित्याशयेनाह स्वलोकमिति। स्वशब्देन इत्युक्ताः प्रार्थयितार आयास्यन्तीत्यतो व्याचष्टे

(पदार्थप्रकाशिका)

त्वदीयलोकं वैकुण्ठादिकं प्रतीति। तत्र संचरणायेत्यर्थः। चतुर्थीनां तात्पर्यमाह भोगादिविषय इति। भोगविषये ज्ञानविषये त्वदीयलोके संचरणविषये जीवनविषये चास्मान् इतरप्राणिभ्य अतिशयितान् कुर्वित्यर्थः। देवेभ्य इति। देवान् प्रेरयित्वेति यावत्। पञ्चमो लकार इति लेडित्यर्थः। तथाच विद् लाभे अस्माल्लेटि तस्य सिप् इत्यादेशे इप् इत्यस्य लोपे लेटोडाटौ इति सूत्रेण अडागमे टित्वादादौ जाते टकारलोपे विद् आस् इति जाते सस्य रुत्वे विसर्गे च सति विद् आः विदाः इति लेटि रूपमिति भावः। लंभय प्रापय। देवा यथास्माकं काम्यानि दद्युस्तथा कुर्वित्याशयः। दोहनानि दोहनशब्दाभिधेयानि। अतीत्यादि। दोहनशब्दाभिधेयानां अतिमहांतीति अखिलेति च विशेषसंकोचेन प्रार्थने कारणाभावाभिप्रायेण भाष्यकारैर्दत्तमित्यवगन्तव्यम्॥ १४॥

पाहिनो अग्ने रक्षसः। अराव्णोधूर्तेः रिषतो जिघांसत इत्येतेषामर्थभेदं दर्शयन् ऋचं भाष्यानुसारेण व्याख्याति हे बृहद्भानवित्यादिना। बृहन्तो भानवो रश्मयो यस्यासौ बृहद्भानुस्तस्य संबुद्धिर्बृहद्भानवितीत्यर्थः। राक्षसात् तत्कृतोपद्रवात्। अन्यान् स्वव्यतिरिक्तान् सज्जनान्। वा गतिगन्धनयोरिति धातोररं वाययति गमयतीति व्युत्पत्तिं अभिप्रेत्याह प्रापयतीति। अरशब्दोपपदादित्यादि। तथाच अरशब्दोपपदात् आङ् पूर्वकाच्च वागतिगन्धनयोरिति धातोः अन् प्रत्यये धात्वाकारस्य लोपे पररूपत्वे वा सति अरावन् इति प्रातिपदिकसिद्धिः। पश्चात्स्वाद्युत्पत्तौ अराव्ण इति षष्ठेकवचनं भवतीति भावः। हिंसारूपादिति। हिंसारूपाद्वचनात् परुषवचनादित्यर्थः। नः पाहीति। तानि यथास्माकं खेदकराणि न स्युस्तथा कृत्वा पाहीति भावः। रिषत इति ऋक्पदमनूद्य नश्यत इति भाष्यपदं संयोजितम्।

ननु रुषरिषहिंसायामिति धातोर्हिंसार्थकस्य रिषत इत्यस्य नश् अदर्शन इति धातुनिष्पन्नेनादर्शनार्थकेन नश्यत इति पदेन कथं व्याख्यानं कृतमित्यत आह हिंसार्थत्वादिति। धातूनां अनेकार्थत्वेन नश्धातोरपि हिंसार्थत्वात् नश्यत इत्यनेन रिषत इत्यस्य व्याख्यानं युक्तमित्यर्थः। तथाच रिषतो नश्यतः इत्यर्थो द्रष्टव्यः। तस्य तात्पर्यार्थो दुष्टादिति। हिंसाद्युपलक्षितक्रोधादिसमस्तदोषयुक्तात्पुरुषात्पाहीत्यर्थः। जिघांसत इति ऋक्पदमनूद्यास्म-द्वधायेतिभाष्यपदं संयोज्य हननायेति तत् व्याख्याय प्रवर्तमानादिति शेषः पूरित इति द्रष्टव्यम्। हननस्याद्यत्वमद्यकार्यत्वेनेति द्रष्टव्यम्। भवार्थे स्थित इत्यर्थे। भवे छन्दसीति। तत्र भव इत्यर्थे छन्दसि यत्प्रत्ययो भवतीति सूत्रार्थः। तथाच यविष्टशब्दात्तत्र भव इत्यर्थे तद्धिते यत्प्रत्यये 'यस्येति चे' ति भसंज्ञकस्य छकारस्थाकारस्य लोपे यविष्टचेति रूपमित्यर्थः। यविष्ठतम एवेति। अतिशयेन

(पदार्थप्रकाशिका)

नीच एवेत्यर्थः । अग्निर्वै देवानामवम इति श्रुतेरिति भावः । कथमेतल्लभ्यत इति । यविष्ठ्यशब्देन यविष्ठतम इत्यर्थः कथं लभ्यत इत्यर्थः । यदित्यभिप्रेत्याधिक्यार्थे इत्युक्तमिति द्रष्टव्यम् । तमबर्थः अतिशयार्थः । अतिशायनेतमबिष्टनाविति स्मरणादिति भावः ॥ १५, १० ॥

## पदार्थदीपिका

कण्वस्य मे सुत इति । कण्वमेधातिथ्योर्भिन्नत्वात् कण्वःमेधातिथिरिति अभेदार्थकसामानाधिकरण्यमुपपन्नमिति भावेन भाष्ये कण्वस्य मे सुतमित्युक्तमिति भावः । कथं तर्हि श्रुतौ कण्वमेधातिथिरित्युक्त इत्यत उक्तं पितापुत्रयोरभेदोपचारादिति । तथा चाभेदोपचारेणेयभेदोक्तिः । न तु मुखत इति भावः । ईध इति । इन्धी दीप्तौ । इन्धिभवतिभ्यांचेति लिटः कित्वादनिदितामिति नकारलोपः । द्विर्भावहलादिशेषयोः सवर्णदीर्घ इति भावः । ननु सदादेःकर्मणि लिटि ददिर इति प्रथमपुरुषबहुवचनेन भवितव्यम् । तत्कथं प्रदीदियुरिति । दा इत्यस्मात् लिड्बहुवचने झौ सति झेर्जुसि दा इत्यस्येत्वे द्विर्भावे यङि सति हि तथा स्यात् । न च तत्सम्भवति । कर्मणि आत्मने पदस्य विधानात् परस्मै पदादेशस्योसोऽसम्भवात् । धातोरिकारस्यैवेयङ् विधानादधात्विकारस्येयङोऽसम्भवात् । दा इत्यस्येत्वविधायकाभावेनेत्वानुपपत्तेश्चेत्यत आह । अलाक्षणिकमिति । कर्मणि परस्मैपदादिकं लक्षणाप्राप्तमपि छान्दसत्वात् जातम् । छन्दसि सर्वे विधयो विकल्पन्त इति वचनादिति भावः । वर्धयामसीति । इदन्तो मसिरिति मस इकारागम इति भावः ॥ ११ ॥

आप्यमिति । अदुपधत्वाभावेऽपि व्यत्ययेन योरुपधादिति कर्मणि यदिति भावः । अन्तर्णीतेति । स्वधां वर्धयतीति तथोक्त इत्यर्थः । ड इति । डित्वाट्टिलोप इति भावः । पूर्धीति । पॄ पालनपूरणयोः श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिरादेशः । बहुलं छन्दसीति शपो लुक् । हेरपित्वेन ङित्वात् गुणाभावे उदोष्ठ्यपूर्वस्येत्युत्वं । हलि चेति दीर्घ इति भावः । उसिति । सम्बुद्धौ मतुवसोरिति रुत्वमिति भावः। श्रुत्यस्येति । श्रु श्रवणे औणादिकःक्यप् । तुगागम इति भावः । यद्वा श्रुतिशब्दाद्भावे छन्दसीति यदिति द्रष्टव्यम् । मृडेति । मृड सुखने । शस्य ङित्वेन लघूपधगुणाभाव इति ज्ञेयम् ॥ १२ ॥

सनितेति । षणु दाने । लुटि तासिः । वलादिलक्षणेट् । तिपो डादेशः । टिलोपश्चेति भावः । ऊतय इति । अवतेःक्तिनि ज्वरत्वरेत्यादिनोठिति भावः । तिष्ठेति । शपि पाघ्रेत्यादिना तिष्ठादेशः । द्व्यचोचस्तिङ इति संहितायां दीर्घ इति भावः । इकार इति । हनिकषिकसि आङित्यादिना इकार इत्यर्थः । ह्वयामह इति । निसमुपविभ्यो ह्व इत्यकर्त्रभिप्रायेऽप्यात्मनेपदमिति ज्ञेयम् ॥ १३ ॥

(पदार्थदीपिका)

चरथायेति । चरतेरौणादिको भावे ह्यप्रत्यय इति भावः । जीवस इति । जीव प्राणधारणे । तुमर्थे सेसेनित्यसेन्प्रत्यय इति भावः । ऊर्ध्वानिति। उभयथर्क्ष्विति कविधानात् । नश्छव्यप्रशानिति नस्य रुत्वाभाव इति ध्येयम् । कृधीति । श्रुशृणुपृकृविभ्यश्छन्दसीति हेर्धिरादेशः । बहुलं छन्दसीति विकरणस्य लुक् । अन्येषामपि दृश्यत इति संहितायां दीर्घः । पञ्चमो लकार इति । विद्लृ लाभ अस्मात् अन्तर्भावितण्यर्थात् लेटि सिपि लेटोडाटावित्याडागमः । तुदादित्वाच्छः । शेमुचादीनामिति नुम् न भवति । अनित्यमागमशासनमिति वचनेन तस्यानित्यत्वात् । इतश्च लोप इतीकार लोप इति भावः ।। १४ ।।

धूर्तेरिति । धूर्वी हिंसार्थः । क्तिच्क्तौ च संज्ञायामिति कर्तरि क्तिच् । तितुत्रेत्यादिना इट् प्रतिषेधः । राल्लोप इति वकारलोपः । हलि चेति दीर्घत्वमिति भावः । रिषत इति । रिष हिंसायां । लटः शतृ । बहुलं छन्दसीति शपो लुगिति भावः । ननु हिंसार्थकस्य रिषत इत्यस्य नश्यत इति कथं व्याख्यानमित्यत आह । हिंसार्थत्वादिति । नश् धातोरपि हिंसार्थकत्वात्तथा व्याख्यानं युक्तमिति भावः । जिघांसत इति । हन्तेरिच्छार्थे सनि अज्झनगमां सनि इत्युपधादीर्घत्वम् । अभ्यासाच्चेति अभ्यासादुत्तर पदस्य घत्वमिति भावः । यदिति । यस्येति चेत्यकारलोप इति भावः । कथमिति । तमबर्थस्य कथं लाभः तत्प्रातिपदिकाभावादिति प्रश्नार्थः ।। १५, १९ ।।

## टीकाविवृतिः

यमग्निम् ।। श्रुतौ कण्वमेध्यातिथिशब्दयोःसामानाधिकरण्योक्तिरुपचाराभि प्रायेत्याशयेन भाष्यं प्रवृत्तमिति भावेनाह ।। पितापुत्रयोरिति ।। यथार्थादिति ।। यथाभूतार्थप्रतिपादका त्प्रमाणभूतादित्यर्थः । ऋतादिति पञ्चम्याः वेदवाचमिति द्वितीयान्तत्वेन व्याख्यानं कथमित्यत आह ।। ल्यब्लोपेति ।। ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वाच्येत्युक्तेःकर्मणि पञ्चमीति भावः । तर्हि भाष्ये ल्यबन्ते वक्तव्ये उक्त्वेति क्त्वाप्रत्ययान्तोक्तिः कथमित्यत आह ।। उक्त्वा अनूच्येति ।। उक्त्वाशब्देनैतत्पर्यायोनूच्येति ल्यबन्तशब्दो लक्ष्यत इति भावः । ञि इन्धी दीप्तावित्यतो लिटि छान्दसत्वेनेजादेश्च गुरुमत इत्युक्ताम्प्रत्ययाभावात्तादेशस्य एशादेशे द्वित्वे सवर्णदीर्घे अनिदितामिति नलोप इति भावेनाह ।। समीधे दीपितवानिति ।। अधिशब्दस्यार्थःसंशब्देनोक्तः । ननु यदि दाधातोःकर्मणि भाष्ये देयानीत्युक्तिसामर्थ्याच्छकि लिङ्चेति शक्यार्थे लिङ् क्रियते तर्हि यकि घुमास्थेतीत्वे झस्य रन्नादेशे सीयुटि दीयेरन्निति स्यात्कथं परस्मैपदं द्वित्वमभ्यासह्रस्व-ताभावश्चेत्यत आह ।। अलाक्षणिकमिति ।। ततश्चेति ।। शिष्यान्प्रति ऋक्प्रवर्तनादित्यर्थः ।। तदुत्पादनमिति ।। दीप्त्युत्पादनमित्यर्थः ।। प्रज्ञापनादिति ।। शिष्यान्प्रतीति शेषः ।। ११ ।।

(टीकाविवृतिः)

रायस्पूर्धि ॥ देवेष्वपीति ॥ अपिशब्दो गन्धर्वादिसमुच्चयार्थः ॥ पूर्धीति ॥ क्र्यादिकात् पॄपालनपूरणयोरित्यतः शपो बहुलं छन्दसीति लुकि श्रुशृणुपॄकृभ्यश्छन्दसीति हेर्धित्वे उदोष्ठ्यपूर्वस्येत्युत्वे हलि चेति दीर्घ इति भावः । पूर्वं स्वधावःसुखवर्धक इति भाष्यस्वारस्याय यश्च त्वमित्यध्याहृतेनान्वयः प्रदर्शितः । अस्मिन्पक्षे श्रुतौ स्वधाव इत्यत्र आमन्त्रितसर्वानुदात्तत्वस्य छान्दसत्वाङ्गीकारप्रसंगात्तदेव भाष्यं पदांतराध्याहारेण योजयति ॥ संबोध्यत इति वेति ॥ सुखवर्धको विष्णुःस्वधाव इति पदेन संबोध्यत इत्यर्थः । इति संबोध्यत इति भाष्येऽध्याहार इत्याशयः ॥ तथात्वे विजिति ॥ स्वधाव इत्यस्य प्रथमाविभक्त्यन्तत्वपक्षे डप्रत्ययान्तत्वे-नाकारान्तत्वम् । संबुद्ध्यन्तत्वपक्षेतु अन्येभ्योपि दृश्यन्ते वृधेर्विच्युपधागुणे रपरत्वे च छान्दसत्वेन रात्सस्येति नियमाप्रवृत्तेःसंयोगान्तलोपे रेफस्य विसर्ग इति भावः ॥ श्रुतिसंबन्धित्वादितिं ॥ श्रुतिशब्दाद्भवार्थे भवे छन्दसीति यत्प्रत्यये यस्येतिचेति कारलोपे श्रुत्यमिति रूपमिति भावः । श्रुत्यवाज इत्यादिभाष्यस्यासङ्गतिपरिहाराय शेषं पूरयति ॥ तस्मादग्निरेवमिति ॥ यस्माद्यज्ञभागस्य राजा भवति तस्मादग्निस्त्वं श्रुत्यस्य वाजस्य राजसीत्युच्यते इत्यर्थः । मृळीको रक्षकोथवेति पूर्वभाष्यानुसारादाह ॥ रक्ष वेति ॥ १२ ॥

ऊर्ध्व ऊषु ॥ श्रुतौ सनितेत्यस्यान्तर्णीतण्यर्थत्वाश्रयेणाह ॥ सनिता सनयितेति ॥ षणु दान इति धातोस्तृन्प्रत्ययः । दापयितेत्यर्थः । इदानीं भाष्यानुसारादाह ॥ अन्नदातेति ॥ तथा च सनितेत्यस्य स्वयमन्नदाता अन्येन च दापयितेत्यर्थ इति भावः ॥ ऊर्ध्व उत्थित इति ॥ ऊर्ध्वःस्यादुत्थिते तुंग इति विश्वोक्तेः । कार्ये सदा उत्थितो ह्युद्योगवानित्युच्यते इत्याशयेन भाष्ये उद्यमीत्युक्तमिति भावः ॥ ऊशब्दार्थो नित्यमितीति ॥ ऊषुण इत्यत्र विद्यमान ऊशब्दार्थ इत्यर्थः ॥ कुत इति ॥ रक्षार्थं सूद्यत भवनं कुत इत्यर्थः । वाघद्भिरित्यस्य ऋत्विङ्नामसु पठितस्य यौगिकार्थमाह ॥ वदद्भिरिति ॥ वचेःशतरि छान्दसे उपधादीर्घे पृषोदरादित्वाच्चकारस्य घकारे वाघद्भिरिति रूपमिति भावः ॥ विह्वयामहे इति ॥ स्तोत्रं कुर्म इत्यर्थः । ह्वेञ् स्पर्धायां शब्दे चेति धातोः ॥ तस्मादिति ॥ अस्य नः ऊतये सूद्यतो भवेत्यनेनान्वयः ॥ १३ ॥

ऊर्ध्वोनः ॥ उच्चगुणोपीति ॥ विश्वकोशे ऊर्ध्वशब्दस्य तुंगार्थत्वोक्तेर्गुणैस्तुं-गत्वमुत्तमत्वमर्थोभिप्रेत इति भावः । केतःकेतुरिति प्रज्ञानामसु पाठादाह ॥ केतुना ज्ञानेनेति ॥ निनितरां पाहीति ॥ ज्ञानदानात्पूर्वमपि रक्षत्येव ज्ञानदानोत्तरं तु पूर्वोत्तराघयोर्विनाशाश्लेषकरणान्नितरामित्युक्तम् ॥ तदर्थं चेति ॥ पापात्संरक्षणार्थमित्यर्थः ॥ अस्मादिनिप्रत्यय इति ॥ यद्यपि अदेस्त्रिनिश्चेति उज्ज्वलदत्तोदाहृतोणादिसूत्रेणादेस्त्रिनिप्रत्ययश्चात्

(टीकाविवृतिः)

त्रिप्प्रत्ययो विधीयते तेन श्रौतनकारान्तात्रिन् शब्दो भाष्योक्त इकारान्तात्रिशब्दोपि सिद्ध्यति। तथापि वृत्त्यन्तरपाठाश्रयेण वा एतत्सूत्रस्यैव क्वचित्पाठाभावेन बहुलग्रहणबलादेतत्कल्पनमिति ज्ञेयम् ॥ इकारोप्येवमिति ॥ एवं चर्त्वरुगागमसहितो बोध्य इत्याशयेन भाष्ये अत्रय इतीकारान्तोत्रिशब्द उक्त इत्यर्थः ॥ चरथायेति ॥ शीङ्शपि रुगमिवंचिजीविप्राणिभ्योऽथ इत्युक्तोथप्रत्ययो बहुलवचनाच्चरेरपीति भावः ॥ जीवसे इति ॥ तुमर्थेसेसेनसे इत्यसेप्रत्यय इति भावः ॥ कृधीति ॥ करोतेर्लोटि व्यत्ययेन शपो लुकि श्रुशृणुपृकृवृभ्य इति हेर्धित्वमिति भावः ॥ दुवो दोहनानीति ॥ दुहेरौणादिके डुप्रत्यये जसि तन्वादीनां छन्दसि बहुलमियङुवङौ वक्तव्यावित्युवङादेशे दुव इति रूपमिति भावः ॥ विदाःपञ्चमो लकार इति ॥ विद्लृलाभे इत्यतः अन्तर्णीतण्यर्थात् लङ्लिडादिक्रमविवक्षया पञ्चमलकारे लेटि सिपो लेटोडाटावित्यडागमे छान्दसे गुणाभावे इतश्च लोप इतीकारलोपे सकारस्य रुत्वविसर्गाविति भावः । चरथायोर्ध्वानित्यनेन भोगादिविषये उत्तमान्कुर्विति वचनाद्दुव इत्यस्य पौनरुक्त्यशंकापरिहारायातिमहांत्येवाखिल काम्यानीत्युक्तं भाष्यं संगमयति ॥ दोहनानि दर्शयतीति ॥ दुव इति वचनसामर्थ्यादिदं लभ्यत इति भावः ॥ १४ ॥

पाहि नः ॥ बृहद्भानविति ॥ बृहतो भानवो रश्मयो यस्य स बृहद्भानुः । भानुःकरोमरीचिः स्त्रीत्यमरोक्तेरित्याशयः ॥ अरं छिद्रमिति ॥ दोषारछिद्रशब्दानां पर्यायत्वं यतस्तत इत्यनुव्याख्यानात् अरं शीघ्रे च चक्रांगे शीघ्रगामिनि किल्बिषे इत्यभिधानाच्चेत्याशयः ॥ वातेरन्प्रत्यय इति ॥ वा गतिगन्धनयोरित्यतःकनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इत्युक्तःकनिन्प्रत्ययोबाहुलकाज्ञात इति भावः ॥ हिंसारूपादिति ॥ तुर्वी धुर्वीहिं सायामित्यतःक्तिनि लोपोव्योर्वलीति वलोपे धूर्तिरिति रूपमिति भावः ॥ हिंसार्थत्वादिति ॥ रुषरिषहिंसायामित्युक्तरिषधातोःशतृप्रत्यये रिषत इति रूपमिति भावः ॥ हननाय प्रवर्तमानाच्चेति ॥ तथाच राक्षसानां दुष्टविषये इन्द्रियादिप्रेरकत्वादन्येषां च केषांचिद्दुष्टवचनश्रावकत्वात् केषांचिदतिदुष्टत्वेन संबन्धायोग्यत्वात्केषांचिच्छरीरघाताद्यर्थं प्रवृत्तत्वात्तेभ्यः पाहीति विवक्षया रक्षसःपाहीत्यादिपृथगुक्तिरिति बोध्यम् ॥ यविष्ठशब्दादिति ॥ युवन्शब्दात् अतिशयार्थे ष्टनि स्थूलदूरयुवेति यणादिपरलोपे पूर्वस्य च गुणे अवादेशे निष्पन्नादिति शेषः । रूढ्या नीचार्थकोयं यविष्ठशब्दः ॥ भवार्थ इति ॥ सत्तारूपार्थ इत्यर्थः । यत्प्रत्ययस्य तकारेत्संज्ञिकत्वेन तित्स्वरितमित्यनेन स्वरितत्वं न। षाष्ठिकामंत्रितस्येत्याद्युदात्तत्वादिति भावः ॥ कथमेतदिति ॥ यविष्ठ्यपदस्य यविष्ठतमार्थकत्वमित्यर्थः ॥ तमबर्थ इति ॥ अतिशयार्थे तमपो विधानादाधिक्यार्थोयशब्द इत्याशयः ॥ १५ ॥

ऋक्संहिता पदपाठसहिता (सू-३६, व-४)

(४३७) घनेव विष्वग्विजह्यराव्णस्तपुर्जम्भयो अस्मध्रुक् । यो मर्त्यः
शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ॥ १६ ॥

(प०) घनाऽइव । विष्वक् । वि । जहि । अराव्णः । तपुःऽजम्भ । यः।
अस्मऽध्रुक् । यः मर्त्यः । शिशीते । अति । अक्तुऽभिः । मा ।
नः । सः । रिपुः । ईशत ॥ १६ ॥

(४३८) अग्निर्वव्ने सुवीर्यमग्निःकण्वाय सौभगम् । अग्निःप्रावन्मित्रोत
मेध्यातिथिमग्निः साता उपस्तुतम् ॥ १७ ॥

(प०) अग्निः । वव्ने । सुऽवीर्यम् । अग्निः । कण्वाय । सौभगम् ।
अग्निः । प्र । आवत् । मित्रा । उत । मेध्यऽअतिथिम् । अग्निः ।
सातौ । उपऽस्तुतम् ॥ १७ ॥

(४३९) अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे । अग्निर्नयन्नववास्त्वं
बृहद्रथं तुर्वीतिं दस्यवे सहः ॥ १८ ॥

(प०) अग्निना । तुर्वशम् । यदुम् । पराऽवतः । उग्रऽदेवम् । हवामहे ।
अग्निः । नयत् । नवऽवास्त्वम् । बृहत्ऽरथम् । तुर्वीतिम् ।
दस्यवे । सहः ॥ १८ ॥

(४४०) नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते । दीदेथ कण्व ऋतजात
उक्षितो यं नमस्यन्ति कृष्टयः ॥ १९ ॥

(प०) नि । त्वाम् । अग्ने । मनुः । दधे । ज्योतिः। जनाय । शश्वते । दीदेथ ।
कण्वे ऋतऽजातः । उक्षितः । यम् । नमस्यन्ति । कृष्टयः ।

(४४१) त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये । रक्षस्विनः
सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥ २०, ११, ३६ ॥

(ऋक्संहिता पदपाठसहिता)

(प०) त्वेषासः । अग्नेः । अमऽवन्तः । अर्चयः । भीमासः । न । प्रतिऽइतये । रक्षस्विनः । सदम् । इत् । यातुऽमावतः । विश्वम् । सम् । अत्रिणम् । दह ॥ २०, ११, ३६ ॥

## ऋग्भाष्यम्

वायुर्मेघानिव जहि सर्वतः पापपूरुषान् । अस्मद्रोहीच यस्तं च तापेनैवात्ति यत्ततः । तपुर्जंभः शिशीते यस्तीक्ष्णो भवति सर्वदा । नेशो भवतु सोऽस्माकं दुरात्मा पापपूरुषः ॥ १६ ॥ सुवीर्यं सौभगं चैव ममेशः समभाजयत् । मेध्यातिथिं सुतं चैव मित्राणि च ररक्ष मे । उपस्तुतं चैव मुनिं सातौ लाभे ररक्षह ॥ १७ ॥ तुर्वशादींस्तथा राज्ञो वयं तेन हवामहे । तुरोपि यद्वशो विष्णुः स च तुर्वशनामवान् । यदस्ति तत उच्चत्वाद्यदुरुग्रो सुरान्प्रति । तमेव तत्प्रसादेन ह्वयामो नयदेवसः । नववास्त्वादिकान्राज्ञो बलं दस्युविनिग्रहे ॥ १८ ॥ मनुष्यः सन्नहं त्वां तु ज्योतिर्मुक्तजनायच । निदधे हृदिसत्त्वं च दीप्यसे मयि सर्वदा । ब्रह्मजोग्निर्ऋताद्वेदवाचोभिव्यज्यते हरिः । उक्षितः स्वगुणैः सर्वैर्युक्तः ॥ १९ ॥ अमेयाश्च शक्तयः । त्वेषा इत्युदितास्तस्य हरे रश्मय एव च । भीमा न प्रतिगन्तुं च शक्या राक्षसपक्षिणः । यातवो जंगमास्तेषां हिंसनावांस्तुराक्षसः । यातुमावानिति प्रोक्तो यातनानुभवात्कचित् । यातुरित्येव च प्रोक्तः सन्तं प्रत्यनुकूलतः । स्थितास्ताः शक्तयो विष्णोः ॥ २०, ११, ४ ॥

## ऋग्भाष्यटीका

घनेव । वायुः । यद्यस्मात्तपुषा तापेनैव । जंभति । अत्ति संहरति । ततस्तपुर्जंभस्तस्य सम्बुद्धिः । हे तपुर्जंभाग्ने त्वमराव्णः । उक्तरीत्या पापपुरुषान्विष्वक्सर्वतो विजहि । कथम् । घना घनान्मेधानिव । वायुरिति शेषः । यश्चास्मद्ध्रुक् अस्मद्रोहीतं च विजहि । किञ्च यो मर्त्योऽत्यक्तुभिः । अतिरतिक्रमणार्थः । अक्तुः सङ्गः । स्नेहाभावैः स्नेहमात्रं परित्यज्येति यावत् । निस्नेहैः पुरुषैः सहेति वा । शिशीते शो तनूकरण इत्यस्येदं रूपम् । सर्वदा तीक्ष्णो भवति । निशितः कुठार इव स रिपुर्दुरात्मा पापपुरुषः नोस्माकम् । मा ईशत ईशो न भवतु ॥ १६ ॥

अग्निर्वव्ने । सुवीर्यम् । अग्निरीशः कण्वाय कण्वस्य मम माम् । सुवीर्यं वव्ने अन्तर्णीतण्यर्थस्य वने रूपम् । समभाजयत् । अग्निरेव कण्वं सौभगं वव्ने । किंच अग्निरेव मेध्यातिथिं मे सुतं मेधातिथिं च । उत

(ऋग्भाष्यटीका)

मित्रा मे मित्राणि च। प्रावत् ररक्ष। न केवलमेवं ममैवोपकारकः किन्तु। अग्निरेवोपस्तुतं मुनिं च। सातौ लाभे विषये। प्रावत् ररक्ष। हेतीतिहासमत्र सूचयति॥ १७॥

अग्निना। अग्निविषये पूर्वार्धतात्पर्यमाह॥ तुर्वशादीनिति। तथाशब्दः समुच्चये। न केवलमेतावत्। किं तु वयं तुर्वशं यदुमुग्रदेवं चेत्येतांस्तुर्वशादीन्राज्ञो। यत्सत्कारार्थं परावतो दूरतो हवामहे तच्च। तेनाग्निना तद्बलेनैव। विष्णौ व्याख्यातुं तुर्वशादिशब्दांस्तावन्निर्वक्ति। तुरोपीति। तुरो वायुरपि। स विष्णुश्च। न केवलं राजा। तुरो वशो यस्यासौ तुर्वशः। यदस्ति तत उच्चत्वाद्यदुरिति मयूरव्यंसकादित्वात्साधुः। विष्णुरिति सर्वत्र सम्बध्यते। उग्रोऽसुरान्प्रति देवश्चेत्युग्रदेवः। इदानीं वाक्यार्थमाह॥ तमेवेति। तं तुर्वशादिनामकं विष्णुं तत्प्रसादेनैवेति सम्बन्धः। नय देवेत्यादिनोत्तरार्धं व्याख्याति। सोग्निरेव। नववास्त्वं बृहद्रथं तुर्वीतिमित्येतान्नववास्त्वादिकान्राज्ञो। दस्यवे लक्षणया तत्सम्बन्धिने। विनिग्रहाय दस्युविनिग्रहे विषये। सहो बलम्। नयत् अनयत्। अजां ग्राममनयदिति यथा। तान्दस्यु वधौपयिकबलवतोकार्षीत्॥ १८॥

नित्वाम्। मनुष्यः। हे अग्ने। मनुर्मनुष्यः सन्नहम्। शश्वते शाश्वताय। जनाय मुक्तजनायापि। ज्योतिर्ज्ञानप्रदम्। त्वा तु हृदि निदधे। अहो मदीयं धाष्ट्यम्। यदल्पोप्यहं महान्तं त्वां द्रष्टुं चिन्तयामीति भावः। त्वदीयं च कृपालुत्वमाश्चर्यम्। कथमिति। यं त्वाम्। कृष्टयः सर्वाः प्रजाः। नमस्यन्ति। यश्चत्वम् ऋतजातः। अग्निश्चेद् ब्रह्मजः। ऋतात्परब्रह्मणो जात इति। हरिश्चेदृतादर्थाव्यभिचारिणः वेदवाच इति यावत्। अभिव्यज्यत इत्यृतजातः। उक्षितः सिक्तः। सम्बन्धः। सर्वैः स्वगुणैर्युक्त इति यावत्। स एवं गुणकश्च त्वम्। कण्वे मयि। दीदेथ। सर्वदा दीप्यसे प्रतीयसे। व्यत्ययात्॥ १९॥

त्वेषासः। अमेयाश्च। अग्नेस्तस्योक्तगुणस्य हरेस्त्वेषासः त्वेषा इत्युदिताः शक्तयश्च। यद्यपि त्विष दीप्ताविति पठ्यते। तथाप्यर्चय इति पृथगुक्तत्वाच्छक्तयोऽत्र ग्राह्याः। अर्चयो रश्मयश्चामवन्तः अमावतः अमेया एव। भीमासो भीमा भयंकराश्च। कथम्। सदमित् सर्वेषु स्थानेषु यातुमावतो रक्षस्विनः। रक्षांस्यस्य सन्तीति राक्षसपक्षिणः पुरुषस्य। प्रतीयते प्रतिगन्तुम् आभिमुख्येन गन्तुमपि। न शक्या इति शेषः। एवं भूतस्त्वं विश्वं समस्तमत्रिणं सन्दह। रक्षस्वी यातुमावान् कस्मादुक्त इत्यत आह॥ यातव इति। यातेस्तुन्। तेषां यातूनां हिंसना यातुमा। स्वार्थे णिजिति हिंसैव हिंसना। मीङ्हिंसायाम्। मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यत इत्यभिधानम्। तद्वान्यतस्तस्माद्राक्षसो रक्षस्वी यातुमावानिति प्रोक्तः। यातनानुभवाच्च यातुमावानिति प्रोक्तः। यातुर्यातना तस्य माऽनुभवो यातुमा। तद्वानिति। प्रसङ्गाच्छिष्यशिक्षार्थमाह॥ क्वचिदिति। उलूकयातुमित्यादौ। तत्रापि यातनैव निमित्तमिति भावः। यात्यत इति यातुः। रक्षस्विनो न प्रतीयत इति विशेषणं किमर्थमित्यत आह। सन्तमिति। ता विष्णोः शक्तयः रश्मयश्च सन्तं पुरुषं प्रत्यनुकूलतः स्थिताः आभिमुख्येन गन्तुं शक्याः। यथा प्रल्हादादेः अतो रक्षस्विन इति सार्थकं विशेषणम्॥ २०, ११, ४॥

## मन्त्रार्थमञ्जरी

यद्यस्मात्तपुषा तापेनैव जम्भति संहरतीति तपुर्जम्भस्तस्य सम्बुद्धिः (हे) तपुर्जम्भ, अग्ने। (त्वम्) अराव्णः, प्राक् उक्तरीत्या पापपूरुषान्। विष्वक्, सर्वतः। वि जहि, नाशय। कथम्? (घनेव) घनान्मेघानिव। (वायुः) इति शेषः। यः (च) अस्मध्रुक्, अस्मद्द्रोही। (तं च) (वि जहि) किं च, यः मर्त्यः। अति अक्तुभिः, अतिरतिक्रमणार्थः, अक्तुः सङ्गः, स्नेहाभावैः, स्नेहमात्रं परित्यज्येति यावत्, निःस्नेहैः पुरुषैः सह इति वा। शिशीते, 'शोतनूकरणे' श्लुविकरणम्, धातोरीकारः, द्विर्वचनम्, सर्वदा तीक्ष्णो भवति, निशितः कुठार इव। सः। रिपुः, दुरात्मा पापपूरुषः। नः, अस्माकम्। मा ईशत, ईशो मा भवतु, 'ईश ऐश्वर्ये' लङ् अडागमाभावः, शप्॥ १६॥

अग्निः, ईशः। (कण्वाय) कण्वस्य, मम, माम्। सुवीर्यम्। वव्रे, (समभाजयत्, किं च, अग्निः सौभगम् (च) कण्वाय (वव्रे) किं च, अग्निः (एव) मेध्यातिथिम्, मे सुतं मेध्यातिथिम्। (च) उत मित्रा, मे मित्राणि च। प्र आवत्, ररक्ष, अवतेः लङ्। न केवलमेवं ममैवोपकारकः, किं तु अग्निः (एव) उपस्तुतम्, मुनिम्। (च) सातौ, लाभविषये। (प्र आवत्) ररक्ष॥ १७॥

(वयम्) तुर्वशम्, यदुम्, उग्रदेवम् (च) इतीमाँस्तुर्वशादीत्राज्ञः। (अग्निना (सह) परावतः, दूरतः। हवामहे, आह्वयामः। अग्निः। 'नववास्त्वम्, बृहद्रथम्, तुर्वीतिम् (च) इतीमान्नववास्त्वादीन्राज्ञः) दस्यवे, लक्षणया दस्युसम्बन्धिने (वि) निग्रहाय, दस्युविनिग्रहविषये। सहः बलम्। नयत्, अनयत्, अडभावश्छान्दसः, तान्दस्युवधौपयिकबलवतोऽकार्षीत् इति। विष्णुपक्षे– तुरो वायुर्वशो यस्य स तुर्वशस्तं विष्णुम्, उपपदान्तलोपः, यदस्ति तत उच्चत्वहेतुना यदुनामकम् (विष्णुम्) असुरान्प्रत्युग्रो देवश्च इत्युग्र(देव)नामकं विष्णुम्। अग्निना, विष्णुप्रसादेन। (एव) हवामहे इति। शिष्टं स्पष्टम्॥ १८॥

(हे) अग्ने। मनुः, मनुष्यः सन्। (अहम्) शश्वते, शाश्वताय। जनाय, मुक्तजनाय। (अपि) ज्योतिः, ज्ञानप्रदम्। त्वाम् (हृदि) निदधे, अहो! मदीयं धाष्टर्चम्, यदल्पोऽप्यहं तं त्वां द्रष्टुं चिन्तयामि इति भावः। त्वदीयं च कृपालुत्वमाश्चर्यम् कथम्? यम्, त्वाम्। कृष्टयः, सर्वाः प्रजाः। नमस्यन्ति। (यश्च) त्वम्। ऋतजातः, ऋतादर्थाव्यभिचारिणो वेदवाक्यादभिव्यज्यत इत्यृतजातः, प्रसिद्धाग्निपक्षे ऋतात्परब्रह्मणो जातः इत्यर्थो ज्ञेयः। उक्षितः 'उक्ष सेचने' सिक्तः, सम्बद्धः, सर्वैः स्वगुणैर्युक्त इति यावत्। (सः) एवं गुणश्च त्वम्। कण्वे, मयि दीदेथ, सर्वदा दीप्यसे, 'दीपी दीप्तौ' इत्यस्य द्युत्यर्थस्य दीव्यतेः वा श्लुविकरणस्य धात्वन्तलोपे गुणे च रूपम्॥ १९॥

(मन्त्रार्थमञ्जरी)

अग्नेः प्रागुक्तगुणस्य हरेः। त्वेषासः, 'त्वेषाः' इत्युक्ताः शक्तयः। (च) अर्चयः, रश्मयः। (च) अमवन्तः, अमावन्तः, मा मर्यादा, अमेयाः। (एव) भीमासः, भीमाः, भीकराः। (च) कथम्? सदम् इत्, सर्वेषु स्थानेषु। यातुमावतः, यातुर्यातना, तस्य मानुभवः, तद्वान्यातुमावान्, तस्य यातनानुभविनः। रक्षस्विनः, रक्षांस्यस्य सन्तीति राक्षसपक्षिणः पुरुषस्य। प्रतीतये, प्रतिगन्तुमभिमुखेन गन्तुम्। (अपि) न (शक्यते) इति शेषः। एवं भूतः (त्वम्) विश्वम्, समस्तम्। अत्रिणम्, प्राक् उक्तार्थमिदं पदम्। सम् दह, 'दह भस्मीकरणे' संहर इत्यर्थः॥ २०॥ इत्येकादशो वर्गः॥ ११॥ षट्त्रिंशं सूक्तम्॥ ३६॥

## रूपावतारः

घनेव॥ शो तनूकरण इत्यस्येति। अस्माल्लटि व्यत्ययेनात्मनेपदे व्यत्ययेन शपःश्लौ धात्वोकारस्य छान्दसे ईत्वे द्विर्वचनादौ शिशीत इति रूपम्। ईशतेति। ईश ऐश्वर्ये अस्माल्लुङ्व्यत्ययेन च्लेरङादेशे ईशतेति रूपम्॥ १६॥

अग्निर्वव्रे॥ अन्तर्णीतण्यर्थस्येति। वनतेर्लिटि तदादेशतकारस्य एसि द्वित्वे छान्दसे उपधालोपे वव्ने इति रूपम्। उपस्तुतं मुनिं चेति। इतःपरं टीकायां श्रूयमाणं सातेति पदं प्रक्षिप्तम्। ततश्चैवं टीकावाक्यपाठः। उपस्तुति मुनिं च सातौ लाभे विषये प्रावदिति। अवश्यं चैतदेवं विज्ञेयम्। साता उपस्तुतमित्यत्र पदकाले सातावित्येव पदस्य पठ्यमानत्वात्। भाष्ये आचार्यैः सातावित्यनूद्य लाभ इति व्याख्यानस्य कृतत्वाच्च॥ १७॥

अग्निना॥ ननु यदुशब्दस्य यदस्ति तत उच्चत्वादिति विगृह्य कथं समासः। विधायका-भावादित्यत आह। मयूरव्यंसकादित्वादिति। ''अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः'' इति काशिकोक्तेः ''मयूरव्यंसकादयश्च'' (२-१-७२) इति समास इति भावः। नयेतिद्विकर्मकत्वे दृष्टान्तमाह। अजां ग्राममिति॥ १८॥

नि त्वाम्॥ ननु दीधीङः लटः थासि तस्य से इत्यादेशे शपो लुकि षत्वे दीधीष इति भाव्यं कथं दीदेथेति इत्यत आह। व्यत्ययादिति। दीधीङः व्यत्ययेन परस्मैपदे मध्यमपुरुषबहुवचने धकारस्य दकारे गुणे दीदेथेति रूपमिति भावः॥ १९॥

त्वेषासः॥ अमवन्त इति। माङ्मान इत्यतो भावे क्विपि माशब्दो ज्ञानवाची। ततो मतुपि नञ्समासे अमावन्त इति रूपम्। छान्दसे ह्रस्वत्वे अमवन्त इति रूपम्। ननु

(रूपावतारः)

हिंसनाशब्दः न ल्युडन्तः । ङीप् प्रसंगात् । किन्तु 'न्यासश्रन्थोयुच्' (३।३।१०७) इति सूत्रविहितयुजन्तः । ततश्च प्रयोजकव्यापारस्य हिंसनाशब्दवाच्यत्वं वक्तव्यं स्यादित्यत आह । स्वार्थे णिजितीति ॥ २० ॥ ११ ॥ ४ ॥

## पदार्थप्रकाशिका

घनेव विश्वग्वि जह्यराव्णः । तापेनैवेति । औष्ण्येनैवेत्यर्थः । संहरति दहतीति यावत् । उक्तरीत्येति । अरं छिद्रं प्रापयतीत्यराव्णः पुरुष इति पूर्वोक्तरीत्येत्यर्थः । सर्वतो विजहीति । सर्वदिक्षु द्रावयित्वा विनाशयेत्यर्थः हनेति यावत् । शेष इति । ऋचि भाष्यकारेण शेषः पूरित इत्यर्थः । अस्मद्रोही निन्दनादिनास्मद्द्रोहकर्ता । अति अक्तुभिरिति पदद्वयं वैदिकाः पठन्ति । तदनुसारेण तावव्द्याख्याति । अतिरतिक्रमणार्थ इति । अतिक्रमणार्थोऽभावार्थः । अक्तुशब्दार्थमाह अक्तुरिति । अक्तुभिरतीत्यन्वयः । तत्राक्तुभिरित्यस्य स्नेहैरित्यर्थः । अतीत्यस्य अभावैरित्यर्थः । तथा च स्नेहैरभावैरिति भवति । स्नेहसम्बन्धिभिरभावैरिति तदर्थः स्नेहाभावैरिति । स्नेहप्रतियोगिकाभावैरित्यर्थः । अस्य तात्पर्यमाह स्नेहमात्रं परित्यज्येति । अक्तुभिरिति बहुवचनाभिप्रायो मात्रमिति । अथवा अत्यक्तुभिरित्येकमेव पदमित्यभिप्रेत्यार्थमाह निःस्नेहैरिति । अत्राप्यतिरभावार्थ एव । तथाच प्रति न विद्यत इति यावत् । अक्तुः स्नेहो येषां ते अत्यक्तवो निःस्नेहाः पुरुषाः तैः सह शिशीत इत्यर्थ इति सम्प्रदायविदः । शोतनू करण इत्यस्येदं रूपमिति । शोधातोर्लेटि तस्यात्मनेपदिनि एकवचने तादृशे 'टित आत्मने पदानां टेरे' इति तकारस्थाकारस्य एत्वे धातोः अभ्यासे अभ्यस्तशकारस्थस्य ओकारस्य इकारे धातुशकारस्थस्य ओकारस्य ईकारे च सति शिशीते इति रूपम् । अत्र चालाक्षणिकं सर्वं छांदसमिति द्रष्टव्यम् ।

तनू करणमल्पीकरणम् । तनुमहदुदरपातुनाश्चित्रमित्थम् । दधुः खद्योतपोताद्युतिपतितनवा इति प्रयोगात् । श्लक्ष्णं दभ्रं कृशं तनु इति कोशात् तनुशब्दस्याल्पार्थत्वप्रसिद्धेः । एतस्य तात्पर्यकथनपरं भाष्यं संयोजयति । सर्वदा तीक्ष्णो भवतीति । सर्वदा परुषवाचा बाधत इति यावत् । सर्वदा कंचित्प्रति कस्यचित्तीक्ष्णत्वे तस्य मनः खेदेनाल्पीभवनं अनुभवसिद्धमिति द्रष्टव्यम् । यद्वा तनूकरणं नाम शाणसम्बन्धेन निशितकरणं प्रसिद्धम् । तस्य प्रकृते अभिप्रायमाह सर्वदेत्यादि । अस्मिन् पक्षे निशितः कुठार इवेति वाक्यं स्वरसमिति द्रष्टव्यम् । दुरात्मेति । अस्मान्प्रति निःस्नेहपुरुषैः सह निशितकुठार इव सर्वदा तीक्ष्णीभवने बुद्धिमत्वात् दुरात्मेत्यर्थः । अस्माकं विषये । ईशो न भवत्विति । परुषवाचास्मत्पीडने समर्थो न भवत्वित्यर्थः ॥ १६ ॥

(पदार्थप्रकाशिका)

अग्निर्वव्ने सुवीर्यम् । ईशः समर्थो वा प्रेरको वा स्वामी वेत्यर्थः । कण्वं मामित्यर्थः । वनेरूपमिति । अन्तर्णीतण्यर्थवनषणसंभक्ताविति धातोर्लिटि तस्यात्मनेपदिनि तादृशे धातोरभ्यासेऽभ्यस्तधातुनकारस्य लोपे ववनतेति जाते उपधाभूतवकारस्थाकारलोपे वन् इति जाते टित आत्मनेपदानां टेर इति टीभूतस्य नकारस्थस्य अकारस्य एत्वे 'लिटस्तझयोरेशिरेजि'ति तकारस्यापि एश् इत्यादेशे शकारलोपे वव्न् एए इति जाते पूर्वरूपेण पररूपेण वा एकस्मिन्नेव एकारे उर्वरिते सति वव्ने इति रूपमिति भावः । णिजर्थं दर्शयति समभाजयदिति । कण्वस्य कण्वं मां सौभगं सौभाग्यम् । एवमिति मदीयपुत्रमित्रादिरक्षणेनेत्यर्थः । लाभे विषय इति । ऐहिकामुष्मिक समस्तलाभविषय इत्यर्थः । अत्रेति । एतदृगर्थ इत्यर्थः ।। १७ ।।

अग्निना तुर्वशं यदुं परावतः । समुच्चय इति । पूर्वऋगर्थेन साकमेतदृगर्थस्येत्यर्थः । समुच्चेयमेव दर्शयति न केवलमेतावदिति । मदीयपुत्रादिसंरक्षणरूपं पूर्वोक्तमेवालं न भवतीत्यर्थः । अत्र तुर्वश इति रेफस्थाकारलोप इति भावः । तुर्वशादिराज्ञामेव देवतात्वं प्रतीयते नाग्नेरत आह तद्बलेनैवेति । तस्य तव बलेनैवेत्यर्थः । गृहं प्रत्यागततादृशमहाराजपूजादिसाधनीभूतधनादिसम्पत्तेस्त्वया मम दत्तत्वादेवेति भावः । चशब्दसमुच्चेयं दर्शयति न केवलमिति । तुर्वशशब्दात्कथमयमर्थो लभ्यत इत्यत आह तुरो वश इति । वशोऽधीनः । ययातिपुत्रस्य यदोरनुजस्य तुर्वसुरिति तुर्वशेति नामद्वयमस्तीत्युभे यथा व्यवहार इति द्रष्टव्यम् ।

ननु यदस्ति तत उच्चत्वादिति निर्वचने यदस्सुरिति स्याद्यदुरिति कथमत आह मयूरव्यंसकत्वादिति । मयूरवद्व्यंसको मयूरव्यंसक इत्यत्र यथा वत्यर्थः समासान्तर्गत एवमिहाप्यस्त्यर्थो यदुरिति समासान्तर्गत एवास्यापि तद्गणस्थत्वादित्यर्थः । तथा च मध्यमपदलोपी समास इति भावः। यद्वा सापेक्षसममर्थवद्भवतीति न्यायेन यच्छब्दस्यास्तीत्येतत्सापेक्षत्वेनासमर्थत्वात्कथं उशब्देन समास इत्यत आह मयूरेति । यथा मयूरशब्दस्य वतिना सापेक्षत्वेपि व्यंसकपदेन समासो दृष्ट इत्यर्थः। तथा च मयूरव्यंसकादिगणेषु असमर्थयोरेव समासदर्शनादस्यापि तद्गणस्थत्वान्नानुपपत्तिरिति भावः। देवः क्रीडादिगुणविशिष्टः । चतुर्थी विषयसप्तम्यर्थे इत्यभिप्रेत्य प्रवृत्तं भाष्यं संयोजयति दस्युविनिग्रहे विषय इति । अनयत् । प्रापयामास । नववास्त्वादिकान् राज्ञो बलं नयदित्युक्तम् । तत्र नीञ्प्रापण इति धातोर्द्विकर्मकत्वे दृष्टान्तमाह अजामिति । छागीं ग्रामं प्रापयामास तत्पालक इति तदर्थः । राज्ञो बलं नयदित्यस्य तात्पर्यमाह तानिति । नववस्त्वादिकान् राज्ञ इत्यर्थः । बलवतो बलयुक्तान् ।। १८ ।।

(पदार्थप्रकाशिका)

नित्वामग्ने मनुर्दधे । मुक्तजनायार्पाति । न केवलममुक्तजनायेत्यर्थः । हृदि निदध इति अपरोक्षज्ञानाय त्वां चिन्तयामीत्यर्थः । पूर्वार्धतात्पर्यमाह अहो इति । मनुपदतात्पर्यमल्पोप्यहमिति । महान्तं त्वामिति । मुक्तजनज्ञानप्रदत्वादिति भावः । हृदि निदध इत्यस्य तात्पर्यं द्रष्टुमित्यादि । आश्चर्यमिति । मयैवं धाष्टर्ये क्रियमाणे सत्यपि तव कोपो न जातः, प्रत्युत भक्तस्य मम विषये कृपालुत्वमेव तव दृष्टमतो मयि दीप्यसे अतस्तदपि कृपालुत्वमाश्चर्यं लोकविलक्षणमित्यर्थः । सर्वैर्गुणैरिति योग्यतया लाभ इति द्रष्टव्यम् । एवं गुणक इति । सर्वप्रजानमस्कार्यत्वऋतजातत्व सर्वगुणोक्षितत्वरूपमहामहिमोपेत इत्यर्थः । ननु दीदेथेत्यस्य लिडन्तत्वात् लिटश्च भूतार्थकत्वात् दीप्यस इति वर्तमानार्थकलडन्तशब्देन कथं व्याख्यानमित्यत आह व्यत्ययादिति । ऋचि दीप्यस इति वर्तमानार्थकलट्प्रयोग एव कार्ये छन्दस्त्वेन व्यत्ययमङ्गीकृत्य दीदेथेति लिड्प्रयोगः कृत इति युक्तं वर्तमानार्थकलडन्तशब्देन व्याख्यानमिति भावः ॥ १९ ॥

त्वेषासो अग्ने रमवन्तो अर्चयः । त्वेषा इत्युदिता इति । तच्छब्दवाच्या इत्यर्थः । इति पठ्यत इति । तथा च त्वेषास इत्यस्य रश्मय इत्येवार्थो वर्णनीय इति भावः । इति पदेन उक्तत्वाद्रश्मीनाम् । ग्राह्याः त्वेषास इति पदेनेति शेषः । रश्मयो देहप्रकाशाः । अमेया एवेति । मामिति मर्यादा तद्वतो न भवतीत्यमावन्तस्तथा चामेया इति लभ्यत इति भावः । कथमिति । भयंकरत्वं कथमित्यर्थः । सदशब्दः स्थानवाची इत् इत्यव्ययं सर्वार्थे । तथाच तात्पर्यमाह सर्वेषु स्थानेष्विति । युद्धस्थानेष्वित्यर्थः । अस्य न प्रतीतये इत्यनेन सम्बन्धः । यातुमावत इति पदं व्याख्यास्ते रक्षस्विन इति । अस्यार्थमाह रक्षांसीति । सन्ति । पक्षपातितयेति शेषः । राक्षसपक्षिणः राक्षसपक्षपातवन्त इत्यर्थः । इतय इत्यस्यार्थो गन्तुमिति प्रतिगन्तुमित्यस्याप्यर्थमाह आभिमुख्येनेति तदभिमुखतया गमनमेव तत्प्रतिगमनमित्यर्थः । रणमण्डलेषु भगवच्छक्तीः तद्रश्मीश्च प्रतिगन्तुं तत्प्रतिस्पर्धितया तदाभिमुख्येन गन्तुं राक्षसपक्षपातिनां पुरुषाणामशक्यतया तच्छक्तीनां तद्रश्मीनां च भयङ्करत्वं सिद्धमिति भावः ।

एवं भूत इति । वैरिभिरप्रतिगन्तव्य शक्तिरश्मिसम्पन्न इत्यर्थः । अत्रिणः । उक्तरीत्याऽसुरजातं राक्षसजातं वेत्यर्थः । रक्षस्वी । राक्षसपक्षपाती पुरुषः । यातेस्तुन्निति । याप्रापणेऽस्मात्तुन्प्रत्यये नकारलोपे च सति निष्पन्नो यातुशब्दो जङ्गमवाचीत्यर्थः । यातूनां जङ्गमानाम् । ननु हिंसनावानित्ययुक्तम् । हिंसनाशब्दस्य णिजन्तत्वेनान्यकर्तृकहिंसाप्रयोजकत्वरूपकर्तृव्यापाराभिधायकत्वात् । प्रकृते च हिंसालक्षणभावस्यैव विवक्षणीयत्वेन हिंसावानित्येव वक्तव्यमिति

(पदार्थप्रकाशिका)

चेत्सत्यम् । स्वार्थे णिजन्तताङ्गीकारात् । तथाच हिंसैव हिंसनाशब्दार्थ इत्यभिप्रेत्याह स्वार्थे णिजिति । हिंसैव धात्वर्थरूपा हिंसैव । साधनप्रकारस्त्वित्थं हिंसि हिंसायामस्मात् स्वार्थे णिजि तस्य लोपे पश्चाद्धात्विकारस्यापि लोपे हिस् इति जाते इदित्वात् इदितोनुम्धातोरिति नुमागमे हिंस् इति जाते पश्चाद्भावे ल्युटि तस्यानादेशे हिंसनेति भवतीति ।

ननु यातुमावत इत्यत्र हिंसा कस्य पदस्यार्थ इत्याशङ्कायां माङ् धात्वर्थोयमित्यभिप्रेत्य माङ् धातोर्हिंसार्थत्वे धात्वभिधाने आह मीङ् हिंसायामिति । अस्मात् भावे डाच् प्रत्यये डित्वाट्टीभूतस्य ईङ् इत्यस्य लोपे प्रत्ययाकारसम्बन्धे च सति मा इति भवतीति भावः । ज्ञानादित्रयं मानमिति कथ्यत इत्यभिधानार्थः । लयो हिंसा । तद्वानिति । यातुशब्दवाच्यजङ्गमहिंसावान् तत्कर्तेत्यर्थः । ननु भाष्ये रक्षस्वीति वक्तव्यं राक्षस इति कथमुक्तमित्यत आह राक्षसो रक्षस्वीति । राक्षसपक्षपातीत्यर्थः । यातनानुभवादित्येतत् यातुमावान् शब्दस्यार्थान्तरमिति सूचनाय यातनानुभवाच्चेति भाष्ये चशब्दोध्याहृत इति ज्ञातव्यम् । अयमर्थो यातुमावान्शब्देन कथं लब्ध इत्यत आह यातुरिति । यातना पीडा । तस्य यातोः ।

उत्तरत्र क्वचिदिति भाष्येण रक्षस्विनो यातुशब्दवाच्यत्वे निमित्तमुच्यते तत्प्रकृतासङ्गतं अत्र केवलयातु शब्दाभवादित्यत आह प्रसङ्गादिति । यातुमावानित्यत्र यातनानुभावादिति यातुशब्द व्याख्यानेन स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गादित्यर्थः । तत्रापि । उलूकयातुमित्यत्रापि । यातनैव पीडैव राक्षसानां यातुशब्दवाच्यत्वे निमित्तमित्यर्थः । कथं यातनावन्निमित्तमित्यतस्तद्दर्शयति यात्यत इति यातनाविषयो भवतीत्यर्थः । पीडयत इति यावत् । तथाच हे इन्द्र उलुकयातुं यमदूतानां नानारूपिणां सत्वात् परलोके उलूकानां उलुकाद्युपलक्षितयमदूतानाम् । यातुं पीडाविषयं रक्षो राक्षसं अत्र लोके जहि हनेत्यर्थो द्रष्टव्यः । विशेषणं किमर्थमिति । भगवच्छक्तीः रश्मींश्च प्रति केनाप्याभिमुख्येन गन्तुमशक्यत्वात्कस्यापि न प्रतीतये शक्याः । इत्येतावदेव वक्तव्यं रक्षस्विन इति विशेषणं किमर्थमित्यर्थः । असंभावनापरिहारायोदाहरणमाह यथा प्रह्लादादेरिति । यदा कुपितस्य श्रीनृसिंहस्य शक्तिं तेजश्च दृष्ट्वा सर्वेपि देवा आभिमुख्येन गन्तुमशक्ता जातास्तदा ब्रह्मोक्तः प्रल्हादस्तदाभिमुख्येन गत्वा तत्कोपं शमयामासेति भागवते प्रसिद्धमिति भावः ॥ २०, ११, ४ (३६) ॥

## पदार्थदीपिका

जहीति। हन्तेर्लोटि होर्हन्तेर्जोदेशः। तस्यासिद्धत्वात् हेर्लुगभाव इति ज्ञेयम्। घनाघनानिति। सुपां सुलुगिति द्वितीयाया आकारः। अस्माध्द्रुगिति। द्रुह जिघांसायां सत्सूद्विषेत्यादिना क्विप्। वा द्रुहमुहष्णुहष्णिहामिति हकारस्य घत्वमिति भावः। शो तनूकरण इत्यस्येदं रूपमिति। यद्यपि अस्माल्लटि परस्मैपदितया तिपि दैवादित्वाच्छपोपवादेन श्यनि सति तस्मिन् परतः ओतःश्यनीत्येकार लोपे श्यतीत्येव भवितव्यम्। शिशीत इत्यात्मनेपदादिकमयुक्तमेवेत्याभाति। तथापि व्यत्ययेनात्मनेपदे बहुलं छन्दसीति विकरणस्य श्लुभावे आदेच उपदेशेऽशीतीत्यात्वम्। शित्वात्वनिषेधेपि आदिशीति तदनिषेधात् तस्मिन् परतोऽप्यात्वे श्लाविति द्विर्भावे बहुलं छन्दसीत्यभ्यासस्येत्वे ईहल्यघोरितीत्वे शिशीत इति रूपसिद्धिरिति द्रष्टव्यम्। ईशत इति। बहुलं छन्दसीति शपो लुगभावः। न माङ्योगे इत्यडागमाभाव इति ज्ञेयम्॥ १६॥

वनते रूपमिति। वनतेर्लिट्। न शसददवादिगुणानामिति एत्वाभ्यासलोपयोःप्रतिषेधश्छान्दस इति भावः। सौभगमिति। सुभागान्मन्त्र इति पाठात् तस्य भाव इत्येतस्मिन्नर्थे घञिति भावः। मित्रामित्राणीति। छन्दसि बहुलमिति शेर्लोप इति भावः॥ १७॥

ननु यच्चास्तीति यच्छब्दस्यास्तीत्येतत्सापेक्षत्वेनासमर्थत्वात्कथं उच्छब्देन समास इत्यत आह मयूरव्यंसकादित्वादिति। असमर्थसमासोऽयमिति भावः। नयदिति। णीङ् प्रापणे लेटि लेटोडाटावित्याडागमः। इतश्च लोप इतीकारलोप इति भावः। नयतेर्द्विकर्मकत्वे दृष्टान्तमाह। अजामिति॥ १८॥

कृष्टय इति। कृष विलेखने। क्तिच्क्तौ च संज्ञायामिति क्तिजिति भावः। ऋतजात इति। ऋतेन जन्यत इति ऋतजातः श्वीदितो निष्ठायामितीट् प्रतिषेधः। जनसनेत्यादिना विट् विड्वनोरनुनासिकःस्यादित्यात्वमिति भावः। ननु दीप्तार्थकाद्दीदेतेर्लिटि लिड्द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति वचनाभावे अनित्यमागमशासनमिति वचनादिडभावे च निष्पन्नस्य लिडन्तस्य दीदेथेति श्रौतपदस्य कथं दीप्यसे इति लडन्तं प्रतिपदं भाष्यकारेण दत्तमित्यत आह। व्यत्ययादिति। लकारव्यत्ययादित्यर्थः॥ १९॥

यद्यपीति। दीप्त्यर्थकादस्मात्पचाद्यचि लट्यूपधागुणे च निष्पन्नस्त्वेषशब्दो रश्म्यर्थ एव व्याख्येयः। न तु शक्त्यर्थतया। तथा सति द्वित्विष दीप्ताविति स्मृति विरोधात्तथा च शक्त्यर्थत्वेन

(पदार्थदीपिका)

भाष्यकारीयं व्याख्यानमयुक्तमिति भावः। पृथगुक्तत्वादिति। प्रसिद्धार्थपरिग्रहे पौनरुक्त्यप्रसंगात् तत्परित्यागेनानेकार्थत्वाद्धातूनामत्र शक्त्यर्थत्वमेव न्याय्यमिति भावेन तथा व्याख्यातं भाष्यकृतेति भावः। ननु च मीङ् हिंसायां इति स्मरणानुसारेण यातूनां हिंसा यातुमेति व्याख्येयम्। तत्कथं यातूनां हिंसना यातुमाशब्दार्थतया व्याख्यायत इत्यतः हिंसनाशब्देन भाष्ये हिंसाया एव विवक्षितत्वाद्युक्तं तथा व्याख्यानमित्याह। हिंसैव हिंसनेति। ननु तथापि हिंसनेति न वक्तुं युक्तं भाष्यकारेण। हिसि धातोरिदित्वात् इदितो नुम्धातोरित्यनेन नुमि गुरोश्च हल इति हलन्तात् गुरुमतोऽस्मात् स्त्रियामप्रत्यये प्रत्ययान्तादपि हिंसेत्येव शब्दनिष्पादनादित्यत आह। स्वार्थे णिजितीति। तथा च ण्यन्तस्याहलन्तत्वेनाप्रत्ययाप्राप्तौ ल्युटि अनादेशेपि णिलोपे सति हिंसनेति शब्दनिष्पत्तिर्युक्तेति भावः। ननु णिजन्ताल्ल्युटि निष्पन्नत्वे हिंसनाशब्दस्य हिंसापरत्वं न स्यात्। तत्कारणस्यैव तेन प्राप्तेः। तथा च मीङ् हिंसायामिति स्मरणविरोध एवेत्यतो नायं हेतुमति णिच् येनोक्तदोषप्रसक्तिः। किन्तु स्वार्थ एवेति नोदाहृतस्मरणविरोध इति भावेन स्वार्थ इत्युक्तमित्यवधेयम्। मीङ् हिंसायामिति मानमित्यादिवाक्यमानोद्देशेन ज्ञानमि-त्यादेर्विधानात् प्रकृतसंगतिरिति द्रष्टव्यम्। किमर्थं विशेषणमिति। व्यावृत्यभावात् व्यर्थमेतद्विशेषणमित्यर्थः॥ २०, ११, ३६॥

## टीकाविवृतिः

तपुषेति॥ तप सन्तापे इत्यतः अर्तिपृवपियजितनिधनितपिभ्यो- निदित्यनेन भावे उसि प्रत्यय इति भावः॥ जंभति अत्ति संहरतीति॥ जभी गात्रविनामे इत्यतः धातूनामनेकार्थत्वेन संहारार्थकात्पचाद्यचि रधिजभोरचीति नुमागमे जंभेतिरूपमिति भावः॥ विजहीति॥ संहरेत्यर्थः। हन्तेर्लोटि सिपो हित्वे हन्तेर्ज इति जादेश इति भावः॥ अक्तुः सङ्ग इति॥ अंजू व्यक्तिम्रक्षणकान्तिगतिष्विति धातोर्म्रक्ष्णस्य संगार्थत्वादिति भावः। अतिरतिक्रमणे चेति सूत्रेणातेःकर्मप्रवचनीयत्वात्तद्योगे अक्तुशब्दस्य प्राप्तद्वितीयास्थले संबन्धार्थे व्यत्ययेन तृतीया जाताऽतः अक्तूनां स्नेहानामतिक्रमणैरभावैरित्यक्षरार्थ- मभिप्रेत्य तात्पर्यार्थमाह॥ स्नेहमात्रं परित्यज्येति यावदिति॥ अथवा उक्तुभिः अक्तूनति अतिक्रम्य वर्तमानैरिति वर्तमानपदाध्याहारेण योज्यमिति भावेन पदद्वयतात्पर्यमाह॥ निस्नेहैःपुरुषैरिति॥ ननु शीङ्स्वप्ने इत्यतो लुग्विकरणाद्धातोर्व्यत्ययेन शपःश्लौ छान्दसत्वाच्छीङःसार्वधातुके इति गुणाभावे च शिशीते इति रूपस्य जातत्वात्कथं भाष्यं तीक्ष्णो भवतीति व्याख्यातमित्यत आह॥ शो तनूकरणे इत्यस्येति॥

(टीकाविवृतिः)

अत्रापि छान्दसे शपः श्लौ ओकारस्य ईकारादेशे आत्मनेपदे चेति शेषः । तेनास्य दिवादित्वाच्छ्यनि श्यतीति भाव्यमिति शङ्कानवकाशः ॥ ईशतेति ॥ ईशेरदादिकस्य लोटि छान्दसे आमेत इति आमभावे बहुलं छन्दसीति शपो न लुगिति भावः ॥ १६ ॥

अग्निर्वव्ने ॥ कण्वायेति श्रौतपदं ममेति भाष्यानुसारेण कण्वस्येति व्याख्याय ममेति भाष्यं कर्मरूपषष्ठ्यर्थविवक्षया प्रवृत्तमिति भावेनाह ॥ मां सुवीर्यमिति ॥ वनते रूपमिति ॥ वन षण संभक्तावित्यस्य लिटि द्वित्वादौ छान्दस उपधालोपे वव्ने इतीति शेषः ॥ प्रावदिति ॥ अव रक्षणे इति धातोर्लङिति भावः ॥ सातौ लाभे इति ॥ षणु लाभे इत्यतःक्तिनि जनसनखनां सञ्झलोरित्यात्वमिति भावः ॥ १७ ॥

अग्निना तुर्वशम् ॥ तथाशब्दःसमुच्चय इति ॥ पूर्वऋगुक्तमेधातिथ्यादि रक्षणेनैतदृगुक्तार्थसमुच्चय इत्यर्थः । समुच्चयप्रकारमाह ॥ नकेवलमिति ॥ यत्सत्कारार्थमिति ॥ यस्याग्नेः पूजार्थमित्यर्थः ॥ परावतो दूरत इति ॥ आरे परावत इति दूरनामसु पाठादिति भावः ॥ तुरो वायुरपीति ॥ तुर त्वरणे इत्यत इगुपधज्ञेतिक प्रत्यये निष्पन्नतुरशब्दो महावेगयुतत्वाद्वायुवाची । अपिशब्दःसर्वजीवोत्तमो वायुरपि यदा विष्णुवशस्तदा अन्यत्तद्वशे इति किं वाच्यमिति कैमुत्यद्योतनार्थः ॥ भाष्ये स चेति च शब्दसमुच्चेतव्यमाह ॥ न केवलं राजेति ॥ तुर्वशादिशब्दवाच्यो राजैव केवलं न किन्तु स विष्णुश्चेत्यर्थः । यदुशब्दे भाष्यकारैर्यदस्ति तत उच्चत्वादित्यर्थकरणाद्यच्छब्दोकारमध्ये सच्छब्देन भाव्यन्तल्लोपःकथमित्यत आह ॥ मयूरव्यंसकादित्वादिति ॥ मयूरव्यंसकादेराकृतिगणत्वादकुतोभयशब्दे नास्ति कुतोपि भयमित्यर्थप्रतीतेरस्तिशब्दलोपस्तथात्रापि सच्छब्दलोप इति भावः । नववास्त्वमित्यादिकर्मसद्भावात्सह इति पुनःकर्मान्तरसंबन्धःकथमित्यतः प्रयोगबलादस्य द्विकर्मकत्वमित्याशयेनाह ॥ अजांग्राममनयदितियथेति ॥ महाभाष्येप्येतदुक्तम् । नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं कर्तव्यमिति निश्चय इति । तथा च राज्ञां बलाधिकरणत्वात्सप्तम्यां प्राप्तायां अधिकरणत्वाविवक्षया अकथितं चेति कर्मसंज्ञाविधानाद्द्वितीया । सहःशब्दे तु मुख्यकर्मत्वमिति भावः । उत्तरार्धभावमाह ॥ तानिति ॥ १८ ॥

नित्वाम् ॥ मनुर्मनुष्य इति ॥ मनुशब्देन लक्षणया मनुष्यो गृह्यते । मनुष्याणां मनुजातत्वादिति भावः । ब्रह्मज इति भाष्यं श्रौतपदेन सङ्गमयति ॥ ऋतात्परब्रह्मण इति ॥ ऋतं सत्यं परं ब्रह्मेति श्रुतेरिति भावः ॥ ऋतादर्थाव्यभिचारिण इति ॥ ऋतमुंछशिले तोये दीप्ते सत्येऽभिपूजिते इति विश्वकोशोक्तेरित्याशयः ॥ उक्षितःसिक्त इति ॥ दीदेथेत्यत्र दीधीङ्दीप्तिदेवनयोरित्यतो लटि

(टीकाविवृतिः)

परस्मैपदं मध्यमपुरुषबहुवचनं गुणो धकारस्य दकारश्चे त्येतच्चतुष्टयं व्यत्ययेनेत्याशयेनाह ॥ व्यत्ययादिति ॥ दीप्यसे इत्यर्थे दीधीषे इति वक्तव्ये दीदेथेति व्यत्ययेनेत्यर्थः । सर्वदेति तु व्यत्ययार्थो ज्ञेयः ॥ १९ ॥

त्वेषासो अग्ने ॥ त्वेषास इति ॥ त्विषेःपचाद्यच्युपधागुणे जसेरसुगागम इति भावः ॥ अर्चयोरश्मयश्चेति ॥ अर्चिर्मयूखशिखयोरिति विश्वकोशे सकारान्तप्रकरणे पठितार्चिःशब्दस्य व्युत्पादनमर्चिशुचिहसृपिछादिछर्दिभ्य इसिरिति सूत्रेण कृत्वा अग्नेर्भ्राजन्तो अर्चयं इत्यादिप्रयोगबलादुणादिवृत्तिकारैरेतत्समानार्थकेकारान्तार्चिशब्दाङ्गीकारादिति भावः ॥ अमवन्त इति ॥ माङ्माने इत्यतो भावे क्विपि माशब्दो ज्ञानवाची तस्माद्विषयतासंबन्धार्थे मतुपि सति मावंतो मेया इत्यर्थो भवति । तस्य नञ्समासे छान्दसे माधातोर्ह्रस्वत्वे चामवन्त इति रूपमिति भावः ॥ भीमा भयंकराश्चेति ॥ घोरं भीमं भयानकमित्यमरोक्तेरिति भावः ॥ सदमित्सर्वेषु स्थानेष्विति ॥ सभास्वित्यर्थः । आस्थानीक्लीबमास्थानं स्त्रीनपुंसकयोःसद इत्यमरकोशे सकारान्तसदः शब्दपाठेप्ये तत्प्रयोगबलादकारान्तोपि सदशब्द आस्थानार्थक इति भावः । षट्सु द्वितीयेति महाव्याकरणसूत्रेणं सदमिति द्वितीया । इच्छब्दार्थःसर्वेष्विति ज्ञेयम् ॥ रक्षस्विन इति ॥ रक्षस्शब्दादसन्तत्वान्मत्वर्थे अस्मायामेधास्रजो विनिरिति विनिप्रत्यये षष्ठ्येकवचनमिति भावः ॥ प्रतीतये प्रतिगन्तुमिति ॥ प्रतिशब्द आभिमुख्यार्थः । इण् गतावित्यतो भावे क्तिनि चतुर्थ्यन्तस्य गन्तुमित्यर्थ इति भावः ॥ इति शेष इति ॥ श्रुतौ शेषोक्तिर्भाष्यकारैःकृत इत्यर्थः ॥ यातेस्तुनिति ॥ कमिमनिजनिगाभायाहिभ्यश्चेत्यनेनेति शेषः । यान्ति गच्छन्तीति जंगमा यातुशब्दवाच्या इत्याशयः । ननु हिंसनाशब्दस्तु टाबन्तत्वान्न ल्युडन्तः किन्तु ण्यासश्रंथोयुजिति ण्यन्ताद्युच्प्रत्ययान्तो वाच्यः तथा चात्र प्रयोजकव्यापाराभावात्कथं हेतुमति चेति णिजित्यत आह ॥ स्वार्थे णिजितीति ॥ हिसि हिंसायामिति चुरादौ पाठादिति शेषः ॥ मीङ् हिंसायामिति ॥ अस्माद्धातोरौणादिके भावे डप्रत्यये टापि मेति रूपमिति भावः । रक्षसामयमित्यर्थे तस्येदमित्यणि भाष्ये राक्षस इति प्रयुक्तमिति भावेनाह ॥ राक्षसो रक्षस्वीति ॥ भाष्योक्तं व्याख्यानान्तरं योजयति ॥ यातनानुभवाच्चेति ॥ प्रोक्तः रक्षस्वीति शेषः ॥ यातुर्यातनेति ॥ यतनिकारोपस्कारयोरितिचुरादौ पठितयतधातोर्यतखेदोपस्करयोरिति वोपदेवेनानुवादात्खेदार्थाद्यतेरौणादिके उण्प्रत्यये निष्पन्नो यातुशब्दो यातनार्थक इति भावः ॥ तद्वानितीति ॥ अनेन पूर्वव्याख्याने यातूनां हिंसा यैः तानि यातुमानि रक्षांसि । द्वितीयेपि यातोः यातनायाः मा अनुभवो येषान्तानि यातुमानि रक्षांसि ततो मतुपि यातुमान् रक्षस्वीत्युक्तं भवति । क्वचिदिति भाष्यं श्रुत्यसंबद्धं संगमयति ॥ प्रसङ्गादिति ॥

(टीकाविवृतिः)

उदाहरणमाह ।। उलूकयातुमित्यादाविति ।। उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् । सुपर्णयातुमुतगृध्रयातुं दृषदेव प्रमृण रक्ष इन्द्रेत्यादावित्यर्थः । ननु उलूकयात्वित्यादिशब्दे यातुशब्दस्य प्रमृणरक्ष इन्द्रेत्यत्र त्यरक्षोविशेषणस्य कथं यातनार्थकत्वं रक्षसो यातनावत्त्वेन यातनारूपत्वाभावादित्यत आह ।। तत्रापीति ।। तस्यामृच्यपि यातुशब्दस्य प्रवृत्तिनिमित्तं यातनैवेत्यर्थः । तत्प्रकारं दर्शयति ।। यात्यते इति यातुरिति ।। यात्यते खिद्यते इति कर्मव्युत्पत्त्या राक्षसो यातुरित्युच्यते । बहुलग्रहणात्कर्मण्युण्प्रत्ययसंभवादिति भावः । क्वचित् यातुरित्येव च प्रोक्त इति भाष्येनुवर्तमानराक्षस शब्दस्य रक्षोमात्रवाचकत्वं ज्ञेयम् । नतु पूर्ववत् रक्षस्वीवाचकत्वम् । तथा चायं मन्त्रार्थः । हे इन्द्र उलूकैर्घूकैर्यान्तुं यातनार्हं शिशून्लुनन्ति छिन्दन्तीति शिशुलूका बालहिंसकाः तैर्यातुं श्वभिःसारमेयैर्यातुं कोकैश्चक्रवाकैर्यातुं रक्षःराक्षसं जहि हन । तथा सुपर्णैर्गरुडजातिपक्षिभिर्यातुं गृध्रैश्च पक्षिविशेषैर्यातुं हिंस्यं रक्षःदृषदा पाषाणेनेव प्रमृण हिंसयेति । श्रुतौ यातुशब्दस्य पुंस्त्वं छान्दसम् ।। विशेषणमिति ।। प्रतीतये इत्यस्य रक्षस्विन इति विशेषणमित्यर्थः ।। २० ।।

### ऋक्संहिता पदपाठसहिता (सू-३७, व-१)

(४४२) क्रीळं वः शर्धो मारुतमनर्वाणं रथे शुभम् । कण्वा अभिप्रगायत ।। १ ।।

(प०) क्रीळम् । वः । शर्धः । मारुतम् । अनर्वाणम् । रथेऽशुभम् । कण्वाः । अभि । प्र । गायत ।। १ ।।

(४४३) ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः । अजायन्त स्वभानवः ।। २ ।।

(प०) ये । पृषतीभिः । ऋष्टिऽभिः । साकम् । वाशीभिः । अञ्जिऽभिः । अजायन्त । स्वऽभानवः ।। २ ।।

(४४४) इहेव शृण्व एषां कशा हस्तेषु यद्वदान् । नियामञ्चित्रमृञ्जते ।।३।।

(प०) इहऽइव । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् । नि । यामन् । चित्रम् । ऋञ्जते ।। ३ ।।

(ऋक्संहिता पदपाठसहिता)

(४४५) प्र वः शर्धाय घृष्वये त्वेष द्युम्नाय शुष्मिणे । देवत्तं ब्रह्मगायत ॥ ४ ॥

(प०) प्र । वः । शर्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे । देवत्तम् । ब्रह्म । गायत ॥ ४ ॥

(४४६) प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् । जम्भे रसस्य वावृधे ॥ ५, १२ ॥

(प०) प्र । शंस । गोषु । अघ्न्यम् । क्रीळम् । यत् । शर्धः । मारुतम् । जम्भे । रसस्य । ववृधे ॥ ५, १२ ॥

## ऋग्भाष्यम्

क्रीडाशीलं च मारुतम् । शर्धः सुखबलाढ्यं वाप्यनर्वाणमनिंद्रियम् । नवायोरिन्द्रियाणां हि देवाः संत्यभिमानिनः । अतोऽनिन्द्रियतातस्य रथे देहे शुभश्वसः । कण्वास्तं गायताभीक्ष्णं विष्णुं वा तादृशैर्गुणैः ॥ १ ॥ पृषत्यो वाहनान्येषामन्यदायुधमुच्यते । स्वप्रकाशोथ वा विष्णुस्तल्लिङ्गैर्व्यज्यते सह । तत्तद्देवगतस्यापि विष्णोर्लिङ्गं च तद्भवेत् ॥ २ ॥ यत्तेवदन्ति वचनं मेघनादात्मकं हि तत् । इहापि श्रूयत इव वर्णा व्यक्तेरिवेति च । हस्तेष्वेषां कशाः सन्ति चित्रं मार्गेऽधिगम्यते । रेण्वादिसर्ववस्तूनां गमनान्मार्गचित्रता । विष्णोस्सर्वं जगच्चित्रं मार्गे सम्प्रेर्यतेऽमुना ॥ ३ ॥ शोधकाय प्रधानाय वो बलायच वायवे । शुद्धायवा सुप्रकाशज्ञानायातिबलायच । गायत ब्रह्मदेवत्तं देवेषुततमीश्वरम् । प्रीतिर्वायोर्विष्णुगानाद्वेदाख्यं ब्रह्म विष्णवे । देवैरधीयमानत्वाद्देवत्तं ब्रह्म वैष्णवम् ॥ ४ ॥ अहं तव्यत्वतस्त्वघ्न्यं वायुं वृषभरूपिणम् । क्रीडंतं वेदरूपासु गोषु तं स्तुहि मारुतम् । माभिर्वेदैः स्तुतत्वेन मारुतो विष्णुरेव वा । भक्षणार्थं रसस्यासौ ववृधे मरुतां पिता ॥ ५, १२ ॥

## ऋग्भाष्यटीका

क्रीळम् । पञ्चदशर्चमिदं मारुतं सूक्तम् । तत्राद्या प्रधानमरुद्विषया । एवमेकवचनादन्यत्रापि ज्ञेयम् । शेषाः साधारणाः । क्रीडा । हे कण्वाः काण्वा मदीयाः । क्रीळम् । क्रीडं क्रीडाशीलम् । यद्यपि

(ऋग्भाष्यटीका)

पचाद्यच् इगुपधलक्षणः को वा कर्तृमात्रे विहितः । तथापि जगत्पालनादिक्रीडयाऽस्य न किमपि प्रयोजनमिति ज्ञाप (यितुमेवमुक्तं) नायैवमुक्तम् । शर्धः सुखाढ्यम् । बलाढ्यमपि वेति योज्यम् । अनर्वाणमनिन्द्रियम् । इन्द्रियाणि हयानाहुरिति श्रुतेः । यः स रथे प्राणिनां देहे शरीरं रथमेव चेति श्रुतेः । शुभः शोभावांश्च तम् । वो युष्माकं स्वामिनमिति शेषः । मारुतं च गुणैस्तादृशं क्रीडाशीलत्वादिगुणैः क्रीडादिशब्दवाच्यं विष्णुं वा विष्णुं चाभिप्रागायत स्तुत । विष्णोः प्राकृतविग्रहविधुरत्वाद्युक्तानिन्द्रियता । वायोस्तु कथमित्यत आह ॥ नेति ॥ इन्द्रियशब्देन तदभिमानिनोत्र विवक्षिता इति भावः ॥ १ ॥

ये पृषतीभिः । अत्र पृषत्यादिशब्दार्थमाह ॥ पृषत्य इति । एषां मरुताम् । अन्यदृष्ट्यादित्रयम् आयुधमायुधविशेषः ये स्वभानवोऽनागन्तुकतेजस्काः पृषतीभिर्ऋष्टिभिर्वाशीभिरंजिभिश्चसाकमजायन्त आजन्मन एवमाद्युपेताः । उत्तरत्र सम्बन्धः । विष्णावेतद्घटयितुमाह ॥ स्वप्रकाश इति ॥ स्वः स्वविषयो भानुः प्रकाशो ज्ञानं यस्यासौ स्वर्भानुरित्यर्थः । बहुरूपत्वाद्बहुवचनमित्युक्तमेव । तैः पृषत्यादिभिर्लिङ्गैः सह व्यज्यत इत्यनेन जन्मसमर्थितं तल्लिङ्गसाहित्यं कथमित्यत आह ॥ तत्तदिति । विष्णोरपीति सम्बन्धः । तच्च तदेव ॥ २ ॥

इहेव । यत्ते । ते मरुतः । यद्वचनम् । वदान्वदन्ति । लेट्याटीकारसंयोगान्तलोपयोः कृतयो रूपमेतत् । तदिहापि पृथिव्यां स्थितैरपि शृण्व इव श्रूयत इति । इवेति कस्मादुक्तमित्यत आह ॥ वर्णेति । तदपि कुत इत्यत आह ॥ मेघेति । तैःकृता मेधनादाः श्रूयंत इत्यर्थः । कथं ते मेघनादान् जनयन्ति । एषां मरुतां हस्तेषु मेघताडनार्थाः कशाः सन्ति । किञ्च । एषां मरुतां यामन् याम्नि । यांत्यस्मिन्नित्यतो मनिन् । मार्गे । चित्रम् आश्चर्यम् । निऋंजते ऋज्यते अधिगम्यते अनेकार्थत्वात् । कथं मार्गचित्रतेत्यत आह ॥ रेण्वादीति । मरुत्सु गच्छत्स्विति शेषः । वस्तूनां तन्मार्गस्थितानाम् । विष्णावुत्तरार्धमन्यथा व्याचष्टे ॥ विष्णोरिति ॥ विवक्षायामेवं व्याख्येयमिति शेषः । चित्रं नानाविधम् । सर्वं जगद्यामन्मार्गे स्वीये निऋंजते ऋज्यते सम्प्रेर्यतेऽमुना मरुद्गतेनेति । षष्ठ्यन्तं प्रकृतम् अर्थवशात्तृतीयान्तमनुवर्तते ॥ ३ ॥

प्रवः । शोधकाय । हे कण्वा वो युष्माकम् । शर्धाय बलाय । बलप्रदाय सुखप्रदाय च । घृष्वये घर्षतेः किः । जागृविरिति यथा । घर्षणेन शुद्धिर्लक्ष्यते । शोधकाय शुद्धाय वा । त्वेषद्युम्नाय सुप्रकाश ज्ञानायप्रतिबद्धज्ञानाय । शुष्मिणे वीर्यवते । अतिबलाय च । प्रधानाय वायव इति प्रकरणादितो लभ्यते । देवत्तं देवेषु ततम् । तनोतेस्तोडित् । ब्रह्म ईश्वरम् । प्रगायत प्रकर्षेण स्तुत । वाय्वर्थे विष्णुं स्तुतेति कथं सङ्गच्छत इत्यत आह ॥ प्रीतिरिति ॥ ततश्च विष्णुगानेन वायुं प्रीणयतेत्यर्थः । विष्णौ व्याख्याति । वेदाख्यमिति । शर्धादिपदोदिताय विष्णवे वेदाख्यं ब्रह्म गायतेति योज्यमिति । देवत्तमिति विशेषणं वेदे कथमित्यत आह ॥ देवैरिति । वैष्णवं ब्रह्म विष्णुविषयो वेदः । निर्वचनं तु पूर्वकृतमेव । इदं तु तदुपपादनम् ॥ ४ ॥

(ऋग्भाष्यटीका)

प्रशंस। अहं तव्यत्वतः। आत्मानं प्रत्येवेदमुच्यते। हे कण्व। योसौ। रसस्य सोमस्य जम्भे। तादर्थ्ये सप्तमी। भक्षणार्थम्। ववृधे प्रकटो बभूव। यच्च वस्तु शर्धः सुखाढ्यं बलाढ्यं वा। तमहंतव्यत्वतः कारणादघ्न्यम्। वेदरूपासु गोषु वेदाभिमानिनीषु धेनुषु क्रीळं क्रीडन्तम्। अर्थाद्वृषभरूपिणं मारुतं वायुम्। प्रशंस स्तुहि। मारुत शब्दार्थो वायुरित्युक्तं विष्णुरेव वा मारुतः कथं माभिः प्रमाणैः वेदैरिति यावत् रुतत्वेन शब्दितत्वेन स्तुतत्वेन। रु शब्दे। यद्वा मरुतामयं मारुतः सम्बन्धश्च पितापुत्रत्वरूप इत्याह। मरुतां पितेति॥ ५,१२॥

## मन्त्रार्थमञ्जरी

अथ 'क्री॒ळं व॒:' इत्यादि पञ्चदशर्चं वर्गत्रयात्मकं मारुतं गायत्रं सप्तत्रिंशं सूक्तम्। तत्र आद्या (चतुर्थी पञ्चमीच) प्रधानमरुद्विषया, शेषाः साधारणाः। (हे) कण्वाः। क्रीळम्, क्रीडम्, क्रीडतेः पचाद्यच्, इगुपधलक्षणः कप्रत्ययो वा, क्रीडमानम्। शर्धः, सुखाढ्यम्, बलाढ्यमपि वा। अनर्वाणम्, अनिन्द्रियम्, इन्द्रियाभिमानिदेवताहीनम्, 'इन्द्रियाणि' हयानाहुर् (का० उ० १।३४) इति श्रुतेः। यो रथे प्राणिनां देहे– 'शरीरं रथमेव च' (का० उ० १।३।३) इति श्रुतेः– शुभः शोभावाँश्च तम् (रथेशुभम्)। वः, युष्माकम्। (स्वामिनम्) इति शेषः। मारुतम् (च) क्रीडाशीलत्वादिगुणैः क्रीडादिशब्दवाच्यं विष्णुम् (च) अभि प्र गायत, स्तुवीत॥ १॥

ये। स्वभानवः, अनागन्तुकतेजस्काः। 'पृषतीभिः, वाहनैः। (ऋष्टिभिः) वाशीभिः अञ्जिभिः (च), ऋष्ट्यादिनामकायुधविशेषैः। साकम् अजायन्त, आजन्मन एवायुधाद्युपेताः। विष्णुपक्षे तु स्वः स्वविषयो भानुः प्रकाशो ज्ञानं येषां ते– स्वभानवः। ये, भगवद्रूपविशेषाः, बहुरूपत्वाद्बहुवचनम्, 'ॐ गुहां प्रविष्टावात्मानौ' (१।२।११) इत्युक्तन्यायात्। (पृषतीभिः ऋष्टिभिः वाशीभिः अञ्जिभिः (च) पृषत्यादिनामकवाहनायुधविशेषैः। उत्पद्यमानमरुत्सु व्यज्यन्त इति विष्णुरूपविशेषा अपि 'पृषत्यादिभिः (साकम्) अजायन्त' इति युज्यते, 'ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ' (१।३।१) इत्यत्राजस्यापि व्यक्तिरूपजनेरुक्तत्वात्, मरुत्वलिङ्गानामपि 'ॐ शास्त्रदृष्ट्या तूपदेशो' (१।१।३०) इत्युक्तन्यायेन तत्तदन्तर्यामिगतत्वेनोपपत्तेः इति। अत्र यद्शब्दस्योत्तरत्र अन्वयः॥ २॥

(ते) मरुतः। यत्, वचनम्। वदान्, वदन्ति, 'वद व्यक्तायां वाचि' इत्यतः 'लेटोऽडाटौ' इत्याकारसंयोगान्तलोपयोः कृतयो रूपम्। (तत्) (इहेव शृण्वे) इहापि पृथिव्यां स्थितैरपि शृण्व इव श्रूयत इव, तैर्वर्णानामभिव्यक्तेरिव इत्युक्तम्, तैः कृता मेघनादाः श्रूयन्ते– इत्यर्थः। ते कथं

(मन्त्रार्थमञ्जरी)

मेघनादाञ्ज(न)यन्ति ? इति एषाम्, मरुताम्। हस्तेषु। मेघताडनार्थाः कशाः (सन्ति) किं च, (एषाम्) यामन्, याम्नि, यान्त्यस्मिन्नित्यतो मनिन्, मार्गे। चित्रम्, आश्चर्यम्। नि ऋञ्जते, अधिगम्यते, 'ऋञ्ज गतौ' मरुत्सु गच्छत्सु रेण्वादिसर्ववस्तूनां तैः सह गमनान्मार्गे चित्रता ज्ञेया। विष्णुविवक्षायां तु– चित्रम् नानाविधम्, सर्वं जगत्। यामन्, मार्गे, स्वीये स्वीये मार्गे। नि ऋञ्जते, न्यृज्यते, सम्प्रेर्यते मरुद्गतेन रूपेण– इति योज्यम् (शिष्टं स्पष्टम्) ॥ ३ ॥

(हे कण्वाः) वः युष्माकम्। शर्धाय, बलाय, बलप्रदाय, सुखप्रदाय च। घृष्वये, घर्षतेः क्विन्, 'जागृविः' इति यथा, घर्षणेन शुद्धिर्लक्ष्यते, शोधकाय, शुद्धाय वा। त्वेषद्युम्नाय, सुप्रकाशज्ञानाय। शुष्मिणे, वीर्यवते, अतिबलाय च। (प्रधानाय वायवे) इति प्रकरणादितो लभ्यते। देवत्तम्, देवेषु ततम्, तनोतेः तप्रत्ययो डिच्च। ब्रह्म, ईश्वरम्। प्र गायत, प्रकर्षेण स्तुत, वाय्वर्थे विष्णुं स्तुत– इति, विष्णुगानेन वायुं प्रीणयत इत्यर्थः। विष्णुपक्षे तु– शर्धादिपदोदिताय विष्णवे। देवत्तम्, देवैरधीयमानत्वेन देवेषु ततम्। वेदाख्यम्। ब्रह्म। गायत– इति योज्यम् (शिष्टं स्पष्टम्॥ ४ ॥

आत्मानं प्रत्येवेदमुच्यते (हे कण्व) (यत्) यः, असौ। रसस्य, सोमस्य। जम्भे, तादर्थ्ये सप्तमी, भक्षणार्थम्। ववृधे, प्रकटो बभूव। (यत्) (च) यश्च। शर्धः, सुखाढ्यः, बलाढ्यो वा (तम्)। अहन्तव्यत्वतः कारणात्– अघ्न्यम्। वेदरूपासु– गोषु, वेदाभिमानि (नी)षु धेनेषु क्रीळम्, क्रीळन्तम्, क्रीडन्तम्, अर्थात्– वृषभरूपिणम्। मारुतम्, वायुम्। प्र शंस, स्तुहि। माभिः प्रमाणै रुतत्वेन (स्तुतत्वेन) मारुतम्, विष्णुं वा। प्र शंस। इत्यर्थः ॥ ५ ॥ इति द्वादशो वर्गः ॥ १२ ॥

## रूपावतारः

क्रीळं वः ॥ ननु कीळमित्यस्य क्रीडाशीलमिति व्याख्यानमयुक्तम्। ताच्छील्ये अच्कयोरविधानादित्याशङ्कते। यद्यपीति। परिहारमाह। तथापीति। न प्रत्ययार्थत्वेन ताच्छील्यमुक्तम्। किं तु स्वरूपकथनाय आचार्येणैवैवमुक्तमिति भावः ॥ १ ॥

ये ॥ उत्तरत्र संबन्ध इति। ये इत्यस्येति शेषः। तथाच य एवमजायन्त ते यद्वदन्ति तदिहैव श्रूयत इति उत्तरऋचां संबन्ध इत्यर्थः ॥ २ ॥

इहेव ॥ लेट्याटीति। वेदे लेटि आडागमे झेरन्तादेशे 'इतश्च लोपः परस्मैपदेषु' (३।४।९७) इति इकारलोपे संयोगान्तलोपे वदानिति रूपमिति भावः। शृण्व इति ॥ श्रुणोतेः श्नुप्रत्यये 'श्रुवः शृ च' (३।१।७४) इति शृभावे कर्मणि लटस्तादेशे एत्वे तकारलोपे यणादेशे शृण्व इति रूपम्।

(रूपावतारः)

ऋञ्जत इति । कर्तृप्रयोगः छान्दस इति भावेनाह । ऋज्यत इति । इदितः ऋजूधातोः कर्मणि यकि नुमि ऋज्यत इति रूपम् । षष्ठचन्तं प्रकृतमिति । एषामिति षष्ठचन्तं प्रकृतं अर्थवशादनेनेति तृतीयान्तमनुवर्तते । तस्यार्थः अमुनेति भाष्यकारैरुक्त इति भावः ॥ ३ ॥

प्रवः ॥ ननु 'वेरपृक्तस्य' (६।१।६७) इति वेर्लोपः स्यादित्यत आह । जागृविरिति यथेति । जागर्तेर्विहितस्य क्विनो विशब्दस्य 'उणादयो बहुलम्' (३।३।१) इत्युक्तत्वात् यथा लोपो न भवति तथात्रापि वेर्लोपो न भवतीति भावः । निर्वचनमिति । देवेषु ततमिति पूर्वोक्तमेव निर्वचनम् । इदंत्विति देवैरधीयमानत्वादित्येतत्तु देवेषु ततेरुपपादकमिति भावः ॥ ४ ॥

प्रशंस ॥ शर्धशब्दस्य नपुंसकत्वात् विशेष्यं नपुंसकशब्देनाह । यच्च वस्त्विति । अघ्न्यमिति । हन्तेर्भावे कप्रत्यये उपधालोपे हकारस्य कत्वे घ्नेति रूपम् । अर्हार्थे यत्प्रत्यये नञ् समासे अघ्न्येति रूपम् । मारुतशब्दसिद्धिं स्मारयति रुशब्द इति ॥ ५ ॥ १२ ॥

## पदार्थप्रकाशिका

क्रीळं वः शर्धो मारुतम् । क्रीळं पञ्चोनं वा मारुतमित्यनुक्रमणिकानुसारेणाह पञ्चदशर्चमिदं मारुतं सूक्तमिति । पञ्चदशेति पञ्चोनेत्यस्यार्थः । विंशतिऋङ्मध्ये पञ्चोनत्वे पञ्चदशत्वं सम्पद्यत इति भावः । आद्या । ऋक् । प्रधानेति । मुख्यप्राणेत्यर्थः । मारुतमित्येकवचनात् । मारुतां तु बहुत्वादिति भावः । एतन्यायमन्यत्राप्यतिदिशति । एवमिति । मारुतेऽस्मिन्सूक्ते यत्र ऋचि मारुतमित्येकवचनं दृश्यते प्रशंसागोष्वघ्न्यं क्रीळं यच्छर्धोमारुतमित्यादौ तत्र सर्वत्रापि प्रधानमरुत एव देवतात्वमिति ज्ञातव्यमित्यर्थः । शेषाः एकवचनरहिताः ऋचः । साधारणाः प्रधानाप्रधानमरुत्साधारणा इत्यर्थः । मदीया इति मत्पुत्रा मेधातिथ्यादय इत्यर्थः । ननु क्रीडविहारेऽस्मात् कर्तरि पचाद्यचि क्रीडेति प्रातिपदिकं सिध्यति । अथवा क्रीड्धातोरिगुपधत्वेन इगुपधज्ञाप्रीकिरः क इति सूत्रेण कर्तरि कप्रत्यये कित्वाद्गुणाभावे क्रीडेति प्रातिपदिकं सिध्यति । पश्चात्स्वाद्युत्पत्तौ क्रीडमिति भवति । एवं च अच्प्रत्ययस्य कप्रत्ययस्य वा कर्तृमात्रे विहितत्वात् क्रीळमित्यस्य क्रीडाकर्तारमित्येवार्थ आयास्यति न तु क्रीडाशीलत्वम् । ताच्छील्यस्याच्प्रत्ययाद्यर्थत्वाभावात् । अतः क्रीडाशीलमिति कथमुक्तं भाष्य इत्याशंक्य नेदं ताच्छील्यं कप्रत्ययाद्यर्थत्वेनोक्तं किंनामैषा जगत्पालनादिरूपा क्रीडाऽस्य स्वभावभूतैव न स्वप्रयोजनार्थेति वस्तुस्थितिज्ञापनायैवेत्याह यद्यपीत्यादिना । कर्तृमात्र इति । न ताच्छील्य इत्यर्थः ।

(पदार्थप्रकाशिका)

सुखबलाढ्यमिति शर्धःशब्दस्यैक एवार्थ उक्तः प्रतीयते अतो योजयति सुखाढ्यमित्यादि। शकारस्य सुखबलवाचित्वात् रूढ्यशब्दपूर्णत्वापरपर्यायाढ्यतावाचित्वात् शर्धशब्दस्य सुखाढ्यमित्यादिव्याख्यानद्वयं युक्तमिति भावः। यद्यपि शर्ध इति सकारान्तनपुंसकलिङ्गस्य शर्धस् शब्दस्य द्वितीया तथापि छांदसेन लिङ्गव्यत्ययेन मारुतविशेषणत्वं युक्तमिति द्रष्टव्यम्। यद्वा क्रीडाशीलं मरुदाख्यं वस्तु तत् शर्ध इति योज्यम्। उत्तरत्र प्रशंसागोष्वघ्न्यमित्यत्रैवमेव योजितत्वात्। अर्वन्शब्दस्य हयवाचित्वात् श्रुतौ इन्द्रियाणामपि हयत्वोक्तेरनर्वाणमित्यस्यानिन्द्रियमिति व्याख्यानं युक्तमित्याह इन्द्रियाणीति। ऋचि शुभमिति द्वितीयास्ति भाष्ये शुभश्च स इति प्रथमास्ति अतो योजयति। यः स इति। देहस्य रथत्वे श्रुतिमाह शरीरमिति। शुभ शोभायामिति धातोः शोभावानित्युक्तम्। वो मारुतमित्यसङ्गतमतः स्वामिनमिति शेषः पूरित इति ध्येयम्। मारुतं चाभिप्रगायतेति सम्बन्धः। चशब्दो मारुतविष्ण्वोः परस्परसमुच्चयार्थः। विष्णुं चेत्युक्त्या भाष्ये वाशब्दश्चशब्दार्थ इत्युक्तं भवति। तथाच मारुतं च विष्णुं चाभिप्रगायतेत्युक्त्योभयोरप्येकदैव दृक्प्रतिपाद्यताभिप्रेतेत्युक्तं भवति। भाष्ये न्यूनतां परिहरन्नेवावतारयति विष्णोरिति। युक्तेति। भिन्नेन्द्रियाभावादिति भावः। कथमिति। तस्य प्राकृतदेहवत्वेन भिन्नेन्द्रियसद्भावात्कथमिन्द्रियत्वमिति भावः। तदभिमानिन इति। प्राकृतदेहवत्वेन भिन्नेन्द्रियसद्भावेपि तदभिमानिदेवानामभावादनिन्द्रियत्वोक्तिर्युक्तेति भावः। अत्र वायुशरीरे इन्द्रियादितत्वानां सद्भावेन तदभिमानिनोऽपि देवाः सन्ति तथापि तत्प्रेरकत्वेनाभावाभिप्रायेणैव न वायोरिन्द्रियाणां हि देवाः सन्त्यभिमानिन इत्युक्तं नत्वभावाभिप्रायेणेत्यवगन्तव्यम्। अत्र हिशब्देन प्रमाणप्रसिद्धिरुक्ता। यथोक्तम्। तत्वाभिमानिनो देवाः ब्रह्मवायुशरीरयोः। संत्याज्ञाधारकत्वेन न तयोस्ते नियामका इतीति सम्प्रदायविदः॥ १॥

ये पृषतीभिर्ऋष्टिभिः। येषामिति। एषां मरुतां वाहनानि पृषत्यः। कृष्णमृगवध्वो हरिण्यः। ताः पृषतीभिरित्यनेनोच्यत इत्यर्थः। अन्यदिति। पृषतीतिरित्युक्तादन्यत्। ऋष्टिभिरित्यादिनोक्तं रिष्टादित्रममित्यर्थः। तथाच पृषतीभिर्हरिण्याख्यैर्वाहनैः ऋष्टिभिर्वाशीभिः रंजभिस्तन्नामकायुधविशेषैरित्यर्थो द्रष्टव्यः। अनागन्तुकेति स्वशब्दार्थः। साकमजायन्त इत्यस्याभिप्रायमाह आजन्मेति। उत्पत्तिमारभ्येत्यर्थः। एवमाद्युपेता इति। पृषत्यादि वाहनाद्युपेता इत्यर्थः। उत्तरत्र सम्बन्ध इति। ये एवमजायन्त ते यद्वदन्ति तत् इहैव शृण्वे श्रूयत इत्येवमुत्तरऋचा सम्बन्धो द्रष्टव्य इत्यर्थः। एतद्घटयितुमाहेति। पृषत्यादिभिः साकमजायन्तेत्येतत्। तल्लिङ्गैर्व्यज्यते सहेत्यनेन घटयितुमादौ स्वभानुशब्दार्थमाहेत्यर्थः। नन्वेकस्य विष्णोः स्वभानव इति बहुवचनान्तशब्दवाच्यत्वं

(पदार्थप्रकाशिका)

कथमित्यत आह बहुरूपत्वादिति । इत्युक्तमेवेति । द्रप्सा मध्वश्चमूषद इत्यत्र भाष्ये बहुरूपत्वतश्चैवेत्यनेनोक्तमेवेत्यर्थः । तल्लिङ्गैरित्येतद्व्याचष्टे । तैरिति । लिङ्गैः चिह्नैः । कथमिति । गरुडवाहनस्य सुदर्शनाद्यायुधधारिणो विष्णोः पृषत्यादिलिङ्गसाहित्यं कथमित्यर्थः । चशब्द एवार्थे तदित्यनेन सम्बध्यत इत्याहुः । तच्च तदेवेति । तथा च मरुदाद्या देवा पृषत्यादिभिर्लिङ्गैः सह यदा जायन्ते तदा तद्देवान्तर्गतस्य विष्णोरपि तच्च तदेव पृषत्यादिरूपवाहनाद्येव लिङ्गं चिह्नं भवेत् । अतो नानुपपत्तिरिति भाष्यार्थः । गरुडादिरूपं वाहनादि बहिस्थस्यैव विष्णोर्मतव्यमिति भावः ॥ २ ॥

इहेव शृण्व एषाम् । वदान् इत्येतत्कथमित्यत आह लेट्याटीति । तथाच वद व्यक्तायां वाचीति धातोर्लेटि तस्य बहुवचने झीत्यादेशे लेटोडाटाविति आट् इत्यागमे टित्वादादौ जाते वद आझीति जाते सवर्णदीर्घे वदाझीति जाते झोंतरिति सूत्रेण झकारस्य अन्तादेशे वदा अन्त इ इति जाते निर्वचनत्वात् इकारलोपे अकारस्य पूर्वरूपे वदान् तेति जाते संयोगांतस्य लोप इति सूत्रेण वदानित्यस्य तिङन्तत्वेन पदत्वात्तदन्तस्य तकारस्य लोपे च सति वदान् इति लेटि रूपमित्यर्थः । तदपीति । वर्णाव्यञ्जनमपीत्यर्थः । मेघेतीति । यद्यपीदं वाक्यं वर्णेति वाक्यात्पूर्वमेवास्तीति तथैव योजनीयं तथाप्याकांक्षानुसारेण व्यत्यासेन योजितमित्यवधेयम् । तैर्मेघैः । कृतेति । कारितेत्यर्थः । एषामित्यस्यार्थो एषामिति । नादाः ध्वनयः । तथाच ते मरुतो यत् वचनं वदान् वदन्ति वादयन्त इति तत् वचनं मेघनादात्मकं मेघध्वन्यात्मकं हि यस्मात्तस्माद्वर्णाव्यक्तेः हेतोरिवेत्युक्तमिति भाष्यार्थो द्रष्टव्यः । तथाच कशाताडनेन सर्वश्रोत्रप्रत्यक्षसिद्धमेघनादकारयितृत्वमहिमोपेता मरुत इति पूर्वार्धस्य मरुतत्वसिद्धिरित्यवगन्तव्यम् ।

यान्त्यस्मिन्नित्यतो मनिन्निति । या प्रापणेऽस्मात् यान्त्यस्मिन्नित्यधिकरणार्थे आतोमनिन्क्-निब्वनिपश्चेति सूत्रेण मनिन् प्रत्यये इन् इत्यस्य लोपे सति यामन् इति रूपम् । रञ्ज् राग इति रंज् धातोः रागार्थत्वादधिगमनार्थत्वं कथमित्यत आह अनेकार्थत्वादिति । धातूनामिति शेषः । तन्मार्गेति । मरुतो येन मार्गेण गच्छन्ति तन्मार्गस्थितानामित्यर्थः । तथा च मरुत्सुगच्छत्सु सत्सु तन्मार्गस्थिते षु रेणुतृणपर्णादिरूपसर्वपदार्थानां गमनादपसरणाद्धेतोर्मार्गस्य नैर्मल्यं भवतीति मेघ चित्रत्वं मार्गस्येति भावः । सर्वजनशुद्धिहेतुभूतमार्गशुद्धिकरत्वमहिमोपेता मरुत इत्येवमुत्तरार्धस्य मारुतत्वसिद्धिर्द्रष्टव्या । विष्णोरमुनेत्यन्वयासम्भवादाह विवक्षायामिति । तथा च विष्णोरिति पृथग्वाक्यमिति भावः । सर्वं जगत् । स्वीये मार्गे । सम्प्रेर्यत इति । निरोर्थः समिति । धातुनामनेकार्थत्वादिति भावः । अमुनेत्यनूद्यार्थमाह मरुद्गतेनेति । सम्प्रेर्यत इत्यत्र

(पदार्थप्रकाशिका)

कर्तृवाचकपदस्यापेक्षितत्वात्पूर्वं विद्यमानस्य एषामिति मरुद्वाचकपदस्यात्रानुवृत्तिरभिप्रेतेत्याशयेनामुनेत्युक्तम् । तस्य च षष्ठ्यन्तत्वादमुनेति कथमर्थ उक्त इत्यत आह षष्ठ्यन्तमिति । मरुद्गतविष्णुपक्षे योजनायाः क्रियमाणत्वेनामुना मरुतेति व्याख्यानायोगादमुना मरुद्गतेनेत्युक्तम् । तथा चैषामिति मरुद्वाचकं पदं षष्ठ्यन्तमर्थवशादमुना मरुद्गतेनेति तृतीयान्तं सत् अनुवर्तत इत्यन्वयो द्रष्टव्यः । अन्ये तु अमुनेत्यस्य विशेष्याकांक्षायां विष्णोरिति षष्ठ्यन्तं प्रकृतं पदमर्थवशाद्विष्णुनेति तृतीयान्तमनुवर्तते तथाचामुना विष्णुनेति विशेषणविशेष्यभावो द्रष्टव्य इत्याशयेनाह । अमुना मरुद्गतेनेति भाष्यं तमित्यादिनेत्याहुः । अस्मिन्पक्षेऽमुना विष्णुनेति वक्तव्यतया मरुद्गतेनेतीत्यस्यावक्तव्यत्वात् । अस्तु वा तथोक्तिस्तथापि अमुना मरुद्गतेन विष्णुनेतीति वक्तव्यं तमित्यस्वरसः प्रतिभाति ॥ ३ ॥

प्रवः शर्धाय घृष्वये । हे कण्वा इति मदीया इत्यर्थः । घर्षतेः क्विरिति । कित्वाद्गुणाभावः । अन्यथा घर्ष्वीति स्यादिति द्रष्टव्यम् । तथाच घृष घर्षणेऽस्मात्क्विप्रत्यये लशक्वतद्धित इति ककारलोपे घृष्वीति प्रातिपदिकसिद्धिः पश्चात्स्वाद्युत्पत्तौ घृष्वय इति घृष्विशब्दस्य चतुर्थीति भावः । तथा च घर्षयतीति घृष्विरिति व्युत्पत्तिः । ननु यथा क्विप्रत्ययान्तर्गतस्य ककारस्य लोपः । एवं वीत्यस्य लोपः कस्मान्न क्रियते । वीत्यस्य एकाच्प्रत्ययत्वेनापृक्तत्वात् वेरपृक्तस्येति सूत्रेण तस्यापि लोपसम्भवात् । तथा च घृष्वीति रूपं न सिध्येदित्याशङ्क्य उक्तसूत्रेण अन्यत्र क्वचित्स्थितस्य वीत्यस्य लोपसम्भवेपि क्विप्रत्ययान्तर्गतस्य वीत्यस्य लोपो न सम्मतः अन्यथा जागृविर्देववीतय इत्यादौ जागृविरिति न सिध्येत् । जागृ निद्राक्षयेऽस्मात् क्विप्रत्यये ककारमात्रलोपे सति हि जागृविरिति रूपं भवति । यदि ककारवद्वीत्यस्यापि लोपः संमतः स्यात् तर्हि जागृ इत्येव स्यान्न जागृविरिति । अतो जागृविरिति वैदिकप्रयोगसिध्यर्थं क्विप्रत्ययान्तर्गतस्य लोपो न वैय्याकरणानां संमतस्तद्वत्प्रकृतमित्यभिप्रेत्याह जागृविरिति यथेति । तथेदमपीति भावः । केचित्तु घृषधातोः क्विप्रत्ययः उपसर्गे घोः क्विरिति सूत्रेण वक्तव्यः स न युक्तः । अत्र उपपदस्योपसर्गस्याभावात् । दाधाघ्वदाबिति दारूपाणां धारूपाणां च धातूनां घुसंज्ञिकत्वोक्तेः घृषधातोश्च तदुभयरूपत्वाभावात् कथमनेन सूत्रेण क्विप्रत्यय इत्याशंक्य जागृविरित्यादिप्रयोगसिध्यर्थं उपसर्गे घोरित्येकं वाक्यं क्विरित्यपरं वाक्यं अन्यस्मादपि धातोः क्विप्रत्ययो भवतीति द्वितीयवाक्यार्थ इत्येवं योगविभागः कैश्चिद्वैय्याकरणैः कृतोऽतः प्रकृतेऽपि तद्वदुपपत्तिरित्याशयेनाह जागृविरिति यथेतीत्याहुः ।

शुद्धिर्लक्ष्यत इति । ताम्रादेराम्लादिना घर्षणे सति शुद्धेर्जननदर्शनात् घर्षणशुद्ध्योः कार्यकारणभावसम्बन्धो लक्षणाबीजमस्तीति भावः । शोधकार्येत्युक्त्या णिजन्तात् घर्षतेः कर्तरि

(पदार्थप्रकाशिका)

क्रिरित्युक्तं भवति। तथा च परेषां शुद्धिकर्त्रेत्यर्थः। शुद्धायेत्यनेन कर्मणि क्रिरित्युक्तं भवति। त्वेष शब्दार्थः सुप्रकाशेति। द्युम्नं द्युतिः। द्युतिश्च ज्ञानम् इत्यभिप्रेत्य द्युम्नशब्दार्थ उक्तो ज्ञानेति। ज्ञानस्य सुप्रकाशत्वं नाम कदाप्यप्रतिबद्धत्वमेवेत्यभिप्रेत्याह अप्रतिबद्धेति। वीर्यवत इति। शुष्मिन् शब्दस्य वीर्यनामसु पाठादित्थं व्याख्यातम्। तात्पर्यकथनपरं भाष्यं संयोजयति अतिबलायेति। वाय्वर्थमित्यर्थः। प्रकरणादित इति। आदिपदेन घृष्वय इत्याद्येकवचनं ग्राह्यम्। तथाच मारुतसूक्तत्वेन तत्प्रकरणत्वाद्वायुत्वं एकवचनबलात्तस्य प्रधानत्वं गम्यत इत्यर्थः। तनोते-स्तोडिदिति। तनोतेस्तप्रत्ययः स च प्रत्ययो डित्कार्यभूतटिलोपकारी विवक्षित इत्यर्थः। तथा च देवशब्दोपपदात् तन् विस्तारेऽस्मात्तप्रत्यये डित्कार्यकारित्वेन विवक्षितत्वात् तद्बलाट्टीभूतस्यान् इत्यस्य लोपे देवत् त देवत्तेति रूपमिति भावः। ईश्वरं विष्णुम्। कथं सङ्गच्छत इति। असङ्गतमित्यर्थः। वायुं प्रीणयतेति। तथा च वायवे वायुप्रीत्यर्थमित्यर्थो द्रष्टव्य इत्युक्तं भवति। विष्णव इति। तथा च वेदगानेन विष्णुं प्रीणयतेत्यर्थः। एवं च विष्णवे विष्णुप्रीत्यर्थमित्यर्थो द्रष्टव्यः। विष्णुपक्षे देवत्तमित्यस्य कथं निर्वचनमित्यत आह निर्वचनं त्विति। देवेषु ततमिति पूर्वकृतमेव निर्वचनमित्यर्थः। ननु निर्वचनं पूर्वकृतमेव चेत्तर्हि देवैरधीयमानत्वाद्देवत्तमिति भाष्यमसङ्गतमिति चेत्तत्राह इदं त्विति। वेदस्य देवेषु ततमिति व्युत्पत्त्या देवत्तत्वोक्तौ कथं वेदस्य देवेषु ततत्वमित्याशंकायां देवैरधीयमानत्वेन वेदस्य देवेषु ततत्वमित्येवं वेदस्य देवेषु ततत्वोपपादनार्थमेवेदं भाष्यं प्रवृत्तं न तु देवत्तशब्दनिर्वचनायेत्यर्थः ॥ ४ ॥

प्रशंसागोष्वघ्न्यम् प्रशंसेत्येकवचनस्वारस्यादाह आत्मानं प्रत्येवेति। आत्मानम् स्वात्मानम्। इदं एतदुक्तं प्रमेयम्। उच्यते। कण्वेन। अहंतव्यत्वत इति। वैरिभिरिति शेषः। बलाढ्यत्वादेवेति भावः। धेनुषु भारतीरूपेषु। अर्थादिति। धेनुषु वृषभस्यैव क्रीडमानत्वदर्शनादत्रापि वायोर्गोषु क्रीडमानत्वोक्त्याऽर्थाद्वृषभरूपित्वं लब्धमिति भावः। मरुतामयमिति। मरुतां सम्बन्धीत्यर्थः। तथा च मरुच्छब्दात्तस्येदमित्यर्थेऽण्प्रत्यये णित्वादादिवृद्धौ मारुतेति रूपं भवतीत्याशयः ॥५,१२ ॥

## पदार्थदीपिका

एवमिति। क्रीळं व इति मन्त्रस्येवोत्तरमन्त्राणामपि प्रधान मरुद्विषयत्वं ज्ञातव्यमित्यर्थः। तर्ह्यतिप्रसंग इत्यत उक्तं एकवचनादिति। यत्र मन्त्रे मारुतमित्येकवचनं श्रूयते प्रशं सा गोष्वघ्न्यमित्यादौ तत्र प्रधानमरुद्विषयत्वस्याभिप्रेतत्वान्नातिप्रसंग इति भावः। कर्तृमात्रे विहित इति। तथा च क्रीडाकर्तृमात्रस्यैव तेन लाभो न क्रीडाशीलत्वस्येति तथा व्याख्यानमयुक्तमिति भावः।

(पदार्थदीपिका)

इति ज्ञापनायेति। तथा च तात्पर्योक्तिरियं न पदार्थोक्तिः। पदार्थस्तु क्रीडाकर्तृत्वमेवेति भावः। शर्धो बलाढ्यमिति। शर्धयत्यनेन शत्रूनिति शर्धो बलं श्रुधु प्रसहन इत्यस्मादसुनिति भावः। शुभ इति। शुभ दीप्तौ। रथे शोभत इति रथेशुप्। क्विप्चेति क्विप्। तत्पुरुषे कृति बहुलमिति भावः। स्तुतेति। कैगैरै शब्द इति स्मरणादिति भावः॥ १॥

अजायन्तेति। जनी प्रादुर्भाव इत्यस्मात् श्यनि ज्ञाजनोर्जेति जादेशः। अडागमश्चेति भावः। तात्पर्यार्थमाह। आजन्मन इति। उत्तरत्रेति॥ २॥

लेटीति। उपलक्षणमेतत्। इतश्च लोपः। परस्मैपदेष्विति इकारलोपश्चेत्यपि द्रष्टव्यम्। शृण्व इति। श्रु श्रवण इत्यस्मात् व्यत्ययेनात्मनेपदम्। श्रुवःश्रु चेति श्रुभावः। हुश्रुवोःसार्वधातुक इति यणादेश इति भावः। यामन्निति। सुपां सुलुगिति सप्तम्या लुक्। न ङिसंबुध्योरिति निषेधान्नलोप इति भावः। रुंजत इति। अधिगम्यत इति व्याख्यातं तत्कथं ऋजी वर्जन इति अन्यार्थत्वस्मरणादित्यतः तस्य वर्जनार्थत्वेपि ऋंजतिःप्रसादनकर्मेति यास्कोक्तेरनेकार्थत्वेन प्रसादन कर्मत्वादधिगम्यार्थत्वस्यापि तेनैवोपपन्नत्वान्नानुपपत्तिरित्याशयेनाह। अनेकार्थत्वादिति। षष्ठ्यन्तमिति। श्रुतौ येषामिति यत् षष्ठ्यन्तं तदित्यर्थः॥ ३॥

शर्धाय बलायेति। श्रुधु प्रसहन इत्यस्मात् पचाद्यजिति भावः। घर्षतेःक्रिरिति। घर्ष संघर्ष इत्यस्मात् बाहुलकात् क्रिप्रत्यये कित्वात् गुणाभावे घृष्विशब्दनिष्पत्तिरिति भावः। ननु चादृष्टाश्रुतपूर्वत्वात् कथं क्रिप्रत्ययो व्याख्यायते इत्यतस्तत्र सम्प्रतिपन्नं दृष्टान्तमाह। जागृविरिति यथेति। जागृ निद्राक्षय इत्यस्मात् क्रिप्रत्यये कित्वाद्गुणाभावे जागृविरिति शब्दनिष्पत्तिर्यथेत्यर्थः। यद्यप्यत्र घृष संघर्षे संघर्षयत्यस्मात् कृवि घृषीत्यादिना क्विन् व्युत्पादकवेदापव्याख्यानरीत्या दार्ष्टान्तिकस्य जागृ निद्राक्षय इत्यतश्च जृभृसृजागृभ्यःक्विन्निति क्विन् व्युत्पादकतद्रीत्यैव दृष्टान्तस्याप्यन्यथासिद्धत्वान्न बाहुलकाश्रयणेन क्रिप्रत्ययव्युत्पादनमुचितम्। न तत्रापि क्रिप्रत्यय एवाभिप्रेत इति वाच्यम्। नित्वादाद्युदात्तत्वविधानानर्थक्यप्रसंगात्। तथापि प्रकारान्तरमेतदित्यदोष इत्याहुः। अत्रापि क्विन् प्रत्यय एवाभिप्रेतः क्रिरिति तु एकदेशानुवादःप्रकृतोपयोगादित्यप्याहुः। डिदिति। डित्वाट्टेरिति टिलोप इति भावः। पूर्वमेवेति। देवेषु ततं देवत्तमिति पूर्वमेवात्र निर्वचनमित्यर्थः॥ ४॥

अहन्तव्यत्वतः अघ्न्यमिति। घो हननं घञर्थे कविधानामिति कः। गमहनेत्यादि-नोपधालोपः। होहन्तेरिति घत्वम्। तदर्हतीति घ्न्यम्। छन्दसि चेति यः। न घ्न्यःअघ्न्यमिति व्याख्यातं भवति। यद्वेति। इदमर्थे तस्येदमित्यणि व्यत्ययेनाद्युदात्तत्वमिति भावः॥ ५, १२॥

## टीकाविवृतिः

क्रीळं वः ॥ पञ्चदशर्चमिति ॥ तदुक्तमनुक्रमणिकायाम् । क्रीळं पञ्चोना मारुतं हि गायत्रं त्विति । क्रीळं वःशर्द्ध इति सूक्तं पञ्चरहितविंशति संख्याकं मरुद्देवताकं गायत्रीछन्दस्कं च हिशब्दादिदमुत्तरे द्वे इति त्रीणि सूक्तानि मरुद्दैवत्यानि । तुशब्दादिदमुत्तरं चेति सूक्तद्वयं गायत्री छन्दस्कं तुहि हवैतच्छब्दविशिष्टान्यृषिदैवतछन्दांसि द्वित्रिचतुष्पंचषट्सूक्तभांजीति- परिभाषोक्ते-रित्यनुक्रमणिकार्थः ॥ एवमेकवचनादिति ॥ अन्यत्रापि अन्यास्वपि ऋक्षु एकवचनयुक्तमरुद्वाचक शब्दलिंगान्मुख्यवायुप्रतिपादकत्वं ज्ञेयमित्यर्थः ॥ साधारण इति ॥ प्रदानवायुं एकोनपञ्चाशन्मरुतश्च प्रतिपादयन्तीत्यर्थः । ननु क्रीळमिति पदस्य भाष्योक्तं क्रीडाशीलमिति व्याख्यानं कथं तच्छीलार्थक प्रत्ययाभावादित्याशंक्य समाधत्ते: ॥ यद्यपीति ॥ ज्ञापयितुमिति ॥ नत्वक्षरार्थत्वेनोक्तमितिशेषः ॥ शर्द्धःसुखाढ्यमिति ॥ शेनसुखेन ऋद्धःसमृद्ध इत्यवयवार्थविवक्षया सुखाढ्यःशर्द्ध इत्युच्यते । शं भेषजमिति । सुखनामसु पाठादिति भावः ॥ बलाढ्यमपीति ॥ शर्द्धः बाध इति बलनामसु पठित शर्द्धशब्दान्मत्वर्थे अर्श आद्यचि शर्द्धो बलाढ्य इत्यर्थः । श्रुतौ शर्द्ध इति पदं विभक्ति व्यत्ययेन शर्द्धमिति मारुतमित्यस्य विशेषणं व्यत्ययेनाद्युतात्तं चेत्याशयेन भाष्ये शर्द्धःसुखबलाढचमित्युक्तमिति भावः ॥ अनर्वाणमिति ॥ न विद्यन्ते अर्वन्तो हयाः यस्येति अश्वशून्यत्वोक्तेः कथमनिन्द्रियमिति व्याख्यानमित्यत आह ॥ इन्द्रियाणि हयानिति ॥ श्रुतौ इन्द्रियाणां हयसाम्योक्तेरिति भावः ॥ यःस इति ॥ भाष्ये स इति वचनाद्य इत्यध्याहृतम् ॥ शुभःशोभावानिति ॥ शुभ दीप्तावित्यत इगुपधज्ञेति कर्तरि कप्रत्यय इति भावः । ननु विष्णोः सहस्राक्षः सहस्रपादित्यादाविन्द्रियोक्तेः कथमनिन्द्रियत्वमित्यतो भाष्ये स्पष्टत्वादनुक्तं समाधानं वदन् न वायोरिन्द्रियाणामिति भाष्यं श्रौतार्थाप्रतिपादकमवतारयति ॥ विष्णोः प्राकृतेति ॥ १ ॥

ये पृषतीभिः ॥ ऋष्ट्यादित्रयमिति ॥ ऋष्टिभिःवाशीभिरंजिभिरित्युक्तमित्यर्थः ॥ आयुधविशेष इति ॥ चन्द्रहासासिरिष्टय इत्यमरोक्तेर्ऋष्टिरसिखङ्गशब्दवाच्यम् । वाशीशब्देन तु काष्ठतक्षणसाधनं तक्ष्ण आयुधं कर्नाटकभाषयावाड्वीति तथा महाराष्ट्रभाषया वासलेति उच्यते । अंजिर-प्रसिद्धायुधमित्यर्थः । श्रुतौ साकमजायन्तेति वाहनायुधमहितमरुदुत्पत्तेः कुत्राप्यदृष्टाया उक्तेस्त-दभिप्रायमाह ॥ आजन्मन इति ॥ ये इत्यस्यान्वयाभावादाह ॥ उत्तरत्रेति ॥ उत्तरस्यामृचि तच्छब्दाध्याहारेणेत्यर्थः ॥ जन्मसमर्थितमिति ॥ अजायन्तेति श्रौतपदोक्तमिति शेषः । जनी प्रादुर्भाव इति धातोर्लङि दिवादित्वात् श्यनि ज्ञाजनोर्जेति जादेशे अजायन्तेति रूपमिति भावः ॥ विष्णोरपीति संबन्ध इति ॥ ततश्चेन्द्रादिदेवगतं वज्रधरत्वादिलिङ्गं विष्णोरिन्द्रादेर-पीत्युक्तं भवति ॥ २ ॥

(टीकाविवृतिः)

इहेव शृण्वे ।। लेटीति ।। वदेःउपसंवादाशंकयोश्चेति चकाराल्लडर्थे लेटि लेटोडाटावित्याडागमे झेरंतादेशे इतश्च लोप इतीकारलोपे संयोगान्तस्येति तकारस्य लोपे वदानिति रूपमिति भावः ।। शृण्व इव श्रूयत इवेति ।। श्रुतश्रवण इत्यतःकर्मणि लटःतादेशे टित आत्मनेत्येत्वे व्यत्ययेन तकारलोपे श्रुवः शृचेति श्रुप्रत्यये धातोःशृभावे च रूपमेतदिति भावः ।। कशाः सन्तीति ।। अश्वादिताडनार्थं कृता आकारविशेषविशिष्टा रज्जवःकशाःज्ञेयाः ।। यामन् याम्नीति ।। यातेश्छान्दसत्वेनाधिकरणे आतो मनिन्नित्यनेन मनिन्प्रत्यये सुपां सुलुगिति सप्तम्याः लुकि न ङिसंबुद्ध्योरिति नलोपनिषेध इति भावः ।। निरृंजते ऋज्यते इति ।। श्रुतौ व्यत्ययेन कर्मार्थे कर्तृप्रयोग इति भावः । ननु ऋजिभृजीभर्जने इति भर्जने इति भर्जनार्थे पठितस्य ऋंजेःकथं भाष्ये अधिगम्यते इति व्याख्यानमित्यत आह ।। अनेकार्थत्वादिति ।। धातूनामिति शेषः ।। तन्मार्गस्थितानामिति ।। मरुन्मार्गस्थितपर्णरेण्वादिवस्त्वपगमेन शुद्धत्वात्पूर्वावस्थापेक्षया चित्रतेति भावः । भाष्ये विष्णोरित्यस्यान्वयाभावादाह ।। विवक्षायामिति ।। मार्गे स्वीये इति ।। मोक्षमार्ग इत्यर्थः । अत एव वादिविवाद इति भावः । ननु पूर्वार्धे प्रकृतस्यैषामिति षष्ठ्यन्तस्यानुवृत्तस्य कथममुनेति तृतीयांतेन परामर्श इत्यत आह ।। षष्ठ्यन्तं प्रकृतमिति ।। यद्यपि तथापीति शेषेणान्वयः । ऋंजते इत्यस्य संप्रेर्यते इति कर्मार्थकत्वांगीकारात्तत्र कर्तुरपेक्षणरूपार्थवशादित्यर्थः ।। ३ ।।

प्रवः ।। घर्षतेःकिरिति ।। कृविघृष्विछविस्थविकिकीदिवीति सूत्रेणेति शेषः । ननु वेरपृक्तस्येति वेर्लोपःकुतो नेत्यत आह ।। जागृविरिति यथेति ।। जॄशॄस्तॄजागृभ्यःक्विन्निति विहितस्य क्विनः इकारस्य उणादयो बहुलमित्युक्तेर्यथाऽलोपः तथेहापीति भावः । उपलक्षणं चैतत् । सूत्रे कृविघृष्वीति निपातनादित्यपि ग्राह्यम् । त्वेषद्युम्नायेत्यत्र त्विषदीप्ता वित्यतो भावे घञि निष्पन्न त्वेषशब्दस्य द्युतदीप्तावित्यत इणषिञ्जिदीङुष्यविभ्यो नगित्युक्तनक्प्रत्यये धातुतकारस्य मकारादेशे च बहुलवचनाज्जाते सति निष्पन्नद्युम्नशब्दस्यापि प्रकाशार्थकत्वात्प्राप्तपुनरुक्ति- परिहाराय भाष्ये सुप्रकाशज्ञानायेत्युक्तम् । तत्तात्पर्यमाह ।। अप्रतिबद्धज्ञानायेति ।। शुष्मिणे वीर्यवत इति ।। शुष्णं शुष्ममिति बलनामसु पाठादिति भावः ।। प्रकरणादित इति ।। मरुत्सूक्तत्वाद्वायवे इति आदिशब्दगृहीतैकवचनात्प्रधानायेति लभ्यत इत्यर्थः ।। तनोतेस्तोडिदिति ।। तनिमृङ्भ्यां किच्चेत्यनेन तप्रत्यय इत्यर्थः ।। डित्वं तु कार्याद्विद्यादनूबन्धमिति महाभाष्योक्तेष्टिलोपे नक्तमितिरूपसिद्ध्येज्ञेमित्यर्थः ।। वाय्वर्थे इति ।। तथाच शर्द्धायेत्यादिचतुर्थी तादर्थ्ये चतुर्थी वाच्येतिवार्तिकेन कृतेत्युक्तं भवति ।। प्रीणयतेत्यर्थ इति ।। श्रुतेरभिप्रेतोर्थो नत्वक्षरार्थ इति भावः ।। वेदाख्यं ब्रह्मेति ।। ब्रह्मप्रोक्तं तपोध्यात्मवेदज्ञानेषु सूरिभिरिति विश्वोक्तेरिति भावः ।

(टीकाविवृतिः)

देवैरधीयमानत्वादित्येतत्कथं देवत्तमित्यस्यनिर्वचनमित्यत आह ॥ निर्वचनं त्विति ॥ तर्हि देवैरित्यादिव्यर्थमित्यत आह ॥ इदं त्विति ॥ देवैर्वेदस्याधीयमानत्वेन देवत्तत्वमिति भावः ॥ ४ ॥

प्रशंस ॥ प्रशंसेत्येकवचनानुगुण्यायाह ॥ आत्मानं प्रतीति ॥ तादर्थ्ये सप्तमीति ॥ व्यत्ययेनेति शेषः ॥ भक्षणार्थमिति ॥ जंभो दैत्यांतरे दन्ते जंबीरे भक्षणेपि चेति विश्वोक्तेरिति भावः ॥ अर्थाद्वृषभरूपिणमिति ॥ गोषु क्रीडनोक्त्यन्यथानुपपत्तेर्वृषभरूपिणमित्युक्तं नतु कस्यचित्पदस्यार्थत्वेनेति भावः ॥ माभिःप्रमाणैरिति ॥ मा च मातरि माने चेति वररुचिवचनादिति भावः ॥ रुशब्द इति ॥ अस्मात्कर्मणि क्त प्रत्यय इति शेषः । भाष्ये तं वायुमित्यादि पुल्लिङ्गनिर्देशादाह ॥ मरुतामयमिति ॥ तस्येदमित्यणि तद्धितेष्वचामादेरित्यादिवृद्धौ मारुत इति रूपमिति भावः ॥ ५ ॥

ऋक्संहिता पदपाठसहिता (सू-३७, व-२)

(४४७) को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः । यत्सीमन्तं न धूनुथ ॥ ६ ॥

(प०) कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः । यत् । सीम् । अन्तम् । न । धूनुथ ॥ ६ ॥

(४४८) नि वो यामाय मानुषो दध्र उग्राय मन्यवे । जिहीत पर्वतो गिरिः ॥ ७ ॥

(प०) नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः ॥ ७ ॥

(४४९) येषामज्मेषु पृथिवी जुजुर्वा इव विश्पतिः । भिया यामेषु रेजते ॥ ८ ॥

(प०) येषाम् । अज्मेषु । पृथिवी । जुजुर्वान्ऽइव । विश्पतिः । भिया । यामेषु । रेजते ॥ ८ ॥

(४५०) स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत्सीमनु द्विता शवः ॥ ९ ॥

(ऋक्संहिता पदपाठसहिता)

(प०) स्थिरम् । हि । जानम् । एषाम् । वयः । मातुः । निःऽएतवे । यत् । सीम् । अनु । द्विता । शवः ॥ ९ ॥

(४५१) उदुत्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत । वाश्रा अभिज्ञु यातवे ॥ १०, १३ ॥

(प०) उत् । ऊँइति । त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु । अत्नत । वाश्राः । अभिऽज्ञु । यातवे ॥ १० ॥

## ऋग्भाष्यम्

आसमंतादुत्तमः कः प्रधानो वायुरेव वः । विष्णोराक्षेप एवस्यात्कोनामास्ति परस्त्विति । त्वत्पर्यंतं च वर्षिष्ठः कोभवेदिति वा भवेत् । आधूतयो दिवोग्मश्च भूम्या इत्यन्वयो भवेत् । तस्मादन्तं प्रतीवैतज्जगत्संधूनुथाखिलम् ॥ ६ ॥ नीचैर्धृतो मानुषो वो मार्गायोग्राय मन्यवे । न पूर्यते च कोपाय स्वल्पत्वान्मानुषः क्वचित् । बहुवर्षयुतोत्युच्चगिरिर्मार्गे हि वोत्यजत् । मूलम् ॥ ७ ॥ येषां तथाज्मेषु मार्गेष्वति भिया धरा । कम्पते जीर्णराजेव ॥ ८ ॥ स्थिरं वो जननं यतः । जाता वायोर्दिविवयोमातुः प्राप्तानि रेतवे । निर्गन्तुं तत्क्षणेनैव सर्वलोकाटनायहि । यौवनं ते युवानोहि निसर्गान्मातुराजनेः । मातुरेव प्रसादेन सम्यक्तद्विविधं बलम् । प्रज्ञाबाहुबलं यस्मात्तस्मात् ॥ ९ ॥ दिशउदापिरे । ते गिरः सूनवो देव्या वाश्रा वचनशीलिनः । अभिजन्मानुसारेण गुणान्यातुमुदापिरे ॥ १०, १३ ॥

## ऋग्भाष्यटीका

कोवः । अत्राद्यं पदचतुष्टयं मरुद्विषये तावद्व्याख्याति । आसमन्तादिति । कःप्रजापतिरुद्दिष्टः को वायुरिति शब्दित इति वचनात्कः प्रधानो वायुः । वो मध्ये । सर्वोत्तमे विष्णौ कथमिदं व्याख्येयमित्यत आह ॥ विष्णोरिति ॥ विवक्षायामिति शेषः । आक्षेप एव स्यात्क इति शब्द इत्यर्थः । तं प्रकारमेव स्फुटयति । को नामेति । वः सकाशादिति शेषः । न केवलमुत्तमस्याक्षेपोऽनेन क्रियते । किं नाम समस्यापीति भावेन प्रकारान्तरेण व्याचष्टे । त्वदिति । त्वं यावान्वर्षिष्ठस्तावदपीति भावः । नन्वेवं वः सकाशादासम्यक् समंताद्वा वरिष्ठः को भवेदित्याक्षेपे व्याख्यायमाने ईषद्वरिष्ठादिसद्भावप्रसङ्गः । अन्यथा

(ऋग्भाष्यटीका)

विशेषण वैयर्थ्यादित्याशंक्य न पूर्ववदाशब्दोऽत्र वर्षिष्ठशब्देन सम्बध्यते किं त्वन्यत्रेति दर्शयन् ग्मश्चेति पदार्थमप्याह। आधूतय इति। उत्तरार्धं व्याख्याति। तस्मादिति। यच्छब्दश्रवणात्तस्मादित्ययमध्याहारः। ततश्चायमर्थः। हे नरो मरुतो वो मध्ये। कः प्रधानो वायुरावर्षिष्ठः उत्तम इति यावत्। कालज्यैष्ठ्यस्य सर्वज्यैष्ठ्योपलक्षणत्वात्। एवंभूतस्वामिसम्पत्त्या यूयमपि महान्त इति भावः। किञ्च। यूयं दिवः स्वर्गस्य च। ग्मः पृथिव्याश्च। धूतयः कम्पयितारः स्थ। कथं यद्यस्मादेतदखिलं जगदन्तं न अन्तं प्रतीव प्रलयं कर्तुमिव। सीं सम्यक्। धूनुथ सन्धूनुथ। कम्पयथ तस्मादिति। विष्णौ तु स्पष्टम्॥ ६॥

निवः। नीचैः। हे मरुतो वो युष्माकम्। यामाय यांत्यस्मिन्निति मार्गायोग्राय मन्यवे च मानुषो निदध्रे नीचैर्धृतः। किमुक्तं भवतीत्यत आह॥ नेति। पूर्यते शक्तो भवति कोपाय कोपस्याभिमुखी भवितुम्। चशब्दान्मार्गे स्थातुं च। कथं पर्वतः पर्ववान्। बहुवर्षावच्छेदयुतस्तेन लभ्यतेऽत्युच्च इति। एवंभूतोपि गिरिर्वो मार्गे स्थितो जिहीतात्यजद्धि मूलमिति शेषः। उन्मूलोऽभवदित्यर्थः॥ ७॥

येषाम्। तथाऽन्यच्च। येषां मरुतामज्मेषु ज्मा पृथिवी तदसम्बन्धिष्वन्तरिक्षाश्रितेषु यामेषु मार्गेषु सत्सु। तैर्मार्गैर्मरुत्सु गच्छत्स्विति यावत्। पृथिवी धराऽतिभिया रेजते कम्पते। किमिव जुजुर्वान् जीर्णः। जीर्यतेः क्वसौ रूपम्। विश्पतिः राजेव। यथा दुर्बलो राजा परेभ्यो भीतः कम्पते तथेति। उत्तरत्र सम्बन्धः॥ ८॥

स्थिरं हि। स्थिरं वः। हे मरुतः एषामुक्तगुणानां वो। जानं जननं स्थिरं हि। स्थिरत्वेनोत्तमतां लक्षयति। कथमित्यत आह भाष्यकारः। यत इति॥ यस्मान्मरुतो वायोः प्रधानाद्दिवि भारत्यां जातास्तस्माद्विशिष्ट मातापितृसम्बन्धादेषां जननमुत्तमम्। अनेन हिशब्दो व्याख्यातो भवति। किं च ते मरुतो निरेतवे निर्गन्तुं तत्क्षणेनैव जन्मोत्तरक्षण एव। सर्वलोकाटनायेति यावत्। मातुर्भारत्याः प्रसादेनेति शेषः। वयो वयोविशेषं यौवनं हि प्राप्ता इति शेषः। यौवनप्राप्तिः सर्वसाधारण्यान्न वर्ण्येत्यतस्तात्पर्यार्थमाह॥ त इति॥ मातुः प्रसादेन। निसर्गादित्यस्यैव विवरणम् आजनेरिति। किञ्च। यत् यस्मादेषां मरुताम्। अनुमातुः प्रसादमिति शेषः। हेतौ कर्मप्रवचनीयः। मातुः प्रसादेनैव सीं सम्यक्। द्विताशवः द्वितया द्वित्वेनोपेतं द्विविधमिति यावत्। शवस्तत्प्रसिद्धं बलमस्ति। किं तत्। प्रज्ञाबलं बाहुबलं च। तस्मादित्युत्तरत्र साध्यनिर्देशो द्रष्टव्यः॥ ९॥

उदु। दिशः। गिरो देव्या भारत्याः। सूनवो वाश्राः वचनशीलिनः। वचनं शास्त्रव्याख्यानं तदेव शीलं तदेषामस्तीति। शब्दमात्रे वाशतिमङ्गीकृत्य ताच्छीलिको रो विहितः। त्येते। मरुतोऽज्मेषु उ अज्मेष्वेव मार्गेषु खेचरा एव भूत्वा। काष्ठा दिशः। उदत्नत अततेर्लङि रूपमेतत् उदापिरे। किमर्थम्। यद्दिश उदापिरे तदभिज्ञु अभिपूर्वाज्जनेरुङ्प्रत्ययो भावे गमहनेत्यादिनोपधालोपः। अभिजन्म अनुसृत्येति शेषः। अभि

(ऋग्भाष्यटीका)

**जन्मानुसारेणेति यावत्। यातवे यातुं प्राप्तुं गुणानिति शेषः। भारतीपुत्राः व्याख्यानसामर्थ्योपेताश्च यदि नाम लोकोद्धारणाय न दिग्विजयं कुर्युः। कथं तर्हि तदभिजन्मसफलं स्यात् कथं च गुणिनः स्युरिति भावः। तत्र सामर्थ्यसद्भावरूपो हेतुः पूर्वत्रोक्तः॥ १०, १३॥**

## मन्त्रार्थमञ्जरी

(हे) नरः, मरुतः। वः, युष्माकं मध्ये। कः, प्रधानवायुः, 'को वायुरिति शब्दितः।' इत्युक्तेः। आ वर्षिषः, आ समन्तात् (उत्तमः) अधिकवयोयुक्ततम इति यावत्, कालज्यैष्ठ्यस्य सर्वज्यैष्ठ्योपलक्षणत्वात्, एवं भूतस्वामि सम्पत्त्या यूयमपि महान्तः– इति भावः। किं च, (यूयम्) दिवः, स्वर्गस्य। च। ग्मः, पृथिव्याः। च। धूतयः, कम्पितारः। (च) कथम्? यत्, यस्मात्। (एतत्) अखिलं जगत्। अन्तम् न, अन्तं प्रतीव, प्रलयं कर्तुमिव। सीम्, सम्यक्। धूनुथ, कम्पयथ। (अतः) इति योजना। विष्णुपक्षे तु (हे) नरः, मरुद्गतविष्णुरूपविशेषाः। (वः) युष्माकं सकाशात्। वर्षिष्ठः, उत्तमः। कः (भवेत्) न कोऽपि त्वं यावान्वर्षिष्ठस्तावान्वा त्वत्समो वेति यावत्, को भवेत्? न कोऽपि। आङः 'आ धूतयः' इत्यन्वयः। शिष्टं प्राग्वत्॥ ६॥

(हे मरुतः) वः, युष्माकम्। यामाय, यान्त्यस्मिन्निति व्युत्पत्त्या मार्गाय। उग्राय। मन्यवे (च), कोपाय च। मानुषः। नि दध्रे, नीचैर्धृतः, भवन्मार्गे स्थातुं भवत्कोपस्याभिमुखीभवितुं चाल्पत्वान्मानुषः शक्तो न भवेत्– इत्यर्थः। कथम्? पर्वतः, पर्ववान्, मत्वर्थे तप्, बहुवर्षावच्छेदयुक्तः, तेन– अत्युच्चः' इत्यर्थो लभ्यते। एवं भूतोऽपि गिरिः वो मार्गे स्थितः। जिहीत, 'ओहाक् त्यागे' अत्यजत्। (हि) (मूलम्) इति शेषः, उन्मूलोऽभवत्– इत्यर्थः॥ ७॥

येषाम्, मरुताम्। अज्मेषु, ज्मा पृथिवी, तदसम्बन्धिषु, अन्तरिक्षाश्रितेषु। यामेषु, मार्गेषु सत्सु, तैर्मार्गैर्मरुत्सु। गच्छत्स्विति यावत्। पृथिवी, धरा (अति) भिया। रेजते, कम्पते। क इव? (जुजुर्वानिव विश्पतिः) जुजुर्वाञ्जीर्णः, जीर्यतेः लिटि 'क्वसुश्च' इति क्वसौ द्विर्वचनोत्वादौ रूपम्, विश्पती राजेव, यथा दुर्बलो राजा परेभ्यो भीतः कम्पते, तथा इति। यद्शब्दस्याग्रे अन्वयः॥ ८॥

(हे मरुतः) एषाम्, उक्तगुणानां वः। जानम्, जननम्। स्थिरम् हि, स्थिरत्वेनोत्तमतां लक्षयति 'उत्तमं हि' इति, वायोर्भारत्यां जातत्वेन विशिष्टमातापितृसम्बध्नात् 'उत्तमं जन्म' इति हि शब्दार्थः। किं च, (ते) मरुतः। निरेतवे, निर्गन्तुम्, निरुपसर्गपूर्वादिणः तुमर्थे तवेन्प्रत्ययः, जन्मोत्तरक्षण एव सर्वलोकाटनायेति यावत्। मातुः, भारत्याः। (प्रसादेन) इति शेषः। वयः, वयोविशेषं यौवनम्। (प्राप्ताः) इति शेषः। जन्मारभ्य ते युवानः प्रसिद्धाः। किं च, यत्, यस्मात्।

(मन्त्रार्थमञ्जरी)

(एषाम्) मरुताम्। अनु, मातुः प्रसादमनु, हेतौ कर्मप्रवचनीयः, मातुः प्रसादेनैव। सीम्, सम्यक्। द्विता शवः, द्वितया द्वित्वेनोपेतम्, द्विविधमिति यावत्, शवः प्रसिद्धं प्रज्ञाबलं बाहुबलं च। (अस्ति) (तस्मात्) इत्युत्तरत्र (साध्यनिर्देशो ज्ञेयः ॥ ९ ॥

गिरः, देव्या भारत्याः। सूनवः, पुत्राः, वाश्राः, 'वाशृ शब्दे' इत्यस्मात्ताच्छीलिको रक्प्रत्ययः, व्याख्यानशीलाः। त्ये, ते, मरुतः। अज्मेषु, अमार्गेषु, अन्तरिक्षाश्रितमार्गेषु। खेचरा एव भूत्वा काष्ठाः, दिशः। उत् अत्नत, अततेः लङ्न्येतद्रूपम्, उदापिरे। (उ) किमर्थम्? यद्दिश उदत्नत (उ) तत् अभिज्ञु, अभिपूर्वाज्जनेः उङ्प्रत्ययो भावे, 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपः, अभिजन्म। (अनसृत्य) इति शेषः, अभिजन्मानुसारेणेति यावत्। यातवे, यातुम्, प्राप्तुम्। (गुणान्) इति शेषः। भारतीपुत्रा व्याख्यानसामर्थ्योपेताश्च, यदि नाम लोकोद्धरणाय न दिग्विजयं कुर्युः कथं तर्हि तदाभिजन्म सफलं स्यात्? कथं च गुणिनः स्युः? इति भावः। अत्र सामर्थ्यसद्भावरूपहेतुः पूर्वत्र उक्तः ॥ १० ॥ इति त्रयोदशो वर्गः ॥ १३ ॥

## रूपावतारः

कोवः ॥ व इति निर्धारणषष्ठीत्यभिप्रेत्याह। वो मध्य इति ॥ ६ ॥

निवः ॥ नीचैर्धृत इति नीचैरसुरैर्मरुतां भवतां प्रतियोगित्वेन भवन्मार्गस्य प्राप्त्यर्थं भवतां रोषजननार्थं च कश्चित् मानुषः निदध्रे स्वीकृत इति भावः ॥ ७ ॥

येषाम् ॥ जीर्यतेः क्वसौ रूपमिति जॄधातोर्लिटि तस्य क्वसौ 'बहुलं छन्दसि' इति ऋकारस्य उत्वे द्वित्वादौ 'उगिदचाम्....' (७।१।७०) इति नुमि जुजुर्वानिति रूपम्। उत्तरत्र संबन्ध इति। एषामिति पदस्य उत्तरऋचा संबन्ध इत्यर्थः। संबन्धप्रकारस्य एषामुक्तगुणानां वो(वः)जानं स्थिरमिति वक्ष्यते ॥ ८ ॥

स्थिरं हि ॥ हेतौ कर्मप्रवचनीय इति। 'अनुर्लक्षणे' (१।४।८४) इति अनुशब्दो हेतौ कर्मप्रवचनीय इत्यर्थः ॥ ९ ॥

उदुत्ये ॥ अततेर्लङीति। अततेर्लङि व्यत्ययेन श्नाविकरणे ''श्नाभ्यस्तयोरातः'' (६।४।११२) इति आकारलोपे आत्मनेपदझस्यादादेशे छान्दसे अडाभावे अत्नतेति रूपम्। अभिज्ञु इति रूपं साधयति। अभिपूर्वादिति। पूर्वत्रोक्त इति। पूर्वस्यां ऋचि प्रज्ञाबलबाहुबलरूपो हेतुः व्याख्यानदिग्विजये उक्त इत्यर्थः ॥ १० ॥ १३ ॥

## पदार्थप्रकाशिका

को वो वर्षिष्ठ आ नरः। आद्यपदचतुष्टयमिति। कः वः वर्षिष्ठः आ इतिपदचतुष्टयमित्यर्थः। भाष्ये वर्षिष्ठ इत्यस्य उत्तम इत्यर्थः। कशब्दः कथं प्रधानवायुवाचक इत्यत आह कः प्रजापतिरिति। वायुरेव च प्रजापतिस्तत्पदयोग्यत्वादिति हृदयम्। स्पष्टं च वचनमुदाहरति को वायुरितीति। भाष्ये निर्धारणषष्ठ्यन्तस्य व इति पदस्यानुवाद एव न व्याख्यानमित्यभिप्रेत्य वो मध्य इत्युक्तम्। तथा च हे नरो मरुतो वो मध्ये आसमन्ताद्वर्षिष्ठः उत्तमः कः प्रधानो वायुरेव नान्य इति योजना द्रष्टव्या। सर्वोत्तम इति। प्रधानवायूत्तम इत्यर्थः। तथा च हे नर इति विष्णुरूपाण्युद्दिश्य वो मध्ये वः सकाशाद्वा आसमन्ताद्वर्षिष्ठ उत्तमः कः वायुरेवेति व्याख्यानं सर्वोत्तमे विष्णौ न सम्भवत्यतः कथमिदं विष्णौ व्याख्येयमित्यर्थः। आक्षेप एवेति। न वायुवाचीत्यर्थः। तथा च हे नरो विष्णुरूपाणि वः सकाशादासमन्ताद्वर्षिष्ठः परः उत्तमः कः ? न कोऽपीति योजना द्रष्टव्या। अनेन को वो वर्षिष्ठ आ नर इत्यनेन। त्वं यावानिति। अयमेतावत्पर्यन्त इत्युक्ते अयं यावान् तावानिति साम्यप्रतीतेः। एवं च हे नरः विष्णुरूपाणि वः त्वत्पर्यन्तं त्वसमतया आवर्षिष्ठः त्वं यावान् वर्षिष्ठः श्रेष्ठः तावदपि वर्षिष्ठः श्रेष्ठः को भवेदित्यर्थः। अपिशब्दात् उत्तमस्तु दूरापास्त इति द्रष्टव्यम्।

आ नर इत्यत्र विद्यमानस्याङा धूतय इत्यनेन सम्बन्धमभिप्रेत्य आधूत इति भाष्यकारेणोक्तम्। तत्किमर्थम्। वायुपक्ष इव आवर्षिष्ठ इत्येव सम्बन्धोऽस्त्वित्याशंक्य तथा सम्बन्धाङ्गीकारे बाधकं प्रदर्शयन् आधूतय इति भाष्यमवतारयति नन्वेवमित्यादिना। ईषद्वरिष्ठादीति। तथा च विष्णुपक्षे त्वत्सकाशादासम्यक् वर्षिष्ठो वरिष्ठो नेत्युक्ते ईशद्वरिष्ठोऽस्तीति लभ्यत इत्यर्थः। आदिपदेन वः सकाशात् आसमन्तात्सर्वत्र देशे वरिष्ठो वास्तीत्युक्ते क्वचिद्वरिष्ठोऽस्तीति लभ्यत इति ग्राह्यम्। अन्यथेति। आ इत्यस्य सम्यक् समन्तादित्युभयथा व्याख्येयवर्षिष्ठपदेन सम्बन्धाकरणे आ इत्यस्य वैयर्थ्यमेव स्यादित्यर्थः। अन्यत्र धूतये इत्यत्रेत्यर्थः। तन्नो नशद्यः पितरं नवेदेति श्रुतेर्भगवदज्ञानिनो नाशोक्तेर्मरुतां च भगवज्ज्ञानित्वेन नाशाभावान्नरो मरुत इत्युक्तम्। नरोऽनाशात्प्रकीर्तित इति वचनात्। उत्तम इतीति। कालतो देशतो गुणतश्चेत्यर्थः। ननु वर्षिष्ठशब्दात्सामान्यतः प्रकारत्रयेणोत्तमत्वं कथं लभ्यते। प्रियस्थिरसूत्रेण वृद्धशब्दस्य इष्ठन् प्रत्यये परतः वर्षादेशे वर्षिष्ठो वृद्धतम इति कालज्यैष्ठ्यमेव लभ्यते न तूत्तमत्वम्। अत उत्तम इति यावदिति कथमुक्तमित्यत आह कालज्यैष्ठ्यस्येति। सर्वेति। देशतो गुणतश्च ज्यैष्ठ्येत्यर्थः। तथा चोत्तम इति यावदित्युक्तम् व्याख्यानं युक्तमेवेत्याशयः। ननु को वो वर्षिष्ठ आ नर इत्यत्र हे नरो मरुतो वो मध्ये को वायुरुत्तम इत्युक्ते वायोरेव देवतात्वं प्रतीयते। न मरुतः इत्यतो मारुतत्वसिध्यर्थमाह एवंभूतेति।

(पदार्थप्रकाशिका)

सर्वोत्तमवायुरूपस्वामिसम्पत्येत्यर्थः । कथमिति । द्युपृथिवीकम्पकत्वं कथमित्यर्थः । तस्मादितीति । तथा च यदा सर्वमपि जगत्प्रलयं कर्तुमिव कम्पयथ तस्मात्सर्वजगदन्तर्गतद्युपृथिव्योरपि कम्पयितारस्स्थेत्यर्थः । विष्णौ त्विति । दिवश्च ग्मश्चेत्यादिकं विष्णौ उक्तरीत्यैव स्पष्टमित्यर्थः । अत्र अङो धूतय इत्यनेन सम्बन्धो द्रष्टव्यः ॥ ६ ॥

नि वो यामाय मानुषः । नीचैरिति निरोर्थः । नीचैरित्येतत् उच्चैरितिवत् अव्ययम् । नीचत्वेनेत्यर्थः । धृतः स्थितः । किमुक्तं भवतीति । मार्गाय उग्राय मन्यवे च नीचैस्थित इत्यनेन किमुक्तं भवतीत्यर्थः । मार्गे स्थातुं गमनप्रतिबन्धकतया स्थातुमित्यर्थः । बहुवर्षावच्छेदयुत इति । बहुवर्षपरिच्छेदरूपपर्ववान् अत एवात्युच्चतयाभिवृद्ध इत्यर्थः । स्थितश्चेदिति शेषः । यदैतादृशोपि गिरिर्भवन्मार्गे स्थितश्चेन्निकृतमूलः सन् पतति तदा किमु वक्तव्यं अयं मानुषो न शक्त इतीति भावः ॥ ७ ॥

येषामज्मेषु पृथिवी । ऋग्भाष्यप्रतीकयोरेकविधत्वात् येषामित्येव प्रतीकं गृहीतमिति मन्तव्यम् । जीर्यतेः क्वसौ रूपमिति । जॄवयो हानावित्यस्मात् क्वस् प्रत्यये धातुषकारलोपे तस्य लिडादेशत्वेनाभ्यासे जृजॄ इति स्थिते बहुलं छन्दसीत्यभ्यस्तधातो ऋवर्णस्य उत्वे जुजॄ इति जाते ऋवर्णस्य छान्दसे उर् इति जाते जुज् उर् वस् जुजुर्वस् इति सकारान्तप्रातिपदिकसिद्धिः । विद्वस् इति सकारान्तवत् पश्चात्सकारलोपनुमागमोपधादीर्घेषु सत्सु विद्वानितिवत् जुजुर्वानिति भवतीति द्रष्टव्यम् । अत्र वस्वेकाजाद्घास्तमिति नियमादिडागमाभावः । ऋच्छत्यॄतमिति गुणो हलि चेति दीर्घत्वं च संज्ञापूर्वको विधिरनित्य इति वचनान्न भवतीति द्रष्टव्यमित्याहुः । परेभ्यो वैरिभ्यः । उत्तरत्रेति । अत्रत्ययच्छब्दस्य स्थिरं विज्ञानं एषामित्युत्तरस्यां ऋचि एषामित्यनेन सम्बन्धः । अत एव एषामुक्तगुणानामिति वक्ष्यतीत्यर्थः । अत्रत्यस्य यच्छब्दस्य उदुत्ये इत्यस्यां ऋचि संबन्ध इत्यर्थः । तथाच ये धारकं पक्षत्वादिगुणोपेताः त्येते काष्ठा यत्नेनेति सम्बन्धो द्रष्टव्य इत्याहुः ॥ ८ ॥

स्थिरं हि जानमेषाम् । उक्तगुणानामिति । धारकं पक्षत्वाद्युक्तगुणानामित्यर्थः । यतो जाता वायोर्दिवीति विशिष्टमातापितृसम्बन्धकथनपरभाष्यानुसारादाह स्थिरत्वेनेति । विशिष्टेति । विलक्षणेत्यर्थः । उत्तमेति यावत् । ननु भाष्यकारेणापि विशिष्टमातापितृसम्बन्धेन जननस्योत्तमत्वोपपादनं कृतम् । तत्र किं विज्ञापनमिति शंकायामाह अनेनेति । हिशब्दः स्थिरं हीति ऋग्गतो हिशब्दः । निर्गन्तुमित्यस्य तात्पर्यमाह सर्वेति । आजनेरितीति । जनिमारभ्यैवेत्यर्थः । ऋक्स्थम् अन्विति पदमनूद्य शेषं पूरयति । मातुः प्रसादमितीति । शेषो ऋचि । ननु द्विताशव इत्यत्र

(पदार्थप्रकाशिका)

मातुः प्रसादस्य हेतुत्वाद्धेतौ च तृतीयाया विहितत्वान्मातुः प्रसादेनेति शेषः इत्यनुक्त्वा मातुः प्रसादमिति शेषः कुतः क्रियत इत्यत आह हेताविति। अत्र ह्यनुश्रूयते। तस्य च अनुर्लक्षण इति सूत्रेण लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञा विहिता लक्षणं चिह्नहेतुं च। अनन्तरं कर्मप्रवचनीययुक्ते द्वितीयेति सूत्रेण कर्मप्रवचनीययुक्ते द्वितीयायाः विधानादत्र चानोः कर्मप्रवचनीयत्वात्तद्योगे द्वितीययैव भाव्यमिति तथा शेषः पूरित इत्यर्थः। जपमनु प्रावर्षदित्युदाहरणम्। ननु तर्हि भाष्ये मातुरेव प्रसादेनेति कथमुक्तमिति चेदुच्यते। हेतोः कर्मप्रवचनीयत्वं यदा तदा जपमनु प्रावर्षदित्यस्य जपेन हेतुना प्रावर्षदित्येवार्थः फलित आयाति। एवं प्रकृतेऽपि मातुः प्रसादस्य द्विताशव इत्युक्तद्विविधबलप्राप्तौ हेतुत्वेन विवक्षितत्वान्मातुः प्रसादमनु द्विताशव इत्यस्य मातुः प्रसादेन द्विताशव इत्यर्थस्य विवक्षितत्वात्फलितार्थकथनपरं मातुः प्रसादेनेति भाष्यमित्यवगन्तव्यम्। तस्मादित्यस्य साध्यनिर्देशाभावात्साकाङ्क्षमेतदित्यत आह तस्मादित्यस्येति। उत्तरस्यां ऋचि उदत्नतेति साध्यनिर्देशो द्रष्टव्य इत्यर्थः॥ ९॥

उदुत्ये सूनवो गिरः। ननु वाश्रुशब्दकुत्सायामिति धातोर्वाशतेः कुत्सितशब्दरूप-शब्दविशेषार्थत्वात् वाश्रावचनशीलिन इति सामान्यतः शब्दमात्रार्थतया कथं व्याख्यातः। कथं च तच्छीलार्थतालाभ इत्याशङ्क्याह शब्दमात्र इति। धातुनामनेकार्थत्वात् वाशृशब्द इत्यपि धातुः द्रष्टव्यः। अस्मात्ताच्छीलार्थे रप्रत्यये रवर्णलोपे वाश्रेति भवतीत्यर्थः। न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादय इति वचनात्कर्मधारयादिनिरित्याशयेनाह तदेव शीलमित्यादिना। अज्मेष्वेव मार्गेष्वित्यस्य ज्मापृथिवी तदसन्धिषु अन्तरिक्षाश्रितेष्वेव मार्गेष्वित्यर्थमभिप्रेत्याह खेचरा एव भूत्वेति। खमन्तरिक्षम्। अत्नतेत्यस्य आपिरे इत्यर्थमुपपादयति। अततेरिति। अत सातत्यगमने इति धातोरित्यर्थः। गमनं प्राप्तिः। तथाच उत्पूर्वकात् अतधातोर्लङि आत्मनेपदिनि बहुवचने तस्य झादेशे झोन्त इति तस्यान्तादेशे अनुस्वारलोपे उपधाभूतस्य धात्वकारस्य लोपे नुमागमे च सति उत् अतुन् अत उत्नतेतीत्यलाक्षणिकं छान्दसरूपमित्यर्थः। लङचडभावोपि छान्दस एवेति द्रष्टव्यम्। उदापिरे प्राप्ताः। अभिज्ञु इत्यस्य अभि जन्मानुसारेणेति व्याख्यानमुपपादयति अभिपूर्वादिति। जनेः जनिप्रादुर्भाव इति धातोः। इकारोनुबन्धार्थः। ज़न् इत्येव धातुः। गमहनेत्यादिनेति। गमहनजनखनघसंलोपः क्ङित्यनङि। गम इत्यादि पञ्चानां धातूनामङ्गानामुपधाया लोपः स्यादजादौ किति ङिति अनङि च परत इति सूत्रार्थः। तथाचाभिपूर्वकात् जन् धातोरुङ्प्रत्यये ङकारलोपे अनन्तरं अत्र नकारस्य तवर्गस्थत्वात्तस्य चवर्गस्थजकारेण योगस्य सत्वात्तद्योगे चवर्गो भवतीति स्तोश्चुनाश्चुरिति सूत्रेण विहितत्वादत्र तवर्गे पञ्चमस्य नकारस्य चवर्गे पञ्चमे ञकारे सति

(पदार्थप्रकाशिका)

जञ् उ इति जाते गमहनेति सूत्रेणात्र ङिति परे उपधाभूतस्य जकारस्थाकारस्य लोपे अभिज्ञ् इति जाते जञयोर्योगे ज्ञेति जाते अभिज्ञ् उ अभिज्ञु इति रूपं द्रष्टव्यम्। अभिजन्मेति सत्कुलप्रसूतिरुच्यते।

ऋग्द्वयस्य तात्पर्यमाह भारतीपुत्रा इत्यादिना। भारतीपुत्रा इति स्थिरं हीति पूर्वऋक्तात्पर्यम्। व्याख्यानसामर्थ्योपेता इति वाश्रा इत्यस्य तात्पर्यम्। यदि नाम न दिग्विजयं कुर्युरिति काष्ठा अज्मेष्वत्नतेत्यस्य व्यतिरेकमुखेन तात्पर्यम्। लोकोद्धरणायेति दिग्विजयकरणे प्रयोजनकथनम्। ज्ञानाद्युपदेशेनेति शेषः। कथं तर्हीति। अभिज्ञु इत्यस्य व्यतिरेकमुखेन तात्पर्यं कथञ्चेति। यातव इत्यस्य व्यतिरेकमुखेनेति। तथा च सत्कुलप्रसूता हि उपदेशादिना लोकानुद्धरन्ति। दिक्षु स्थितानां प्रतिभटानां जयेन दिग्विजयं कुर्वन्ति। तेन च दिव्यान् कृपालुत्वादीन् गुणान् प्राप्नुवन्ति। तेन च तेषां सत्कुलप्रसूतिः सफला भवति। अन्यथाऽनुतदभिजन्म व्यर्थं स्याद्गुणिनश्च न स्युरिति भावः। ननु दिग्विजये करणे बाहुबलेन भाव्यम्। उपदेशादिना लोकोद्धरणे च प्रज्ञाबलेन भाव्यं तदुभयाभावे दिग्विजयोपदेशे करणयोरनुपपत्तेरत एतेषां दिग्विजयाद्युपयोगिबाहुबलाद्यभावात्तदनुप- पत्तिरित्यत आह तत्रेति। दिग्विजयकरणे उपदेशेन लोकोद्धरणे च बाहुबलप्रज्ञाबलरूपसामर्थ्यसद्भावरूपो हेतुः पूर्वस्यां ऋचि द्विताशव इत्यनेनोक्त इत्यर्थः॥ १०, १३॥

## पदार्थदीपिका

वर्षिष्ठ इति। वृद्धशब्दादिष्टनि प्रियस्थिरेत्यादिना वर्षादेश इति भावः। ग्मः पृथिव्याश्चेति। ग्माशब्दात् षष्ठ्येकवचने आत इति योगविभागात् अधातोरप्यालोप इत्युक्तत्वात् अत्राकारलोपः छान्दसो वाकारलोप इति द्रष्टव्यम्। धूतय इति। धूञ् कम्पने। क्तिच्क्तौ च संज्ञायामिति क्तिच्। तितुत्रेत्यादिना इट् प्रतिषेध इति ज्ञातव्यम्। धूनुथ कम्पयथेति। स्वादित्वात्श्नुरिति भावः॥ ६॥

मानुष इति। मनोर्जातावञ्यतौ षुक् चेति मनुशब्दादपत्यार्थेऽञ् षुगागमश्चेति भावः। दध्र इति। धृ इत्यस्माल्लिटि कित्वाद्गुणाभावे सति यणादेश इति भावः। पर्ववानिति। यः पर्व मरुद्भ्यामिति मत्वर्थे तप्रत्यय इति भावः। जिहीत इति। ओ हाग्गतावित्यस्मात् लटि जुहोत्यादित्वाच्छपः श्लुः। भृञामित्यभ्यासस्येत्वम्। श्नाभ्यस्तयोरात इत्यकारलोप इति भावः॥ ७॥

रेजते कम्पत इति। रेजृ कम्पन इति धातोरिति भावः। क्सौ रूपमिति। जृष् वयो हानौ। लिटः क्सुः। बहुलं छन्दसीत्युत्वम्। अभ्यासहलादिशेषौ। वस्वेकाजाद्धसामिति नियमादिडागमाभावः। ऋच्छत्यृतामिति गुणो हलि चेति दीर्घत्वं च संज्ञापूर्वको विधिरनित्य इति वचनात् न भवतीति भावः॥ ८॥

(पदार्थदीपिका)

निरेतवे निर्गन्तुमिति। इण् गतौ। तुमर्थे सेसेनिति तवेन्प्रत्यय इति भावः ॥ ९ ॥

शब्दमात्रे वाशतिमिति। वाश शब्द इति धातोरिति भावः। अततेरिति। यद्यप्यत सातत्यगमन इत्यस्य शब्विकरणतास्ति। तथापि छान्दसमडागमाभावं श्नम्विकरणत्वं चाश्रित्यैवमुक्तम्। ततश्च लङि झस्यादादेशे उदत्नत इति रूपसिद्धिरिति ज्ञेयम्। उपधालोप इति। उपलक्षणं चैतत्। जनोर्ज्ञ इति ज्ञादेशश्चेत्यपि द्रष्टव्यम्। यातवे यातुमिति। तुमर्थे सेसेनिति तवेन् प्रत्यय इति भावः ॥ १०, १३ ॥

## टीकाविवृतिः

कोवः ॥ भाष्ये पूर्वोत्तरार्धयोरसंगतत्वाद्भिन्नविषयत्वेन संगमयितुमादौ प्रथमार्धमवतारयति ॥ अत्राद्यमिति ॥ को वो वर्षिष्ठ आ इति पदचतुष्टयमित्यर्थः। आ इत्यनुवादेन समंतादिति वर्षिष्ठ इत्यस्योत्तम इति क इत्यनुवादेन वायुरिति व्याख्यानं बोध्यम्। प्रधान इत्येकवचनलभ्यम्। व इत्यस्य व्याख्यानाभावेपि छत्रिन्यायेन चतुष्टयोक्तिर्ज्ञेया। क इत्यस्य वाद्यर्थकत्वे वररुचिप्रोक्ताभिधानं पठति ॥ कःप्रजापतिरिति ॥ व इत्येतद्गतषष्ठ्याः निर्धारणार्थत्वमभिप्रेत्याह ॥ वो मध्ये इति ॥ सर्वोत्तमे इति ॥ हेतुगर्भमेतत्। सर्वोत्तमत्वाद्व्योमरुदन्तर्गतविष्णुरूपाणां मध्ये को वायुर्वर्षिष्ठ इति व्याख्यानासंभवादिति भावः। ननु भाष्ये यथा वायुपक्षे आङो वर्षिष्ठ शब्देनान्वयःकृतस्तथा विष्णुपक्षेपि कर्तव्यस्तं विहाय धूतय इत्यनेनान्वयःकुतः कृत इत्यतस्तथान्वये बाधकं दर्शयन्भाष्यमवतारयति ॥ नन्वेवं व इति ॥ ननु वृद्धशब्दादतिशयार्थे इष्टनि प्रियस्थिरस्फिरोरुवृद्धतृप्रदीर्घबृंदारकाणां प्रस्थस्फवर्ब हिगर्वर्षित्रब्द्राघिबृंदा इति सूत्रेण वर्षादेशे निष्पन्नवर्षिष्ठ शब्दस्य बहुकालिकत्वार्थत्वात्कथमुत्तमार्थकत्वमित्यत आह ॥ काकज्यैष्ठ्यस्येति ॥ सर्वज्यैष्ठ्यस्य गुणादिज्यैष्ठ्यस्येत्यर्थः ॥ ग्मःपृथिव्याश्चेति ॥ गौःग्मेति पृथिवीनामसु पाठादिति भावः ॥ धूतय इति ॥ धूञ् कंपने इत्यत औणादिके क्तिनि छान्दसं सर्वानुदात्तत्वमिति भावः ॥ तस्मादितीति ॥ तस्माद्दिवो ग्मश्च धूतय इत्यन्वय इति भावः ॥ विष्णौ तु स्पष्टमिति ॥ हे नरःन रीयंते क्षीयन्ते इति नरः क्षयशून्याः मरुद्गत विष्णुरूपाणि वः सकाशात् को वर्षिष्ठो न कोपि। किं च यूयं यद्यस्मात्सर्वं जगत् अन्तं प्रतीव सींसम्यक् धूनुथ तस्माद्दिवो ग्मश्चाधूतयःसम्यक् कंपयितारःस्थेति स्पष्टमित्यर्थः ॥ ६ ॥

निवः ॥ यामायेति ॥ यातेःअर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनी- भ्यो मन्नित्यधिकरणे मन्प्रत्यय इति भावः। न पूर्यते इति भाष्यस्थार्धर्चे श्रुतिव्याख्यानरूपत्वाभावात्तात्पर्यार्थपरत्वेन

(टीकाविवृतिः)

योजयितुमवतारयति ।। किमुक्तमिति ।। निव इति पूर्वार्धेन किं प्रमेयमुक्तं भवतीत्यर्थः । पर्वतशब्दस्य गिरिशब्देन पुनरुक्तिपरिहाराय भाष्योक्तं यौगिकार्थं घटयति ।। पर्वतःपर्ववानिति ।। पर्वशब्दान्मत्वर्थे तप्पर्वमरुद्भ्यचमिति वार्तिकेन तप्प्रत्यय इति भावः । पर्वःस्यादुत्सवे ग्रन्थाविति विश्वोक्तौ ग्रन्थिशब्दस्यावच्छेदार्थकत्वाश्रयेणाह ।। बहुवर्षावच्छेदयुत इति ।। जिहीतेति ।। ओहाङ्गताविव्यतो व्यत्ययेन विधिलिङ्यात्मनेपदे च सीयुटि लिङःसलोप इति सलोपे जुहोत्यादित्वाच्छपःश्लौ द्वित्वादौ भृञामिदित्य भ्यासस्येत्वे श्नाभ्यस्तयोरात इत्यालोप इति भावः । अस्य भाष्ये अत्यजदिति प्रतिपदं तु धातूनामनेकार्थत्वमाश्रित्येति बोध्यम् ।। ७ ।।

येषामज्मेषु ।। अत्र श्रुतिभाष्ययोःप्रथमपदस्यैकप्रकारत्वादुभयोरेकप्रतीकग्रहणं ज्ञेयम् ।। ज्मा पृथिवीति ।। ज्मा क्ष्मेति पृथिवीनामसु पाठादिति भावः ।। रेजते कंपते इति ।। रेजृदीप्ताविति धातुपाठेपि धातूनामनेकार्थत्वादयमर्थ इति भावः । सामान्ये नपुंसकत्वमाश्रित्य शङ्कते ।। किमिवेति ।। जीर्यतेःक्वसौ रूपमिति ।। जॄवयोहानाविव्यतःलिटःक्वसुश्चेति क्वस्वादेशे उदोष्ठ्यपूर्वस्य बहुलं छन्दसीति धातोरुकारादेशे रपरत्वे च द्वित्वादौ च उगिदचामिति नुमागमे अत्वसंतस्येति दीर्घे च सुलोपसंयोगांतलोपे च जुजुर्वानिति रूपमिति भावः ।। उत्तरत्र संबन्ध इति ।। स्थिरं हीत्यस्यामृचीत्यर्थः । अत एव तट्टीकायामेषामुक्तगुणानामित्यध्याहृत्य योजना भविष्यति ।। ८ ।।

स्थिरं हि ।। जानं जननमिति ।। जनी प्रादुर्भावे इत्यतो भावे घञि नपुंसकत्वं छान्दसमिति भावः । यतो जाता वायोर्दिवीति भाष्यं मूलारूढं करोति ।। अनेन हिशब्द इति ।। श्रुतिस्थ इति शेषः ।। निरेतवे निर्गन्तुमिति ।। निर्पूर्वादिण्गताविव्यतस्तुमर्थेसेसेनित्यनेन सूत्रेण तवेन्प्रत्यये सार्वधातुकेति गुण इति भावः । मातुराजनेरित्यन्वयाभावादध्याहरति ।। मातुःप्रसादेनेति ।। यदि मरुतोनिसर्गात्स्वभावाद्युवान- स्तर्हि आजनेरिति व्यर्थमित्यत आह ।। निसर्गादित्यस्यैव विवरणमिति ।। श्रुतिस्थमातुरिति पदस्योत्तरार्धेप्यन्वयं वदन्नध्याहृतेन योजयति ।। अनुमातुरिति ।। हेतौ कर्मप्रवचनीय इति ।। अनुर्लक्षणे इति सूत्रेणेति शेषः । अत एव कर्मप्रवचनीययुक्ते द्वितीयेत्यनेन द्वितीयेति भावेन प्रसादं इति शेष इत्युक्तम् । अनेनैवाशयेन भाष्ये मातुःप्रसादेनेत्युक्तमिति भावः । द्वयोर्भावो द्विता । अस्माच्छब्दात्तृतीयायाःसुपां सुलुगिति लुक् तस्याध्याहृतेनोपेत शब्देनान्वय इत्याशयेनाह ।। द्विताशव इत्यादिना ।। शवस्तत्प्रसिद्धं बलमिति ।। शवस्तर इति बलनामसु पाठादिति भावः ।। उत्तरत्र साध्यनिर्देश इति ।। उदुत्ये इत्युत्तरस्यामृचि प्रज्ञाबलस्य वाश्रा इत्यनेन व्याख्यानशीलत्वं बाहुबलस्योदन्नतेति गमनं साध्यनिर्दिश्यत इत्यर्थः ।। ९ ।।

(टीकाविवृतिः)

उदुत्ये ॥ शब्दमात्रे वाशतिमिति ॥ वाश्रृशब्दे इति धातोः स्फायितं चीत्यादिना उणादिसूत्रेण रक्प्रत्ययः । बहुलग्रहणात्तच्छीलार्थे ज्ञेय इति भावः ॥ अततेर्लङीति ॥ अतसातत्यगमने इति धातोर्लङो झादेशे व्यत्ययेन श्नाविकरणे श्नाभ्यस्तयोरात इत्यालोपे इति शेषः ॥ जनेरुङ्प्रत्यय इति ॥ अणश्चेत्यत्र चकाराज्जनेरपि उप्रत्ययो बहुलोक्तेर्ङित्वं चेति भावः ॥ गमहनेत्यादिनेति ॥ गमहनजनखनघसां लोपःकिङत्यनङीति सूत्रेणानङभिन्नक्ङिति प्रत्यये परे गमादिधातूनां उपधाया लोपविधानादिति भावः । ततश्चुत्वेन नकारस्य ञकारादेशे जञोज्ञ इति ज्ञादेश इति शेषः ॥ अभि जन्मेति ॥ उत्तमं जन्मेत्यर्थः ॥ यातवे इति ॥ यातेस्तुमर्थे इति तवेन्प्रत्यय इति भावः । मरुतां दिग्विजयाकरणे किंबाधकमित्यतो गिरःसूनवो वाश्रा अभिज्ञुयातवे इति पदैःसूचितं भावमाह ॥ भारतीपुत्रा इति ॥ व्याख्यानशीलत्वं दिग्विजयकरणं चैषां मरुतां कथं तत्कारणाभावादित्यत आह ॥ तत्र सामर्थ्यसद्भावरूप इति ॥ तत्रोक्तद्वये पूर्वत्र पूर्वस्यामृचि प्रज्ञाबलबाहुबलसद्भावोक्तेः प्रज्ञाबलस्य व्याख्यानशीलत्वहेतुत्वस्य बाहु बलस्य दिग्विजयहेतुत्वस्य संभवादिति भावः ॥ १० ॥

ऋक्संहिता पदपाठसहिता (सू-३७, व-३)

(४५२) त्यंचिद्धा दीर्घं पृथुं मिहोनपातममृध्रम् । प्रच्यावयन्ति यामभिः ॥ ११ ॥

(प०) त्यम् । चित् । घ । दीर्घम् । पृथुम् । मिहः । नपातम् । अमृध्रम् । प्र । च्यवयन्ति । यामऽभिः ॥ ११ ॥

(४५३) मरुतो यद्धवो बलं जनाँ अचुच्यवीतन । गिरींरचुच्यवीतन ॥ १२ ॥

(प०) मरुतः । यत् । ह । वः । बलम् । जनान् । अचुच्यवीतन । गिरीन् । अचुच्यवीतन ॥ १२ ॥

(४५४) यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति कश्चिदेषाम् ॥ १३ ॥

(प०) यत् । ह । यान्ति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ । शृणोति । कः । चित् । एषाम् ॥ १३ ॥

(ऋक्संहिता पदपाठसहिता)

(४५५) प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः । तत्रोषु
मादयाध्वै ॥ १४ ॥

(प०) प्र । यात । शीभम् । आशुऽभिः । सन्ति । कण्वेषु । वः ।
दुवः । तत्रोइति । सु । मादयाध्वै ॥ १४ ॥

(४५६) अस्ति हिष्मा मदायवः स्मसिष्मा वयमेषाम् । विश्वं
चिदायुर्जीवसे ॥ १५, १४, ३७ ॥

(प०) अस्ति । हि । स्म । मदाय । वः । स्मसि । स्म । वयम् ।
एषाम् । विश्वम् । चित् । आयुः । जीवसे ॥ १५, १४, ३७ ॥

## ऋग्भाष्यम्

पञ्चां भूमिरिति श्रुत्या सुताविष्णोर्वसुंधरा । तज्जत्वात्पर्वता विष्णोर्नप्तारः सेचनाद्धिमिट्। हरिस्तमपि मेर्वादिं मरुतश्च्यावयंति हि । अमृध्रमप्रधृष्यत्वात् ॥ ११ ॥ बलं यदपि वोखिलम् । जनांश्च्यावयितुं स्थानाच्छक्ताः सम्यग्गिरीनपि ॥ १२ ॥ कुर्वन्ति शास्त्रसंवादं मार्गे शृण्वंति केचन । तेषां मध्येहि मरुताम् ॥ १३ ॥ शीभं क्षिप्रं प्रयातनः । मदं कुरुत तत्रैव दोहनान्यत्र संतिहि ॥ १४ ॥ सर्वमायुर्जीवसेस्ति प्रसादान्मरुतां हिनः ॥ १५, १४, ५ ॥

## ऋग्भाष्यटीका

त्यंचिद्धा दीर्घं पृथुम् । अत्र को मिट् कश्च तस्य नपात् कथं चेत्यत आह ॥ पद्भ्यामिति । अत्र मिडिति विष्णुवाचीत्युक्तम् । तत्कथमित्यत आह ॥ सेचनाद्धीति । मिह सेचने अस्मात्क्विप् । इदानीमृचं व्याख्याति । तमपीति । मरुतो । दीर्घमायामवन्तम् । पृथुं विस्तारवन्तम् । अप्रधृष्यत्वादमृध्रम् । मृधेः क्लेदनार्थात्कर्मणि रः । तत्राक्लेद्यत्वेनाप्रधृष्यत्वमुपलक्ष्यते । मिहो नपातं पर्वतम् । त्यंचित् तमपि प्रसिद्धमेर्वादिकमपि । यामभिः । भावेमः । गमनैः । प्रच्यावयन्ति स्वस्थानाच्च्युतं कारयन्ति । घ हि ॥११॥

मरुतः । बलम् । हे मरुतो । यद्यस्माद्वो युष्माकं बलं ह । अखिलमपि बलमस्ति । तस्माद्यूयं जनान् अचुच्यवीतन । गिरींश्चाचुच्यवीतन । च्यवतेर्ण्यन्तात्परस्य लुङो मध्यमपुरुषबहुवचनस्य तप्तनप्तनथनाश्चेति तनः । स्वस्थानात् च्युतानचीकरत । एतत्प्रमाणविरुद्धम् । पर्वतादीनां स्वस्थान एव

(ऋग्भाष्यटीका)

स्थितत्वदर्शनादित्यतस्तात्पर्यमाह ॥ जनान् गिरीनपि स्थानाच्यावयितुं शक्ता स्थेति । द्विःक्रियाभिधानस्य प्रयोजनमाह ॥ सम्यगिति ॥ १२ ॥

यद्ध । कुर्वन्ति । मरुतो यद्यदा यान्ति तदैषां तेषां मरुतां मध्ये । केचनाध्वन्नध्वनि मार्गे । संब्रुवते ह शास्त्रविषयं संवादं कुर्वन्ति हि । कश्चित्केचित् । आ सम्यक् । शृणोति ह शृण्वन्ति हि । सर्वदापि शास्त्राभ्यासतत्परा इति ॥ १३ ॥

प्रयात । शीभम् । हे मरुतो यूयम् । आशुभिर्वाहनैः । शीभं शीघ्रम् । नोस्मान्प्रति । प्रयात आगच्छत । आगत्य च । तत्र उ तत्रैवास्मद्गृहेष्वेव । सु सम्यङ् मादयाध्वै मदं कुरुत सुखिनो भवत । कथम् । अत्र कण्वेषु कण्वगृहेषु । वो युष्माकमर्थे । दुवो दोहनानि सन्ति हि ॥ १४ ॥

अस्ति । अत्रोत्तरार्धमपूर्णं शेषपूरणेन व्याख्याति । सर्वमिति । हे मरुतो वो युष्माकम् । मदाय सुखाय । अस्मद्गृहेषु हविरादिसाधनमस्ति हि स्म सुप्रसिद्धमेतत् । किञ्च । वयमेषां मरुतां सम्बन्धिनः । स्मसि स्म भवामो हि । कथम् । नोस्माकं मरुतां प्रसादाज्जीवसे जीवनाय । विश्वं चित् सर्वं सम्पूर्णमप्यायुरस्ति हि । तत्प्रसादलब्धायुराद्या वयं कथं तदीया न भवामः । तस्मादस्मानगच्छतेति ॥ १५, १४, ५ ॥

## मन्त्रार्थमञ्जरी

(मरुतः) दीर्घम्, आयामवन्तम् । पृथुम्, विस्तारवन्तम् । अप्रधृष्यत्वात्– अमृध्रम्, मृधेः क्लेदनार्थात्कर्मणि रक्, तत्राक्लेद्यत्वेनाप्रधृष्य- त्वमुपलक्ष्यते । मिहः, सेचकस्य, हरेः, 'मिह सेचने' क्विप् । पद्भ्यां भूमिर्' (ऋ० म० १०।९०।१४) इति श्रुत्या पुत्रीभूतधराजन्यत्वात्पर्वतजातं 'नप्तृ' इत्युच्यते (नपातम्), नप्तारम्, पौत्रभूतम् । त्यम् चित्, तमपि, प्रसिद्धं मेर्वादिकमपि । यामभिः, यातेः भावे म(निन्) प्रत्ययः, गमनैः । प्र च्या(च्य)वयन्ति, स्वस्थानाच्युतं कारयन्ति । घ, हि ॥ ११ ॥

(हे) मरुतः । यत्, यस्मात् । वः, युष्माकम् । बलम् ह, अखिलमपि बलमस्ति । (तत्) तस्मात् । (यूयम्) जनान् अचुच्यवीतन गिरीन् (च) अचुच्यवीतन, च्यवतेः ण्यन्तात्परस्य लुङो मध्यमपुरुषबहुवचनस्य 'तप्तनप्तनथनाश्च' इति तनादेशः, स्वस्थानाच्युतानचीकरत, जनान्गिरीनपि स्वस्थानाच्यावयितुं शक्ताः स्थ– इति तात्पर्यान्न प्रमाणबाधः, द्विष्क्रियाभिधानं सम्यक्छक्तिमत्त्वद्योतनाय ॥ १२ ॥

मरुतः । यत्, यदा । यान्ति (तदा) । एषाम्, मरुतां मध्ये । (कः चित्) केचन । अध्वन्, अध्वनि, मार्गे । सम् ब्रुवते ह, शास्त्रविषयं संवादं कुर्वन्ति हि । कः चित्, केचित् । आ, सम्यक् । शृणोति ह, शृण्वन्ति हि, सदा शास्त्राभ्यासतत्पराः इति भावः ॥ १३ ॥

(मन्त्रार्थमञ्जरी)

(हे मरुतो यूयम्) अशुभिः, वाहनैः । शीभम्, शीघ्रम् । (नः) अस्मान्प्रति । प्र यात, आगच्छत । आगत्य च तत्रो, तत्रैव, अस्मद्गृहेषु । सु, सम्यक् । मादयाध्वै, मदं कुरुत, सुखिनो भवत । कथम् ?अत्र कण्वेषु, कण्वगृहेषु । वः, युष्माकमर्थे । दुवः, दोहनानि । सन्ति (हि) ॥१४॥

(हे मरुतः) वः, युष्माकम् । मदाय, सुखाय । अस्मद्गृहेषु हविरादिसाधनम्– अस्ति । हि स्म, सुप्रसिद्धमेतत् । किं च, वयम् । एषाम्, मरुतां सम्बन्धिनः । स्मसि स्म, भवामो हि । कथम् ? (नः) अस्माकम् । मरुतां प्रसादात् जीवसे, जीवनाय, तुमर्थेऽसेप्रत्ययः । विश्वम् चित्, सर्वं सम्पूर्णमपि आयुः (अस्ति हि) तत्प्रसादलब्धायुराढ्या वयं कथं तदीया न भवामः, तस्मात् 'अस्मानागच्छत' इति ॥ १५ ॥ इति चतुर्दशो वर्गः ॥ १४ ॥ सप्तत्रिंशं सूक्तम् ॥ ३७ ॥

## रूपावतारः

त्यंचित् ॥ भावे म इति । 'अर्तिस्तुसुधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' (उ.१३७) इति भावे मन्प्रत्यय इति भावः ॥ ११ ॥

मरुतः ॥ च्यवतेर्ण्यन्तादिति । च्युङ्गतावित्यतो णिजन्तात् लुङ् मध्यमपुरुषबहुवचनस्य 'तस्थस्थ....' (३।४।१०१) इति तादेशे तस्य तनादेशे च्लिप्रत्यये तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' (३।१।४८) इति चङादेशे 'चङि' (६।१।११) इति द्विर्वचने णिच्प्रयुक्तवृद्धौ आव् आदेशे ''णौचङ्युपधायाः ह्रस्वः'' (७।४।१) इति ह्रस्वे व्यत्ययेन चङ् ईकारे अडागमे अचुच्युवीतनेति रूपम् ॥ १२ ॥

यद्ध । श्रुणोतीत्येकवचनं बहुवचनार्थ इति भावेनाह । श्रुणोति श्रुण्वन्ति हीति ॥ १३ ॥

प्रयात ॥ तत्र इति । यद्यपि तत्रो इत्येकं पदं तथापि तत्रेत्यस्य उ इत्यनेन समासे गुणे तत्रो इति समस्तपदं जातमिति ज्ञापयितुं तत्र उ इत्युक्तम् ॥ १४ ॥

अस्ति ॥ स्महीति 'इदंतोमसि' (७।१।४६) इति वचनात् स्मसीति रूपम् । १५ ॥ १४ ॥५॥

## पदार्थप्रकाशिका

त्यं चिद्धा दीर्घं पृथुं । अत्रेति । अस्यां ऋचि मिहो नपातमित्यत्रेत्यर्थः । कथं चेति । पर्वतानां मिट्शब्दवाच्यपरमात्मनपात्वं कथमित्यर्थः । किबिति । मिह सेचने अस्मात्क्विपि तस्य लोपे मिट् इति प्रातिपदिकसिद्धिः । पश्चात् होढ इति हकारस्य ढत्वे तस्य झलां जशोन्त इति जस्त्वे । वावसान

(पदार्थप्रकाशिका)

इति चर्त्वे च मिट् इत्यादि भवति। तस्य षष्ठ्यैकवचने मिह इति भवतीति द्रष्टव्यम्। आयामः उन्नतत्वं तद्वन्तम्। कर्मणि र इति। नोपपदान्मृधु क्लेदनेऽस्मात्कर्मणि रप्रत्ययेऽमृध्रेति रूपम्। पर्वतेषु क्लेदनप्रसक्तेरेवाभावेन निषेधायोगादाह तत्राक्लेद्यत्वेनेति। लोके कृतापराधः कश्चित्केनचिद्बलात्प्रधृष्टः ते चेत्तदा खेदादिजननेन तस्य क्लेदनं प्रसिद्धमिति भावः। मिहो नपातम्। हरेः दौहित्रम्। पूर्ववद्यान्त्यस्मिन्नित्यधिकरणे मप्रत्ययो न विवक्षित इत्याह भावे म इति। तथा च या प्रापणेऽस्मात् भावे मप्रत्यये यामेति प्रातिपदिकसिद्धिरित्यर्थः। अतो भिस ऐसिति भिस ऐस्त्वाभावश्छांदसो द्रष्टव्यः। भाष्ये हीत्येतद्धशब्दव्याख्यानमित्याशयेनाह घाहीति॥ ११॥

मरुतो यद्ध वो बलम्। च्यवतेरिति। गत्यर्थात् चूङ् धातोरित्यर्थः। बहुवचनस्येति। थेत्यस्येत्यर्थः। तप्तनप्तनथनांश्चेति। छन्दसि मध्यमपुरुषबहुवचनस्य तप् तनप् तन् थन इत्यादेशाः भवन्तीति सूत्रार्थः। उदाहरणानि तु। तप्। श्रुणुतेति प्राप्ते श्रुणोत ग्रावाणः। सुनुतेति प्राप्ते सुनोत सोमम्। तनप्। धत्तेति प्राप्ते सश्वरत्रारः धातन। तन्। जुषतेति प्राप्ते जुजुष्टन। थन्। यदिच्छतेति प्राप्ते यदिष्ठनेत्यादीनि द्रष्टव्यानि। तथाच चुङ् ज्युङ् युङ् गताविति गत्यर्थकात् च्युङ् धातोर्णिजन्तालुङि मध्यमपुरुषबहुवचने तस्य थेत्यादेशे तस्य नप्तनप् इति सूत्रेण तनादेशे पश्चात् णिश्रिद्रुश्रुभ्यः कर्तरि चङिति चङ्प्रत्यये तद्बलात् द्वित्वे च्युचङ् तनेति जाते हलादिशेषेण अभ्यस्तस्य यकारस्य लोपे चुच्यु इति जाते चङो लोपे बहुलं छन्दसीति सूत्रेण ईडागमे च्युच्यु ईतनेति जाते उकारस्य ओकाररूपे गुणे तस्य चावादेशे च्युच्यव् ईतनेति जाते लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमे अचुच्यवीतनेति रूपमिति भावः। भाष्यस्थेन सम्यगिति पदेन व्याख्येयस्य ऋक्पदस्याभावादाह द्विरिति। पूर्वार्धे अचुच्यवीतनेति क्रियापदस्य सत्वात्तस्यैवोत्तरार्धे गिरीनित्यत्राप्यनुवृत्यान्वयसम्भवात् द्विवारंक्रियाभिधानं किमर्थमित्याशंक्य तस्य प्रयोजनमाहेत्यर्थः। सम्यगितीति। च्युतिकरणस्य सम्यक्त्वद्योतनं द्विःक्रियाभिधानस्य प्रयोजनमिति भावः॥ १२॥

यद्ध यांति मरुतः। एषामिति ऋक्पदमनूद्य तेषामिति भाष्यपदं संयोजितम्। संवादम् विचारम्। कश्चित्केचिदिति। तथाचानेन ऋचि कश्चिदित्येकवचनं समुदायापेक्षमित्युक्तं भवति। ऋक्तात्पर्यमाह सर्वदेति॥ १३॥

प्र यात शीभमाशुभिः। अशुभिरित्यस्याशुगतिभिरित्यर्थमभिप्रेत्याशुभिर्वाहनैरित्युक्तम्। तत्र उ इति। तत्रोष्वित्यत्र। तत्र उ इति सु इति हि पदच्छेदः। कण्वगृहेष्विति। कण्वस्य मम गृहेष्वित्यर्थः। दोहनानीति। अखिलकाम्यानीत्यर्थः। विदा देवेषु नो दुव इत्यत्र भाष्ये तथा व्याख्यातत्वात्॥१४॥

(पदार्थप्रकाशिका)

अस्ति हि ष्मा मदाय वः । शेषपूरणेनेति । प्रसादान्मरुतां हि न इत्येतावच्छेष-पूरणमित्यवगन्तव्यम् । पूर्वार्धस्य भाष्यकारैरव्याख्यातत्वात्तदर्थं स्वयं दर्शयन् समग्रामृचं व्याख्याति हे मरुत इति । प्रसिध्यर्थकयोर्हिस्मेत्यनयोरर्थमाह सुप्रसिद्धमेतदिति । अस्मद् गृहे भवत्प्रीतिकरं हविरादिसाधनमस्तीत्येतत्सुप्रसिद्धमित्यर्थः । स्मेत्यस्यार्थो हीति । कथमिति । मरुत्सम्बन्धिनो यूयं कथमित्यर्थः । कथमनेनोत्तरार्धेन सम्बन्धित्वमुपपादितमित्यत आह तत्प्रसादेनेति । आयुराद्या इत्यत्रादिपदेन हविरादिसाधनपरिग्रहः । ततः किमित्याशङ्कायां ऋचि साध्यानुक्तेस्तस्या ऋचो मरुतत्वघटनाय चाह तस्मादिति । अस्मद्गृहेषु भवत्प्रीतिकरहविरादिसाधनसद्भावादस्माकत्व सम्बन्धित्वाच्चेत्यर्थः । आगच्छतेत्यनेन प्रयातेति पूर्वर्चा सम्बन्ध उक्तो भवतीति ज्ञातव्यम् ।। १५, १४, ५, (३७) ।।

## पदार्थदीपिका

किबिति । क्विप्चेति सूत्रेणेति शेषः । कर्मणि रइति बहुलवचनात् औणादिको रप्रत्यय इत्यर्थः । न पातमिति । न पातयतीति नपातम् । नभ्राण्नपादित्यादिना नञःप्रकृतिभाव इति भावः । च्यावयन्तीति । च्युङ् गतावित्यस्मात् णिचि वृध्यवादेशौ । पदकाले ह्रस्वःछान्दस इति भावः ।।११।।

च्यवतेर्ण्यन्तादिति च्युङ् गतावित्यस्मात् शब्विकरणात् णिचि वृध्यवादेशयोः सतोर्निष्पन्नस्य च्यावीति णिजन्तस्य सनाद्यन्ता धातव इति धातुसंज्ञायां लुङि व्यत्ययेन परस्मैपदे मध्यमपुरुषबहुवचनस्य तस्य तप्तनप्तनथनाश्चेति तनादेशे च्लेःसिजपवादतया णिश्रिद्रुस्रुभ्यःकर्तरि चङिति चङि अद्वित्वनिमित्ते णिचि परे द्वित्वे कर्तव्ये तत्कार्यस्य स्थानिवद्भावात् चङीत्यनेन द्वित्वे हलादिशेषे च णेरनिटीति णिलोपे णौ चङ्युपधाया ह्रस्व इति उपधाया ह्रस्वत्वे बहुलं छन्दसीतीडागमे चङ्लोपे चाचुच्यवीतनेति रूपसिद्धिरिति द्रष्टव्यम् । गिरीनिति । दीर्घादटि समानपद इति संहितायां नकारस्य रुत्वम् । अत्रानुनासिक इति रकारस्यानुनासिक इति भावः ।। १२ ।।

यातीति । या प्रापणे । अदादित्वाच्छपो लुगिति भावः । अध्वन्निति । सुपां सुलुगिति सप्तम्या सुलुगिति भावः । ब्रुवतेति । ब्रूञ् व्यक्तायां वाचि । अस्मात् परस्य झस्यादादेशे कृते परत्वात्प्राप्तस्य गुणस्य ङित्वेन बाधितत्वात् उवङादेश इति भावः ।। १३ ।।

(पदार्थदीपिका)

आशुभिरिति । अशू व्याप्तौ कृवापाजीत्यादिना उण्प्रत्यय इति भावः । क्षिप्रमिति । क्षिप्रनामसु पठितत्वादिति भावः । मादयाध्वा इति । मद तृप्तियोगे । चुरादावात्मनेपदिनो लेटि आडागमः । टेरेत्वं वेतोन्यत्रेत्येकारस्यैकारादेश इति भावः । सन्तीति । श्नसोरल्लोप इति भावः ॥ १४ ॥

स्मसि स्म इति । इदन्तो मसिरिति भावः । जीवस इति । तुमर्थे सेसेनित्यसेन् प्रत्यय इति भावः ॥ १५, १४, ३७ ॥

## टीकाविवृतिः

त्यंचित् ॥ कथंचेति ॥ पर्वतस्य नप्तृत्वमिति शेषः ॥ विष्णुवाचीत्युक्तमिति ॥ मिह इति षष्ठचंतस्य विष्णोरिति प्रतिपदोक्तेरिति भावः ॥ आयामवंतमिति ॥ अत्युच्चमित्यर्थः ॥ विस्तारवंतमिति ॥ तिर्यग्देशव्याप्तमित्यर्थः ॥ मृधेःक्लेदनार्थादिति ॥ मृधु उंदे इति धातोः उन्दी क्लेदने इत्युक्तेः क्लेदनार्थत्वमिति भावः ॥ कर्मणि र इति ॥ स्फायितं चीक्तोरक्प्रत्ययो बहुलोक्तेरस्मादपीति शेषः ॥ भावेम इति ॥ अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्नित्यनेनेति शेषः । बहुलं छन्दसीति भिस ऐसादेशाभावः । बहुलवचने झल्येदित्येत्वं छान्दसत्वान्नेति भावः ॥ ११ ॥

मरुतो यत् ॥ गिरीनिति ॥ श्रुतौ संहितायां दीर्घादटि समानपाद इति रुत्वे अत्रानुनासिक इत्यनुनासिक इति भावः । एवं जनानित्यत्रापि रुत्वानुनासिकयोः कृतयोः भोभगो इति रोर्यत्वे तस्य लोपःशाकल्यस्येति लोपो विशेषः ॥ च्यवतेर्ण्यन्तादिति ॥ च्युङ्गतावित्यतो लुङि थस्य तस्थस्थेति तादेशे तस्य तनादेशे च्लेर्णिश्रीति चङि द्विर्वचनेचीति स्थानिवद्भावात् च्यु इत्यस्य द्वित्वानंतरमचो ञ्णितीति वृद्धौ णौ चङीति ह्रस्वे व्यत्ययेन चङ ईकारादेशे एतद्रूपमिति भावः ॥ १२ ॥

यद्ध ॥ समित्यस्यार्थमाह ॥ शास्त्रविषयमिति ॥ कश्चित्केचिदिति ॥ तथाच श्रुतौकश्चिच्छृणोतीति पदद्वयं ब्रुवते इत्येतत्समभिव्याहाराज्जात्यभि- प्रायमित्युक्तं भवति ॥ १३ ॥

प्रयात ॥ आशुभिर्वाहनैरिति ॥ आशुर्ब्रध्न इत्यश्वनामसु पाठादिति भावः ॥ शीभं शीघ्रमिति ॥ शीघ्रं नासः शीभमिति क्षिप्रनामसु पाठादिति भावः ॥ मादयाध्वै इति ॥ मदेःस्वार्थण्यन्ताल्लेटो ध्वमादेशे टित आत्मने पदानां टेरे इत्येत्वे वैतोन्यत्रेति सूत्रेण एकारस्य ऐकारादेशे लेटोडाटाविति ध्वम आडागमे णेर्गुणायादेशाविति भावः ॥ दुव इति ॥ दुहेरौणादिके डुप्रत्यये जसि छान्दस उवङादेश इति भावः ॥ १४ ॥

(टीकाविवृतिः)

अस्ति हि ॥ शेषपूरणेनेति ॥ प्रसादान्मरुतां हिन इति शेषपूरणमिति भावः । श्रुतावनुक्तमधिकरणं कर्तारं च स्वयं पूरयति ॥ अस्मद्गृहेषु हविरादिसाधनमिति ॥ स्मसीति ॥ अस्तेर्लटि श्नसोरल्लोप इति अकारलोपे अदादित्वाच्छपो लुकि मस इदंतो मसिरिति सूत्रेणेकारांतत्वमिति भावः ॥ कथमिति ॥ मरुतां संबन्धित्वं कथमित्यर्थः ॥ तत्प्रसादेति ॥ आद्यग्रहणादन्नादिग्राह्यम् । हेतुगर्भविशेषणमेतत् । अस्या ऋचःपूर्वयर्चा संबन्धमाह ॥ तस्मादस्मानागच्छतेति ॥ १ ॥

## ऋक्संहिता पदपाठसहिता (सू-३८, व-१)

(४५७) कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः । दधिध्वे वृक्तबर्हिषः ॥ १ ॥

(प०) कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः । दधिध्वे । वृक्तऽबर्हिषः ॥ १ ॥

(४५८) क्व नूनं कद्वो अर्थं गन्ता दिवोन पृथिव्याः । क्व वो गावो न रण्यन्ति ॥ २ ॥

(प०) क्व । नूनम् । कत् । वः । अर्थम् । गन्त । दिवः । न । पृथिव्याः । क्व । वः । गावः । न । रण्यन्ति ॥ २ ॥

(४५९) क्व वःसुम्ना नव्यांसि मरुतः क्व सुविता । क्वो३विश्वानि सौभगा ॥ ३ ॥

(प०) क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता । क्वो३इति । विश्वानि । सौभगा ॥ ३ ॥

(४६०) यद्यूयं पृश्निमातरो मर्तासः स्यातन । स्तोतावो अमृतः स्यात् ॥ ४ ॥

(प०) यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥ ४ ॥

(ऋक्संहिता पदपाठसहिता)

(४६१) मा वो॑ मृ॒गो न यव॑से जरि॒ता भू॒दजो॑ष्यः । प॒था य॒मस्य॑ गा॒दुप॑ ॥ ५, १५ ॥

(प०) मा । व॒ः । मृ॒गः । न । यव॑से । ज॒रि॒ता । भू॒त् । अजो॑ष्यः । प॒था । य॒मस्य॑ । गा॒त् । उप॑ ॥ ५, १५ ॥

## ऋग्भाष्यम्

कदानयोर्हस्तयोर्देवा दधिध्वे प्रियतातवत् । कदापि यत्प्रियस्तातः कधप्रिय इतीरितः । स्तृतं बर्हिर्यद्विषये ते प्रोक्तावृक्तबर्हिषः ॥ १ ॥ दिवः पृथिव्याश्चेदानीं क्वगच्छथ चकिं फलम् । न गच्छथक्वाप्येतज्ज्ञातव्यं तत्प्रसादतः । आह्वयन्ति क्वागावो यथैव यवसार्थिनः । फलार्थिनः स्तुवन्तोवः क्वाह्वयन्ति तथैव च ॥ २ ॥ स्तुत्यानि वः सुखानि च कथं ज्ञेयानि नः सदा । इत्यभिप्रायतः प्रश्नः कस्मिन्नोज्ञापकस्त्विति । सुवितानि सुभद्राणि सौभगं लक्षणं परम् ॥ ३ ॥ पृश्निर्वेदः प्रश्नयोग्यः पृश्निमाता हरिस्ततः । ज्ञेयस्तस्यापि विज्ञाता मारुतश्चेत्सुतागिरः । मानुषा यदि यूयं वः स्तोता देवो भवेदपि ॥ ४ ॥ नस्यादसेव्यः स्तोतात्र यथा यवसगोचरे । गोप्राप्येतु मृगोऽसेव्यो यममार्गं न च व्रजेत् । याच्आरीति विशेषोयं निन्दास्तुत्येकदेशयुक् ॥ ५, १५ ॥

## ऋग्भाष्यटीका

कद्ध । एतदपि पञ्चदशर्चं मारुतं सूक्तम् । कदा । हे देवा मरुतो यूयम् । माङ्कत् कदा । अनयोर्न तु जन्मान्तरभाविनोः । हस्तयोर्नूनं निश्चितम् । दधिध्वे धध्वे । देत्यास्वादने । क(कइव)मिव । कधप्रियः पिता । पुत्रं न पुत्रं प्रियतातवत् । कथमेतल्लभ्यत इत्यत आह ॥ कदापीति । यद्यस्मात्तस्मात् कधेति निपातः कदापि सदापीत्यर्थे वर्तमानः । प्रियशब्देन समस्त इत्यर्थः । वृक्तबर्हिष इति मरुतां सम्बोधनम् । तद्घटयन्व्याख्याति । स्तृतमिति । सप्तम्यर्थे बहुव्रीहिः ॥ १ ॥

क्व नूनं दिवः । हे मरुतः । ते यूयम् । नूनमिदानीम् । दिवः स्वर्गात्पृथिव्याश्च । क्व गन्त क्व गच्छथ । गमने च वो युष्माकम् । कत् अर्थम् । कोर्थः । किं फलम् । न क्वापि गच्छथ । किमपि फलं नास्ति वा । एतन्मरुतः प्रति किमिति पृच्छ्यत इत्यत आह ॥ एतदिति । ज्ञातव्यं खल्वेतत् । पुरुषार्थहेतुत्वात् । तत्प्रसादत एव च ज्ञायते नान्यथा । अन्यस्य तथाविधस्य वक्तुरभावात् । अतो युक्तमेतत् । एवमुत्तरत्रापि । किञ्च । वो युष्मान्क्व रण्यन्ति रणन्ति आह्वयन्तीति यावत् । गावो नेति दृष्टान्तं विवृण्वन् दार्ष्टान्तिके

(ऋग्भाष्यटीका)

कर्तुरनिर्देशात्तमपि विवृणोति। यथैवेति। यथैव यवसार्थिनो गावो यवसदातॄनाह्वयन्ति। तथैव मोक्षादि-फलार्थिनः स्तुवन्तः साधकाः वः काह्वयन्ति। दुर्लभं ह्येतदिति चशब्दः ॥ २ ॥

क्वः। अत्राद्यपादं व्याचष्टे ॥ स्तुत्यानीति। चशब्दः क्वेत्यस्यानुकर्षणार्थः। अनुपपन्नोयं प्रश्नः। तदीयसुखादेस्तद्गतत्वस्य निश्चितत्वादित्यत आह ॥ कथमिति। अनेन क्वेत्यस्य कथं भूतानि। केनोपायेन वेत्यर्थान्तरसंचारेण। ज्ञेयानीति पदाध्याहारेण प्रश्नः समर्थितः। इदानीं तु क्वेत्यस्य स्वार्थापरित्यागेन प्रश्नं समर्थयते। कस्मिन्निति। कस्मिन्नाचार्ये निमित्ते सति। ज्ञापक इत्येकवचनं भगवदपेक्षया। तुशब्दश्चार्थः। इति च प्रश्नः। सुवितसौभगशब्दार्थमाह ॥ सुवितानीति। परं लक्षणमिति ॥ द्वात्रिंशत्स्वेकमित्यर्थः। यस्मिन्सति जना वशा भवन्ति तत्सौभाग्यमित्युच्यते। ततश्चैवं योजना। हे मरुतो वो युष्माकम्। नव्यांसि नव्यानि स्तुत्यानि सुम्नानि सुखानि क्व सुविता सुवितानि सुभद्राणि। चरितानि क्व। विश्वानि सम्पूर्णानि सौभगा सौभगानि। सौभाग्यानि च क्वेवेति ॥ ३ ॥

यत्। अत्र पृश्निमातृशब्दं हरौ तावद्व्याख्याति। पृश्निरिति। वेदः पृश्निः। कथं प्रश्नयोग्यः। पृच्छतेः कर्मणि निङ् यतो हरिस्तस्य वेदस्य ज्ञेयः। तस्य विज्ञातापि। ततः प्रकारद्वयेन पृश्निमाता। पृश्निर्माता ज्ञाता यस्येति करणे कर्तृत्वोपचारः। समासान्ताभावः छान्दसः। पृश्नेर्माता ज्ञातेति च। उभयत्र दीर्घाभावः छान्दसः। मरुत्सु व्याख्याति। मरुत इति। मरुतो विवक्षिताश्चेत्तदा पृश्निमातर इत्यस्य गिरः सुता इत्यर्थः। पृश्निर्गीर्भारतीति वाङ्नामसु पाठात्। सा माता येषामिति। इदानीमृचं व्याचष्टे। मानुषा इति। हे पृश्निमातरो मरुतो यूयम्। यद्यदि। मर्तासो मानुषाः स्यातन स्यात। तदापि वः स्तोताऽमृतो देवः। स्याद्भवेत्। मानुषावतारेपि भक्तेभ्यो देवत्वादि दातुं समर्था यूयमिति ॥ ४ ॥

मावः। न स्यात्। हे मरुतो। वो जरिता स्तोता। कथंचित्कृतपातकोपि। अत्र जन्मन्यजोष्योऽसेव्योऽसंव्यवहार्यः। माभूत् न स्यात्। यवसे मृगो नेति तत्र दृष्टान्तः। सोनुगुणो न भवतीत्यतो व्यतिरेक दृष्टान्तोऽयमिति भावेन व्याचष्टे ॥ यथेति ॥ यथा गोप्राप्ये यज्ञे। धेनुभिर्भक्षणीये। यवसगोचरे यवसे विषये। मृगो व्याघ्रादिरसेव्योऽनुपादेयो भवति। तथा नायं पूजादावसेव्यो भवतीति। न केवलमिहासंव्यवहार्यो न भवति। किन्तु। अमुत्र च यमस्य पथामोपगात् यममार्गं च न व्रजेत्। नन्वसेव्यत्वाभावे सेव्यः कश्चिद्दृष्टान्तो वक्तव्यः। व्यतिरेकमुखेनासेव्यो व्याघ्रादिः कथमुच्यत इत्यत आह ॥ याच्ञेति। तस्मादस्मानपि युष्मत्स्तोतॄन्कुरुतेति याच्ञायां ह्यत्र तात्पर्यम्। याच्ञा चैवमेव भवति। यत्परनिन्दैतत्स्तुतिलक्षणैकदेशयुक्। अतो युक्तमुक्तम् ॥ ५, १५ ॥

## मन्त्रार्थमञ्जरी

अथ 'कद्ध' इत्याद्यपि पञ्चदशर्चं वर्गत्रयात्मकं मारुतं गायत्रीछन्दस्कमष्टात्रिंशं सूक्तम्। (हे) वृक्तबर्हिषः, वृक्तं विस्तृतं बर्हिर्यद्विषये ते वृक्तबर्हिषः, सप्तम्यर्थे बहुव्रीहिः। (मरुतो यूयम्) कत्,

(मन्त्रार्थमञ्जरी)

कदा । अनयोः, न तु जन्मान्तरभाविनोः हस्तयोः । नूनम्, निश्चितम् । दधिध्वे, दधातेः लिटि मध्यमपुरुषबहुवचनम् । 'ह' इत्यास्वादन (ने)म् । कधप्रियः, 'कध' इति निपातः 'सदा' इत्यर्थे, सदाप्रियः । पिता पुत्रम् न, पुत्रं प्रियतातवत् ॥ १ ॥

(हे मरुतो यूयम्) नूनम्, इदानीम् । दिवः, स्वर्गात् । पृथिव्याः (च) । क्व गन्त, क्व गच्छथ, गमेः छादेशाभावश्छान्दसः । गमने च– वः, युष्माकम् । कत् अर्थम्, कोऽर्थः किं फलम् । (न) न क्वापि गच्छथ । किं च, वः, युष्मान् । क्व । रण्यन्ति, क्व रणन्ति क्वाह्वयन्तीति यावत् । कथम् ? गावः न, यथा यवसार्थिनो गावो यवसदातॄनाह्वयन्ति, तथैव मोक्षादिफलार्थिनः स्तुवन्तः साधका वः क्वाह्वयन्ति, दुर्लभं ह्येतत्– इति भावः ॥ २ ॥

(हे) मरुतः । वः, युष्माकम् । नव्यांसि, स्तुत्यानि । (सुम्ना) सुम्नानि, सुखानि । क्व, 'क्व' इत्यस्य कथं भूतानि, केनोपायेन ज्ञेयानि– इत्यर्थः । सुविता, सुवितानि, सुभद्राणि चरितानि । (च) क्व । विश्वानि, सम्पूर्णानि । सौभगा, सौभगानि, (सौ) भाग्यानि, यस्मिँल्लक्षणे सति जना वशा भवन्ति तत्सौभाग्यमुच्यते, तानि । (च) (क्वो) क्वैव ॥ ३ ॥

(हे) पृश्निमातरः, पृश्निर्भारती माता येषामिति पृश्निमातरो मरुतः, विष्णुश्चेत्– प्रश्नयोग्यत्वात्पृश्निर्वेदः, पृच्छतेः कर्मणि निः, पृश्निर्माता ज्ञाता यस्येति करणे कर्तृत्वोपचारः, पृश्नेर्वेदस्य (मातरः) माता(रः) ज्ञाता(रः) इति वा, आद्येऽर्थे– बहुव्रीहौ 'नद्यृतश्च' इति कप्प्रत्यये रूपम्, समासान्ताभावश्छान्दसः, मातृशब्दस्य जनन्यर्थत्वे तृजन्तत्वाभावेन दीर्घाभावेऽपि ज्ञातृत्वपक्षे तृजन्तत्वेन 'अप्तृन्तृच्स्वसृनप्तृत्वष्टृक्षत्तृहोतृ' इत्यादिना प्राप्तदीर्घाभावश्छान्दसः । यूयम् । यत्, यदि । मर्तासः, मनुष्याः । स्यातन, स्यात । तथापि– वः स्तोता । अमृतः, देवः । स्यात्, भवेत् । मानुषावतारेऽपि भक्तेभ्यो देवत्वादि दातुं समर्था यूयम्– इति (भावः) ॥ ४ ॥

(हे मरुतः) वः । जरिता, स्तोता । कथं चित्कृतपातकोऽप्यत्र जन्मनि (यवसे, गोप्राप्ये यवसगोचरे । मृगः न (अजोष्यः) यथा मृगोऽ(सं)सेव्यः । (तथा) अजोष्यः, असंसेव्यः, असंव्यवहार्यः, अनुपसेव्यः । (मा भूत्, न स्यात्, न) भवतीति (यावत्) न केवलम् 'इहासंव्यवहार्यो न भवति' इति, किं तु अमुत्र च यमस्य पथा (मा) उप गात्, यममार्गं च न व्रजेत् ॥ ५ ॥ इति पञ्चदशो वर्गः ॥ १५ ॥

## रूपावतारः

कद्ध ॥ दधिध्व इति । धाञो लटि ध्वमः 'टितआत्मनेपदानाम्....' (३।४।७९) इत्येत्वे शपःश्लौ ''छन्दस्युभयथा' (६।४।११७) इति ध्वम आर्धधातुकत्वादिडागमे अतो लोपे दधिध्व इति छन्दसि रूपम् । भाषायान्तु ध्वमः सार्वधातुकत्वात् इडागमाभावे 'श्नाभ्यस्तयोरातः (६।४।११२) इत्याकारलोपे 'दधस्तथोश्च' (८।२।३८) इति भष्भावे धृध्व इति रूपम् । सप्तम्यर्थ इति । वृक्तं बर्हिर्येषु इति विग्रह इति भावः ॥ १ ॥

क्व नूनम् ॥ रण्यन्ति रणन्तीति । रणतेर्व्यत्ययेन श्यनि रण्यन्तीति रूपम् । शपि रणन्तीति रूपम् ॥ २ ॥

क्व वः । कस्मिन्नाचार्य इति । कस्मिन्नाचार्ये निमित्ते सति तत्त्वोपदेशके सतीति यावत् । परमात्मा ज्ञापकः स्यादित्यर्थः ॥ ३ ॥

यत् ॥ पृच्छतिरिति । 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि'' (उ.५२६) इति निपातनात् प्रच्छतेः निङ् इति भावः । ननु 'नद्यृतश्च' (५।४।१५३) इति सूत्रेण ऋकारान्तात् बहुव्रीहेः कप्रत्ययविधानात् पृश्निमातृका इति भाव्यमित्यत आह । समासान्ताभाव इति । ननु 'अप्तृन्तृच्...' इति संबुध्यतिरिक्तसर्वनामस्थाने दीर्घविधानात् पृश्निमातार इति दीर्घेण भाव्यमित्यत आह । उभयत्रेति । तत्पुरुषे बहुव्रीहौ चेत्यर्थः ॥ ४ ॥

मावः । यत्परनिन्देति ॥ अस्तोतुर्व्याघ्रादेर्निन्दा स्तोतुः प्रशंसात्रास्तीति भावः ॥ ५ ॥ १५ ॥

## पदार्थप्रकाशिका

कद्ध नूनं कधप्रियः । पञ्चोना मारुतं कद्धेत्यनुक्रमणिकां हृदि निधायाह अनयोरिति । भाष्यकारैः शेषः पूरितः तस्याभिप्रायमाह नत्विति । तथा चानयोरेतस्मिन्जन्मन्येतद्देहसम्बन्धिनोरेव हस्तयोर्दधिध्वे । एतद्देहसम्बन्धिनावेव हस्तैर्गृह्णीध्वमिति यावत् । मद्धस्तौ गृहीत्वा मां संसारदुद्धरतेति तात्पर्यम् । किमिवेति । दधिध्व इत्युक्तं धारणं किमिवेत्यर्थः । पुत्रं प्रियतातवदित्येतत् पुत्रहस्तकर्मकप्रियतातकर्तृकधारणक्रियावदिति व्याख्येयम् । अन्यथा किमिवेत्ययुक्तं कमिवेति वक्तव्यत्वात् । कमिवेति पाठे तु यथास्थित एवार्थो द्रष्टव्यः । कथमेतल्लभ्यत इति । अत्र कधशब्दः । आक्षेपार्थक कथं शब्दार्थकः । एवं च कधप्रिय इत्युक्ते प्रियत्वं कथं न कथमपीति लभ्यते सति चैवं तातस्योक्तप्रियत्वस्य कथं शब्देनाक्षिप्यमाणत्वेन तातप्रियत्वनिषेधकत्वात्प्रियतातवदित्यनेनोक्तं

(पदार्थप्रकाशिका)

तातस्य प्रियत्वं कथं लभ्यत इत्यर्थः । यद्यस्मादिति । यद्यस्मादित्यनन्तरं प्रियस्तातः प्रसिद्ध इति शेषः । तस्मादित्यनन्तरं तदविरोधायेति शेषः । तथा च कदापि यत्प्रियस्तात इति भाष्यस्यायमर्थः । यत् यस्मात्कारणाल्लोके तातः पिता प्रियः पुत्रस्य प्रियत्वेन प्रसिद्धः तस्मात्कारणात् कधेति निपातः कदापि सदाऽपीत्यर्थे व्याख्येयो न कथमपीत्यर्थे । तातस्य लोकप्रसिद्धं प्रियत्वं न स्यात् । अस्ति च तत् अतः तदविरोधाय यथा तातस्य प्रियत्वं स्यात्तथैव कधशब्दार्थो वर्णनीयो नान्यथा । तत्प्रकारश्च कदापीत्यनेनोक्त इति । सप्तम्यर्थ इति । तथा च भक्तैरस्माभिस्तृत आस्तीर्णो बर्हिर्येष्विति सप्तम्यर्थे बहुव्रीहिः । सप्तम्यर्थश्च विषयत्वमित्यभिप्रेत्य यद्विषय इत्युक्तम् । येषां मरुतां विषय इत्यर्थः । वयं कस्माद्भवद्धस्तं गृह्णीमः भवद्भिरस्मत्प्रीतेरनुत्पादनादित्याशङ्कापरिहारायेदं विशेषणमित्यवगन्तव्यम् ॥ १ ॥

क्व नूनं कद्वो अर्थम् । ऋचि गन्ता दिवो न पृथिव्या इत्यत्र नञो विद्यमानत्वात् क्व गच्छथ उत क्वापि न गच्छथ । गमने च किं फलम् अस्ति नास्ति वेति द्विकोटिकप्रश्नोऽत्र विवक्षित इत्यभिप्रायेण व्याख्याति । क्व गन्तेत्यादिना । नेति ऋक्पदमनूद्य तद्व्याख्यानपरं भाष्यं पदानां व्यवहितत्वादन्वयं प्रदर्शयन्नेव सङ्गमयति । न क्वापि गच्छथेत्यादिना । भाष्येवेति पदमुर्वरितं तत्र किं फलमित्यस्य नञोऽपिशब्दस्य चान्वय इत्यभिप्रेत्याह किमपि फलं नास्ति वेति । एतदिति । मरुतां गमनं तत्फलं चेत्यर्थः । प्रतीत्यनन्तरं एवेति शेषः। किमिति । किमर्थं अन्यान् प्रति किमर्थं न पृच्छत इत्यर्थः । एतत्किमिति पृच्छतेत्येकः प्रश्नः । मरुतः प्रत्येव किमिति पृच्छत इति द्वितीय इति द्रष्टव्यम् । ज्ञातव्यमिति भाष्यांशेन प्रथमप्रश्नोत्तरलाभः । तत्प्रसाद इत्यंशेन द्वितीयस्येत्याशयेनाह ज्ञातव्यं खल्वित्यादिना । तथाविधस्येति । प्रसादपूर्वकं मरुद्भत्तत्स्वरूपोपदेष्टुरित्यर्थः । एतदति । गमनातत्फलयोः प्रश्नकरणं मरुतः प्रत्येव प्रश्नकरणं चेत्यर्थः । एवमुत्तरत्रापीति । क्व वो गावो रण्यन्ति क्व वः सुम्ना नव्यांसीत्यादिना क्रियमाणो भवदाह्वानं क्व भवदीयं सुखं क्वेत्यादिप्रश्नोपि तदाह्वानसुखादेः पुरुषार्थहेतुत्वेन ज्ञातव्यत्वात् अन्यस्य च तद्वक्तुरभावादित्यभिप्रायेण मरुतः प्रत्येव कर्तव्य इत्यर्थः । आह्वयन्तीति । अंभारवादिनेति शेषः । मोक्षादिफलदातॄन् । भाष्यस्थचशब्देन ऋचि व्याख्येयाभावादाह दुर्लभं ह्येतदिति । संसारनिमग्नप्राणिसमुदाये मोक्षादिफलापेक्षया भवदाह्वानं दुर्लभं भवदाह्वानकर्तारो दुर्लभा इति यावदित्यभिप्रायेण चशब्दः प्रयुक्त इत्यर्थः ॥ २ ॥

क्व वः सुम्ना नव्यांसि । अयं प्रश्न इति । वः सुम्नानि सुखानि क्व कुत्र सन्तीति प्रश्न इत्यर्थः । कुत इत्यत आह तदीयेति । मरुत्सम्बन्धीत्यर्थः । अर्थान्तरसञ्चारेणेति । क्वेत्यस्य कस्मिन्निति स्वार्थं परित्यज्य कथंभूतानि केनोपायेनेत्यर्थान्तरस्य सञ्चारेण लक्षणयेत्यर्थः । ननु क्वेत्यस्य यदा

(पदार्थप्रकाशिका)

केनोपायेनेत्यर्थस्तदा साकांक्षत्वात्प्रश्नवाक्यमसम्पूर्णं स्यादित्यत उक्तं ज्ञेयानीति पदाध्याहारेण चेति। स्वार्थेति । कस्मिन्निति मुख्यार्थेत्यर्थः । कस्मिन्नितीत्यादि । तथा च हे मरुतः भवदीयसुखादिस्वरूपं क्व। कस्मिन्नाचार्ये निमित्ते सति। कमाचार्यं निमित्तीकृत्य तत्र सन्निहितः सन् भगवान् ज्ञापको भविष्यतीत्यर्थः। भगवदपेक्षयेति। अन्यथा हे मरुतो यूयं युष्मत्सुखादिस्वरूपं क्व कस्मिन्नाचार्ये निमित्ते कमाचार्यं निमित्तीकृत्य ज्ञापयितेत्यर्थविवक्षायां भाष्ये ज्ञापका इति बहुवचनप्रयोगः स्यादिति भावः। इति चेति न केवलं क्केति उक्तरीत्याऽर्थान्तरसञ्चारेण प्रश्नः किं तूक्तरीत्या स्वार्थपरित्यागेन च प्रश्न इत्यर्थः। ननु परलक्षणस्य सौभगशब्दार्थत्वे द्वात्रिंशल्लक्षणस्यैव परलक्षणशब्दार्थत्वान्मरुतः प्रति वः विश्वानि सौभगा सौभाग्यानि द्वात्रिंशल्लक्षणानि क्केति प्रश्नार्थः स्यात्। स त्वयुक्तः। परलक्षणापरपर्यायद्वात्रिंशल्लक्षणस्य भगवद्रमाब्रह्मवायुसरस्वतीभारतीष्वेव क्रमेण सत्वादित्यत आह परं लक्षणमितीति। एकमित्यर्थ इति। ऋचि बहुवचनसत्वेऽपि व्यत्ययेन सौभगं लक्षणं परमित्येकवचनेन व्याख्यानादयमर्थः सूचित इति द्रष्टव्यम् । परलक्षणस्य सौभगशब्दार्थत्वमुपपादयितुं सामान्येन सौभगशब्दार्थमाह यस्मिन्निति । लक्षणे सतीत्यर्थः द्वात्रिंशलक्षणेषु चैकस्मिन् सति जना वशा भवन्त्येवेति युक्तं तस्य सौभगशब्दार्थत्वमिति भावः। अध्याहारेण चरितानीति विशेष्योक्तिः । सम्पूर्णानि । सम्पूर्णसौभाग्यानि । सौभाग्यं जनवशीकरणनिमित्तं द्वात्रिंशल्लक्षणेष्वेकं लक्षणमित्यर्थः। क्कैवेति। अत्र यद्यपि क्को इति इत्येव पदं पठ्यते। तथापि क्को इत्यत्र क्व उ इति पदद्वयसद्भावात्। उ इत्यस्यार्थ उक्त एवेत्यनेनेति द्रष्टव्यम्। कम्पस्तु प्रश्नविषयस्याधिक्यद्योतनायेति स्पष्टत्वान्नोक्तम्। अत एवोत्तरत्र मोषुणः परापरेत्यत्र मो इति पदपाठे सत्यपि मो इत्यत्र मा उ इति पदद्वयसद्भावाभिप्रायेण मावधीदुनैव हन्यादिति व्याख्यास्यतीत्यवधेयम्॥ ३॥

यद्यूयं पृश्निमातरः। पृच्छतेरिति। प्रच्छ ज्ञीप्सायामित्यस्मात्पृछ्यत इति कर्मणि निङ् प्रत्यये छ्वोशूडनुनासिके चेति सूत्रेण छकारवकारयोः शकारोठादेशविधानात्तेन छकारस्यात्र शकारे रकारस्य गृहिज्येति सम्प्रसारणे सति पृश्नीति रूपम्। क्ङिति चेति सूत्रेण ङित्वाद्गुणाभावः अन्यथा पर्श्नीति स्यादिति द्रष्टव्यम् । प्रकारद्वयेनेति । वेदज्ञेयत्ववेदज्ञातृत्वरूपप्रकारद्वयेनेत्यर्थः । पृश्निमातृशब्दाद्वेदज्ञेयत्वं कथं लभ्यत इत्यतस्तदुपपादयति पृश्निरिति। वेद इत्यर्थः। ननु वेदस्य हरिविषयकज्ञानकरणत्वात्कथं कर्तृत्वोक्तिरित्यत आह करण इति। हन्ता रामशर इतिवदिति भावः। ननु नद्यृतश्चेति सूत्रेण नद्यन्तात् ऋदन्ताच्च बहुव्रीहेः समासान्तकप्प्रत्ययविधानात् पृश्निमातृशब्दस्य ऋदन्तत्वेन तदन्ताद्बहुव्रीहौ कप्प्रत्यये पकारलोपे पृश्निमातृका इति

अकारान्तशब्देन भवितव्यम्। बहुभर्तृको बहुकर्तृक इतिवदतः प्रश्निमातर इति कथमित्यत आह समासान्ताभावश्छांदस इति । समासान्ताभावः समासान्तकप्प्रत्ययाभावः । छांदसः । ऋतश्छंदसीति सूत्रविहितो न त्वलाक्षणिक इत्यर्थः । तथा च ऋतश्छंदसीति सूत्रेण ऋकारान्ताद्बहुव्रीहेश्छांदसि विषये कप्प्रत्ययो न भवतीत्युक्तत्वेन हता माताऽस्येति हतमाता । हतपिता हतस्वसा इत्यादिवत्पृश्निमातेत्येतदपि ऋकारान्तमेव भवति नतु समासान्तकप्प्रत्यये सत्यकारान्तमिति भावः।

समासस्य विज्ञातेति द्वितीयः प्रकारः पृश्निमातरशब्दात्कथं लभ्यत इत्यत आह पृश्नेरिति। ननु जननीवाचकमातृशब्दस्य बहुवचनं यद्यपि मातर इति भवति तथापि ज्ञातृपर्यायस्य मातृशब्दस्य तृजन्तेन अप्तृन् तृच् स्वसृनप्तृनेष्टृहोतृपोतृ प्रशास्तॄणामिति सूत्रेणोपधाया दीर्घे सति पृश्निमातार इत्येव स्यान्न तु पृश्निमातर इति ह्रस्व इत्यत आह उभयत्रेति। बहुव्रीहिपक्षे षष्ठीविग्रहपक्षे चेत्यर्थः। पृश्निशब्दस्य गीर्वाचित्वं कुत इत्यत आह वाङ्नामस्विति । पृश्निशब्दस्येति शेषः । मानुषाः स्यातनेति। पांडवादिमानुषशरीरप्राप्तिमन्तो भवथेत्यर्थः। वः मानुषभूतानावः। अमृत इत्यनूद्य देव इति व्याख्यानम्। अत्र स्तोतुरेव प्राधान्यप्रतीत्या देवतात्वप्रतीतौ सत्यामाह मानुषावतारेऽपीति। मनुष्यत्वेनावतारदशायामपीत्यर्थः । अपिशब्दान्मूलरूपे समर्था इति किं वाच्यमिति सूचयति । तथाच मारुतत्वसिद्धिरिति भावः ।। ४ ।।

मा वो मृगो न यवसे । असंव्यवहार्यः । संव्यवहारायोग्यः । यज्ञे धेनुभिरिति । यज्ञोपयुक्तपयोदोग्धीभिर्गोभिरित्यर्थः। अनुपादेयः स्पर्शभक्षणादावनुपादेयोऽयोग्यः। अमुत्र परत्र । असेव्यत्वाभावो मरुत्स्तोतुः। उच्यते। दृष्टान्ततयेति शेषः। तस्मादिति यस्माद्यूयं कृतपापस्यापि त्वद्भक्तस्येह जन्मनि शुचित्वसम्प्रदायकाः। परत्र यममार्गादातारश्च तस्मादित्यर्थः। अस्मानपीति। कृतपापानपीत्यर्थः । युष्मत्स्तोतॄनित्यनन्तरं सेव्यानिति शेषः । परनिन्देत्यादि । तद्वदस्मान्मा कुरुध्वम्। कृतघ्नवदवदाता त्वं जात्वस्मान्प्रति मा भवेत्यादियाश्चायां परनिन्दालक्षणैकदेशयुक्ततायाः प्रकृतैतत्पुरुषस्तुतिलक्षणैकदेशयुक्ततायाश्च दर्शनादिति भावः। युगिति स्त्रीलिङ्गं याश्चाविशेषणम्। युक्तमुक्तमिति । मरुत्स्तोतुरसेव्यत्वाभावे व्यतिरेकमुखेनासेव्यस्य व्याघ्रादेर्दृष्टान्तत्वं यदुक्तं तद्युक्तमित्यर्थः ।। ५, १५ ।।

## पदार्थदीपिका

कत् कदेति। द्वौ चापरौ वर्णविकारनाशावित्युक्तत्वात् अकारलोप इति भावः। दधिध्व इति। छन्दसि लुङ्लङ्लिट इति वर्तमाने लिट्। क्रादिनियमादिडिति भावः ।। १ ।।

(पदार्थदीपिका)

केति। मोत् कातीति किमःक्वादेश इति भावः। गन्तेति। गमेर्लिटि बहुलं छन्दसीति शपो लुक्। तस्य तप्तनप्तनथनाश्चेत्यनेन तनादेशः । अत एव ङित्वाभावात् अनुदात्तोपदेशेत्यादिना अनुनासिकलोपो न भवतीति भावः। रण्यन्तीति । रणतेः शब्दार्थात् व्यत्ययेन श्यन्प्रत्यय इति ज्ञेयम्॥ २॥

अर्थान्तरसञ्चारेणेति। किमोदित्यनेन किम्शब्दस्य सप्तम्यर्थे अदादेशे क्वातीत्यनेन तिपरे कादेशे क्वेति रूपं भवति । ततश्च कस्मिन्नित्यर्थकत्वात् कथं भूतानि केनोपायेन चेत्यर्थकत्वं नास्तीत्यभिप्रायेणार्थान्तरत्वोक्तिरिति ज्ञेयम्। नव्यांसीति। नवशब्दादियसुनि इकारलोपश्छान्दस इति भावः। सुम्नानीति। छन्दसि बहुलमिति शेर्लोप इति भावः। सौभगेति। सुभगान्मन्त्र इति तस्य भाव इत्यर्थे ञित्वादादिवृद्धिः। पूर्ववच्छेर्लोप इति भावः॥ ३॥

पृच्छतेःकर्मणीति । पृच्छयन्त इति पृश्निनः । प्रच्छ ज्ञीप्सायामित्यस्मात् तिङ् प्रत्यये च्छ्वोशूडनुनासिके चेत्यनेन छकारस्य शकारे ग्रहिज्यावयीत्यादिना संप्रसारणे च पृश्निरिति रूपसिद्धिरिति भावः। वेदानां ज्ञानकारणानां ज्ञानकर्तृत्वाभावादिति भावः। ननु नद्यृतश्चेत्यनेन नद्यन्तेभ्यो ऋदन्तेभ्यश्च बहुव्रीहौ कब्विधानात् कप्प्रत्यये पृश्निमातृका इति वक्तव्यम्। पृश्निमातर इति तु कथमित्यत आह। समासान्ताभाव इति। कप्प्रत्ययाभाव इत्यर्थः। छान्दस इत्युपलक्षणम्। समासान्तविधेरनित्यत्वाच्च तदभाव इत्यपि द्रष्टव्यम्। उभयत्रेति। पृश्निर्माता ज्ञाता यस्येति पक्षे पृश्नेर्माता ज्ञाता चेत्यस्मिन्नपि पक्ष इत्यर्थः। अन्यथा मातृशब्दस्य तृजन्तत्वेन तृन्नित्यादिना उपधाया दीर्घत्वविधानात्पृश्नीमातर इति स्यादिति भावः। मर्तास इति। आज्जसेरसुगिति भावः। स्यातनेति। अस्तेर्लिङि तस्य तप्तनप्तनथनाश्चेति तनादेश इति भावः॥ ४॥

जरिता स्तोतेति। यद्यपि जॄष् वयोहानाविति पठ्यते। तथापि स्तुतिकर्मेति यास्कोक्तेरेवं व्याख्यातम्। अस्मात् स्तुतिकर्मणः तृचि इडागमाभाव इति भावः। अजोष्य इति। जुषी प्रीतिसेवनयोः। ऋहलोर्ण्यदिति कर्मणि ण्यदिति ज्ञेयम्। भूदिति। लुङि गातिस्थेति सिचो लुक्। न माङ्योग इत्यडभावः॥ ५, १५॥

## टीकाविवृतिः

कद्धेति ॥ एतदपीति ॥ अनुक्रमणिकायां कद्धेति सूक्तप्रतीकग्रहणात्पश्चोनेत्यनुवृत्त्या सूक्तसंख्यायाःपूर्वं हीत्युक्त्यास्य मरुद्देवताकत्वस्यापि सिद्धेरिति भावः॥ कत्कदेति॥ कदाशब्दे

(टीकाविवृतिः)

छान्दस आकारलोप इति भावः । भाष्ये अनयोरेतच्छरीरसंबन्धिनो- रिति कुतोध्याहृतमित्यत- स्तदभिप्रायमाह ।। नतु जन्मान्तरभाविनोरिति ।। दधिध्वे धध्वे इति ।। धारयथेत्यर्थः । धाञो लेटि ध्वमष्टित आत्मनेपदानामित्येत्वे शपःश्लौ द्वित्वादौ छन्दस्युभयथेति ध्वम आर्धधातुकत्वादिडागमे आतो लोप इत्याकारलोपे दधिध्वे इति रूपम् । भाषायां लटि ध्वमः सार्वधातुकत्वादिडागमा- भावे श्नाभ्यस्तयोरात इत्याकारलोपे दधस्तथोश्चेति भष्भावे धध्वे इति रूपमिति भावः ।। प्रियशब्देन समस्त इति ।। तत्पुरुषसमासयुक्तः । अत्र व्यत्ययेन समासस्वरापवादःसर्वानुदात्तत्वं ज्ञेयम् ।। सप्तम्यर्थ इति ।। वृक्तं बर्हिर्येषु ते वृक्तबर्हिष इति विग्रह इति भावः । वृची वरणे इत्यतःक्तप्रत्यये वृक्तमिति रूपं ज्ञेयम् ।। १ ।।

क्वनूनम् ।। क्वगन्तकदर्थमिति मूलं भाष्ये क्व गच्छथ न गच्छथ क्व वेति तथा किं फलं न किमपि फलं वेति द्वेधा व्याख्यातम् । तद्योजयति ।। क्व गंतक गच्छथेति ।। गमेर्लेटि थस्य व्यत्ययेन तादेशे बहुलं छन्दसीति शपो लुगिति भावः । एतत् ज्ञातव्यं तत्प्रसादत इति भाष्यं किमर्थं श्रुतिव्याख्यानरूपत्वाभावादित्यतस्तदवतारयति ।। एतन्मरुतः प्रतीति ।। एवमुत्तरत्रापीति ।। क्वःसुम्नेत्युत्तरस्यामृच्युक्त सुखादीनामवश्यं ज्ञेयत्वात्प्रश्न इत्यर्थः । भक्ताःयज्ञादौ आह्वयं त्येव तत्कथं क्वाह्वयंतीत्युच्यते इत्यतो भाष्यस्थचशब्दसूचितं भावमाह ।। दुर्लभमिति ।। एतद्भक्तैः वः आह्वानमित्यर्थः ।। २ ।।

क्वः ।। अर्थान्तरसंचारेणेति ।। सप्तम्यर्थादर्थान्तरेणेत्यर्थः ।। स्वार्थापरित्यागेनेति ।। स्वार्थःसप्तम्यर्थः । किं शब्दात्सप्तम्यर्थे किमोदित्यति प्रत्यये क्वातीति क्वादेशे क्वेति रूपमिति भावः । ननु क्वःसुम्नेत्युक्त सुखादीनां बहुत्वात्कथं ज्ञापक इत्येकवचनमित्यत आह ।। भगवदपेक्षयेति ।। भगवत एकत्वात्तदात्मकसुखचरित्रसौभगानां चैकत्वविवक्षया ज्ञापक इत्येकवचनमित्यर्थः । तथा च वःसुखादिरूपो धर्मो नोस्माकं कस्मिन्नाचार्ये निमित्ते सति स्वस्वरूपज्ञापक इति भाष्यार्थ इति भावः ।। मरुत्सु तु मरुतां बहुत्वात् वः सुखादयो धर्माः कस्मिन्नाचार्ये निमित्ते सत्यस्माकं ज्ञापका इति बहुवचनं ज्ञेयमिति भाष्याशयः ।। द्वात्रिंशत्स्विति ।। षण्णवत्यंगुलो यस्तु न्यग्रोधपरिमण्डलः । सप्तपादश्चतुर्हस्त इत्याद्युक्तद्वात्रिंशल्लक्षणेषु सौभगमेकं लक्षणमित्यर्थः । तस्य लक्षणमाह ।। यस्मिन्निति ।। नव्यांसीति ।। णुस्तुतावित्यतः सर्वधातुभ्योसुन्नित्यसुन्प्रत्यये बहुलोक्त्या तस्य युडागम इति भावः ।। सुम्नानि सुखानीति ।। सुम्नं स्योनमिति सुखनामसु पाठादिति भावः ।। सुवेतेति ।। षु प्रसवैश्वर्ययोरित्यत ऐश्वर्यार्थात् क्तप्रत्यये छान्दसे इडागमे जसःसुपां सुलुगित्याकारादेश इति भावः ।। कैवेति ।। श्रुतौ को इत्यत्र क्व उ इति पदच्छेदमभिप्रेत्य कैवेति व्याख्यातम् ।। ३ ।।

(टीकाविवृतिः)

यद्यूयम् ।। कर्मणि निङिति ।। घृणिपृश्निपार्ष्णिभूर्णीति सूत्रेण निपातनादिति शेषः । ननु नद्यृतश्चेति सूत्रेण बहुव्रीहौ नद्यन्तादृदंताच्च क प्रत्यय विधानात्पृश्निमातृक इति भाव्यमित्यत आह ।। समासान्ताभाव इति ।। समासान्तविधेरनित्यत्वादिति भावः । मातृशब्दस्य ज्ञात्रर्थत्वे अप्तृन्निति दीर्घे पृश्निमातार इति स्यादित्यत आह ।। उभयत्रेति ।। बहुव्रीहौ तत्पुरुषे चेत्यर्थः ।। स्यातन स्यातेति ।। अस भुवीत्यतः विधिलिङि अदादित्वाच्छपो लुकि यासुटि श्नसोरल्लोपे मध्यमपुरुषबहुवचनस्य थस्य तस्थमिपामिति तादेशे तप्तनप्तनथनाश्चेति तनादेश इति भावः ।। ४ ।।

मावः ।। जरिता स्तोतेति ।। जरिताकारुरिति स्तोतृनामसु पाठादिति भावः । असेव्यत्वोपपादकं विशेषणमध्याहरति ।। कथंचित्कृतपातकोपीति ।। प्रायःसतांनमनःपापमार्गे सत्युक्तेः कथंचिदित्युक्तम् ।। अजोष्यो सेव्य इति ।। जुषी प्रीतिसेवनयोरितिधातोः जोष्यःसेव्य इत्यर्थः ।। गोप्राप्ये यज्ञे इति ।। पञ्चमहायज्ञमध्ये गोग्रासदानसमये इत्यर्थः ।। यवसे विषये इति ।। यवसं तृणं तद्दानसमये इत्याशयः । यमस्य पथेति तृतीया द्वितीयार्थे इत्याशयेनाह ।। यममार्गमिति ।। यत्परनिन्देति ।। नहि परनिन्दा व्यसनितया क्रियते किंतु प्रकृतस्तुत्यर्थमित्यतःस्तुतेःपरनिन्दैक देशत्वमिति भावः ।। ५ ।।

**ऋक्संहिता पदपाठसहिता** (सू-३८, व-२)

(४६२) **मो षुणः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ।। ६ ।।**

(प०) **मोइति । सु । नः । पराऽपरा । निःऽऋतिः । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह ।। ६ ।।**

(४६३) **सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः । मिहं कृण्वन्त्यवाताम् ।। ७ ।।**

(प०) **सत्यम् । त्वेषाः । अमऽवन्तः । धन्वन् । चित् । आ । रुद्रियासः । मिहम् । कृण्वन्ति । अवाताम् ।। ७ ।।**

(४६४) **वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ।। ८ ।।**

(ऋक्संहिता पदपाठसहिता)

(प०) वाश्राऽइंव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति । यत् । एषाम् । वृष्टिः । असर्जि ॥ ८ ॥

(४६५) दिवांचित्तमंःकृण्वन्ति पर्जन्येनोदवाहेनं । यत्पृंथिवीं व्युन्दन्तिं ॥ ९ ॥

(प०) दिवां । चित् । तमंः । कृण्वन्ति । पर्जन्येन । उदऽवाहेनं । यत् । पृथिवीम् । विऽउन्दन्तिं ॥ ९ ॥

(४६६) अधंस्वनान्मरुतां विश्वमा सद्मपार्थिवम् । अरेंजन्त प्र मानुंषाः ॥ १०, १६ ॥

(प०) अधं । स्वनात् । मरुताम् । विश्वंम् । आ । सद्मं । पार्थिवम् । अरेंजन्त । प्र । मानुंषाः ॥ १०, १६ ॥

## ऋग्भाष्यम्

मावधीन्नः क्वचिन्मृत्युः परतः परतोपि च । दुर्हणादुःखदा हंत्री यातु सा तृष्णया सह ॥ ६ ॥ अप्रमेया यथासत्यं धन्वन्नपि हि सेचनम् । रुजां विद्रावकस्यैव वायोः पुत्रा हि रुद्रियाः । विनाप्यचेतनं वातं वृष्टिं कृण्वंति हीच्छया ॥ ७ ॥ एषां सकाशाद्वृष्टिश्च विद्युद्भूमिं प्रकाशयेत् । गौर्वत्समिव भूम्यां च ॥ ८ ॥ लोकं सिंचंति मातृवत् ॥ ९ ॥ मानुषादित्वमन्यच्च बिभेदेषां स्वनादपि । गृहमानिनो गृहाद्यं वा चचालैषां स्वनादपि ॥ १०, १६ ॥

## ऋग्भाष्यटीका

मोषुणः । मावधीत् । हे मरुतो । भवतां प्रसादाद्दुःखदा हंत्री चेति दुर्हणा । निर्ऋतिर्नामकाचिद्देवता मृत्युरिति यावत् । नोस्मान्परापरा । परतः परस्मिन्काले । परतोपि च ततोपि परस्मिन्काले । सु । क्वचित् । मावधीत् उ । नैव हन्यात् । किंतु सा निर्ऋतिस्तृष्णया सह पदीष्ट पदगतौ । यातु यत्र क्वचन गच्छतु ॥ ६ ॥ सत्यम् । अप्रमेयाः । त्वेषा दीप्तिमन्तोऽमवन्तः मा प्रमा परिच्छेदः । तद्वन्तो मावन्तः । न मावन्तोऽमावन्तः । त एवामवन्तः । न विद्यते मा यस्य सामर्थ्यस्य तदमम् । तद्वन्त इति वा । अप्रमेया अपरिमितसामर्थ्याः । यस्माद्रुजां विद्रावकत्वाद्रुद्रस्य वायोरेव पुत्राः । तस्माद्रुद्रियासो रुद्रियाः ।

(ऋग्भाष्यटीका)

रुद्रशब्दादपत्ये घः । मरुतः । सत्यं क्रियाविशेषणमेतत् । सत्यं यथा तथा । न तु मायया । धन्वंचित् धन्वन्नपि धन्वदेशेपि । अवातां वातरहिताम् । अचेतनं वा तं विनापीति यावत् । मिहं सेचनम् । सम्पदादित्वात्क्विप् । वृष्टिमिति यावत् । आ सम्यक् । इच्छयैव । कृण्वन्ति कुर्वन्ति हि । विशेषणसद्भाव प्रसिद्धौ प्रथमो हिशब्दः । वातशब्दो मरुत्सु देवेष्वपि वर्तत इत्यचेतनमित्युक्तम् ॥ ७ ॥

वाश्रेव । एषाम् । यद्यदैषां मरुतां सकाशाद्वृष्टिरसर्जि सृष्टा । यदैते वृष्टिं सृजन्तीति यावत् । तदा विद्युन्मिमाति प्रकाशार्थोयं भूमिं प्रकाशयेत् । कथम् । वाश्रेव वत्सला माता यथा अपत्यं पश्येत्तथा । किंञ्च । माता गौर्वत्सं न वत्समिव । भूम्यां स्थितान्सिषक्ति । आलिङ्गति । चशब्दौ मिथः समुच्चये । एतद्विद्युत्कर्माप्येषां सकाशादेवेति ॥ ८ ॥

दिवाचित् । अत्र पृथिवीं व्युंदन्तीत्येतावद्व्याचष्टे ॥ लोकमिति ॥ मरुतो यद्यदा पृथिवीं लोकं व्युन्दन्ति । उन्दी क्लेदने । मातृवत्सिंचन्ति । यथा माता गौर्वत्संपयसा सिंचति तथा । पृथिवी यदा वृष्ट्यासिंचन्ति तदोदवाहेन पर्जन्येन । सजलेन मेघमण्डलेन दिवाचिद्दिवापि । तमः कृण्वन्ति कुर्वन्ति ॥ ९ ॥

अध । मानुषादित्वम् । अध अथ । अन्यच्च ब्रूमः । किं तत् । एषां मरुतां स्वनादपि ध्वनिमात्रेण । आसमन्ताद्वर्तमानं विश्वं समस्तम् । पार्थिवं पृथिव्यां भवम् । सद्म गृहजातम् । तत्रस्था मानुषाश्च । प्रारेजन्त । मानुषादित्वं सर्वमबिभेत् । मानुषादिकमिति वक्तव्ये त्वप्रत्ययो जातिव्यत्त्यभेदज्ञापनार्थः । तथैव च क्वचित्पाठः । यद्वा परमेश्वरविषयात्स्तुतिरूपात् स्वनात्कर्मफलरूपं यन्मानुषत्वं यश्च गृहाद्यभिमानस्तत्सर्वम् । भीतमिव पलायत इत्यर्थ सूचनार्थं भावप्राधान्येन व्याख्यातम् । ननु गृहाणामचेतनानां कथं भयमित्यत आह ॥ गृहमानिन इति ॥ अत्र सद्मशब्देन विवक्षिता इति शेषः । यद्वा प्रारेजन्तेति न भयार्थं किन्तु चलनार्थम् । तथाच सद्मशब्दस्य प्रसिद्धार्थत्वेपि न विरोध इति भावेनाह ॥ गृहाद्यं वे(चे)ति ॥ १०, १६ ॥

## मन्त्रार्थमञ्जरी

(हे मरुतः) भवतां प्रसादात् दुर्हणा, दुःखदा हन्त्री चेति दुर्हणा । निर्ऋतिः, निर्ऋतिनामिका काचिद्देवता, मृत्युरिति यावत् । नः, अस्मान् परापरा, परतः परस्मिन्काले परतोऽपि ततोऽपि परस्मिन्काले । सु, क्वचित् । मो वधीत्, नैव हन्यात् । किं तु (सा) निर्ऋतिः । तृष्णया सह । पदीष्ट, 'पद गतौ' लिङ्, आत्मनेपदी, सीयुटः सकारलोपः तस्य सुडागमः, यातु, यत्र क्वच गच्छतु ॥ ६ ॥

त्वेषाः, दीप्तिमन्तः । अमवन्तः, मा प्रमा परिच्छेदः, तद्वन्तो मावन्तः, न मावन्तोऽमावन्तः, अमावन्त एवामवन्तः, न विद्यते मा यस्य सामर्थ्यस्य तदमम्, तद्वन्त इति वा, अप्रमेया

(मन्त्रार्थमञ्जरी)

अपरिमितसामर्थ्याश्च इत्यर्थः। यस्माद्रुजो विद्रावकत्वाद्रुद्रस्य वायोरेव पुत्रस्तस्मात्– रुद्रियासः, रुद्रियाः रुद्रशब्दादपत्यार्थे घः, 'रुद्रः' इत्यत्र च रुजूशब्द उपपदे 'द्रु गतौ' इत्यतोऽन्तर्णीतण्यर्थाड्डप्रत्यय उपपदान्तस्य लोपः। सत्यम्, क्रियाविशेषणमेतत्– सत्यं यथा, तथा, न तु मायया। धन्वन् चित्, धन्वन्नपि, धन्वदेशोऽपि, मरुदेशोऽपि। अवाताम्, वातरहिताम्, अचेतनं वातं विनापीति यावत्। मिहम्, 'मिहसेचने' सम्पदादित्वाद्भावे क्विप्, वृष्टिमिति यावत्। आ, सम्यक्, इच्छयैव। कृण्वन्ति, कुर्वन्ति॥ ७॥

यत् एषाम्, मरुतां सकाशात्। वृष्टिः। असर्जि, सृष्टा। यदैते वृष्टिं सृजन्तीति यावत्। (तदा) विद्युत्। मिमाति, प्रकाशार्थोऽयम्, भूमिं प्रकाशयेत्। कथम्? वाश्रेव, शिशुवत्सला माता यथापत्यं पश्येत् (प्रकाशयेत्), तथा। किं च, माता, गौः। वत्सम् न, वत्समिव। भूम्यां स्थितान् सिष (स)क्ति, आलिङ्गति। एतद्विद्युत्कर्माप्येषां सकाशात् इति (भावः)॥ ८॥

(मरुतः) यत्, यदा पृथिवीम्, लोकम्। व्युन्दन्ति, 'उन्दी क्लेदने' मातृवत्सिञ्चन्ति, यथा माता गौर्वत्सं पयसा सिञ्चति, तथा पृथिवीं यदा पृष्ट्या सिञ्चन्ति। (तदा) उदवाहेन। पर्जन्येन। मेघमण्डलेन। दिवा चित्, दिवापि। तमः। कृण्वन्ति, कुर्वन्ति॥ ९॥

अध अथ। अन्यच्च ब्रूमः, किं तत्? एषाम् मरुताम्। स्वनात् (अपि), ध्वनिमात्रेण। आ, समन्तात्। वर्तमानम्– विश्वम्, समस्तम्। पार्थिवम्, पृथिव्यां भवम्। सद्म, गृहजातम्, गृहाभिमानिजातम्। तत्रस्थाः मानुषाः (च)। प्र अरेजन्त, मानुषादिकं सर्वमबिभेत्, चचाल इति वा॥ १०॥ इति षोडशो वर्गः॥ १६॥

## रूपावतारः

मो षु णः। पदीष्टेति। पदेः आशीर्लिङि सीयुटि सकारस्य छान्दसे लोपे पदीष्टेति रूपम्॥ ६॥

सत्यम् त एवामवन्त इति। आकारस्य छान्दसे ह्रस्वत्वे अमवन्त इति रूपम्। अपत्ये घ इति। घस्येयादेशे रुद्रिया इति रूपम्॥ ७॥

वाश्रेव॥ मिमातीति। माङो लटस्तिपि श्लौ द्विर्वचने 'भृञामित्' (७।४।७६) इति सूत्रे भृञ् माङ् ओहाङ् इत्येतेषामभ्यासस्येत्वविधानादभ्यासस्येत्वे मिमातीति रूपम्॥ ८॥

दिवाचित्॥ कृण्वन्तीति। कृवि हिंसाकरणयोश्चेत्यतः लटो झस्यान्तादेशे नुमागमे 'धिन्वकृण्व्योर च' (३।१।८०) इति उप्रत्यये वकारस्याकारे अतो लोपे अल्लोपस्य स्थानिवद्भावेन गुणाभावे यणादेशे कृण्वन्तीति रूपम्॥ ९॥

(रूपावतारः)

अध ॥ अरेजन्तेति । रेजृ कम्पन इत्यस्मात् लङो झस्यान्तादेशे शप्रत्यये 'अतो गुणे' (६।१।९७) इत्यनेन पररूपेण अडागमे अरेजन्तेति रूपम् ॥ १० ॥ १६ ॥

## पदार्थप्रकाशिका

मोषुणः परापरा । दुर्हणेत्यत्र दुरित्यस्यार्थो दुःखदेति । हणेत्यस्यार्थो हन्त्रीति । परापरेति ऋक्पदम् । तत्राद्यस्य परेत्यस्य व्याख्यानपरं परत इत्येतावद्भाष्यम् । तदनूद्य व्याचष्टे । परतः परस्मिन्काल इति । द्वितीयस्य परेत्यस्य व्याख्यानपरं भाष्यं परतोपि चेति तदनूद्यार्थमाह परतोपि च ततोपि परस्मिन्काल इति । यथा चानेन परापरेत्यस्य सर्वस्मिन्नपि काल इत्यर्थ उक्तो द्रष्टव्यः । मावधीदु इति । अत्र यद्यपि मो इति सु इत्येव पदच्छेदस्तथापि मो इत्यत्र मा उ इति पदद्वयसद्भावादित्थमुक्तमित्यवगन्तव्यम् । तृष्णया सहेति । एतानहं हनिष्यामीति तृष्णयेच्छाविशेषेण सह निर्ऋतिर्यत्र क्व च गच्छतु निर्ऋतिस्तस्या अस्मद्धननेच्छा चेति द्वयमपि गच्छत्विति यावदित्यर्थः ॥ ६ ॥

सत्यं त्वेषा अमवन्तः । ननु तर्ह्यमावन्त इत्येव स्यादमवन्त इति कथमित्यत आह त एवेति । अमावन्त एवामवन्त इत्यर्थः । दीर्घलोपश्छांदस इति भावः । अत एवास्वरसादाह न विद्यत इति । एवं स्वयं ऋक्पदं सम्यग्व्याख्याय तत्र तात्पर्यकथनपरं भाष्यं संयोजयति । अप्रमेया इति । वायोः पुत्रा हीत्यत्र विद्यमानो द्वितीयो हिशब्दो हेतावित्याह यस्मादिति । ऋजां रोगाणाम् । अपत्ये घ इति । रुद्रशब्दादपत्यर्थे घप्रत्यये आयनेयीनीयियः फढखछघां प्रत्ययादीनामिति सूत्रेण प्रत्ययादीनां फढखछघां क्रमात् आयन् एय् ईन् ईय् इयेत्यादेशाः स्युरित्युक्तत्वेन प्रकृतेघस्य इयादेशे यस्येति चेति दकारस्थाकारलोपे रुद्र् इय रुद्रियेति प्रतिपदिकसिद्धिः । पश्चात् स्वाद्युत्पत्तौ रुद्रिया इति भवतीति द्रष्टव्यम् । धन्वदेशो निरुद्धकप्रदेशः । ऊषरमिति यावत् । तथा च तादृशोऽपि प्रदेशो वृष्ट्या समीचीनो भवतीति भावः । अचेतनं वातम् । वृष्टिसहकारिभूतम् । अचेतनवायोर्वृष्टिसहकारित्वस्य 'अमोघा दक्षिणा मेघा आमोघं पश्चिमं धनुः । अमोघा चोत्तरा विद्युदमोघाः पूर्ववायवः' इत्यादि वाक्यसिद्धत्वात्तादृशसहकार्यभावेपि वृष्टिं कुर्वन्तीति महासामर्थ्यमनेन ज्ञापितं भवतीति ज्ञेयम् । किबिति । कित्वाद्गुणाभावः । अन्यथा मेहेति स्यादिति भावः । तथा च मिहशब्दस्येयं द्वितीयेति ज्ञातव्यम् । विशेषणेति । मरुत्सु त्वेषां अमवन्त इत्युक्तविशेषणद्वयं प्रसिद्धमिति प्रथमो हिशब्दो द्योतयतीत्यर्थः । तृतीयो हिशब्दस्तु वाक्यार्थप्रसिद्धिद्योतक इत्यपि द्रष्टव्यम् । अचेतनमिति विशेषणस्य कृत्यमाह वातशब्द इति । देवेषु प्रधानवायौ तद्रूपेषु प्राणापानादिदेवेषु च । तथा च

(पदार्थप्रकाशिका)

वातशब्दस्य मरुत्सु विद्यमानत्वान्मरुतोऽवातां वातं विना मरुतो विना वृष्टिं कुर्वन्तीत्यसङ्गतं स्यात्। तथा वातशब्दस्य मुख्यप्राणापानादिदेवेष्वपि सद्भावात्। मरुतोऽवातां मुख्यप्राणं प्राणादितद्रूपाणि च विना तदनुग्रहं विनेति यावत्। वृष्टिं कुर्वन्तीत्यर्थः स्यात् स तु न युक्तः। रुद्रादि-समस्तदेवताव्यापाराणां मुख्यप्राणप्रसादसाध्यत्वादतोऽचेतनमित्युक्तमित्यर्थः॥ ७॥

वाश्रेव विद्युन्मिमाति। माङ्माने। मानं मर्यादा 'मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते' इत्यभिधानात्। तथा च मिमातीत्यस्य परिमितिं करोतीत्यन्यथार्थः प्रतीयतेऽत आह प्रकाशार्थोयमिति। अयं माङ् धातुः। अभिधाने मानं प्रकाश इति भावः। विद्युन्मिमातीत्यस्य कर्मसापेक्षत्वाद्भूमिमित्युक्तम्। कथमिति। विद्युद्भूमिं प्रकाशयेदित्येतत्कथं केन दृष्टान्तेन प्रत्येतव्यमित्यर्थः। तथेतीति। तथा विद्युदपि भूमिं मिमाति पश्यति प्रकाशयतीति यावदित्यर्थः। स्थितान् पदार्थान्। आलिङ्गति सम्बद्धा भवति प्रकाशयतीत्यर्थः। तथा न केवलं भूमिमेव प्रकाशयति किं तु भूम्यां स्थितानन्यपदार्थांश्चेति भावः। मिथ इति। विद्युत्कर्तृकयोर्मिमातिसिषक्तीत्युक्तक्रिययोर्मिथः समुच्चये चशब्दावित्यर्थः। अत्र विद्युत एव प्राधान्यप्रतीत्या देवतात्वं प्रतीयते अत आह एतद्विद्युत्कर्मापीति। एतद्युक्तविद्युत्कर्तृकं भूम्यादिप्रकाशनरूपं यत्कर्म तदप्येषां मरुतां सकाशादेव तदनुग्रहादेव भवतीत्यर्थः। तथा चास्यां ऋचो मारुतत्वसिद्धिरिति भावः॥ ८॥

दिवाचित्तम कृण्वन्ति। क्लेदनं द्रवीकरणम्। मातेत्यनूद्य गौरिति व्याख्यानम्। दिवेत्यव्ययम्। तथा च दिवापि अह्न्यपीत्यर्थः। तमोन्धकारम्॥ ९॥

अधः स्वनान्मरुताम्। तथैव चेति। मानुषादिकमन्यच्चेत्येव क्वचित्पाठ इत्यर्थः। भगवतोत्र प्रतिपाद्यत्वपक्षे मानुषादित्वमित्येवं भावप्राधान्येन व्याख्यानं सार्थकमित्याशयेनाह यद्वेति। स्तुतिरूपादिति। श्रवणादिजनितापरोक्षज्ञानद्वारेति शेषः। कर्मफलरूपम्। अनिष्टकाम्यकर्मादि-फलरूपम्। अरेजन्तेत्यस्य तात्पर्यम्। भीतमिवेत्यादि। पलायते नश्यतीति यावत्। गृहामानिन इतीति। गृहाभिमानिनो देवा इत्यर्थः। चलनार्थमिति। धातूनामनेकार्थत्वादिति भावः। प्रसिद्धा-र्थत्वेऽपीति। गृहं गेहोदवसितं वेश्म सद्म निकेतनमित्यभिधानप्रसिद्धत्वेऽपीत्यर्थः॥ १०, १६॥

## पदार्थदीपिका

वधीदिति। लुङि वेति वधादेशः। सिच्। इडागमः। वधादेशस्यादन्तत्वात् अतो हलादेरिति वृद्धेरभावः। इट ईटीति सिचो लोप इति भावः। पदीष्टेति। आशीर्लिङि छन्दस्युभयथेति सार्वधातुकत्वात्सलोपः। आर्धधातुकत्वादिडागम इति ज्ञेयम्॥ ६॥

(पदार्थदीपिका)

घ इति। घस्य य इति भावः। आज्झसेरसुगिति च द्रष्टव्यम्। धन्वन्निति। सुपां सुलुगिति भावः। सम्पदादित्वादिति। मेहनमिति भावे किबित्यर्थः। कृण्वन्तीति। कृवि हिंसाकरणयोश्चेत्यस्मात् धिन्विकृण्वोरच्चेत्युप्रत्ययः। तत्सन्नियोगेन वकारस्याकारादेशः। अतो लोपेन लुप्तस्य स्थानिवद्भावात् लघूपधगुणाभाव इति ज्ञेयम्॥ ७॥

असर्जीति। लुङि चिण् भावकर्मणोरिति चिण्। चिणो लुगिति तस्य लुक्। गुणः। अडागम इति ज्ञेयम्। मिमातीति। माङ् माने। व्यत्ययेन परस्मैपदम्। जुहोत्यादित्वाच्लुः। भृञामिदिति अभ्यासस्येत्वमिति भावः। सिषक्तीति। षिच् समवाये। लटि बहुलं छन्दसीति शपःश्लुः। बहुलं छन्दसीत्यभ्यासस्येत्वमिति भावः॥ ८॥

उन्दी क्लेदन इति। रुधादित्वात् श्नम्। श्नान्नलोप इति भावः। उदवाहेनेति। उदकानि वहतीति उदवाहः। कर्मण्यण्। मेघविशेषस्येयं संज्ञा। उदकस्योदः संज्ञायामिति उदकशब्दस्योदभाव इति ज्ञेयम्॥ ९, १०, १६॥

## टीकाविवृतिः

मोषुणः॥ दुर्हणेत्यत्र दुःस्यात्कष्टनिषेधयोरिति विश्वकोशोक्तेर्दुःशब्दस्य दुःखार्थस्यापि लक्षणया दुःखदात्रर्थत्वम्। हन्तेः पचाद्यचि हनशब्दस्य हंत्रर्थत्वमाश्रित्याह॥ दुःखदा हंत्री चेति दुर्हणेति॥ परापरेति॥ परशब्दात्सप्तम्या आकारादेशे निष्पन्नपराशब्दस्य वीप्सायां द्विर्वचनमिति भावः। मो इत्यत्र विद्यमानमाङ उकारेण सुप्सुपेति समास इति भावेनाह॥ नैवेति॥ पदगताविति॥ आशीर्लिङि सीयुटः सस्य लोपश्छान्दस इति भावः॥ ६॥

सत्यं त्वेषाः॥ त्वेषा दीप्तिमन्त इति॥ त्विषदीप्तावित्यतो भावे घञि त्वेषोदीप्तिरेषा-मस्तीत्यर्शाद्यचि त्वेषा दीप्तिमंत इति भावः। पूर्वव्याख्याने मेत्यस्य छान्दसह्रस्व-त्वाश्रयणादरुच्याऽमशब्दे बहुव्रीहिमाह॥ न विद्यते मेति॥ अमेत्यस्य सामर्थ्यविशेषणत्वेन नपुंसकत्वात् ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्व इति भावः॥ रुजां विद्रावकत्वादिति॥ रुज्शब्दोपपदात् द्रुगतावित्यतःऔणादिके डप्रत्यये पृषोदरादित्वादुपपदजकारलोप इति भावः॥ अपत्ये घ इति॥ क्षत्रद्ध इत्यत्र घ इति योगविभागादिति भावः॥ धन्वदेशेपीति॥ समानौ मरुधन्वानावित्यमरोक्तेर्मरुदेशो इत्यर्थः॥ संपदादित्वादिति॥ मिह सेचने इत्यतो भावे इति शेषः। भाष्ये हिशब्दत्रयसद्भावात्तृतीयस्य कुर्वन्ति हीति वाक्यार्थप्रसिद्ध्यर्थकत्वमुक्त्वा पूर्वद्वयस्य

(टीकाविवृतिः)

प्रयोजनमाह ।। विशेषणसद्भावेति ।। प्रथमः प्रथमश्लोकस्थ इत्यर्थः । अमवन्त इति रुद्रियास इति विशेषणद्वय प्रसिद्धौ प्रथमश्लोकस्थहिशब्दद्वयमित्याशयः ।। वातशब्द इति ।। अचेतनमिति विशेषणानुक्तौ मरुतां कर्तृत्वेन सत्त्वादवातामित्युक्तिर्व्याहता स्यादिति भावः ।। ७ ।।

वाश्रेव ।। मरुतां कर्तृत्वादेभिरिति वक्तव्ये श्रुतावेषामिति कथमुक्तमित्यतोभाष्ये सकाशादित्यध्याहृतं तस्य तात्पर्यमाह ।। यदैते वृष्टिमिति ।। प्रकाशार्थोयमिति ।। धातूनामनेकार्थत्वादिति शेषः ।। वाश्रेव वत्सलामातेति ।। वाश्रा स्नुतस्तना धेनुरित्यभिधानादिति भावः ।। भूम्यां स्थितान् सिषक्तीति ।। विद्युदिति कर्तुरत्राप्यन्वय इति भावः ।। मिथः समुच्चये इति ।। वाश्रेवेति माता वत्सं नेत्येतयोरिति शेषः । मरुन्माहात्म्यकथनावसरे विद्युद्व्यापारकथनम-संगतमित्यत आह ।। एतदिति ।। भूमिप्रकाशकत्वं भूमिस्थितपदार्थसंबन्धरूपमित्यर्थः ।। ८ ।।

दिवाचित् ।। उंदी क्लेदने इति ।। क्लेदनं च क्लिदूआर्द्रभावे इति धातोःसेचनमिति भावः ।। उदवाहेनेति ।। उदकशब्दस्योदकस्योदः इति योगविभागादुदादेश इति भावः ।। ९ ।।

अधस्वनात् ।। अध अथेति ।। तृतीयोतिशये इति महाव्याकरणसूत्रेण थकारस्य धकारादेश इति भावः ।। तथैवेति ।। मानुषादिकमन्यच्चेतीत्यर्थः । अधिदेवतामरुत्पक्षे मानुषादित्वशब्दं व्याख्याय विष्णुपक्षे व्याख्याति ।। यद्वा परमेश्वरेति ।। पूर्वं धातूनामनेकार्थत्वमाश्रित्य भयार्थत्वेन व्याख्यातम् । इदानीं रेजतीति गतिनामसु पठितत्वात्कंपनार्थत्वमाश्रित्याह ।। यद्वा प्रारेजन्तेति ।। १० ।।

**ऋक्संहिता पदपाठसहिता** (सू-३८, व-३)

**(४६७) मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु । यातेमखिद्र-यामभिः ।। ११ ।।**

**(प०) मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ।। ११ ।।**

**(४६८) स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः ।। १२ ।।**

**(प०) स्थिराः । वः । सन्तु नेमयः । रथाः । अश्वासः । एषाम् । सुसंस्कृताः । अभीशवः ।**

**(४६९) अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् । अग्निं मित्रं नदर्शतम् ।। १३ ।।**

(ऋक्संहिता पदपाठसहिता)

(प०) अच्छ॑ । वद॒ । तना॑ । गि॒रा । ज॒रायै॑ । ब्रह्म॑णः । पति॑म् । अ॒ग्निम् । मि॒त्रम् । न । द॒र्शतम् ॥ १३ ॥

(४७०) मिमी॑हि श्लोक॑मा॒स्ये॑ प॒र्जन्य॑ इव ततनः । गाय॑ गाय॒त्रमु॒क्थ्य॑म् ॥ १४ ॥

(प०) मिमी॑हि । श्लोक॑म् । आ॒स्ये॑ । प॒र्जन्यः॑ऽइव । त॒त॒नः॒ । गाय॑ । गा॒य॒त्रम् । उ॒क्थ्य॑म् ॥ १४ ॥

(४७१) वन्द॑स्व॒ मारु॑तं ग॒णं त्वे॒षं प॑न॒स्युम॒र्किण॑म् । अ॒स्मे वृ॒द्धा अ॑सन्नि॒ह ॥ १५, १७, ३८ ॥

(प०) वन्द॑स्व । मारु॑तम् । ग॒णम् । त्वे॒षम् । प॒न॒स्युम् । अ॒र्किण॑म् । अ॒स्मे इति॑ । वृ॒द्धाः । अ॒स॒न् । इ॒ह ॥ १५, १७, ३८ ॥

## ऋग्भाष्यम्

अखिन्नैर्गमनैश्चैव दृढस्वीयैश्च पाणिभिः । अनुयात नदीश्चित्राः ॥ ११ ॥ स्थिरास्सन्ति रथादयः ॥ १२ ॥ ब्रह्मणश्च पतिं विष्णुं यथावद्व्याप्तया गिरा । जरायै संस्तुतित्वेन तृतीया भावरूपिणी । सर्वा विभक्तयश्चेत्थं भाववाचिन्य एव च । महाव्याकरणे सूत्रमिति संस्तुतिरूपतः । वद विष्णुं स्वप्रकाशमग्निवत्सूर्यवत्तथा । आह चात्मानमेवात्र दार्ढ्ये स्वप्रतियोगिता । इति सूत्रात् ॥ १३ ॥ कीर्तिमस्य विष्णोः कुरु मुखे सदा । विस्तारयति पर्जन्यो यद्वद्वृष्टिं तथैव च । विस्तृणीहि तथेशस्य तथा कीर्तिं जगत्यपि ॥ १४ ॥ पनस्युं ज्ञानशीलं च विज्ञेयं गणमर्किणम् । अभवन् ज्ञापका वृद्धा अस्माकं तदनुग्रहात् ॥ १५, १७, ६ ॥

## ऋग्भाष्यटीका

मरुतः । अखिन्नैः । हे मरुतो यूयम् । वीळुपाणिभिर्दृढस्वीयैः पाणिभिश्च । दृढाश्च ते स्वीयाश्च । बहुलवचनाद्विशेषणयोरेव समासः । अखिद्रयामभिरीम् अखिन्नैरेव गमनैश्च । खिद दैन्ये अस्माद्रः । चित्रा विचित्राः । रोधस्वतीर्नदीरनुयात चालनेप्यश्रमान्हस्तांश्चालयन्ते वेगवद्भिर्गमनैर्यद्रोधःसु वयं तपस्यन्तःस्मः ता नदीः प्रति यातेति । यद्वा यामगमनशब्दौ करणार्थौ । ततो हस्तपादोपेता यूयं नत्वचेतनवायुरूपा इत्यर्थः ॥ ११ ॥

(ऋग्भाष्यटीका)

स्थिरावः । स्थिराः सन्ति । हे मरुतो । वो युष्माकमिहागमनाय । स्थिरा दृढाः । सुसंस्कृताः सम्यक् संस्कारवन्तोऽभीशवोऽभीशुवन्तस्तेजस्विनो रथाः । अश्वासोऽश्वाश्च । सन्तु सन्ति । एषां रथानां नेमयश्च स्थिराः सन्ति । तैरागच्छतेति भावः ॥ १२ ॥

अच्छ । ब्रह्मणश्च । ब्रह्मणस्पतिं ब्रह्मणो हिरण्यगर्भस्य पतिं विष्णुम् । चशब्दात् ब्रह्मणो वाचः पतिं वायुं च । तना व्याप्तया । तनोतेः पचाद्यच् ततः स्त्रीलिङ्गात्तृतीयाया याडाप इति नाश्रितम् । बहुविषयया गिरा । जरायै संस्तुतित्वेन जराशब्दः स्तुतिवाची भावप्रधानः । सुपां सुपो भवन्तीति चतुर्थी तृतीयार्थे । अच्छ वद यथावद्वद । तृतीया कस्मिन्नर्थ इत्यत आह । तृतीयेति । भावरूपिणी इत्थंभूतलक्षणार्था । माभूद्वा विभक्तिव्यत्ययः चतुर्थ्येवेत्थं भूतलक्षणार्था व्याख्येया । कथमित्यत आह ॥ सर्वा इति ॥ आद्यश्चशब्दोभिविधौ द्वितीयः पक्षान्तरे । इत्थंभाव इत्थंभूतलक्षणम् । तृतीयैवेत्थंभूतलक्षणे स्मर्यते । न चतुर्थ्याद्याः । तत्कुत एतदित्यत आह ॥ महाव्याकरण इति ॥ इत्यस्यार्थस्य प्रतिपादकमस्ति । ततः कोर्थः सम्पद्यत इत्यत आह ॥ संस्तुतीति । संस्तुतिरूपेणोपेतया गिरेत्यर्थः । उत्तरार्धव्याख्यानं विष्णुमित्यादि । अग्निं न अग्निवत् । मित्रं न तथा सूर्यवद्दर्शतं स्वप्रकाशं स्वाधीनः प्रकाशोस्येति । यद्यपि दर्शतशब्दो दृश्यमात्रवाची तथाप्यग्न्यादिदृष्टान्तोपादानसामर्थ्यात्स्वप्रकाशमित्युक्तम् । यथाऽग्निसूर्यावालोकान्तरान-पेक्षया स्वमहिम्ना दृश्येते । तथा स्वप्रसादेनैव दृश्यमिति । मित्रं न दर्शतमग्निमित्यन्यथाप्रतीतिनिरासाय पुनर्विष्णुमित्युक्तम् । ब्रह्मणस्पतिशब्दोक्तं विष्णुमेव । अन्यथा मारुतत्वव्याकोपात् । नन्वत्र कं प्रति वदेत्युच्यत इत्यत आह । आह चेति । युष्मद्युपपदे मध्यमस्य विधानादात्मनश्च युष्मदर्थत्वादभावात्कुत एतदित्यत आह ॥ दार्ढ्य इति । स्वस्य प्रतियोगिता युष्मदर्थता ॥ १३ ॥

मिमीहि । कीर्तिम् । अत्राप्यात्मानमेवाह कण्वः । त्वमस्य प्रकृतस्य ब्रह्मणस्पतेर्विष्णोः । श्लोकं कीर्तिम् । आस्ये मुखे । मिमीहि निर्मिमीष्व सदा कुरु । तथा अन्यच्च । पर्जन्य इव पर्जन्यो मेघो यद्वद्यथा वृष्टिं विस्तारयति च । न केवलं स्वस्मिन् जलं कुरुते तथैव । त्वमीशस्य । तथा तथाभूताम् । सत्यां कीर्तिम् । जगत्यपि । ततनः । तनोतेर्लोडर्थे लुङि गुपेः छन्दसीत्यत्र छन्दसीति योगविभागाच्चङ् विस्तृणीहि । शिष्येभ्योप्युपदिश । किञ्च । उक्थ्यं प्राणो वा उक्थमिति श्रुतेरुक्थं ब्रह्मणस्पतिः । तद्विषयं गायत्रं साम गाय ॥ १४ ॥

वन्दस्व । पनस्युम् । त्वेषं प्रकाशवन्तम् । पनस्युं पनतिरिह ज्ञानार्थः । ततस्ताच्छीलि(कः स्युः)को स्युः । ज्ञानशीलम् । चो विशेषणसमुच्चये । अर्किणं विज्ञेयमृग्भिरिति शेषः । अर्काः ऋचः । ता अस्य सन्ति ज्ञापिका इत्यर्की तम् । यद्वा ऋ गतौ । अस्मात्कर्मणीन् तस्य कागमः । मरुतामयं मारुतस्तं मारुतं गणम् । वन्दस्व स्तुहि । न च स्तोतुं न जानामीति वाच्यं यतोस्मे अस्माकम् । इह निमित्तसप्तम्येषा । एतेषु मरुत्सु निमित्तेषु । तदनुग्रहाद्वृद्धा असन् आसन् अभवन् । ज्ञापका इति शेषः ॥ १५, १७, ६ ॥

## मन्त्रार्थमञ्जरी

(हे) मरुतः (यूयम्) वीळुपाणिभिः, दृढस्वीयपाणिभिः । (च) अखिद्रयामभिः ईम्, अखिन्नैरेव गमनैश्च, 'खिद दैन्ये' अस्माद्रक् । चित्रा, विचित्राः । रोधस्वतीः, नदीः । अनु यात, चालनेऽप्यसमर्थास्ता- श्चालयन्तो वेगवद्भिर्गमनैर्यद्रोधःसु वयं च पश्यन्तः स्मस्ता नदीः प्रति यात– इति, यद्वा यामन्गमनशब्दौ (ऋगृग्भाष्यस्थौ) करणार्थौ, ततः हस्तपादोपेता यूयम्, न त्वचेतनवायुरूपाः इत्यर्थः ॥ ११ ॥

(हे मरुतः) वः युष्माकम् । इहागमनाय स्थिराः, दृढाः । सुसंस्कृताः, सम्यक्संस्कारवन्तः । अभीशवः, अभीशुमन्तः, तेजस्विनः । रथाः (सन्तु) सन्ति । एषाम्, रथानाम् । नेमयः (च) (स्थिराः) (सन्ति) सन्ति । तद्योगिनः (अश्वासः) अश्वाः । (च) (स्थिराः) (सन्तु) सन्ति । तैरागच्छत इति भावः ॥ १२ ॥

(हे कण्व त्वम्) ब्रह्मणः पतिम्, ब्रह्मणो हिरण्यगर्भस्य पतिं विष्णुम्, ब्रह्मणो वाचः पतिं वायुं च । तना, व्याप्तया, तनोतेः पचाद्यच्, ततः स्त्रीलिङ्गात्तृतीयायाः 'आङि चापः' इति नाश्रितम्, बहुविषयया । गिरा । जरायै, संस्तुतित्वेन जराशब्दः स्तुतिवाची, भावप्रधानः, 'सुपां च सुपो भवन्तीति वाच्यम्' इति वार्त्तिकेन चतुर्थी तृतीयार्थम् । अच्छ वद, यथावद्वद । कीदृशम् ? अग्निम् (न) अग्निमिव । मित्रम् न, सूर्यमिव । दर्शतम्, दृशेः कर्मण्यतच्प्रत्ययः, यथाग्निसूर्या- वालोकान्तरानपेक्षया स्वमहिम्ना दृश्येते, तथा स्वप्र(काशे) सादेनैव दृश्यमानम् । 'ब्रह्मणः पतिम् अच्छ वद' इति पूर्वेणान्वयः ॥ १३ ॥

(हे आत्मँस्त्वम्) (अस्य) प्रकृतस्य ब्रह्मणः पतेर्विष्णोः । श्लोकम्, कीर्त्तिम् । आस्ये, मुखे । मिमीहि, निर्मिमीष्व, सदा कुरु, 'माङ् माने' श्लुविकरणम्, परस्मैपदं छान्दसम् । किं च, पर्जन्य इव, पर्जन्यो मेघो यथा वृष्टिं विस्तारयति, न केवलं स्वस्मिञ्जलं कुरुते, तथैव । त्वमीशस्य सत्यां कीर्तिं जगत्यपि ततनः, तनोतेः लोडर्थे लुङि 'गुपेश्छन्दसि' इति योगविभागाच्चङ् द्विर्वचनम्, विस्तृणीहि, शिष्येभ्योऽप्युपदिश । किं च, उक्थ्यम्, 'प्राणो वा उक्थम्' इति श्रुतेरुक्थो ब्रह्मणः पतिस्तद्विषयमुक्थम् । गायत्रम्, साम । गाय ॥ १४ ॥

अत्राप्यात्मानमाह (हे आत्मँस्त्वम्) त्वेषम् प्रकाशवन्तम् । पनस्युम्, पनतिः इह ज्ञानार्थः, ततस्ताच्छीलिकोऽस्युप्रत्ययः, ज्ञानशीलम् । अर्किणम्, अर्का ऋचस्ता अस्य सन्ति ज्ञापिका इत्यर्की, तमृग्भिर्ज्ञेयम् । मरुतामयं मारुतस्तम्– मारुतम् गणम् । वन्दस्व, स्तुहि । न च 'स्तोतुं न

जानामि इति वाच्यम्, यतः– अस्मे, अस्माकम्। इह, निमित्तसप्तम्येषा, एतेषु मरुत्सु निमित्तेषु। तदनुग्रहात्– वृद्धाः। (असन्) आसन्, अभवन्। (ज्ञापकाः) इति शेषः ॥ १५ ॥ इति सप्तदशो वर्गः ॥ १७ ॥ अष्टात्रिंशं सूक्तम् ॥ ३८ ॥

## रूपावतारः

मरुतः ॥ ननु दृढस्वीयैरिति समासोऽनुपपन्नः। केवलविशेषणयोः समासविधायकाभावादित्यत आह। बहुलवचनादिति। ''विशेषणं विशेष्येण बहुलम्'' इति बहुलवचनादित्यर्थः। ऋचस्तात्पर्यमाह यद्रोधस्स्विति। यासां तीरेषु वयं तपः कुर्वन्तस्तिष्ठाम ता नदीः प्रतियातेत्यर्थः ॥ ११ ॥

स्थिरावः ॥ इकारस्योकारो व्यत्ययेनेति भावेनाह। सन्तु सन्तीति ॥ १२ ॥

अच्छ ॥ तनेतिरूपसिद्धिमाह। तनोतेरिति। अत्र ''ततः स्त्रीलिङ्गात् तृतीयायाः याडाप इति नाश्रितं'' इति न टीकावाक्यम्। अपि तु प्रक्षिप्तम्। अवश्यं चैतदेवं विज्ञेयम्। तृतीयैकवचनस्य ङिद्वचनत्वाभावेन अप्रसक्तस्य सूत्रस्याश्रयणप्रतिषेधायोगात्। न च तृतीयैकवचनस्य आङिति संज्ञायाः पूर्वाचार्यैः कृतत्वात् ङिद्वचनत्वमस्तीति वाच्यम्। पूर्वाचार्यसंज्ञया ङित्संज्ञावाच्यत्वलाभेऽपि ङिद्वचनत्वालाभात्। ततः स्त्रीलिङ्गात् तृतीयायाः डा इत्युच्छिन्नम्। ततश्चैवं टीकावाक्यपाठः। तनोतेः पचाद्यच्। ततः स्त्रीलिङ्गात् तृतीयाया डा इति। अस्यायमर्थः। तनोतेः पचाद्यच् भवति 'घञजपाः पुंसि' (?) इति वचनस्यानित्यत्वात् 'अजाद्यतष्टाप्' (४।१।४) इति टाप् भवति ततस्तृतीया तस्यां 'सुपां सुलुक्...' (७।१।३९) इति डादेशोभवतीति। सुपां सुपो भवन्तीति। सुपां सुपो भवन्तीत्यादेशविधानात् तृतीयादेशभूता चतुर्थी स्वान्यार्थे वर्तत इत्यर्थः। तृतीयेति। स्थानिभूता तृतीया कस्मिन्वर्तत इत्यर्थः। माभूदिति। तृतीयाविभक्त्यादेशरूपा चतुर्थी मा भूदित्यर्थः। इत्थंभूतलक्षणार्थेति। फलदानसमर्थत्वरूपं कंचित् प्रकारं प्राप्ता फलदानसमर्था इत्थंभूता गीः तस्याः ज्ञापकं संस्तुतित्वं तद्वाचकशब्दे चतुर्थी भवतीति भावः। जरायै गिरा इत्यस्य कोऽर्थः संपन्न इत्यत आह। ततः कोऽर्थ इति। संस्तु(तीति)तित्वेति। फलदानसमर्थनार्थत्वज्ञापकसंस्तुतित्वोपेतया गिरेत्यर्थः संपन्न इति भावः। विष्णुशब्दविवक्षितभगवद्रूपविशेषमाह। ब्रह्मणस्पतीति ॥ १३ ॥

मिमीहि ॥ गायेति। गैधातोः लोटि सिपि शपि सेर्हित्वे हेर्लुकि अयादेशे गायेति रूपम् ॥१४॥

(रूपावतारः)

वन्दस्व ॥ अस्मात् कर्मणीति इनि प्रत्ययः ककारागमश्चेति भावः । (अर्किणः) असन्निति । अस्तेर्लङि तस्य झि इत्यादेशे इकारलोपे 'श्नसोरल्लोपः' (६।४।१११) इत्यकारलोपे आडागमे तस्य छान्दसे ह्रस्वत्वे आसन्निति रूपम् ॥ १५-१७ ॥

## पदार्थप्रकाशिका

मरुतो वीळुपाणिभिः । ननु विशेषणं विशेष्येण बहुलमिति सूत्रेण विशेषणयोरेव समासो विहितो रक्तः पट इत्यादौ दृष्टश्च । न विशेषणविशेषयोरेव परस्परमतः कथं दृढस्वीयैरिति पाणिविशेषणीभूतयोर्दृढस्वीयपदयोः समास इत्यत आह बहुलवचनादिति । उक्तसूत्रे बहुलमित्युक्तत्वादित्यर्थः । यातेमित्यत्र यात ईं इति पदच्छेदः । अतोऽखिद्रयामभिरीमित्युक्तम् । दैन्यं दुःखं आयास इति यावत् । अस्माद्र इति । खिददैन्ये । अकारोऽनुबन्धार्थः । खिद् इत्येव धातुः । अस्माद्रप्रत्यये खिद्रेति रूपम् । पश्चान्नञ्समासे अखिद्रेति भवति । तथा चाखिद्रयामभिरित्यस्याखिन्नैर्गमनैरित्यर्थो द्रष्टव्यः । रोधस्वतीः । उभयतीरवतीः । ऋगभिप्रायमाह चालनेप्यश्रमानिति । लोकेषु पुरुषाणां गमनसमये इतस्ततो हस्तानां चालने क्रियमाणे सति तेषु श्रम उत्पद्यते । न तथा मरुद्धस्तानामित्यर्थः । अनेन वीळुपाणिभिरित्यस्याभिप्राय उक्तः । वेगवद्भिर्गमनैरित्यनेनाखिद्रयामभिरित्यस्य । लोके आयासपूर्वकगमनं मन्दगमनमेव दृष्टं प्रकृते चाखिद्रेत्यायासाभावोक्त्या वेगवत्वं लब्धमिति द्रष्टव्यम् । विचित्रा इति । नानादिगभिमुखप्रवाह इत्यर्थः । रोधस्वतीरनुयातेत्यस्यतात्पर्यमाह यद्रोधःस्विति । यासां नदीनां तीरेषु । वयं कण्वाः । तपस्यन्तः तपः कुर्वाणाः । स्मः भवामः । यातेति । तत्रत्यानामस्माकं फलदानायेति भावः । यातेत्युक्त्या गमनस्य प्राप्तत्वाद्यामभिर्गमनैर्यातेति न स्वरसमत आह यद्वेति । ऋक्स्थो यामशब्दः भाष्ये तद्व्याख्यानपरो गमनशब्दश्चेत्युभावपि करणार्थौ । या प्रापण इत्यस्मात्करणे म प्रत्यये सति यामशब्दस्य निष्पन्नत्वात् । तथा गम्लृगतावस्मात्करणे ल्युटि तस्यानादेशे च सति गमनशब्दस्य निष्पन्नत्वात् । तथा चाखिद्रयामभिरित्यस्य खेदशून्यगमनसाधनैः पादैः भवतीति भावः । अस्मिन्पक्षे किमेतद्विशेषणस्य कृत्यमित्यत आह तत इति । यामशब्दस्य करणार्थत्वादित्यर्थः । हस्तपादोपेता इत्युक्त्या हे मरुतो वीलुपाणिभिरुपेताः । अखिद्रयामभिः पादैरुपेता यूयं रोधस्वतीरनुयातेत्येवमुपेतपदाध्याहारेण योजना कर्तव्येति सूचिता भवतीति ज्ञातव्यम् । न त्विति । मरुतोऽनुयातेत्युक्ते अचेतनवायुरूपाणां मरुतां प्रसक्तौ सत्यां तद्वारणाय तेषां चेतनत्वं ज्ञापयितुमिदं विशेषणमित्युक्तं भवति । इत्यर्थः सम्पद्यत इति शेषः ॥ ११ ॥

(पदार्थप्रकाशिका)

स्थिरा वः सन्त नेमयः । ननु भवद्भिरस्मादागमनं प्राथ्यर्ते । आगमनसाधनीभूतानामश्वानां दृढाक्षादियुतरथानामभावात्कथमागन्तव्यमित्याशङ्कापरिहारायाहुः कण्वाः हे मरुत इत्यादि । सम्यक् संस्कारवन्त इति । रथानां संस्कारो नाम दृढाक्षसम्बन्धनादिरूपो द्रष्टव्यः । अभीशुशब्दः प्रग्रहवत् तेजोवाच्यप्यस्तीत्याशयेनाह तेजस्विन इति । कान्तिमन्तः इत्यर्थः । नेमय इति । चक्रान्त्यभागीयं परितो विद्यमानमन्योन्यसम्बन्धनं नेमिशब्दार्थः । तद्योगिनो रथसम्बन्धः । तैरिति । अप्रच्युतैः स्थिरनेमियुक्तैस्तेजस्विभिः सुसंस्कृतैर्दृढरथैरागच्छतेत्यर्थः ।। १२ ।।

अच्छा वदा तना गिरा । पचाद्यजिति । व्याप्तिकर्तृत्वार्थविवक्षायां कर्तरि नंदिगृहीति सूत्रेण पचाद्यजित्यर्थः । अत एव कर्त्रर्थप्रदर्शनायैव व्याप्तयेति व्याख्यानम् । तथा च तनुविस्तारेऽस्मात्कर्तरि पचाद्यचि चकारलोपे तनेति रूपम् । ततः स्त्रीलिङ्गात्तृतीयायायाडाप इति । स्त्रीलिङ्गात्ततस्तनशब्दात् परतः स्थितायास्तृतीयाविभक्तेः टा इत्येवं रूपायाः सुपां सुलुक् पूर्वसवर्णाछ्येयाडाड्यायाजाल इति सूत्रेण डा इत्यादेश इत्यर्थः । तथा च तना डा इति स्थिते डित्वात् टीभूतस्य नकारस्थस्य आकारस्य लोपे तन् आ तना इति रूपं द्रष्टव्यम् । ननु तना टा इति स्थिते चुटू इति टकारलोपे तना आ इति स्थिते आङि चापः आङिति टासंज्ञा । आङि ओसि च परे आबन्तस्य एकारः स्यादित्युक्तत्वेन तनाशब्दस्थस्य आकारस्य एकारे तने आ इति जाते एचोयवायाव इति एकारस्य अय् इत्यादेशे तनय् तनयेत्येव स्यादित्यत आह याडाप इति नाश्रितमिति । आप इति आङि चाप इति सूत्रप्रतीकग्रहणम् । यथाऽस्यैव चोपपत्तेरूष्मेत्यत्रोष्मपदोपेता श्रुतिरुष्मपदेन सूत्रकारेण गृहीता एवं आप इति शब्दोपेतं आङि चाप इति सूत्रं आप इत्यनेन गृहीतमिति सम्प्रदायविदः । तथा चाङि चाप इति सूत्रविहितमाकारस्य एकारादिकं छन्दस्त्वेनानाश्रित्य सुपांसुलुगिति तृतीयाया डैवाश्रिता अतो न तनयेति रूपं किंतु तनेत्येवेत्यर्थः ।

व्यत्ययेत्यस्यार्थमाह बहुविषययेति । जरायै इत्यस्य स्तुतित्वेनेति व्याख्यानमुपपादयति । जराशब्द इति । भावप्रधान इति । जरात्वायेत्यर्थः । भवन्तीति । सुपांसुलुगिति सूत्रेण विहितत्वादिति शेषः । तृतीयार्थ इति । तथा च जरात्वेन स्तुतित्वेनेति व्याख्यानं युक्तमेवेति भावः । अच्छेति निपातो यथावदित्यर्थक इत्याशयेन यथावदित्युक्तम् । कस्मिन्नर्थ इति । कर्तृकरणयोस्तृतीयेति सूत्रेण कर्तरि करणे च तृतीयाया विहितत्वात्प्रकृते तृतीया कस्मिन्नर्थे व्याख्येयेत्यर्थः । इत्थंभूतलक्षणार्थेति । कंचित्प्रकारं प्राप्तस्य इत्थंभूतस्य लक्षणं ज्ञापकं इत्थंभूतलक्षणं तत् अर्थो यस्यास्तृतीयायाः सा तथोक्तेत्यर्थः । प्रकृते च वक्तव्यत्वरूपप्रकारं प्राप्ता वाक् तज्ज्ञापकं स्तुतित्वम् । वक्तव्याया

(पदार्थप्रकाशिका)

वाचोऽनेकविधत्वेनानन्दादिनाप्यसम्भवारूपातिप्रसक्तिपरिहाराय स्तुतित्वेनेत्युक्तम्। तथा चेयं वाक् यथा स्तुतिरूपा स्यात्तथा वदेत्युक्तं भवति। विभक्तिव्यत्यय इति। जरायै इति चतुर्थ्या तृतीयात्वेन व्यत्यय इत्यर्थः। अभिविधाविति। तथाचापिशब्दार्थः इत्यर्थः। तथाच सर्वा अपि विभक्तय इत्यसङ्कोचव्यञ्जनं अप्यर्थकचशब्दार्थश्च यावन्तो ब्राह्मणास्ते सर्वेप्याकार्या इत्यादाविवेति भावः। पक्षान्तर इति। चतुर्थी तृतीयार्थे सा चेत्थंभूतलक्षणार्थेति पक्षापेक्षया चतुर्थ्यीत्थंभूतलक्षणार्थेव्याख्येयेति पक्षान्तरद्योतने चशब्दार्थ इत्यर्थः। स्मर्यत इति। इत्थंभूतलक्षण इति स्मरणादिति भावः। तत्कुत इति। तत्तस्मादेतच्चतुर्थ्या इत्थंभूतलक्षणार्थत्वं कुत इत्यर्थः। सम्पद्यत इति। जरायै इत्यस्येत्यर्थः। भाष्ये रूपत इति तसि तृतीयार्थे इत्यभिप्रेत्य संस्तुतिरूपेणेत्युक्तम्। रूपशब्दो धर्मपरः। तथाच जरायै इत्यस्यार्थः। संस्तुतिरूपेणेति। संस्तुतित्वेनेत्यर्थः। उपेतयेति शेषः कृतः। एवं च संस्तुतित्वेनोपेतया गिरा संस्तुतिरूपया गिरेति यावदित्यर्थः सम्पद्यत इति भावः।

मित्रं नेत्यनूद्य सूर्यवदिति व्याख्यानम्। दृश्यमात्रं वाचीति। दृशिर्धातोः कर्मण्यणप्रत्यये गुणे तस्य रपरत्वे सति निष्पन्नो दर्शतशब्द इत्यर्थः। तदेव सामर्थ्यं विवृण्वन् स्वप्रकाशमित्यस्यार्थमाह यथेति। स्वमहिम्ना स्वसामर्थ्येन। स्वप्रसादेनैवेति। स्वेच्छाशक्त्यैवेत्यर्थः। यथोक्तं अव्यक्तोपि स्वशक्त्यैव भक्तानां दृश्यते हरिरिति। दृश्यमितीति। विष्णुमिति वदेति भाष्येण सम्बन्धः। ननु ब्रह्मणस्पतिं विष्णुमित्यत्रत्यस्य विष्णुमित्यस्य स्वप्रकाशमित्यत्राप्यनुवृत्तिसम्भवात्पुनर्विष्णुमिति कस्मादुक्तमित्यत आह मित्रं नेति। अग्निं न मित्रं न दर्शतं ब्रह्मणस्पतिः। अच्छवदेति कुतोन्वयः क्रियते किं तु मित्रं न सूर्यवत् दर्शतं अग्निं गिराऽच्छवदेत्यन्वयोऽस्त्वत्यन्यथाप्रतीतिरित्यर्थः। ऋचि विष्णुमिति विशेष्याभावाद्वद विष्णुं स्वप्रकाशमिति कथं युक्तमित्यत आह ब्रह्मणस्पति-शब्दोक्तमिति। मित्रं न दर्शतमग्निं वदेति योजनामङ्गीकृत्यात्राग्निरेव प्रतिपाद्योस्त्वित्यत आह अन्यथेति। एवं योजनामङ्गीकृत्याग्नेरेव प्रतिपाद्यत्वाङ्गीकारे तस्यैव प्राधान्येन देवतात्वप्राप्त्याऽस्य सूक्तस्य मारुतत्वं व्याकुप्येतेत्यर्थः। अतोऽस्मदुक्तैव योजना साध्वीति भावः। उच्यते कण्वेन। मध्यमस्य मध्यमपुरुषस्य विधानादिति। युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम इति सूत्रेण विधानादित्यर्थः। आत्मानश्चेति। आत्मनः स्वस्य प्रत्यक्त्वेनास्मदर्थतया पराक्त्वरूपयुष्म-दर्थत्वाभावादित्यर्थः। कुत एतदिति। आत्मानं प्रति त्वं ब्रह्मणस्पतिं वदेत्येवं स्वस्य पराक्त्वरूपं युष्मदर्थत्वं कुतो ज्ञापकादङ्गीकर्तव्यमित्यर्थः। स्वस्येति। तथाच प्रकृतेऽपि कण्वस्य स्तोतृ-त्वादर्थादस्मदर्थस्यापि स्वस्य त्वं वदेति पराक्त्वरूपयुष्मदर्थे प्रतियोगितोपपन्नेति भावः॥१३॥

(पदार्थप्रकाशिका)

मिमीहि श्लोकमास्ये वृष्टिं विस्तारयतीति। समुद्रादिभ्यो गृहीतमुदकं वृष्ट्यादिद्वारा स्वोदरात् बहिर्निःसारयतीत्यर्थः। अत्र विस्तृणीहीति विधिरूपस्य लोडर्थस्यापेक्षितत्वात् ततन इति भूतार्थकलुङुक्तिरसङ्गतेत्यत आह तनोतेरिति। द्वित्वविधानस्य लोटि अभावात्तदर्थं लोडर्थे लुङीत्युक्तम्। तनु विस्तारेऽस्माल्लोडर्थे लुङि तस्य थादेशे तस्य च तस्थस्थमिपां तान्तन्ताम इति सूत्रेण अः इत्यादेशे तन् अः इति जाते पश्चात् च्लिप्रत्यये तस्य गुणे छन्दसीति सूत्रेण चण् इत्यादेशे तस्य क्विब्वत्सर्वस्यापि लोपे तद्बलात् द्वित्वे तन् तन् इति जाते नकारलोपे हलादिशेषे ततन् इति अः ततन इति रूपं द्रष्टव्यम्। ननु गुपेश्छन्दसीति सूत्रेण गुपू रक्षण इति धातोरेव च्लेश्चाङादेशविधानात् गृहानजूगुपतमित्युदाहृतत्वाच्च प्रकृतेऽनेन सूत्रेण तनोतेः कथं चङित्यत आह छन्दसीति। गुपेर्धातोश्चङ् भवतीत्येकं वाक्यं छन्दसि अन्यस्मादपि धातोश्लेश्चङ् भवतीत्यपरं वाक्यमिति योगविभागकरणात् तनोतेरपि चङ् भवतीत्यर्थः। जगच्छब्देन योग्यप्रसक्तिवारणायाह शिष्येभ्य इति। ब्रह्मणस्पतिः मुख्यवायुः। प्रत्ययार्थमाह तद्विषयमिति। गायेति। गानं कुर्वित्यर्थः॥ १४॥

वन्दस्व मारुतं गणम्। अत्राप्यात्मानमेवाह कण्वः त्वमित्यादि। तत इति। पन ज्ञानेऽस्मात् ताच्छीलिके स्युप्रत्यये पनस्युरिति रूपम्। विशेषणेति। अर्कित्वरूपेत्यर्थः। अर्किन्शब्दात् विज्ञेयमित्यर्थलाभः कथं अत आह अर्का इति। ऋगताविति। ऋगतावस्मात् कर्मणि इन्प्रत्यये तस्य धातोः ककारगमे ऋवर्णस्य गुणे तस्य च रपरत्वे अर् क् इन् अर्किन् इति प्रातिपदिकसिद्धिः। पश्चात्स्वाद्युत्पत्तौ अर्किण इति भवतीत्यर्थः। अर्यत इत्यर्कीति व्युत्पत्तिर्द्रष्टव्या। गणं समुदायम्। निमित्तेषु सत्सु तत्तात्पर्यं तदनुग्रहादिति ज्ञापका इति। मरुत्स्वरूपज्ञापका इत्यर्थः। तथाच मरुदनुग्रहलब्धसद्गुरूपदेशेनास्माकं मरुत्स्वरूपज्ञानस्य जातत्वात्स्तोतुं न जानामीति न वाच्यमिति भावः॥ १५, १७, ६, (३८)॥

## पदार्थदीपिका

ननु विशेषणं विशेष्येणेति सूत्रे विशेषणानां विशेष्येणैव समासस्य नियमितत्वात् कथं विशेषणानां परस्परं समास इत्यतः विशेषणं विशेष्येण बहुलमिति बहुलवचनात् विशेषणयोरपि समासो युज्यत इत्याह। बहुलवचनादिति। अस्माद्र इति। स्फायितं चेत्यादिनेति शेषः। रोधस्वतीरिति। मादुपधाया इति मतुपो वत्वम्। उगितश्चेति ङीबिति भावः। यातेति। याप्रापणे। अदादित्वाच्छपो लुगिति भावः॥ ११॥

(पदार्थदीपिका)

सुसंस्कृता इति। संपूर्वात् करोतेः कर्मणि क्तः। सम्पर्युपेभ्य इति सुडिति ज्ञेयम्॥ १२॥

ब्रह्मणस्पतिमिति। षष्ठ्याः पतिपुत्रेति संहितायां सत्वमिति भावः। तनोतेरिति। तनु विस्तारे। तनोति देवतादिमाहात्म्यं विस्तारयति इति तथा बहुविषयेति यावत्। ततः स्त्रीलिंगादिति। अत्र तृतीयाया डा आप इति पदच्छेदः। ततश्च तनाशब्दात् परस्या तृतीयायाः सुपां सुलुगित्यादिना डादेशे डित्वाट्टिलोपे अनाबन्तत्वात् आङि चाप इत्यस्याप्रवृत्तेः युक्तं तनेति तृतीयैकवचनमित्यर्थः। अन्यथा आबन्तस्य तनाशब्दस्याङि चाप इत्यायादेशे च सति तनयेति स्यादिति भावः। अत्र च डादेशेनाबन्तत्वस्यैव निवृत्तिरिति भावेन आप इति सूत्रैकदेशोत्कीर्तनम्। अनुकृतेस्तस्य च क्रियस्यैवोपपत्तेरूष्मेत्यादिवत् यद्वा स्त्रीलिंगतृतीयाग्रहणं कृतम्। गिरेत्येतद्विशेषणत्वमाश्रित्य तनेत्यस्य तृतीयान्तत्वमाश्रितम्। जराया इति चतुर्थ्यन्तविशेषणत्वमाश्रित्य याडाप इति ङिद्वचनस्य याडागम आश्रितः। जराया इत्येतद्विशेषणत्वे हि तनायै इत्येतद्रूपसिध्यर्थं याडाप इत्याश्रयणीयं स्यादित्याशयः। अत्र तृतीयेत्युपलक्षणम्। चतुर्थी चेत्यपि द्रष्टव्यम्। तृतीयान्तस्येव जरायै इति चतुर्थ्यन्तस्यापि विशेषणस्य सत्वेनान्यतरमात्राश्रयणे नियामकाभावादिति भावः। नन्वेवमाङि चापः याडाप इत्यनयोः प्रवृत्त्या तनयेति तनायै इति स्यान्न तु तनेति, तत्कथं तृतीयाचतुर्थीत्वयोरभ्युपगम इत्यत आह। याडाप इति नाश्रितमिति। उपलक्षणमेतत्। आङि चाप इत्यप्यनाश्रितमित्यपि द्रष्टव्यम्। न चोभयमप्यत्र टीकाकाराणामभिमतमित्यत्र न नियामकमिति वाच्यम्। अन्यतरमात्राभिप्राये तृतीया आङि चाप इति वा चतुर्थी याडाप इति वा नाश्रितमित्येव वक्तव्यतया तृतीया याडाप इत्युक्त्यसामञ्जस्यप्रसंगात्। तृतीयेत्यस्य चतुर्थ्युपलक्षणत्वज्ञापनार्थमेव च आङि चाप इत्यनुक्त्वा याडाप इति वचनं संगच्छते। तथा याडाप इत्यस्य आङि चाप इत्येतदुपलक्षणत्वज्ञापनार्थमेव तृतीयेत्यभिधानं संगच्छते। अन्यतरमात्राभिप्राये उपलक्षणत्वं न विज्ञायते। एवं वक्रोक्ताविव वाक्यार्थान्यथानुपपत्त्योभयत्रोपलक्षणत्वोहः सम्भवतीति भावः। यत्तु तृतीया याडाप आङि चाप इति नाश्रितमिति व्याख्यातम्। तत्र आङि चाप इत्यप्रसंगादेव नाश्रितमित्यस्यास्वारस्यमिति स्पष्टमेव। तृतीयाडाप इति पक्षे वाशब्द उक्तरीत्या चतुर्थीसमुच्चयार्थः। तृतीयावाडाप इति पाठस्तु वाकारयाकारयोर्लिपेरत्यन्तभेदाभावेन लेखकभ्रमप्रयुक्तमेव। इत्थंभूतलक्षणार्थेति। कञ्चित्प्रकारं प्राप्त इत्थंभूतस्तस्य लक्षणं ज्ञापकमर्थो यस्यास्सा इत्थंभूतलक्षणार्थेत्यर्थः। अत्र च वक्तव्यत्वं प्रकारान्तरप्राप्ताया वाचस्तृतीया ज्ञापिका भवति। वक्तव्यवाचोऽनेकविधत्वेन कीदृशीयं वागित्यपेक्षायां तृतीयायाःस्तुतिरूपत्वस्य बोधनादिति भावः। अभिविधाविति। सर्वा अपि विभक्तय इत्यभिविधावित्यर्थः। द्वितीय इति।

(पदार्थदीपिका)

विभक्तिव्यत्ययापेक्षया यथास्थितरूपपक्षान्तरद्योतक इत्यर्थः। ननु कथंचित्प्रकारं प्राप्तो हि इत्थंभाव इत्युच्यते तद्वाचकत्वं च प्रातिपदिकस्यैव न तु विभक्तीनां, तत्कथमुच्यते सर्वा विभक्तयश्चेत्थं भाववाचिन्य इतीत्यत आह। इत्थंभाव इतीति। ततश्चेत्थंभावशब्देनेत्थंभूतलक्षणग्रहणात् युक्तं विभक्तीनां तद्वाचित्वमिति भावः। ननु च मित्रं न दर्शतमग्निमित्यन्यथाप्रतीतिरेव किं न स्यादित्यत आह। अन्यथेति। अग्नेः प्रतिपाद्यत्वांगीकारेऽस्य सूक्तस्य मारुतत्वं न स्यादिति भावः॥ १३॥

लुङर्थस्य भूतत्वस्य प्रकृते उपयोगाभावादाह। लोडर्थ इति। योगविभागादिति। णिश्रिद्रुस्रुभ्यः कर्तरीति गुपेरिति च विशेषनिर्देशाच्चङो प्रागपि छन्दसीति योगविभागाश्रयणात्तेन च छन्दसि विषये अन्यस्माद्धातोरपि परस्य च्लेः सिजपवादेन चङ् भवतीत्यर्थसूचनात् तनोतेरपि परस्य च्लेःचङ्। योगविभागस्य चेष्टसिद्ध्यर्थत्वान्नातिप्रसंगोऽपीति भावः। चङिति। ततश्च तनोतेः लुङ्। मध्यमपुरुषैकवचने सिपि योगविभागाच्चङि चङीत्यनेन द्विर्भावे इतश्च लोप इति सिप इकारलोपे रुत्वविसर्गयोरेव तद्रूपसिद्धिरिति भावः। गायत्रं सामेति। गायत्र्याःसम्बन्धि। तस्येदमित्यण्। गायतस्त्रायत इति गायत्रम्। आतोनुपसर्गे क इति कः। आतो लोप इटि चेत्याकारलोप इति द्रष्टव्यम्॥ १४॥

ननु पनतेःस्तुत्यर्थादसुनि पनः शब्दनिष्पत्तिः। ततश्च पनःस्तोत्रमात्मन इच्छतीतीच्छार्थे सुप आत्मनःक्यच् इति क्यचि क्याच्छन्दसीत्युप्रत्ययेऽतो लोप इत्यलोपे निष्पन्नस्य पनस्युशब्दस्य कथं ज्ञानशीलत्वार्थतया भाष्यकाराणां व्याख्यानमित्यत आह। पनतिरिह ज्ञानार्थ इति। यद्वेति। अर्यत इत्यर्की तमर्किणमिति भावः। अस्माकमिति। सुपां सुलुगिति सूत्रेण षष्ठीबहुवचनस्य शेआदेश इति भावः। स्तुहीति। वदि अभिवादनस्तुत्योरिति भावः॥ १५, १७, ३८॥

## टीकाविवृतिः

मरुतः॥ वीळुपाणिभिर्दृढस्वीयैः पाणिभिरिति॥ वीळुच्यौत्नमिति बलनामसु पाठादिति भावः। ननु विशेषणं विशेष्येण बहुलमिति सूत्रेण कर्मधारयसमासोक्तेर्दृढस्वीयैरित्यत्रोभयोरपि विशेषणत्वात्कथं समास इत्यत आह॥ बहुलवचनादिति॥ अस्माद्र इति॥ स्फायितं चीत्यादिसूत्रे खिदेर्ग्रहणादितिभावः॥ रोधस्वतीर्नदीरिति॥ कूलं रोधश्च तीरं चेत्यमरोक्तेरोधस्तीरं तदासामस्तीति रोधस्वत्यो नद्य इत्यर्थः। वीळुपाणिरित्यादिविशेषणप्रयोजनं वदन् ऋगभिप्रायमाह॥ चालनेपीति॥ तपस्यन्त इति॥ तपश्चरन्तः। तपःशब्दात्कर्मणोरोमंथतपोभ्यां वर्तिचरोरिति

(टीकाविवृतिः)

क्यषि लटि तपसःपरस्मैपदंचेति परस्मैपदे शत्रादेशः ॥ करणार्थाविति ॥ श्रुतौ यांत्यैतैरिति यामाःपादाः । एवं भाष्येपि गच्छंत्यैतैरिति गमनाःपादा इति विवक्षितमिति भावः ॥ ११ ॥

स्थिरावः ॥ अभीशवो दीधितय इति रश्मिनामसु पाठं मत्वर्थलक्षणां चाश्रित्याह ॥ अभीशव इत्यादिना ॥ रथादयःसन्ति चेत्किं तत इत्यत आह ॥ तैरिति ॥ १२ ॥

अच्छावद ॥ ब्रह्मणोहिरण्यगर्भस्येति ॥ ब्रह्मा विरिंचद्विजयोर्ऋत्विक्वन्द्रार्कयोगयोः ॥ ब्रह्म प्रोक्तं तपोध्यात्मवेदज्ञानेषु सूरिभिरिति विश्वोक्तेरिति भावः । ननु तनोतेः पचाद्यच्यजन्तत्वात् घञजपाःपुंसीति पुल्लिङ्गत्वं स्यात्तथा तृतीयाया आङो नास्त्रियामित्यादौ ङित्वनिर्देशात् याडाप इति सूत्रेण याडागमे आङि चाप इत्येत्वे तनेयेति रूपं स्यादित्यत आह ॥ ततः स्त्रीलिङ्गादिति ॥ पचादौ देवीत्यादिरूपसिद्धये ङीबर्थं देवट्नदडिति टित्वोक्तेर्घञजपा इत्यस्यानित्यत्वात्स्त्रीलिङ्गत्वम् । तथा याडाप इत्यत्र घेर्ङितीत्यतोनुवृत्तस्य ङितीत्यस्य ङकारश्चासाविच्चेति कर्मधारयो न तु बहुव्रीहिः । तथा च यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषया तदादिविधौ सति इत्संज्ञिकङकारादौ सुपि परत इत्यर्थलाभादाङ इत्संज्ञिकङकारादित्वाभावाद्याडाप इति नाश्रितम् । यद्वा । आङो नास्त्रियामित्यादौ टा इत्यस्य पूर्वाचार्यकृताङिति व्यवहारस्यानुवादात्पाणिनिना ङित्वस्या कृतत्वाद्याडागमो नाश्रितः । न हि पूर्वाचार्यकृतानुबन्धैःपाणिनीय शास्त्रे कार्याणि क्रियन्ते इति भावः । औङ आप इत्यत्र महाभाष्येप्येवमेवाशङ्क्य समाहितम् । औङो ङित्त्वान्ङित्कार्यं तु प्राप्नोति । खट्वे नाले याडाप इति याट्प्राप्नोति । नैष दोषः । नैवं विज्ञायते ङकार इद्यस्य सोयं ङित् ङितीति कथं तर्हि ङ एव इत् ङितीति । एवं तर्हि वर्णग्रहणमिदं भवति वर्णग्रहणेषु चैतद्भवति यस्मिन्विधिस्तदादावल्ग्रहणे इति न दोषो भवति । अथवा पूर्वसूत्रनिर्देशोयं पूर्वसूत्रेषु येनुबंधाःन तैरिह कार्याणि क्रियंते इति । अथवा सुपां सुलुगित्यत्र आङ्याजयारामुपसंख्यानमिति वार्तिकेन तनाशब्दात्तृतीयाया आङादेशे तस्य ङित्वाद्याडागमप्राप्तौ तन्नाश्रितमित्युक्तम् । सुपां सुलुगिति लुगादिनैव सिद्धे इयमुक्तिःशिष्याणां मार्गान्तरप्रदर्शनायेति बोध्यम् । तथा च तनाशब्दस्य छान्दसत्वादाङि चाप इत्येत्वाभावे टा इत्यनेन सवर्णदीर्घे तनेति रूपमिति भावः । यत्तु स्वयूथ्यानां तृतीयायाडाप इति नाश्रितमिति याद्वयसहितपाठं परिकल्प्य व्याख्यानम् । तृतीयायाःडा सुपां सुलुगिति डादेशः । आप इति आङि चाप इत्यनेनेत्वं नाश्रितमिति । तच्चिंत्यम् । डित्कार्याभावेन डादेशवैयर्थ्यात् । टिलोपे च सति आबंतत्वाभावेनाङि चाप इत्यस्य प्राप्त्यभावेन तदनाश्रयणोक्तिवैयर्थ्याच्च । आप इत्यनेनाङि चाप इत्येतद्ग्रहणस्य क्लिष्टत्वाच्च । अत एव

(टीकाविवृतिः)

चोपपत्तेरूष्मेत्यादिवदेकदेशप्रतीक ग्रहणस्यागतिकगतित्वात्। जयतीर्थग्रन्थे क्वाप्येवं जातीयक-वाक्यादर्शनाच्च। बहुपुस्तके वाक्यद्वयपाठादर्शनाच्च। याशब्दत्रयदर्शनाच्च॥ जराशब्दःस्तुतिवाचिति॥ जॄष् वयोहानावित्यतश्शुरादिण्यंतादः- प्रत्ययादित्यकारप्रत्यये णिलोपे जनीजॄषितिमित्वान्मितां ह्रस्व इति धातोर्ह्रस्वे निष्पन्नजराशब्दस्य रेभःजरितेति स्तोतृनामसु पाठात्स्तुतिवाचित्वमिति भावः॥ चतुर्थी तृतीयार्थे इति॥ तृतीयादेशत्वादिति शेषः॥ इत्थंभूतलक्षणार्थेति॥ कंचित्प्रकारं प्राप्त इत्थंभूतस्तस्य लक्षणं ज्ञापकमित्थंभूतलक्षणमित्यर्थः॥ संस्तुतिरूपेणोपेतयेति॥ यथा छात्रत्वोपेतस्य यज्ञदत्तस्य छात्रत्वं कश्चित्प्रकारः। तत्प्रकारद्योतने धृतगुरुकमण्डलुर्लक्षणमिति कमण्डलुनेति तृतीया। तथा अच्छत्वोपेतायाःगिरःअच्छत्वं कश्चित्प्रकारः। तत्प्रकारद्योतने स्तुतिर्लक्षणमितिस्तुतित्वोपेतया गिरेत्यर्थः॥ दर्शतं स्वप्रकाशमिति॥ भृमृदृशीत्यादिना कर्मण्यतच्प्रत्यय इति भावः॥ इत्यन्यथाप्रतीतीति॥ दर्शतशब्दस्याग्निविशेषणत्वेन प्रतीतिनिरासायेत्यर्थः॥ अन्यथेति॥ दर्शतशब्दस्याग्निविशेषणत्वे मित्रवदग्निवदित्यन्वयादग्नेःप्रतिपाद्यत्वादेतत्सूक्तस्योक्तं मारुतत्वं विरुद्ध्येतेत्यर्थः॥ १३॥

मिमीहि श्लोकम्॥ श्लोकं कीर्तिमिति॥ श्लोको यशसि पद्ये चेति विश्वोक्तेरिति भावः। माङ्माने शब्दे चेत्यतो लोटि जुहोत्यादित्वाच्छपःश्लौ व्यत्ययेन परस्मैपदे ईहल्यघोरित्यभ्यस्तस्य भृञामिदित्यभ्यासस्येत्वेमिमीहीति रूपमिति भावेनाह। मिमीहि निर्मिमीष्वेति॥ पर्जन्यो मेघ इति॥ ध्वनियुक्तो मेघःपर्जन्यशब्दवाच्यः। पर्जन्यो मेघशब्देपिध्वनदंबुधशक्रयोरिति विश्वोक्तेरिति भावः॥ योगविभागाच्चङिति॥ ततश्चङीति द्वित्वे सिपो रुत्वविसर्गाविति भावः॥ तद्विषयमिति॥ उक्थशब्दात् भवार्थे दिगादिभ्यो यदिति यत्प्रत्यये उक्थे भवमुक्थविषयमुक्थ्यमित्यर्थः॥ गायेति॥ गैशब्दे इत्यतो लोटि सिपो हित्वे शप्यायादेशे अतो हेरिति हिलुगिति भावः॥ १४॥

वंदस्व मारुतम्॥ घञन्तत्विषेरर्शाद्यजिति भावेनाह॥ त्वेषं प्रकाशवंतमिति॥ ताच्छीलिकः स्युरिति॥ उणादयो बहुलमिति वचनादिति भावः। अत्र पनेर्नकारान्तत्वादकारागमोपि बोध्यः। अन्यथा पंस्युरिति स्यात्। ताच्छीलिको स्युरिति पाठे तु अस्युरिति पदच्छेदात्पनस्युरिति रूपमिति भावः॥ कर्मणीनिति॥ गमेरिनिरित्युक्त इनि प्रत्ययो बहुलोक्तेरस्मादपि। ततस्सार्वधातुकेति गुणेऽर्कीतिरूपमिति भावः॥ वंदस्व स्तुहीति॥ कण्व आत्मानं प्रत्येवाहेति भावः। इहेत्यस्य निमित्तसप्तम्याश्रयणाभिप्रायमाह॥ तदनुग्रहादिति॥ असन्निति॥ अस्तेर्लङि झेरन्तादेशे इतश्चेतीकारलोपे संयोगांतलोपे च बहुलं छन्दस्यमाङ्योगेपीत्याडागमाभावः॥ १५॥

ऋक्संहिता पदपाठसहिता (सू-३९, व-१)

(४७२) प्र यदित्था परावतः शोचिर्न मानमस्यथ। कस्य क्रत्वा मरुतः
कस्य वर्पसा कं याथ कं ह धूतयः ॥ १ ॥

(प०) प्र । यत् । इत्था । पराऽवतः । शोचिः । न । मानम् ।
अस्यथ । कस्य । क्रत्वा । मरुतः । कस्य । वर्पसा । कम् ।
याथ । कम् । ह । धूतयः ॥ १ ॥

(४७३) स्थिरा वः सन्त्वायुधा पराणुदे वीळू उतप्रतिष्कभे। युष्माकमस्तु
तविषी पनीयसी मा मर्त्यस्य मायिनः ॥ २ ॥

(प०) स्थिरा । वः । सन्तु । आयुधा । पराऽनुदे । वीळु । उत ।
प्रतिऽस्कभे । युष्माकम् । अस्तु । तविषी । पनीयसी । मा ।
मर्त्यस्य । मायिनः ॥ २ ॥

(४७४) परा हयत्स्थिरं हथ नरो वर्तयथा गुरु । वि याथन वनिनः
पृथिव्या व्याशाः पर्वतानाम् ॥ ३ ॥

(प०) परा । ह । यत् । स्थिरम् । हथ । नरः । वर्तयथ । गुरु । वि ।
याथन । वनिनः । पृथिव्याः । वि । आशाः । पर्वतानाम् ॥३॥

(४७५) नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः ।
युष्माकमस्तु तविषी तना युजा रुद्रा(द्रा)सो नू चिदाधृषे ॥४॥

(प०) नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् ।
रिशादसः ॥ तना । युजा । रुद्रा (द्रा) सः । नु । चित् ।
आऽधृषे ॥ ४ ॥

(४७६) प्रवेपयन्ति पर्वतान्विविञ्चन्ति वनस्पतीन् । प्रो आरत मरुतो
दुर्मदाइव देवासः सर्वया विशा ॥ ५, १८ ॥

(ऋक्संहिता पदपाठसहिता)

(प०) प्र । वेपयन्ति । पर्वतान् । वि । विञ्चन्ति । वनस्पतीन् । प्रोइर्ति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥ ५, १८ ॥

## ऋग्भाष्यम्

परावतो हरेः स्थानान्मानं शोचिरिवास्यथ। सूर्यादयो यथा शोचिर्दूरादस्यंति जंतुषु। एवं ज्ञानं सम्प्रदायान्मरुतो विष्णुरेव वा। इत्थं यथा सर्वदृश्यं तत्तथा भवतां कृतम्। एवं यत्र क्व वा ज्ञानाद्बलाद्वा गच्छथ क्वचित्। स्वतंत्रत्वात् परापेक्षा नहि वः क्वचिदिष्यते। किं चिद्याथ बलात्किंचिद्धूनुथ स्वबलाद्धि तत् ॥ १ ॥ शत्रूणामपनोदाय सन्ति वस्त्विह हेतयः। स्तंभनायच शत्रूणां सुदृढान्येव ताः सदा। स्थिरत्वं दीर्घकालत्वं वीळुत्वं दृढता तथा। युष्माकं तविषी तेजो बलमस्त्युत्तमं सदा। मायिनो न हि मर्त्यस्य बलं तेजोऽथवोत्तमम् ॥ २ ॥ स्थिरं चाज्ञानपापादि तद्भक्ताय पराहथ। गुरूनपि नरान्नित्यं गुणैर्वर्तयथांजसा। पर्वतानां पृथिव्याश्च दिशो नित्यं वियाथन। वनिनश्चत रून्सम्यग्भजनीयान्सुरान्हरिः ॥ ३ ॥ भूमौ दिवि च वः शत्रुः क्वचिन्नैव हि लभ्यते। रिशादसः सुसुखिनः सुखेन शमदन्ति यत्। बलं तेजोपि वो ह्यस्ति व्याप्तानित्यतया युजा। अद्याप्याधर्षणायैव निखिलाशुभसन्ततेः ॥ ४ ॥ प्रवेपयंति पर्वतान्विविंचन्ति वनस्पतीन्। जनिपर्ववतो जीवान्संप्रेरयति केशवः। भजनीयपतीन्ब्रह्मपूर्वांश्च फलदानतः। तारतम्येन सम्यक् च विवेचयति प्रसर्वदा। सर्वपजास्वतिष्ठंत प्राप्तास्ताभिस्सहैव च। मत्ता इव प्रेरयंति शुभाशुभकृतौ नरान् ॥ ५, १८ ॥

## ऋग्भाष्यटीका

प्रयत्। एतदपि दशर्चं मारुतं सूक्तम्। परावतः। हे मरुतो यूयम्। परावतो दूरतः। हरेः स्थानात्स्वलोके स्थित्वैव। जन्तुषु शोचिर्न शोचिरिव प्रकाशमिव। मानं ज्ञानं प्रकर्षेणास्यथ क्षिपथ। एतदेव स्पष्टयति ॥ सूर्यादय इति। एवेति मुख्यार्थतां द्योतयति। किंच यदित्था यद्यत्सर्वं दृश्यं प्रमितमिति यावत्। इत्थम् एवं प्रकारम्। तत्तथा मरुतां युष्माकं कृतमिति शेषः। सप्रकारं कार्यजातं युष्माभिरेव निर्मितमित्यर्थः। एवमन्यच्च। यद्यूयं ज्ञानाद्यत्र क्व वागच्छथ। यत्किंचिज्ज्ञाना विषयं कुरुथ जानीथ। तत्कस्य किमधीनेन। क्रत्वा क्रतुना ज्ञानेन। यच्च बलात्कचिद्गच्छथ बलविषयं कुरुथ। तत्कस्य किमधीनेन वर्पसा बलेन।

(ऋग्भाष्यटीका)

आक्षेपस्य तात्पर्यमाह। स्वतन्त्रत्वादिति। कच्चित्। ज्ञाने। बलेन। किन्तु। यत्कंचिद्याथ जानीथ। तत्स्वाधीनादेव ज्ञानादिति शेषः। यच्च बलात्कं ह कस्यचित् धूतयो यूयं कंचिद्धूनुथेति यावत्। तत्स्वबलाद्धीति शेषः॥ १॥

स्थिरा वः। शत्रूणां। हे मरुतो वो युष्माकम्। पराणुदे सम्पदादित्वात्क्विप्। इह जगति शत्रूणामपनोदाय। उत प्रतिष्कभे शत्रूणां स्तम्भनाय वा। आयुधा आयुधानि हेतयः। सन्तु सन्ति। न केवलमायुधामात्रं किंतु। तास्तान्यायुधानि। स्थिरा स्थिराणि। वीळु वीळूनि। सदासुदृढान्येव। स्थिरत्ववीळुत्वयोः को भेद इत्यत आह॥ स्थिरत्वमिति। हेतुहेतुमद्भाव एवैतयोर्न त्वैक्यमिति भावः। तथा अन्यच्च। युष्माकं तविषी तेजो बलं वाऽस्तु अस्ति। कथं भूतं पनीयसी पनतेः स्तुत्यर्थात्कर्मणि ईयसुन्। स्तुत्या सदोत्तमम्। मायिनो मर्त्यस्य। छद्मिनां दैत्यादीनाम्। पनीयसी तविषी उत्तमं बलम् अथवा तेजः। मा नास्ति हि। अतोस्मत्तपोविघ्नान्दैत्यादीन् हतेति॥ २॥

परा। स्थिरं च। हे मरुतो यूयं यत्स्थिरं दीर्घकालमनाद्यज्ञानपापादितच्च। भक्ताय युष्मद्भक्तस्य। पराहथ ह विनाशयथ। किंच। गुरु गुरूनुत्तमानपि। नरो नरान् पुरुषान्नित्यमंजसा गुणैर्गुणान् दत्वा। वर्तयथ। किंच। यूयं वनिनो वनसम्बन्धिनस्तरून्वियानथ विशेषेणयाथ। पर्वतानां पृथिव्याश्चाशा दिशः पर्यंतान्नित्यं वियाथन। युष्माकमगम्यं नास्तीति। विष्णुपक्षे वनिन इत्यस्यार्थान्तरमाह॥ सम्यगिति। हरिर्वियाति। वनतेः कर्मणीन्। पृथिवीपर्वतशब्दौ तु प्रागेव व्याख्यातौ॥ ३॥

न हि वः। भूमौ। हे रिशादसः सुसुखिनः। कुत एतल्लभ्यते। यद्यस्मात्सुखेन धनार्जनाद्यायासेन विना शं सुखं मदन्त्यनुभवन्ति तस्मात्। वो युष्माकम्। द्यवि दिवि स्वर्गे। शत्रुः शातयिता। नाधिविविदे नैव लभ्यते। भूम्यां भूमौ च नाधिविविदे। उपलक्षणमेतत्। कचिच्च नैव लभ्यते। कुतः। हे रुद्रासो रुद्रा रुजां द्रावका मरुतो युष्माकं वो नूचित्। अद्यापि सदेति यावत्। आधृषे निखिलाशुभसन्ततेराधर्षणायैव। सकलदैत्यनिबर्हणाय। तना व्याप्ता। कथं नित्यतया। युजा योगेन सहिता। तविषी बलं तेजोपिवोऽस्तु अस्ति हि॥ ४॥

प्रवेपयन्ति। मरुतो देवाः। पर्वतान्प्रवेपयन्ति कम्पयन्ति। वनस्पतींश्च विविंचन्ति मूलतः पृथक्कुर्वन्ति। विष्णौ पूर्वार्धं व्याख्याति। जनीति। तारतम्येन फलदानतः। किञ्च मरुतः। सर्वया विशा ताभिः सर्वाभिः प्रजाभिः सहैव। आरतप्राप्ताः सङ्गताः। सर्वप्रजास्वतिष्ठन्तेति यावत्। किंच। दुर्मदा इव मत्ता इव स्वप्रयोजनानुसन्धानहीना एव। नरान्। शुभाशुभकृतौ प्रेरयन्तीति शेषः॥ ५, १८॥

## मन्त्रार्थमञ्जरी

अथ 'प्र यदित्था' इति दशर्चं वर्गद्वयात्मकं मारुतं (षट्त्रिंशसूक्तवत्) प्रागाथं नवत्रिंशं सूक्तम्।
(हे) मरुतः (यूयम्) परावतः, दूरतः, हरेः स्थानात्स्वर्गलोके स्थित्वैव। जन्तुषु शोचिः न,

शोचिरिव प्रकाशमिव। मानम्, ज्ञानम्। (प्र) प्रकर्षेण। अस्यथ, क्षिपथ इदमुक्तं भवति 'सूर्यादयो यथा शोचिर्दूरादस्यन्ति जन्तुषु, एवं ज्ञानं सम्प्रदायान्मरुतो (विष्णुरेव वा, ऋ० भा०)ऽस्यन्ति, मरुन्नामकविष्णुरूपविशेषा वा' इति किं च, यत् इत्था, यद्यत्प्रमितमेवं प्रकारम्। (तत्तथा मरुतां युष्माकं कृतम्) इति शेषः, सप्रकारं कार्यजातं युष्माभिरेव निर्मितम्– इत्यर्थः। एवमन्यच्च– यद्यूयं ज्ञानाद्यत्र क्व वा गच्छथ, यत्किञ्चिज्ज्ञानविषयं कुरुथ, जानीथ, तत् कस्य, किमधीनेन। क्रत्वा, क्रतुना, ज्ञानेन। यच्च बलात्क्वचिद्गच्छथ, बलविषयं कुरुथ, तत् कस्य, किमधीनेन। वर्षसा, बलेन। स्वतन्त्रत्वाज्ज्ञाने बले च न परापेक्षा, किं तु (कम्) यत्किञ्चित् याथ, जानीथ। तत् (स्वाधीनादेव ज्ञानात्) इत्याक्षेपे तात्पर्यं ज्ञेयम्। यच्च बलात्– कम्, कस्यचित्। धूतयः, यूयं कं (किं) चिद्धूनुथेति यावत्। तत्– (स्वबलाद्धि) इति शेषः। (ह) ॥ १ ॥

(हे मरुतः) वः, युष्माकम्। पराणुदे, सम्पदादित्वात्क्विप्, इह जगति शत्रूणामपनोदनाय। उत प्रतिष्कभे, शत्रूणां स्तम्भनाय। आयुधा, आयुधानि च, हेतयः। सन्तु, सन्ति, व्यत्ययात्। न केवलमायुधमात्रम्, किं तु तान्यायुधानि स्थिरा, स्थिराणि। वीळु, वीळूनि, सदा सुदृढान्येव, स्थिरत्वाद्दीर्घकालत्वात् 'वीळूनि' इत्येवं हेतुहेतुमद्भावो ज्ञेयः। किं, च युष्माकम्। तविषी, तेजः, बलं वा। अस्तु, अस्ति। कथं भूतम्? पनीयसी, पनतेः स्तुत्यर्थात्कर्मणीयसुन्, स्तुत्या, सदोत्तमम्। मायिनः मर्त्यस्य, छद्मिनां दैत्यानाम्। (पनीयसी तविषी), उत्तमं बलम्, अथ वा (उत्तमं) तेजः। मा (अस्तु) नास्ति। (हि) अतः– अस्मत्तपोविघ्नान्हत' इति ॥ २ ॥

(हे मरुतो यूयम्) यत्। स्थिरम्, दीर्घकालम्, अनाद्यज्ञानपापादि। (तच्च) (भक्ताय), युष्मद्भक्तस्य। पराहथ, विनाशयथ। (ह) किं च। गुरु, गुरून्, उत्तमान्। (अपि) नरः, नरान् पुरुषान्। नित्यमञ्जसा गुणान्दत्त्वा– वर्तयथ। किं च (यूयम्) वनिनः, वनसम्बन्धिनः, तरून्, हरिपक्षे वनिनः, भजनीयान्, सुरान्प्रति इत्यर्थः, वनतेः कर्मणीनिप्रत्ययः। वि याथन, विशेषेण याथ, गच्छथ। पर्वतानाम् पृथिव्याः (च)। आशाः, दिशः, पर्यन्तान्। नित्यम् वि (याथन) युष्माकमगम्यं नास्ति इति (भावः) पृथिवीपर्वतशब्दौ हरिपक्षे प्रागेव व्याख्यातौ ॥ ३ ॥

(हे) रिशादसः, सुसुखिनः, रमेः भावे डिः, रिणा सुखेन साधनार्जनाद्यायासेन विना शं सुखमदन्त्यनुभवन्तीत्यत्तेः असुन्। वः, युष्माकम्। द्यवि, दिवि, स्वर्गे। शत्रुः, शातयिता। नहि अधि विविदेः, नैव लभ्यते। भूम्याम्, भूमौ। (च) न (अधि विविदे) उपलक्षणमेतत् क्वचिच्च नैव लभ्यते कुतः? (हे) रुद्रा (द्रा) सः रुद्रा (द्राः) रुजां, द्रावकाः (मरुतः) युष्माकम्। नु चित्,

(मन्त्रार्थमञ्जरी)

अद्यापि, सर्वदेति यावत्। आधृषे, निखिला (शुभ) घसंततेराधर्षणायैव, सकलदैत्यनिबर्हणाय। तना, व्याप्ता। कथम् ? नित्यतया– युजा, योगेन सहिता। तविषी, बलम्, तेजो वा। अस्तु, अस्ति। (हि) ॥ ४ ॥

मरुतः। (देवासः) देवाः। पर्वतान्। प्र वेपयन्ति, कम्पयन्ति। वनस्पतीन्, तरून्। (च) वि विञ्चन्ति, मूलतः पृथक्कुर्वन्ति। किं च, (मरुतः) सर्वया विशा, सर्वाभिः प्रजाभिः सह। (एव) प्रो आरत, प्राप्ताः, संगताः, सर्वप्रजास्वतिष्ठन्तेति यावत्। किं च, दुर्मदा इव मत्ताइव, स्वप्रयोजनानुसन्धानहीना एव। (नराञ्छुभाशुभकृतौ प्रेरयन्ति) इति शेषः। विष्णुपक्षे तु पर्वतान्, जन्मपर्ववतो जीवान्। प्र वेपयन्ति (सं) प्रेरयन्ति। वनस्पतीन्, भजनीयपतीन्ब्रह्मादीन्। फलदानतस्तारतम्येन (वि विञ्चन्ति) विवेचयन्ति। इति व्याख्या। शिष्टं प्राग्वत्॥ ५ ॥ इत्यष्टादशो वर्गः ॥ १८ ॥

## रूपावतारः

प्रयत् ॥ क्रत्वेति। छान्दसत्वात् 'आङो नास्त्रियाम् (७।३।१२०) इत्यस्याप्रवृत्तौ यणादेशे क्रत्वेति रूपम् ॥ १ ॥

स्थिरावः ॥ पनतेरिति। पनतेरीयसुनि 'उगितश्च' (६।३।४५) इति ङीपि पनीयसीति रूपम् ॥ २ ॥

परा ॥ वियाथनेति। यातेर्लटः मध्यमपुरुषबहुवचनथादेशे तस्य थनादेशे शपो लुकि वियाथनेति रूपम् ॥ ३ ॥

न हि वः ॥ कथमिति। तविषी किं देशतो व्याप्ता उत कालत इत्यर्थः। एतदुत्तररूपं भाष्यमनुवदति। नित्यतयेति। युजा योगेनेति। तत्तद्दैत्यनिबर्हणोपायेनेत्यर्थः ॥ ४ ॥

प्रवेपयन्ति ॥ मत्ता इवेति। दृष्टान्तः प्रकृतानुपयुक्त इत्यत आह। स्वप्रयोजनेति ॥ ५ ॥ १८ ॥

## पदार्थप्रकाशिका

प्र यदित्था परावत। प्रयद्दश मरुतमित्यनुक्रमणिकां हृदि निधायाह एतदपि दशर्चं मारुतं सूक्तमिति। दूरत इत्यस्यावधिसापेक्षत्वाद्भाष्ये हरेः स्थानादिति पूरितं तस्याभिप्रायः स्वलोके स्थित्वेति। तथाच हरेः स्थानाद्वैकुण्ठादेः सकाशादर्वाक् दूरतो विद्यमाने स्वकीये लोक एव

(पदार्थप्रकाशिका)

स्थित्वेत्यर्थः । जन्तुषु भूमिष्ठेषु सज्जनेषु मानं ज्ञानं क्षिपथेत्यन्वयः । तत्र दृष्टान्तः शोचिर्नेति । सूर्यचन्द्रादय इति शेषः । सूर्यादय इतीति । यथा सूर्यादयो दूरात् हरेः स्थानाद्दूरतो विद्यमानान्तरिक्षलोके स्वमण्डल एव स्थिताः सन्तो भूमिष्ठेषु जन्तुषु शोचिः प्रकाशं अस्यंति असुक्षेपणे क्षिपन्ति भूमौ व्याप्तं कुर्वन्ति एवं मरुतो दूराद्धरेः स्थानाद्दूरतो विद्यमाने स्वस्थान एव स्थितत्वात्स्वसमीपस्थानृषीन् प्रत्युपदिशन्ति । तत्संप्रदायेन च भूमिष्ठैः सज्जनैः ज्ञानं प्राप्यते एतदभिप्रायेण ज्ञानं प्रकर्षेण क्षिपथेत्युच्यते । एवं विष्णुरेव वा ब्रह्मादिद्वारा संप्रदायात् ज्ञानमस्यतीत्युच्यत इति भाष्यार्थो द्रष्टव्यः । एवेतीति । एवं ज्ञानं सम्प्रदायादित्युक्तार्थो विष्णुपक्ष एव मुख्यो मरुत्स्वमुख्य इति एवकारेण द्योतयतीत्यर्थः ।

यदित्थेत्यंशव्याख्यानपरं इत्थं यथेत्यादिभाष्यं व्याचष्टे किञ्चेति । यदित्यस्यार्थो यद्यत्सर्वमित्यादि । इत्थेत्यस्यार्थ इत्थमित्यादि । एवं प्रकारम् । धारकत्वतर्पकत्वदाहकत्वादिप्रकारोपेतं भूतलाग्न्यादिरूपं कार्यजातं तथेत्यादि ऋचि शेषपूरणम् । तथेत्यस्यार्थो मरुतामित्यादि । कृतं कर्तव्यम् । एतस्याभिप्रायमाह सप्रकारमिति । एवमिति भाष्यपदमनूद्यान्यच्चेतीति व्याख्यानम् । यत्किञ्चिद्वस्तुजातम् । बलविषयमिति । बलेन वृक्षादिकं कम्पयथेति यावदित्यर्थः । स्वातन्त्र्यादितीति । भगवत्पक्ष एवेदं मुख्यं मरुत्सु तु स्वावरापेक्षयैवेदमिति ज्ञातव्यम् । यदि ज्ञाने बले च परापेक्षा नास्ति तर्हि कीदृशाज्ज्ञानात्पदार्थं विषयीकुरुथ कीदृशाच्च बलाद्यत्किञ्चिद्विषयीकुरुथेति भावेन शङ्कते । किंत्विति । तदुत्तरत्वेन प्रवृत्तं कं याथेति पादं शेषपूरणेन सम्यग्व्याख्याति भाष्ये किंचिदित्यादिना । तद्व्याचष्टे यत्किमित्यादिना । कमित्यस्य लिङ्गव्यत्ययेन किंचिदिति व्याख्यानम् । स्वाधीनादेव ज्ञानादिति भाष्ये शेषः पूरितः । अयं शेषो ऋच्यपि द्रष्टव्यः । धूनुथ । धूञ् कम्पने । कम्पयथेत्यर्थः ।। १ ।।

स्थिरा वः सन्त्वायुधा पराणुदे । किबिति सम्पदादिभ्यश्चेति सूत्रेणेत्यर्थः । अस्यापि तद्गणस्थत्वादिति भावः । तथाच परा आङित्युपसर्गद्वयपूर्वकात् णुद अपनोदे इति धातोर्भावे क्विपि तस्य लोपे दस्य चर्त्वे पराणुत् इति प्रातिपदिकसिद्धिः । पश्चात्स्वाद्युत्पत्तौ पराणुद इति भवतीति द्रष्टव्यम् । हेतुमद्भाव एवेति । यद्दृढं तल्लोके स्थिरम् । बहुकालमवस्थितं भवतीति वज्रादौ दृष्टमतो वीलुशब्दोक्तं दृढत्वं स्थिरत्वे हेतुरित्यर्थः । अथवा काष्ठजातीये बहुकालीनत्वस्य दृढत्वव्याप्यतया दृष्टत्वेनायुधानामपि काष्ठविशेषनिर्मितत्वेन स्थिरत्वं दार्ढ्ये हेतुरित्यर्थः । तेजः सामर्थ्यं अवष्टंभशक्तिरिति यावत् । बलं शरीरबलम् । कर्मणीयसुन्निति । पन् स्तुतावस्मात्कर्मणि ईयसुन्प्रत्यये

(पदार्थप्रकाशिका)

उन्नित्यस्य लोपे पनीयस् इति सकारान्तप्रातिपदिकसिद्धिः। पश्चात्स्त्रीत्वविवक्षायां ङीपि पनीयसीति रूपं भवतीति द्रष्टव्यम्। तथाच पन्यत इति पनीयसीति व्युत्पत्तिः। सदोत्तममिति। स्तुत्यत्वेनोत्तमत्वं लभ्यत इति भावः। मरुद्देवताकत्वसिध्यर्थं ऋक्तात्पर्यमाह अत इति। तेषां दैत्यानां भवदपेक्षया दुर्बलत्वाद्भवतां तन्निवारण आयुधानां सामर्थ्यस्य सद्भावादित्यर्थः। विघ्नान् विघ्नकारिणः॥ २॥

परा ह यत्स्थिरं हथ। वर्तयथेति। सन्मार्गे प्रवर्तयथेत्यर्थः। तरून् प्रति। तच्चालनायेति यावत्। विशेषेण याथ। विशेषेण गच्छथ। तरुसंचालने भवतामतिशयेन प्रीतिरित्याशयः। दिश इत्यस्य प्रसिद्धार्थवारणायाह पर्वतानिति। प्रांतभागानित्यर्थः। तत्तात्पर्यमाह युष्माकमिति। पर्वत-पृथिवीप्रांतभागरूपमपि वस्तु भवतामगम्यं न भवतीत्यर्थः। हरिरित्यनन्तरं अध्याहार्यं दर्शयति। वियातीति। भजनीयान् सुरान् प्रति हरिर्विशेषेण फलदानाय वियातन व्यत्ययेन यातीत्यर्थः। वनतेरिति। तथा च वन् सम्भक्तौ अस्मात्कर्मणि इन्प्रत्यये वनिन् इति नकारान्तप्रातिपदिकसिद्धिः। तद्बहुवचनं वनिन इति भवतीति द्रष्टव्यम्। पृथिवीपर्वतशब्दाविति। महीद्यौः पृथिवी च न इत्यत्र श्रीश्च भूश्च त इति द्वितीयाध्याये भूराख्यलक्ष्मीरूपपरत्वेन पृथिवीशब्दो व्याख्यातः। पर्वतशब्दस्तु य ईंखयन्ति पर्वतानित्यत्र पर्ववन्तो हि जन्मना पुरुषा इति प्रथमाध्याये जीवपरत्वेन व्याख्यात इत्यर्थः। तथाच हरिः पृथिव्याः भूदेव्याः पर्ववतां जन्मरूपपर्ववतां सुरातिरिक्तजीवानां आशाः पर्यंतान् तत्समीपमिति यावत्। वियाथन विशेषेण याति गच्छति अभीष्टप्रदानायेति योजना द्रष्टव्या॥ ३॥

नहि वः शत्रुर्विविदे अधि द्यवि। रीत्यस्यार्थः सुखेनेति रमणं रीत्युच्यत इत्याशयः। धनेत्यादि। अनायासेनेत्याशयः। तस्मादेव। कुत इति। भूम्यादौ भवतां शत्रुः कुतो नास्ति न लभ्यत इत्यर्थः। तन्निर्बहणसामर्थ्यसद्भावादित्याह हे रुद्रास इत्यादिना। कथमिति। व्याप्तत्वं कथं तनाशब्दार्थ इत्यर्थः। नित्यतयेति। नित्यत्वेन निमित्तेन व्याप्त्येत्यन्वयः। तनू विस्तारे। विस्तृतिश्च व्याप्तिः। व्याप्तिश्च कालतः कालतो व्याप्तिश्च नित्यत्वम्। एवं च तना कालतो व्याप्तेत्यर्थः। सम्पद्यत इति भावः। सहितेत्यध्याहारः। दैत्यविमुखीकरणोपायसहितेत्यर्थः। यद्वा योगेन सहिता। योगाभ्यासप्राप्तेति यावदित्यर्थः। हि यस्मात्तस्मान्न हि वः शत्रुर्विविद इति सम्बन्धो द्रष्टव्यः॥ ४॥

प्रवेपयंति पर्वतान्। देवास इत्यस्यार्थो देवा इति। भाष्ये प्रवेपयन्तीत्यस्य विष्णुपक्षे सम्प्रेरयतीत्यर्थः उक्तः। वनस्पतीनित्यस्यार्थो उक्तो भजनीयपतीनित्यादि। प्रो आरत इत्यस्यार्थः प्राप्ता इति द्रष्टव्यम्। सहैवेति। युगपदेव यदा प्रजा उत्पन्नास्तदैव न तु कालविलम्बेनेत्यर्थः। सञ्जताः

(पदार्थप्रकाशिका)

सम्बद्धाः अतिष्ठंत युगपदिति शेषः । मत्ता इवेत्युक्तं मत्तसादृश्यं विवृणोति स्वप्रयोजनेति । शेषः इति । प्रेरयन्ति । शुभाशुभाकृतौ नरानित्येतावान् दुर्मदा इवेत्युक्त्यनन्तरं शेष इत्यर्थः ॥ ५, १८ ॥

## पदार्थदीपिका

परावतो दूरत इति । आरे परावत इति दूरनामसु पाठादिति भावः । क्षिपथेति । असु क्षेपणे इति स्मरणादिति भावः । इत्थेति । हेतौ च छन्दसीति इदंशब्दात् प्रकारवचने थाप्रत्ययः । यदि च तत्रेदं शब्दस्य नानुवृत्तिः तर्हि कथमुप्रत्ययान्तादिदंशब्दादुत्तरस्याविभक्तेर्व्यत्ययेन सुपां सुलुगिति डादेश इति ज्ञेयम् । क्रत्वा क्रतुनेति । जसादिषु छन्दसि वा वचनमिति टाभाव विकल्पितत्वादिति भावः॥ १ ॥

संपदादित्वादिति । भावे क्विबित्यर्थः । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वमिति ज्ञेयम् । प्रतिष्कम्भ इति । स्कम्भः सौत्रो धातुः । संपदादिलक्षणो भावे क्विप् । अनिदितामिति नलोप इति भावः । वीळु इति । सुपां सुलुगिति विभक्तेर्लुगिति भावः । ईयसुनिति । उगितश्चेति ङीबिति हृदयम् । मायिन इति । मायाशब्दस्य व्रीह्यादिषु पाठात् व्रीह्यादिभ्यश्चेति मत्वर्थे इनिरिति भावः । पराहृथ विनाशयथेति । हनहिंसागत्योः अनुदात्तोपदेशेत्यादिनानुनासिकलोप इति भावः ॥ २ ॥

वियाथनेति । तप्तनप्तनथनाश्चेति थनादेश इति द्रष्टव्यम् ॥ ३ ॥

सुखेनेति । रमणं रि इति व्युत्पत्त्या रिशब्दस्य सुखपरत्वाद्भाष्ये सुखेनेत्युक्तमित्यवधेयम् । आधृषे इति । ञि धृषा प्रागल्भ्ये इत्यस्मात्सम्पदादिलक्षणो भावे क्विबित्यर्थः ॥ ४ ॥

वेपयन्तीति । वेपृ कम्पने । हेतुमण्णिच् । विविञ्चन्तीति । विचिर् पृथग्भावे । रुधादित्वात् श्नम् । श्नसोरल्लोप इत्यकारलोपः । आरतेति । ऋ गतौ । लङि मध्यमपुरुषबहुवचने बहुलं छन्दसीति शपो लुगभावः । आडजादीनामित्याडागमः । आटश्चेति वृद्धिरिति भावः । अभ्रे छेद्यमिति शेष इत्येव पाठो युक्तः ॥ ५, १८ ॥

## टीकाविवृतिः

प्रयत् ॥ एतदपीति ॥ प्रयद्दशप्रागाथं त्वित्यनुक्रमणिकोक्तेरिति भावः । अनुक्रमणिकार्थस्तु प्रयदित्थेति सूक्तं दशसंख्याकं प्रगाथाछन्दस्कम् । तत्र विषमा ऋचो बृहतीछन्दस्काः समास्तु सतोबृहत्य इति ज्ञेयम् । तुशब्दादुत्तरसूक्तं च प्रागाथं ज्ञेयम् । कण्व एव ऋषिः । पूर्वत्र हिशब्दादिदमपि मारुतमिति भावः ॥ परावतो दूरत इति ॥ आरे परावत इति दूरनामसु पाठादिति भावः । तस्य तात्पर्यं हरेःस्थानादिति । इयं पञ्चमी ल्यब्लोपनिमित्तेति भावेनाह ॥ स्वलोके

(टीकाविवृतिः)

स्थित्वैवेति ।। स्थित्वेति पदं प्रस्थायेत्यस्योपलक्षणं बोध्यम् ।। अस्यथेति ।। असु क्षेपे इति धातोर्लेडिति भावः । भाष्ये वक्ष्यमाणं संप्रदायादिति संबध्यते । ते न हेमरुतः यूयं सत्संप्रदायागतमपि नीचस्थितं ज्ञानमात्मज्ञानापेक्षयाल्पं कुरुथेति भावो बोध्यः । शोचिर्नेत्यनेन दृष्टान्तेन विष्णोरेव प्रकाशनिरासकत्वमप्युच्यते इति प्रतीतिनिरासायाह ।। एतदेव स्पष्टयतीति ।। एवेति मुख्यार्थतामिति ।। विष्णोरिति शेषः । मुख्यार्थतां असंकुचितवृत्त्यैतन्मन्त्रप्रतिपाद्यताम् ।। यदित्थेति ।। इदंशब्दात्प्रकारार्थे इदमः स्थमुरित्यपवादे थाहेतौ च छन्दसीति थाप्रत्यये एतैतौ रथोरितीदादेशे इत्थेति रूपमिति भावः ।। क्रत्वा क्रतुनेति ।। छान्दसत्वादाङोनास्त्रियामिति तृतीयाया नादेशाभावे यणादेश इति भावः ।। धूनुथेतीति ।। धूञ् कंपने इति धातोःकंपयथेत्यर्थः ।। १ ।।

स्थिरावः ।। संपदादित्वादिति ।। चुद नुद प्रेरणे इत्यतो भावे इति शेषः । उपसर्गाद्बहुलमिति बहुलग्रहणान्नुदे इत्यस्य णः । परशब्दस्य निपातस्य चेति दीर्घ इति भावः ।। अपनोदायेति ।। निराकरणायेत्यर्थः ।। प्रतिष्कभे इति ।। ष्टभि स्कभि प्रतिबन्धे इत्यतःप्रतिपूर्वाद्भावे संपदादित्वात्किबिति भावः । वीळुशब्दस्य बलनामसु पाठमाश्रित्याह ।। दृढान्येवेति ।। हेतुहेतुमद्भाव इति ।। स्थिरशब्दवाच्यदीर्घकालत्वे वीळु शब्दवाच्यदृढत्वं हेतुरित्यर्थः ।। तविषी तेजो बलं वेति ।। तेजःपर्यायमहर्नामसु पाठाच्चेति भावः ।। पनतेःस्तुत्यर्थादिति ।। पणव्यवहारे स्तुतौ चेत्यतःपनचेत्यत्र व्यवहारे स्तुतौ चेत्यनुवृत्तेःपनतेः स्तुत्यर्थत्वमिति भावः । उणादयो बहुलमित्युक्तेःकर्मण्यौणादिक ईयसुन्निति भावः । विश्वकोशे माया दंभेकृपायां चेति दंमस्तु कैतवे कल्के इति चोक्तेश्छद्मार्थकमायाशब्दाद्व्रीह्या- दित्वादिनिरिति भावेनाह ।। छद्मिनामिति ।। मर्त्यस्येति जात्येकवचनमिति भावः । मरुन्माहात्म्यकथनसमयेदैत्यादीनां बलतेजोनिषेधोऽसङ्गत इत्यतोभिप्रायमाह ।। अतोस्मत्तपोविघ्नानिति ।। २ ।।

पराह ।। दिशां पर्वतपृथिवीसंबन्धित्वं कथमित्यतो दिक् शब्दं व्याचष्टे ।। दिशःपर्यन्तानिति ।। भागानित्यर्थः । अस्याभिप्रायमाह ।। युष्माकमिति ।। कर्मणीनिति ।। गमेरिनिरित्युक्त इनिर्बहुलोक्तेर्वनतेरपीति भावः । विष्णुपक्षे पृथिव्याःपर्वतानां व्याशा इत्यस्य कोर्थ इत्यत आह ।। पृथिवीपर्वत शब्दौ त्विति ।। मही द्यौः पृथिवी चनेति ऋग्व्याख्याने श्रीश्च भूश्चेति भाष्येण पृथिवीशब्दःभूपरत्वेन व्याख्यातः । यईंखयंति पर्वतानित्यत्र पुरुषान्प्रकृतिं वापि पर्ववन्तोहि जन्मनेति भाष्येण पर्वत शब्दःजन्माख्यपर्ववत्त्वेनचेतनार्थको व्याख्यात इत्यर्थः । तथा च पृथिवीशब्दवाच्यभूदेव्याःपर्वत शब्दवाच्यसर्वजीवानां चाशा अपेक्षाः वियाथन प्राप्नुथेति ऋग्योजना ज्ञेया । छत्रिन्यायेन उभौ प्रागेव व्याख्यातावित्युक्तमिति बोध्यम् ।। ३ ।।

(टीकाविवृतिः)

नहिवः ।। तस्मादिति ।। तथा च रमेर्भावे औणादिके डिप्रत्यये रिःसुखम् । सुखनामसु पठितशशब्दे उपपदे अदेरसुन्प्रत्यये निष्पन्नशादसूशब्दस्य रिशब्देन तृतीयासमास इत्युक्तं भवति ।। द्यवि दिवीति ।। द्योशब्दस्य सप्तम्यां द्यवीति रूपमिति भावः ।। विविदे इति ।। विदॢ लाभे इत्यतःकर्मणि छन्दसि लुङ्लृङ्लिट इति सार्वकालिको लिडिति भावः ।। नुचि दद्यापीति ।। नुशब्दस्य क्षिप्रनामसु पाठात्क्षिप्रकालस्य वर्तमानकालत्वादिति भावः ।। आधृषे इति ।। आङ्पूर्वात् ञिधृषा प्रागल्भ्ये इत्यतो भावे किबिति भावः ।। कथमिति ।। तविषी किंदेशतो व्याप्ता किंवा कालत इत्यर्थः । एतदुत्तरत्वेन भाष्यं योजयति ।। नित्यतयेति ।। युजा योगेनेति ।। तत्तद्दैत्यनिबर्हणोपायेनेत्यर्थः ।। ४ ।।

प्रवेपयन्ति ।। प्रवेपयन्ति कंपयन्तीति ।। वेपृ कंपने इति धातोरिति भावः । विचिर्पृथग्भावे इत्यतः श्नम्विकरणाल्लटि झेरन्तादेशे श्नसोरल्लोप इत्यकारलोपे विंचन्तीति रूपमिति भावेनाह ।। पृथक्कुर्वन्तीति ।। विशःक्षितय इति मनुष्यनामसु पाठाद्विशेत्येकवचनस्य समूहवाचित्वाच्चाह ।। प्रजाभिरिति ।। आरत प्राप्ता इति ।। ऋगतिप्रापणयोरिति धातोर्लुङि व्यत्ययेनात्मनेपदे च्लेरङादेशे झस्यादादेशे च ऋदृशोङि गुण इति गुण आडागमे चारतेति रूपमिति भावः ।। शेष इति ।। श्रुतौ नरानित्यादिशेषोक्तिरिति भावः ।। ५ ।।

### ऋक्संहिता पदपाठसहिता (सू-३९, व-२)

(४७७) **उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः । आवो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ।। ६ ।।**

(प०) **उपोइति । रथेषु । पृषतीः । अयुग्ध्वम् । प्रष्टिः । वहति । रोहितः । आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयन्त । मानुषाः ।। ६ ।।**

(४७८) **आ वो मक्षू तनाय कं रुद्रा (द्रा) अवोवृणीमहे ।। गन्ता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ।। ७ ।।**

(प०) **आ । वः । मक्षु । तनाय । कम् । रुद्राः । (द्राः) । अवः । वृणीमहे । गन्त । नूनम् । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ।। ७ ।।**

(ऋक्संहिता पदपाठसहिता)

(४७९) युष्मेषितो मरुतो मर्त्येषित आयो नो अभ्व ईषते । वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः ॥ ८ ॥

(प०) युष्माऽईषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ ८ ॥

(४८०) असामि हि प्रयज्यवः कण्वं दद प्रचेतसः । असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः ॥ ९ ॥

(प०) असामि । हि । प्रऽयज्यवः । कण्वम् । दद । प्रचेतसः । असामिऽभिः । मरुतः । आ । नः । ऊतिऽभिः । गन्त । वृष्टिम् । न । विऽद्युतः ॥ ९ ॥

(४८१) असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः । ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ॥ १०, १९, ३९ ॥

(प०) असामि । ओजः । बिभृथ । सुऽदानवः । असामि । धूतयः । शवः । ऋषिऽद्विषे । मरुतः । परिऽमन्यवे । इषुम् । न । सृजत । द्विषम् ॥ १०, १९, ३९ ॥

ऋग्भाष्यम्

अयुङ्ध्वं पृषतीश्चैव रोहितं पृष्ठतो रथे । वो यामं प्रतिदार्ढ्याय शेषमश्रेत्पुनर्धरा । भीतिमापुर्मानुषाश्च ॥ ६ ॥ क्षिप्रं वः प्राप्तये सुखम् । रक्षां वृणीमहे युष्मद्गंताद्यापि च नोऽवसा । भीतियुक्ताय कण्वाय मह्यम् ॥ ७ ॥ युष्माभिरेव च । प्रेरितोऽथनियंतृत्वाद्युष्माकं मानुषेण वा । बाह्यदृष्ट्या त्वभूतीर्नो य इच्छति तमोऽजसा । बलेन च द्रावयत युष्मदीयोतिभिस्तथा ॥ ८,९ ॥ ओजो समं बिभृथच मखेज्याः सममुत्तमम् । सुदानशीलाः कण्वाय दत्ता सममभीप्सितम् । असमैर्नोप्यभिप्रायैर्गन्त वृष्टिं न विद्युतः ॥ १०, १९, ७ ॥

## ऋग्भाष्यटीका

उपो । अयुग्ध्वम् । हे मरुतो यूयं रथेषु पृषतीरुपायुग्ध्वम् उपयोजितवन्त एव । रोहितश्च प्रष्टिः पृष्ठं वहति । रोहितं रथे पृष्ठतो योजितवन्त इति यावत् । तदा वो युष्माकम् । यामाय यामं गमनं प्रति । तत्सोढुमिति यावत् । पृथिवीचित् धरापि । दार्ढ्यायाऽऽश्रोत् पुनरतिशयेनाऽऽश्रेत् शेषमिति शेषः । श्रिञ उकारो गुणो विकरणलोपश्च छान्दसः । आश्रयत् । नञा निर्दिष्टमनित्यमित्यतो न पादादाविति प्रतिषेधो न भवति । किञ्च । मानुषा मनुष्याश्चाबीभयन्त अबिभयुः भीतिमापुः ॥ ६ ॥

आवः । क्षिप्रम् । हे रुद्राः मरुतो वयम् । वो युष्माकं सकाशात् । कं सुखं सुखस्य । तनाय तनोतिरत्र प्राप्त्यर्थः प्राप्तये । मक्षु क्षिप्रम् । युष्मद्युष्माकम् । अवो रक्षाम् । वृणीमहे प्रार्थयामहे । तस्माद्यथा पुरा बिभ्युषे भीतियुक्ताय कण्वाय । मह्यमिति यावत् । गतवन्तः । गत्यर्थकर्मणीति चतुर्थी । इत्था तथैव । नूनमद्यापि च । नोस्मान्प्रत्यवसा रक्षणेन । रक्षणं कुर्वन्त एव । गन्त आगच्छत ॥ ७ ॥

युष्मेषितः । युष्माभिः । हे मरुतो यो दुरात्मा युष्मेषितः युष्माकं सर्वस्य नियंतृत्वान्मुख्यो युष्माभिरेव चेषितः प्रेरितः । अथवा मर्त्येषितः बाह्यदृष्ट्या मर्त्येन मानुषेण राजादिना प्रेरितः सन् नोस्माकमभ्वः अभूशब्दोयं द्वितीयाबहुवचनान्तः । अभूतीरैश्वर्याभावमा ईषते सम्यगिच्छति । तं यूयं शवसा सुखेन । वियुयोत द्रावयत वियोजयत । ओजसा बलेन च वियुयोत । तथा युष्माकाभिरूतिभिर्युष्मदीयोतिभिर्वियुयोत । युयु वियोगे ॥ ८ ॥

ओज इत्यादिनोत्तरमृग्द्वयं सङ्कीर्णं व्याचष्टे । तत्रायं विवेकः । असामि हि । हे प्रयज्यवः यजतेः कर्मणि युः । प्रकर्षेणेज्याः मखेज्याः । प्रचेतसः प्रकृष्टचित्ता मरुतो यूयम् । कण्वं कण्वायासामि असममनुत्तमम् । अभीप्सितमिति शेषः । दद दत्त । असमशब्दः समाभावस्य वाचकः । उत्तमाभावस्तु कथं लभ्यत इत्यत उक्तम् । सममुत्तममिति । समशब्द उत्तमस्याप्युपलक्षक इत्यर्थः । किञ्च । असामिभिरसमैरूतिभिरभिप्रायैः । अस्मद्रक्षाविषयानुत्तमाभिप्रायवन्तो यूयम् । विद्युतो वृष्टिमिव । क्षिप्रं नोस्मानागन्तागच्छत ॥ ९ ॥

असाम्योजः । हे सुदानवः सुदानशीलाः । धूतयो रिपूणां कम्पका मरुतो यूयम् । असाम्यसममोजो बलं बिभृथ । असामि शवः सुखं च बिभृथ । अतःपरिमन्यवे प्राप्तकोपाय । ऋषिद्विषे दैत्याय । तं हन्तुम् । इषुं न शरमिव । प्रतिद्विषं सृजत । अत्र सुदानव इत्यादेर्देत्यत्र सम्बन्धयोग्यतेति ज्ञापनाय सङ्करेण व्याख्यातम् ॥ १०, १९, ७ ॥

## मन्त्रार्थमञ्जरी

(हे मरुतः) रथेषु पृषतीः। उपो अयुग्ध्वम्, उदयोजितवन्तः। रोहितः (च) प्रष्टिः, पृष्ठम्। वहति, रोहितं रथे पृष्ठतो योजितवन्त इति यावत्। तदा वः, युष्माकम्। यामाय, यामम्, गमनं प्रति, तत्सोढुमिति यावत्। पृथिवी चित्, धरापि। दार्ढ्याय आ अश्रोत्, पुनरतिशयेनाश्रे(श्रो)त्। (स्वाधारभूतं शेषम्) इति शेषः। श्रिञः उकारो गुणो विकरणलोपश्च च्छान्दसः, आश्रयत्। किं च, मानुषाः, मनुष्याः। (च)। अबीभयुः, भीतिमापुः॥ ६॥

(हे) रुद्रा (द्रा): (मरुतः) वयम् वः, युष्माकं सकाशात् कम्, सुखम्, सुखस्य। तनाय, तनोतिः अत्र प्राप्त्यर्थः प्राप्तये। मक्षु, क्षिप्रम्। (वः) युष्माकम्। अवः, रक्षाम्। आवृणीमहे, प्रार्थयामहे। तस्मात् यथा पुरा। बिभ्युषे, भीतियुक्ताय। कण्वाय, मह्यमिति यावत्। (गतवन्तः) 'गत्यर्थकर्मणि' इति चतुर्थी। इत्था, तथैव नूनम्, अद्यापि च। नः, अस्मान्प्रति। अवसा, रक्षणेन, रक्षणं कुर्वन्त एव। गन्त, आगच्छत, गमेः विकरणलोपेन च्छत्वाभावश्छान्दसः॥ ७॥

(हे) मरुतः। यः, दुरात्मा। युष्मेषितः, युष्माकं सर्वस्य नियन्तृत्वान्मुख्यतो युष्माभिरेव चेषितः प्रेरितः। अथ वा– मर्त्येषितः, बाह्यदृष्ट्या मर्त्येन मानुषेण राजादिनेषितः प्रेरितः सन्। नः, अस्माकम्। अभ्वः, अभूशब्दोऽयं द्वितीयाबहुवचनान्तः, अभूतीः, ऐश्वर्याभावान्। आ ईषते, सम्यगिच्छति। तम् (यूयम्) शवसा, सुखेन। वि युयोत, द्रावयत, वियोजनथ (त) ओजसा, बलेन। (च) वि (युयोत) तथा युष्माकाभिः ऊतिभिः, युष्मदीयोतिभिः। वि (युयोत) 'युयु वियोगे'॥ ८॥

(हे) प्रयज्यवः, यजतेः कर्मणि युच्, प्रकर्षेणेज्याः। प्रचेतसः, प्रकृष्टचित्ताः। मरुतः (यूयम्) कण्वम्, कण्वाय। असामि, असमम्, 'अनुत्तमम्' इत्युपलक्ष्यम्। (हि, एव) (अभीप्सितम्) इति शेषः। दद, दत्त। किं च, असामिभिः, असमैः। ऊतिभिः, अभिप्रायैः, अस्मद्रक्षाविषयानुत्तमाभि- प्रायवन्तो यूयम्। विद्युतः (वृष्टिम् न) वृष्टिमिव। क्षिप्रम्– नः, अस्मान्। आ गन्त, आगच्छत॥ ९॥

(हे) सुदानवः, सुष्ठु दानशीलाः। धूतयः, रिपूणां कम्पकाः। मरुतः (यूयम्) असामि, असमम्। ओजः, बलम्। बिभृथ। असामि। शवः, सुखम्। (च) (बिभृथ) अतः परिमन्यवे, परिगतकोपाय। ऋषिद्विषे, दैत्याय, तं हन्तुम्। इषुम् न, शरमिव। (द्विषम्) प्रतिद्विषम्। सृजत॥ १०॥ इति नवदशो वर्गः॥ १९॥ नवत्रिंशं सूक्तम्॥ ३९॥

## रूपावतारः

उपो रथेषु ।। श्रिञ(उ)ओकारो गुण इति । श्रिञ इकारस्यैकारे गुणे भवितव्ये ओकारो गुणः विकरणलोपः छान्दस इति भावः (अश्रोत्) । ननु वोयाममिति अयुक्तम् । 'अनुदात्तं सर्वमपादादौ' (८।१।१८) इत्यतः 'बहुवचनस्य वस्नसौ' (८।१।२१) इत्यत्र अपादादावित्यनुवृत्तेरित्यत आह नञा निर्दिष्टमिति ।। ६ ।।

आवः ।। ननु कण्वस्य गमनकर्मत्वात् द्वितीयया भाव्यमित्यत आह । गत्यर्थेति । गन्तेति । गमेर्लोटादेशथस्य तादेशे 'बहुलं छन्दसि' (२।४।७३) इति शपो लुकि 'इषु गमियमां छः' (७।३।७३) इति छत्वाभावे थादेशस्य तवादेशे तपः पित्वेन ङित्वाभावात् अनुनासिकलोपाभावे गन्तेति रूपम् ।। ७ ।।

युष्मेषितः ।। द्वितीयाबहुवचनान्ते(ने)ति । 'ओः सुपीति' (६।४।८३) यणादेशे अभ्व इति रूपम् ।। ८ ।।

असामिहि ।। ददेति । दद दान इत्यतो व्यत्ययेन परस्मैपदे मध्यमपुरुषैकवचने च ददेति रूपम् । दत्तेति । डुदाञ्दान इत्यस्येदं रूपम् । दाञो लोटः थकारस्य तादेशे शपः श्लौ द्वित्वे' 'श्नाभ्यस्तयोरातः' (६।४।११२) इति आकारलोपे 'खरि च' (८।४।५५) इति चर्त्वे अभ्यासह्रस्वत्वे च दत्तेति रूपं सिद्धं भवति ।। ९ ।।

असाम्योजः ।। परिगतकोपायेति । प्राप्तकोपायेत्यर्थः ।। १० ।। १९ ।। ७ ।।

## पदार्थप्रकाशिका

उपो रथेषु पृषतीरयुग्ध्वम् । वाहनानि । ये पृषतीमिदित्यत्र पृषत्यो वाहनं एषामिति भगवत्पादैर्व्याख्यातत्वादिति द्रष्टव्यम् । रोहितो मृगविशेषः । पृष्टिरित्यनूद्य तस्यार्थमाह पृष्ठं वहतीति । पृष्ठं रथपृष्ठभागम् । वह प्रापण इति धातोः वहति प्राप्तो भवति सम्बद्धो भवतीत्यर्थः । तत्तात्पर्यमाह रोहितमिति । तदेत्युक्ततेति लभ्यते । शेषमिति । स्वाधारभूतशेषदेवमित्यर्थः । ननु ऋचि अश्रोत् इति कथम् । भाष्ये चाश्रेदिति कथम् । उभयत्रापि श्रि श्रयणेऽस्माल्लङि तस्य परस्मैपदिनि तिप् इत्यादेशे इप्इत्यस्य लोपे लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमे अश्रित् इति स्थिते शब्विकरणेऽकारमात्रं विहाय शकारपकारयोर्लोपे अश्रि अत् इति जाते इकारस्य एकाररूपे गुणे तस्य एचोयवायाव इत्यनेनाचि परे अय् इत्यादेशे अश्रय् अत् अश्रयदित्येव वक्तव्यत्वादित्यत आह

(पदार्थप्रकाशिका)

श्रिञ उकार इत्यादि। श्रिञः श्रिश्रयण इति धातोरित्यर्थः। श्रिञ इकारस्य ओकाररूपो गुणः श्रुतौ द्रष्टव्यः। श्रुतौ भाष्ये च विकरणलोपो द्रष्टव्यः। तथाहि। श्रिधातोर्लङि तस्य तिपि अडागमे इकारस्य छांदसे ओकाररूपे गुणे जाते सति अश्रोदिति ऋचि रूपं भवति। अत्र शब्विकरणस्य अकारसहितस्य लोपः कार्यः छांदसत्वात्। अन्यथा अचि परे ओकारस्य अव् इत्यादेशे अश्रवदिति स्यात्। तस्य लोपे तु अचः परतोऽभावान्नावादेशप्रसक्तिरिति ध्येया। भाष्ये तु श्रिधातोरिकारस्य एकाररूपे गुणे विकरणलोपे पुरतोऽचोऽभावादयादेशाप्राप्तौ अश्रेदित्युक्तमिति द्रष्टव्यम्। नन्वत्र वो यामं प्रतीति कथम्। बहुवचनस्य वसौ। अनुदात्तं सर्वमापादादाविति पूर्वसूत्रादापादादावित्यनुवर्तते। तथा च युष्मदस्मदोः षष्ठीबहुवचनस्य वस्नस् इत्येतावादेशौ स्तः। अपादादौ युष्मदस्मदोः षष्ठीबहुवचनस्यैतावादेशौ स्त इति विहितत्वादत्र पादादावेव युष्मदो बहुवचनस्य वस् इत्यादेशमङ्गीकृत्य कथं वो यामं प्रतीत्युक्तमित्यत आह नञा निर्दिष्टमिति। इत्यतो वार्तिकात्। न पादादावितीति। यद्यपि सूत्रे अपादादावित्युक्तं अत अपादादावितीति वक्तव्यम्। तथाप्यर्थानुवादोऽयमिति ज्ञातव्यम्॥ ६॥

आ वो मक्षू तनाय कम्। रुद्राः ऋजो विद्रावकाः। धातूनामनेकार्थत्वादाह तनोतिरत्रेति। युष्माकं रक्षाम्। युष्माकं प्रकाशात् रक्षां युष्मत्कर्तृकां वो रक्षामित्यर्थः। ननु कण्वाय गतवन्त इति कथं चतुर्थी। कण्वं प्रति गतवन्त इति द्वितीयायाः प्रयोक्तव्यत्वादित्यत आह गत्यर्थेति। गत्यर्थ कर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीति सूत्रस्यायमर्थः। गत्यर्थानां धातूनां कर्मण्यध्ववर्जिते द्वितीयाचतुर्थ्यौ स्तः चेष्टायां गम्यमानायाम्। व्रजं व्रजेति। व्रजाय व्रजति कृष्णः। चेष्टायां किम्। मार्गं व्रजतीति। तथा चानेन सूत्रेण गत्यर्थकधातोर्यत्कर्म तस्मिन् चतुर्थ्या विधानात् प्रकृतेऽपि गतवन्त इति गत्यर्थकधातोः कर्मणि कण्वपदस्य चतुर्थी युक्तेत्यर्थः। तथैवेति। संसारभीतियुक्तमत्संरक्षणाय पूर्वकाले मां प्रति यथा भवद्भिरागतं तथैवेत्यर्थः। रक्षणेनेति। सहेति शेषः। तस्य तात्पर्यं रक्षणं कुर्वत एवेति॥ ७॥

युष्मेषितो मरुतो मर्त्येषितः। मुख्यत इति। ज्ञानिदृष्टचेत्यर्थः। बाह्यदृष्ट्या अमुख्यदृष्ट्या। द्वितीयाबहुवचनान्त इति। अभ्व इत्ययम् अभूः अभ्वौ अभ्वः अभ्वं अभ्वौ अभ्वः द्वितीयाबहुवचनान्त इत्यर्थः। सुखेन वियुयोतेत्यादि अस्मदैश्वर्याभावेच्छाजनितसुखरहितमकुरुतेत्यर्थः। ओजसेति। अस्मदैश्वर्याभावेच्छापादकबलरहितमकुरुतेत्यर्थः। ऊतिभिरिति। भवद्रक्ष्याभिरित्यर्थः। अस्मदैश्वर्याभावेच्छावन्तं भवद्रक्ष्याभिर्वियुक्तं अकुरुत तस्य संरक्षणं भवद्भिर्न कार्यमिति यावत्॥ ८॥

(पदार्थप्रकाशिका)

ऋग्द्वयं असमिहि असाम्योज इति ऋग्द्वयम्। सङ्कीर्णं यथा भवति तथा। सङ्कीर्णतयेत्यर्थः। असामि हि प्रयज्यवः। अत्र मखेज्याः सममुत्तमम्। कण्वाय दत्तासममभीप्सितम्। असमैर्नोप्यभिप्रायैर्गन्तवृष्टिं न विद्युत इत्येतावद्भाष्यं असामिहीत्येतदृग्व्याख्यानपरमित्याशयेन तदर्थमाह हे प्रयज्यव इत्यादिना। यजतेरिति। प्रोपपदात् यज् देवपूजेत्यादि धातोः कर्मणि युप्रत्यये प्रयज्युरिति प्रातिपदिकसिद्धिः। पश्चात्स्वाद्युत्पत्तौ प्रयज्यव इति भवतीति द्रष्टव्यम्। न केवलं समशब्दः समस्य वाचकः किं तूत्तमस्योपलक्षकोऽपीत्यपिशब्दसम्बन्धो द्रष्टव्यः। तृतीया प्रथमार्थ इत्याशयेनाह अस्मद्रक्षेत्यादि। विद्युतो वृष्टिमेवेति। वृष्टिमुद्दिश्य विद्युत इवेत्यन्वयः। अमोघा चोत्तरा विद्युदिति वचनात् वृष्टिमुद्दिश्य तां सूचयितुमिति यावत्। विद्युतो यथा आयन्ति एवं अस्मद्रक्षणाभिप्रायवन्तो अस्मद्रक्षणमुद्दिश्येति यावत् आगच्छतेत्यर्थः। क्षिप्रमित्याडोर्थः॥ ९॥

असाम्योजो बिभृथा सुदानवः। ओजोऽसमं बिभृथ च सुदानशीलाः इत्येतावद्भाष्यमसाम्योज इत्येतादृग्व्याख्यानपरमित्याशयेन तदर्थमाह हे सुदानव इत्यादि। सुदानशीलाः भक्ताभिलषितस्य सम्यक्दानस्वभाववन्त इत्यर्थः। बलं बिभृथेत्यादेरसमबलादिमन्त इत्यर्थः। परिगतकोपायेति। परितः प्राप्तकोपायेत्यर्थः। ऋषिद्विषे। ऋषेर्मम द्विषे। चतुर्थ्याः तात्पर्यमाह तं हन्तुमिति। शरमिवेति। यथा लोके द्वेषिणं हन्तुं बाणं सृजति तद्वदित्यर्थः। प्रतिद्विषं प्रतिस्पर्धिनं कञ्चिदन्यं सृजतेत्यर्थः। अस्मद्वैरी साक्षाद्भवद्भिर्वधायोग्यो आयातोऽतः प्रतिद्विषं सृष्ट्वा तद्द्वारा भवद्भिर्हन्तव्य इत्यभिप्रायः। ऋग्द्वयस्य संकीर्णतया व्याख्याने प्रयोजनं दर्शयति। अत्र सुदानव इत्यादेरिति। आदिपदेनासाम्याजो बिभृथेत्यस्य ग्रहणम्। ददेत्यत्रेति। यतः सुदानुत्वासमबलविशिष्टत्वगुणवन्तोऽतोऽसाम्यभीप्सितं ददेत्येवं उत्तरऋगुक्तसुदानत्वासामिबलयोः पूर्वऋगुक्तासाम्यभीप्सितदाने हेतुत्वेन सम्बन्धयोग्यत्वमस्तीति ज्ञापनाय संकरेण भावप्रधानो निर्देशः। साङ्कर्येण। संकीर्णतयेति यावत्। व्याख्यानं कृतमित्यर्थः॥ १०, १९, ७ (३९)॥

## पदार्थदीपिका

ननु श्रिञ् सेवायामित्यस्य शब्विकरणत्वादाश्रयदित्येव वक्तव्ये श्रुतौ अश्रोदिति भाष्ये च अश्रेदिति कथमुक्तमित्यत आह। श्रिञ उकार इति। ततश्च श्रुतौ इकारस्योकारे श्रुतिनिष्पन्नमिति भावः। गुण इति। सार्वधातुकार्धधातुकयोरित्यनेनेति शेषः। विकरणेति। शब्विकरणस्येत्यर्थः। छान्दसमिति। बहुलं छन्दसीति स्मरणादिति भावः। अत्र विकरणलोपश्चेति चशब्दः न गुणस्य छान्दसत्वसमुच्चयार्थः। लक्षणप्राप्ततया छान्दसत्ववर्णनस्यायुक्तत्वात्। किन्तु लक्षणाप्राप्तस्य श्रिञ

(पदार्थदीपिका)

उत्वस्यैव छान्दसत्वाभिप्रायक इति द्रष्टव्यम्। ततश्च श्रुतौ श्रिञः छान्दसे उकारे जाते सार्वधातुके गुणे शब्विकरणस्य छान्दसे लोपेऽडागमे इतश्च लोप इतीकारलोपे अश्रोदिति रूपनिष्पत्तिः। भाष्ये श्रिञो गुणे सति छान्दसे विकरणलोपे च सति अश्रेदिति रूपसिद्धिरित्यभिप्रायः। वस्तुतस्तु श्रिय ओकारो गुण इत्येव पाठः। तथा च विकरणलोपश्चेति चशब्दःओकाररूपगुणसमुच्चयार्थ एव। ईकारस्थाने एकारस्यैव गुणस्य लक्षणप्राप्ततया ओकारस्याताद्दग्रूपत्वेन तच्छान्दसत्वस्यैव वर्णनीयत्वात्। ततश्च श्रुतौ ओकारो गुणः विकरणलोपश्चेति द्वयमपि छान्दसम्। अश्रेदिति भाष्ये तु विकरणलोप एव छान्दस इति विशेष इति द्रष्टव्यम्। आश्रयदिति। एतच्च आव इत्यत्रत्यस्याकारस्यात्र सम्बन्धमभिप्रेत्योक्तम्। अन्यथा अजाद्यन्तत्वाभावेन आडजादीनामि-त्याडागमाप्राप्त्या अश्रयदित्येव वक्तव्यत्वादिति भावः। ननु बहुवचनस्य वस्नसावित्यत्र पादादौ विद्यमानयोरेव युष्मदस्मदोर्वस्नस् विधानात् कथं भाष्ये वो यामायेति पादादिस्थस्य युष्मदो वसादेश इत्यतो अनुदात्तं सर्वमपादादावित्यतो अस्मिन् सूत्रेऽनुवृत्तस्यापदादावित्यस्य नञा निर्दिष्टत्वेनानित्यत्वात् क्वचित्पादादिस्थस्यापि युक्तो वसादेश इत्याशयेनाह। नञा निर्दिष्टमिति। आपादादाविति प्रतिषेधो न भवतीत्येव पाठः। न पादादाविति प्रतिषेधो न भवतीति पाठे न पादादावित्यर्थानुवाद इति ध्येयम्। अबीभयन्तेति। ञि भी भये। अस्मात् ण्यन्तात् लुङि भीस्म्योर्हेतुभय इत्यात्मनेपदम्। बिभेतेर्हेतुभय इत्यात्वस्य वैकल्पितत्वात्पक्षे भियो हेतुभये षुक् प्राप्नोति। स च न क्रियते। अनित्यमागमशासनमित्यागमानुशासनस्यानित्यत्वात्। णौ चङ्युपधा ह्रस्वतादिकमूह्यम्। सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् विधानात् अबीभयन्तेत्यस्याबिभयुरिति प्रतिपदं दत्तम्॥ ६॥

बिभ्युष इति। बिभेर्लिटः क्वसुः। वस्वेकाजाद्धसामिति नियमादिडभावः। चतुर्थ्यैकवचने वसोःसम्प्रसारणमिति सम्प्रसारणम्। परपूर्वत्वम्। शासिवसिघसीनां चेति षत्वं चेति ज्ञेयम्॥ ७॥

युष्माकाभिरिति। तस्मिन्नणि च युष्माकास्माकाविति युष्मच्छब्दस्य युष्माकादेशः। ङीपुवृध्दी छान्दसत्वान्न क्रियेते इति भावः। युयु वियोग इति। लोण्मध्यमबहुवचनस्य तप्तनप्तनथनाश्चेति तनादेशः। पित्वाद्गुण इति भावः। कर्मणि युरिति यजमनिश्रुधिदसिजनिभ्यो युरिति सूत्रेण कर्मणि युरित्यर्थः। दद दत्तेति॥ ८॥

दद दाने। अस्माल्लोण्मध्यमबहुवचनस्य तिङातिङो भवतीति लङात्मनेपदप्रथम-पुरुषबहुवचनादेशः। श्लौ द्विर्भावे सति श्नाभ्यस्तयोरात इत्याकारलोपः। लोपश्च आत्मनेपदेष्विति लोपः। अतो गुण इति परपूर्वत्वमिति भावः। गन्तेति। गमेर्लोण्मध्यमबहुवचनस्य तादेशः। छत्वाभावः छान्दस इति भावः॥ ९॥

(पदार्थदीपिका)

बिभृथेति। डु भृञ् धारणपोषणयोः। जुहोत्यादित्वात् श्लुः। भृञामिदित्यभ्यासस्येत्वमिति भावः। ऋषिद्विष इति। ऋषीन् द्वेष्टीति ऋषिद्विट्। सत्सूद्विषेत्यादिना क्विबिति भावः। द्विषमिति। क्विप् चेति क्विबिति भावः। सृजतेति। सृज विसर्गे। विकरणस्य ङित्वाद्गुणाभाव इति भावः। सम्बन्धयोग्यतेति। यस्मात् सुदानुत्वादिगुणविशिष्टाः अतोऽभीप्सितं ददेत्येवं हेतुत्वेन सुदानुत्वादीनामुपयोग इति ज्ञापनायेत्यर्थः॥ १०, १९, ३३॥

## टीकाविवृतिः

उपो रथेषु॥ पृषतीरिति॥ गोकर्णपृषतैणर्श्यरोहिताश्च मरोमृगा इत्यमरोक्तेःपृषतरोहित शब्दयोर्हरिणवाचकत्वात्पृषतीरितिशार्ङ्गरवादित्वाभ्युपगमेन ङीप्रत्ययेन हरिण्यो गृह्यन्ते इति भावः॥ प्रष्टिःपृष्ठमिति॥ पृष्ठशब्दे पृषोदरादित्वात्पृ इत्यतःपरं अकारागमटवर्गद्वितीयवर्णस्य प्रथमवर्ण आदेशः। तृतीयोतिशय इत्यकारस्थाने इकार इति भावः॥ आश्रेच्छेषमितीति॥ आङ्पूर्वाच्छ्रिञो लङि छान्दसे शपो लुकि गुणे आश्रेदिति भाष्यस्थं रूपमिति भावः। शेषं भूमेराधारभूतं शेषदेवमित्यर्थः। तर्हि आश्रयदिति वक्तव्ये आश्रोदिति श्रौतप्रयोगःकथमित्यत आह॥ श्रिञ उकार इति॥ द्वयं छान्दसं गुणःसार्वधातुकार्धधातुकयोरिति सिद्ध इति भावः। भाष्ये वो याममिति पादादौ व इति कथं प्रयुक्तम्। अनुदात्तं सर्वमपादादावित्यत अपादादावित्यनुवृत्तौ सत्यां बहुवचनस्य वस्नसाविति युष्मच्छब्दस्यवसादेशविधानादित्यत आह॥ नञा निर्दिष्टमनित्यमिति॥ यद्वृत्तान्नित्यमिति सूत्रेण विभक्त्यंतयच्छब्दयोगे तिङन्तस्य निघातप्रतिषेधे पुनर्निपातैर्यद्यदिहन्तेति सूत्रे यदादिपदयोगे निघातप्रतिषेधादियं परिभाषा ज्ञाप्यते। विस्तरस्तु मत्कृत शाब्दिककण्ठमणौ बोध्यः। अपादादावित्यस्यार्थतोनुवादो नपादादाविति। ञिभी भय इत्यतःश्लुविकरणाल्लङि व्यत्ययेनात्मनेपदे गुणे च छान्दसे ह्रस्वाभावे अबीभयन्तेति रूपमिति भावेनाह॥ अबीभयन्त अबिभयुरिति॥ ६॥

आवः॥ हे रुद्रा इति॥ श्रुतौ रुद्रा इत्यस्य पादादित्वादाष्टमिकामंत्रित निघाताभावात्षाष्ठि-कामन्त्रिताद्युदात्तत्वं ज्ञेयम्॥ कं सुखमिति॥ सुखनामसु पाठादिति भावः॥ मंक्षु क्षिप्रमिति॥ क्षिप्रनामसु पाठादिति भावः॥ युष्मद्युष्माकमिति॥ भाष्येऽपादानविवक्षया युष्मदिति पंचमी टीकायां तु कर्तृकर्मणोःकृतीति कर्तरि षष्ठीमाश्रित्य युष्माकमिति प्रतिपदं बोध्यम्॥ अवो रक्षामिति॥ अवतेरसुन्प्रत्यय इति भावः॥ बिभ्युषे इति॥ भीषधातोर्लिटःक्स्वादेशे द्वित्वादौ चतुर्थ्येकवचने वसोःसंप्रसारणमिति संप्रसारणमिति भावः। कण्वस्य गमनकर्मत्वात्कथं कण्वायेति चतुर्थीत्यत आह॥ गत्यर्थकर्मणीति॥ गत्यर्थकर्मणिद्वितीया चतुर्थ्यौ चेष्टायामनध्वनीति सूत्रेण कर्तृव्यापारे

(टीकाविवृतिः)

गम्यमाने अध्वभिन्नगत्यर्थधातुकर्मणि द्वितीया चतुर्थ्योर्विधानादिति भावः ।। गंतेति ।। गमेर्लोटि तस्थस्थेति थस्य तादेशे बहुलं छन्दसीति शपो लुका लुप्तत्वादिषुगमियमां छ इति छादेशाभाव इति भावः ।। ७ ।।

युष्मेषितः ।। इषुगतावित्यतोंतर्णीतण्यर्थात्क्तप्रत्ययेनिष्पन्नेषित शब्दस्य युष्मच्छब्देन समासे पृषोदरादीत्यनेन युष्मदःआकारान्तादेशे युष्मेषित इति रूपमिति भावेनाह ।। युष्माभिरेवेति ।। द्वितीयाबहुवचनान्त इति ।। अभूशब्दाच्छसि ओःसुपीति यणादेश इतिभावः ।। युष्माकाभिरिति ।। युष्माकमेता इत्यस्मिन्नर्थे युष्मदस्मदोरन्यतरस्यां खञ्चेत्यण्प्रत्ययेतस्मिन्नणि च युष्माकास्माकाविति युष्मच्छब्दस्य युष्माकादेशे छान्दसे आदिवृद्ध्यभावे ङीबभावे चैतद्रूपमिति भावः । युयोतेति कस्य धातोरूपमित्यतोर्थ सहितं धातुं पठति ।। युयु वियोगे इति ।। युयु इति धातोर्गुणो लटस्थस्य तादेशःशपो लुक्छान्दस इति भावः ।। ८ ।।

असामिहि ।। यजतेकर्मणि युरिति ।। यज्ञिमनिशुंधिदसिजनिभ्यो युजिति सूत्रेणेति शेषः ।। असामि असममिति ।। समशब्दस्य पृषोदरादित्वात्सामीति रूपमिति भावः । ददेत्यत्र दद दाने इत्यतो लोटि व्यत्ययेन परस्मैपदमेकवचनं चेतिभावेन धात्वंतरेण प्रतिपदमाह ।। दत्तेति ।। डुदाञ् दाने इत्यस्येदं रूपम् । ददतेस्तु दद्ध्वमिति ज्ञेयम् ।। ९ ।।

असाम्योजः ।। हे सुदानवः सुदानशीला इति ।। दाभाभ्यां नुरिति विहितोनुप्रत्ययो भानुशब्दात्तच्छीलार्थे दृष्टत्वात्साहचर्यादत्रापि तच्छीलार्थक इति भावः ।। बिभृथेति ।। डुभृञ्धारणपोषणयोरित्यतः श्लुविकरणाल्लण्मध्यमपुरुषबहुलवचनमिदम् । परिगतकोपाय प्राप्तकोपायेत्यर्थः ।। प्रतिद्विषमिति ।। दैत्यानां प्रतिकारिणं देवादिकमित्यर्थः । ऋग्द्वयस्य संकरेण व्याख्यानस्य प्रयोजनमाह ।। अत्रेति ।। असाम्योज इत्यस्यामृचि सुदानव इति विशेषणस्य शवो बिभृथेत्यस्य च प्रयोजनाभावाद्ददेत्यनेनान्वयज्ञापनायेत्यर्थः । यतो दानशीलाःयतश्च महासुखिनः अतो दत्तेति भावः ।। १० ।।

### ऋक्संहिता पदपाठसहिता (सू-४०, व-१)

**(४८२) उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ।। १ ।।**

**(प०) उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयन्तः । त्वा । ईमहे । उप । प्र । यन्तु । मरुतः । सुऽदानवः । इन्द्र । प्राशूः । भव । सचा ।। १ ।।**

(ऋक्संहिता पदपाठसहिता)

(४८३) त्वामिद्धि सहसस्पुत्र मर्त्यं उपब्रूते धने हिते । सुवीर्यं मरुत आस्वश्व्यं दधीत यो व आचके ॥ २ ॥

(प०) त्वाम् । इत् । हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते । सुऽवीर्यम् । मरुतः । आ । सुऽअश्व्यम् । दधीत । यः । वः । आऽचके ॥ २ ॥

(४८४) प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३ ॥

(प०) प्र । एतु ब्रह्मणः । पतिः । प्र । देवी । एतु । सूनृता । अच्छ । वीरम् । नर्यम् । पङ्क्तिऽराधसम् । देवाः । यज्ञम् । नयन्तु । नः ॥ ३ ॥

(४८५) यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः । तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥ ४ ॥

(प०) यः । वाघते । ददाति । सूनरम् । वसु । सः । धत्ते । अक्षिति । श्रवः । तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे । सुऽप्रतूर्तिम् । अनेहसम् ॥ ४ ॥

(४८६) प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५, २० ॥

(प०) प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् । यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि। चक्रिरे ॥ ५, २० ॥

## ऋग्भाष्यम्

देवयंतः पूजयन्तः स्तुवंतोतिकृताशनः । प्राशूः ॥ १ ॥ वायोः सुतेत्येव सहसस्पुत्र इत्यथ । तद्व्यंग्यत्वाद्धरिः प्रोक्तः शक्रस्तत्सुत एव च । युद्धं हितधनं प्रोक्तं निहितं धनमेव

(ऋग्भाष्यम्)

वा । स्वश्व्यं तु स्विंद्रियफलमाचकेऽपश्यदित्यपि ॥ २ ॥ पतिस्तु ब्रह्मणो विष्णुर्वा गीशत्वात्समीरणः । अग्रतो यात्वसावस्मत्कार्येष्वेवं सरस्वती । सूनृता वैष्णवीवाग्वायज्ञं वीरं नरं प्रति । नयन्तु देवाः सर्वेपि यत्पञ्चजनवर्धनः । पङ्क्तिराधा हरिस्तेन वीरो नर्यस्स एव च । देव गन्धर्वनृपितृदैत्याः पञ्चजनाभिधाः ॥ ३ ॥ वाघते स्तुवते विष्णुर्ददाति सूनरं वसु । सुष्ठु येन नरो भूयात्सूनरं ज्ञानमुच्यते । स धत्ते चाक्षयां कीर्तिमिळामन्नं यजामहे । सुवीर्यत्वात्सुवीरं तत्सुप्रतूर्तिः सुपेशकृत् । प्राणचेष्टा निमित्तत्वात्तदनेह इतीरितम् ॥ ४ ॥ स एव भगवान्विष्णुर्मन्त्रं तद्विषयं वदेत् । उक्थमुत्थापकत्वेन स एव भगवान्हरिः । तन्मन्त्रवाच्यादेवाश्च ॥ ५, २० ॥

## ऋग्भाष्यटीका

उत्तिष्ठ । अष्टर्चमिदं ब्रह्मणस्पत्यादिदेवताकं सूक्तम् । अत्र देवयन्तः प्राशूरिति पदद्वयं व्याख्याति । देवयन्त इति । दीव्यतेर्घञ् देवः पूजा स्तुतिर्वा । ततस्तत्करोतीति णिच् । अतिशयेन कृतमशनं भोजनमनेनेत्यतिकृतशनः प्राशूरुच्यते प्राश्नातीति । हे ब्रह्मणस्पते विष्णो वायो वा । अस्मान्प्रत्यागन्तुमुत्तिष्ठ । यतो देवयन्तो वयं त्वामीमहे शरणम् । सुदानवो मरुतश्चास्मानुपप्रयन्तु । हे इन्द्र त्वं च । सचा सुखेनैवास्मद्यज्ञस्य प्राशूर्भव ॥ १ ॥

त्वामित् । सहसस्पुत्रेत्येतत्सामान्यतो विशेषतश्च व्याचष्टे ॥ वायोरिति ॥ सहसस्पुत्रेत्यस्य वायोः सुतेत्येवार्थः । विवक्षितस्तु संधिर्भवतीति पुत्र इतीत्यसंहितो निर्देशः । अत्र व्युत्पादनापेक्षातीव नास्तीत्येवशब्दः । अथ तत्रापि हरिर्वायुना व्यंग्यत्वात्तत्पुत्रः प्रोक्तः । शक्रस्तु तत्सुत एव न तु तत्रोपचारबीजं चिन्त्यम् । धनेहित इत्यस्यार्थमाह ॥ युद्धमिति । प्रोक्तम् इत्यनेन निघण्टुसिद्धतामाह ॥ निहितं निधिरूपं धनमेव वाहितधनम् । स्वश्व्यमिति व्याचष्टे ॥ स्वश्व्यंत्विति । शोभना अश्वा इन्द्रियाणि स्वश्वाः तेषामिदं स्वश्व्यम् । तच्च ज्ञानादि । आचक इत्यस्यार्थमाह ॥ आचक इति । अनेकार्थत्वाद्धातूनां चक तृप्तावित्ययं दर्शनेपि वर्तते । अपीति क्रियाद्वयसमुच्चयसूचनार्थम् । हे सहसस्पुत्र । यो मर्त्यः त्वामेव हे मरुतो वो युष्मांश्च । हिते धने विषये । उपब्रूते स्तौति । आचके अपश्यच्च । ससुवीर्यं स्वश्व्यंच । आसम्यक् दधीत धृतवान्प्राप्तवान्हि ॥ २ ॥

प्रैतु ॥ अत्र ब्रह्मणस्पतिशब्दार्थं स्मारयति ॥ पतिस्त्विति । तस्माद् ब्रह्मणस्पतिरिति शेषः । इदानीमृचं व्याख्याति । अग्रत इति । असौ ब्रह्मणस्पतिः प्रैतु अस्मत्कार्येष्वग्रतो यातु मुख्यसाधको भवतु । एवं सूनृता सूनृतवागभिमानिनी देवी सरस्वती । वैष्णवी विष्णोः सम्बन्धिनी वा । वागाज्ञारूपा प्रैतु । अन्येपि सर्वे

(ऋग्भाष्यटीका)

देवा नोस्मदीयं यज्ञम्। वीरं नर्यं स्वार्थे प्रत्ययः। नरं पङ्क्तिराधसम् अच्छ प्रतिनयन्तु। कःपङ्क्तिराधाः। कथं चेत्यत आह ॥ यदिति। पङ्क्तिशब्दः पञ्चपर्यायः। पङ्क्तिविंशतीति निपातनात्। पङ्क्तिपञ्चविधान् जनान्राधयतीति पङ्क्तिराधाः। अन्तर्णीतण्यर्थाद्राध्यतेरसुन्। वर्धनं सर्जनादि। वीरो नर्यश्च किं स एवोतान्य इत्यपेक्षायामाह ॥ वीर इति। शब्दार्थौ तु स्फुटौ। पञ्चजनाः क इत्यत आह ॥ देवेति ॥ ३ ॥

यः। वाघते। यो ब्रह्मणस्पतिर्विष्णुः। वाघते स्तुवते भक्ताय। स्तुतिकर्मसु पाठात्। सूनरं वसु ददाति किं तत्सूनरं कथं चेत्यत आह ॥ सुष्विति। भूयाद्भवेत्। तज्ज्ञानम्। किंच यः स विष्णुर्वाघते। अक्षिति श्रवोऽक्षयां कीर्तिं च। धत्ते दत्ते। तस्मै विष्णवे। सुवीरां सुप्रतूर्तिमनेहसमिलामन्नं हविः। वयमायजामहे दद्मः। अन्ने सुवीरादिशब्दान्व्याख्याति। सुवीर्यत्वादिति। सुवीर्यहेतुत्वात्। शोभनं वीरं वीर्यं यस्मादिति सुपेशकृत् सुरूपकृत्। प्रतूर्तिशब्दो रूपपर्यायः। पेशो वेगो वा। इलापेक्षया भाष्ये स्त्रीलिङ्गम्। अनानामीहायस्मादिति समासान्तोसिच्॥ ४ ॥

प्रनूनम्। स एव। ब्रह्मणस्पतिः। स भगवान् विष्णुरेवोक्थं तद्विषयमुक्थविषयं मन्त्रम्। नूनं निश्चितं प्रवदेत्। कथं भूतं मन्त्रम्। इन्द्रो वरुणो मित्रो अर्यमा अन्ये च देवाः। यस्मिन्मन्त्रे ओकांसि गृहाणि। चक्रिरे यस्य वाच्याः। किमुक्थं कथं चेत्यत आह ॥ उक्थमिति। उत्थापकत्वेनोत्पादकत्वेन। सुपि स्थः। उदः कः। तर्ह्युत्तरार्धविरोध इत्यत आह ॥ तदिति। देवाश्च भगवद्विषयस्यापि मन्त्रस्यामुख्यतो वाच्या भवन्ति। अतो न विरोधः। सर्ववेदानां प्रवर्तको वाच्यश्च स एवेति ॥ ५, २० ॥

## मन्त्रार्थमञ्जरी

अथ 'उत्तिष्ठ' इत्याद्यष्टर्चं वर्गद्वयात्मकं ब्रह्मणस्पत्यादिदेवताकं (षट्त्रिंशसूक्तवत्) प्रागाथं चत्वारिंशं सूक्तम्। तत्र (आद्याया ब्रह्मणस्पतिर्मरुत इन्द्रश्च देवताः) (हे) ब्रह्मणः पते, विष्णो, वायो वा। (उत्) तिष्ठ। (देवयन्तः) दीव्यतेर्घञ्, देवः पूजा, स्तुतिर्वा, ततः 'तत्करोति' इति णिच्। (वयम्) (त्वा) त्वाम्। ईमहे (शरणम्) सुदानवः मरुतः (चास्मान्) उप प्र यन्तु। (हे) इन्द्र (त्वं च) सचा, सुखेन (एवास्मद्यज्ञस्य) प्राशूः भव, प्रकर्षेणाश्नातीति प्राशूरत्यन्तं कृतभोजनो भव, 'अश भोजने' ऊकारः ॥ १ ॥

(द्वितीयस्याः सहसस्पुत्रो मरुतश्च देवताः) (हे) सहसः पुत्रः, वायुनाभिव्यङ्ग्यत्वात्सहसो वायोः पुत्र विष्णो, वायुजत्वात्सहसः पुत्रेन्द्र। यः मर्त्यः त्वाम्। इत्, एव। (हे) मरुतः। वः, युष्मान्। (च) हिते धने। युद्धे) निहिते निधिरूपे धने वा, विषये। उपब्रूते, अतिस्तौति। आचके, अपश्यत्। 'चक तृप्तौ' इत्ययं धातुरत्र दर्शने वर्तते, अनेकार्थत्वाद्धातूनाम्। (सः) सुवीर्यम्।

(मन्त्रार्थमञ्जरी)

स्वश्व्यम्, शोभनाश्च तेऽश्वाश्च स्वश्वा इन्द्रियाणि, 'इन्द्रियाणि हयानाहुः' (का० उ० १।३।४) इति श्रुतेः, तेषामिदं स्वश्व्यं ज्ञानादि। (आ) दधीत, धृतवान्, प्राप्तवान्। हि, धाञः लङ्, अडभावः, तस्येडागमः ॥ २ ॥

तृतीयस्या ब्रह्मणस्पतिः सूनृता देवी देवाश्च देवताः) असौ ब्रह्मणः पतिः, विष्णुः, वायुर्वा। प्र एतु, अस्मत्कार्येष्वग्रतो यातु, मुख्यसाधको भवतु। सूनृता, सूनृतवागभिमानिनी। देवी, सरस्वती, यद्वा विष्णुसम्बन्धिनी वागाज्ञारूपा। प्र एतु। अन्येऽपि सर्वे देवाः। नः अस्मदीयम्। यज्ञम्। वीरम्। नर्यम्, स्वार्थे यत्प्रत्ययः, नरम्। पङ्क्तिराधसम्, पङ्क्तिशब्दः पञ्चन्पर्यायः, 'पङ्क्तिविंशति-त्रिंशच्चत्वारिंशत्' इत्यादि निपातनात्, पङ्क्तिं पञ्चविधान्देवगन्धर्व- नृपितृदैत्यरूपजनान्नाधयति सर्जनादिना वर्धयतीति पङ्क्तिराधाः, अन्तर्णीतण्यर्थाद्राध्यतेरसुन्, तं हरिम्। अच्छ, प्रति। नयन्तु ॥ ३ ॥

(चतुर्थ्यां पञ्चम्यां च ब्रह्मणस्पतिर्देवता) यः, ब्रह्मणः पतिर्विष्णुः। वाघते, स्तुवते, भक्ताय। सूनरम् वसु, सुष्ठु भवति नरो येन तत्सूनरं वसुज्ञानम्। ददाति इति। किं च, (यः) सः विष्णुः। (वाघते) अक्षिति श्रवः, अक्षयां कीर्तिम्। (च) धत्ते। तस्मै, विष्णवे। सुवीराम्। शोभनं वीरं वीर्यं यस्या भवति सा, तां सुवीरां सुवीर्यकृतिम्। सुप्रतूर्तिम्, प्रतूर्तिशब्दो रूपपर्यायः, सुष्ठु प्रतूर्तिर्यस्याः सा सुप्रतूर्तिः, तां सुरूपकृतिम्। अनेहसम्, अनानां प्राणानामिन्द्रियाणामीहा चेष्टा यस्याः सा, ताम्, समासान्तोऽसुन्। इळाम्, अन्नम्, हविः। (आ) यजामहे, दद्मः ॥ ४ ॥

ब्रह्मणः पतिः, स भगवान्विष्णुः। (एव) उक्थ्यम्, उत्थापकत्वादुक्थो विष्णुः, उद्पूर्वस्य स्थातेः (तिष्ठतेः) 'सुपि स्थः' इति कप्रत्ययः, 'आतो लोपः' उपपदान्त्यदकारस्य ककारः, तद्विषयमुक्थ्यम्। मन्त्रम्, नूनम्, निश्चितं यथा तथा। प्र वदेत्। कथंभूतं मन्त्रम्? इन्द्रः वरुणः मित्रः अर्यमा। अन्ये च देवाः। यस्मिन्, मन्त्रे। ओकांसि, गृहाणि। चक्रिरे, यस्य मन्त्रस्यामुख्यतो वाच्याः इत्यर्थः, सर्ववेदानां प्रवर्तको वाच्यश्च विष्णुरेव मुख्य इति भावः ॥ ५ ॥ इति विंशो वर्गः ॥ २० ॥

**रूपावतारः**

उत्तिष्ठ ॥ णिजिति। शतृप्रत्ययश्चेति शेषः। देवशब्दात् णिचि वकारस्थाकारलोपे शतृप्रत्यये शपि गुणे अयादेशे 'अतो गुणे' (६।१।९७) इति शपोऽकारस्य पररूपत्वे जसि 'उगिदचाम्....' (७।१।७०) इति नुमि देवयन्त इति रूपम् ॥ १ ॥

(रूपावतारः)

त्वमित् ।। आचक इति । आङ्पूर्वात् चकेर्लिटस्तकारस्य एसि छान्दसे द्वित्वाभावे आचक इति रूपम् ।। २ ।।

प्रैतु ।। निपातनादिति । पञ्चशब्दस्थपङ्क्तिशब्दस्य निपातनादित्यर्थः ।। ३ ।।

यो वाघते ।। ननु रूपशब्दपर्यायेण पेशशब्देन कथं प्रतूर्तिशब्दव्याख्यानमित्यत आह । प्रतूर्तिशब्द इति उभयोरपिशब्दयोः रूपशब्दपर्यायत्वाद्व्याख्यानमुपपन्नमिति भावः । प्रतूर्तिशब्दो वेगवाचीति प्रसिद्धम् । पेशशब्दोऽपि वेगवाचक इत्युपपन्नो व्याख्यानव्याख्येयभाव इत्याह । पेशो वेगो वेति ।। ४ ।।

प्रनूनम् ।। सुपि स्थ इति । उत्पूर्वात् स्थाधातोः कप्रत्यये 'उदःस्थास्तंभोःपूर्वस्य' (८।४।६१) इति सकारस्य पूर्वसवर्णे उदो दकारस्य ककारे उक्थमिति रूपम् ।। ५ ।। २० ।।

## पदार्थप्रकाशिका

उत्तिष्ठ ब्रह्मणस्पते । उत्तिष्ठाष्टौ ब्रह्मणस्पत्यमित्यनुक्रमणिकां हृदि निधायाह अष्टर्चमिदं ब्रह्मणस्पत्यादिदेवताकं सूक्तमिति । ब्रह्मणस्पत्यदेवताकमित्यनेनानुक्रमणिकागतं ब्रह्मणस्पत्यपदं व्याख्यातमिति ज्ञातव्यम् । आदिपदेन मरुदिन्द्रसमस्तदेवसरस्वतीग्रहणम् । अनेनानुक्रमणिकागतं ब्रह्मणस्पत्यमिति पदं मरुदादीनामुपलक्षकमित्युक्तं भवति । दीव्यतेर्घञिति । भाव इति शेषः । भावार्थमेव दर्शयति पूजा स्तुतिर्वेति । यद्यपि दिव् क्रीडाविजिगीषाद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्वित्यत्र पूजा न पठ्यते । तथापि धातूनामनेकार्थत्वात्पूजापि दिव्धात्वर्थ इति द्रष्टव्यम् । तथा च दिव् अस्माद्भावे घञ् प्रत्यये अकारमात्रं विहाय घकारञकारयोर्लोपे इकारस्यैकाररूपे गुणे च सति देव् अ देवेति रूपम् । अत्र यद्यपि दीव्यतेः पचाद्यचि गुणे च सति देव इति भवति तथापि नन्दिगृहीत्यादिना पचाद्यच् कर्तर्येव विहितो न भावे । प्रकृते च भावार्थ एवाभिप्रेत इति घञ्प्रत्यय एवानीतः । तत्करोति तदाचष्ट इति वार्तिकेण तत् पूजादिकं करोतीति कर्तृर्थे णिच्प्रत्यये इकारं विहाय णकारचकारयोर्लोपे देवत इति स्थिते पश्चात्कर्तरि शतृप्रत्यये शकारऋवर्णयोर्लोपे अत् इत्येतावन्मात्रे उर्वरिते सति आद्गुण इति पूर्वपरयोर्वकारस्थाकारेकारयोः एकाररूपे गुणे तस्य च अयादेशे देवय् अत् देवयदिति तकारान्तप्रातिपदिकसिद्धिः । पश्चात् नुमागमे तकारस्य लोपे स्वाद्युत्पत्तौ च देवयन्निति प्रथमैकवचनं भवति तद्बहुवचनं देवयन्त इति भवतीति द्रष्टव्यम् । तथा च देवं पूजां स्तुतिं वा कुर्वन्तीति देवयन्ति । देवयन्तीति देवयन्त इत्यर्थः । प्रेत्यस्यार्थो

(पदार्थप्रकाशिका)

अतिशयेनेति । अतिकृताशन इति । अतिशयेन भोक्तेत्यर्थः । अयमर्थः प्राशूरित्यनेन कथं लभ्यत इत्यतस्तद्दर्शयति प्राश्नातीति । प्र प्रकर्षेणातिशयेनाश्नातीति प्राशूरित्यर्थः । ईमहे । इण् गतौ । गताः स्म इत्यर्थः । अस्मान् । उप अस्मत्समीपम् । प्रयन्तु प्रकर्षेणायान्तु । प्राशूः कृताशनो भोक्ता भवेत्यर्थः ।। १ ।।

त्वामिद्धि सहसस्पुत्र मर्त्यः । सामान्यतो विशेषतश्चेति । वायोः सुतेति सामान्यतः । तद्व्यंग्यत्वादिति विशेषत इति द्रष्टव्यम् । ननु पुत्र इत्यथेति कथम् । पुत्र इत्यत्र परयोस्त्रकारस्थाकारेकारयोरेकाररूपे गुणे पुत्रेत्यथेति वक्तव्यत्वात् । तथा च ऋचि सम्बुध्यन्तपुत्रशब्दसद्भावेन तदानुगुण्याच्चेत्यत आह विवक्षितस्त्विति । असंहितो निर्देश इति । परः सन्निकर्षः संहितेति वचनादत्यन्तसन्निकर्षरहितो निर्देश इत्यर्थः । सन्ध्यभाव इति यावत् । एवकाराभिप्रायमाह अत्रेति । सहसस्पुत्रेत्यस्य वायोः सुतेत्यर्थ इत्यर्थः । अतीवेति । सहस्शब्दस्य वायुपरत्वस्याभिधानादिसिद्धत्वेन तावन्मात्रोपपादनेनैव चरितार्थतया प्रकृतिप्रत्ययाद्यपेक्षा नास्तीत्यर्थः । विशेषतश्चेत्युक्तं विशदयति अथेति । अथेत्यनूद्य तत्रापीति व्याख्यानम् । सहसस्पुत्रशब्दस्य सामान्यतो वायुसुताभिधायकत्वाद्वायुसुतानां च मरुच्छक्रादीनां बहूनां सत्वात्तत्रापि वायोः सुतानां मध्येऽपि हरिशक्रौ ग्राह्याविति विशेषतो व्याचष्ट इत्यर्थः । तत्र हरेः कथं वायुसुतत्वमित्यतो वायुना व्यङ्ग्यत्वादित्युक्तम् । यस्तद्वेद स पितुष्पिता सदिति वचनादिति भावः । पूर्वस्यां ऋचि शक्रस्यापि प्रस्तुतत्वादाह शक्रस्त्विति । तत्सुत एवेति । मुख्यत एवेत्यर्थः । तद्व्यावृत्तं दर्शयति नत्विति । यथा हरेर्वायोः सुतत्वमौपचारिकं तद्बीजं च तद्व्यङ्ग्यत्वं तथात्र नेत्यर्थः । निघण्टुसिद्धतामाहेति । क्षत्रियाणां प्रसिद्धधनापेक्षया हितं धनं युद्धमेव अतो हितधनशब्दो युद्धवाचीत्यर्थः । हितमित्यस्यार्थो निहितमिति । भूमौ निहितं निक्षिप्तं भूम्यन्तर्गतमित्यर्थः । यद्वान्तर्णिहितं आन्तरं धनं ज्ञानादिरूपमित्यर्थः । तेषामिदमिति । जन्यतया तत्सम्बन्धीत्यर्थः । तच्चेति । इन्द्रियसम्बन्धीत्यर्थः । ज्ञानादीति । निधिप्राप्तिसाधनीभूतं भगवद्विषयं वा ज्ञानादीत्यर्थः । क्रियाद्वयेति । उपब्रूत आचक इति क्रियाद्वयस्य परस्परसमुच्चयसूचनार्थमपीति पदमित्यर्थः ।

ऋगर्थमाह हे सहसस्पुत्रेत्यादिना । हे वायोः पुत्र हरे शक्र वेत्यर्थः । हिते धने विषय इति । युद्धाख्यधनविषये भूमौ निहितनिधिरूपधनविषये अन्तरज्ञानादिरूपधनविषये चेत्यर्थः । तदुदिश्येति यावत् । अपश्यत् । स्तोत्रादिना साक्षात्कृतवान् । हरिपक्षे नायं युक्तसाधनीभूतसाक्षात्कारः किं तु काम्यापरोक्षज्ञानम् । यथोक्तम् । न सामान्यदप्युपलब्धेः मृत्युवन्न

(पदार्थप्रकाशिका)

हि लोकापत्तिरिति सामान्यदर्शनाल्लोका मुक्तिर्योग्यआत्मदर्शनादिति चेति सम्प्रदायः। अत्रायं सम्प्रदायको विवेकः। हितधने यो क्षत्रियो युद्धाख्यधनविषयेत्येवमर्थमवैरिनिरसनसाधनीभूतबलं आदधीत प्राप्तवान् हि। यथा यो मर्त्यो मनुष्यः संसारे दारिद्र्येण खिन्नो हिते भूमौ निहिते निधिरूपधने विषये। भूम्यन्तर्गतनिधिरूपधनज्ञानं मे स्यात् अनन्तरं तं निधिं वयं गृह्णीष्म इत्येवमर्थं श्रीकारादिरूपत्वम् उपब्रूते आचके च स्वश्व्यं भूम्यन्तर्गतधनप्रदर्शनसाधनतया शोभनानि यानीन्द्रियाणि तज्जन्यतया तत्संबन्धि। सन्निधिविषयकम्। अत्रायं निधिरस्तीति ज्ञानं तत् आदधीत प्राप्तवान् हीति। तथा यो मर्त्यो नित्यानित्यवस्तुविवेकेन विरक्तो हितेऽन्तर्निहिते हरिविषयकज्ञानभक्त्याख्यमहानिधिरूपधनविषये तज्ज्ञानादिकं मे स्यादित्येवमर्थं उपब्रूते। आचके च सः स्वश्व्यं शोभनानि विषयमाकृष्टानि यानीन्द्रियाणि तज्जन्यतया तत्सम्बन्धि यज्ज्ञानादिकं तत् आदधीत प्राप्तवान् हीति। एवं विवेकेन योजने हिते धने विषये युद्धनिधिरूपधनद्वयोद्देशेन उपब्रूते आचके चेत्सुवीर्यं स्वश्व्यं च प्राप्तवानित्यस्य कर्णे पृष्टे कटिं चालयतीति न्यायविषयत्वापत्या असङ्गत्यापत्तेरित्यवधेयम्॥ २॥

प्रैतु ब्रह्मणस्पतिः। ननु प्रथमाध्याये सोमानं स्वरणं कृणुहि ब्रह्मणस्पत इत्यत्र सौम्यं शब्दं कृणु त्वं नो विष्णो वायो सुवाक्यत इति ब्रह्मणस्पतिशब्दस्य विष्णुवायुविषयतया भगवत्पादैर्व्याख्यातत्वादत्र पुनः कस्माद्व्याख्यानं क्रियते। अतः पौनरुक्त्यमित्यत आह अत्रेति। स्मारयतीत्युक्त्या उक्तस्यैव स्मरणार्थत्वान्न पुनरुक्तिदोषः इत्युक्तं भवति। भाष्ये ब्रह्मणश्चतुर्मुखस्य। अग्रतो यात्वित्यस्याभिप्रायमाह मुख्येति। यो हि मुख्यः स एव कार्येष्वग्रतो भवतीति लोके प्रसिद्धमिति द्रष्टव्यम्। आज्ञारूपा। इदं त्वया कर्तव्यमित्याज्ञारूपा। प्रैतु मुख्यसाधनभूता भवतु। प्रार्थनीयान्तरमाह अन्येपीति। विष्णुवाय्वतिरिक्ता इत्यर्थः। देवाः यज्ञम् वीरं नर्यं पंक्तिराधसं प्रति नयंत्वित्यनेककर्मकोयं धातुः। अजां ग्राममनयदितिवदिति द्रष्टव्यम्। स्वार्थ इति। तथा च नर एव नर्य इत्यर्थः।

कथमिति। पङ्क्तिराधस्शब्दवाच्यत्वं केन निमित्तेनेत्यर्थः। ननु तर्हि पञ्चराधसमिति स्यात्पङ्क्तिराधसमिति कथमित्यत आह पङ्क्तिशब्द इति। पङ्क्तीति। पङ्क्ति विंशतित्रिंशच्चत्वा-रिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतमिति सूत्रेण पञ्चेत्यर्थे पङ्क्तीति निपातत्वादित्यर्थः। पञ्चजनवर्धक इत्यर्थविग्रहप्रदर्शनपूर्वकं दर्शयति। पङ्क्तीति। पङ्क्तीत्यनूद्य पञ्चविधानिति व्याख्यानम्। राधतेरसुन्निति। द्वितीयांतात्पङ्क्तिशब्दोपपदात् राध्धातोरसुन्प्रत्यये उन् इत्यस्य लोपे पङ्क्तिराधस् इति

(पदार्थप्रकाशिका)

प्रातिपदिकसिद्धिः । पश्चात्स्वाद्युत्पत्तौ पङ्क्तिराधसमिति भवतीति द्रष्टव्यम् । यद्यपि राधसाधसंसिद्धाविति पठ्यते तथापि धातूनामनेकार्थत्वाद्वर्धनमपि राधधात्वर्थो भवतीति द्रष्टव्यम्। केचित्तु संसिद्धिर्वर्धनमित्यस्याहुः । वर्धनशब्दार्थमाह वर्धनमिति । स एवेति । यः पङ्क्तिराधस्-शब्दवाच्यो हरिः स एवोतान्य इत्यर्थः । वीरनर्यपदं पङ्क्तिराधशब्दवाच्यस्य हरेर्विशेषणं उत स्वातन्त्र्येण कस्यचिद्वाचकं तथा च द्वितीयपक्षे देवाः यज्ञं पङ्क्तिराधसं हरिं वीरं नर्यं अन्यं च प्रति नयंत्वित्यर्थोभिप्रेतः किमित्यपेक्षायां यः पङ्क्तिराधसशब्दवाच्यो हरिः स एव वीरोनर्यश्च ।। तथा च तस्यैवेदं विशेषणद्वयमित्याहेत्यर्थः । वीरनर्यशब्दयोः कोऽर्थ इत्यत आह शब्दार्थाविति । वीर आरब्धांतगामी रीङ्क्षय इति धातोर्न रीयत इति नर्यस्तमिति स्फुटार्थावित्यर्थः ।। ३ ।।

यो वाघते ददाति सूनरं वसु। स्तुतिकर्मस्विति। वाघतेः स्तुत्यर्थकधातुषु पाठादित्यर्थः। कथं केन निमित्तेनेत्यर्थः। स्यादित्यस्याशीर्लिङ्गत्वेनाशीरर्थस्य प्रकृतानुपयोगाद्विध्यर्थस्यैव तदुपयोगाल्लका-रव्यत्ययमङ्गीकृत्य व्याचष्टे। भूयात् भवेदिति। यच्छब्दस्य तच्छब्दसापेक्षत्वादाह तज्ज्ञानमिति। ननु य इति यच्छब्दस्य तस्मा इत्यनेन सम्बन्धात्स धत्त इत्यत्रत्यस्य तच्छब्दस्य वैयर्थ्यमित्याशंङ्कायां तच्छब्दो अनुवादरूप इत्यतो न वैयर्थ्यमित्याशयेनाह यः स इति। प्रसिद्ध इत्यर्थः। धत्त इति। दातुं धत्त इत्यर्थः। अन्यथा स्वयं धत्त इत्यर्थप्राप्त्या वाघत इति चतुर्थी अनुपपन्ना स्यादिति भावः। यद्वा धातूनामनेकार्थत्वाद्धत्त इत्यस्य ददातीत्यर्थो द्रष्टव्यः। अन्नं हविः अन्नरूपं हविः। दद्म इति। यज् देवपूजासंगतिकरणदानेष्विति धातोरित्यर्थः। यस्मादन्नादित्यर्थः। अन्नस्य वीर्यशब्दोदितबलहेतुत्वं प्रसिद्धमेवेति भावः। सुरूपकृदिति। अङ्गसौष्ठवकृदित्यर्थः। ननु सुपेशकृदित्यस्य सुरूपकृदिति व्याख्यानं पेयुक्तं शशब्दस्यरूपवाचित्वात्। प्रतूर्तिशब्दादयमर्थः कथं लभ्यते न हि प्रतूर्तिशब्दो रूपपर्यायः किं तु योगपर्याय एवेत्यतो रूपपर्यायोपि भवतीत्याह प्रतूर्तिशब्द इति। पेशो वेगो वेति। तथाचास्मिन् पक्षे प्रतूर्तिशब्दो वेगवाच्यो वेति प्रसिद्धत्वात् तस्येदं व्याख्यानं युक्तमित्यर्थः। एवं चान्नस्य सुरूपकारित्वस्य गमनादौ वेगकारित्वस्य च प्रसिद्धत्वात्सुप्रतूर्तिशब्दवाच्यत्वं युक्तमित्याशयः। नन्वन्नशब्दस्य नपुंसकत्वात् सुप्रतूर्तीति नपुंसकप्रयोगेन भाव्यम्। सुप्रतूर्तिरिति स्त्रीलिङ्गप्रयोगः कथमित्यत आह इलापेक्षयेति। अत्र त्रचि ऋग्गते लापदापेक्षयेत्यर्थः। आनानां प्राणानां इन्द्रियाणां ईहा चेष्टा प्रवृत्तिरिति यावत्। अन्ने भुक्ते तदुपोद्बलिताः प्राणाः चेष्टन्त इति प्रसिद्धमित्यर्थः। नन्वनानामीहा यस्मात्तदन्नमनेहमित्यकारान्तेन भाव्यम्। अनेह इतीरितमिति सकारान्तोक्तिः कथमित्यत आह समासान्तोऽसिचिति । ईहाशब्दस्यानशब्देन समस्तत्वात्समासान्तादनेहशब्दादसुप्रत्यये हकारस्थस्य आकारस्य यस्येति चेति लोपे अनेह् अस्

(पदार्थप्रकाशिका)

अनेहस् इति सकारान्तप्रातिपदिकसिद्धिः पश्चात्क्लीबत्वविवक्षायां प्रथमैकवचने सुप्रत्यये स्वमोर्नपुंसकादिति सोर्लोपे सस्य रुत्वे विसर्गे च सति अनेह इति सकारान्तनपुंसकलिङ्गैकवचनं सदन्नविशेषणं भवतीत्याशयः ॥ ४ ॥

प्र नूनं ब्रह्मणस्पतिः । उक्थमिति । ऋक्पदमनूद्य तद्विषयमिति भाष्यपदं संयोज्य उक्थविषयमिति तद्व्याख्यातम् । यस्य वाच्या इति । येन मन्त्रेण वाच्या इत्यर्थः । किमुत्त्थम् । उक्थशब्दवाचकम् । कथं केन प्रवृत्तिनिमित्तेन । सुपि स्थ इति । उपपदे तिष्ठतेर्धातोः कप्रत्ययः स्यादिति सूत्रार्थः । समस्थः विषमस्थः कूटस्थ इत्युदाहरणानि । उदः क इति । उदः उत् इत्यत्रस्थितस्य सकारस्य ककारादेश इत्यर्थः । ष्टागतिनिवृत्ताविति गतिनिवृत्यर्थकस्यापि तिष्ठतेर्धातोरनेकार्थत्वादुत्पत्त्यर्थकत्वं ज्ञातव्यम् । तथा च उदित्यस्य व्यत्ययेन अव्ययादाप्सुप इत्यव्ययात्परस्य सुपो लोपेन सुबन्तत्वानपायात्सुबन्ते उच्छब्दे उपपदे ष्टाधातोः कप्रत्यये धात्वादेःषः स इति षकारस्य सत्वे निमित्ताभावे नैमित्तकस्याप्यभाव इति न्यायेन षत्वनिमित्तकष्टुत्वाभावे उत् स्था इति जाते कित्वात् अतो लोप इटि चेति धात्वाकारलोपे उदस्थास्तंभोः पूर्वस्येति सूत्रेण उत् इत्यस्मात्परस्य स्थाधातोः पूर्वस्य सकारस्य पूर्वसवर्णे पूर्वेण त इत्यनेन सवर्णे तकारे जाते उत् तथेति जाते झरो झरि सवर्ण इति सूत्रेण हलस्तकरात्परस्य झरस्तकारस्य सवर्णे तकाररूपे रि परे लोपे उतत् इति जाते प्रत्ययाकारसम्बन्धे सति उत्थेति जाते तकारस्य ककारे सति उक्थेझति रूपं द्रष्टव्यम् । ननु यदि उक्थशब्दो विष्णुपरस्तर्हि उक्थ्यं विष्णुविषयं मन्त्रं वदेदित्यर्थः स्यात् स तु न युक्तः । उत्तरार्धे यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिर इतीन्द्रादीनां मन्त्रवाच्यत्वोक्तेस्तद्विरोधः स्यादित्याशङ्कते तर्हीति । तन्मन्त्रे तच्छब्दार्थमाह सर्ववेदानामिति । अनेन पूर्वार्धतात्पर्यमुक्तम् । वाच्यश्चेत्युत्तरार्धतात्पर्यवाच्यो मुख्यवाच्य इत्यर्थः । स एव भगवान् हरिरेव ॥ ५, २० ॥

## पदार्थदीपिका

दीव्यतेर्घञिति । अकर्तरि च कारके संज्ञायामिति भावेऽपि घञ्विधानात् अत्रापि देवनं देव इति भावे घञिति भावः । यथा च घञन्तत्वं तथोक्तमधस्तात् । तत इति । देवशब्दात्तत्करोति तदाचष्टे इत्यनेन करोत्यर्थे णिचि धातुसंज्ञायां लटि तस्य शत्रादेशे देवयच्छब्द निष्पत्तिरिति भावः ॥ १ ॥

ईमह इत्याद्यसकृदुक्तं दधीतेति । सीयुटः सकारलोप इति भावः ॥ २ ॥

प्रैत्विति एङि पररूपमिति पररूपे प्राप्ते एत्येधत्यूड्स्वति वृध्दिरिति भावः । स्वार्थे प्रत्यय इति । प्राक्रीतीय इति उणादिलक्षणो यत्प्रत्ययः स्वार्थ इत्यर्थः । पंक्तिविंशतीति । पंक्तिविंशत्त्रिंशचत्वारिंशदित्यनेन पञ्चेत्यस्मिन्नर्थे पंक्तीति निपातनादित्यर्थः ॥ ३ ॥

(पदार्थदीपिका)

भवेदिति। विध्यर्थस्यैव प्रकृते उपयोगो न तु आशीरूपार्थस्येति भावेन भूयादित्येतद्भवेदिति व्याख्यातमिति द्रष्टव्यम्। धत्ते दत्त इति। अत्र धत्त इत्येवोक्ते स्वयमेव धत्त इति प्रतीयेत तच्चानुपपन्नम्। तथा सति यो वाघत इति चतुर्थ्यनुपपत्तिप्रसंगादिति भावेन धत्त इत्येतत् दत्त इति व्याख्यातमिति भावः। पेशो वेगो वेति। यदा पेशशब्दो रूपार्थःतदा प्रतूर्तिशब्दोऽपि व्याख्यानुसारेण रूपपरो द्रष्टव्यः। ननु विशेष्यभूतस्यान्नस्य नपुंसकत्वात्तद्विशेषणतया सुप्रतूर्तीति भाष्ये वक्तव्यं तत्कथं सुप्रतूर्तिरिति स्त्रीलिंगप्रयोग इत्यत आह। इलापेक्षयेति। तथाच श्रौतविशेष्यस्य स्त्रीलिंगत्वात्तद्विशेषणत्वेन भाष्ये सुप्रतूर्तिरिति स्त्रीलिंगप्रयोग इति भावः ॥ ४ ॥

सुपिस्थ इति। सुपि उपपदे तिष्ठतेः कविधानात् अत्रोच्छब्दे उपपदे स्थाधातोः कप्रत्यये आतो लोप इटि चेत्याकारलोपे उदस्थास्तम्भोः पूर्वस्येति पूर्वसवर्णे उक्थशब्दनिष्पत्तिरिति भावः। ननु चैवं उत्थ इत्येव स्यात् तत्र कथमुक्थमिति तत्राह। उदः कः इति निरुक्तत्वादुदो दकारस्य ककार इति भावः। तर्हीति। यदि उक्थशब्दो विष्णुपरस्तर्हि उक्थं विष्णुविषयं मन्त्रं वदेदित्युक्तं स्यात्। न च तत्संभवति। तथा सति यस्मिन्निन्द्र इत्युत्तरार्धविरोधप्रसंगात्। तत्रेन्द्रादिदेवानामेव प्रतिपाद्यत्वप्रतिभासादिति भावः ॥ ५, २० ॥

## टीकाविवृतिः

उत्तिष्ठ ॥ अष्टर्चमिति ॥ उत्तिष्ठाष्टौ ब्राह्मणस्पत्यमित्यनुक्रमणिकोक्तेः। कण्व एव ऋषिः। पूर्वत्रतु शब्दात्प्रागाथमेव छन्द इति भावः। आदिशब्दादिन्द्रादयो वक्ष्यमाणा अनुक्रमणिकायामुपलक्षिता ग्राह्याः। भाष्योक्तं पूजयन्तःस्तुवन्त इति व्याख्यानं घटयति ॥ दीव्यतेर्घञिति ॥ भावे इति शेषः। दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमद-स्वप्नकान्तिगतिष्वित्यर्थनिर्देशे व्यवहारशब्देन पूजारूपव्यवहारग्रहणादिति भावः ॥ तत्करोतीति णिजिति ॥ ततःशतृप्रत्यय इति शेषः। देवं पूजां स्तुतिं वा कुर्वन्तीति देवयन्त इत्यर्थः। प्राशूशब्दस्यातिकृताशन इति भाष्यानुसारेण विग्रहमाह ॥ प्राश्नातीति ॥ कृषिचमितनिध-निसर्जिखर्जिभ्य ऊरित्युक्तऊप्रत्ययो बहुलोक्तेःप्रपूर्वादशभोजने इत्यतोपीति भावः। ब्रह्मणस्पते इत्यत्र चतुर्मुखस्वामित्वं ब्रह्मशब्दवाच्यवेदाभिमानिभारतीपतित्वं चाभिप्रेत्याह ॥ विष्णो वायो वेति ॥ ईमहे इति ॥ ईङ्गतावित्यतो दैवादिकाल्लटि छान्दसःश्यनोऽभाव इति भावः ॥ १ ॥

त्वामित् ॥ इत्येवार्थ इति ॥ सामान्यत इति शेषः। ननु श्रौतसहसस्पुत्रेति संबुद्ध्यंतस्यानुवादभाष्ये सहसःपुत्र इतीति संध्यभावप्रयोगःकथमित्यत आह ॥ विवक्षितस्त्विति ॥

(टीकाविवृतिः)

इति वैयाकरणव्यवहारादिति शेषः । ननु सहश्शब्दस्य वाय्वर्थकत्वं कथमित्यत आह ॥ अत्र व्युत्पादनेति ॥ सहःशब्दस्य बलनामसु पाठाद्वायुशब्दस्य बळित्थेत्यादौ बलज्ञानार्थकत्वेन व्याख्यातत्वादेकदेश विशिष्टलक्षणया वाय्वर्थकत्वस्य सिद्धत्वादित्याशयेनातीवेत्युक्तम् । विशेषतो व्याख्यानं दर्शयति ॥ अथ तत्रापीति ॥ सहस्पुत्रशब्दस्य वायुपुत्रार्थकत्वे हरिश्चेद्विवक्षितस्तदेति शेषः । वायुना तदुपदेशेनेति यावत् ॥ निघंटुसिद्धतामिति ॥ आणौ प्रधने इति संग्रामनामसु पाठादिति भावः ॥ अपीतीति ॥ एतदनन्तरं उपब्रूते आचके इतीति शेषः ॥ दधीतेति ॥ धाञः विध्यादिलिङि आत्मनेपदे तप्रत्यये शपःश्लौ द्वित्वादौ सीयुट्सुटोःलिङःसलोप इति सलोप इति सलोपे श्नाभ्यस्तेति धात्वाकारलोपः ॥ २ ॥

प्रैतु ॥ अच्छावदातना गिरेत्यत्र ब्रह्मणस्पतिशब्दस्य ब्रह्मणश्च पतिं विष्णुमितिभाष्येण व्याख्यातत्वात्पुनर्व्याख्या व्यर्थेत्यत आह ॥ स्मारयतीति ॥ सूनृतवागिति ॥ सुनृतं मङ्गले सत्ये प्रियवाचि च सूनृतमिति विश्वोक्तेःप्रियावागित्यर्थः ॥ स्वार्थे प्रत्यय इति ॥ तद्धिता इति वचनाद्यत्प्रत्यय इत्यर्थः । पङ्क्तिशब्दस्य कथं पञ्चपर्यायत्वमित्यत आह ॥ पङ्क्तिविंशतीति निपातनादिति ॥ पङ्क्तिविंशतित्रिंशदिति सूत्रेण पञ्चन् शब्दात्प्रकारार्थेति प्रत्ययटिलोपयोर्नि-पातनादित्यर्थः । पञ्चजनवर्धन इत्यत्र वर्धनशब्दार्थमाह ॥ वर्धनं सर्जनादीति ॥ आदिशब्दात् स्थित्यादि गृह्यते ॥ किं स एवोतान्य इति ॥ चशब्दाभावाद्वीरं नर्यमिति विशेषणविशेष्यभावेनान्वित मुत वीरनर्ययोर्मध्येकस्यचिद्विशेषणत्वे विशेष्यत्वेवा ज्ञापकाभावादुभयोर्भेदो वेत्यर्थः ॥ शब्दार्थौ त्विति ॥ वीरस्तु सुभटे श्रेष्ठे इति विश्वोक्तेर्वीरं श्रेष्ठं न रीयते क्षीयते इति नर्यं क्षयरहितं इति स्फुटावित्यर्थः ॥ ३ ॥

यो वाघते ॥ यो वाघते इत्यत्र यच्छब्दस्य सधत्ते इत्यत्र तच्छब्देनान्वयपूर्तेस्तस्मै इत्यनेनान्वयसिद्ध्यर्थं पुनर्यच्छब्दानुवृत्त्या योजयति ॥ यः स विष्णुरिति ॥ तेन यो विष्णुर्वाघते वसु ददाति स अक्षितिश्रवो धत्ते योक्षतिश्रवो धत्ते योक्षतिश्रवो धत्ते तस्मै इलामित्यन्वय उक्तो भवति ॥ इलामन्नमिति ॥ इरा इलेत्यन्ननामसु पाठादिति भावः । यज देवपूजासंगतिकरणदानेष्विति धात्वर्थं मनसि निधायाह ॥ यजामहे दद्म इति ॥ प्रपूर्वात्तुर्वी हिंसायामित्यतः क्तिन्प्रत्यये लोपोव्योर्वलीति वलोपे र्वोरुपधाया इति दीर्घे निष्पन्नप्रतूर्तिशब्दस्य रूपनामसु पठितपेशार्थकत्वं कथं भाष्ये उक्तमित्यत आह ॥ प्रतूर्तिशब्द इति ॥ धातूनामनेकार्थत्वादिति शेषः । तूरीगतित्वरणहिंसनयो-रितिधातोर्वा क्तिन्प्रत्यय इति भावेनाह ॥ पेशो वेगो वेति ॥ अस्मिन्पक्षे भाष्योक्तपिश अवयवे इत्यस्याप्यनेकार्थत्वात् भावे घञि निष्पन्नपेशशब्दो वेगार्थक इति भावः । ननु सुप्रतूर्तिरिति भाष्ये

(टीकाविवृतिः)

स्त्रीलिङ्गप्रयोगःकथम् । अन्नविशेषणत्वात्सुवीरमित्यादिवन्नपुंसकत्वेनैव भाव्यमित्यत आह ॥ इलापेक्षयेति ॥ श्रौतेलापेक्षयेत्यर्थः ॥ अनानामिति ॥ प्राणानामिन्द्रियाणामिति यावत् ॥ समासान्तोसिजिति ॥ नित्यमसिच्प्रजामेधयोरित्यत्र नित्यमसिजिति योगविभागादिति शेषः ॥ ४ ॥

प्रनूनम् ॥ उक्थविषयमिति ॥ उक्थे भवमित्यर्थे दिगादित्वाद्यत्प्रत्यय इति भावः ॥ गृहाणीति ॥ गृहाः पुंसि च भूम्न्येवेत्यमरकोशे चकारान्नपुंसकत्वोक्तेरिदं साधु ॥ सुपिस्थ इति ॥ इति सूत्रेण सुप्युपपदे स्थाधातोःकप्रत्यय विधानादत्रापि उच्छब्दे उपपदे स्थाधातोःकप्रत्यय इति भावः ॥ उदःक इति ॥ उदःस्थास्तंभोःपूर्वस्येत्यनेन स्थेत्यत्रत्यसकारस्य थकारादेशे उपपदोच्छब्दान्तस्य ककारादेश इत्यर्थः । भाष्याशयमाह ॥ सर्ववेदानामिति ॥ वाच्यश्च मुख्य इति शेषः ॥ ५ ॥

ऋक्संहिता पदपाठसहिता (सू-४०, व-२)

(४८७) तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् । इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥ ६ ॥

(प०) तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः । अनेहसम् । इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ ६ ॥

(४८८) को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम् । प्रप्रदाश्वान्पस्त्याभिरस्थितान्तर्वावत्क्षयं दधे ॥ ७ ॥

(प०) कः । देवऽयन्तम् । अश्नवत् । जनम् । कः । वृक्तऽबर्हिषम् । प्रऽप्र । दाश्वान् । पस्त्याभिः । अस्थित । अन्तःऽवावत् । क्षयम् । दधे ॥ ७ ॥

(४८९) उप क्षत्रं पृञ्चीत हन्तिराजभिर्भये चित्सुक्षितिं दधे ॥ नास्य वर्ता नतरुता महाधने नार्भे अस्ति वज्रिणः ॥ ८, २१, ४ ॥

(प०) उप । क्षत्रम् । पृञ्चीत । हन्ति । राजऽभिः । भये । चित् । सुऽक्षितिम् । दधे । न । अस्य । वर्ता । न । तरुता । महाऽधने । न अर्भे । अस्ति । वज्रिणः ॥ ८, २१, ४० ॥

## ऋग्भाष्यम्

यद्वाच्यादेवतास्तुताः । तमेव मन्त्रं वोचेम ज्ञानार्थं सुखकारणम् । इमां वाचं स्वीकुरुत सकाशाद्वोखिलं शुभम् । अश्नवानि ॥ ६ ॥ अतिदौर्लभ्याद्देवभक्तं क आप्नुयात् । यजमानं वानुगच्छेत्कः सम्यक् स्तृतबर्हिषम् । तत्र तत्र प्रस्थितोऽसौ यजमानः सुखैः स्वयम् । स्वेष्टस्थानेषु चांतर्वा विष्णुरंतर्गतो यतः । तद्वत्त्वेन क्षयं स्थानं प्राप्नोति ज्ञानतो यजन् ॥ ७ ॥ उपपृक्तः क्षत्रियैः स आवेशेन जनार्दनः । हन्ति शत्रूंश्च तैर्देवो भयेच स्वाश्रयं ददौ । वर्ताभिगन्ता तरुता जेता चास्य नहि क्वचित् । युद्धं महाधनं त्वर्भं प्रसिद्धं धनमेवहि ॥ ८, २१, ८ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं श्रीमदृग्भाष्यं सम्पूर्णम् ॥

## ऋग्भाष्यटीका

तमित् । यद्वाच्याः । हे देवाः वयम् इन्द्राद्यास्ता देवता यस्य मन्त्रस्य वाच्या उक्तास्तमित् तमेव शंभुवं सुखकारणम् । अनेहसमिन्द्रियप्रवृत्तिहेतुं मन्त्रम् । विदथेषु विदेरथक्प्रत्ययः । ज्ञानेषु ज्ञानार्थम् । वोचेम जपामहे । नरो युष्मन्मन्त्र जप्तारो वयमितीमां चास्मद्वाचं प्रतिहर्यथ स्वीकुरुत । सत्यतयेति शेषः । तेन च वः सकाशाद्युष्मत्प्रसादाद्विश्वा विश्वानि । इत् एव । वामा वामानि भद्राणि । अखिलं शुभमश्नवदश्नवान्यहम् ॥ ६ ॥

कः अतिदौर्लभ्यात् । हे देवा देवयन्तं देवान्याति भजत इति देवयन् तम् । देवभक्तं युष्मद्भक्तं जनम् । कोश्नवत् अश्नुवीत आप्नुयात् । किंच । युष्मानुद्दिश्य वृक्तबर्हिषम् । सम्यक् ज्ञानादिपूर्वम् । स्तृतबर्हिषं यजमानं वा । कोन्वश्नवद्गच्छेत् । कुतो देवभक्तयजमानावप्राप्यौ । अतिदौर्लभ्यात् । न केवलं दुर्लभः । किंतु । असौ दाश्वान्यजमानः । स्वयं परानपेक्षया । पस्त्याभिः सुखैर्युक्त एव । प्रप्रास्थित प्रास्थित । वीप्सायां द्विर्वचनम् । तत्र तत्र स्वेष्टस्थानेष्वेव प्रकर्षेणास्थितो भवति । किंच स दाश्वान् ज्ञानतोयजन्नंतर्वावत्क्षयम् । अन्तर्वा विष्णुः । कुतः यतः सर्वस्यान्तर्गतः । वातेर्विच् । तद्वत्वेन तत्सादृश्येन । मतुब्वाऽयम् । तत्स्वामिकत्वेन क्षयं स्थानम् । असमर्थसमासोयम् । दधे धत्ते प्राप्नोति । सर्वव्यापी भवति ॥ ७ ॥

उपक्षत्रम् । उपपृक्तः । स इन्द्रो जनार्दनः । क्षत्रमुपपृंचीत । क्षत्रियैर्मन्वादिभिरुपपृक्तो भवति । कथम् । अरिसैन्य आविष्टश्चासौ । देवस्तै राजभिः शत्रून्हन्ति । भक्तानां भये च प्राप्ते । सुक्षितिं स्वाश्रयं शोभनमाश्रयं भयनिवारणम् । दधे ददौ ददाति । किं चास्य वज्रिणो वर्ता अभिगन्ता प्रतियोद्धा ।

क्वचिन्नास्ति हि । तरुता जेता वा नास्ति । योऽभिवर्तते स वर्ता । यस्तु तरति अतिक्रामति स तर्ता । कुत्र । महाधने चार्भे च नास्ति । किं तन्महाधनमर्भं चेत्यत आह ॥ युद्धमिति । प्रधनशब्दपर्यायो हि महाधनशब्दः । अर्भशब्दोऽल्पवाची । क्षत्रियाणां प्रसिद्धधनं युद्धापेक्षयाऽल्पधनमेवेति हेरर्थः । यद्वानेन मार्गेणोत्तरस्यापि मन्त्रजातस्य व्याख्यानं सिद्धमेवात उपरम्यत इति हिशब्देनाचष्टे भगवान्मुनिः ॥ ८, २१, ८ ॥

देवताः कञ्चुकायन्ते वेदो बन्दिजनायते । यस्य तस्मिन्न मानाथे सुदृढा प्रीतिरस्तु मे ॥ १ ॥
ये भवंति जनाः सन्तः प्रज्ञासौजन्यशालिनः । तोषंते मत्कृतौ यान्ति किमन्यैः पशुसन्निभैः ॥ २ ॥
शब्दानां साधनं सम्यक् तत्प्रयोजनकीर्तनम् । नाकार्षं विस्तरभयादिह तत्क्षम्यतां बुधैः ॥ ३ ॥

इति श्रीमदानन्दतीर्थ भगवत्पादविरचितस्य श्रीमदृग्भाष्यस्य टीका
जयतीर्थभिक्षुविरचिता समाप्ता । समाप्तोयं तृतीयोऽध्यायः ॥ ३ ॥ समाप्तश्चायं ग्रन्थः ॥

## मन्त्रार्थमञ्जरी

(षष्ठीसप्तम्यौ देवदेवताके) (हे) देवाः (वयम्) इन्द्राद्या देवता यस्य मन्त्रस्य वाच्या उक्ताः तम् इत्, तमेव शम्भुवम्, शं सखं भवति यस्मात्तं सुखकारणम् । अनेहसम्, इन्द्रियप्रवृत्तिहेतुम् । मन्त्रम् । विदथेषु, विदेः अथङ्प्रत्ययः, ज्ञानेषु 'ज्ञानार्थम् । वोचेम, जपामहे, वचेः उमागमः, व्यत्ययेन शब्विकरणम्, लिङ् । (हे) नरः । युष्मन्मन्त्रजप्तारो वयमिति इमाम् च । (वाचम्) अस्मद्वाचम् । प्रतिहर्यथ, प्रतिहरथ, सत्यतया स्वीकुरुत । तेन च वः (सकाशात्) युष्मत्प्रसादात् । विश्वा, विश्वानि । इत्, एव । वामा, वामानि, भद्राणि, अखिलं शुभम् । अश्नवत्, अश्नवान् । (अहम्) प्राप्तवानहम्, 'अग्निना रयिमश्नवत्' इत्यत्र व्युत्पादितमेतत्पदम् ॥ ६ ॥ (हे देवाः) देवयन्तम्, देवान्यति भजतीति देवयन्, तं देवभक्तम्, युष्मद्भक्तम् । जनम् कः । अश्नवत्, अश्नुवीत, आप्नुयात् । किं च, युष्मानुद्दिश्य वृक्तबर्हिषम्, यजमानं वा । कः (नु) । (अश्नवत्) गच्छेत्, देवभक्तौ यजमानश्चातिदुर्लभः इति भावः । न केवलं दुर्लभो यजमानः, किं तु असौ दाश्वान्, यजमानः । स्वयं परानपेक्षया– पस्त्याभिः, सुखैः । (युक्त एव) प्रप्र अस्थित, वीप्सया द्विर्वचनम्, तत्र तत्र स्वेष्टस्थानेष्वेव प्रकर्षेण स्थितो भवति । किंच, सः (दाश्वान्) ज्ञानतो यजन्– अन्तर्वावत् क्षयम्, सर्वस्यान्तर्गतत्वादन्तर्वा विष्णुः अन्तरुपपदाद्वातेर्विच् ततो वतिप्रत्ययः, विष्णुसादृश्येन क्षयं स्थानम्, मतुप्प्रत्ययो वा, विष्णुस्वामिकत्वेनान्तर्वावत्क्षयं विष्णुस्वामिकं स्थानम् । दधे, प्राप्नोति, सर्वव्यापी भवति ॥ ७ ॥

(मन्त्रार्थमञ्जरी)

(अष्टम्यामिन्द्रो देता) सः (इन्द्रः) जनार्दनः। क्षत्रम् उप पृञ्चीत, क्षत्रियैर्मन्वादिभिरुपपृक्तो भवति, आवेशेन तैः संमिश्रो भवति। आविष्टश्चासौ (देवः) तैः राजभिः (शत्रून्) हन्ति। भक्तानाम्– भये। (चित्) च। (प्राप्ते)। सुक्षितिम्, स्वाश्रयम्, शोभनमाश्रयम्, भयनिवारणम्। (दधे) ददौ, ददाति। किं च, अस्य वज्रिणः महाधने, युद्धाख्यमहाधनविषये। वर्ता, अभिगन्ता, प्रतियोद्धा। क्वचित्– न (अस्ति) (हि) तरुता, जेता। (वा) न (अस्ति) (एवम्– अर्भे, अल्पधने, प्रसिद्धवित्तरूपधनविषये। (च) (वर्ता तरुता) (वा) न अस्ति। इति योज्यम्) 'योऽभिवर्तते स वर्ता, यस्तु तरत्यतिक्रामति स तरुता' इति भेदः । प्रधनपर्यायो हि महाधनशब्दः, अर्भशब्दोऽल्पवाची, 'क्षत्रियाणां युद्धं महाधनम्, तदपेक्षयाल्पं हि वित्तरूपधनम्' इति 'महाधने, (अर्भे) अल्पधने च' इत्युक्तम्। पूर्वोत्तरार्धाभ्यां सकलानिष्टनिवृत्तिं सर्वाभीष्टप्राप्तिं च भगवतः सकाशाद्भक्तानां प्रतिपादयन् मन्त्रव्याख्यानेन समापितवान्भाष्यकारः (श्रीमदानन्दतीर्थभगवत्-पादाचार्यः) यथान्य प्राप्तवा (ब्रह्मसूत्रभाष्यादिषु) 'बळित्था' (ऋ० म १।१४१।१) इत्यादिस्वमहिमोक्तिपरमन्त्रार्थसंग्रहम्, 'यस्य त्रीणीतीति इत्यादिनोक्त्वा तावता समाप्तिमप्रीयाणोऽन्तेऽपि भगवन्नत्याद्युक्त्वा समापयामास, तथेहापि (ऋग्भाष्ये) स्वमहिमापरमारुतसूक्तव्याख्यानेन समाप्तिमप्रीयमाणो विष्णूत्कर्षोक्तिपरसूक्तमन्ते व्याख्याय समापितवान्भगवानाचार्यो (श्रीमदानन्दतीर्थ भगवत्पादाचार्यः) ॥ ८ ॥

इति (श्रीमदृक्संहितायाः प्रथमाष्टके तृतीयाध्याये) एकविंशो वर्गः ॥ २१ ॥
(प्रथममण्डले चाष्टमानुवाकान्तःपाति) चत्वारिंशं सूक्तम् ॥ ४० ॥

कल्याणगुणपूर्णाय दोषदूराय विष्णवे। अनन्ताम्नायवेद्याय श्रीप्राणपतये नमः ॥ ६॥
इति सर्वतन्त्रस्वतन्त्र श्रीसुधीन्द्रगुरुपादशिष्य श्रीराघवेन्द्रयति विरचिता
श्रीमन्मन्त्रार्थमञ्जरी समाप्ता ॥ ॐ श्रीकृष्णार्पणमस्तु।

## रूपावतारः

तमित् वोचेमेति। वचेराशीर्लिङि 'लिङ्याशिष्यङ्' (३।१।८६) इति अङि 'वच उम्' (७-४-२०) इत्युमि यासुटि 'छन्दस्युभयथा' (६-४-११७) इति सार्वधातुकत्वात् 'लिङः [illegible]' (७-२-७९) इति सकारलोपे इयादेशे मसः सकारस्य लोपे अडागमे लेटः [illegible]तश्च लोपः परस्मैपदेषु' (३-४-९७) इति इकारलोपे श्नुविकरणे गुणे अवादेशे

(रूपावतारः)

को देवयन्तम् ॥ प्रास्थितेति । 'व्यवहिताश्च' (१।४।८२) इति वचनात् प्रप्रेत्युपसर्गयोर्व्यवधानम् । स्थाधातोः 'समवप्रविभ्यस्स्थ' (१।३।२२) इति आत्मनेपदे तादेशे 'स्थाघ्वोरिच्च' (१-२-२७) इति इकारान्तादेशे 'ह्रस्वादङ्गात्' (८-२-२७) इति सिचो लुकि अडागमे अस्थितेति रूपम् । अन्तर्वावत् क्षयमिति । अत्र क्षयमिति प्रक्षिप्तम् । अनयोर्भिन्नपदत्वेन युगपद्ग्रहणवैय्यर्थ्यात् । उत्तरत्र क्षयमित्यनूद्य स्थानमिति व्याख्यानस्य क्रियमाणत्वाच्च । अन्तर्वावदिति वतिप्रत्यय इत्यभिप्रेत्याह । तत्साद्दश्येनेति । विशिष्टमिति शेषः । अत्र विष्णुसाद्दश्यमपेक्षितपुरुषार्थदातृत्वेन बोध्यम् । तत्स्वामिकत्वेनेति । युक्तमिति शेषः । इतःपरं असमर्थसमासोऽयमिति वाक्यं द्रष्टव्यम् । ततः परं क्षयं स्थानमिति वाक्यम् । अन्तःशब्दस्य सर्वशब्दसापेक्षत्वात्कथं वाशब्देन समास इत्याशङ्कापरिहाराय असमर्थसमासोऽयमिति वाक्यं प्रयुक्तम् । क्षयशब्दमनूद्यार्थं वक्तुं क्षयं स्थानमिति बोध्यम् ॥ ७ ॥

उपक्षत्रम् ॥ पृञ्चीतेति । पृची संपर्क इत्यतः व्यत्ययेन लडर्थे लिङि तस्य तादेशे सीयुटि 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे श्नमि 'श्नसोरल्लोपः' इत्यकारलोपे पृञ्चीतेति रूपम् । तरुतेति । तॄधातोस्तृचि इडागमे गुणे 'तृतीयोऽतिशये' इति इकारस्य उकारे तरुतेति रूपम् ॥ ८ ॥ २१ ॥ ८ ॥

ग्रन्थं समाप्य तत्फलत्वेन भगवद्भक्तिं प्रार्थयते । देवता इति । परवादिनः स्वकृतव्याख्यानं न सहन्ते अत आह । ये भवान्तीति ॥ विस्तरेण सर्वेषां शब्दानामसाधने तत्प्रयोजनाकथने च निमित्तमाह । शब्दानामिति ।

इति श्रीमत्सत्यनिधितीर्थ श्रीचरणचरणाराधक

श्रीमत्सत्यनाथयति विरचितः ऋग्भाष्यटीकाप्रकाशो रूपावतारः समाप्तः ॥

श्रीविष्णुः प्रीयताम् ॥ मिलित्वा - ४० सूक्तानि अनुवाक-८

## पदार्थप्रकाशिका

तमिद्वोचेमा विदथेषु शंभुवम् । वयं कण्वाः । अनानामिन्द्रियाणामीहा चेष्टाभगवद्विषये प्रवृत्तिरिति यावत् । यस्मान्मन्त्राद्भवति स अनेहास्तमित्यर्थमभिप्रेत्यानेहस्शब्दार्थमाह इन्द्रियाणां भगवद्विषयकज्ञानादौ प्रवृत्तिर्भवति ताद्दशमन्त्रमित्यर्थः । विदेरथक्प्रत्यय इति । विदूज्ञानेऽस्मात् भावे अथकूप्रत्यये विदथेति रूपमित्यर्थः । कित्वाद्गुणाभावः । अन्यथा वेदथेति स्यादिति द्रष्टव्यम् । तादर्थ्ये सप्तमीत्याह ज्ञानार्थमिति । हे नर इति । इन्द्राद्या देवा इत्यर्थः । युष्मन्मन्त्रेति ।

युष्मत्प्रतिपादकमन्त्रेत्यर्थः । वाचं प्रति हर्यथेत्यत्र निमित्तकथनायेदमिति ज्ञातव्यम् । इति हेतोः अस्मद्वाचम् । अस्माभिर्जप्यां युष्मत्प्रतीमां वाचम् । सत्यतयेति । अनेनैषा वाक् सत्यतयैव जप्या न डम्भबुध्येति स्वीकुरुतेत्यर्थः । तेन चेति । सत्यतया युष्मत्स्वीकृतेनास्मात्कृतमन्त्रजपेनेत्यर्थः । श्रुतौ अश्ववदिति प्रथमपुरुषस्यासंगतत्वाद्व्यत्ययमाश्रित्याश्ववानीत्युत्तमपुरुषतया भाष्ये व्याख्यातम् । तत्र कर्त्रनुक्तेस्तमाह अहमिति । यद्यपि वोचेमिति बहुवचनं प्रकृतं तदनुसाराद्वयमिति वक्तव्यम् । तथापि अश्ववदित्येकवचनसद्भावात्तदनुसारेणाहमित्येवोक्तम् । श्रुतौ तु स्तोतुः कण्वस्यैकत्वाद-श्ववदित्येकवचनमेव युक्तम् । वोचेमेति बहुवचनं तु गुरावात्मनि चैकेषामिति स्मरणमनुसृत्येति द्रष्टव्यम् ॥ ६ ॥

को देवयन्तमश्नवत् । याति भजत इति । धातूनामनेकार्थत्वत्वाद्यातेर्भजनार्थत्वमित्याशयः । यद्वा याति मनसा भजतीति तात्पर्यार्थः । अशूङ् व्याप्तौ । विशेषेणाप्तिः प्राप्तिरित्यभिप्रेत्याह आप्नुयादिति । ज्ञानादिपूर्वम् । ज्ञानभक्त्यादिपूर्वकं यजमानम् । यज्ञं कुर्वाणम् । उत्तरमाह अतिदौर्लभ्यादिति । यदि देवभक्तो वा ज्ञानभक्तिपूर्वयज्ञकारी वा इह लोके स्यात्तदा तमनु कश्चिदन्योऽपि गच्छेत् । तन्मार्गमन्योऽपि कश्चिदाप्नुयादिति यावत् । तावुभावपि इह लोके न स्तो दुर्लभत्वादित्यर्थः । विविधैहिकामुष्मिकस्वर्गसुखमपोहितेषु जनेषु मध्येऽस्माकं ज्ञानभक्तिपूर्वकं यज्ञं कुर्वाणो ह्यतिदुर्लभ इति भावः । तावुभावपीह लोके मूर्खजनागम्याविति तात्पर्यम् । यजमानः । ज्ञानपूर्वकं यजमानः । अत्र वस्तुगत्या देवभक्तो यजमानश्चैक एव तथापि ज्ञानपूर्वकं भक्तयष्टृत्वात् अंतर्वा विष्णुः । कुतः । यतः सर्वस्यान्तर्गतः । वातेर्विच् तद्वत्वेन स्वावरस्याभेदोपाधिकं भेदमादाय देवभक्तं यजमानं वेत्युक्तिः इत्यवधेयम् । अत एवोत्तरत्र असौ दाश्वानित्येकस्यैवोक्तिरित्यवगन्तव्यम् । परानपेक्षयेति । स्वावरानपेक्षयेत्यर्थः । तदपेक्षाशून्यः सन्निति यावत् । पस्त्याशब्दस्य सुखनामसु पाठादाह सुखैरिति । प्रप्रास्थित प्रास्थितेति । अत्र प्रप्रेत्युपसर्गद्वयं श्रूयते । उपसर्गाः क्रियायोग इति क्रियायोग एवोपसर्गसंज्ञा विहिता । सजातीयोपसर्गाणां क्रियावाचिकेनैव पदेन सम्बन्धस्य प्रयोजनविशेषं विना युक्तत्वात् प्रणिगदति प्रविजयते संनिरुध्येत्यादौ विजातीयोपसर्गाणामेवैकेन क्रियावाचिना पदेन सम्बन्धदर्शनात् प्रकृते च क्रियाद्वयवाचिपदद्वयाभावात् क्रियाद्वयसम्बन्धाभावे च एकस्य प्रेत्यस्योपसर्गत्वायोगात् । क्रियावृत्तिमभिप्रेत्य ताभ्यां चोपसर्गद्वयस्य सम्बन्धमभिप्रेत्य प्रास्थितेति संप्रदायविदः । प्रास्थित प्रास्थितेति द्विरुक्तेः प्रयोजनमाह वीप्सायामिति । व्याप्नुमिच्छा वीप्सा । सर्वसंग्रहकर्तुमिच्छेति यावत् । तस्यां विवक्षितायामिदं द्विर्वचनमित्यर्थः । तथाच यो य एवं ज्ञानादिपूर्वं यजमानः स सर्वोप्येवं पस्त्याभिः प्रास्थितेत्येवं वीप्सानिमित्तकं द्विर्वचनमित्यभिप्रायः । केचित्तु वीप्सार्थं दर्शयति तत्रतत्रेतीत्याहुः ।

(पदार्थप्रकाशिका)

अत्रेदं तात्पर्यम् । ज्ञानादिपूर्वं यजमानदुर्लभ इत्येव केवलं न किं तु सन्तु उक्तविधयज्ञजनितापरोक्षज्ञानद्वारा मुक्तः सन् स्वस्वरूपसुखं भुञ्जन् स्वेष्टस्थानेषु इत्येव केवलं कामतश्चरति अतस्तं को अनुगच्छेत्प्राप्नुयादिति यावदिति । वातेर्विजिति । वा गतिगन्धनयोरिति धातोर्विच्प्रत्यये क्विपि तस्य सर्वस्यापि लोपे अन्तर्वा इति सोमपाशब्दवत् आकारान्तपुल्लिङ्गो भवतीत्यर्थः । क्विप्रत्ययकरणे च कित्वाद्धात्वाकारलोपे अन्तर्वदिति स्यादतस्तत्करणमित्य-वगन्तव्यम् । तद्वत्वेनेति । तद्वत् अन्तर्वावत् विष्ण्वन्यत् विद्यमानं यत् । यस्य भावो धर्मः । तद्वत्त्वम् तत्सादृश्यम् । तेन तद्वत्वेन तत्सादृश्येनेत्यर्थः । प्राप्नोतीत्यन्वयः । अयमर्थः । स दाश्वान् यथेष्टस्थानेषु स्थितो भवतीत्युक्ते तत्तत्स्थानेषु एकस्मिन्प्रदेशविषय एव वर्तते न सर्वत्रेति प्रतीयते अत इदमुच्यते अन्तर्वावत्क्षयं दध इति । अत्रान्तर्वात्क्षयमित्येकं पदमभिप्रेतम् । अयं दाश्वान् स्वेष्टस्थानेषु एकस्मिन्प्रदेशविशेष एव न स्थितो भवति किं तु क्षयं वैकुण्ठादिस्थाने दधे धत्ते प्राप्नोति कथं दत्त इत्यतः धत्त इति क्रियायाः विशेषणमुक्तं अन्तर्वावदिति । अत्र वतिः सादृश्यार्थः । तथाचान्तर्वावत् विष्णुवत् यथा भवति तथा । विष्णुसादृश्येन विष्णुर्यथा सर्वलोकव्यापी तत्सञ्चारीति यावत् भवति तथा । यो दाश्वान् मुक्तः सन् सर्वलोकव्यापी क्रियाविशेषणमेतत् तत्सञ्चारी भवति । यद्वाऽयं वतिर्मतुबर्थः । तथा चायं क्षयं वैकुण्ठादिस्थानं दधे प्राप्नोति कथं अन्तर्वावत् विष्णुवत् । विष्णुत्वेनविष्णुस्वामिकत्वेन । तत्रापि स्वस्य विष्णुर्यथा स्वामी स्यात्तथा आप्नोति । तत्रापि विष्णुरूपस्वामीत्युक्तः सन्नेव सर्वव्यापी भवतीति यावत् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुतेरिति ।

नन्वन्तर्वावत्क्षयमित्येतदेकं पदमित्यङ्गीकृत्य तत्रान्तर्वावदित्येतत्क्रियाविशेषणमित्यभिप्रेत्य प्रकारद्वयेन व्याख्यातम् । तदयुक्तम् । तथात्वे अन्तर्वावदित्यस्य दधे धत्त इति क्रियाविशेषणत्वेन तत्साकाङ्क्षात्तथैव समासो युक्तः । न तु क्षयपदेनायं अन्तर्वावत्क्षयमिति समासः । अन्तर्वावदित्यस्य धत्त इत्यनेनैवान्वयायोग्यतायाः सत्त्वेन क्षयपदेनान्वययोग्यतारूपसामर्थ्याभावेपि तेन समासो युक्त इत्यर्थः । तेनाकाङ्क्षाया अभावेनासामर्थ्यात् । सापेक्षमसमर्थवद्भवतीति वचनादित्यत आह असमर्थसमासोयमिति । यथा असूर्यं पश्याः राजदाराः इत्यत्र राजदाराः सूर्यं न पश्यन्तीत्येव नञः पश्यन्तीति क्रियापदेनाकाङ्क्षायां सत्यामपि न तेन समासः किं तु निराकाङ्क्षसूर्यपदेनैव तद्वत् अन्तर्वावदित्यस्य धत्त इति क्रियापदेनाकाङ्क्षायामपि न तेन समासः किंतु निरपेक्षक्षयपदेनैवेत्यर्थः । सत्यन्यपदेन समासेपि पदान्तरेणाकाङ्क्षा न विहन्यत इति तस्य देवदत्तस्य गुरुकुलमित्यादावपि दर्शनादिति भावः । तथा च नित्यसापेक्षत्वात्समास इत्युक्तं भवतीति द्रष्टव्यम् ।

(पदार्थप्रकाशिका)

अत्रान्तर्वावत्क्षयमित्यस्यैक पदत्वेहि असमर्थसमासोयमिति समाधेयं स्यात्। न चैवम्। अन्तर्वावत् क्षयमिति भिन्न पदत्वेन वैदिकैः पश्यमानत्वात् तथा च पृथक्पदस्यान्तर्वावदित्यस्य दध इति क्रियाविशेषणत्वसम्भवात् न चाशङ्का न चोत्तरमिति भाति अतः एकंपदत्वमङ्गीकृत्यैवं समादधतां टीकाकाराणामभिप्रायो महात्मभिर्ज्ञातव्यः । सर्वव्यापी भवतीत्येतत् मुक्तब्रह्मादि-विषयमित्यवगन्तव्यम्॥ ७॥

उपक्षत्रं पृंचीत हंति राजभिः। उपपृक्तः। संगतः। राजाभिर्निमित्तैः। तान्निमित्तीकृत्येति यावत्। आश्रयस्य शोभनत्वं विवृणोति। भयनिवारणमिति। भयनिवारकमित्यर्थः। वर्तेति। वर्तृशब्दस्य रूपम्। वर्ताभिगन्तेत्यर्थमुपपादयति योभिवर्तत इति। अभितो अभिमुख्येन वर्तते आगच्छति स वर्ता। प्रतियोद्धा वचोभिमुख्येनागच्छति अतः स वर्तेत्युच्यत इत्यर्थः। तरुता जेतेत्येतदुपपादयति यस्तु तरतीति। जेतैवच परमतिक्रामति अतो जेता तरुतेत्युच्यत इत्यर्थः। कुत्रेति। कस्मिन् विषये वर्ता तरुता च नास्तीत्यर्थः। प्रधनं रणम्। क्षत्रियाणामित्यादि। युद्धस्यैव क्षत्रियाणां महाधनत्वाद्युद्धं महाधनमित्युच्यते । प्रसिद्धधनस्य च सुवर्णादिर्युद्धधनापेक्षया तेषामल्पत्वादयोऽपि तदीयं धनमहं गृहीष्यामीत्यभिप्रायेण। तं वज्रिशब्दवाच्यम्। जनार्दनं वर्ताऽभिगन्ता प्रतिस्पर्धितया गन्ता नास्ति । गत्वा तरुता जेता च नास्तीत्यर्थः । हिशब्दस्याभिप्रायान्तरमाह यद्वेति। उत्तरस्यापीति। यं रक्षंति प्रचेतस इत्यादेरित्यर्थः। आचष्ट इति। चक्षिङ् व्यक्तायां वाचीत्यस्येदं रूपम् । तथा च प्रकथयतीत्यर्थः । भगवान् मुनिः श्रीमदानन्दतीर्थ इत्यशेषमतिमङ्गलम्॥ ८, २१, ८, ४०॥

अथ समापितग्रन्थो भगवांष्टीकाकारस्तत्प्रचययायान्तेऽपि रमानाथं स्तुवन् सुदृढां प्रीतिं प्रार्थयते देवता इति। अत्राग्निमीळ इत्यादौ अग्न्यादीनां अमुख्यत एव भगवदधिष्ठानतया प्रतिपाद्यत्वं मुख्यतस्तु भगवत एवेत्युक्तं तदभिप्रायेण देवताः कंचुकायन्त इत्युक्तम्। वेद इति। वेदानां भगवद्गुणोत्कर्षप्रतिपादकत्वेन इत्यर्थः। रमानाथ इत्युक्त्या भगवद्विशेषणतया तस्यापि प्रीतिः प्रार्थितेत्यवगन्तव्यम्। सुदृढा प्रीतिः। माहात्म्यज्ञानपूर्वकः स्नेहः। भक्तिरिति यावत्॥ १॥

इमां टीकां तत्कालीनाः केचिन्निन्दयामासुरतोऽनुपादेयेत्याशङ्क्य पशुसमानां तेषां निन्दया किं स्यात् किं तु सज्जनसन्तोषकारित्वेनोपादेयैवेत्याह ये भवन्तीति । पशुसन्निभैः । प्रज्ञासौजन्यादिगुणशून्यत्वेन पशुप्रायैरित्यर्थः॥ २॥

ननु सज्जनाभावकृतौ कथं सन्तोषं प्राप्नुयुः। शब्दानां प्रकृतिप्रत्ययविभागेन साधनस्याकृतत्वात् एतादृशप्रत्यय एतादृशः स्वरो भवतीत्यादिप्रयोजनस्य अग्निमीळे पुरोहितमित्यादौ

(पदार्थप्रकाशिका)

पुरोहितादिविशेषणानां प्रयोजनस्य कीर्तितत्वादित्याशङ्क्य इह ग्रन्थे शब्दानां साधनादि ग्रन्थविस्तरभयात् नाकृषत । तत्तस्मात् । तत् । तन्निमित्तकम् । आग इति यावत् । बुधैः क्षम्यतामित्याह शब्दानामिति ॥ ३ ॥

य: सर्वदेवान् संप्रेर्य कारयामास सत्कृतिम् ।
श्रीपतिं तं गुरूपास्यं संश्रये बादरायणम् ॥ १ ॥
श्रीमदानन्दतीर्थार्यचरणावाश्रयेऽनिशम् ।
रुद्रादिसर्वविबुधैः संसेव्याविष्टदौ सताम् ॥ २ ॥
श्रीमदानन्दतीर्थार्यवाक्याभिप्रायपोषकान् ।
जयराजमुनीन् वन्दे वेदव्यासार्चने रतान् ॥ ३ ॥
वेदेशाख्यमुनीन् वन्दे यादवाचार्यसेवितान् ।
छान्दोग्यभाष्यसट्टीकाकर्तॄन् सद्गुणवारिधीन् ॥ ४ ॥
श्रीमध्वशास्त्रं समुदीर्य मेऽस्मिन् विश्वासहेतोः समदर्शयन्मे ।
प्रदानसूत्रप्रतिपाद्यभावान्वन्दे गुरूंस्तान् यदुवर्यसंज्ञान् ॥ ५ ॥
श्रीमदृग्भाष्यटीकास्थपदानामर्थप्रकाशिका ।
श्रीनिवासकृता भूयाद्बादरायणतुष्टिदा ॥ ६ ॥
यादवार्यगुरुशिक्षितभावः सम्प्रदायमविदा हि निबद्धः ।
स तु सुशिक्षितबुद्धिमतामलं प्रवचनाय भवेदुपकारकः ॥ ७ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां
श्रीमदृग्भाष्यटीकाविवृतौ पदार्थप्रकाशिकाव्याख्यायां तृतीयोऽध्यायः ।
श्रीमदानन्दतीर्थार्य हृत्कमलमध्यनिवासी श्रीबादरायणः प्रीयतामनेन ।
समाप्तोऽयं ग्रन्थः ।

## पदार्थदीपिका

शम्भुवमिति । भवतेरन्तर्भावितण्यर्थात् क्विप्चेति क्विप् । ओस्सुपीति यणादेशस्य न भूसुधियोरिति प्रतिषेध इति ज्ञेयम् । विदेरथक्प्रत्यय इति । कित्वाल्लघूपधगुणाभाव इति भावः । वोचेमेति । वच परिभाषणे आशीर्लिङि लिङ्याशिष्यङ् इत्यादि वच उमित्युमागमः । छन्दस्युभयथेति सार्वधातुकत्वाल्लिङः सलोपोऽनन्त्यस्येति यासुटः सकारलोपः । अतो येय इति

(पदार्थदीपिका)

यादेशः। आद्गुण इति गुण इति भावः। अश्ववदिति। अशू व्याप्तौ। लेटि अडागमः। व्यत्ययेन परस्मैपदम्। इतश्च लोप इतीकारलोपः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति गुण इति भावः। अश्ववानीत्युत्तमपुरुषप्रयोगादेवाहमिति लभ्यत इति भावेनाह। अहमिति॥ ६॥

यजतीति। धातूनामनेकार्थत्वादिति भावः। अत्र या इत्यस्माच्छतरि तस्यापित्सार्वधातुकत्वेन ङित्वादातो लोप इटि चेत्याकारलोप इति द्रष्टव्यम्। अश्ववदिति लङो भूतार्थकत्वेन प्रकृते उपयोगाभावात् लिङ एवापेक्षितत्वात् अश्नुवीतेति व्याख्यातमिति बोध्यम्। प्रास्थितेति। लुङि समवप्रविभ्यःस्थ इत्यात्मनेपदम्। स्थाघ्वोरिच्चेति धातुसिचोरुच्। ह्रस्वादंगादिति सलोपः। अत्रोपसर्गाः क्रियायोग इति क्रियायोग एवोपसर्गसंज्ञाविधानात् प्रणिगदतीत्यादौ विजातीयोपसर्गद्वयस्य एकक्रिया संबन्धदर्शनेपि सजातीयोपसर्गद्वयस्यैकक्रियासंबन्धस्य प्रयोजनविशेषं विनायोगात् प्रकृते तदभावेन क्रियासंबन्धाभावात् कथमुपसर्गत्वमित्यतः उपसर्गद्वयस्य सम्बन्धमभिप्रेत्य प्रस्थित प्रास्थितेति योजितमिति भावः। द्विरुक्तेःप्रयोजनमाह। वीप्सायामिति। व्याप्तुं इच्छा हि वीप्सा। तस्यां विवक्षितायामिदं द्विर्वचनं विप्सानिमित्तकं इति तात्पर्यार्थः। वातेर्विजिति। आतो मनिन् क्वनिप् वनिपश्चेत्यत्र चकाराद्धातोर्विजित्यर्थः। अन्तर्वा इति। अन्तर्वावत् इवेत्यर्थे वप्रत्ययान्तमिदमव्ययम्। तत्सादृश्येनेति। तत्सदृशमित्यर्थः। सादृश्यं च क्षयस्य नित्यत्वादिना द्रष्टव्यम्। मतुपो वेति। अन्तर्वा अस्यास्तीति तदस्यास्तीति मतुप्। सम्बन्धश्च स्वस्वामिभावरूप एव विवक्षित इत्यभिप्रायेण तत्स्वामिकत्वेनेत्युक्तम्। तत्स्वामिकं स्थानमित्यर्थः। क्षयमिति। क्षयन्ति निवसन्त्यस्मिन्निति क्षयः पुंसि संज्ञायां घःप्रायेणेति घ इति भावः। नन्वन्तर्वावदित्यस्य दधइत्यनेन सापेक्षत्वेनासमर्थत्वात् कथं वा इत्यनेन समासः। समर्थः पदविधिरिति समर्थयोरेव समासविधानात् इत्यतो देवदत्तस्य गुरुकुलमित्यादौ तद्दर्शनात् नित्यसापेक्षत्वात्समासोपपत्तिरिति भावेनाह। असमर्थेति। दध इत्युत्तमपुरुषस्यानुपपन्नत्वात् प्रथमपुरुषत्वेन व्याख्याति। धत्त इति। श्रुतौ दध इत्युत्तमपुरुषोऽनुपपन्न इत्यतो भाष्ये ददाविति प्रथमपुरुषत्वेन व्याख्यातम्। तेन च पूर्वं ददौ नत्विदानीं दाने शक्तिरस्तीति प्राप्तम्। तन्निरासाय ददातीति वर्तमानत्वेन व्याख्याति। दधे ददौ ददातीति। यद्यपि डु धाञ् धारणे पठ्यते। तथापि अनेकार्थत्वाद्धातूनामिति ध्येयम्। यद्वा डु धाञ् धारणदानयोरिति दानार्थत्वेनापि पाठादेवं व्याख्यातमिति भावः॥ ७॥

तरुतेति। ग्रसितस्कभितेति सूत्रेण छन्दसि ऋकारान्तः तरुतृशब्दो निपात्यत इति भावः। ग्रन्थान्तेपि मङ्गलमाचरति। देवता इति। वेदापभाष्यादाविव प्रकृतिप्रत्ययविभागादेः

(पदार्थदीपिका)

सम्यगप्रतिपादनादनुपादेयत्वमित्यतः किं सर्वथा तदव्युत्पादनेन अनुपादेयतायामप्रयोजकतयाभिप्रेयते, किं वा सम्यगव्युत्पादनमेव वा । आद्येऽसिद्धिः । प्रकृतिप्रत्ययविभागादेः परभाष्यादाविव सम्यगनिरूपणेऽपि संक्षेपतः सूचनेन सर्वथा तदव्युत्पादनाभावात् । द्वितीयेपि प्रेक्षावदनुपादेयत्वं वा विवक्षितं, पामरानुपादेयत्वं वा । नाद्यः । संक्षेपेण तत्सूचनमात्रेणैव प्रेक्षावदुपादेयत्वोपपत्तौ तत्र तस्याप्रयोजकत्वादित्याह । ये भवन्तीति । अनुपादाने तत्रोक्ताज्ञानं वा निमित्तं, सत्यपि ज्ञाने मात्सर्यं वा । तत्र च न सज्जनानां अनुपादाननिमित्तमज्ञानं कल्पयितुं शक्यम् । तेषां प्रज्ञाशीलत्वेन तदसंभवात् । नापि द्वितीयम् । सौजन्यशीलत्वात् । अत उभयविधनिमित्ताभावेन सम्यङ्निरूपणेऽपि सामान्यतस्तत्सूचनेऽपि तदुपादेयत्वसिद्धिरिति भावेन हेतुगर्भविशेषणोक्तिः । प्रतिज्ञासौजन्यशालिन इति । न द्वितीय इत्याह । किमन्यैरिति । तदुपपादनानुपपादनयोरुत्कर्षापकर्षानापादकतया तदनुपादानेऽप्यक्षतेः । अन्यथातिप्रसंगःस्यादिति भावः । सति सामर्थ्ये अवचने निमित्तान्तराभावेनाज्ञानमात्रमूलकत्वावश्यंभावात् आप्तिमूलकत्वाभावात् प्रेक्षावतः प्रत्यप्यनुपादेयत्वं स्यादित्यत आह । शब्दानामिति । ततश्च निमित्तान्तरमूलकत्वादवचनस्य नासामर्थ्यापादकत्वमिति नोक्तदोष इति भावः । तर्हि सति सामर्थ्ये गौरवमपि तिरस्कृत्य वचनमेव युक्तं विशिष्टज्ञानार्थत्वेन सप्रयोजनत्वादन्यथा तदवचननिमित्तापराधप्रसक्तिरित्यतस्तादृशापराधक्षान्तिं प्रार्थयते । इह तत्क्षाम्यतां बुधैरित्यशेषमतिमंगलम् ।

निशम्य सकलं शास्त्रं विद्याधीशमुखाम्बुजात् ।
तच्छिक्षितप्रकारेण प्रकाशोऽयं प्रकाशितः ॥
नमामि जानकीजानिं पूर्णानन्दादिविग्रहम् ।
सर्वविघ्नहरं वीरविद्याधीशेष्टदेवतम् ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमद्विद्याधीशपूज्यपादानां निजशिष्येण केशवभट्टारकेण विरचिता श्रीमद्भाष्यविवरणपदवाक्यार्थदीपिका समाप्तिमगमत् ।

## टीकाविवृतिः

तमित् ॥ शं भवत्यस्मादिति शंभूस्तं शंभुवमिति विग्रहमाश्रित्याह ॥ शंभुवं सुखकारणमिति ॥ विदेरथमिति ॥ रुविदिभ्यां किदिति सूत्रेण भावे थप्रत्ययः स च किदिति भावः ॥ वोचेमेति ॥ वचधातोर्लुङि अस्यतिवक्तिख्यातिभ्योङिति च्लेरङादेशे वच उमित्युमागमे मसश्छान्दस इकारागम अडभावश्चेति भावः ॥ प्रतिहर्यथेति ॥ हर्यक्लमेगतावित्यतो लडिति भावः ॥ वामानि भद्राणीति ॥

(टीकाविवृतिः)

पाकःवाम इति प्रशस्यनामसु पाठादितिभावः । अशभोजने इत्यतो लेट अडागमे व्यत्ययेन मिपस्थानिकतिप इतश्च लोप इतीकारलोपे श्नविकरणे अश्नवदिति रूपमिति भावेनाह ।। अश्नवदश्नवानीति ।। ६ ।।

को देवयंन्तम् ।। देवयन्निति ।। देवपूर्वकयाप्रापणे इत्यतो लटःशत्रादेशस्य छन्दस्युभयथेत्यार्धधातुकत्वात् आतो लोप इटि चेत्याकारलोप इति भावः । वृक्तबर्हिषमित्यत्र वृची संपर्के इत्यतःक्तप्रत्यये वृक्तं संबद्धं आस्तृतमिति तात्पर्यार्थ इति भावेनाह ।। स्तृतबर्हिमिति ।। प्रास्थितेति ।। प्रपूर्वात्तिष्ठतेर्लुङि समवप्रविभ्यःस्थ इत्यात्मनेपदे तशब्दे स्थाघ्वोरिच्चेति स्था शब्दस्य इकारादेशे ह्रस्वादंगादिति सिज्लुगिति भावः ।। वीप्सायामिति ।। नित्यवीप्सयोरित्येनेनेति शेषः । दाशृदाने इत्यतो दाश्वान्साह्वान्मीढ्वांश्चेति सूत्रेणार्थविशेषे लिटःक्वस्वादेशे द्वित्वाभावनिपातनादिति भावेनाह ।। दाश्वान्ज्ञानतो यजन्निति ।। ज्ञानपूर्वकं हविरादिकं वा ददित्यर्थः ।। वातेर्विजिति ।। वा गतिगंधनयोरित्यत आतो मनिन्क्वनिब्वनिपश्चेति चकारादिति शेषः । अन्तर्वा शब्दात्तेन तुल्यं क्रिया चेद्वतिरिति सादृश्ये वतिप्रत्यय इति भावेनाह ।। तद्वत्त्वेन तत्सादृश्येनेति ।। विष्णुसादृश्येनेत्यर्थः । युक्तमिति शेषः । अन्तर्वावदित्यत्र प्रकारान्तरमाह ।। मतुब्वायमिति ।। अन्तर्वास्यास्तीत्यंतर्वावत् ।। मादुपधायाश्चेति मतुपो मस्य वकारादेश इति भावः । विग्रहवाक्येऽस्येति षष्ठ्यर्थमाह ।। तत्स्वामिकत्वेनेति ।। विष्णुस्वामिकत्वेन युक्तमित्यर्थः ।। नन्वंतःशब्दस्य सर्वस्येत्येतदपेक्षितत्वात्कथं वेत्यनेन समासः । सापेक्षमसमर्थं भवतीत्युक्तेरित्यत आह ।। असमर्थसमासोयमिति ।। छान्दसत्वान्नित्यसापेक्षत्वाद्वा असमर्थेनांतःशब्देन वाशब्दस्य समास इति भावः । अन्तर्वावच्छब्दस्य क्षयशब्देन समास इति तु न । वेदे भिन्नत्वेन पाठात् असामर्थ्याभावाच्च । न हि विष्णुसदृशं विष्णुस्वामिकं वा स्थानमित्यन्वयो न संभवति । अन्तर्वावदित्येतदन्वितत्वेन क्षय शब्दार्थकथनानन्तरमेतच्छंका परिहारासंभवात् । तत्सदृशं स्थानं प्राप्नोतीत्यस्याशयमाह ।। सर्वव्यापी भवतीति ।। स्थानस्य विष्णुसादृश्यं नाम व्याप्तत्वमिति भावः ।। ७ ।।

उपक्षत्रम् ।। पृंचीतेति ।। पृची संपर्के इत्यतो लडर्थे लिङि तादेशे सीयुटि सलोपे श्नमःश्नसोरल्लोप इत्यकारलोप इति भावः ।। सुक्षितिं स्वाश्रयमिति ।। क्षि निवासगत्योरिति धातोःक्तिन्प्रत्यय इति भावः ।। वर्तेति ।। वृतु वर्तने इत्यतस्तृचि लघूपधलक्षणो गुण इति भावः ।। तरुतेति ।। तॄधातोस्तृचि सार्वधातुकार्धधातुकयोरिति गुणे इडागमे तस्य तृतीयोतिशाय इत्युकारादेश इति भावः । ननु कथं महाधनशब्दो युद्धार्थ इत्यत आह ।। प्रधनशब्दपर्याय इति ।। प्रधनशब्दवन्महाधन शब्दस्यापि

(टीकाविवृतिः)

सङ्ग्रामनामसु पाठादिति भावः ॥ अर्भशब्दोल्पवाचीति ॥ अर्भशब्दस्य ह्रस्वनामसु पाठादिति भावः । हिरण्यादेःकथं युद्धापेक्षयाल्पधनत्वमित्यत आह ॥ क्षत्रियाणामिति ॥ सुखिनःक्षत्रियाःपार्थ लभन्ते युद्धमीदृशमित्यादेरिति भावः । ननु यं रक्षंतीत्यादिरुत्तरो मन्त्रभागः कुतो न व्याख्यायत इत्यत आह ॥ यद्वेति ॥ निघंटुव्याकरणादिमार्गेणेत्यर्थः ॥ ६ ॥

अत्र स्वरसंचारःकथ्यते ॥ उप निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जमित्याद्युदात्तः । पकाराकारस्य तु उदात्तानुदात्तस्येति स्वरितत्वम् । क्षत्रम् । क्षदिःसौत्रो धातुः । तस्मात् गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्र इति त्रप्रत्यये प्रत्ययस्वरेणांतोदात्तः । क्षशब्दाकारस्य सन्नतरः । पृंचीत । अत्र तिङ्ङतिङ इति निघातो न । चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरिति सूत्रेण चनादिशब्देषु परेषु गतिभिन्नात्परस्य तिङन्तस्य निघातनिषेधादत्र चिच्छब्दपरत्वात् । तथाच प्रत्ययस्वरेणांतोदात्तत्वे ईकार आगमा अनुदात्ता इत्यनुदात्तः । अनुदात्तं पदमेकवर्जमिति पृशब्दे ऋकार अनुदात्तः । संहितायान्तु स्वरितः । हन्ति । हन हिंसागत्योरित्यतस्तिपि अदादित्वाच्छपो लुकि रूपमेतत् । अत्रातिङन्तपरत्वाभावात् । अनिघातेतिप अनुदात्तौ सुप्पितावित्यनुदात्तत्वे धातुस्वरः । राजभिः । राजृदीप्तावित्यतःकनिन्युवृषित क्षिराजिधन्विद्युप्रतिदिव इति कनिन्प्रत्यये ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वे ङिःसुप्त्वात् अनुदात्तोपि अच्प्रत्ययेनैकादेशात् एकादेश उदात्तेनोदात्त इत्युदात्तः । चित् । चादयोनुदात्ता इत्यनुदात्तः । सुक्षितिम् । समासस्येत्यन्तोदात्तः । दधे । तिङ्ङतिङ इति निघातः । न । निपाताद्युदात्तत्वम् । अस्य । इदम्शब्दात् ङसि इदमोन्वादेशेशनुदात्तस्तृतीयादावित्यशादेशे अनुदात्तः । ङसःसुप्त्वादनुदात्त इति सर्वानुदात्तता । वर्ता । तरुता । इत्युभयत्र चित्स्वरः । न । निपातस्वरः । महाधने । समासान्तोदात्तता । न । निपातस्वरः । अर्भे । ऋगतावित्यतःअर्तिगृभ्यांभन्निति भन्प्रत्यये नित्स्वरः । अस्ति । निघातः । वज्रिणः । वज्रमस्यास्तीति मत्वर्थे इनिप्रत्यये प्रत्ययस्वरेण मध्योदात्तता ॥ ८ ॥

एवं समापितऋग्भाष्यटीकःश्रीमज्जयतीर्थवर्यःकृतस्यास्य ग्रन्थस्य स्वकीयं फलमाशास्ते ॥ देवता इति ॥ कंचुकं शरीरकवचरूपं वस्त्रं तद्वदाचरन्तीति कंचुकायन्ते । कंचुकशब्दादाचारार्थे कर्तुःक्यङ् सलोपश्चेति क्यङ्प्रत्यये अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घः । अनेन सर्वदेवतांतर्गते विष्णौ प्रीत्याशासनेन देवतास्वपि प्रीत्याशासनं फलमुक्तं भवति । बन्दिनः स्तुतिपाठका इत्यमरोक्तेर्बन्दिजनःस्तुतिपाठको लोकः । अनेन पूर्वार्धेन सर्वस्मिन्वेदे विद्यमाना इन्द्रादिशब्दा इन्द्राद्यन्तर्गतविष्णुवाचका इत्युक्तं भवति । इदानीं परकीयं प्रयोजनमाह ॥ ये भवन्तीति ॥ सत्त्वे

तोषप्राप्तौ च कारणमाह ॥ प्रज्ञासौजन्यशालिन इति ॥ सौजन्यं द्वेषेर्ष्यादिराहित्यं तच्छालित्वात्संतः प्रज्ञारसज्ञता तच्छालित्वादेतद्ग्रन्थदर्शनेन सन्तोषप्राप्तिरिति भावः । ननु सर्वसन्तोष-जनकत्वाभावात्कांश्चित्प्रति ग्रन्थो व्यर्थ इत्यत आह ॥ किमन्यैरिति ॥ किंप्रयोजनमस्माकमिति शेषः । ननु श्रौतसर्वशब्दानां व्याकरणनिरुक्तादिना सम्यक्साधनाभावात्कथं सतां सन्तोष इत्यत आह ॥ शब्दानामिति ॥ सम्यगित्यस्योभयत्रान्वयः । तेनास्मत्कृतेन केषांचिच्छब्दानां साधनेन तद्रीत्या बुद्धिमद्भिरुर्वरितानां कर्तुं शक्यत्वं सूचयति । तत्प्रयोजनकीर्तनन्तेषामृक्पदानां प्रयोजनमावश्यकत्वस्वारस्यादि तत्कथनमित्यर्थः । अत एव बुधैरित्युक्तम् । अनेन बुधानां परापरतत्वज्ञानिनां हरिगुर्वादिभक्तिमतां निघंटुव्याकरणाद्यभिज्ञानामेवात्र ऋग्भाष्येऽधिकार इति सूचितमित्यशेषमतिमङ्गलम् ।

नरहरिरतिलक्ष्मीः सर्वदेवादिसंस्थः
सकलनिगमवाक्यैर्मुख्यवेद्यो गुणाढ्यः ।
मम पितृगुरुहृत्स्थो व्यासरूपः
सुपूर्णप्रमतिहृदयसंस्थः सोस्त्वनेन प्रसन्नः ॥ १ ॥
बहुग्रन्थसन्दर्भमालोक्य कृच्छ्राद्धरिप्रीतये संगृहीतेऽत्र भावम् ।
अविज्ञाय चेद्दूषयेत्कश्चिदेतद्भवेद्भूषणं नाग्रहस्तत्र मे स्यात् ॥ २ ॥
छलारिनारायणवर्यपुत्रनृसिंहनाम्ना रचिता शुभेयम् ।
ऋग्भाष्यटीकाविवृतिस्तयायं हरिः पितुर्मे सुफलप्रदःस्यात् ॥ ३ ॥
शके त्रिवसुपंचेन्दुसंमिते प्लववत्सरे (१५८३) ।
मासि चैत्रे पूर्णिमायामर्पिता हरिपादयोः ॥ ४ ॥
ग्रन्थेस्मिन्स्खलनं किंचित्क्षंतव्यं साधुभिर्बुधैः ।
भ्रान्तेः पुरुषधर्मत्वाद्गच्छतःस्खलनात्तथा ॥ ५ ॥

श्रीमन्मध्वोक्तिसिंधोर्जयमुनिशुभवाग्जाह्नवीसंगमेलंव्याख्यासंस्नानशुद्धे हरिगुरुदयया ध्यानसाध्यं प्रसादम् । कृत्वा विज्ञानतेजोभवभयदहनं पूर्णसंवित्सदात्मामोदः श्रीशः प्रसन्नाननहृदययुतः प्रीयतां मय्यनाथे ॥ ६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमदृग्भाष्यस्य टीकायाः श्रीमज्जयतीर्थाचार्यवर्यविरचितायाःविवृतिर्नरसिंहविरचिता समाप्ता ॥

***समाप्तश्चायं ग्रन्थः श्री कृष्णार्पणमस्तु***